# वराहपुराणम्*

ओं गणेशाय नमः।

## प्रथमोऽध्यायः।

नारायणं नमस्कृत्य नरञ्च
देवीं सरस्वतीञ्चैव ततोजयमु
नमस्तस्मै वराहाय लीलयोद्धरते महीम्।
खुरमध्यगतो यस्य मेरुः खणखणायते॥ १

दंष्ट्राग्रेणोद्धृता गौरुदधिपरिवृता पर्वतैर्निम्नगाभिः
सार्द्धं मृत्पिण्डवत्प्राग्बृहदुरुवपुषा†ऽनन्तरूपेण येन।
सोऽयं कंसासुरारिर्मुरनरकदशास्यान्तकृत्‡ सर्वसंस्थः
कृष्णोविष्णुः सुरेशो नुदतु§ मम रिपूनादिदेवो वराहः॥ २।

---

* (क) पुस्तके एष श्लोको नास्ति।

† गुरुतरवपुषा इति (ख)।

‡ मधुनरकदशास्यान्तकृदिति (ख)।

§ (ग) पुस्तके नुदति मम रिपूनिति पाठो वर्त्तते।

¶ (ख) (ग) पुस्तकयोः

"यः संसारार्णवे नौरिव मरणजराव्याधिनक्रोर्म्मिभीमे
भक्तानां भीतिहर्त्ता मुरनरकदशास्यान्तकृत्कोकरूपी।

वरा

राणे

यस्मिन्काले त्रि सूत उवाच ।

उद्धृता विभुतिः पूर्व्वं वराहवपुषा तु सा* ।

भक्त्या† पप्रच्छ परमेश्वरम् ॥ ३ ।

धरण्युवाच । ‡

वानेव मां समुद्धरति प्रभो§ ।

न ते मूर्त्तिमादिसर्गे च¶ केशव ॥ ४ ।

वेदेषु ष्टेषु|| मत्स्योभूत्वा रसात तात्** ।

प्रविश्य र्म्माणि दत्तवानसि ॥ ५ ।

अन्यद् सुरमिति†† त्वं समुद्रस्य मन्थने ।

धृतवानसि कौर्म्म्येण मन्दरं मधुसूदन ॥ ६ ।

पुनश्च मां जगन्नाथ निमज्जन्तीं रसातलात्‡‡ ।

---

विष्णुः सर्व्वेश्वरोऽयं यमिह कृतधियो लीलया प्राप्नुवन्ति

व्यक्तात्मानो न पापं प्रभवमनुदिनाऽरातिपक्षः क्षितीशः ॥

एष श्लोकोऽस्ति (ख) पुस्तके अस्मात्परं सूत उवाच इति पाठो नास्ति ।

* (ख) पुस्तके कल्पवाराहरूपिणेति पाठः ।

† उद्धृता नमिता भक्त्या इति (ख) ।

‡ (ख) एष पाठः (क) (ख) पुस्तकयोर्नास्ति ।

§ कस्मिन् काले भवानेव मां समुद्धरते विभो इति (ग) । अत्र समुद्धरते इत्या त्मनेपदमार्षम् ।

¶ मादिसर्गेषु इति (ख) ।

|| विप्रनष्टेषु इति (ख) ।

** रसातले इति (घ) ।

†† देवासुरमिति इति (ख) । सुरासुरमयमिति (ग) ।

‡‡ पुनर्वराहरूपेण आगच्छन्तीं रसातलमिति (ख) ।

उज्जहारैकदंष्ट्रेण भगवन्वै महार्णवात्* ॥ ७ ।
अन्यद्धिरण्यकशिपुर्वरदानेन दर्पितः ।
आबाधमानः पृथिवीं स त्वया विनिपातितः ॥† ८ ।
पुनर्निःक्षत्रिया देव त्वया चापि पुरा कृता ।
जामदग्न्येन रामेण त्वया भूत्वा सकृत्प्रभो । ९ ।
पुनश्च रावणो रणे: क्षपितं चात्ततेजसा ।
बलिः प्रबद्धो भगवंस्त्वया वामनरूपिणा‡ ॥ १० ।
न च जानाम्यहं देव तव किञ्चिदितःपरम् ।
उद्धृत्य मां कथं सृष्टिं सृजसे किञ्च कारणम्§ । ११ ।
सकृद्धियेत कृत्वा च पाल्यते चापि केन वा ।
केन वा सुलभो देवो भवेस्त्वं सततं विभो ॥ १२ ।

* भवानेव रसातलादिति (ख) ।

† असावपि नृसिंहं तद्वपुरास्थाय नाशित इति (ख) ।

‡ (ख) पुस्तके (९) (१०) श्लोकावेवं पठ्येते—

"बलिस्तु बद्धो भगवंस्त्वया वामनरूपिणा ।
पुनर्निःक्षत्रिया विप्र साऽहं कृत्वा त्वया कृता ॥
जामदग्न्येन रामेण त्वया भूत्वाऽसकृद्विभो ।
पुनश्च रावणोरक्षः क्षपितं स्वेन तेजसा ॥"

तत्रैकोऽधिकः श्लोकश्च वर्त्तते यथा—

नन्दगोष्ठेऽवतीर्य्याऽसौ हतः कंसासुरस्त्वया ।
साम्प्रतं बुद्धरूपेण तिष्ठसे लोकमोहनः ॥

§ सृष्टेः किं मे प्रमाणञ्च त्वया दृष्टं विशेषतः इति (ख) ।

कथञ्च सृष्टेरादिः स्यादवसानं कथं भवेत्* ।
कथं युगस्य गणना संख्याऽस्यास्तु चतुर्युगम् ॥ १३ ।
को वा विशेषस्तेष्वस्मिन्का वा वाऽवस्था महेश्वर ।
उद्धृत
यज्व[illegible] राजानः के च सिद्धिं पराङ्गताः ॥ १४ ।
एतत्स[illegible]मासेन कथयस्व प्रसीद मे ।
इत्युक्तः क्रोडरूपेण जहास परमेश्वरः ॥ १५ ।
हसतस्तस्य कुक्षौ तु जगद्धात्री ददर्श ह ।
रुद्रान्देवान्सवसवः† सिद्धसङ्घान्महर्षिभिः ॥ १६ ।
सचन्द्रसूर्य्यग्रहसप्तलोका-
नवस्थितांस्तत्र उपात्तधर्मान् ।
इतीदृशं पश्यति सा समस्तं
यावत् क्षितिर्वेपितसर्व्वगात्रा ॥ १७ ।
उन्मीलिताक्ष्यस्तु यदा महात्मा
दृष्टो‡ धरण्याऽमलसर्व्वगात्रया ।
तावत्स्वरूपेण चतुर्भुजेन
महोदधौ सुप्तमथोऽन्वपश्यत् ॥ १८ ।
शेषपर्यङ्कशयने सुप्तं देवं जनार्दनम् ।
दृष्ट्वा तन्नाभिपङ्केरुहान्तस्थं तं चतुर्भुजम् ।

---

* कथं युगस्य निर्म्माणं किन्नु तस्माच्चतुर्युगमिति (ख)। युगं युगस्य गणनेति क्वचित्पाठः।

† सवसवः इति चार्षं, सवसूनिति साधु।

‡ पृष्ट इति (ख)।

कृताञ्जलिपुटा देवी स्तुतिं धात्री जगाद ह ॥ १९ ॥

धरण्युवाच ।

नमः कमलपत्राक्ष नमस्ते पीतवाससे ।
नमः सुरारिविध्वंसकारिणे परमात्मने ॥ २० ॥
शेषपर्य्यङ्कशयने धृतवक्षःस्थलश्रिये ।
नमस्ते सर्व्वदेवेश नमस्ते मोक्षकारिणे ॥ २१ ॥
नमः शार्ङ्गासिचक्राय जन्ममृत्युविवर्जिते* ।
नमो नाभ्युत्थितमहाकमलासनजन्मने ॥ २२ ॥
नमो विद्रुमरक्तोष्ठपाणिपल्लवशोभिने ।
शरणं त्वां प्रपन्नास्मि त्राहि नारीमनागसम् ॥ २३ ॥
पूर्णनीलाञ्जनाकारं† वाराहं ते जनार्द्दन ।
दृष्ट्वा भीताऽस्मि भूयोऽपि जगत्त्वद्देहगोचरे ।
इदानीं कुरु मे नाथ दयां त्राहि महाप्रभो ॥ २४ ॥
केशवः पातु मे पादौ जंघे नारायणो मम ।
माधवो मे कटिं पातु गोविन्दो गुह्यमेव च ॥ २५ ॥
नाभिं विष्णुस्तु मे पातु उदरं मधुसूदनः ।
उरस्त्रिविक्रमः पातु हृदयं पातु वामनः ॥ २६ ॥
श्रीधरः पातु मे कण्ठं हृषीकेशो मुखं मम ।
पद्मनाभस्तु नयने शिरो दामोदरो मम ॥ २८ ॥

* जन्ममृत्युविवर्ज्जिते इति पाठे, जन्ममृत्युविवर्ज्जिताय इति साधु

† पूर्णनीलोज्ज्वलाकारमिति (ग) ।

एवं ह्यस्य हरेर्न्यासं नामानि जगतीतदा ।
नमस्ते भगवन्विष्णो इत्युक्त्वा विरराम ह ॥ २८ ॥

इति वराहपुराणे सम्बन्धे प्रथमोऽध्यायः ।



## द्वितीयोऽध्यायः ।

सूत उवाच ।

ततस्तुष्टो हरिर्भक्त्या धरण्यात्मशरीरगः ।
मायां प्रकाश्य तेनैव स्थितो वाराहमूर्त्तिना ॥ १ ।
जगाद किन्ते सुश्रोणि प्रश्नमेतं सुदुर्लभम् ।
कथयामि पुराणस्य विषयं सर्व्वशास्त्रतः ॥ २ ।
पुराणानां हि सर्व्वेषामयं साधारणः स्मृतः ।
श्लोकं धरणि निश्चित्य निःशेषं त्वमतः शृणु ॥ ३ ।

वराह उवाच ।

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥ ४ ।
आदिसर्गमहं तावत्कथयामि वरानने ।
यस्मादारभ्य देवानां राज्ञां चरितमेव च ॥ ५ ।
ज्ञायते चतुरंशश्च परमात्मा सनातनः ॥ ६ ।

आदावहं व्योम ...हत्ततोऽणु-
रेकैव मत्तः प्रबभू... बुद्धिः ।
त्रिधा तु सा सत्...जस्तमोभिः
पृथक् पृथक् सत्त्व...पैरुपेता ॥ ७ ।
तस्मिंस्त्रिकेऽहं तमसो महान्स
सदोच्यते सर्व्ववि...ां प्रधानः ।
तस्मादपि क्षेत्रविदूर्ज्जितो यो
बभूव बुद्धिस्तु ततो बभूव ८
तस्मात्त...: श्रवणादिहेतव-
स्तत्...ऽक्षमाला जगतो व्यवस्थिता ।
भूतैर्गतैरेव च पिण्डमूर्त्ति-
र्मया भद्रे विहिता त्वात्मनैव ॥* ९ ।
शून्यं त्वासीत्तत्र शब्दस्तु खं च
तस्माद्वायुस्तत एवानु तेजः ।
तस्मादापस्तत एवानु देवि
मया सृष्टा भवती भूतधात्री ॥ १० ।
योगे पृथिव्यां जलवत्ततोऽपि
सबुद्बुदं कललं त्वण्डमेव ।
तस्मिन्प्रवृद्धिं च गतेऽहमासी-†
दापोमयस्त्वात्मनात्मानमादौ ॥ ११ ।

* मया भद्रे विहिता त्वात्मनैव इत्यत्र छन्दोभङ्गः

† अहमासीदिति आर्षम्, अहमासमिति साधु ।

सृष्टा नारस्ता अयनं तत्र चाहं
येनैव स्यान्नाम नारायणेति ।
कल्पे कल्पे तत्र शयामि भूयः
सुप्तस्य मे नाभिजः स्याद्यथाद्य ॥ १२ ॥
एवम्भूतस्य मे देवि नाभिपद्मे चतुर्मुखः ।
उत्तस्थौ स मया प्रोक्तः प्रजाः सृज महामते ॥ १३ ।
एवमुक्त्वा तिरोभावं गतोऽहं सोऽपि चिन्तयन् ।
आस्ते यावज्जगद्धात्रि नाध्यगच्छत्तु किञ्चन* ॥ १४ ।
तावत्तस्य महारोषो ब्रह्मणोऽव्यक्तजन्मनः ।
सम्भूय तेन बालः स्यात्+ देको रोषात्मसम्भवः ॥ १५ ।
यो रुदन्वारितस्तेन ब्रह्मणाव्यक्तमूर्त्तिना‡ ।
ब्रवीति नाम मे देहि तस्य रुद्रेति सो ददौ ॥ १६ ।
सोऽपि तेन सृजस्वेति प्रोक्तो लोकमिमं शुभे ।
अशक्तः सोऽथ सलिले ममज्ज तपसे धृतः§ ॥ १७ ।
तस्मिन्सलिलमग्ने तु पुनरन्यं प्रजापतिम् ।
ब्रह्मा ससर्ज्ज भूतेषु दक्षिणाङ्गुष्ठतः परम् ॥ १८ ।
वामे चैव तथाङ्गुष्ठे तस्य पत्नीमथासृजत् ॥ १९ ।
स तस्यां जनयामास मनुं स्वायम्भुवं प्रभुः ।

---

* नाधिगच्छति किञ्चन इति (क), (ग) ।

\+ स्यादिति आर्षम्भूदिति साधु ।

‡ ब्रह्मणाव्यक्तरूपिणा इति (ख) ।

§ तपसे स्मृत इति (ग) ।

तस्मात्सम्भाविता बुद्धिः प्रजानां ब्रह्मणा पुरा* ॥ २० ॥

धरण्युवाच ।

विस्तरेण ममाचक्ष्व आदिसर्गं सुरेश्वर ।
ब्रह्मा नारायणाख्योऽयं कल्पादौ चाभवद्यथा ॥ २१ ॥

श्रीभगवानुवाच ।

ससर्ज्ज सर्व्वभूतानि यथा नारायणात्मकः ।
कथ्यमानं मया देवि तदशेषं क्षिते शृणु ॥ २२ ॥
गतकल्पावसाने तु निशि सुप्तः स्थितः शुभे ।
सत्त्वोद्रिक्तस्तथा ब्रह्मा शून्यं लोकमवैक्षत ॥ २३ ॥
नारायणः परोऽचिन्त्यः पराणामपि पूर्व्वजः ।
ब्रह्मस्वरूपी भगवाननादिः सर्व्वसम्भवः ॥ २४ ॥
इदं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ।
ब्रह्मस्वरूपिणं देवं जगतः प्रभवाव्ययम् ॥ २५ ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥
अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः ॥ २६ ॥
सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा ।
अबुद्धिपूर्व्वकस्तस्य प्रादुर्भूतस्तमोमयः ॥ २७ ॥
तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः ।
अविद्या पञ्चपर्व्वैषा प्रादुर्भूता महात्मनः† ॥ २८ ॥
पञ्चधावस्थितः सर्गो ध्यायतः प्रतिबोधवान् ।

---

* ब्रह्मणः पुरा इति (ग) ।

† एष श्लोकः (ग) पुस्तके नास्ति ।

स मुख्यसर्गो विज्ञेयः सर्गविद्भिर्विचक्षणैः ॥ २९ ।
पुनरन्यमभूत्तस्य ध्यायतः सर्गमुत्तमम् ।
तिर्य्यक्स्रोतस्तु वै यस्मात्तिर्य्यक्स्रोतस्ततो वै स्मृतः ॥ ३० ।
पश्वादयस्ते विख्याता उत्पथग्राहिणो मताः* ।
तमप्यसाधनं मत्वा तिर्य्यक्स्रोतश्चतुर्मुखः ॥ ३१ ।
ऊर्द्ध्वस्रोतस्त्रिधा यस्तु सात्त्विको धर्मवर्त्तिनः ।
ततोर्द्ध्वचारिणो देवाः† सर्व्वे गर्भसमुद्भवाः ॥ ३२ ।
तदा दृष्ट्वान्यसर्गन्तु तदा दध्यौ प्रजापतिः ।
असाधकांस्तु तान्मत्वा मुख्यसर्गादिसम्भवान् ॥ ३३ ।
ततः सञ्चिन्तयामास अर्व्वाक्स्रोतस्तु स प्रभुः ।
अर्व्वाक्स्रोतसि चोत्पन्ना मनुष्याः साधका मताः ॥ ३४ ।
ते च प्रकाशबहुलास्तमोद्रिक्ता रजोऽधिकाः ।
तस्मात्ते दुःखबहुला भूयोभूयश्च कारिणः ॥ ३५ ।
इत्येते कथिताः सर्गाः षडेते सुभगे तव ।
प्रथमो महतः सर्गस्तन्मात्राख्यो द्वितीयकः ॥ ३६ ।
वैकारिकस्तृतीयस्तु सर्गश्चैन्द्रियकः स्मृतः ।
इत्येष प्राकृतः सर्गः संभूतो बुद्धिपूर्व्वकः ॥ ३७ ।
मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ।
तिर्य्यक्स्रोतश्च यः प्रोक्तस्तैर्य्यक्स्रोतः स उच्यते ॥ ३८ ।

---

* उत्पथ्यां ग्राहिणः मता इति (ग) ।

† सुतोर्द्ध्वचारिणः इति आर्षं, तत ऊर्द्ध्वचारिणः इति साधु ।

ततोर्द्ध्वस्रोतसां* श्रेष्ठः सप्तमः स तु मानवः।
अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च सः॥ ३९॥
पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः†।
प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः॥ ४०॥
इत्येते वै समाख्याता नव सर्गाः प्रजापतेः।
प्राकृता वैकृताश्चैव जगतो मूलहेतवः।
इत्येते कथिताः सर्गाः किमन्यच्छ्रोतुमिच्छसि‡॥ ४१॥

धरण्युवाच।

नवधा सृष्टिरुत्पन्ना ब्रह्मणोऽव्यक्तजन्मनः।
कथं सा ववृधे देव एतन्मे कथयाच्युत॥ ४२॥

वराह उवाच।

प्रथमं ब्रह्मणा सृष्टा रुद्राद्यास्तु तपोधनाः।
सनकादयस्ततः सृष्टा§ मरीच्यादय एव च॥ ४३॥
मरीचिरत्रिश्च तथा अङ्गिराः पुलहः क्रतुः।
पुलस्त्यश्च महातेजाः प्रचेता भृगुरेव च।
नारदो दशमश्चैव वशिष्ठश्च महातपाः॥ ४४॥

* ततोर्द्ध्वस्रोतसामिति आर्षं, तत ऊर्द्ध्वस्रोतसामिति साधु।

† प्राकृतास्ते तु संस्मृता इति (क)।

‡ (ग) पुस्तकेऽन्यैवं पाठो वर्त्तते—
"इत्येते कथिताः सर्गाः प्राकृतास्तु त्रयः स्मृताः।
प्राकृतो वैकृतश्चैव किमन्यच्छ्रोतुमिच्छसि॥"

§ सनकादयस्ततः सृष्टा इत्यत्राक्षरमेकमधिकं वर्त्तते, सनकाद्यास्ततः सृष्टा इति कृते तु न कश्चिद्दोषः, एवं ४५ श्लोकेऽपि।

सनकाद्यो निवृत्ताख्ये तेन धर्म्मे प्रयोजिताः
प्रवृत्त्याख्ये मरीच्याद्या मुक्त्वैकं नारदं मुनिम् ॥ ४५ ॥
योऽसौ प्रजापतिस्त्वाद्यो दक्षिणाङ्गुष्ठसम्भवः ।
तस्याद्धौ तत्र वंशे तु जगदेतच्चराचरम् ॥ ४६ ।
देवाश्च दानवाश्चैव गन्धर्व्वोरगपक्षिणः ।
सर्व्वे दक्षस्य कन्यासु जाताः परमधार्म्मिकाः ॥ ४७ ।
योऽसौ रुद्रेति विख्यातः पुत्रः क्रोधसमुद्भवः ।
भ्रुकुटीकुटिलात्तस्य ललाटात्परमेष्ठिनः ॥ ४८ ।
अर्द्धनारीनरवपुः प्रचण्डोऽतिभयङ्करः ।
विभजात्मानमित्युक्त्वा ब्रह्मा चान्तर्दधे पुनः ॥ ४९ ।
तथोक्तोऽसौ द्विधा स्त्रीत्वं पुरुषत्वं चकार सः ।
बिभेद पुरुषत्वं च दशधा चैकधा च सः ॥ ५० ।
ततस्त्वेकादश ख्याता रुद्रा ब्रह्मसमुद्भवाः ॥ ५१ ।
अयमुद्देशतः प्रोक्तो रुद्रसर्गो मयाऽनघे ।
इदानीं युगमाहात्म्यं कथयामि समासतः ॥ ५२ ।
कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम् ॥ ५३ ।
एतस्मिन्ये महासत्त्वा राजानो भूरिदक्षिणाः ।
देवासुराश्च ये चक्रुर्धर्म्मकर्म्म च तच्छृणु ॥ ५४ ।
आसीत्प्रथमकल्पे तु मनुः स्वायम्भुवः पुरा ।
तस्य पुत्रद्वयं जज्ञे अतिमानुषचेष्टितम् ॥ ५५ ।
प्रियव्रतोत्तानपादनामानं* धर्म्मवत्सलम् ।

---

*नामानमित्यस्य क्लीवत्वमुचितं द्वयमित्यस्य विशेषणत्वात् ।

तत्र प्रियव्रतो राजा महायज्वा तपोबलः ॥ ५६ ।
स चेष्ट्वा विविधैर्यज्ञैर्विपुलैर्भूरिदक्षिणैः ।
सप्तद्वीपेषु संस्थाप्य भरतादीन् सुतान्निजान् ।
स्वयं विशालां वरदां गत्वा तेपे महत्तपः ॥ ५७ ।
तस्मिन् स्थितस्य तपसि राज्ञो वै चक्रवर्त्तिनः ।
उपेयान्नारदस्तत्र* दिदृक्षुर्धर्मचारिणम् ॥ ५८ ।
स दृष्ट्वा नारदं व्योम्नि ज्वलद्भास्करतेजसम् ।
अभ्युत्थानेन राजेन्द्र उत्तस्थौ हर्षितस्तदा ॥ ५९ ।
तस्यासनं† पाद्यञ्च सम्यक् कृत्वा निवेद्य वै ।
स्वागतादिभिरालापैः परस्परमवोचताम् ॥ ६० ।
कथान्ते नारदं राजा पप्रच्छ ब्रह्मवादिनम् ॥ ६१ ।

प्रियव्रत उवाच ।

भगवन् किञ्चिदाश्चर्य्यमेतस्मिन् कृतसंज्ञिते ।
युगे दृष्टं श्रुतं चापि तन्मे कथय नारद ॥ ६२ ।

नारद उवाच ।

आश्चर्य्यमेकं दृष्टं मे तच्छृणुष्व प्रियव्रत ।
ह्यस्तनेऽहनि राजेन्द्र श्वेताख्यं गतवानहम् ॥ ६३ ।
द्वीपं तत्र सरो दृष्टं फुल्लपङ्कजमालिनम्‡ ।
सरसस्तस्य तीरे तु कुमारीं पृथुलोचनाम् ॥ ६४ ।

---

* उपेयादिति भूतलिङ् आर्षम् ।

† तस्यासने चेति (ग) ।

‡ फुल्लपङ्कजमाश्रितमिति (ख) ।

दृष्ट्वाहं विस्मयापन्नस्तां कन्यामायतेक्षणाम् ।
पृष्टवानस्मि राजेन्द्र तदा मधुरभाषिणीम् ॥ ६५
कासि भद्रे कथं वासि किं वा कार्य्यमिह त्वया
कर्त्तव्यं चारुसर्व्वाङ्गि तन्ममाचक्ष्व शोभने ॥ ६६
एवमुक्ता मया सा हि मां दृष्ट्वाऽनिमिषेक्षणा ।
स्मृत्वा तूष्णीं स्थिता यावत्तावन्मे ज्ञानमुत्तमम् ॥
विस्मृतं सर्व्ववेदाश्च सर्व्वशास्त्राणि चैव हि ।
योगशास्त्राणि शिक्षाश्च वेदानां स्मृतयस्तथा ॥ ६८
सर्व्वं दृष्ट्वैव मे राजन् कुमार्य्याऽपहृतं क्षणात् ।
ततोऽहं विस्मयाविष्टश्चिन्ताशोकसमन्वितः ॥ ६९ ।
तामेव शरणं गत्वा यावत्पश्यामि पार्थिव ।
तावद्दिव्यः पुमांस्तस्याः शरीरे समदृश्यत ॥ ७० ।
तस्यापि पुंसो हृदये त्वपरस्तस्य चोरसि ।
अन्यो रक्तेक्षणः श्रीमान्द्वादशादित्यसन्निभः* ॥ ७१ ।
एवं दृष्टाः पुमांसोऽत्र त्रयः कन्याशरीरगाः ।
क्षणेन तत्र कन्यैका न तान् पश्यामि सुव्रत ॥ ७२ ।
ततः पृष्टा मया देवी सा कुमारी कथं मम ।
वेदा नष्टा ममाचक्ष्व भद्रे तन्नाशकारणम् ॥ ७३ ।

कन्योवाच ।

माताहं सर्व्ववेदानां सावित्री नाम नामतः ।
मां न जानासि येन त्वं ततो वेदा हृतास्तव ॥ ७४ ।

* (ग) पुस्तके (७१) श्लोकस्य प्रथमः पादो नास्ति ।

एवमुक्ते तया राजन्विस्मयेन तपोधनेः।
पृष्टा त एते पुरुषा एतत्कथय शोभने ॥ ७५ ।

कन्योवाच ।

य एष मच्छरीरस्थः सर्वाङ्गचारुशोभनः ।
एष ऋग्वेदनामा तु वेदो नारायणः स्वयम् ।
वह्निभूतो दहत्याशु पापान्युच्चारणादनु ॥ ७६ ।
एतस्य हृदये योऽयं दृष्ट आसीत्त्वयात्मजः ।
स यजुर्वेदरूपेण स्थितो ब्रह्मा महाबलः ॥ ७७ ।
तस्याऽप्युदरे संविष्टो य एष शुचिरुज्ज्वलः ।
स सामवेदनामा तु रुद्ररूपी व्यवस्थितः ॥ ७८ ।
एष आदित्यवत्पापान्याशु नाशयते स्मृतः* ॥ ७९ ।
एते त्रयो महावेदा ब्रह्मन्देवास्त्रयः स्मृताः ।
एते वर्णा अकाराद्याः सवनान्यत्र वै द्विज ॥ ८० ।
एतत्सर्व्वं समासेन कथितं ते द्विजोत्तम ।
गृहाण वेदाञ्छास्त्राणि सर्व्वज्ञत्वञ्च नारद ॥ ८१ ।
एतस्मिन्वेदसरसि स्नानं कुरु महाद्विज ।
कृते स्नानेऽन्यजन्मीयं येन स्मरसि सत्तम ॥ ८२ ।
एवमुक्त्वा तिरोभावं गता कन्या नराधिप ।
अहं तत्र कृतस्नानस्त्वद्दिदृक्षुरिहागतः ॥ ८३ ।

इति वराहपुराणे आदिभूतवृत्तान्ते द्वितीयोऽध्यायः ।

—०—

* एष आदित्यसम्पावत्पापान्दहति आशु वा इति (ग) ।

## तृतीयोऽध्यायः ।

प्रियव्रत उवाच ।

अन्यस्मिन् भगवज्जन्मन्यासीद्यत्त्वद्वि ष्टितम् ।
सर्व्वं कथय देवर्षे महत्कौतूहलं हि मे ॥ १ ।

नारद उवाच ।

स्नातस्य मम राजेन्द्र तस्मिन्वेदसरस्यथ ।
सावित्र्याश्च वचः श्रुत्वा तस्मिञ्जन्मसहस्रिकम् ।
स्मरणं तत्क्षणाज्जातं शृणु जन्मान्तरं मम ॥ २ ।
अस्त्यवन्तीपुरं राजंस्तत्राहं प्राग्द्विजोत्तमः ।
नाम्ना सारस्वतः पूर्व्वं वेदवेदाङ्गपारगः ॥ ३ ।
बहुभृत्यपरीवारो बहुधान्यश्च पार्थिव ।
अन्यस्मिन् कृतसंज्ञे तु युगे परमबुद्धिमान् ॥ ४ ।
ततो ध्यातं मयैकान्ते किमनेन करोम्यहम् ।
द्वन्द्वेन सर्व्वमेतद्धि न्यस्त्वा* पुत्रेषु याम्यहम् ।
तपसे धृतसङ्कल्पः सरः सारस्वतं द्रुतम् ॥ ५ ।
एवं चिन्त्य† मया दृष्टः कर्म्मकाण्डेन केशवः ।
श्राद्धैश्च पितरो देवा यज्ञैश्चान्ये तथा जनाः ॥ ६ ।
ततोऽहं निर्गतो राजंस्तपसे धृतमानसः ।
सारस्वतं नाम सरो यदेतत्पुष्करं स्मृतम् ॥ ७ ।

---

* न्यस्त्वा इत्यार्षं, न्यस्य इति साधु ।

† चिन्त्य इति आर्षं, विचिन्त्य चिन्तयित्वा वेति साधु ।

तत्र गत्वा मया विष्णुः पुराणः पुरुषः शिवः ।
आराधितो मया भक्त्या जपन्नारायणात्मकम् ॥ ८ ।
ब्रह्मपारमयं राजन् जपता परमस्तवम् ।
ततो मे भगवांस्तुष्टः प्रत्यचत्वं जगाम ह ॥ ९ ।

प्रियव्रत उवाच ।

कीदृशं ब्रह्मपारन्तु श्रोतुमिच्छामि सत्तम ।
कथयस्व प्रसादेन देवर्षे सुप्रसन्नधीः ॥ १० ।

नारद उवाच ।

पारं पराणाममृतं पुराणं
पारं परं विष्णुमनन्तवीर्य्यम् ।
नमामि नित्यं पुरुषं पुराणं
परायणं पारगतं पराणाम् ॥ ११ ।
पुरातनं त्वं प्रतिमं पुराणं
परापरं पारगमुग्रतेजसम् ।
गम्भीरगम्भीरधियां प्रधानं
नतोऽस्मि देवं हरिमीशितारम् ॥ १२ ।
परात्परं चापरमं प्रधानं
परास्पदं शुद्धपदं विशालम् ।
परात्परेशं पुरुषं पुराणं
नारायणं स्तौमि विशुद्धभावः ॥ १३ ।
पुरा पुरं शून्यमिदं ससर्ज्ज
तदा स्थितत्वात्पुरुषः प्रधानम् ।

जने प्रसिद्धः शरणं ममास्तु
नारायणो वीतमलः पुराणः ॥ १४ ।
पारं परं विष्णुमपाररूपं
पुरातनं नीतिमतां प्रधानम् ।
धृतक्षमं शान्तिधरं क्षितीशं
शुभं सदा स्तौमि महानुभावम् ॥ १५
सहस्रमूर्द्धानमनन्तपाद-
मनन्तबाहुं शशिसूर्य्यनेत्रम् ।
तमक्षरं* क्षीरसमुद्रनिद्रं
नारायणं स्तौम्यमृतं परेशम् ॥ १६ ।
त्रिवेदगम्य त्रिनवैकमूर्त्तिं
त्रिशुक्लसंस्थं त्रिहुताशभेदम् ।
त्रितत्त्वलक्ष्यं त्रियुगं त्रिनेत्रं
नमामि नारायणमप्रमेयम् ॥ १७ ।
कृते सितं रक्ततनुं तथा च
त्रेतायुगे पीततनुं पुराणम् ।
तथा हरिं द्वापरतः कलौ च
कृष्णीकृतात्मानमथो नमामि ॥ १८ ।
ससर्ज्ज यो वक्त्रत एव विप्रान्
भुजान्तरे क्षत्रमथोरुयुग्मे ।

---

* चराचरमिति (ख), (ग) ।

विप्रः पद्मोऽग्रेषु तथैव शूद्रान्
नमामि तं विश्वतनुं पुराणम् ॥ १९ ।
परात्परं पारगतं प्रमेयं
युधाम्पतिं कार्य्यत एव कृष्णम् ।
गदासिचर्मण्यमृतोत्यपाणिं
नमामि नारायणमप्रमेयम् ॥ २० ।
इति स्तुतो देववरः प्रसन्नो
जगाद मां नीरदतुल्यघोषः ।
वरं वृणीष्वेत्यसकृत्ततोऽहं
तस्यैव देहेलयमिष्टवांश्च ॥ २१ । *
इति श्रुत्वा वचो मह्यं देवदेवः सनातनः ।
उवाच प्रकृतिं गच्छ विप्रैतत्तु प्रयोजनम् † ॥ २२ ।
पानीयमित्युक्तं पितॄणां तद्ददौ भवान् ।
तदाप्रभृति ते नाम नारदेति भविष्यति ॥ ‡ २३ ।
एवमुक्त्वा गतो देवः सद्योऽदर्शनमुच्चकैः ।
अहं कलेवरं त्यक्त्वा कालेन तपसा तदा ॥

* (ख) पुस्तके २१शः श्लोको नास्ति ।

† (ग) पुस्तके पाद एवोऽन्यथा पठ्यते यथा—
उवाच प्रकृतिं विप्र संसरस्वाचयामिमाम् ।

‡ (ग) पुस्तके एष श्लोक एवं पठ्यते—
नारं पानीयमित्युक्तं पितॄणां तत्सदा भवान् ।
ददाति ते ततो नाम नारदेति भविष्यति ॥

ब्रह्मलोके लयं प्राप्तस्तदोत्पत्तिं च पार्थिव* ॥ २४।२५

दिवसस्य पुनः सृष्टौ दशभिस्तनयैः सह† ।

दिनादिर्यो हि देवस्य ब्रह्मणोऽव्यक्तजन्मनः ॥

स सृष्ट्यादिः समस्तानां देवादीनां च संशयः ।

सर्व्वस्य जगतः सृष्टिरेषैव प्रभुधर्म्मत ॥ २६।२७ ।

एतन्मे प्राकृतं जन्म यन्मां पृच्छसि पार्थिव ॥ २८ ।

यस्मान्नारायणं ध्यात्वा प्राप्तोऽस्मि गुरुतां नृप ।

तस्मात्त्वमपि राजेन्द्र भव विष्णुपरायणः ॥ २९ ।

इति वराहपुराणे आदिभूतवृत्तान्ते नारदजन्मो-
पाख्यानो नाम तृतीयोऽध्यायः ।

-0-0-

## चतुर्थोऽध्यायः ।

धरण्युवाच ।

योऽसौ नारायणो देवः परमात्मा सनातनः ।

भगवान् सर्व्वभावेन उताहो नेति शंस मे* ॥ १ ।

* तवोत्पत्तिश्च पार्थिव इति (ग) ।

† दशभिर्मानसैः सह इति (ख) ।



* संशयः इति (ख) ।

वराह उवाच ।

मत्स्यः कूर्म्मो वराहश्च नरसिंहोऽथ वामनः ।
रामो रामश्च कृष्णश्च बुद्धः कल्की च ते दश ॥ २ ।
इत्येताः कथितास्तस्य मूर्त्तयो भूतधारिणि* ।
दर्शनं प्राप्तुमिच्छूनां सोपानानि च शोभने ॥ ३ ।
यत्तस्य परमं रूपं तन्न पश्यन्ति देवताः ।
अस्मदादिस्वरूपेण पूरयन्ति ततो धृतिम् ॥ ४ ।
ब्रह्मा भगवती† मूर्त्ती राजसस्तामसस्तथा ।
याभिः संप्राप्यते विश्वं स्थितौ सञ्चाल्यते‡ च ह ॥ ५ ।
त्वमेका तस्य देवस्य मूर्त्तिराद्या धरा धरे§ ।
द्वितीया सलिलं मूर्त्तिस्तृतीया तैजसी स्मृता ॥ ६ ।
चतुर्थी वायुमूर्त्तिः स्यादाकाशाख्या तु¶ पञ्चमी ।
इत्येतास्तु मूर्त्तयस्तस्य चेत्रज्ञत्वं हि मद्वियाम्‖ ॥
मूर्त्तित्रयं तथा तस्य इत्येताश्चाष्टमूर्त्तयः ॥** ७ ।
अभिव्याप्तमिदं सर्व्वं जगन्नारायणेन ह ।

---

* एता रजोऽधिकास्तव मूर्त्तयो लोकधारिणि इति (ख) ।

† ब्राह्मे भगवत इति (ख) ।

‡ संवर्त्तते इति (ख) ।

§ तस्य देवस्य यन्मूर्त्तिराधाय च धृतिर्द्दरे इति (ख) ।

¶ आकाशाख्याय इति (ख) ।

‖ मद्विय इति (ग) ।

** (ख) पुस्तके श्लोकस्यास्य द्वितीयतृतीयपादौ न स्तः ।

इत्येतत्कथितं देवि किमन्यच्छ्रोतुमिच्छसि ॥ ८ ।

धरण्युवाच ।

नारदेनैवमुक्तस्तु तदा राजा प्रियव्रतः ।
कृतवान् किं ममाचक्ष्व* प्रसादात्परमेश्वरः ॥ ९ ।

वराह उवाच ।

भवतीं सप्तधा कृत्वा पुत्राणां च प्रदाय सः ।
प्रियव्रतस्तपस्तेपे नारदाच्छ्रुतविस्मयः ॥ १० ।
नारायणात्मकं ब्रह्म परं जप्त्वा स्वयम्भुवः† ।
ततः स तद्गतमनाः परं निर्व्वाणमाप्तवान् ॥ ११ ।
शृणु चान्यद्वरारोहे यद्वृत्तं परमेष्ठिनः‡ ।
आराधनाय च यतः पुराकाले नृपस्य ह ॥ १२ ।
आसीदश्वशिरा नाम राजा परमधार्म्मिकः ।
सोऽश्वमेधेन यज्ञेन§ यष्ट्वा सुबहुदक्षिणः¶ ॥ १३ ।
स्नातश्चावभृथे सोऽथ‖ ब्राह्मणैः परिवारितः ।
यावदास्ते स राजर्षिस्तावद्योगिवरो मुनिः ।
आययौ कपिलः श्रीमाञ्जैगीषव्यश्च योगिराट् ॥ १४ ।

* कृतवान्तन्ममाचक्ष्वेति (ख) ।

† समाराध्य स्वयम्भुवमिति (ख) ।

‡ यदुक्तं परमेष्ठिना इति (घ) ।

§ सोऽश्वमेधेन राजा वै इति (ग) ।

¶ इयाज बहुदक्षिण इति (ख) । यष्टेति आर्षम्, इष्टेति साधु ।

‖ प्रातश्चावभृथे सोऽथ इति (ग) ।

ततस्त्वरितमुत्थाय* स राजा स्वागतक्रियाम्† ।
चकार परया युक्तः स मुदा राजसत्तमः ॥ १५ ।
तावच्चिंतावासनगौ दृष्ट्वा देवी महाबलः‡ ।
पप्रच्छ तौ तिग्मश्रियौ§ योगज्ञौ स्वेच्छयागतौ ॥ १६ ।
भवन्तौ संशयं विप्रौ पृच्छामि पुरुषोत्तमौ ।
कथमाराधयेद्देवं हरिं नारायणं परम् ॥ १७ ।

विप्रावूचतुः ।

क एष प्रोच्यते राजंस्त्वया नारायणो गुरुः ।
आवां नारायणौ द्वौ तु त्वत्प्रत्यक्षगतौ नृप ॥ १८ ।

अश्वशिरा उवाच ।

भवन्तौ ब्राह्मणौ सिद्धौ तपसा दग्धकिल्बिषौ ।
कथं नारायणावावामिति वाक्यमथेरितम् ॥ १९ ।
शङ्खचक्रगदापाणिः पीतवासा जनार्द्दनः ।
गरुड़स्थो महादेवः कस्तस्य सदृशो भुवि ॥ २० ।
तस्य राज्ञो वचः श्रुत्वा तौ विप्रौ शंसितव्रतौ ।
जहसतुः पश्य¶ विष्णुं राजन्निति जजल्पतुः ॥ २१ ।

* तयोस्त्वरितमुत्थाय इति (ख) ।

† स राजाभ्यागतक्रियामिति (ग) ।

‡ दृष्ट्वा राजा महाबलः इति (ख) ।

§ तौ तदा विप्रौ इति (ख) ।

¶ जहसतुः पश्य तं विष्णुं राजन्निति जजल्पतुरिति (क) (ख) पुस्तकयोः पाठः, तत्र तमित्यक्षरस्याधिक्याच्छन्दोभङ्गः ।

एवमुक्त्वा स कपिलः स्वयं विष्णुर्बभूव सः ।
जैगीषव्यश्च गरुड़स्तत्क्षणं समजायत ॥ २२ ।
ततोहाहाकृतं त्वासीत्तत्क्षणाद्राजमण्डलम्* ॥ २३
दृष्ट्वा नारायणं देवं गरुड़स्थं सनातनम् ॥
कृताञ्जलिपुटो भूत्वा ततो राजा महायशाः† ॥
उवाच शाम्यतां विप्रौ नायं विष्णुरथेदृशः ।
यस्य ब्रह्मा समुत्पन्नो नाभिपङ्कजमध्यमः ।
तस्माच्च ब्रह्मणो रुद्रः स विष्णुः परमेश्वरः ॥ २५ ।
इति राजवचः श्रुत्वा तदा तौ मुनिपुंगवौ ।
चक्रतुः परमां मायां योगमायां विशेषतः‡ ॥ २६
कपिलः पद्मनाभस्तु जैगीषव्यः प्रजापतिः ।
कमलस्थौ बभौ ब्रह्मा तस्माद्रुद्रः प्रभास्करः§ ॥ २७ ।
ददर्श राजा रक्ताक्षं कालानलसमद्युतिम्¶ ।
नैवैतौ भवति विश्वेशौ मायैषा योगिनां सदा ॥ २८
सर्व्वव्यापी हरिः श्रीमानिति राजा जगाद ह‖ ।
ततो वाक्यावसाने तु तस्य राज्ञोहि संसदि** ॥ २

* तदा तद्राजमण्डलमिति (ख) ।

† महाशय इति (ख) ।

‡ योगमायाविशारदौ इति (ख) ।

§ कमलस्थौ बभौ कस्तस्य वाङ्के प्रजापतिरिति (ग) ।

¶ कालाञ्जनसमद्युतिमिति (ग) ।

‖ इति राजा तमब्रवीदिति (ख) ।

** राज्ञोऽथ संसदि इति (ख) ।

मत्कुणा मशका यूका भ्रमराः* पक्षिणोरगाः। ३०।
अश्वा गावो द्विपाः सिंहा व्याघ्रा†गोमायवो मृगाः।
अन्येऽपि पशवः कीटा ग्राम्यारण्याश्च सर्व्वशः।
दृश्यन्ते राजभवने कोटिशो भूतधारिणि‡॥ ३१।
तं दृष्ट्वा भूतसङ्घातं राजा विस्मितमानसः।
यावच्चिन्तयते किं स्यादेतदित्यवगम्य च §॥
जैगीषव्यस्य माहात्म्यं कपिलस्य च धीमतः।
कृताञ्जलिपुटो भूत्वा स राजाश्वशिरास्तदा¶।
पप्रच्छ तावृषी भक्त्या किमिदं द्विजसत्तमौ॥ ३२।३३।

द्विजावूचतुः।

आवां पृष्टौ त्वया राजन् कथं विष्णुरिहेज्यते।
प्राप्यते च‖ महाराज तेनेदं दर्शितं तव॥ ३४।
गुणा ह्येते ये राजंस्तव दर्शिताः।
स च नारायणो देवः सर्व्वज्ञः कामरूपवान्॥ ३५।

* भूमिजाः पन्नगोरगाः इति (ख)। पक्षिणोरगा इति आर्षं, पक्ष्युरगाः, अथवा पक्षिण उरगा इति साधु।

† व्याला गोमायवो मृगा इति (ख)।

‡ कोटिशो बहवापगा इति (ख), बहवापगा इति आर्षं, बह्व्य आपगा इति साधु।

§ किञ्चिदेवमित्यवगम्य च इति (ख)।

¶ राजा अश्वशिरास्तदा इति (ख)।

‖ प्राप्यते वै इति (ख)।

सौम्यस्तु* संस्थितः क्वापि प्राप्यते मनुजैः† किल
आराधनं न चैतस्य परमार्थं भविष्यति ॥ ३६ ।
किन्तु सर्व्वशरीरस्थः परमात्मा जगत्पतिः ।
स्वदेहे दृश्यते भक्त्या नैकस्थानगतस्तु सः ॥
अतोऽर्थं‡ दर्शितं रूपं देवस्य परमात्मनः ।
आवयोस्तव राजेन्द्र प्रतीतिः स्याद्यथा तव ॥ ३७
एवं सर्व्वगतो विष्णुस्तव देहे जनेश्वर ।
*मन्त्रिणां भृत्यसङ्घस्य सुराद्या ये प्रदर्शिताः*§ ॥ ३८
पशवः कीटसङ्घाश्च तेऽपि विष्णुमया नृप ।
भावनान्तु दृढ़ां कुर्य्याद्यतः सर्व्वमयो हरिः¶ ॥ ४०
नान्यस्तस्मादृश्यं भूतमिति भावेन सेव्यताम् ।
एष ते ज्ञानसद्भावस्तव राजन् प्रकीर्त्तितः‖ ॥ ४१ ।
परिपूर्णेन भावेन स्मर नारायणं गुरुम्** ।

* सोऽन्यत्र संस्थितः इति (ख) ।

† पुरुषैरिति (ग) ।

‡ अतीव इति (क), (ख) ।

§ तदुपायं प्रदर्शितमिति (ख), स उपायः प्रदर्शित इति साधु ।

¶ सर्व्वगतो हरिरिति (ग) ।

‖ श्लोकोऽयं (ख) पुस्तके भिन्नरूपेऽस्ति । यथा—
नियन्ता सर्व्वभूतानामिति भावेन सिध्यति ।
एष वै ज्ञानसद्भावस्तव राजन् प्रदर्शितः ॥ इति ।
इति भावेन सेव्यते इति (ग) ।

** नरनारायणं गुरुमिति (ख) ।

पूजोपहारैर्धूपैश्च* आश्रयानाञ्च तर्पणैः ।
ध्यानेन सुस्थितेनाशु सुप्राप्यः परमेश्वरः† ॥ ४२ ॥

इति वराहपुराणे आदिकृतवृत्तान्ते चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

अश्वशिरा उवाच ।

भवन्तो मम सन्देहमेकं छेत्तुमिहार्हतः ।
येन च्छिन्नेन जायेत मम संसारविच्युतिः* ॥ १ ॥
एवमुक्तो नृपतिना तदा योगिवरो मुनिः ।
कपिलः प्राह धर्मात्मा राजानं यजतां वरम्† ॥ २ ॥

कपिल उवाच ।

कस्ते मनसि सन्देहो राजन् परमधार्म्मिक ।
छेदामि‡ येन तच्छ्रुत्वा ब्रूहि यत्तेऽभिवाञ्छितम् ॥ ३ ॥

---

* अर्घ्यैश्च इति (ख) । पूजोपहारधूपैश्चेति (ग) ।
† ध्यानेन स्तवनेनापि प्राप्यते परमेश्वरमिति (ख) ।

---

* संसारनिर्वृतिः इति (ख) ।
† यज्वानं यज्वनां वरमिति (ख) ।
‡ छेदामीति आर्षं, छिनद्मीति साधु । छिन्दामीति (ग), तदपि आर्षम् ।

राजोवाच* ।

कर्म्मणा प्राप्यते मोक्ष उताहो ज्ञानिना मुने† ।
एतन्मे संशयं छिन्धि यदि मेऽनुग्रहः कृतः ॥ ४ ॥

कपिल उवाच ।

इमम्प्रश्नं महाराज‡ पुरा पृष्टो बृहस्पतिः ।
रैभ्येण ब्रह्मपुत्रेण राज्ञा च वसुना तथा§ ॥ ५ ॥
वसुरासीन्नृपश्रेष्ठो विद्वान्दानपतिः पुरा ।
चाक्षुषस्य मनोः काले ब्रह्मणोऽन्वयवर्द्धनः ॥ ६ ॥
वसुः स ब्रह्मणः सद्म गतवांस्तद्दिदृक्षया ।
पथि चैत्ररथं दृष्ट्वा विद्याधरवरं नृप ।
अपृच्छच्च वसुः प्रीत्या ब्रह्मणोऽवसरं प्रभो¶ ॥ ७ ॥
सोऽब्रवीद्देवसमितिर्वर्त्तते ब्रह्मणो गृहे ।
एवं श्रुत्वा वसुस्तस्थौ द्वारि ब्रह्मौकसस्तदा ॥ ८ ॥
तद्वर्त्तन्नैव रैभ्यस्तु आजगाम महातपाः ।
स राजा प्रीतिमानासीद्वसुः सम्पूर्णमानसः‖ ॥ ९ ॥

* अश्वशिरा उवाच इति (ख) ।

† कर्म्मणा प्राप्यते मोक्ष उताहो ज्ञानतो मुने इति (ग)।

‡ महाबाहो इति (ख) ।

§ (ग) पुस्तके रैभ्येण ब्रह्मपुत्रेणेत्यतः परं गतवांस्तद्दिदृक्षयेति पाठो वर्त्तते सार्द्धैकः श्लोको नास्तीति भावः ।

¶ (ख) पुस्तके पप्रच्छ क गतो रैभ्य इति विद्याधरं वसुरित्यधिकार्द्धं वर्त्तते

‖ वसुर्धात्रा च पूजित इति(ख)। स राजा प्रीतमनसा वसुः सम्पूर्णमानस

उवाच पूजयित्वाग्र्ये क्व प्रयातोऽसि वै मुने ॥ १० ।

रैभ्य उवाच ।

अहं बृहस्पतेः पार्श्वादागतोऽस्मि* महानृप ।
किञ्चित्कार्य्यान्तरं प्रष्टुमगाद्देवपुरोहितम् ॥ ११ ।
एवं ब्रुवति† रैभ्ये तु ब्रह्मणस्तन्महत्सदः ।
उत्तस्थौ‡ स्वानि धिष्ण्यानि गता देवगणाः प्रभो ॥ १२ ।
तावद्बृहस्पतिस्तत्र रैभ्येण सह संविदम् ।
कृत्वा स्वधिष्ण्यमगमद्वसुना चानुपूजितः§ ॥ १३ ।
रैभ्य आङ्गिरसो राजा वसुश्चोपविवेश ह ।
उपविष्टेषु राजेन्द्र¶ तेषु त्रिष्वपि सोऽब्रवीत् ॥
बृहस्पतिर्देवगुरू रैभ्यं वचनमन्तिके ।
किं करोमि महाभाग वेदवेदाङ्गपारग‖ ॥ १४ ॥ १५ ।

रैभ्य उवाच ।

बृहस्पते कर्म्मिणा किं प्राप्यते ज्ञानिनाऽथवा ।
मोक्ष एतन्ममाचक्ष्व पृच्छतः संशयं प्रभो ॥ १६ ।

* आगतोऽत्र इति (ख) ।

† वदति इति (ख) ।

‡ उत्थाय इति (ख) ।

§ वसुना चापि पूजितः इति (ख) । वसुना चाग्र पूजित इति (ग) ।

¶ आसनेषूपविष्टेषु इति (ख) ।

‖ किन्ते करोमि विप्रेन्द्र कथ्यतां राजसत्तम इति (ख) ।

बृहस्पतिरुवाच ।

यत्किञ्चित्कुरुते कर्म्म पुरुषः साध्वसाधु वा ।
सर्व्वं नारायणे न्यस्य कुर्व्वन्नपि न लिप्यते ॥ १७ ।
श्रूयते च द्विजश्रेष्ठ संवादो विप्रलुब्धयोः ।
आत्रेयो ब्राह्मणः कश्चिद्वेदाभ्यासरतो मुनिः ॥ १८ ।
तपस्यभिरतः प्रातःस्नायी त्रिषवणे रतः ।
नाम्ना संयमनः पूर्व्वमेकस्मिन्दिवसे नदीम् ।
धर्म्मारण्ये गतः स्नातुं धन्यां भागीरथीं शुभाम्* ॥ १९
तत्रासीनं महायूथं हरिणानां विचक्षणः ॥
लुब्धो निष्ठुरको नाम धनुःपाणिः कृतान्तवत् ।
आययौ तं जिघांसुः सन्सज्यं संयुज्य सायकम्† ॥ २०
ततः संयमनो विप्रो दृष्ट्वा तं मृगयारतम् ।
वरयामास मा भद्र जीवघातमिमङ्कुरु‡ ॥ २१ ।
एतच्छ्रुत्वा वचो व्याधः स्मितपूर्व्वमिदं वचः ।
उवाच नाहं हिंसामि पृथग्जीवान्द्विजोत्तम ॥ २२ ।
परमात्मा त्वयं भूतैः क्रीड़ते भगवान्स्वयम्§ ।
कृता मायावलीॱ मन्त्रैस्तद्वदेतन्न संशयः ॥ २३ ।

* धर्म्मारण्येषु स स्नात्वा ययौ भागीरथीं शुभामिति (ख) ।

† आययौ तं जिघांसुः सन्धनुषा योज्य सायकानिति (ग) ।

‡ वारयामास तं विप्रो जीवनाशञ्च मा कुरु इति (ख) ।

§ एकवत्वै स्वयमिति (ख) ।

ॱ कृत्वा मृदावलमिति (ख) ।

अहंभावः सदा ब्रह्मन विधेयो मुमुक्षुभिः ।
यावाप्राणरतं सर्व्वं जगदेतद्विचेष्टितम् ।
तत्राहमिति यः शब्दः स साधुत्वं न गच्छति ॥ २४ ।
इत्याकर्ण्य स विप्रेन्द्रो द्विजः संयमनस्तदा ।
विस्मयेनाब्रवीद्वाक्यं लुब्धं निष्ठुरकं द्विजः ॥ २५ ।
किमेतदुच्यते भद्र प्रत्यक्षं हेतुमद्वचः ॥ २६ ।
ततः श्रुत्वा पुनः*र्विप्रं लुब्धकः प्राह धर्म्मवित् ।
कृत्वा लोहमयं जालं तस्याधो ज्वलनं ददौ ॥ २७ ।
दत्तवह्निं द्विजं प्राह ज्वाल्यतां काष्ठसञ्चयम् ।
ततो विप्रो मुखेनाग्निं प्रज्वाल्य विरराम ह ॥ २८ ।
ज्वलिते तु पुनर्वह्नौ तं जालं लोहसम्भवम् ।
गवाक्षैर्निर्गतज्वालं बभौ कादम्बिगोलवत्† ॥ २९ ।
पृथक् पृथक् सहस्राणि निश्चेलुर्ज्वलनार्च्चिषः‡ ।
एकस्थानगतस्यापि वह्नेरायसजालकैः ॥ ३० ।
ततो लुब्धोऽब्रवीद्विप्रमेकां ज्वालां महामुने ।
गृहाण येन शेषाणां करिष्यामीह नाशनम् ॥ ३१ ।
एवमुक्त्वा हुताशे तु तोयपूर्णघटं द्रुतम् ।
चिक्षेप सहसा वह्निः प्रशशामाथ पूर्व्ववत्§ ॥ ३२ ।

---

* एतच्छ्रुत्वा पुनरिति (ख) । ततः श्रुत्वा मुनेर्वाक्यमिति (ग) ।

† एतदर्द्धं (ग) पुस्तके नास्ति ।

‡ पृथक् पृथक् सहस्राणि निर्ग्यऽन्तर्ज्जालकैर्द्विजेति (ग) ।

§ प्रशमार्थमसूसुचदिति (ख) ।

ततोऽब्रवील्लुब्धकस्तु* ब्राह्मणं तं तपोधनम् ।
भगवन्या त्वया ज्वाला गृहीतासीद्धुताशनात्† ।
प्रयच्छ येन मार्गेण मांसान्यानाय्य भक्षये ॥ ३३ ।
एवमुक्तस्तदा विप्रो यावदायसजालकम् ।
पश्यत्येव न‡ तत्राग्निर्मूलनाशे गतः क्षयम् ॥ ३४ ।
ततो विलक्ष्यभावेन ब्राह्मणः शंसितव्रतः ।
तूष्णीभूतः स्थितस्तावल्लुब्धको वाक्यमब्रवीत् ॥ ३५ ।
एतस्मिञ्ज्वलितो वह्निर्बहुयाखस्य सत्तम§ ।
मूलनाशे भवेन्नाशस्तद्वदेतदपि द्विज ॥ ३६ ।
आत्मा स प्रकृतिस्थश्च भूतानां संश्रयो भवेत् ।
विकृताद्‌द्भवस्तस्य एषा वै जगतः स्थितिः¶ ॥ ३७ ।
पिण्डग्रहणधर्म्मेण यदस्य विहितं व्रतम् ।
तत्तदात्मनि संयोज्य कुर्व्वाणो नावसीदति ॥ ३८ ।
एवमुक्ते तु व्याधेन ब्रह्मणा राजसत्तम ।
पुष्पवृष्टिरथाकाशात्तस्योपरि पपात ह ॥ ३९ ।
विमानानि च दिव्यानि कामगानि महान्ति च ।

* लुब्धको वै इति (ख) ।

† प्रगृहीता हुताशनादिति ।

‡ पश्यंस्तावन्न तत्राग्निः इति (क), (ख) ।

§ एतस्मिञ्ज्वलिते वह्नौ बहुशाखैर्द्विजोत्तम इति (ख) ।

¶ (ग) पुस्तके एतदर्द्धमेवं पठितम्—
"भूप एषा जगत्सृष्टिस्तथैव जगती भवेत् ।"

बहुरत्नानि मुख्यानि ददृशे* ब्राह्मणोत्तमः ॥ ४० ।
तेषु निष्ठुरकं लब्धं सर्व्वेषु समवस्थितम्† ।
ददृशे‡ ब्राह्मणस्तत्र कामरूपिणमुत्तमम् ॥ ४१ ।
अद्वैतवासनासिद्धं योगाद्बहुशरीरकम् ।
दृष्ट्वा विप्रो मुदा युक्तः प्रययौ निजमाश्रमम् ॥ ४२ ।§
एवं ज्ञानं भवेत्कर्म्म कुर्व्वतोऽपि स्वजातिकम् ।
भवेन्मुक्तिर्द्विजश्रेष्ठ रैभ्यराजवसोर्ध्रुवम् ॥ ४३ ।
एवं तौ संशयच्छेदं प्राप्तौ रैभ्यवसू नृप ।
बृहस्पतेस्तन्नो धिष्ण्याज्जग्मतुर्निजमाश्रमम् ॥ ४४ ।
तस्मात्त्वमपि राजेन्द्र देवं नारायणं प्रभुम् ।
अभेदेन स्वदेहे तु पश्य आराधयन् प्रभुम् ॥ ४५ ।
कपिलस्य वचः श्रुत्वा स राजाश्वशिरा विभुः ।
ज्येष्ठं पुत्रं समाहूय धन्यं स्थूलशिराह्वयम् ।
अभिषिच्य निजे राज्ये स राजा प्रययौ वनम् ॥
नैमिषाख्यं वरारोहे तत्र यज्ञतनुं हरिम् ।
तपसाराधयामास यज्ञमूर्त्तिस्तवेन च ॥ ४६।४७ ।

* ददृशे इत्यात्मनेपदमार्षं, ददर्शेति साधु ।

† तेषु निष्ठुरकं तुल्यमिति (ख) ।

‡ अत्रापि ददर्शेति साधु ।

§ (ग) पुस्तके अतः परं किमप्यधिकं श्लोकार्द्धं वर्त्तते यथा—
"एवं ज्ञानवतः कर्म्म कुतोविद्याः स्वयीनिजाः ।"

धरण्युवाच ।

कथं यज्ञतनोः स्तोत्रं राज्ञा नारायणस्य ह ।
स्तुतिः कृता महाभाग पुनरेतच्च शंस मे ॥ ४८ ।

वराह उवाच ।

नमामि नित्यं त्रिदशाधिपस्य
भवस्य सूर्यस्य हुताशनस्य ।
सोमस्य राज्ञो मरुतामनेक-
रूपं हरिं यज्ञतनुं नमस्ये* ॥ ४९ ।

सुभीमदंष्ट्रं शशिसूर्यनेत्रं
संवत्सरोह्रायनयुग्मकुक्षिम् ।
दर्भाङ्गरोमाणमथोग्रशक्तिं†
सनातनं यज्ञनरं नमामि ॥ ५० ।

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं शरीरेण दिशश्च सर्वाः ।
तमीड्यमीशं जगतां प्रसूतिं
जनार्दनं तं प्रणतोऽस्मि नित्यम् ॥ ५१ ।

सुरासुराणामजयो जयाय
युगे युगे यत्स्वशरीरमाद्यम् ।

* (क) पुस्तकेऽस्य श्लोकस्य तृतीयपादस्तु एवं पठ्यते "सर्व्वस्य विश्वस्य युतं सुसु-मिति । तत्राऽतः परं चरणत्रयं नास्ति ।

† धर्म्माङ्गरोमाणमथोर्ध्वसम्मितमिति (ग) ।

सृजत्यनादिः परमेश्वरो य-
स्तं यज्ञमूर्त्तिं प्रणतोऽस्मि नित्यम् ॥ ५२ ।
दधार मायामयमुग्रतेजा
जयाय चक्रं त्वमलं सुशुभ्रम् ।
सारङ्गशङ्खादिचतुर्भुजो य-*
स्तं यज्ञमूर्त्तिं प्रणतोऽस्मि नित्यम् ॥ ५३ ।
क्वचित्सहस्रं शिरसां दधानः
क्वचिन्महापर्वततुल्यकायः ।
क्वचित्स एव त्रसरेणुतुल्यो†
यस्तं सदा यज्ञनरं नमामि ॥ ५४ ।
चतुर्मुखो यः सृजते‡ समग्रं
रथाङ्गपाणिः प्रतिपालनाय ।
क्षयाय कालानलसन्निभो य-
स्तं यज्ञमूर्त्तिं प्रणतोऽस्मि नित्यम् ॥ ५५ ।
संसारचक्रक्रमणक्रियायै
य इज्यते सर्वगतः पुराणः ।
यो योगिनां ध्यानगतोऽप्रमेय-§
स्तं यज्ञमूर्त्तिं प्रणतोऽस्मि नित्यम् । ५६ ।

---

* जयाय चक्रं समरेषु शुभ्रम् गदासिशार्ङ्गचतुर्भुजो य इति (ख) ।

† क्वचिन्नवेद्यं त्रसरेणुतुल्यमिति (ख) ।

‡ सृजते जगच्चेति (ख) । सृजत इति आर्षं सृजतीति साधु ।

§ यो योगिभिर्ध्यायते चाऽप्रमेय इति (ख), (ग) ।

सम्यग्मनस्यर्पितवानहं ते
यदा सुदृश्यं स्वतनौ तु तत्त्वम्* ।
न चान्यदस्तीति मतिः स्थिरा मे
यतस्ततो याति विशुद्धभावम्† ॥ ५७ ॥
इतीरतस्तस्य हुताशनार्चिः-
प्रख्यन्तु‡ तेजः पुरतो बभूव ।
तस्मिन्स राजा प्रविवेश बुद्धिं
कृत्वा लयं प्राप्तवान्यज्ञमूर्त्तौ ॥ ५८ ॥

इति वराहपुराणे आदिकृतवृत्तान्ते पञ्चमोऽध्यायः ।

——:——

## षष्ठोऽध्यायः ।

धरण्युवाच ।

सवसुः संशयच्छेदं प्राप्य रैभ्यश्च सत्तमः ।
उभौ किं चक्रतुर्देव श्रुत्वा चाङ्गिरसं वचः* ॥ १ ॥

* मनीमयं स्थापितवानहन्तु दृश्यं दृश्या ते स्वतनुं तनौ ते इति (ख) पुस्तके

† यतस्तत आवह शुद्धभावमिति.(ग) ।

‡ प्रेक्ष्यमिति (ख) ।

—•—

* एष श्लोकः (ख) पुस्तके नास्ति ।

वराह उवाच ।

स वसुः सर्वधर्म्मज्ञः स्वराज्यं प्रत्यपालयत् ।
अयजद्बहुभिर्यज्ञैर्महद्भिर्भूरिदक्षिणैः ॥ २ ।
कर्मकाण्डेन देवेशं हरिं नारायणं प्रभुम् ।
तोषयामास राजेन्द्रस्तमभेदेन चिन्तयन् ॥ ३ ।
ततः कालेन महता तस्य राज्ञो मतिः किल ।
निवृत्तराज्यभोगेच्छा* द्वन्द्वस्यान्तमुपेयुषः ॥ ४ ।
ततः पुत्रं विवस्वन्तं श्रेष्ठं भ्रातृशतस्य ह ।
अभिषिच्य स्वके राज्ये तपोवनमुपागतः† ॥ ५ ।
पुष्करं नाम तीर्थानां प्रवरं यत्र केशवः ।
पुण्डरीकाक्षनामा तु पूज्यते तत्परायणैः ॥ ६ ।
तत्र गत्वा स राजर्षिः काश्मीराधिपतिर्वसुः ।
अतितीव्रेण तपसा स्वशरीरमशोषयत्‡ ॥ ७ ।
पुण्डरीकाक्षपारन्तु स्तवं भक्त्या जपन् बुधः ।
आरिराधयिषुर्देवं नारायणमकल्मषम् ।
स्तोत्रान्ते तन्मयं प्राप्तः स राजा राजसत्तमः ॥ ८ ।

धरण्युवाच ।

पुण्डरीकाक्षपारन्तु स्तोत्रं देव कथं स्मृतम् ।

* निवृत्तराज्यभोगश्चेति (ग) ।

† तपोवनमुपागमदिति (ख), (ग) ।

‡ स्वं शरीरमशोषयदिति (ख) ।

कीदृशं तन्ममाचक्ष्व परमेश्वर तत्त्वतः* ॥ ९ ।

वराह उवाच ।

नमस्ते पुण्डरीकाक्ष नमस्ते मधुसूदन ।
नमस्ते सर्व्वलोकेश नमस्ते तिग्मचक्रिणे ॥ १० ।
विश्वमूर्त्तिं महाबाहुं वरदं सर्व्वतेजसम् ।
नमामि पुण्डरीकाक्षं विद्याविद्यात्मकं विभुम्† ॥ ११
आदिदेवं महादेवं वेदवेदाङ्गपारगम् ।
गभीरं सर्व्वदेवानां नमस्ये वारिजेक्षणम्‡ ॥ १२ ।
सहस्रशीर्षिणं देवं सहस्राक्षं महाभुजम् ।
जगत्संव्याप्य तिष्ठन्तन्नमस्ये परमेश्वरम्§ ॥ १३ ।
शरण्यं शरणं देवं¶ विष्णुञ्जिष्णुं सनातनम् ।
नीलमेघप्रतीकाशं नमस्ये चक्रपाणिनम् ॥ १४ ।
शुद्धं सर्व्वगतं नित्यं व्योमरूपं सनातनम् ।
भावाभावविनिर्मुक्तं नमस्ये सर्व्वगं हरिम् ॥ १५ ।
नान्यत्किञ्चित्प्रपश्यामि व्यतिरिक्तं त्वयाऽच्युत ।

* कीदृशं वा ममाचक्ष्व भक्तायाः परमेश्वर इति (ख) ।

† विद्याविद्यात्मकं मुने इति (ख) ।

‡ गभीरं सर्व्वदेवानां नमामि मधुसूदन इति (ग) ।

§ (ग) पुस्तके एष श्लोक एवं पठितः—
"विश्वमूर्त्तिर्महामूर्त्तिर्विद्यामूर्त्तिस्त्रिमूर्त्तिकम् ।
कवचं सर्व्वदेवानां नमस्ये वारिजेक्षणम् ॥"

¶ (ग) पुस्तके चरणमेतदन्यथा दृश्यते यथा—देवदेवं महादेवमिति ।

त्वन्मयञ्च प्रपश्यामि सर्व्वमेतच्चराचरम् ॥ १६ ।
एवन्तु वदतस्तस्य मूर्त्तिमान् पुरुषः किल ।
निर्गत्य देहान्नीलाभो घनचण्डो भयङ्करः ॥
रक्ताक्षो ह्रस्वकायस्तु दग्धस्थूणासमप्रभः ।
उवाच प्राञ्जलिर्भूत्वा किं करोमि नराधिप ॥ १७।१८ ।

राजोवाच ।

कोऽसि किं कार्य्यमिह ते कस्मादागतवानसि ।
एतन्मे कथय व्याध एतदिच्छामि वेदितुम् ॥ १९ ।

व्याध उवाच ।

पूर्व्वं कलियुगे राजन्त्वं राजा दक्षिणापथे* ।
पूर्णधर्म्मोद्भवः श्रीमान्† जनस्थाने विचक्षणः ॥ २० ।
स कदाचिद्गवान्वीर तुरगैः परिवारितः‡ ।
अरण्यमागतो हन्तुं श्वापदानि विशेषतः ॥ २१ ।
तत्र त्वया अकामेन मृगवेषधरो मुनिः ।
दण्डयुग्मेन दूरे तु§ पातितो धरणीतले ॥ २२ ।
सद्यो मृतश्च विप्रेन्द्रस्त्वञ्च राजन्मुदा युतः¶ ।
हरिणोऽयं हत इति यावत्पश्यसि पार्थिव ।

* दक्षिणामुखे इति (ख), (ग)।

† सोमवंशोद्भवः श्रीमानिति (ख)।

‡ मृगयैः परिवारित इति (ख)।

§ काण्डयुग्मेन दूरात्तु इति (ख)।

¶ मुदाऽन्वित इति (ख)।

तावन्मृगवपुर्विप्रो मृतः प्रस्रवणे गिरौ ॥ २३ ।
तं दृष्ट्वा त्वं महाराज क्षुभितेन्द्रियमानसः ।
गृहागतः* स्ततोऽन्यस्य कस्यचित्कथितं त्वया ॥ २४ ।
ततः कतिपयाहस्य त्वया रात्रौ नरेश्वर ।
ब्रह्महत्याभयाद्भीतचित्तेनैतद्विचिन्तितम्† ।
कृत्यं करोमि शान्त्यर्थं मुच्येयं येन पातकात्‡ ॥ २५ ।
ततस्त्वया महाराज सकृन्नारायणं प्रभुम् ।
सञ्चिन्त्य द्वादशी शुद्धा त्वया राजन्नुपोषिता ॥ २६ ।
नारायणो मे सुप्रीत इति प्रोक्ता शुभेऽहनि ।
गौर्दत्ता विधिना सद्यो मृतोऽस्युदरशूलतः§ ॥ २७ ।
अमुक्तो द्वादशीधर्म्मो यत्तत्रापि च कारणम्¶ ।
कथयामि भवत्पत्नी नाम्ना नारायणी शुभा ॥ २८ ।
सा कण्ठगेन प्राणेन व्याहृता तेन ते गतिः‖ ॥ २९ ।
तत्क्षणमेकं महाराज जातो विष्णुपुरे तव** ।
अहञ्च तव देहस्थः सर्व्वं जानामि चाव्ययम् ॥ ३० ।

* गृहं गत इति (ग) ।

† ब्रह्महत्याभयाद्भीत्या युक्तमेतद्विचिन्तितम् । इति (ख) ।

‡ मुच्यते येन पातकादिति (ख), (ग) ।

§ (ख) पुस्तके श्लोकेऽस्मिन् प्रभूतः पाठभेदो वर्त्तते—यथा, नारायणोऽस्तु मे इति चोक्तं स्वके हृदि । गां ददद्विधिवत्सद्यो मृतोऽस्युदरशूलतः ॥ इति ।

¶ तत्रापि तव कारणमिति (ख) ।

‖ व्याहृता ते ततो गतिरिति (ख) ।

** जातो विष्णुपुरं तव इति (ख) ; (ग) पुस्तकेऽतः परं सार्द्धपञ्चश्लोका न सन्ति

ब्रह्मग्रहो महाघोरः पीड़यामीति* मे मतिः।
तावद्विष्णोस्तु पुरुषैः किङ्करैर्मुषलैरहम्।
प्रहतः सङ्क्षयं जातश्च्युतस्ते रोमकूपतः†।
स्वर्गस्थस्यापि राजेन्द्र स्थितोऽहं स्वेन तेजसा॥ ३१।३२।
ततोऽहःकल्पे निर्वृत्ते रात्रिकल्पेन सत्तम।
इदानीमादिष्टी तु क्षते नृपतिसत्तम।
सम्भूतस्त्वं महाराज राज्ञः सुमनसो गृहे।
काश्मीरदेशाधिपतेरहं चाङ्गरुहैस्तव॥
यज्ञैरिष्टं त्वयानेकैर्बहुभिश्चाप्तदक्षिणैः‡॥ ३३।३४।
न चाहन्तैरपहृतो§ विष्णुस्मरणवर्ज्जितैः¶।
इदानीं यत्त्वया स्तोत्रं पुण्डरीकाक्षपारगम्।
पठितं तत्प्रभावेण विहायाङ्गरुहाण्यहम्||।
एकीभूतः पुनर्जातो व्याधरूपी नृपोत्तम**॥ ३५।३६।

* ब्रह्मरुद्यायहे घोरपीड़यामीति (ख)।

† स च्युतस्त्द्रोमकूपत इति (ख)।

‡ काश्मीरदेशाधिपतिस्तवाङ्गरुहतः सह।
यज्ञैरिष्ट त्वयाऽनेकैर्दानैश्च विविधैस्तव॥ इति (ख)।

§ न चाहं तैरपगत इति (ख)।

¶ जातिस्मरणवर्जित इति (ग) पुस्तके पाठः।

|| (ग) पुस्तके श्लोकोऽयमेवं पठितः—
"इदानीं तत्त्वया प्रोक्तं पुण्डरीकाक्षपारकम्।
पठितं तव भावेन गुहायां गुरुहाप्यहम्॥"

** व्याधरूपी द्विजोत्तम इति (ख)।

अहं भगवतः स्तोत्रं श्रुत्वा प्राक् पापमूर्त्तिना ।
मुक्तोऽस्मि धर्मबुद्धिर्मे वर्त्तते साम्प्रतं विभो ॥ ३७ ॥*
एतच्छ्रुत्वा वचो राजा† परं विस्मयमागतः ।
वरेण छन्दयामास तं व्याधं राजसत्तमः ॥ ३८ ॥

राजोवाच ।

स्मारितोऽस्मि यथा व्याध त्वया जन्मान्तरं गतम् ।
तथा त्वं मत्प्रभावेण‡ धर्मव्याधो भविष्यति ॥ ३९ ॥
यश्चैतत्पुण्डरीकाक्षपारगं शृणुयात्परम्§ ।
तस्य पुष्करयात्रायां विधिस्नानफलं भवेत् ॥ ४० ॥

वराह उवाच ।

एवमुक्त्वा ततो राजा विमानवरमास्थितः ।
परेण तेजसा योगमवापाशेषधारिणि ॥ ४१ ॥

इति वराहपुराणे आदिकृतवृत्तान्ते षष्ठोऽध्यायः ।

वसुचरितं समाप्तम् ।



* "अहं हि पारगं स्तोत्रं पुण्डरीकाक्षमूर्त्तितः ।
मुक्तोऽस्मि धर्म्मबुद्धिर्मे वर्त्तते साम्प्रतं विभो ॥" इति (ख) ।

† एतच्छ्रुत्वा ततो राजा इति (ख) ।

‡ मत्प्रसादेन इति (ख) ।

§ पारगं प्रपठेदिति (ख) ।

# सप्तमोऽध्यायः ।

धरण्युवाच ।

रैभ्योऽसौ मुनिशार्दूलः श्रुत्वा सिद्धं वसुं तदा ।
स्वयं किमकरोद्देव संशयो मे महानयम्* ॥ १ ॥

वराह उवाच ।

स रैभ्योमुनिशार्दूलः श्रुत्वा सिद्धं वसुं तदा† ।
आजगाम गयां पुण्यां पितृतीर्थे तपोधनः ॥ २ ।
तत्र गत्वा पितॄन् भक्त्या पिण्डदानेन तर्पयन् ।
तताप सुमहत्तीव्रं तपः परमदुस्तरम्‡ ॥ ३ ॥
चरतस्तस्य तत्तीव्रं तपो रैभ्यस्य धीमतः§ ।
आजगाम महायोगी विमानस्थोऽतिदीप्तिमान्¶ ॥ ४ ।
त्रसरेणुसमे शुद्धे विमाने सूर्यसन्निभे ।
परमाणुप्रमाणेन पुरुषस्तत्र दीप्तिमान् ॥ ५ ।
सोऽब्रवीद्रैभ्य किं कार्य्यं तपश्चरसि सुव्रत ।
एवमुक्त्वा दिवो भूमिं मापयामास वै पुमान् ॥ ६ । ||

---

* संशयो मे महानभूदिति (ख) ।

† स तु रैभ्यो मुनिः श्रुत्वा वसुं सिद्धमुपागतमिति (ख) ।

‡ परमदुष्करमिति (ख) । तपस्तताप इति आर्षं, तपस्तेपे इति साधु ।

§ ततो रैभ्यस्य धीमत इति (ख) ।

¶ विमानस्थोऽपि दीप्तिमानिति (ख) ।

|| (ख) पुस्तके (५) (६) श्लोकौ न स्तः ।

तत्रापि रोदसीव्याप्तं विमानं सूर्य्यसन्निभम् ।
युगपद्विष्णुभवनं व्याप्नुवन्तं ददर्श सः * ॥ ७ ।
ततः स विस्मयाविष्टो रैभ्यः प्रणतिपूर्व्वकम् ।
पप्रच्छ तं महायोगिन् को भवान् प्रब्रवीतु मे ॥ ८ ।

पुरुष उवाच ।

अहं रुद्रादवरजो ब्रह्मणो मानसः सुतः ।
नाम्ना सनत्कुमारेति† जनलोके वसाम्यहम्‡ ॥ ९ ।
भवतः पार्श्वमायातः प्रणयेन तपोधन ।
धन्योऽसि सर्व्वदा§ वत्स ब्रह्मणः कुलवर्द्धनः ॥ १० ।

रैभ्य उवाच ।

नमोऽस्तु ते योगिवर प्रसीद
दयां मह्यं कुरुषि विश्वरूपः¶ ।
किमत्र सत्यं वद योगिसिंह
धन्योऽहमुक्तो हि कथं त्वयाद्य‖ ॥ ११ ।

सनत्कुमार उवाच ।

धन्यस्त्वमेव द्विजवर्य्यमुख्य**

* युगपद्ब्रह्मसदनं भासयन्तं ददर्श ह इति (ख) ।

† सनत्कुमारेति आर्षं, सनत्कुमार इति साधु ।

‡ नभोलोके वसाम्यहमिति (ग) ।

§ सर्व्वथा इति (ख) ।

¶ कुरु विप्रमुख्य इति (ख) । अत्र छन्दोनियमो न दृश्यते ।

‖ किमत्र सत्यं वद योगिसिंह धन्योऽस्मि रूपं तव रूपमद्य इति (ख) ।

** द्विजविप्रमुख्य इति (ख) । श्लोकेऽप्यत्र छन्दोनियमो नास्ति ।

यद्दिवादाभिरतः पितॄंश्च ।
प्रीणासि मन्त्रव्रतजप्यहोमै-
र्गयां समासाद्य च सर्व्वपिण्डैः* ॥ १२ ।
शृणुष्व चान्यो नृपतिर्बभूव
विशालनामा स पुरं विशालम्† ।
उवास धन्यो धृतिमान्‡ सपुत्रः
स्वयं विशालाधिपतिर्द्विजाग्र्यान् ॥
पप्रच्छ पुत्रार्थममित्रहा स-
ते ब्राह्मणाः प्रोचुरदीनसत्त्वाः ।
राजन् पितॄंस्तर्पय पुत्रहेतो-
र्गत्वा गयामन्नदानैरनेकैः§ ॥ १३।१४ ।
ध्रुवं सुतस्ते भविता नृपेश¶
सुसम्प्रदाता सकलक्षितीशः‖ ॥ १५ ।
इतीरिते ब्राह्मणैः स प्रहृष्टो**

* तथाऽन्यपिण्डैरिति (ग) ।

† स पुरीं विशालामिति (ख) ।

‡ धर्म्मो धृतिमानिति (ख) ।

§ गत्वा गयां पिण्डदानेन सम्यगिति (ख) ।

¶ भविता सुवीर इति (ख) ।

‖ सम्प्रदाता सकलक्षितीश इति (ख) ।

** इतीरिते ब्राह्मणैः विप्रवर्य्यैरिति (ख) ।

राजा विशालाधिपतिः प्रयत्नात् । *
आगत्य तेन प्रवरेण तीर्थे
मघासु भक्त्याथ कृतं पितॄणाम् ।
पिण्डप्रदानं विधिना प्रयत्ना-
त्तावद्दियत्युत्तममूर्त्तयस्त्रीन् ॥ †
पश्यन् स पुंसः सितपीतकृष्णा-
नुवाच राजा किमिदं भवद्भिः ।
उपेक्ष्यते ‡ शंसत सर्व्वमेव
कौतूहलं मे मनसि प्रवृत्तम् ॥ १६।१७ ।

सित उवाच ।

अहं सितस्ते जनकोऽस्मि तात
नाम्ना च वृत्तेन कुलेन कर्मणा § ।
अयञ्च मे जनको रक्तवर्णो
नृशंसकृद्ब्रह्महा पापकारी ॥ १८ ।
अधीश्वरो नाम परः पिताऽस्य

---

* (ख) पुस्तके अतः परं जगाम तीर्थप्रवरं द्विजोऽथ गय इत्यभिधानं वचनान्तरे इति श्लोकार्द्धं वर्त्तते ।

† (ख) पुस्तके श्लोकोऽयमेवं पठितः—

"आगत्य सोऽथ प्रवरं सुतीर्थं गयाशिरो यागपरः पितॄणाम् ।
पिण्डप्रदानं विधिवत्प्रयत्नात्तावद्दियत्युत्तममूर्त्तयस्त्रीन् ॥"

उत्तममूर्त्तय इति आर्षम्, उत्तममूर्त्तीनिति साधु ।

‡ औरक्ष्यते इति (ख) ।

§ अहं सितस्ते जनकः सितोऽस्मि नाम्ना च वृत्तेन च कर्मणा च इति (ख) ।

कृष्णो हृत्या कर्मणा चापि कृष्णः* ।
एतेन कृष्णेन हृताः पुरा वै
जन्मन्यनेके ऋषयः पुराणाः ॥ १९ ।
एतौ मृतौ द्वावपि पुत्र रौद्र-
मवीचिसंज्ञं नरकं प्रपन्नौ ।
अधीश्वरो मे जनकः परोऽस्य
कृष्णः पिता द्वावपि दीर्घकालम् ॥ २० ।
अहञ्च शुद्धेन निजेन कर्मणा
शक्रासनं प्रापितो दुर्लभं तत्† ।
त्वया पुनर्मन्त्रविदा गयायां
पिण्डप्रदानेन बलादिमौ च ॥
मेलापितौ तीर्थपिण्डप्रदान-
प्रभातौ यौ नरकश्रितावपि‡ ॥ २१ ।
पितॄन् पितामहांस्तत्र तथैव प्रपितामहान् ।
प्रीणयामीति तत्तोयं त्वया दत्तमरिन्दम ॥ २२ ।
तेनास्मद्युगपद्योगो जातो वाक्येन सत्तम ।
तीर्थप्रभावाद्गच्छामि पितृलोकं न संशयः ॥ २३ ।
अत्र पिण्डप्रदानेन एतौ तव पितामहौ ।
दुर्गतावपि संसिद्धौ पापकृद्धिकृतिङ्गतौ ॥ २४ ।

* कृष्णो नाम्ना कर्मणा धर्मतश्च इति (ख) ।

† चरणेऽत्र छन्दोभङ्गः ।

‡ नरकश्रितावपीति (ख) । अत्र छन्दोभङ्गः ।

तीर्थप्रभाव एषोऽस्मिन्ब्रह्मन्नस्यापि तत्सुत: ।
पितु: पिण्डप्रदानेन कुर्यादुद्धरणं पुन: ॥ २५ ।
एतस्मात्कारणात्पुत्र अहमेतौ विगृह्य वै ।
आगतोऽस्मि भवन्तं वै द्रष्टुं यास्यामि साम्प्रतम् ॥ २६
एतस्मात्कारणाद्रैभ्य भवान्धन्यो मयोच्यते ।
सकृद्गयाभिगमनं सकृत्पिण्डप्रदापनम् ॥
दुर्लभं त्वं पुनर्नित्यमस्मिन्नेव व्यवस्थित: ।
*किमनु प्रोच्यते रैभ्य तव पुण्यमिदं प्रभो* ॥ २७।२८ ।
येन साक्षाद्गदापाणिर्दृष्टो नारायण: स्वयम् ।
ततो गदाधर: साक्षादस्मिन् क्षेत्रे व्यवस्थित: ।
अतोऽतिविख्याततमं तीर्थमेतद्द्विजोत्तम ॥ २९ ।

वराह उवाच

एवमुक्त्वा महायोगी तत्रैवान्तरधीयत ।
रैभ्योऽपि च गदापाणेर्हरे: स्तोत्रमथाकरोत् ॥ ३० ।

रैभ्य उवाच

गदाधरं विबुधजनैरभिष्टुतं
धृतक्षमं क्षुधितजनार्त्तिनाशनम् ।
शिवं विशालासुरसैन्यमर्द्दनं
नमाम्यहं हतसकलाशुभं स्मृतौ ॥ ३१ ।
पुराणपूर्व्वं पुरुषं पुरुष्टुतं
पुरातनं विमलमलं नृणां गतिम् ।
त्रिविक्रमं हृतधरणिं बलोर्ज्जितं

गदाधरं रहसि नमामि केशवम् ॥ ३२ ।
विशुद्धभावं विभवैरुपावृतं
श्रिया वृतं विगतमलं विचक्षणम् ।
क्षितीश्वरैरपगतकिल्बिषैः स्तुतं
गदाधरं प्रणमति यः सुखं वसेत् ॥ ३३ ।
सुरासुरैरर्च्चितपादपङ्कजं
केयूरहाराङ्गदमौलिधारिणम् ।
अब्धौ शयानञ्च रथाङ्गपाणिनं
गदाधरं प्रणमति यः सुखं वसेत् ॥ ३४ ।
सितं कृते त्रेतयुगेऽरुणं विभुं
तथा तृतीये नीलवर्णमच्युतम्* ।
कलौ युगेऽलिप्रतिमं महेश्वरं
गदाधरं प्रणमति यः सुखं वसेत् ॥ ३५ ।
वीजोद्भवो यः सृजते† चतुर्मुखं
तथैव नारायणरूपतो जगत् ।
प्रपालयेद्रुद्रवपुस्तथान्तकृ-
द्गदाधरोजयतु षडर्द्धमूर्त्तिमान् ॥ ३६ ।
सत्त्वं रजश्चैव तमो गुणास्त्रय-
स्त्वेतेषु विश्वस्य समुद्भवः किल ।

* पीतवर्णमच्युतमिति (ग) ।

† सृजत इति, आर्षं सृजतीति साधु ।

स चैक एव त्रिविधो गदाधरो
दधातु धैर्य्यं मम धर्म्ममोक्षयोः ॥ ३७ ।
संसारतोयार्णवदुःखतन्तुभि-
र्व्वियोगनक्रक्रमणैः सुभीषणैः ।
मज्जन्तमुच्चैः सुतरां महाप्लवो
गदाधरो मामुदधौ तु योऽतरत् ॥ ३८ ।
स्वयं त्रिमूर्त्तिः स्वमिवात्मनात्मनि
स्वशक्तितश्चाण्डमिदं ससर्ज्ज ह ।
तस्मिञ्जलोत्थासनमाप तैजसं
ससर्ज्ज यस्तं प्रणतोऽस्मि भूधरम् ॥ ३९ ।
मत्स्यादिनामानि जगत्सु प्रसृते
सुरादिसंरक्षणतो वृषाकपिः ।
मखस्वरूपेण स सन्ततो विभु-
र्गदाधरो मे विदधातु सद्गतिम् ॥ ४० ।

वराह उवाच ।

एवं स्तुतस्तदा विष्णुर्भक्त्या रैभ्येण धीमता ।
प्रादुर्बभूव सहसा पीतवासा जनार्दनः ॥ ४१ ।
शङ्खचक्रगदापाणिर्गरुडस्थो वियद्गतः ।
उवाच मेघगम्भीरधीरवाक् पुरुषोत्तमः ॥ ४२ ।
तुष्टोऽस्मि रैभ्य भक्त्या ते स्तुत्या चापि द्विजोत्तम* ।
तीर्थस्नानेन च विभो ब्रूहि यत्तेऽभिवाञ्छितम् ॥ ४३

* स्तुत्या च द्विजसत्तम इति (ग) ।

रैभ्य उवाच ।

गतिं मे देहि देवेश यत्र ते सनकादयः ।
वसेयन्तत्र येनाहं त्वत्प्रसादाज्जनार्दन ॥ ४४ ॥

देव उवाच ।

एवमस्त्विति ते ब्रह्मन्नित्युक्त्वाऽन्तरधीयत ।
भगवानपि रैभ्यस्तु दिव्यज्ञानसमन्वितः ॥
क्षणाद्बभूव देवेन परितुष्टेन चक्रिणा ।
जगाम यत्र ते सिद्धाः सनकाद्या महर्षयः ॥ ४५।४६ ।
एतच्च रैभ्यनिर्द्दिष्टं स्तोत्रं विष्णोर्गदाभृतः ।
यः पठेत्स गयां गत्वा पिण्डदानादिर्गमिष्यति ॥ ४७ ॥

इति वराहपुराणे रैभ्यचरिते सप्तमोऽध्यायः ।

# अष्टमोऽध्यायः ।

वराह उवाच ।

योऽसौ वसोः शरीरे तु व्याधो भूत्वा नृपस्य ह ।
स स्वव्रत्या स्थितः कालञ्चतुर्वर्षसहस्रकम्* ॥ १ ॥

* स तद्वृत्त्यास्थितः कालमिति (ग) ।

एकैकं स्वकुटुम्बार्थे हत्वा वनचरं मृगम् ।
भृत्यातिथिहुताशानां प्रीणनं कुरुते सदा ॥ २ ।
मिथिलायां वरारोहे सदा पर्व्वणि पर्व्वणि ।
पितॄणां कुरुते श्राद्धं स्वाचारेण विचक्षणः ॥ ३ ।
अग्निं परिचरन्नित्यं वदन् सत्यं सुभाषितम् ।
प्राणयात्रानुसक्तस्तु योऽसौ जीवं न पातयेत्* ॥ ४ ।
एवन्तु वसतस्तस्य धर्म्मबुद्धिर्म्महातपाः ।
पुत्रस्त्वर्ज्जुनको नाम बभूव मुनिवद्वशी ॥ ५ ।
तस्य कालेन महता चारित्रेण च धीमतः ।
बभूवार्ज्जुनका नाम कन्या च वरवर्णिनी ॥ ६ ।
तस्या यौवनकाले तु चिन्तयामास धर्म्मवित् ।
कस्येयन्दीयते कन्या को वा योग्यश्च वै पुमान् ॥ ७ ।
इति चिन्तयतस्तस्य मतङ्गस्य सुतं प्रति ।
धर्म्मव्याधस्य सुव्यक्तं प्रसन्नाख्यं प्रतिब्रुवन् ॥ ८ ।
एवं सचिन्त्य मातङ्गं प्रसन्नम्प्रति सोद्यतः† ।
उवाच तस्य पितरम्प्रसन्नायार्ज्जुनीं भवान् ।
गृहाण तपतां श्रेष्ठ स्वयन्दत्तां महात्मने ॥ ९ ।

मतङ्ग उवाच ।

प्रसन्नोऽयं मम सुतः सर्व्वशास्त्रविशारदः ।
गृह्णात्यर्ज्जुनकां कन्यान्त्वत्सुतां व्याधसत्तम ॥ १० ।

---

* योऽसौ जीवेन पातयेदिति (ग) ।

† सोद्यत इति आर्षं, स उद्यत इति साधु ।

एवमुक्ते तदा कन्यां धर्म्मव्याधो महातपाः।
मतङ्गपुत्राय ददौ प्रसन्नाय च धीमते॥ ११॥
धर्म्मव्याधस्तदा कन्यां दत्त्वा स्वगृहमीयिवान्।
सापि श्वशुरयोर्भर्त्तुः शुश्रूषणपराभवत्॥ १२॥
अथ कालेन महता सा कन्याऽर्ज्जुनकाऽशुभा।
उक्ता श्वश्र्वा सुता पुत्री जीवहन्तुस्त्वमीदृशी।
न जानासि तपश्चर्त्तुं भर्त्तुराराधनं तथा॥ १३॥
साऽपि स्वल्पाऽपराधेन भर्त्सिता तनुमध्यमा।
पितुर्वेश्मागता बाला रोदमाना* मुहुर्मुहुः॥ १४॥
पित्रा पृष्टा किमेतत्ते पुत्रि रोदनकारणम्।
एवमुक्ता तदा सा तु कथयामास भामिनी॥ १५॥
श्वश्र्वाऽहमुक्ता तीव्रेण कोपेन महता पितः।
जीवहर्त्तुः सुतेत्युच्चैरसकृद्दयाधर्जेति च॥ १६॥
एतच्छ्रुत्वा स धर्म्मात्मा धर्म्मव्याधो रुषाऽन्वितः।
मतङ्गस्य गृहं सोऽथ गत्वा जनपदैर्वृतम्॥ १७॥
तस्यागतस्य सम्बन्धी मतङ्गो जयतां वरः।
आसनाद्यर्घपाद्येन पूजयित्वेदमब्रवीत्॥ १८॥
किमागमनकृत्यं ते किं करोम्यागतक्रियाम्॥ १९॥

व्याध उवाच।

भोजनं किञ्चिदिच्छामि भोक्तुं चैतन्यवर्ज्जितम्।
कौतूहलेन येनाऽहमागतो भवतो गृहे॥ २०॥

---

* रोदमानेति चार्षं, रुदतीति साधु।

मतङ्ग उवाच ।

गोधूमा व्रीहयश्चैव संस्कृता मम वेश्मनि ।
भुज्यतां धर्मविच्छ्रेष्ठ यथाकामं तपोधन ॥ २१ ।

व्याध उवाच ।

पश्यामि कीदृशास्ते हि गोधूमा व्रीहयो यवाः ।
स्वरूपेण च सन्त्येते येन वो वेश्मि सत्तमः ॥ २२ ।

वराह उवाच ।

एवमुक्ते मतङ्गेन शूर्पं गोधूमपूरितम् ।
अपरं तत्र व्रीहीणां धर्मव्याधाय दर्शितम् ॥ २३ ।
दृष्ट्वा व्रीहींश्च गोधूमान्धर्मव्याधो वरासनात् ।
उत्थाय गन्तुमारेभे मतङ्गेन निवारितः ॥ २४ ।
किमर्थं गन्तुमारब्धं त्वया वद महामते ।
अभुक्तेनैव संसिद्धं मद्गृहे चान्नमुत्तमम् ।
पाचयित्वा* स्वयञ्चैव कस्मात्त्वं नाद्य भुञ्जसे† ॥ २५ ।

व्याध उवाच ।

सहस्रशः कोटिशश्च जीवान्हंसि दिने दिने ।
अथेदृशस्य पापस्य कोऽन्नं भुञ्जति‡ सत्पुमान् ॥ २६ ।
अचैतन्यं यदि गृहे विद्यतेऽन्नं सुसंस्कृतम् ।
तदानीमस्मि संभोक्ता मत्वा तु स्वजनं तव ॥ २७ ।

* वाचयित्वेति बहुषु पुस्तकेषु पाठः ।

† भुञ्जसे इति आर्षं, भुङ्क्षे इति साधु । तत्पुमानिति (ग)।

‡ भुञ्जतीति आर्षं, भुङ्क्ते इति साधु ।

अहमेकं कुटुम्बार्थे हन्म्यरण्ये पशुं दिने ।
तच्चेत्पितृभ्यः सत्कृत्य दत्वा भुञ्जामि* साऽनुगः ॥ २८ ।
त्वन्तु जीवान् बहून् हत्वा स्वकुटुम्बेन साऽनुगः† ।
भुञ्जसे‡ तेन सततमभोज्यं तन्मतं मम ॥ २९ ।
ब्रह्मणा तु पुरा सृष्टा ओषध्यः सर्व्ववीरुधः ।
यज्ञार्थं तत्तु भूतानां भक्ष्यमित्येव वै श्रुतिः ॥ ३० ।
दिव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च ।
एते पञ्च महायज्ञा ब्रह्मणा निर्म्मिता पुरा ॥ ३१ ।
ब्राह्मणानां हितार्थाय इतरेषाञ्च तन्मुखाः ।
इतरेषान्तु वर्णानां ब्राह्मणैः कारिताः शुभाः ॥ ३२ ।
एवं कृत्वा नरो भुक्त्वा तस्मादान्नं विशुध्यति§ ।
अन्यथा व्रीहयोऽप्येते एकैके मृगपक्षिणः ¶ ।

---

* भुञ्जामीति चार्षं, भुञ्जे इति साधु ।

† चाऽनुग इति (ग) ।

‡ भुञ्जसे इति चार्षं, भुङ्क्षे इति साधु । भुञ्जसे तेनेति (ग)

§ तस्मादन्नाच्चि विशुध्यतीति (ग) ।

¶ (क) पुस्तके एतेषां श्लोकानां स्थाने अमी पठिताः—

अथ श्वश्रूः कृता निन्दा त्वं कन्या जीवघातिनः ।
इति केनचिदाख्यातं श्रुतं व्याधेन धीमता ॥
ततोमतङ्गसदनं गत्वा क्रोधसमन्वितः ।
मातङ्गमब्रवीत्तच्च धर्म्मयुक्तं वचस्तदा ॥

धर्म्मव्याध उवाच ।

पुरा वराहेणाख्यातं धरणीं प्रति सत्तम ।

मन्तव्या दातृभोक्तॄणां महामांसन्तु तत्स्मृतम् ॥ ३३ ।
मया ते दुहिता दत्ता पुत्रार्थे वरवर्णिनी ।
सा च त्वद्भार्य्यया प्रोक्ता दुहिता जन्तुघातिनः ।
अतोऽर्थमागतोऽहन्ते गृहं प्रतिसमीक्षितुम् ॥ ३४ ।
आचारं देवपूजाञ्च अतिथीनाञ्च तर्पणम् ।
एतेषामेकमप्यत्र कुर्व्वन्नपि न दृश्यसे ॥ ३५ ।*
तदहं गन्तुमिच्छामि† पितॄणां श्राद्धकाम्यया ।
स्वगृहे नैव भुञ्जामि‡ पितॄणां कार्य्यमित्युत ॥ ३६ ।
अहं व्याधोजीवघाती न तु त्वं लोकहिंसकः ॥ ३७ ।
*मत्कृता जीवघातस्य यद्दोषा त्वत्कृतेन च ।*
तन्महत्त्वञ्च सम्प्राप्तं प्रायश्चित्तं तपोधन ॥ ३८ ।
एवमुक्त्वा स चोत्थाय शशाप नारीं तदाम्बरे ।
मा स्नुषाभिः समं श्वश्र्वा विश्वासो भवतु क्वचित् ॥ ३९
मा च स्नुषा कदाचित्स्याद्वा श्वश्रूं जीवती§मिषेत् ।
एवमुक्त्वा गतो व्याधः स्वगृहं प्रति भामिनि ॥ ४० ।

मांसाशी नरकं याति अदत्त्वा पितृदैवते ॥
दत्त्वा च पितृदेवेभ्यस्तत्माशाति विशुद्ध्यति ।
अन्यथा व्रीहयोऽप्येते एकैकम्नगपक्षिणः ॥

* एष श्लोको (ग) पुस्तके नास्ति ।

† श्रोतुमिच्छामि वैगुण्यमिति (ग) ।

‡ भुञ्जामीति आर्षं, भुञ्जे इति साधु ।

§ जीवतीमिति आर्षं, जीवन्तीमिति साधु ।

ततो देवान् पितॄन् भक्त्या पूजयित्वा विचक्षणः ।
पुत्रञ्चार्ज्जुनकं स्थाप्य* स्वसन्तानं महातपाः ।
धर्म्मव्याधो जगामाशु तीर्थं त्रैलोक्यविश्रुतम् ॥ ४१ ।
पुरुषोत्तमाख्यञ्च परन्तत्र गत्वा समाहितः ।
तपश्चचार नियमात्पठन्स्तोत्रमिदं धरे ॥ ४२ ।

नमामि विष्णुं त्रिदशारिनाशनं
विशालवक्षस्थलसंश्रितश्रियम् ।
सुशासनं नीतिमतां पराङ्गतिं
त्रिविक्रमं मन्दरधारिणं सदा ॥ ४३ ।
दामोदरं निर्जितभूतलं धिया
यशोंऽशुशुभ्रं भ्रमराङ्गसप्रभम् ।
भवे भवं दैत्यरिपुं पुरुष्टुतं
नमामि विष्णुं शरणं जनार्द्दनम् ॥ ४४ ।
त्रिधा स्थितं तिग्मरथाङ्गपाणिनं
नयस्थितं युक्तमनुत्तमैर्गुणैः ।
निःश्रेयसाख्यं क्षयितेतरं गुरुं
नमामि विष्णुं पुरुषोत्तमं त्वहम् ॥ ४५ ।
महावराहो हविषां भुजो जनो
जनार्द्दनो मे हितकृच्चतुर्मुखः ।
क्षितीधरो मामुदधिप्लवे महान्
स पातु विष्णुः शरणार्थिनं तु माम् ॥ ४६ ।

* स्थाप्य इति आर्षं, स्थापयित्वा इति साधु ।

मायाततं* येन जगत्त्रयं कृतं†
यथाग्निनैकेन ततं चराचरम् ।
चराचरस्य स्वयमेव सर्व्वतः
स मेऽस्तु विष्णुः शरणं जगत्पतिः ॥ ४७ ।
भवे भवे यश्च ससर्ज्ज कं ततो
जगत्प्रसूतं सचराचरं त्विदम् ।
ततश्च रुद्रात्मवति प्रलीयते
ततोहरिर्विष्णुहरस्तथोच्यते ॥ ४८ ।
रवीन्दुपृथ्वी‡पवनादिभास्कराः
जलञ्च यस्य प्रभवन्ति मूर्त्तयः ।
स सर्व्वदा मे भगवान् सनातनो
ददातु शं विष्णुरचिन्त्यरूपधृक् ॥ ४९ ।
इतीरिते तस्य सनातनः स्वयं
पुरो बभूवाद्भुतरूपदर्शनः ।
वरं वृणीष्वेति सनातनोऽब्रवी-
दनन्तपादोदरबाहुवक्त्रः§ ॥ ५० ।
इतीरितो व्याधवरो जगाद
प्रदीयतामेष वरः सुतेष्वपि ।

---

* मायामतमिति (ख) ।

† जगत्त्रयं ततमिति (ख) ।

‡ खाग्नीन्दुपृथ्वीति (ग) ।

§ अनन्तपादोदरबाहुविक्रम इति (ग) ।

क्रियाकलापेन तथात्मविद्यया
कुलप्रसूतावपि तेऽनुगामिनः ॥ ५१ ।
ज्ञानोदयस्त्वऽस्य कुलस्य* सर्वदा
लयस्तथा ब्रह्मणि मे सनातन ।
इतीरिते तम्भगवानुवाच ह
प्रसन्नबुद्धिर्भवते मया त्वयम् ॥
वरो विसृष्टस्य कुलस्य ते मया
लयस्तथा ब्रह्मणि शाश्वते तव ।
इतीरिते देववरेण स क्षणात्
स्वदेहतस्तेज उदीर्णमैक्षत ॥
विसर्जयामास कविं सनातनं
लयञ्च तत्र प्रतिपेदिवानसौ ॥ ५२।५३ ।
इतीरितं स्तोत्रवरम्भरे नरः
पठिष्यते† यश्च शृणोति मानवः ।
हरिं समभ्यर्च्य सदा ह्युपोषितो
विशेषतो विष्णुदिने च मानवः ।
स याति यत्र स्वयमेव केशवो
वसेत‡ मन्वन्तरसप्ततिं सुखम् ॥ ५४ ।

इति वराहपुराणे आदिकृतवृत्तान्ते धर्मव्याधचरिते अष्टमोऽध्यायः ।



* ज्ञानोदयात् स्वस्य कुलस्य सर्व्वदा इति (क), (ख) ।

† पठिष्यते इति आर्षं, पठिष्यतीति साधु ।

‡ वसेत इति आर्षं, वसेदिति साधु ।

# नवमोऽध्यायः ।

धरण्युवाच ।

आदौ कृतयुगे नाथ किं कृतं विश्वमूर्त्तिना ।
नारायणेन तत्सर्व्वं श्रोतुमिच्छामि तत्त्वतः ॥ १ ।

वराह उवाच ।

पूर्व्वन्नारायणस्त्वेको नासीत्किञ्चिद्वरे परम् ।
सैक* एव रतिं लेभे नैव स्वच्छन्दकर्मकृत् ॥ २ ।
तस्य द्वितीयमिच्छन्त† श्चिन्ता बुद्ध्यात्मिका ह्यभौ ।
अभावेत्येव संज्ञा या‡ चणभास्करसन्निभा ॥ ३ ।
तस्या अपि द्विधा भूता चिन्ताभूद्ब्रह्मवादिनः ।
उमेति संज्ञया यत्तत्सदा मर्त्ये व्यवस्थिता ॥ ४ ।
उमेत्येकाचरीभूता ससर्जेमां महीन्तदा ।
भूः ससर्ज भुवं सोऽपि ससर्ज च ततो महत् ॥ ५ ।
ततश्च जन इत्येव ततश्चात्मा प्रलीयते ।
एतदोतन्तथा प्रोतं सूत्रे मणिगणा इव ॥ ६ ।
जगत्प्राणवतो भूतं शून्यमेतत्स्थितन्तदा ।
येयं मूर्त्तिर्भगवतः शङ्करः स स्वयं हरिः ॥ ७ ।
शून्याल्लोकानिमान्स्रष्टा सिसृक्षुर्मूर्त्तिमुत्तमाम्

* सैक इति आर्षं, स एक इति साधु ।

† इच्छन्त इति आर्षम्, इच्छत इति साधु

‡ अभावेत्येवसंज्ञाया इति (क), (ख) ।

क्षोभयित्वा मनोधाम तत्राकारः स्वमावृतः ।
स्थितस्तस्मिन्यदा क्षुब्धे ब्राह्माण्डमभवत्तदा ॥ ८ ।
तस्मिंस्तु शकलीभूते भूर्लोकञ्च व्यवस्थितम्* ।
अपरम्भुवनम्मायात्मध्ये भास्करसन्निभम्† ॥ ९ ।
पुरा नष्टकसंस्थो यः पद्मकोशो व्यवस्थितः ।
स हि नारायणो देवः प्राजापत्येन तेजसा‡ ॥
अकाराद्यं स्वरन्ताभ्यां हलञ्च विससर्ज ह ।
अमूर्त्तस्रष्टौ शास्त्राणि उद्गायत्तदाहि सः ॥ १०।११ ।
सृष्ट्वा पुनर्मेयात्मा चिन्तयामास धारणम् ।
तस्य चिन्तयतो नेत्रात्तेजः समभवन्महत् ॥ १२ ।
दक्षिणं वह्निसङ्काशं वामन्तुहिनसन्निभम् ।
तद्दृष्ट्वा चन्द्रसूर्य्यौ तु कल्पितौ परमेष्ठिना ॥ १३ ।
ततः प्राणः§ समुत्तस्थौ वायुश्च परमेष्ठिनः ।
स एव वायुर्भगवान्योऽद्यापि हृदिगो विभुः ॥ १४ ।
तस्माद्वह्निः समुत्तस्थौ तस्मादग्नेर्जलं महत् ।
य एवाग्निः स वै तेजो ब्राह्मं परमकारणम् ॥ १५ ।
बाहुभ्यामप्यसौ तेजः क्षात्रन्तेजः ससर्ज ह ।
ऊरुभ्यामपि वैश्यांश्च पद्भ्यां शूद्रांस्तथा विभुः ॥ १६ ।

---

* भूर्लोकञ्च व्यवस्थितमिति आर्षं, भूर्लोकश्च व्यवस्थित इति साधु ।

† अपरम्भुवनञ्चैव प्राजापत्येन तेजसा इति (ख) ।

‡ अपरम्भुवनञ्चैव प्राजापत्येन तेजसा इति (ख) ।

§ प्राणशब्दो हि सर्व्वत्र बहुवचनान्तः प्रयुज्यते ।

ततस्तु ससृजे यक्षान्राक्षसांश्च तथा विभुः ।
चतुर्विधैस्तु भूर्लोकं भुवो लोकं वियच्चरैः ॥ १७ ।
भूतैः स्वर्मार्गगैरन्यैः स्वर्लोकं समपूरयत् ।
महर्लोकं तथा तैस्तैर्भूतैश्च सनकादिभिः ॥ १८ ।
जनलोकन्ततश्चैव वैराजैः समपूरयत् ।
तपोलोकं ततो देवैस्तपोनिष्ठैरपूरयत् ॥ १९ ।
अपुनर्मारकैः* देवैः सत्यलोकमपूरयत् ।
सृष्टिं सृष्ट्वा तथा देवो भगवान् भूतभावनः ।
कल्पसंज्ञान्तदामीषां जगन्ति परमेश्वरः ॥ २० ।
तस्मिञ्जगति भूर्लोको भुवोलोकश्च जायत† ।
स्वर्लोकश्च त्रयोऽप्येते‡ जायन्ते नात्र संशयः ॥ २१
सुप्ते तु देवे कल्पान्ते तावती रात्रिरिष्यते ।
त्रैलोक्यमेतत्सुप्तं स्यात्तथोपप्लवताङ्गतम् ॥ २२ ।
ततो रात्र्यां व्यतीतायामुत्थितः§ कमलेक्षणः ।
चिन्तयामास तान्वेदान्मातरञ्च चतुर्ष्वपि ॥ २३ ।
चिन्तयानः स देवेशस्तान्वेदान्नाध्यगच्छत¶ ।
लोकमार्गस्थितिं कर्त्तुं निद्राज्ञानेन मोहितः ।

---

* अपुनर्भास्करैरिति (ख) ।

† जायत इति आर्षम्, अजायत इति साधु ।

‡ त्रयोऽप्येते इति (क), (ख) ।

§ मुच्छित इति (ख) ।

¶ अध्यगच्छत इति आर्षम्, अध्यगच्छदिति साधु ।

चिन्तयामास देवेशो नात्र देवो व्यवस्थितः ॥ २४ ।
ततः स्वमूर्त्तौ तोयाख्ये लीनान्दृष्ट्वा महेश्वरः ।
जिघृक्षुश्चिन्तयामास मत्स्यो भूत्वाऽविशज्जलम् ॥ २५ ।
एवं ध्यात्वा महामत्स्यस्तत्क्षणात्समजायत ।
विवेश च जलन्देवः समन्तात्क्षोभयन्निव ॥ २६ ।

तस्मिन् प्रविष्टे सहसा जलन्तु
महामहीध्रग्वपुषि प्रकाशम् ।
मात्स्यं गते देववरे महोदधिं
हरिं स्तवैस्तुष्टुवुरद्भुतश्चितिम् ॥ २७ ।
नमोऽस्तु वेदान्तरगाप्रतर्क्य
नमोऽस्तु नारायण मत्स्यरूप ।
नमोऽस्तु ते सुस्वर विश्वमूर्त्ते
नमोऽस्तु विद्याद्वयरूपधारिन् ॥ २८ ।
नमोस्तु चन्द्रार्कमनेकरूप
जलान्तविश्वस्थितचारुनेत्र ।
नमोस्तु विष्णोः शरणं व्रजामः
प्रपाहि नो मत्स्यतनुं विहाय ॥ २९ ।
त्वया ततं विश्वमनन्तमूर्त्ते
पृथङ्न ते किञ्चिदिहास्ति* देव ।
भवान्न चास्य व्यतिरिक्तमूर्त्ति-
स्त्वत्तो वयन्ते शरणं प्रपन्नाः ॥ ३० ।

---

* किञ्चिदिहास देव इति (ग) ।

खाग्नीन्दुवह्निश्च मनश्च रूपं
पुराणमूर्त्तेस्तव चाञ्जनेत्र ।
क्षमस्व शम्भो यदि भक्तिहीनं
त्वयाजगद्भासति* देवदेव ॥ ३१ ।
विरुद्धमेतत्तव देवरूपं
सुभाषणं सुस्वनमद्रितुल्यम् ।
पुराण देवेश जगन्निवास
शमं प्रयाह्यच्युततीव्रभानो ॥ ३२ ।
नमामः सर्व्वे शरणं प्रपन्ना
भयाच्च ते रूपमिदं प्रपश्यं† ।
लोके समस्तश्भवता विनाऽद्य
न विद्यते देहगतं पुराणम् ॥ ३३ ।
एवं स्तुतस्तदा देवो जलस्थाञ्जगृहे च सः ।
वेदान् सोपनिषच्छास्त्राण्यतः स्वं रूपमास्थितः ॥ ३४ ।
यावत्स्वमूर्त्तिर्भगवान्तावदेव जगत्त्विदम् ।
कूटस्थे तल्लयं याति विकृतस्थे विवर्द्धते‡ ॥ ३५ ।

इति वराहपुराणे आदिकृतवृत्तान्ते सृष्टिवर्णने नवमोऽध्यायः ।

* भासतीति आर्षं, भासते इति साधु ।

† प्रपश्य इति आर्षं, प्रपश्य इति साधु ।

‡ विकृतस्थो विवर्द्धते इति (ग) ।

## दशमोऽध्यायः ।

वराह उवाच ।

एवं सृष्ट्वा जगत्सर्व्वं भगवान् भूतभावनः ।
विरराम ततः सृष्टिर्व्यवर्द्धत धरे तदा ॥ १ ।
ब्रह्मायामथ सृष्टौ तु सर्व्वदेवाः पुरातनम् ।
नारायणाख्यं पुरुषं यजन्तो विविधैर्मखैः ॥
द्वीपेषु चैव सर्व्वेषु वर्षेषु च मखैर्हरिम् ।
देवाः सत्रैर्महद्भिस्ते यजन्तः श्रद्धयान्विताः ।
तोषयामासुरत्यर्थं स्वम्पूज्यं कर्त्तुमीप्सवः ॥ २।३ ।*
एवं तोषयतान्तेषां बहुवर्षसहस्रिकः ।
कालो देवस्तदा तुष्टः प्रत्यक्षत्वं जगाम ह ॥ ४ ।

अनेकबाहूदरवक्त्रनेत्रो
महागिरेः शृङ्गमिवोल्लिखंस्तदा ।
उवाच किं कार्य्यमथो सुरेशो
ब्रूत वरन्देववरा वरं वः ॥ ५ ।

देवा ऊचुः ।

जयस्व गोविन्द महानुभाव

---

* (ग) पुस्तके २य ३य श्लोकयोः स्थाने एवं श्लोकौ वर्त्तते—
ब्रह्मायामथ सृष्टौ तु सर्व्वे देवाः सवासवाः ।
सत्रैर्महद्भिः सर्व्वेऽत्र यजन्तः श्रद्धयाऽन्विताः ।
तोषयामासुरत्यर्थं स्वं पूज्यं कर्त्तुमीश्वरः ॥

त्वया वरं नाथवरेण देवाः ।
मनुष्यलोकेऽपि भवन्तमाद्यं
विहाय नास्मान्भवते* ह कश्चित् ॥ ६ ।
चन्द्रादित्यौ वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
सर्व्वे भवन्तं शरणागताः स्म
कुरुष्व पूज्यानिह विश्वमूर्त्ते ॥ ७ ।
एवमुक्तस्तदा तैस्तु महायोगीश्वरो हरिः ।
करोमि सर्व्वान्वः पूज्यानित्युक्त्वाऽन्तरधीयत ॥ ८ ।
देवा अपि निजौकांसि गतवन्तः सनातनाः ।
स्तुवन्तः परमेशोऽपि त्रिविधम्भावमास्थितः ॥ ९ ।
एवं त्रिधा जगद्धाता भूत्वा देवान्महेश्वरः ।
आराध्य सात्त्विकं राजस्तामसञ्च† त्रिधा स्थितम् ॥ १०
सात्त्विकेन पठेद्वेदान्यजन्यज्ञेन देवताः ।
आत्मनोऽवयवो भूत्वा राजसेनापि केशवः ॥ ११ ।
स कालरूपिणं रौद्रं प्रकृत्या शूलपाणिनम् ।
आत्मनो राजसीं मूर्त्तिं पूजयामास भक्तितः ॥ १२ ।
तामसेनापि भावेन असुरेषु व्यवस्थितः ॥ १३ ।
एवं त्रिधा जगद्धाता भूत्वा देवान्महेश्वरः ।
आराधयामास ततो लोकोऽपि विविधोभवत् ॥ १४ ।

* भवते भावयति चिन्तयतीत्यर्थः ।

† राजः इति आर्षं, राजसमिति साधु ।

एवं विष्णुर्महेशानां नाम गच्छन्व्यवस्थितः ।
स च नारायणो देवः कृते युगकरे प्रभुः ॥ १५ ।
त्रेतायां रुद्ररूपस्तु द्वापरे यज्ञमूर्त्तिमान् ।
कलौ नारायणो देवो बहुरूपो व्यजायत ॥ १६ ।
तस्यादिकर्तृतो विष्णोश्चरितं भूरितेजसः ।
शृणुष्व सर्व्वं सुश्रोणि गदतो मम भामिनि ॥ १७ ।
आसीत्कृतयुगे राजा सुप्रतीको महाबलः ।
तस्य भार्याद्वयं चासीदविशिष्टं मनोरमम् ॥ १८ ।
विद्युत्प्रभा कान्तिमती तयोरेते तु नामनी ।
तयोः पुत्रं समं राजा न लेभे बलवानपि ॥ १९ ।
यदा तदा मुनिश्रेष्ठमात्रेयं वीतकल्मषम् ।
तोषयामास विधिना चित्रकूटे नगोत्तमे ॥ २० ।
स ऋषिस्तोषितस्तेन दीर्घकालं वरार्थिना ।
वरन्दित्सुतया यावदब्रवीदत्रिजो मुनिः* ॥ २१ ।
तावदिन्द्रोऽपि करिणा गतः पार्श्वेन तस्य ह ।
देवसैन्यैः परिवृतस्तूष्णीमेव महाबलः ॥ २२ ।
तं दृष्ट्वा† तद्गतप्रीतिरप्रीतिं प्रीतवान्मुनिः‡ ।
चुकोप देवराजाय शापमुग्रं ससर्ज ह ॥ २३ ।

* वरं दिदित्सया यावदब्रवीदात्रेयो मुनिरिति (ख)। दिदित्सयेति चार्षं दित्सयेति साधु ।

† तं दृष्ट्वाऽन्तर्गतप्रीतिरिति (ग) ।

‡ प्रीतवान्मुनिरप्रीतिमिति (ख) ।

यस्मात्त्वया ममाऽवज्ञा कृता मूढ़ दिवस्पते ।
ततस्त्वं चालितो राज्यादन्यलोके वसिष्यसि* ॥ २४ ।
एवमुक्त्वाऽपि कोपेन सुप्रतीकञ्च भूपतिम् ।
उवाच राजन्पुत्रस्ते भविता दृढ़विक्रमः ॥ २५ ।
इन्द्ररूपोपमः श्रीमानुद्यच्छस्त्रः प्रतापवान् ।
विद्याप्रभावतत्त्वज्ञः क्रूरकर्म्मा भविष्यति ॥ २६ ।
दुर्जयोऽतिबली राजा एवमुक्त्वा गतो मुनिः ॥ २७ ।
सोऽपि राजा सुप्रतीको भार्य्यायां गर्भमावहत् ।
*विद्युत्प्रभायां धर्म्मज्ञः साऽपि काले त्वसूयत ॥ २८ ।*
तस्याः पुत्रः समभवद्दुर्जयाख्यो महाबलः ।
जातकर्म्मादिसंस्कारं तस्य चक्रे मुनिः स्वयम् ॥ २९ ।
तस्य चेष्टैर्बलेनासौ मुनेः सौम्यो बभूव ह ।
वेदशास्त्रार्थविद्यायां पारगो धर्म्मवान् शुचिः ॥ ३० ।
या द्वितीयाऽभवत्पत्नी तस्य राज्ञो महात्मनः ।
नाम्ना कान्तिमती धन्या† तस्याः पुत्रो बभूव ह ।
नाम्ना सुद्युम्न इत्येवं वेदवेदाङ्गपारगः ॥ ३१ ।
अथ कालेन महता स राजा राजसत्तमः ।
सुप्रतीकः सुतन्दृष्ट्वा दुर्जयं योग्यमन्तिके ॥ ३२ ।
आत्मनो वृद्धभावञ्च वाराणस्यधिपो बली ।
चिन्तयामास राज्यार्थं दुर्जयं प्रति भामिनि ॥ ३३ ।

* वसिष्यसीति आर्षं, वत्स्यसीति साधु ।

† कीर्त्तिमती धन्या इति (ग) ।

एवं सञ्चिन्त्य धर्मात्मा तस्य राज्यं ददौ नृपः।
स्वयञ्च चित्रकूटाख्यं पर्व्वतं स जगाम ह ॥ ३४ ।
दुर्ज्जयोऽपि महद्राज्यं हस्त्यश्वरथवाजिभिः।
संयोज्य चिन्तयामास राज्यवृद्धिं प्रति प्रभुः ॥ ३५ ।
एवं सञ्चिन्त्य मेधावी हस्त्यश्वरथपत्तिभिः।
समेतां वाहिनीं कृत्वा उत्तरां दिशमाश्रितः ॥ ३६ ।
तस्य चोत्तरतो देशाः सर्वे सिद्धा महात्मनः।
भारताख्यमिदं वर्षं साधयित्वा सुदुर्जयः ॥
ततः किंपुरुषं नाम वर्षं तेनाऽपि साधितम्।
ततः परतरञ्चान्यद्धरिवर्षं जिगाय सः ॥ ३७।३८ ।
रम्यं रोमावतं वापि कुरुभद्राश्वमेव च ।
इलावृतं मेरुमध्यमेतत्सर्वं जिगाय सः ॥ ३९ ।
जित्वा जम्ब्वाख्यमेतद्धि* द्वीपं यावदसौ नृपः।
जगाम देवराजानं जेतुं सर्वं सुरान्वितम् ॥ ४० ।
मेरुपर्व्वतमारुह्य† देवगन्धर्व्वदानवान्।
गुह्यकान् किन्नरान्दैत्यांस्ततो ब्रह्मसुतो मुनिः।
नारदो दुर्ज्जयजयं देवराजाय शंसते‡ ॥ ४१ ।
तत इन्द्रस्त्वरायुक्तो लोकपालैः समन्वितः।

* रम्यं हैमवतं चाऽपि इति (ग)।

† मेरुं पर्व्वतमारुह्य इति (ग)।

‡ देवराजाय शंसत इति (ग)। शंसत इति चार्षम्, अशंसदिति साधु।

जगाम दुर्ज्जयं हन्तुं सोऽचिरेणास्त्रनिर्ज्जितम्* ॥ ४२
विहाय पर्व्वतं मेरुं मर्त्यलोकमिहागतः ॥ ४३ ।
पूर्व्वदेशेन† च देवेन्द्रो लोकपालैः समं प्रभुः ।
स्थितवांस्तस्य सुमहच्चरितं सम्भविष्यति ॥ ४४ ।
दुर्ज्जयश्च सुराञ्जित्वा यावत्प्रतिनिवर्त्तते ।
गन्धमादनपृष्ठे तु स्कन्धावारनिवेशनम् ।
कृत्वाऽवस्थितसम्भारमागतौ तापसौ तु तम् ॥ ४५ ।
तावागतौ तथाऽब्रूतां‡ राजन्दुर्ज्जय लोकपाः ।
निवारितास्त्वया सर्व्वे लोकपालैर्विना जगत् ।
न प्रवर्त्तेत्तताऽ§ देहि तत्पदं सुखमुत्तमम् ॥ ४६ ।
एवमुक्ते ततस्तौ तु दुर्ज्जयः प्राह धर्म्मवित् ।
कौ भवन्ताविति ततस्तावूचतुररिन्दमौ ॥ ४७ ।
विद्युत्सुविद्युनामानावसुराविति नामतः ।
त्वया सम्प्रति चेच्छामो धर्म्मं सत्यं सुसंस्कृतम् ॥ ४८
लोकपानां सर्व्वमावाङ्कर्म्म कुर्व्वः सुदुर्ज्जय ।
एवमुक्ते दुर्ज्जयेन तौ स्वर्गे सन्निवेशितौ ॥ ४९ ।
लोकपालौ कृतौ सद्यस्तौऽन्तर्द्धानमापतुः ।
तयोरपि महत्कर्म्म चरितञ्च धराधरे ॥

* सोऽचिरेणाऽस्त्रनिर्गत इति (ग) ।

† पूर्व्वदेशश्च देवेन्द्र इति (ग) ।

‡ तथा ब्रूतां तं (च तं ?) राजन्दुर्ज्जयं लोकपालना इति (ग) ।

§ प्रवर्त्तेदिति चार्षं, प्रवर्तेत इति साधु ।

भविष्यति महाराजो दुर्ज्जयो मन्दरोपरि ।
धनदस्य वनं दिव्यं दृष्ट्वा नन्दनसन्निभम् ॥
मुदा बभ्राम रम्येऽस्मिन्स यावद्राजसत्तमः* ।
तावत्सुवर्णवृक्षाधः कन्याद्वयमपश्यत† ॥ ५०।५१ ५२ ।
अतीवरूपसम्पन्नमतीवाद्भुतदर्शनम् ।
दृष्ट्वा तु विस्मयाविष्टः क इमे शुभलोचने ।
एवं सञ्चिन्त्य यावत्स क्षणमेकं व्यवस्थितः ।
तस्मिन्वने तावदुभौ तापसौ सोऽवलोकयत्‡ ॥ ५३।५४ ।
तौ दृष्ट्वा सहसा राजा ययौ प्रीत्या परं मुदम् ।
अवतीर्य्य द्विपात्तूर्णं नमश्चक्रे तयोः स्वयम् ॥ ५५ ।
उपविष्टः स ताभ्यान्तु कौश्ये दत्ते वरासने ।
पृष्टः कस्त्वं कुतश्चासि कस्य वा किमिह स्थितः ॥ ५६ ।
तौ प्रहस्याब्रवीद्राजा सुप्रतीकेति§ विश्रुतः ।
तस्य पुत्रः समुत्पन्नो दुर्जयो नाम नामतः ॥ ५७ ।
पृथिव्यां सर्व्वराजानां¶ जिगीषन्निह सत्तमौ ।
आगतोऽस्मि भुवश्चैव स्मर्त्तव्योऽहं तपोधनौ ।
भवन्तौ कौ समाख्यातं ममानुग्रहकाङ्क्षया ॥ ५८ ।

* मुदा बभ्राम रम्येष तद्यावद्राजसत्तम इति (ग) ।

† अपश्यत इति आर्षम्, अपश्यदिति साधु ।

‡ अवलोकयदिति आर्षम्, अवालोकयदिति साधु ।

§ सुप्रतीक इति साधु ।

¶ सर्व्वराजान इति आर्षं, सर्व्वराजानिति साधु ।

तापसावूचतुः ।

आवां हेतृप्रहेत्राख्यौ मनोः स्वायम्भुवः सुतौ ।
आवां देवविनाशाय गतौ स्वौ मेरुपर्व्वतम्* ॥ ५८ ।
तत्रावयोर्महासैन्यं गजाश्वरथसङ्कुलम् ।
जिगाय सर्व्वदेवानां शतशोऽथ सहस्रशः ॥ ६० ।
ते च देवा महत्सैन्यं दृष्ट्वा सैन्यं निपातितम् ।
असुरैरुज्झितप्राणं ततस्ते शरणं गताः ॥
क्षीराब्धौ यत्र देवेशो हरिः शेते स्वयं प्रभुः ।
तत्र विज्ञापयाञ्चक्रुः सर्व्वे† प्रणतिपूर्व्वकम्।" ६१।६२ ।
देव देव हरे सर्व्वं सैन्यं त्वसुरसत्तमैः ।
पराजितं परित्राहि भीतं विह्वललोचनम् ॥ ६३ ।
त्वया देवासुरे युद्धे पूर्व्वं त्राता स्म केशव ।
सहस्रबाहोः क्रूरस्य समरे कालनेमिनः ॥ ६४ ।
इदानीमपि देवेश असुरौ देवकण्टकौ ।
हेतृप्रहेतृनामानौ बहुसैन्यपरिच्छदौ ॥
तौ हत्वा‡ त्राहि नः सर्व्वान्देवदेव जगत्पते ॥ ६५ ।
एवमुक्तस्ततो देवो विष्णुर्नारायणः प्रभुः ।
अहं यास्यामि तौ हन्तुमित्युवाच जगत्पतिः ॥ ६६ ।
एवमुक्तास्ततो देवा मेरुपर्व्वतसन्निधौ ।

---

* मेरुपर्व्वते इति (ग) ।

† सर्व्वे प्रणतिपूर्व्वकमिति (ग) ।

‡ हत्वा तु त्राहि न इति (ग) ।

प्रतस्थतेऽथ मनसा चिन्तयन्तो जनार्द्दनम् ॥ ६७ ।
तैः सञ्चिन्तितमात्रस्तु देवश्चक्रगदाधरः ।
आवयोः सैन्यमाविश्य एक एव महाबलः ।
एकधा दशधात्मानं शतधा च सहस्रधा ।
लक्षधा कोटिधा कृत्वा स्वभूत्या च जगत्पतिः* ॥ ६८।६९ ।
एवं स्थिते देववरेऽस्मत्सैन्ये महाबलः ।†
यः कश्चिदसुरो राजन्नावयोर्बलमाश्रितः ।
स हतः पतितो भूमौ दृश्यते गतचेतनः ॥ ७० ।
एवं तत्सहसा सैन्यं मायया विश्वमूर्त्तिना ।
निहत्य मांसलकलम्पत्तिध्वजसमाकुलम् ।
चतुरङ्गं बलं सर्व्वं हत्वा देवो रथाङ्गधृक् ।
आवां शेषावथो दृष्ट्वा गतोऽन्तर्द्धानमीश्वरः ॥ ७१।७२ ।
आवयोरीदृशं कर्म्म दृष्टं देवस्य शार्ङ्गिणः ।
ततस्तमेव शरणं गतावाराधनाय वै‡ ॥ ७३ ।
त्वञ्चास्मन्मित्रतनयः सुप्रतीकात्मजो नृपः ।
इमे च आवयोः कन्ये गृहाण मनुजेश्वर ।
हेतृकन्या सुकेशी तु मिश्रकेशी प्रहेतृणः§ ॥ ७४ ।

* अत्र चचार इति क्रियापदमध्याहार्य्यम् ।

† (ग) पुस्तके ६७ श्लोकः, ६८ श्लोकस्य पूर्व्वार्द्धञ्च न स्तः ।

‡ गत्वा आराधनाय वै इति बहुषु पुस्तकेषु पाठोदृश्यते । तत्र च मोषितौ, रचितौ वेति क्रियान्तरस्यापेक्षा वर्त्तते ।

§ प्रहेतृण इति आर्षे, प्रहेतुरिति साधु ।

दुर्जयस्त्वेवमुक्तास्तु हेलया* ते उभे शुभे ।
कन्ये जग्राह धर्म्मेण भार्य्यार्थं मनुजेश्वरः ॥ ६५ ॥
ते लब्ध्वा सहसा राजा† मुदा परमया युतः ।
आजगाम स्वकं राष्ट्रं निजसैन्यसमावृतः ॥ ६६ ॥
ततः कालेन महता तस्य पुत्रद्वयं बभौ ।
सुकेश्याः प्रभवः पुत्रो मिश्रकेश्याः सुदर्शनः ॥ ६७ ॥
स राजा दुर्जयः श्रीमांल्लब्ध्वा पुत्रद्वयं शुभम् ।
स्वयं कालान्तरे श्रीमाञ्जगामारण्यमन्तिके ॥ ६८ ॥
तत्रस्थो वनजातीन्स्तून्बन्धयन्वै भयङ्करान्‡ ।
ददर्शारण्यमाश्रित्य मुनिं स्थितमकल्मषम् ।
तपस्विनं महाभागं नाम्ना गौरमुखं शुभम् ।
ऋषिवृन्दस्य गोप्तारं श्मारं पापिनां स्वयम् ॥ ६९ ॥ ७०

तस्याश्रमो विमलजलाविलोमहत्
सुगन्धिवृक्षप्रवरो द्विजन्मनः ।
रराज जीमूत इवाम्बरान्महीमुपागतः प्रवरविमानवद्गृहः§ ॥ ७१ ॥
ज्वलन्मुखाग्निप्रतिभासिताम्बरः
सुग्गुह्यसंवासितवेश्मकुट्टकः ।

* अत्रापि हेलया इति साधु ।
† तेऽथवा सहसा राजा इति (ग) ।
‡ (ख) पुस्तके तत्रस्थो वनजातीहिं वर्द्धयन्वै भयङ्कर इति पाठोऽस्ति ।
§ श्लोकस्यास्य प्रथमपादोऽन्यविधेनैव छन्दसा विरचितः ।

शिष्यैः समुच्चारितसामनादकः
सुरूपयोषिद्दषिकन्यकायुतः।
इतीदृशोऽस्यावसथो वराश्रमे
सुपुष्पिताशेषतरुप्रसूनः* ॥ ७२ ।

इति श्रीवराहपुराणे दुर्जयचरिते दशमोऽध्यायः।

## एकादशोऽध्यायः।

वराह उवाच।

ततस्तमीदृशं दृष्ट्वा तदा गौरमुखाश्रमम्।
दुर्जयश्चिन्तयामास रम्यमाश्रममण्डलम् ॥ १ ।
प्रविशाम्यत्र पश्यामि ऋषीन् परमधार्म्मिकान्।
चिन्तयित्वा तदा राजा प्रविवेश तमाश्रमम् ॥ २ ।
तस्य प्रविष्टस्य ततो राज्ञः परमहर्षितः।
चकार पूजां धर्म्मात्मा तदा गौरमुखो मुनिः ॥ ३ ।
स्वागतादिक्रियाः कृत्वा कथान्ते तं महामुनिः।
स्वशक्त्याहं नृपश्रेष्ठ सानुगस्य तु भोजनम्।
करिष्यामि प्रमुच्यन्तां साधुवाहा इति द्विजः ॥ ४ ।
एवमुक्त्वा स्थितस्तूष्णीं स मुनिः शंसितव्रतः।
राजापि तस्थौ तद्भक्त्या स्वसहायैः समन्वितः ॥ ५ ।

* श्लोकस्यास्य शेषचरणस्यैकाक्षरन्यूनता दृश्यते

अक्षौहिण्यो बलस्यास्य पञ्चमात्रं तदा स्थिताः ।
अयञ्च तापसः किं मे दास्यते* भोजनं त्विह ॥ ६ ।
निमन्त्य दुर्जयं विप्रस्तदा गौरमुखो नृपम् ।
चिन्तयामास किञ्चास्य† मया देयं तु भोजनम् ॥ ७ ।
एवं चिन्तयतस्तस्य महर्षेर्भावितात्मनः ।
स्थितो मनसि देवेशो हरिर्नारायणः प्रभुः ॥ ८ ।
ततः संस्मृत्य मनसा देवं नारायणं तदा ।
तोषयामास गङ्गायां प्रविश्य मुनिसत्तमः ॥ ९ ।

धरण्युवाच ।

कथं गौरमुखो विष्णुं तोषयामास भूधर ।
एतन्मे कौतुकं श्रोतुं सम्यगिच्छा प्रवर्त्तते ॥ १० ।

वराह उवाच ।

नमोऽस्तु विष्णवे नित्यं नमस्ते पीतवाससे ।
नमस्ते चाद्यरूपाय नमस्ते जलरूपिणे ॥ ११ ।
नमस्ते सर्व्वसंस्थाय नमस्ते जलशायिने ।
नमस्ते क्षितिरूपाय नमस्ते तैजसात्मने ॥ १२ ।
नमस्ते वायुरूपाय नमस्ते व्योमरूपिणे ।
त्वं देवः सर्व्वभूतानां प्रभुस्त्वमसि हृच्छयः ॥ १३ ।
त्वमोङ्कारो वषट्कारः सर्व्वत्रैव च संस्थितः‡ ।

* दास्यते इति आर्षं, दास्यतीति साधु ।

† किन्त्वस्य इति (ग) ।

‡ सर्व्वत्रैव च संश्रयः इति (ख) ।

त्वमादिः सर्व्वदेवानां तव चादिर्न विद्यते ॥ १४ ।
त्वं भूस्त्वञ्च भुवो देवस्त्वं जनस्त्वं महः स्मृतः ।
त्वं तपस्त्वञ्च सत्यञ्च त्वयि देव चराचरम् ॥ १५ ।
त्वत्तो भूतमिदं सर्व्वं विश्वं त्वत्त ऋगादयः* ।
त्वत्तः शास्त्राणि जातानि त्वत्तो यज्ञाः प्रतिष्ठिताः ॥ १६ ।
त्वत्तो वृक्षा वीरुधश्च त्वत्तः सर्व्ववनौषधी ।
पशवः पक्षिणः सर्पास्त्वत्त एव जनार्द्दन ॥ १७ ।
ममापि देवदेवेश राजा दुर्ज्जयसंज्ञितः ।
आगतोऽभ्यागतस्तस्य आतिथ्यं कर्त्तुमुत्सहे ॥ १८ ।
तस्य मे निर्धनस्याद्य देवदेव जगत्पते ।
भक्तिनम्रस्य देवेश कुरुष्वान्नाद्यसञ्चयम् ॥ १९ ।
यं यं स्पृशामि हस्तेन यञ्च पश्यामि चक्षुषा† ।
काष्ठं वा तृणकन्दं वा‡ तत्तदन्नं चतुर्व्विधम् ॥ २० ।
तथा त्वन्यतमं वापि यद्ध्यातं मनसा मया ।
तत्सर्व्वं सिद्ध्यतां मह्यं§ नमस्ते परमेश्वर ॥ २१ ।

वराह उवाच ।

इति स्तुत्या तु देवेशस्तुतोष जगतां पतिः ।
मुनेस्तस्य स्वकं रूपं दर्शयामास केशवः ॥ २२ ।

* त्वत्तोभूतमिदं विश्वं त्वदुद्भूता ऋगादय इति (ग) ।

† यं यं पश्यामि चक्षुषा इति (ख) ।

‡ फलं वा तृणकन्दं वा इति (ख) ।

§ सत्यमिति (ग) ।

उवाच सुप्रसन्नात्मा ब्रूहि विप्र वरं परम् ।
एवं श्रुत्वाच्चिणी यावदुन्मीलयति वै मुनिः ॥ २३ ।
तदा शङ्खगदापाणिः पीतवासा जनार्द्दनः ।
गरुड़स्थोऽपि तेजस्वी द्वादशादित्यसुप्रभः ॥ २४ ।
दिवि सूर्य्यसहस्रस्य भवेद्युगपदुत्थितिः* ।
यदि भा सदृशी सा स्याद्भासस्तस्य महात्मनः† ॥ २५ ।
तत्रैकस्थञ्जगत्कृत्स्नं प्रविभक्तमनेकधा‡ ।
ददर्श स मुनिर्द्देवि विस्मयोत्फुल्ललोचनः ॥ २६ ।
ननाम शिरसा§ देवं कृताञ्जलिरथाब्रवीत् ।
यदि मे वरदो देवो भूयाद्भक्तस्य केशवः ।
इदानीमेष नृपतिर्यथा सबलवाहनः ।
ममाश्रमे कृताहारः श्वः प्रयाता स्वकं गृहम्¶ ॥ २७।२८ ।
इत्युक्तस्तस्य देवेशो वदतः संबभूव ह ।
चित्तसिद्धिं ददौ तस्मै मणिञ्च सुमहाप्रभम् ॥ २९ ।
तं दत्त्वान्तर्द्दधे देवः स च गौरमुखो मुनिः ।
जगाम चाश्रमं पुण्यं नानाऋषिनिषेवितम् ॥ ३० ।
*तत्र गत्वा स विप्रेन्द्रश्चिन्तयामास वै मुनिः ।*

---

* उद्धृतिः इति (ख) ।

† भगवद्गीता (११।१२) द्रष्टव्यम् ।

‡ भगवद्गीता (११।१३) द्रष्टव्यम् ।

§ जगाम शिरसा देवमिति (ग) ।

¶ स्वके गृहे इति (ग) ।

हिमवच्छिखराकारं महाभ्रमिव चोन्नतम् ।
शशाङ्करश्मिसङ्काशं गृहं वै शतभूमिकम् ॥ ३१ ।
तादृशानां सहस्राणि लक्षकोट्यश्च सर्व्वशः ।
गृहाणि निर्ममे विप्रो विष्णोर्लब्धवरस्तदा ॥ ३२ ।
प्राकाराणि ततोपान्ते* तन्नम्नोद्यानकानि च ।
कोकिलाकुलघुष्टानि नानाद्विजवराणि च ॥ ३३ ।
चम्पकाशोकपुन्नागनागकेसरवन्ति च ।
नानाजात्यास्तथा वृक्षा गृहोद्यानेषु सर्व्वशः ॥ ३४ ।
हस्तिनां हस्तिशालाश्च तुरगाणाञ्च मन्दुराः ।
चकार सञ्चयान्विप्रो नानाभक्ष्याणि सर्व्वशः ॥ ३५ ।
भक्ष्यं भोज्यन्तथा लेह्यं चोष्यं बहुविधं तथा ।
चकाराशाद्यविषयं हेमपात्राणि† सर्व्वतः ॥ ३६ ।
एवमुक्त्वा स विप्रस्तु राजानं भूरितेजसम् ।
उवाच सर्व्वसैन्यानि प्रविशन्तु गृहानिति ॥ ३७ ।
एवमुक्तस्ततो राजा तद्गृहं पर्व्वतोपमम् ।
प्रविवेशान्तरेष्वन्ये भृत्या विविशुराशु वै ॥ ३८ ।
ततस्तेषु प्रविष्टेषु तदा गौरमुखो मुनिः ।
प्रगृह्य तं मणिं दिव्यं राजानञ्चेदमब्रवीत् ॥ ३९ ।
मज्जनाभ्यवहारार्थं पथि प्रक्रामतेः‡ तथा ।

* ततोपान्ते इति आर्षं, तत उपान्ते इति साधु ।

† हेमपात्रञ्च सर्व्वत इति (ग) ।

‡ प्रमक्रते तथा इति (ग) ।

विलासिनीस्तथा दासान्प्रेषयिष्यामि ते नृप ॥ ४० ।
एवमुक्त्वा स विप्रेन्द्रस्तं मणिं वैष्णवं तदा ।
एकान्ते स्थापयामास राज्ञस्तस्य प्रपश्यतः ॥ ४१ ।
तस्मिन्स्थापितमात्रे तु मणौ शुद्धसमप्रभे ।
निश्चेरुर्योषितस्तत्र दिव्यरूपाः सहस्रशः ॥ ४२ ।
सुकुमाराङ्गरागाढ्याः सुकुमारा वराङ्गनाः ।
सुकपोलाः सुचार्व्वङ्ग्यः सुकेशान्ताः सुलोचनाः ॥ ४३ ।
काश्चित्सौवर्णपात्रीश्च गृहीत्वा सम्प्रतस्थिरे ।
एवं योषिद्गणाश्चात्र नराः कर्म्मकरास्तथा ॥
निर्जग्मुस्तस्य नृपतेः सर्व्वे भृत्या नृपस्य ह ।
केवलं भोजनं पूर्व्वं परिधानञ्च सर्व्वशः ॥ ४४।४५ ।
ताः स्त्रियः सर्व्वभृत्यानां राजमार्गेण मज्जनम् ।
ददृशुस्ते नरास्तासां हस्तिनां चारुगामिनाम् ॥ ४६ ।
नानाविधानि तूर्य्याणि तत्र वाद्यन्त* सर्व्वशः ।
मज्जतो नृपतेस्तस्य ननृतुश्चान्ययोषितः ॥ ४७ ।
अपराश्च जगुस्तत्र शक्रस्येव प्रमज्जतः ॥ ४८ ।
एवं दिव्योपचारेण स्नात्वा राजा महामनाः ।
चिन्तयामास राजेन्द्रो विस्मयाविष्टचेतनः ।
किमिदम्मुनिसामर्थ्यात्तपसो वाथवा मणेः ॥ ४९ ।
एवं स्नात्वोत्तमे वस्त्रे परिधाय नृपस्तथा ।
विविधान्नन्तु विधिना बुभुजे स नृपोत्तमः ॥ ५० ।

* वाद्यन्त इति आर्षम्, अवाद्यन्त इति साधु ।

यथा च नृपतेः पूजा कृता तेन महर्षिणा ।
तद्वद्भृत्यजनस्यापि चकार मुनिसत्तमः ॥ ५१ ।
यावत्स राजा बुभुजे सभृत्यबलवाहनः ।
तावदस्तगिरिं भानुर्जगामाऽरुणसप्रभः ॥ ५२ ।

ततस्तु रात्रिः समपद्यताऽधुना
शरच्छशाङ्कोज्ज्वलनक्षमण्डिता ।
करोति रागं स च रोहिणीधवः
सुसङ्गतं सौम्यगुणैर्युतोपि च ॥ ५३ ।
भृगूद्वहः कृष्णतरांशुभानुना
सहोद्यतो दैत्यगुरुः सुराधिपः ।
अथाऽन्यथापक्षगतो* न राजते
स्वभावयोगेन मतिस्तु देहिनाम् ॥ ५४ ।
सुरक्तता भूमिसुतश्च मुञ्चति
राहुः श्रितं चन्द्रमसोंऽशवः सिताः ।
युक्तः स्वभावो जगतः सुरासुरै-
र्नतु स्वभावो बलवीर्य्यकृन्नृपः ॥ ५५ ।
शनैश्चराख्यापितरश्मिमण्डले
सूर्य्याग्रसिद्धान्तकथेव निर्म्मले ।
करोति केतुर्न परोमहत्तम-
स्तदा कुशीलेषु गतिश्च निर्म्मला ॥ ५६ ।

* अन्यथापक्षोद्दुष्टपक्षोऽसुरपक्ष इति यावत्

बुधोऽबुद्धिर्जगतो* विभावय-
न्नराज राज्ञस्तनयः स्वकर्म्मभिः ।
अतीव्र्शुकः कचविशाङ्कितशिरा-
ड्ढवेदयं साधुषु सञ्चितो भुवम् ॥ ५७ ।
करोति केतुः कपिलं वियच्चिरं
राज्ञः सुराणां पथि संस्थितो भृशम् ।
न दुर्ज्जनः सज्जनसंसदि क्वचि-
त्करोति शुद्धं निजकर्म्मकौशलम् ॥ ५८ ।
शशाङ्करश्मिप्रतिभासिता अपि
प्रसादमीयुर्न रतीः पदे पदे ।
कुलंभुवाः सम्भवधर्म्मपत्नयो
महांशुयोगान्महतां समुन्नतिः ॥ ५९ ।
त्रिदोषसंक्रान्तिकृतोऽस्य सर्व्वशः
सुतेन राज्ञोवरुणस्य सूर्य्यजाः ।
चिरं जिता कौशिकसन्निवेशिता
न वेदकर्म्म क्वचिदन्यथा भवेत् ॥ ६० ।
इन्द्रः समेतामनयः शिशुः पुरा
हरिं य आराधितवान्नृपासनम् ।
लक्ष्मयापि बुद्ध्या सुचिरं प्रकाशितं
भुवेण विष्णुस्मरणेन दुर्लभम् ॥ ६१ ।
इतीव सा रात्रिरभून्मुनेः शुभे

---

* अथ नक्षत्रजिदिति साधु ।

वराश्रमे दुर्ज्जयभूपतेः शुभा ।
सभृत्यवर्गः सगजाश्वदन्तिनाम्*
सुभक्तवस्त्राभरणादिपूजया ॥ ६२ ।
इतीदृशो ये वररत्नचिचिताः†
सुपट्टसंवीतवरान्विताः सदा ।
गृहेषु पर्य्यङ्कवराः समास्थिताः
सुरूपयोषित्स्थितभङ्गभासुराः ॥ ६३ ।
स तत्र राजा विससर्ज्ज भूभृतः
स्वयं सुभृत्यानपि सर्व्वतो गृहम् ।
गतेषु सुष्वाप वरस्त्रिया वृतः
सुरेशवत्स्वर्गगतः प्रतापवान् ॥ ६४ ।
एवं सुमनसस्तस्य सभृत्यस्य महात्मनः ।
ऋषेस्तस्य प्रभावेण हृष्टाः प्रसुषुपुस्तदा ॥ ६५ ।
ततो रात्र्यां व्यतीतायां स राजा ताः पुनः स्त्रियः ।
अन्तर्द्धानं गतास्तत्र दृष्ट्वा तानि गृहाणि वा ॥
अदृश्यानि महार्हाणि वरासनगतानि च ।
स राजा विस्मयाविष्टश्चिन्तयामास दुःखितः ॥ ६६।६७ ।
कथमेवं मणिर्मह्यं भवतीति पुनः पुनः ।
चिन्तयन्नधिगम्याथ स राजा दुर्ज्जयस्तथा ॥ ६८ ।

* सगजाश्वबन्दिनामिति (ख) ।

† याम्बरत्नप्रचिचिता इति (ग) ।

चिन्तामणिमिमञ्चास्य हरामीति विचिन्त्य च * ।
प्रयाणं नोदयामास स राजाश्रमवाप्यत: ॥ ६८ ॥
आश्रमस्य वहिर्गत्वा नातिदूरे सवाहनः ।
ततो विरोचनाख्यं वै प्रेषयामास मन्त्रिणम् ॥ ७० ॥
ऋषेर्गौरमुखस्यापि मणेर्याचनकर्मणि ।
ऋषिन्तञ्च समागत्य मणिं याचितुमुद्यत: ॥ ७१ ॥
रत्नानां भाजनं राजा मणिं† तस्मै प्रदीयताम् ।
अमात्येनैवमुक्तस्तु क्रुद्धो गौरमुखोऽब्रवीत् ॥ ७२ ॥
प्रतिग्राहीति ‡विप्रस्तु राजा चैव ददाति च ।
त्वञ्च राजा पुनर्भूत्वा याचसे दीनवत्कथम् ॥ ७३ ॥
एवं ब्रूहि दुराचारं राजानं दुर्ज्जयं स्वयम् ।
गच्छ द्रुतं दुराचारं मा त्वां लोको§ऽत्यगादिति ॥ ७४ ॥
एवमुक्तस्तदा दूतो जगाम च नृपान्तिकम् ।
कथयामास तत्सर्व्वं यदुक्तं ब्राह्मणेन च ॥ ७५ ॥
ततः क्रोधपरीतात्मा श्रुत्वा ब्राह्मणभाषितम् ।
दुर्ज्जयः प्राह नीलाख्यं सामन्तं गच्छ मा चिरम् ॥ ७६ ॥
ब्राह्मणस्य मणिं गृह्य¶ तूर्णमेहि यदृच्छया ॥ ७७ ॥

* विचिन्त्य स इति (क), (ग) ।

† मणिं तस्मै प्रदीयतामिति आर्षं, मणिस्तस्मै प्रदीयतामिति साधु ।

‡ प्रतिग्राहीति वै विप्रो राजा चैव ददाति च इति (ख) ।

§ मा त्वां कोपोऽत्यगादिति (क) ।

¶ गृह्येति आर्षं, गृहीत्वेति साधु ।

एवमुक्तस्तदा नीलो बहुसैन्यपरिच्छदः ।
जगाम स च विप्रस्य वन्यमाश्रममण्डलम् ॥ ७८ ॥
तत्राग्निहोत्रशालायां दृष्ट्वा तं मणिमाहितम् ।
उत्तीर्य्य स्यन्दनान्नीलः सोऽवारोहत* भूतले ॥ ७९ ॥
अवतीर्णे ततस्तस्मिन्नीले परमदारुणे ।
क्रूरबुद्ध्या मणेस्तस्मान्निर्जग्मुः शस्त्रपाणयः ।
सरथाः सध्वजाः साश्वाः सवर्माः सासिचर्म्मिणः ।
सधनुष्काः सतूणीरा योधाः परमदुर्ज्जयाः ॥ ८०।८१ ॥
निर्ययुस्तं मणिम्भित्वा असङ्ख्यया महाबलाः ।
तत्र सञ्ज्ञा महाशूरा दश पञ्च च सङ्ख्यया ॥ ८२ ॥
नामभिस्ताम्महाभागे कथयामि शृणुष्व तत् ॥
सुप्रभोदीप्ततेजाश्च सुरश्मिः शुभदर्शनः ।
सुकान्तिः† सुन्दरः सुन्दः प्रद्युम्नः सुमनाः शुभः ।
सुशीलः सुखदः शम्भुः सुदान्तः सोम एव च ।
एते पञ्चदश प्रोक्ता नायका उत्थिता मणेः ॥ ८३।८४ ॥
ततो विरोचनं दृष्ट्वा बहुसैन्यपरिष्कृतम् ।
योधयामासुरव्यग्रा विविधायुधपाणयः ॥ ८५ ॥
धनूंषि तेषां कनकप्रभाणि
शरान्सुजाम्बूनदपुंखनद्धान् ।
पतन्ति खड्गानि विभीषणानि

* अवारोहत इति आर्षम्, अवारोहदिति साधु ।
† सुकीर्त्तिरिति (ख) ।

भुशुण्डिशूला: परमप्रधाना: ॥ ८६ ।

रथो रथं सम्परिवार्य्य तस्थौ
गजोगजस्यापि हयो हयस्य ।
पदातिरत्युग्रपराक्रमश्च
पदातिमेव प्रससार चाग्र्यम् ॥ ८७

द्वन्द्वान्यनेकानि तथैव युद्धे
द्रवन्ति शूरा:* परिभर्त्सयन्त: ।
विभीषणं निर्गतसाधुमार्गं
बभूव रक्तप्रभवं सुघोरम् ॥ ८८ ।

तथा प्रवृत्ते तुमुले च युद्धे
हत: स राज्ञ: सचिवो विसंज्ञ: ।
सहानुग: सर्व्वबलैरुपेतो
जगाम वैवस्वतमन्दिराय ॥ ८९ ।

तस्मिन् हते दुर्ज्जयराजमन्त्रिणि
उपाययौ स्वेन बलेन राजा ।
स दुर्ज्जय: साश्वरथोऽतितीव्र:
प्रतापवांस्तैर्मणिजैर्युयोध ॥ ९० ।

ततस्तस्मिंस्तदा राज्ञो महत्कदनमाबभौ ॥ ९१ ।
ततो हेतृप्रहेतृभ्यां श्रुत्वा जामातरं रणे ।
युध्यमानं महाबाहुं ततश्चाययतुश्चमूम् ॥ ९२ ।

* शूद्रा इति (ख), परिभर्त्सयन्ति च इति (ग) ।

तस्मिन्बले ये दैतेयास्तान्शृणुष्व धरेरितान्* ।
प्रघसो विघसश्चैव सङ्घसोऽशनिसप्रभः† ।
विद्युत्प्रभः सुघोषश्च उन्मत्ताक्षो भयङ्करः ।
अग्निदत्तोऽग्नितेजाश्च बाहुः शक्रः प्रतर्द्दनः ।
विराधो भीमकर्म्मा च विप्रचित्तिस्तथैव च ।
एते पञ्चदश श्रेष्ठा असुराः परमायुधाः ॥ ९३।९४।९५ ।
अक्षौहिणीपरीवार एकैकोऽत्र पृथक् पृथक् ।
महामायास्तु समरे दुर्ज्जयस्य दुरात्मनः ।
युयुधुर्म्मुनिजैः सार्द्धं महासैन्यपरिच्छदाः ॥ ९६ ।
तं सतेजास्त्रिभिर्वाणैर्विघसं सम्प्रविध्यत‡ ।
सङ्घं सन्दशभिर्वाणैः सुरश्मिः प्रत्यविध्यत ॥ ९७ ।
अशनिप्रभं रणेऽविध्यत्पञ्चभिः शुभदर्शनः ।
विद्युत्प्रभं सुकान्तिस्तु सुघोषं सुन्दरस्तथा ॥ ९८ ।
उन्मत्ताक्षं तथाविध्यत्सुनन्दः पञ्चभिराशुगैः ।
चकर्त्त च धनुस्तस्य शितेन नतपर्वणा ॥ ९९ ।
सुमना अग्निदत्तन्तु सुवेदश्चाग्नितेजसम् ।
सुनलो वायुशक्रौ तु सुवेदस्तु प्रतर्द्दनम् ॥ १०० ।
परस्परं सुयुद्धेन योधयित्वास्त्रलाघवात् ।

* धरेरितानिति आर्षं, धरे ईरितानिति साधु ।

† सङ्घोऽशनिसमप्रभ इति (ग) ।

‡ सम्प्रविध्यत इति आर्षं, सम्प्राविध्यदिति साधु । एवं परत्र प्रत्यविध्यत इत्यात्मनेपदमार्षम् ।

यथासंख्येन ते दैत्याः पुनर्मणिभवैर्हताः ॥ १०१ ।
यावत्स सङ्गरो घोरो महांस्तेषां व्यवर्त्तत ।
तावत्समित्कुशादीनि कृत्वा गौरमुखो मुनिः ।
आगतो महदाश्चर्यसंग्रामं भीमदर्शनम् ॥
बहुसैन्यपरीवारं स्थितं तत्रापि दुर्ज्जयम् ।
तं दृष्ट्वा स मुनिर्द्वारि चिन्तापरम एव हि ॥ १०२।१०३ ।
उपविश्याधिगम्याथ मणिः कारणमेव ह ।
एवं कृत्वा मणिकृतं रौद्रं गाढ़ञ्च संयुगम् ।
चिन्तयामास देवेशं हरिङ्गौरमुखो मुनिः ॥ १०४ ।
स देवः पुरतस्तस्य पीतवासाः खगासनः ।
किमत्र ते मया कार्य्यमिति वाणीमुदीरयत्* ॥ १०५ ।
स ऋषिः प्राञ्जलिर्भूत्वा प्रोवाच पुरुषोत्तमम् ।
जहीमं दुर्ज्जयं पापं सैन्येन परिवारितम् ॥ १०६ ।
एवं मुक्तस्तदा तेन चक्रं ज्वलनसन्निभम् ।
तेन चक्रेण तत्सैन्यमसुरैर्दुर्जयं क्षणात् ॥
निमिषान्तरमात्रेण समग्रं भस्मसात्कृतम् ॥ १०७।१०८ ।
एवं कृत्वा ततो देवो मुनिं गौरमुखन्तदा ।
उवाच निमिषेणेदं निहतन्दानवङ्कुलम् ।
अरण्येऽस्मिंस्ततस्त्वेवं नैमिषारण्यसंज्ञितम् ।
भविष्यति यथार्थं वै ब्राह्मणानां निवेशनम् ॥ १०९।११०
—यहञ्च यज्ञपुरुष एतस्मिन्वनगोचरे ।

* उदीरयदिति पार्षम्. उदैरयदिति साधु ।

नाम्ना याज्याः सदा चेमे दश पञ्च च नायकाः ॥ १११ ।
कृते युगे भविष्यन्ति राजानो मणिजा इमे ॥ ११२ ।
एवमुक्त्वा ततो देवो गतोऽन्तर्द्धानमीश्वरः ।
द्विजोऽपि स्वाश्रमं तस्थौ मुदा परमया युतः ॥ ११३ ।

इति वराहपुराणे प्रागितिहासे भगवच्छास्त्रे दुर्जयचरिते एकादशोऽध्यायः ।

# द्वादशोऽध्यायः ।

वराह उवाच ।

ततस्तत्र रथाङ्गाग्नौ दग्धांश्छ्रुत्वा नरोत्तमान् ।
महच्छोकपरीतात्मा चिन्तयामास पार्थिवः ॥ १ ।
तस्य चिन्तयतस्त्वेवन्तत्त्वबुद्धिरजायत* ।
चित्रकूटे गिरौ विष्णुः राघवश्च प्रकीर्त्त्यते† ॥ २ ।
ततोऽहं नामसंज्ञाभिर्हरिं स्तौमि जगत्पतिम् ।
इति सञ्चिन्त्य नृपतिर्जगाम गिरिमुत्तमम् ॥ ३ ।
चित्रकूटं महापुण्यं नृपः स्तोत्रमुदीरयत्‡ ॥ ४ ।

* तदा बुद्धिरजायत इति (ग) ।

† राघवः प्रतिकीर्त्यत इति (ग) ।

‡ मुदीरयदिति चार्षं, मुदैरयदिति साधु ।

दुर्जय उवाच ।

नमामि रामं नरनाथमच्युतं
कविं पुराणं त्रिदशाऽरिनाशनम् ।
शिवस्वरूपं प्रभवं महेश्वरं
सदाप्रपन्नार्त्तिहरं धृतश्रियम् ॥ ५ ।
भवान् सदा देव समस्ततेजसां
करोषि तेजांसि समस्तरूपधृक् ।
क्षितौ भवान् पञ्चगुणस्तथा जले
चतुःप्रकारस्त्रिविधोऽथ तेजसि ॥ ६ ।
द्विधाऽथ वायौ वियति प्रतिष्ठितो
भवान् हरिः शब्दचरः* पुमानसि ।
भवाञ्छशी सूर्य्यहुताशनोऽसि
त्वयि प्रलीनं जगदेतदुच्यते ॥ ७ ।
भवत्प्रतिष्ठं रमते जगद्यत:
ततोऽसि† रामेति जगत्प्रतिष्ठित: ।
भवार्णवे दुःखतरोर्म्मिसङ्कुले
तथाक्षमीनग्रहनक्रभीषणे ॥
न मज्जति त्वत्स्मरणप्लवो नरः
स्मृतोऽसि रामेति तथा तपोवने ।

* शब्दवर इति (ग) ।

† स्मृतोऽसि रामेतीति (क), (ख) । रामेति पाठे, राम इति साधु

वेदेषु नष्टेषु भवांस्तथा हरे
करोषि मात्स्यं वपुरात्मनः सदा ॥ ८।९ ।
युगत्रये रक्षितसर्व्वदिङ्मुखे
भवांस्तथाग्निर्बहुरूपधृग्विभो ।
कौर्म्मं तथा त्वं वपुरास्थितः सदा
युगे युगे माधव सिन्धुमन्थने ॥ १० ।
न चान्यदस्तीति भवत्समं क्वचि-
ज्जनार्द्दनाद्यत्प्रबभूव चोत्तमम् ।
त्वया ततं विश्वमिदं महात्मन्
लोकाखिला* वेद दिशश्च सर्व्वाः ॥ ११ ।
कथं त्वमाद्यं† परमन्तु धाम
विहाय चान्यं शरणं व्रजामि ।
भवानेकः पूर्व्वमासीत्ततश्च
महानहं सलिलं वह्निरूपैः ॥
वायुस्तथा खञ्चमनोऽपि बुद्धि-
स्त्वत्तोगुणास्त्वत्प्रभवश्च सर्व्वम्‡ ॥ १२ ।
त्वया ततं विश्वमिदं समस्तं
सनातनस्त्वं पुरुषो मतो मे§ ।

* लोकाखिला इति आर्षं, लोका अखिला इति साधु ।

† त्वमाद्यमिति आर्षं, त्वामाद्यमिति साधु छन्दोऽनुरोधाद्ध्रस्वः कृत ।

‡ चैतोगुणास्त्वत्प्रभवश्च सर्व्वमिति (ग) ।

§ भगवद्गीता (११।१८) द्रष्टव्याम् ।

समस्तविश्वेश्वर विश्वमूर्त्ते
सहस्रबाहो जय देव देव
नमोऽस्तु रामाय महानुभाव ॥ १३ ।
इति स्तुतो देववरः प्रसन्नः
तदा तु राज्ञः सुप्रकतीस्य मूर्त्तिम्* ।
सन्दर्शयामास ततोऽभ्युवाच
वरं वृणीष्वेति च सुप्रतीक ॥ १४ ।
एवं श्रुत्वा वचनं तस्य राजा†
ससम्भ्रमं देववरं प्रणम्य ।
उवाच देवेश्वर मे प्रयच्छ
लयं यदास्ते परमं वपुस्ते ॥ १५ ।
इतीरिते राजवरः क्षणेन
लयं तथाऽगादसुरघ्नमूर्त्तौ
ध्यानेन युक्तः पुरुषं गृणन्तं‡
स्थितस्तस्मिन्नात्मभूतो विमुक्तः
स भूमिपः कर्म्मकाण्डैरनेकैः ॥ १६ ।
वराह उवाच ।
इतीरितन्ते तु मया पुराणं
स्वयम्भुवे चादिकृतैकदेशम् ।

* एष पादोऽधिकाक्षरको वर्त्तते ।

† अत्र पादे छन्दोभङ्गः ।

‡ पुरुषं गृणन् गिरा इति (ख) ।

शक्यं न चास्यैर्बहुभिः सहस्रै-
रपीह केनापि मुखेन वक्तुम् ॥ १७ ।
उद्देशतः संस्मृतमात्रमेत-
न्मयाऽपि भद्रे कथितं पुराणम् ।
समुद्रतोयात्परिमाणवर्षं
क्वचित्क्वचिद्दत्तमथोऽप्यनर्घम् ॥ १८ ।
स्वयम्भुवा कथितं ब्रह्मणापि
नारायणेनापि कुतोभयेन ।
अशक्यमस्माभिरितीरितन्ते
न मूर्त्तमस्य स्मरणीयमाद्यम् ॥ १९ ।
समुद्रे बालुकासङ्ख्या विद्यते रजसः क्षितौ ।
न तु अस्य पुनः सङ्ख्या क्रीड़तः परमेष्ठिनः ॥ २० ।
एष नारायणस्यांशो मया प्रोक्तः शुचिस्मिते ।
कृते वृत्तान्त एषश्च किमन्यच्छ्रोतुमिच्छसि ॥ २१ ।

इति वराहपुराणे नारायणैश्वर्य्ये द्वादशोऽध्यायः ।



# त्रयोदशोऽध्यायः ।

धरण्युवाच ।

एतन्मे महदाश्चर्य्यं दृष्ट्वा गौरमुखो मुनिः ।
ते चापि मणिजाः प्राप्ताः किं फलन्तु वरं गुरो* ॥ १ ।
कोऽसौ गौरमुखः श्रीमान्मुनिः परमधार्म्मिकः ।
किं चकार मुनेः कर्म्म दृष्ट्वासौ मुनिपुङ्गवः ॥ २ ।

वराह उवाच ।

निमिषेण कृतं कर्म्म† दृष्ट्वा भगवता मुनिः ।
आरिराधयिषुर्द्देवन्तमेव प्रययौ वनम् ॥ ३ ।
प्रभासं नाम सोमस्य तीर्थं परमदुर्लभम् ।
तत्र दैत्यान्तकृद्देवः प्रोच्यते तीर्थचिन्तकैः ॥ ४ ।
आराधयामास हरिन्दैत्यसूदनसंज्ञितम् ।
तस्याराधयतो देवं हरिन्नारायणं प्रभुम् ।
आजगाम महायोगी मार्कण्डेयो महामुनिः ॥ ५ ।
तं दृष्ट्वाभ्यागतन्दूरादर्घ्यपाद्येन सो‡ मुनिः ।
अर्चयामास तद्भक्त्या मुदा परमया युतः ॥ ६ ।
कौश्यां वृष्यां तदासीनं पप्रच्छेदं मुनिस्तदा ।
शाधि मां मुनिशार्दूल किं करोमि महाव्रत ॥ ७ ।

* वरं जगारिति (ग) ।

† निमेषेण कृतं तीर्थमिति (ग) ।

‡ सौ मुनिरिति पाठः, स मुनिरिति साधु ।

एवमुक्तः स विप्रेन्द्रो मार्कण्डेयो महातपाः ।
उवाच श्लक्ष्णया वाचा मुनिर्गौरमुखन्तदा ॥ ८ ॥

मार्कण्डेय उवाच ।

सर्व्वेषामेव देवानामाद्यो नारायणो गुरुः ।
तस्माद्ब्रह्मा समुत्पन्नः सोऽपि सप्ताऽसृजन्मुनीन् ॥ ९ ॥
मां यजस्वेति तेनोक्तास्तदा ते परमेष्ठिना ।
आत्मनात्मानमेवाग्रे अयजन्त इति श्रुतिः ॥ १० ॥
तेषां वै ब्रह्मजातानां महावैकारिकर्म्मणाम् ।
अयमपहृत्यभिचारो हि महानेष कृतो यतः ।
प्रभ्रष्टज्ञानिनः सर्व्वे भविष्यन्ति न संशयः ॥ ११ ॥
एवं शप्तास्ततस्ते वै ब्रह्मणात्मसमुद्भवाः ।
सद्यो वंशकुरान्पुत्रानुत्पाद्य त्रिदिवं ययुः ॥ १२ ॥
ततस्तेषु प्रयातेषु त्रिदिवं ब्रह्मवादिषु ।
तत्पुत्राः श्राद्धदानेन तर्पयामासुरञ्जसा ॥ १३ ॥
ते च वैमानिकाः सर्व्वे ब्रह्मणः सप्त मानसाः ।
तत्पिण्डदानं मन्त्रोक्तं प्रपश्यन्तो व्यवस्थिताः ॥ १४ ॥

गौरमुख उवाच ।

ये च ते पितरो ब्रह्मन्यं च कालं समासते ।
कियन्तो वै पितृगणास्तस्मिन् लोके व्यवस्थिताः* ॥ १५ ॥

* एतदर्द्धं (ग) पुस्तके नास्ति ।

मार्कण्डेय उवाच ।

प्रवर्त्तन्ते वरा: केचिद्देवानां सोमवर्द्धना: ।
ते मरीच्यादय: सप्त स्वर्गे ते पितर: स्मृता: ॥ १६ ।
चत्वारो मूर्त्तिमन्तो वै त्रयस्त्वन्ये ह्यमूर्त्तय: ।
तेषां लोकनिसर्गञ्च कीर्त्तयिष्यामि तच्छृणु ॥ १७ ।
लोका: सन्तानका नाम यत्र तिष्ठन्ति भास्वरा: ।
देवानां पितरस्ते हि तान्यजन्तीह देवता: ॥ १८ ।
एते वै लोकविभ्रष्टा लोकान् प्राप्य सनातनान् ।
पुनर्युगशतान्तेषु जायन्ते ब्रह्मवादिन: ॥ १९ ।
ते प्राप्य तां स्मृतिम्भूय: साध्ययोगमनुत्तमम् ।
चिन्त्य* योगगतिं शुद्धां पुनरावृत्तिदुर्लभाम् ॥ २० ।
एते स्म पितर: श्राद्धे योगिनां योगवर्द्धना: ।
आप्यायितास्तु ते सर्व्वे योगिर्योगबलेन च† ॥ २१ ।
तस्माच्छ्राद्धानि देयानि योगिनां योगिसत्तम‡ ।
एष वै प्रथम: सर्ग: सोमपानामनुत्तम: ॥ २२ ।
एते त एकतनवो वर्त्तन्ते द्विजसत्तमा: ।
भूर्लोकवासिनां याज्या: स्वर्गलोकनिवासिन: ॥ २३ ।
ब्रह्मपुत्रा मरीच्याद्यास्तेषां याज्या मरुद्गणा: ।
कल्पवासिकसंज्ञानां तेषामपि जनैर्द्दृता: ॥ २४ ।

* चिन्त्य इति आर्षं, विचिन्त्येति साधु ।

† आप्यायितास्तु ते पूर्व्वं योगिर्योगबले रता: इति (ग) ।

‡ योगसत्तम इति (ग) ।

सनकाद्यास्ततस्तेषां वैराजा तपसि स्थिताः।
तेषां सप्त गणाः प्रोक्ता इत्येषा पितृसन्ततिः॥ २५।
तेऽपि याज्याः पृथग्वर्णैर्न शूद्रेभ्यः पृथक्कृताः।
वर्णत्रयाभ्यनुज्ञातः शूद्रः सर्वान्पितॄन्यजेत्॥ २६।
ते तु तस्य पृथक् सन्ति पितरः शूद्रजातयः।
मुक्ताश्चेतनका ब्रह्मन दृश्यन्ते पितृष्वपि॥ २७।
विशेषशास्त्रदृष्ट्या तु पुराणानाञ्च दर्शनात्।
एवं ऋषिस्तुतैः शास्त्रैर्ज्ञात्वा याज्यान् स्वसम्भवान्।
स्वयं दृष्ट्वा स्मृतिर्लब्धा पुत्राणां ब्रह्मणा सतः।
परं निर्वाणमापन्नास्तेऽपि ज्ञानेन एव च॥ २८।२९।
वस्वादीनां कश्यपाद्या वर्णानां वसवादयः।
अविशेषेण विज्ञेया गन्धर्वाद्या अपि ध्रुवम्॥ ३०।
एष ते पैतृकः सर्ग उद्देशेन महामुने।
कथितो नान्त एवास्य वर्षकोट्या हि दृश्यते॥ ३१।
श्राद्धस्य कालान्वक्ष्यामि ताञ्छृणुष्व द्विजोत्तम॥ ३२।
श्राद्धार्हमागतन्द्रव्यं विशिष्टमथवा द्विजम्।
श्राद्धं कुर्व्वीत विज्ञाय व्यतिपातेऽयने तथा।
विषुवे चैव संप्राप्ते ग्रहणे शशिसूर्य्ययोः।
समस्तेष्वेव विप्रेन्द्र राशिष्वर्कोऽतिगच्छति*॥ ३३।३४।
नक्षत्रग्रहपीड़ासु दुष्टस्वप्नावलोकने।
इच्छाश्राद्धानि कुर्व्वीत नवशस्यागमे तथा॥ ३५।

* अभिगच्छतीति (ग)।

अमावस्या यदा आर्द्रा*विशाखास्वातियोगिनी ।
श्राद्धैः पितृगणस्तृप्तिं तदाप्नोत्यष्टवार्षिकी ॥ ३६ ।
अमावस्या यदा पुष्ये रौद्रेऽर्क्षे च पुनर्वसौ ।
द्वादशाब्दं तथा तृप्तिं प्रयान्ति पितरोऽर्च्चिताः ॥ ३७ ।
वासवाजैकपादर्क्षे पितॄणां तृप्तिमिच्छताम् ।
वारुणे चाप्यमावास्या देवानामपि दुर्लभा ॥ ३८ ।
नवस्वर्क्षेष्वमावास्या यदा तेषु द्विजोत्तम ।
तदा श्राद्धानि देयानि अक्षय्यफलमिच्छताम् ।
अपि कोटिसहस्रेण पुण्यस्यान्तो न विद्यते ॥ ३९ ।

अथापरम्पितरः श्राद्धकालं
रहस्यमस्मात्प्रवदन्ति पुण्यम् ।
वैशाखमासस्य तु या तृतीया
नवम्यसौ कार्त्तिकशुक्लपक्षे ॥
नभस्यमासस्य तमिस्रपक्षे
त्रयोदशी पञ्चदशी च माघे ।
उपप्लवे चन्द्रमसो रवेश्च
चतसृष्वप्यष्टकास्वयनद्वये च ॥ ४०।४१ ।
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समासहस्रं
रहस्यमेतत्पितरो वदन्ति ॥ ४२ ।

* यदा मैत्र इति क्वचित्पाठः ।

माघासिते पञ्चदशी कदाचि-
दुपेति योगं यदि वारुणेन।
ऋक्षेण कालः परमः पितॄणां
न ह्यल्पपुण्यैर्द्विज लभ्यतेऽसौ॥ ४३।
काले धनिष्ठा यदि नाम तस्मिन्
लभ्येत विप्रेन्द्र यदा पितृभ्यः।
दत्तं जलान्नं प्रददाति तृप्तिं
वर्षायुतं तत्कुलजैर्मनुष्यैः॥ ४४।
तत्रैव चेद्भाद्रपदा तु पूर्व्वा
काले तदा यैः क्रियते पितृभ्यः।
श्राद्धं परान्तृप्तिमुपैत्यनेन
युगं समग्रं पितरः स्वपन्ति॥ ४५।
गङ्गां शतद्रुमथवा विपाशां
सरस्वतीं नैमिषगोमतीं वा।
ततो गवाद्यार्च्चनमादरेण
कृत्वा पितॄणामहितानि हन्ति॥ ४६।
गायन्ति चैतत्पितरः कदा तु
त्रयोदशीयुक्तमघासु भूयः।
वर्षासितान्ते शुभतीर्थतोयै-
र्यास्याम* तृप्तिं तनयादिदत्तैः॥ ४७।
चित्तञ्च वित्तञ्च नृणां विशुद्धं

* यास्याम तृप्तिमिति आर्षं, यास्यामस्तृप्तिमिति साधु।

शस्तश्च कालः कथितो विधिश्च* ।
पात्रं यथोक्तं परमा च भक्ति-
र्नृणां प्रयच्छन्त्यभिवाञ्छितानि ॥ ४८ ।
पितृगीतांस्तथैवात्र श्लोकांस्ताञ्छृणु सत्तम ।
श्रुत्वा तथैव भविता भाव्यन्तत्र विधात्मना ॥ ४९ ।
अपि धन्यः कुले जायादस्माकं मतिमान्नरः ।
अकुर्व्वन्वित्तशाठ्यं यः पिण्डान्नो निर्व्वपिष्यति ॥ ५० ।
रत्नवस्त्रमहायानं सर्व्वन्तोयादिकं वसु† ।
विभवे सति‡ विप्रेभ्यः अस्मानुद्दिश्य दास्यति ॥ ५१ ।
अन्नेन वा§ यथाशक्त्या कालेऽस्मिन् भक्तिनम्रधीः ।
भोजयिष्यति विप्राग्र्यांस्तन्मात्रविभवो नरः ॥ ५२ ।
असमर्थोऽन्नदानस्य वन्यशाकं स्वशक्तितः ।
प्रदास्यति द्विजाग्र्येभ्यः स्वल्पां यो वापि दक्षिणाम् ॥ ५३ ।
तत्राप्यसामर्थ्ययुतः करैर्गृह्याग¶सितांस्तिलान् ।
प्रणम्य द्विजमुख्याय कस्मैचिदपि दास्यति ॥ ५४ ।
तिलैः सप्ताष्टभिर्वापि समवेतञ्जलाञ्जलिम् ।
भक्तिनम्रः समुद्दिश्य योऽस्माकं सम्प्रदास्यति ॥ ५५ ।

* विधाश्चेति (ग) ।

† सर्व्वतोयादिकमिति (ग) ।

‡ स तु इति (ग) ।

§ चेति (ग) ।

¶ गृह्येति आर्षं, गृहीत्वेति साधु ।

यतः कुतश्चित्सम्प्राप्य गोभ्यो वापि गवाह्निकम् ।
अभावे प्रीणयेत्तस्माद्भक्त्या युक्तः प्रदास्यति ॥ ५६ ।
सर्व्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः ।
सूर्य्यादिलोकपालानामिदमुच्चैः पठिष्यति ॥ ५७ ।
न मेऽस्ति वित्तं न धनं न चान्य-*
च्छ्राद्धस्य योग्यं स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो मयैतौ
भुजौ ततौ वर्त्मनि मारुतस्य ॥ ५८ ।
इत्येव पितृभिर्गीतं भावाभावप्रयोजनम् ।
कृतन्तेन भवेच्छ्राद्धं य एवं कुरुते द्विजः ॥ ५९ ।
इति वराहपुराणे श्राद्धकल्पे त्रयोदशोऽध्यायः ।

## चतुर्द्दशोऽध्यायः ।

मार्कण्डेय उवाच ।
एतन्मे कथितं पूर्व्वं ब्रह्मपुत्रेण धीमता ।
सनकानुजेन विप्रर्षे ब्रह्मणा शृणु साम्प्रतम् ॥ १ ।
त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णः षड़ङ्गवित् ।
ऋत्विजं भागिनेयञ्च दौहित्रं श्वशुरन्तथा ।

* न चास्तीति (ग) ।

जामातरं मातुलञ्च तपोनिष्ठञ्च ब्राह्मणम् ।
पञ्चाग्न्यभिरतञ्चैव शिष्यं सम्बन्धिनस्तथा ।
मातृपितृरतञ्चैव एतांश्छ्राद्धे नियोजयेत् ॥ २।३ ।
मित्रध्रुक्कुनखी चैव श्यावदन्तस्तथा द्विजः ।
कन्यादूषयिता वह्निवेदोभूः* सोमविक्रयी ।
अभिशस्तस्तथा स्तेनः पिशुनो ग्रामयाजकः ।
भृतकाध्यापकश्चैव भृतकाध्यापकश्च यः ।
परपूर्व्वापतिश्चैव मातापित्रोस्तथोज्झकः ।
वृषलीसूतिपोष्यश्च वृषलीपतिरेव च ।
तथा देवलकश्चैव श्राद्धे नार्हन्ति केतनम् ॥ ४—६ ।
प्रथमे हि बुधः कुर्य्याद्विप्राग्र्याणां निमन्त्रणम् ।
आनिमन्त्र्य द्विजान्पश्चादागतान्भोजयेद्यतीन् ॥ ७ ।
पादशौचादिना गेहमागतान्भोजयेद्द्विजान् ।
पवित्रपाणिराचान्तानासनेषूपवेशयेत् ॥ ८ ।
पितॄणामयुजोयुग्मान्देवानामपि योजयेत् ।
देवानामेकमपि वा† पितॄणाञ्च निवेदयेत् ॥ ९ ।
तथा मातामहश्राद्धं वैश्वदेवसमन्वितम् ।
कुर्व्वीत भक्तिसम्पन्नस्तन्त्रं वा वैश्वदेविकम्‡ ॥ १० ।
प्राङ्मुखं भोजयेद्विप्रं देवानामुभयात्मकम् ।

* चैव वह्निद इति (ग) ।

† देवानामेकमेकं वेति (ख), (ग) ।

‡ एतदर्द्धं (ग) पुस्तके नास्ति ।

पितृपैतामहानाञ्च भोजयेच्चाप्युदङ्मुखान् ॥ ११ ॥
पृथक् तयोः* केचिदाहुः श्राद्धस्य करणं द्विजः।
एकत्रैकेन पाकेण वदन्त्यन्ये महर्षयः ॥ १२ ॥
विष्टरार्थं कुशान्दत्त्वा सम्पूज्यार्घविधानतः।
कुर्य्यादावाहनं प्राज्ञो देवानां तदनुज्ञया ॥ १३ ॥
यवाम्बुना च देवानां दद्यादर्घं विधानवित्† ।
सुगन्धधूपदीपांश्च दत्त्वा तेभ्यो यथाविधि ॥ १४ ॥
पितॄणामपसव्येन सर्व्वमेवोपकल्पयेत् ।
अनुज्ञाञ्च ततः प्राप्य दत्त्वा दर्भान्द्विधाकृतान् ॥ १५ ॥
मन्त्रपूर्व्वं पितॄणान्तु कुर्य्यादावाहनम्बुधः।
तिलाम्बुना चापसव्यं दद्यादर्घादिकं बुधः ॥ १६ ॥
काले तत्रातिथिं प्राप्तमन्नकामं द्विजाध्वगम् ।
ब्राह्मणैरभ्यनुज्ञातः कामं तमपि पूजयेत् ॥ १७ ॥
योगिनो विविधैरूपैर्नराणामुपकारिणः।
भ्रमन्ति पृथिवीमेतामविज्ञातस्वरूपिणः ॥ १८ ॥
तस्मादभ्यर्च्चयेत्प्राप्तं श्राद्धकालेऽतिथिं बुधः।
श्राद्धक्रियाफलं हन्ति द्विजेन्द्रापूजितोऽतिथिः ॥ १९ ॥
जुहुयाद्व्यञ्जनक्षारैर्वर्जमन्नन्ततोऽनले ।
अनुज्ञातो द्विजैस्तैस्तु त्रिः कृत्वा पुरुषर्षभ ॥ २० ॥

---

* पृथक्तयेति (ग)।

† तिलाम्बुना चापसव्यं दद्यादर्घादिकं बुधः इति (ग); तत्र १४श श्लोकस्य पूर्व्वार्द्धं, १५श श्लोकः, १६श श्लोकस्य पूर्व्वार्द्धञ्च न सन्ति ।

अग्नये कव्यवाहनाय स्वाहेति प्रथमाहुतिः ।
सोमाय वै पितृमते दातव्या तदनन्तरम् ॥ २१ ॥
वैवस्वताय चैवान्या तृतीया दीयते हुतिः ।
हुतावशिष्टमस्याल्पं विप्रपात्रेषु निर्व्वपेत् ॥ २२ ॥
ततोऽन्नं मृष्टमत्यर्थमभीष्टमभिसंस्कृतम् ।
दत्त्वा जुषस्वमिच्छातो वाच्यमेतदनिष्ठुरम् ॥ २३ ॥
भोक्तव्यं तैश्च तच्चित्तैर्मौनिभिः सुमुखैः स्थिरम् ।
अक्रुध्यताप्यत्वरता देयन्तेनापि भक्तितः ॥ २४ ॥
रक्षोघ्नमन्त्रपठनं भूमेरास्तरणन्तिलैः ।
कृत्वाध्यायाश्च पितरस्त एव द्विजसत्तमाः ॥ २५ ॥
पिता पितामहश्चैव तथैव प्रपितामहाः ।
मम तृप्तिं प्रयान्त्वद्य होमाप्यायितमूर्त्तयः† ॥ २६ ॥
पिता पितामहश्चैव तथैव प्रपितामहाः ।
मम तृप्तिं प्रयान्त्वद्य विप्रदेहेषु संस्थिताः ॥ २७ ॥
पिता पितामहश्चैव तथैव प्रपितामहाः ।
तृप्तिम्प्रयान्तु पिण्डेषु मया दत्तेषु भूतले ॥ २८ ॥
पिता पितामहश्चैव तथैव प्रपितामहाः ।
तृप्तिम्प्रयान्तु मे भक्त्या यन्मयैतदुदाहृतम् ॥ २९ ॥
मातामहस्तृप्तिमुपैतु तस्य
तथा पिता तृप्तिमुपैतु योऽन्यः ।

* तच्चित्तैरिति (ग) ।

† होमाप्यायितमूर्त्तय इति (ग) ।

विश्वेऽथ देवाः परमाश्रयास्तु
तृप्तिम्प्रयान्त्वन्तु च यातुधानाः ॥ ३० ।
यज्ञेश्वरो यज्ञसमस्तनेता
भोक्ता व्ययात्मा हरिरीश्वरोऽत्र ।
तत्सन्निधानादपयान्तु सद्यो
रचांस्यशेषाण्यसुराश्च सर्व्वे ॥ ३१ ।
तृप्तेष्वेतेषु विप्रेषु किरेदन्नं महीतले ।
दद्यादाचमनार्थाय तेभ्यो वारि सकृत्सकृत् ॥ ३२ ।
सुतृप्तैस्तैरनुज्ञातः सर्व्वेणान्नेन भूतले ।
*सलिलेन ततः पिण्डान् सम्यग्दद्य* समासतः ॥ ३३ ।*
पितृतीर्थेन सलिलं तथैव सलिलाञ्जलिम् ।
मातामहेभ्यस्तेनैव पिण्डांस्तीर्थेषु निर्व्वपेत् ॥ ३४ ।
दचिणाग्रेषु दर्भेषु पुष्पधूपादिपूजितम् ।
स्वपित्रे प्रथमं पिण्डं दद्यादुच्छिष्टसन्निधौ ॥ ३५ ।
पितामहाय चैवान्यं तत्पित्रे च तथापरम् ।
दर्भमूले लेपभुजां लेपयेल्लेपघर्षणात् ॥ ३६ ।
पिण्डैर्मातामहांस्तद्वद्गन्धमाल्यादिसंयुतैः ।
पूजयित्वा द्विजाग्राणां दद्यादाचमनं बुधः ॥ ३७ ।
पितृभ्यः प्रथमं भक्त्या तन्मनस्को द्विजेश्वरः ।
स्वस्त्यादि वाचयित्वा तु दद्याच्छक्त्या च दचिणाम् ॥ ३८ ।
दत्त्वा च दचिणां तेभ्यो वाचयेद्वैश्वदेविकम् ।

* दद्येति भार्ष, दद्यादिति साधु । एवं परत्रापि ।

प्रीयन्तामिति ये विश्वेदेवास्ते स इतीरयेत् ॥ ३९ ।
तथेति चोक्ते तैर्विप्रैः प्रार्थनीयास्तथाशिषः ।
तथा विसर्ज्जयेद्देवान् पूर्व्वं पैत्रान्महामते ॥ ४० ।
मातामहानामप्येवं सह देवैः क्रमात्स्थितैः ।
भोजने च स्वशक्त्या च दाने तद्वद्विसर्ज्जने ।
आपादशौचनात्पूर्व्वं कुर्य्यादेवं द्विजन्मसु ॥ ४१ ।
अनिनं प्रथमं विप्रं त्रिषु मातामहादिषु ।
तथा विसर्ज्जयेत्प्राज्ञः सम्मान्याभ्यर्थिनस्ततः ॥ ४२ ।
निवर्त्तेताभ्यनुज्ञात आद्वारान्तमनुव्रजेत् ।
ततस्तु वैश्वदेवाख्यं कुर्य्यान्नित्यक्रियान्ततः ॥ ४३ ।
भुञ्जीयाच्च समं पूज्यभृत्यबन्धुभिरात्मना ॥ ४४ ।
एवं श्राद्धं बुधः कुर्य्यात्पित्र्यं मातामहन्तथा ।
श्राद्धैराप्यायिता दद्युः सर्व्वान् कामान्पितामहाः ॥ ४५
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
रजतस्य तथा दानं तथा सन्दर्शनादिकम् ॥ ४६ ।
वर्ज्यन्तु कुर्वता श्राद्धं क्रोधोऽध्वगमनन्त्वरा ।
भोक्तुं रज्यति* विप्रेन्द्रे त्रयमेतन्न संशयः ॥ ४७ ।
विश्वेदेवाः सपितरस्तथा मातामहा द्विज ।
कुलञ्चाप्यायतं पुंसा सर्वं श्राद्धं प्रकुर्वता ॥ ४८ ।
सोमाधारः पितृगणो योगाधारस्तु चन्द्रमाः ।
श्राद्धं योगनियुक्तन्तु तस्माद्विप्रेन्द्र शस्यते ॥ ४९ ।

---

* अप्यवेति (ग) ।

सहस्रस्यापि विप्राणां योगी चेत्पुरतः स्थितः ।
सर्व्वान् भोक्तॄंस्तारयति यजमानस्तथा द्विज ॥ ५० ।
इयं सर्वपुराणेषु सामान्या पैतृकी क्रिया ।
एतत्क्रमात्कर्म्मकाण्डं ज्ञात्वा मुच्येत बन्धनात् ॥ ५१ ।
एतदाश्रित्य निर्व्वाणमृषयः शंसितव्रताः ।
प्राप्ता गौरमुखादाद्य* त्वमप्येवंपरोभव ॥ ५२ ।
इति ते कथितं भक्त्या पृच्छतो द्विजसत्तम ।
पितॄन्यष्ट्वा हरिं ध्यायेद्यस्तस्य किमतः परम् ॥ ५३ ।
न† तस्मात्परतः पित्र्यं तन्नमस्तीति निश्चयः । ५४ ।

इति वराहपुराणे श्राद्धकल्पः समाप्तः ।

—•◎•—

## पञ्चदशोऽध्यायः ।

धरण्युवाच ।
एवं श्राद्धविधिं श्रुत्वा मार्कण्डेयान्महामुनिः ।
तदा गौरमुखो देवः किमूर्द्धं कृतवानसौ ॥ १ ।
वराह उवाच ।
एतच्छ्रुत्वा तदा धात्रि पितृतत्त्वं महामुनिः ।

* गौरमुखादौत्विति (क), (ख) ।
† नैतस्मादिति (ग) ।

तत्स्मारितो जन्मशतं* मार्कण्डेयेन धीमता ॥ २ ।

धरण्युवाच ।

भवन् गौरमुखः कोऽसावन्यजन्मनि कः स्मृतः ।
कथञ्च† स्मृतवान् स्मृत्वा किं चकार च सत्तमः ॥ ३ ।

वराह उवाच ।

भृगुरासीत्स्वयं साक्षादन्यस्मिन् ब्रह्मजन्मनि ।
तदन्वयात्मजस्त्वेष मार्कण्डेयो महामुनिः ॥ ४ ।
पुत्रैस्तु बोधिता यूयं सुगतिम्प्राप्स्यथेति यत् ।
प्रागुक्तं ब्रह्मणा तेन मार्कण्डेयेन बोधितः ॥ ५ ।
सस्मार‡ सर्वजन्मानि स्मृत्वा चैव तु यत्कृतम् ।
तच्छृणुष्व वरारोहे कथयामि समासतः ॥ ६ ।
एवं श्राद्धविधानेन द्वादशाब्दं ततः पितॄन् ।
इष्ट्वा पश्चाद्धरेः§ स्तोत्रं स मुनिस्तूपचक्रमे ॥ ७ ।
प्रभासं नाम यत्तीर्थं त्रिषु लोकेषु विश्रुतम् ।
तत्र दैत्यान्तकन्देवं स्तोतुङ्गौरमुखः स्थितः ॥ ८ ।

गौरमुख उवाच ।

स्तोष्ये महेन्द्रं रिपुदर्पहं शिवं

* स्मारितं जन्मशतकमिति (ग) ।

† कथं चेति (ग) ।

‡ संस्मरन्निति (क), (ख) ।

§ वरारोहे इति (ग) ।

नारायणं ब्रह्मविदां वरिष्ठम् ।
आदित्यचन्द्राग्नियुगस्थमाद्यं*
पुरातनं दैत्यहरं सदा हरिम् ॥ ९ ।
चकार मात्स्यं वपुरात्मनो यः
पुरातनं वेदविनाशकाले ।
महामहीभृद्वपुरग्रपुच्छ-
च्छटाहवार्णिः सुरशत्रुहाद्यः ॥ १० ।
तथाब्धिमन्थानकृते गिरीन्द्रं
दधार यः कौर्म्मवपुः पुराणम् ।
हितेच्छयाप्तः पुरुषः पुराणः
प्रपातु मां दैत्यहरः सुरेशः ॥ ११ ।
महावराहः सततं पृथिव्या-
स्तलात्तलम्नाविशद्यो महात्मा ।
यज्ञाङ्गसंज्ञः सुरसिद्धसङ्घैः
स पातु मां दैत्यहरः पुराणः ॥ १२ ।
नृसिंहरूपी च बभूव योऽसौ
युगे युगे योगिवरोग्रभीमः ।
करालवक्त्रः कनकाग्रवर्चा-
वराशयोऽस्मानसुरान्तकोऽव्यात् ॥ १३ ।
बलेर्मखध्वंसकृदप्रमेयो
योगात्मको योगवपुःस्वरूपः ।

---

* आदित्यचन्द्राग्नियुगस्थमिति (ख) ।

स दण्डकाष्ठाजिनलक्षणः पुनः
क्षितिं योऽसौ क्रान्तवान्* पुनातु ॥ १४ ।
निःसमत्वो जगतीं जिगाय
कत्वा ददौ काश्यपाय प्रचण्डः ।
स जामदग्न्योऽभिजनस्य गोप्ता
हिरण्यगर्भोऽसुरहा प्रपातु ॥ १५ ।
चतुःप्रकारञ्च वपुर्य्य आद्यं
हैरण्यगर्भप्रतिमानलक्ष्यम् ।
रामादिरूपैर्बहुरूपभेद-
मकार सोऽस्मानसुरान्तकोऽव्यात् ॥ १६ ।
चाणूरकंसासुरदर्पभीते-
र्भीतामराणामभयाय देवः ।
युगे युगे वासुदेवो बभूव
कल्पे भवत्यद्भुतरूपकारी† ॥ १७ ।
युगे युगे कल्किनाम्ना महात्मा
वर्णस्थितिं कर्त्तुमनेकरूपः ।
सनातनो ब्रह्ममयः पुरातनो
न यस्य रूपं सुरसिद्धदैत्याः ।
पश्यन्ति विज्ञानगतिं विहाय
अतो यमेनापि समर्च्चयन्ति ।

---

* क्रान्तवपुरिति (क), क्षितिं य आक्रान्तवपुरिति (ख)

† भवदद्भुतरूपकारीति (ख) ।

मत्स्यादिरूपाणि धराणि सोऽव्यात् ॥ १८।१९ ।

नमो नमस्ते पुरुषोत्तमाय

पुनश्च भूयोऽपि नमो नमस्ते ।

नयस्व मां मुक्तिपदं नमस्ते ॥ २० ।

एवं नमस्यतस्तस्य महर्षेर्भावितात्मनः ।

प्रत्यक्षताङ्गतो देवः स्वयञ्चक्रगदाधरः ॥ २१ ।

तन्दृष्ट्वा तस्य विज्ञानं निस्तरङ्गं स्वदेहतः ।

उत्तस्थौ सोऽपि तं लब्ध्वा तस्मिन् ब्रह्मणि शाश्वते ।

लयं जगाम देवात्मन्यपुनर्भवसंज्ञिते ॥ २२ ।

इति वराहपुराणे आदिकृतवृत्तान्ते पञ्चदशोऽध्यायः ।

## षोड़शोऽध्यायः ।

धरण्युवाच ।

तदा दुर्वाससा शप्तो देवराजः शतक्रतुः ।

वसिष्यसि त्वं मर्त्त्येषु सुप्रतीकसुतेन तु ॥

उत्साहितो दिवो मूढ़ेत्येवमुक्तस्तु भूधरः ।

इन्द्रो मर्त्त्यमुपागम्य सर्वदेवसमन्वितः ॥

किञ्चकार च तस्मिंस्तु दुर्ज्जये च निपातिते

परमेष्ठिना भगवता तेन योगविदुत्तमौ ॥

स्वर्गे विद्युत्सुविद्युच्च तौ च किञ्चक्रतुस्तदा ।
एतन्मे संशयं देव कथयस्व प्रसादतः ॥ १।२।३।४ ।

वराह उवाच ।

दुर्ज्जयेन जितो धात्रि देवराजः शतक्रतुः ।
भारते हि तदा वर्षे वाराणस्यान्तु पूर्व्वतः ।
आश्रित्य संस्थितो देवैः सह यक्षमहोरगैः ॥ ५ ।
विद्युत्सुविद्युच्च तदा योगमास्थाय शोभने ।
दीर्घतापज्वरं वायुकर्म्मयोगेन संश्रितौ ।
लोकपालायतं कृत्स्नं चक्रतुर्योगमायया ॥ ६ ।
तं दुर्जयं मृतं श्रुत्वा समुद्रान्तं स्थितं सदा ।
आनीय चतुरङ्गन्तु देवान् प्रति विजग्मतुः ॥ ७ ।
आगत्य तौ तदा दैत्यौ महत्सैन्येन पर्व्वतम् ।
हिमवन्तं समाश्रित्य संस्थितौ तु बभूवतुः ॥ ८ ।
देवा अपि महत्सैन्यं संहृत्य कृतदंशिताः ।
मन्त्रयाञ्चक्रुरव्यग्रा ऐन्द्रं पदमभीप्सवः ॥ ९ ।
अब्रवीत्तत्र देवानां गुरुराङ्गिरसो मुनिः ।
गोमेधेन यजध्वं वै प्रथमं तदनन्तरम् ॥
यष्टव्यं क्रतुभिः सर्व्वैरेषा स्थितिरथामराः ।
उपदेशो मया दत्तः क्रियतां शीघ्र एष वै ॥ १०।११ ।
एवमुक्तास्तदा देवा गाः पशूंश्चानुकल्प्य ते ।
सुसुखचरणार्थाय रक्षार्थं सरमान्ददुः ॥ १२ ।
ताश्च गावो देवशुन्या रक्ष्यमाणा धराधरे ।

तत्र जग्मुस्तदा गावश्चरन्त्यो यत्र तेऽसुराः ॥ १३ ।
ते च गावस्तु ता दृष्ट्वा शुक्रमूचुः पुरोहितम् ।
पश्य त्वन्द्रिव गा ब्रह्मंश्चार्थ्यन्ते रक्षमाणया* ।
देवशुन्या सरमया वद किं क्रियतेऽधुना ॥ १४ ।
एवमुक्तस्तदा शुक्रः प्रत्युवाचासुरांस्तदा ।
एता गा क्रियतां† शीघ्रमसुरा मा विलम्बथ ॥ १५ ।
एवमुक्तास्तदा दैत्या जह्रुस्ता गा यदृच्छया ॥ १६ ।
हृतासु तासु सरमा मार्गान्वेषणतत्परा ।
अपश्यत्ता दितेः पुत्रैर्नीता गावो धराधके ।
दैत्यैरपि शुनी दृष्टा दृष्टमार्गा विशेषतः ॥ १७ ।
दृष्ट्वा ते तांश्च सान्त्वैव सामपूर्व्वमिदं वचः ।
आसाङ्खान्तु दुग्ध्वैवक्षीरन्त्वं सरमे शुभे ।
पिवस्वैवमिति प्रोक्ता तस्यै तद्ददुरञ्जसा ॥ १८ ।
दत्त्वा तु चीरपानन्तु तस्यै ते दैत्यनायकाः ।
मा भद्रे देवराजाय गास्त्विमा विनिवेदय ॥
एवमुक्त्वा ततो दैत्या मुमुचुस्तां शुनीं वने ।
तैर्मुक्ता सा सुरांस्तूर्णं जगाम खलु वेपती ॥ १९।२० ।
नमश्चक्रे च देवेन्द्रं सरमा सुरसत्तमम् ॥ २१ ।
तस्याश्च मरुतो देवा देवेन्द्रेण निरूपिताः ।
गूढ़ञ्चक्रुत रक्षार्थं देवशुन्या महाबलाः ।

---

* रक्षमाणयेति आर्षं, रक्षन्त्येति साधु ।

† क्रियतामिति आर्षं, ह्रियतेति साधु ।

इत्युक्तास्तेन सूक्ष्मेण वपुषा जग्मुरञ्जसा ॥ २२ ।
तेऽप्यागम्य सुरेन्द्राय नमश्चक्रुर्धराधरे ।
तान्देवराजः पप्रच्छ गावः किं सरमेऽभवन् ॥ २३ ।
एवमुक्ता तु सरमा न जानामीति चाब्रवीत् ॥ २४ ।
तत इन्द्रो रुषा युक्तो यज्ञार्थमुपकल्पिताः ।
गावः क्व चेति मरुतः प्रोवाचेदं शुनी कथम् ॥ २५ ।
एवमुक्तास्तु मरुतो देवेन्द्रेण धराधरे ।
कथयामासुरव्यग्राः कर्म तत्सरमाकृतम् ॥ २६ ।
तत इन्द्रः समुत्थाय पदा सन्ताडयच्छुनीम्* ।
क्रोधेन महताविष्टो देवेन्द्रः पाकशासनः ॥ २७ ।
क्षीरं पीतन्त्वया मूढे गावस्ताश्चासुरैर्हृताः ।
एवमुक्ता पदा तेन ताड़िता सरमा धरे ॥ २८ ।
तस्येन्द्रपादघातेन क्षीरं वक्त्रात्प्रसुस्रुवे† ।
स्रवता तेन पयसा सा शुनी यत्रगाभवत् ।
जगाम तत्र देवेन्द्रः सहसैन्यस्तदा धरे ॥ २९ ।
अपश्यत्तत्र देवेन्द्रस्ता गा दैत्यैरुपाहृताः ।
चक्रुर्ये पालनं दैत्यास्ते दैत्या बलिनो भृशम् ॥ ३० ।
तैः सैन्यैर्निहताः सद्यस्तत्यजुर्गाः स्वमूर्त्तिभिः ।
तामन्तेश्च सुरेन्द्रोऽथ वृतः परमहर्षितैः ॥ ३१ ।
ताश्च लब्ध्वा महेन्द्रस्तु मुदा परमया युतः ।

---

* सन्ताड़यदिति चार्षं, समताड़यदिति साधु ।

† प्रसुस्रुवे इत्यात्मनेपदमार्षं, प्रसुस्रावेति साधु ।

चकार यज्ञान्विविधान्सहस्राणपि* स प्रभुः ॥ ३२ ।
क्रियमाणैस्ततो यज्ञैर्वहधेन्द्रस्य† तद्बलम् ।
वर्द्धितेन बलेनेन्द्रो देवसैन्यमुवाच ह ॥ ३३ ।
सन्नह्यतां सुराः शीघ्रं दैत्यानां वधकर्म्मणि ।
एवमुक्तास्तदा देवाः सन्नद्धास्तत्क्षणेऽभवन् ॥ ३४ ।
असुराणामभावाय जग्मुर्देवाः सवासवाः ।
गत्वा तु युयुधुस्तूर्णं विजिग्युश्चासुरीश्चमूम् ॥ ३५ ।
जिताश्च देवैरसुरा हतशेषा धराधरे ।
ममज्जुः सागरजले भयत्रस्ता विचेतसः ॥ ३६ ।
देवराजोऽपि त्रिदिवं लोकपालैः समन्वरे ।
आरुह्य बुभुजे प्राग्वत्‡ सदेवो देवराड्विभुः ॥ ३७ ।
य एवं§ शृणुयान्नित्यं परमाख्यानमुत्तमम् ।
स गोमेधस्य यज्ञस्य फलमाप्नोति मानवः ॥ ३८ ।
भ्रष्टराज्यश्च यो राजा शृणोतीदं समाहितः ।
स देवेन्द्र इव स्वर्गं राज्यं स्वं लभते नरः ॥ ३९ ।

इति वराहपुराणे सरमोपाख्याने षोडशोऽध्यायः ।

* सहस्रानपीति आर्षं, सहस्राण्यपीति साधु ।

† वहधेन्द्रस्येति आर्षं, वहध इन्द्रस्येति साधु ।

‡ प्राग्वदिति (ग) ।

§ एनदिति (ग) ।

# सप्तदशोऽध्यायः ।

धरण्युवाच ।

ये ते मणौ तदा देव उत्पन्ना नरपुङ्गवाः ।
तेषां वरो भगवता दत्तस्त्रेतायुगे किल ॥ १ ।
राजानो भवितारो वै कथन्तेषां समुद्भवः ।
किञ्च चक्रुर्हि ते कर्म्म पृथङ्नामानि शंस मे ॥ २ ।

वराह उवाच ।

सुप्रभो मणिजो यस्तु राजा नाम महामनाः ।
तस्योत्पत्तिं वरारोहे शृणु त्वम्भूतधारिणि ॥ ३ ।
आसीद्राजा महाबाहुरादौ* कृतयुगे पुरा ।
श्रुतकीर्त्तिरिति ख्यातस्त्रैलोक्ये बलवत्तरः ॥ ४ ।
तस्य पुत्रत्वमापेदे सुप्रभो मणिजो धरे ।
प्रजापालेति† वै नाम्ना श्रुतकीर्त्तिर्महाबलः ॥ ५ ।
स एकस्मिन्दिने प्रायाद्गहनं श्वापदाकुलम् ।
तत्रापश्यद्दर्पेर्दन्यं महदाश्रममण्डलम् ॥ ६ ।
तस्मिन्महातपा नाम ऋषिः परमधार्म्मिकः ।
तपस्तेपे निराहारो जपन्ब्रह्म सनातनम् ॥ ७ ।
तत्रासौ पार्थिवः श्रीमान् प्रवेशाय मतिन्तदा ।
चकार चाविशद्राजा प्रजापालो महातपाः ॥ ८ ।

* बाहुरादावभूदिति (ग) ।

† प्रजापालेति आर्षं, प्रजापाल इति साधु

तस्मिन्वराश्रमपदे वनवृक्षजात्या-
धराप्रसूतोर्जितमार्गजुष्टा* ।
लतागृहा इन्दुरिव प्रकाशिनो
नायासगा यत्र याता हि भृङ्गाः ॥ ९ ।
सुरक्तपद्मोदरकोमलाग्र-†
नखाङ्गुलीभिः प्रसृतैः सुरागाम् ।
वराङ्गनाभिः पदपंक्तिमुच्चै-
र्विहाय भूमिष्वपि वृत्तशच्चोः ॥ १० ।
क्वचित्समीपे तमतीव‡ हृष्टै-
र्नानाद्विजैः षट्चरणैश्च मत्तैः ।
वासङ्गियुक्तैः§ र्विविधप्रमाणाः
शाखाः सुपुष्पाः समयोगयुक्ताः ॥ ११ ।
कदम्बनीपार्ज्जुनशीलशाल-
भृता गृहस्थैर्मधुरस्वरेण ।
जुष्टा विहङ्गैः सुजनप्रयोगा
निराकुला कार्य्यधृति¶र्यथास्थैः ॥ १२ ।

* प्रशस्तोर्ज्जितमार्गजुष्टा इति (ख) ।

† एवं पयोदारककोमलाङ्गा इति (ग) ।

‡ तास्यन्तीवेति साधु ।

§ वासङ्गियुक्तैरिति पाठे, वसङ्गिर्युक्ता इति साधु ।

¶ कार्य्यधृतिरिति (ग) ।

मखाग्निधूमैरुदिताग्निहोमै-
स्ततः समन्तान्नृपमेधिभिर्द्विजैः ।
सिंहैरिवाधर्षकरी विदारितः
सतीक्ष्णदंष्ट्रैर्वरमत्तकेसरैः ॥ १३ ।

एवं स राजा विविधानुपाया-
न्वराश्रमे प्रेक्षमाणो* विवेश ।
तस्मिन् प्रविष्टे तु स तीव्रतेजा
महातपाः पुण्यकृताम्प्रधानः ।
दृष्टो यथा भानुरनन्तभानुः
कौश्यासने ब्रह्मविदाम्प्रधानः ॥ १४ ।

दृष्ट्वा स राजा विजये मृगाणां
मतिं विसस्मार मुनेः प्रसङ्गात् ।
चकार धर्म्मम्प्रति मानसं सः
अनुत्तमश्चाप्रतिमम्मुनिः सः ॥ १५ ।

स मुनिस्तन्नृपं दृष्ट्वा प्रजापालमकल्मषम् ।
अभ्यागतक्रियाञ्चक्रे आसनस्वागतादिभिः ॥ १६ ।
ततः कृतासनो राजा प्रणम्य ऋषिपुङ्गवम् ।
पप्रच्छ वसुधे प्रश्नमिमम्परमदुर्लभम् ॥ १७ ।
भगवन्दुःखसंसारमग्नैः पुम्भिर्जिगीषुभिः ।
यत्कार्य्यन्तन्ममाचक्ष्व प्रणते शंसितव्रत ॥ १८ ।

* वीक्षमाण इति (ग) ।

महातपा उवाच।

संसारार्णवमज्जमानमनुजैः पोतः स्थिरोऽतिध्रुवः
कार्य्यैः पूजनहोमदानविविधैर्यज्ञैः समभ्यायनैः।
कीलैः कीलितमोक्षभिः* सुरभटैर्दृढै महारज्जुभिः
प्राणाद्यैरधुना कुरुष्व नृपते पोतस्त्रिलोकेश्वरम्॥ १९।

नारायणं नरकहरं सुरेशं
भक्त्या नमस्कुर्व्वति† यो नृपेश।
स वीतशोकः परमं विशोकं
प्राप्नोति विष्णोः पदमव्ययं यत्‡॥ २०।

नृप उवाच।

भगवन् सर्व्वधर्मज्ञ कथं विष्णुः सनातनः।
पूज्यते मोक्षमिच्छद्भिः पुरुषैर्व्वद तत्त्वतः॥ २१।

महातपा उवाच।

शृणु राजन् महाप्राज्ञ यथा विष्णुः प्रसीदति।
पुरुषाणां तथा स्त्रीणां सर्व्वयोगीश्वरो हरिः॥ २२।
सर्व्वे देवाः सपितरो ब्रह्माद्याश्चाण्डमध्यगाः।
विष्णोः सकाशादुत्पन्ना इतीयं वैदिकी श्रुतिः॥ २३।
अग्निस्तथाश्विनौ गौरी गजवक्त्रभुजङ्गमाः।
कार्त्तिकेयस्तथादित्या मातरो दुर्गया सह॥ २४।

* कीलितमोक्षभिरिति (ख), मोक्षभिरिति आर्षं, मोक्षैरिति साधु।

† नमस्कुर्व्वतीति आर्षं, नमस्करोतीति साधु।

‡ पदमव्ययं तदिति (ख)।

द्दिग्गो धनपतिर्विष्णुर्यमो वद्रः शशी तथा ।
पितरश्चेति सम्भूताः प्राधान्येन जगत्पतेः ॥ २५ ।
हिरण्यगर्भस्य ततो सर्व्वे एव समुद्भवाः ।
पृथक् पृथग्गतोगर्व्वं वहमानाः समन्ततः ॥ २६ ।
अहं योग्यस्त्वहं याज्य इति तेषां रणो महान् ।
श्रूयते देवसमितौ क्षुब्धसागरसन्निभः ॥ २७ ।
तेषां विवदमानानां वह्निरुत्थाय पार्थिवः ।
उवाच मां यजस्वेति ध्यायध्वं मामिति ब्रुवन् ॥ २८ ।
प्राजापत्यमिदं नूनं शरीरं मद्विना कृतम् ।
विनाशमुपपद्येत यतो नायं महानहम् ॥ २९ ।
एवमुक्त्वा शरीरन्तु त्यक्त्वा वह्निर्विनिर्ययौ ।
निर्गतेऽपि ततस्तस्मिंस्तच्छरीरं न शीर्य्यते ॥ ३० ।
ततोऽश्विनौ मूर्त्तिमन्तौ प्राणापानशरीरगौ ।
आवां प्रधानावित्येवमूचतुर्याज्यमुत्तरौ ॥ ३१ ।
एवमुक्त्वा शरीरन्तु विहाय क्वचिदास्थितौ ।
तयोरपि क्षयं कृत्वा क्षीणन्तत्पुरमास्थितम् ॥ ३२ ।
ततो वागब्रवीद्गौरी* प्राधान्यं मयि संस्थितम् ।
साप्येवमुक्त्वा देहात्तु निश्चक्राम वहिः शुभा ॥ ३३ ।
तया विनापि तद्देहं वागूनं व्यवतिष्ठत† ।
ततो गणपतिर्वाक्यमाकाशाख्योऽब्रवीत्तदा ॥ ३४ ।

* वाचमब्रवीद्गौरीति साधु ।

† व्यवतिष्ठत इति आर्षं, व्यवातिष्ठत इति साधु ।

न मया रहितङ्किञ्चिच्छरीरं स्थायि दूरतः ।
कालान्तरेत्येव*मुक्त्वा सोऽपि निष्क्रम्य देहतः ।
पृथग्भूतस्तथाप्येतच्छरीरं नाप्यनीनशत्† ॥ ३५ ।
विनाशाख्यं च तत्तेन तथापि न विशीर्य्यते ॥ ३६ ।
सुषिरैस्तु विहीनन्तु दृष्ट्वा चैवं व्यवस्थितम् ।
शरीरधातवः सर्व्वे ते ब्रूयुर्वाक्यमेव हि ॥ ३७ ।
अस्माभिर्व्यतिरिक्तस्य न शरीरस्य धारणम् ।
भवतीत्येवमुक्त्वा ते जहुः सर्व्वे शरीरिणः‡ ॥ ३८ ।
तैर्व्यपेतमपि चैवमुत्कर्षेण प्रपाल्यते ।
तं दृष्ट्वा त्वब्रवीत्स्कन्दः सोऽहङ्कारः प्रकीर्त्तितः ॥ ३९ ।
मया विना शरीरस्य सम्भूतिरपि नेष्यते ।
एवमुक्त्वा शरीरात्तु स व्यपेतः पृथक् स्थितः ॥ ४० ।
तेनाप्येतेन तच्चैवं विना मृतवदास्थितम् ।
तं दृष्ट्वा कुपितो भानुः स आदित्यः प्रकीर्त्तितः ॥ ४१ ।
मया विना कथं चैवमिमं§ क्षणमपीष्यते ।
एवमुक्त्वाथ यातः स तच्छरीरं न शीर्य्यते ॥ ४२ ।

* कालान्तरेत्येवमिति चार्षं, कालान्तर इत्येवमिति साधु ।

† नाप्यनीनशदिति (ग) ।

‡ (ख) पुस्तके ३७।३८ श्लोकयोः स्थले केवलमेक एव श्लोकः पठ्यते—
सुषिरैस्तु विरिक्तस्य न शरीरस्य धारणम् ।
भवतीत्येवमुक्त्वा ते जहुः सर्व्वे शरीरिणः (शरीरिणम् ?) ॥

§ इममिति चार्षं, इदमिति साधु ।

ततः कामादिरुत्थाय गणो मातृविसंश्रितः ।
न मया व्यतिरिक्तस्य शरीरस्य व्यवस्थितिः* ।
एवमुक्त्वा स यातस्तु शरीरं तन्न शीर्य्यते ॥ ४३ ।
ततो मायाब्रवीत्कोपात्मा च दुर्गा प्रकीर्त्तिता ।
न मयास्य विना भूतिरित्युक्त्वान्तर्दधे पुनः ॥ ४४ ।
ततो दिशः समुत्तस्थुरूचुश्चेदं वचो महत् ।
नास्माभीरहितं कार्य्यम्भवतीति न संशयः ॥ ४५ ।
चतस्र आगताः काष्ठास्ताः प्रयाताः क्षणात्तदा ।
ततो धनपतिर्वायुर्मध्यतस्त्वत्समभवः† ।
शरीरस्येति सोऽप्येवमुक्त्वा मूर्द्धानगोऽभवत् ॥ ४६ ।
ततो विष्णोर्मनो ब्रूयान्नायन्देहो मया विना ।
क्षणमप्युत्सहे‡ स्थातुमित्युक्त्वान्तर्दधे पुनः ॥ ४७ ।
ततो धर्म्मोऽब्रवीत्सर्व्वमिदम्पालितवानहम् ।
इदानीम्मय्युपगते कथमेतद्भविष्यति ॥ ४८ ।
एवमुक्त्वा गतो धर्म्मस्तच्छरीरं न शीर्य्यते ॥ ४९ ।
ततोऽब्रवीन्महादेवः अव्यक्तो भूतभावनः ।
महत्संज्ञो मया हीनं शरीरन्नो भवेद्यथा ॥ ५० ।
एवमुक्त्वा गतः शम्भुस्तच्छरीरं न शीर्य्यते ॥ ५१ ।

* एतदर्द्धं (ख) पुस्तके नास्ति ।

† सत्त्वसम्भव इति (ग) ।

‡ उत्सहेदिति भार्षं, उत्सहेतेति साधु।

तद्दृष्ट्वा पितरश्चोचुस्तमाशं यावदस्मभिः*।
प्राणन्तरेभि†रेतच्च शरीरं शीर्य्यते ध्रुवम्॥ ५२।
एवमुक्त्वा तु‡ तद्देहन्त्यक्त्वान्तर्द्धानमागताः।
अग्निः प्राणः अपानौ च आकाशश्चैव धातवः॥ ५३।
क्षेत्रस्तद्वदहङ्कारो भानुः कामादयो मया।
काष्ठा वायुर्विष्णुधर्म्मौ शम्भुश्चैवेन्द्रियार्थकाः॥
एतैर्मुक्तन्तु तत्क्षेत्रमुक्ताविव तु संस्थितम्।
सोमेन पाल्यमानन्तु पुरुषेणेन्दुरूपिणा॥ ५४।५५।
एवं व्यवस्थिते सोमे षोडशात्मन्यथाम्बरे।
प्राग्वत्तच्च गुणोपेतं क्षेत्रमुत्थाय बभ्रम§॥ ५६।
प्रागवस्थं शरीरन्तु दृष्ट्वा सर्व्वप्रपालितम्।
ताः क्षेत्रदेवताः सर्व्वा वैलक्षण्यभावमास्थिताः।
तमेवन्तुष्टुवुः सर्व्वास्तं देवम्परमेश्वरम्॥ ५७।
स्वस्थानमाश्रिषुः सर्व्वास्तदा नृपतिसत्तम।
त्वमग्निस्त्वन्तथा प्राणस्त्वमपानः सरस्वती॥ ५८।
त्वमाकाशञ्चनाध्यक्ष¶स्त्वं शरीरस्य धातवः।

* अस्मभिरिति आर्षं, अस्माभिरिति साधु।

† प्राणन्तरेभिरिति आर्षं, प्राणान्तरैरिति साधु।

‡ तौ देहमिति (क), (ख)।

§ बभ्रम इति आर्षं, बभ्रामेति साधु। उत्थानबभ्रम इति (ग)।

¶ त्वमध्यक्ष इति (ग)।

अहङ्कारो भवान्देव* त्वमादित्योऽष्टको गणः ॥ ५८ ।
त्वं माया पृथिवी दुर्गा त्वं हिमवस्त्वमवत्पतिः ।
त्वं विष्णुस्त्वन्तथा धर्मस्त्वञ्जिष्णुस्त्वमपराजितः ॥ ६० ।
अवरार्थस्वरूपेण परमेश्वरसंश्रितः ।
अस्माभिरपयातैस्तु कथमेतद्भविष्यति ॥ ६१ ।
एवमत्र शरीरन्तु त्यक्तमस्माभिरेव च ।
न परम्भवतो देव तदत्र त्वच्च पाल्यते† ॥ ६२ ।
स्थानभङ्गो न नः कार्य्यः स्वयं सृष्टा प्रजापते ।
एवं स्तुतस्ततो देवस्तेषां तोषं परं ययौ ॥ ६३ ।
उवाच चैतान् क्रीडार्थं भवन्तोत्पादिता‡ मया ।
कृतकृत्यस्य चैकन्तु§ भवद्भिर्मे प्रयोजनम्¶ ॥ ६४ ।
तथा चेदप्रियं रूपे द्वे द्वे प्रत्येकशोऽधुना ।
भूतकार्येष्वमूर्त्तेन देवलोके तु मूर्त्तिना ।
तिष्ठध्वमपि कालान्ते लयं त्वाविशत द्रुतम् ॥ ६५ ।
शरीराणि पुनर्नैव कर्त्तव्योऽहमिति क्वचित् ।
मूर्त्तीनाञ्च‖ तथा तुभ्यमग्निनामानि वोऽधुना ॥ ६६ ।

---

* दीप इति (ग) ।

† त्वं प्रपाल्यत इति (ग) ।

‡ भवन्त उत्पादिता इति साधु ।

§ मे किन्त्विति (ग) ।

¶ विप्रयोजनमिति (ग) ।

‖ (ग) पुस्तके मूर्त्तीनाञ्चेत्यस्मादारभ्य स्तुता तथेतिपर्य्यन्तः पाठो नास्ति ।

अग्नेर्वैश्वानरो नाम प्राणापानौ तथाश्विनौ ।
भविष्यति तथा गौरी हिमशैलसुता तथा ॥ ६७ ॥
पृथिव्यादिगुणस्त्वेष गजवक्त्रो भविष्यति ।
शरीरधातवश्चेमे नानाभूतानि एव तु ॥ ६८ ॥
अहङ्कारस्तथा स्कन्दः कार्त्तिकेयो भविष्यति ।
शरीरमाया* दुर्गैषा कारणान्ते भविष्यति ॥ ६९ ॥
दश कन्या भविष्यन्ति काष्ठास्त्वेतास्तु वारुणाः ।
अयं वायुर्धनेशस्तु कारणान्ते भविष्यति ॥ ७० ॥
अयं मनो विष्णुनामा भविष्यति न संशयः† ।
धर्म्मोऽपि यमनामा च भविष्यति न संशयः ॥ ७१ ॥
महत्तत्त्वञ्च भगवान्महादेवो भविष्यति‡ ।
इन्द्रियार्थाश्च पितरो भविष्यन्ति न संशयः ॥ ७२ ॥
अयं सोमः पुरा भूत्वा यामिवं सर्व्वदामराः ।
एवं वेदान्तपुरुषः प्रोक्तो नारायणात्मकः ।
स्वस्थाने देवताः सर्व्वा देवस्तु विरराम ह ॥ ७३ ॥
एवंप्रभावो देवोऽसौ वेदवेद्यो जनार्द्दनः ।
कथितो नृपते तुभ्यं किमन्यच्छ्रोतुमिच्छसि ॥ ७४ ॥

इति वराहपुराणे महातपउपाख्याने सप्तदशोऽध्यायः ।

* शरीरमायेत्यादि श्लोकार्द्धं (ग) पुस्तके नास्ति ।

† नाम्ना च भविष्यत्येव नान्यथेति (ग) ।

‡ (ग) पुस्तके एतदर्द्धं नास्ति ।

## अष्टादशोऽध्यायः ।

प्रजापतिरुवाच ।

कथमग्नेः समुत्पत्तिरश्विनोर्वा महामुने ।
गौर्य्या गणपतेर्वाऽपि नागानां वा गुहस्य च ॥ १ ।
आदित्यचन्द्रमातॄणां दुर्गाया वा दिशान्तथा ॥
धनदस्य च विष्णोर्वा धर्म्मस्य परमेष्ठिनः ॥ २ ।
शम्भोर्वापि पितॄणाञ्च तथा चन्द्रमसो मुने ।
शरीरदेवताः सर्व्वाः कथं मूर्त्तित्वमागताः ॥ ३ ।
किञ्च तासां मुने भोज्यं का वा संज्ञा तिथिश्च का ।
यस्यां दृष्ट्वा त्वमी पुंसां फलं यच्छन्त्यनामयम् ।
एतन्मे सरहस्यन्तु मुने त्वं वक्तुमर्हसि ॥ ४ ।

महातपा उवाच ।

योगसाध्यस्वरूपेण आत्मा नारायणात्मकः ।
सर्व्वज्ञः क्रीड़तस्तस्य भोगेच्छा चात्मनात्मनि ॥ ५ ।
क्षोभितेऽस्मिन्महाभूते एतस्मिन्नेतदद्भुतम् ।
तमस्य प्रीतिमत्तोऽयं विकारं समरोचयत् ॥ ६ ।
विकुर्व्वतस्तस्य तदा महानग्निः समुत्थितः ।
कोटिज्वालापरीवारः शब्दवान्दहनात्मकः ॥ ७ ।
असावप्यतितेजस्वी विकारं समरोचयत् ।
विकुर्व्वतो बभौ वह्नेर्वायुः परमदारुणः ॥ ८ ।
तस्मादपि विकारस्थादाकाशं समपद्यत ।

तच्छब्दलक्षणं व्योम स च वायुः प्रतापवान् ॥ ९ ।
तच्च तेजोऽम्भसा युक्तं श्लिष्टमन्योन्यतस्तथा ।
तेजसा शोषितं तोयं वायुना उग्रगामिणा ॥ १० ।
बोधितेन तथा व्योममार्गे दत्ते तु तत्क्षणात् ।
पिण्डीभूतं तथा सर्व्वं काठिन्यं समपद्यत ॥ ११ ।
सेयं पृथ्वी महाभाग तेषां ह्येतराभवत् ।
चतुर्णां योगकाठिन्यादेकैकं गुणवृद्धितः ॥ १२ ।
पृथ्वी पञ्चगुणा ज्ञेया तेऽप्येतस्यां व्यवस्थिताः ।
स च काठिन्यकं कुर्व्वन् ब्रह्माण्डं समपद्यत ॥ १३ ।
तस्मिन्नारायणो देवश्चतुर्मूर्त्तिश्चतुर्भुजः ।
प्राजापत्येन रूपेण सिसृक्षुर्विविधाः प्रजाः ॥ १४ ।
चिन्तयन्नाधिगच्छेत सृष्टिं लोकपितामहः ।
ततोऽस्य सुमहान् कोपो जज्ञे परमदारुणः ॥ १५ ।
तस्मात्कोपात्सहस्रार्चिरुत्तस्थौ दहनात्मकः ।
स तं दिधक्षुर्ब्रह्माणं* ब्रह्मणोक्तस्तदा नृप ॥ १६ ।
हव्यं कव्यं वहस्वेति ततोऽसौ हव्यवाहनः ।
ब्रह्माणं क्षुधितं प्रायात्किङ्करोमि प्रशाधि माम् ।
स ब्रह्मा प्रत्युवाचैनं त्रिधा तृप्तिमवाप्स्यसि ॥ १७ ।
दत्तास्तु दक्षिणास्त्वादौ तृप्तिर्भूत्वा यतोऽमरान् ।
नयसे दक्षिणाभागन्दक्षिणाग्निस्ततोऽभवत् ॥ १८ ।
आसमन्ताद्धुतं किञ्चिद्यच्चिलोके विभावसो ।

* सर्व्वेनेति (ग) ।

तद्वहस्व सुरार्थाय ततस्त्वं हव्यवाहनः ॥ १९ ।
गृहं शरीरमित्युक्तं तत्पतिस्त्वं यतोऽधुना ।
अतो वै गार्हपत्यस्त्वं भव सर्व्वगतो विभो ॥ २० ।
विश्वावरान् हुतो येन नयसे सद्गतिं प्रभो ।
अतो वैश्वानरो नाम तव वाक्यं भविष्यति ॥ २१ ।
द्रविणं बलमित्युक्तं धनञ्च द्रविणं ततः ।
ददाति तद्भवानेव द्रविणोदास्ततोऽभवत्* ॥ २२ ।
पापस्तिरोभवेन्नित्यं निःशब्दो निश्चयात्मकः ।
अतस्त्वं सर्वगत्वा च तेजोऽग्निस्ते भविष्यति ॥ २३ ।
श्वाग्रपूरणशब्दो य इध्मानामपि कीर्त्त्यते ।
पूरितस्य गतिर्येन तेनेध्मस्त्वं भविष्यसि ॥ २४ ।
याज्यान्येतानि नामानि तव पुत्र महामखे ।
यजन्तस्त्वां नराः कामैस्तर्पयिष्यन्त्यसंशयः ॥ २५ ।

इति वराहपुराणे महातपउपाख्याने अग्न्युत्पत्तिर्नाम अष्टादशोऽध्यायः ।

---

* भवेति (ग) ।

# ऊनविंशोऽध्यायः ।

महातपा उवाच ।

विष्णोर्विभूतिमाहात्म्यं कथितं ते प्रसङ्गतः ।
तिथीनां शृणु माहात्म्यं कथ्यमानं मया नृप ॥ १ ।
इत्थम्भूतो महानग्निर्ब्रह्मक्रोधसमुद्भवः ।
उवाच देवं ब्रह्माणं तिथिर्मे दीयतां विभो ।
यस्यामहं समस्तस्य जगतः ख्यातिमाप्नुयाम् ॥ २ ।

ब्रह्मोवाच ।

देवानामथ यक्षाणां गन्धर्वाणाञ्च सत्तम ।
आदौ प्रतिपदा येन त्वमुत्पन्नोऽसि पावक ॥ ३ ।
त्वत्पदात्प्रातिपदिकं* सम्भविष्यन्ति देवताः ।
अतस्ते प्रतिपन्नाम तिथिरेषा भविष्यति ॥ ४ ।
तस्यान्तिथौ हविष्येण प्राजापत्येन मूर्त्तिना† ।
होष्यन्ति तेषां प्रीताः स्युः पितरः सर्वदेवताः ॥ ५ ।
चतुर्विधानि भूतानि मनुष्याः पशवोऽसुराः ।
देवाः सर्वे सगन्धर्वाः प्रीताः स्युस्तर्पितास्त्वयि ॥ ६ ।
यश्चोपवासं कुर्व्वीत त्वद्भक्तः प्रतिपद्दिने ।
क्षीराशनो वा वर्त्तेत शृणु तस्य फलं महत् ।

* (प्रातिपदिकाः ?) ।

† मूर्त्तिना इत्यार्षं, मूर्त्त्या इति साधु ।

चतुर्युगानि षड्‌विंशं* स्वर्गलोके महीयते ॥ ७ ।
तेजस्वी रूपसम्पन्नो द्रव्यवाञ्जायते नरः ।
इह जन्मन्यसौ राजा प्रेत्य स्वर्गे महीयते† ॥ ८ ।
तूष्णीम्बभूव सोऽप्यग्निर्ब्रह्मदत्ताश्रमं ययौ ॥ ९ ।
य इदं शृणुयान्नित्यं प्रातरुत्थाय मानवः ।
अग्नेर्जन्म स पापेभ्यो मुच्यते नात्र संशयः ॥ १० ।

इति वराहपुराणे अग्न्युत्पत्तिर्नाम ऊनविंशोऽध्यायः ।

---

## विंशोऽध्यायः ।

प्रजापाल उवाच ।

एवमग्नेः समुत्पत्तिर्जाता ब्रह्ममहात्मनः* ।
प्राणापानौ कथं देवावश्विनौ सम्बभूवतुः ॥ १ ।

महातपा उवाच ।

मरीचिर्ब्रह्मणः पुत्रः स्वयं ब्रह्मा द्विसप्तभिः ।
रूपैर्व्यवस्थितस्तेषां मरीचिः श्रेष्ठतामगात् ॥ २ ।
तस्य पुत्रो महातेजा कश्यपो नाम वै मुनिः ।
स्वयं प्रजापतिः श्रीमान्देवतानां पिताभवत् ॥ ३ ।

* षड्‌विंशमित्यार्षं, षड्‌विंशतिमिति साधु ।
† (ग) पुस्तके एष श्लोको नास्ति ।

---

* ब्रह्मात्मनः पुरेति (ग) ।

तस्य पुत्रा बभूवुर्हि आदित्या द्वादश प्रभो ।
नारायणात्मकं तेजो द्वादश सुप्रकीर्त्तितम् ॥ ४ ॥
ते ते* मासास्तु आदित्याः स्वयं संवत्सरो हरिः ।
एवं ते द्वादशादित्या मार्त्तण्डस्य प्रतापवान् ॥ ५ ॥
तस्य त्वष्टा ददौ कन्यां संज्ञां नाम महाप्रभाम् ।
तस्यापत्यद्वयञ्जज्ञे यमश्च यमुना तथा ॥ ६ ॥
तस्य तेजोऽप्यसहती† बभूवाश्वी मनोजवा ।
स्वां छायां तत्र‡ संस्थाप्य सा जगामोत्तरान् कुरून् ॥ ७ ॥
तद्रूपां तां सवर्णान्तु भेजे मार्त्तण्डभास्करः ।
तस्मादपि द्वयं जज्ञे शनिं तपतिमेव च ॥ ८ ॥
यदा त्वसदृशं भेजे पुत्रान् प्रति नरोत्तम ।
संज्ञां प्रोवाच भगवान् क्रोधसंरक्तलोचनः ।
असमत्वं न कर्त्तव्यं स्वेष्वपत्येषु भामिनि ॥ ९ ॥
एवमुक्ता यदा सा तु असमत्वं व्यरोचत ।
तदा यमः स्वपितरं प्रोवाच भृशदुःखितः ॥ १० ॥
नेयं माता भवेत्तात अस्माकं ग्रनुवत्सदा ।
सपत्नीव ह्यथाचारा स्वेष्वपत्येषु वत्सला§ ॥ ११ ॥
एवं यमवचः श्रुत्वा सा च्छाया क्रोधमूर्च्छिता ।

---

* ये ते मासा इति (क), (ख) ।

† असहतीत्यार्षम्, असहमानेति साधु ।

‡ स्वां छायामेवेति (ख) ।

§ भामिनीति (ग) ।

शशाप प्रेतराजस्त्वं भविष्यस्यचिरादिव ॥ १२ ।
एवं श्रुत्वाथ मार्त्तण्डस्तदा पुत्रहितेच्छया ।
उवाच मध्यवर्त्ती त्वं भविता धर्म्मपापयोः ।
लोकपालश्च भविता त्वं पुत्र दिवि शोभसे ॥ १३ ।
शनिं शशाप मार्त्तण्डश्छायाकोपप्रधर्षितः ।
त्वं क्रूरदृष्टिर्भविता मातृदोषेण पुत्रक ॥ १४ ।
एवमुक्त्वा समुत्थाय ययौ भानुर्दिदृक्षया ।
तामपश्यत्त्वसौ सोऽश्वामुत्तरेषु कुरुष्वथ ॥ १५ ।
ततोऽश्वरूपं धृत्वा स गत्वा तत्रोत्तरान् कुरून् ।
प्राजापत्येन मार्गेण युयोजात्मानमात्मना ॥ १६ ।
तस्यां त्वाष्ट्र्यामश्वरूप्यां मार्त्तण्डस्तीव्रतेजसा ।
वीजं* निर्वापयामास तज्ज्वलन्तं† द्विधापतत् ॥ १७ ।
तत्र प्राणस्त्वपानश्च योनौ चात्मजितौ पुरा ।
वरदानेन च पुनर्मूर्त्तिमन्तौ बभूवतुः ॥ १८ ।
तौ त्वाष्ट्र्यामश्वरूपायां जातौ येन नरोत्तमौ ।
ततस्तावश्विनौ देवौ कीर्त्त्येते रविनन्दनौ ॥ १९ ।
प्राजापत्यं स्वयं भानुस्त्वाष्ट्री शक्तिः परापरा ।
तस्याः प्राग्वच्छरीरस्थावमूर्त्तौ‡ मूर्त्तिमाश्रितौ ॥ २० ।
ततस्तावश्विनौ देवौ मार्त्तण्डमुपतस्थतुः ।

* वसुमिति (ग) ।

† ज्वलन्तमित्यार्षं, ज्वलदिति साधु ।

‡ चतुर्मूर्त्तौ इति (ग) ।

ऊचतुः स्वरुचिन्तावलिङ्कर्त्तव्यमथावयोः । २१ ।

मार्त्तण्ड उवाच ।

पुत्रौ प्रजापतिं देवं भक्त्याराधयतां वरम् ।
नारायणं स वो* दाता वरं नूनं भविष्यति ॥ २२ ।
एवं तावश्विनौ प्रोक्तौ मार्त्तण्डेन महात्मना ।
तेपतु†स्तीव्रतपसौ तपः परमदुश्चरम् ।
ब्रह्मपारमयं स्तोत्रं जपन्तौ तु समाहितौ ॥ २३ ।
तयोः कालेन महता ब्रह्मा नारायणात्मकः ।
तुतोष परमप्रीत्या‡ वरञ्चैनन्ददौ तयोः ॥ २४ ।

प्रजापाल उवाच ।

अश्विभ्यामीरितं स्तोत्रं ब्रह्मणोऽव्यक्तजन्मनः ।
श्रोतुमिच्छाम्यहं ब्रह्मंस्त्वत्प्रसादान्महामुने ॥ २५ ।

महातपा उवाच ।

शृणु राजन्यथा स्तोत्रमश्विभ्यां ब्रह्मणः कृतम् ।
दृष्टश्च फलं प्राप्तं तयोः स्तोत्रस्य चानघ ॥ २६ ।

ओं नमस्ते निष्क्रिय निष्प्रपञ्च
निराश्रय निरपेक्ष निरालम्ब ।
निर्गुण निरालोक निराधार
निर्मम निरालम्ब ॥ २७ ।

* सर्व्वदातेति (ग) ।

† ते पुनरिति (ग) ।

‡ यत्तु मम्प्रीत्येति (ग) ।

ब्रह्म महाब्रह्म ब्राह्मणप्रिय
पुरुष महापुरुष पुरुषोत्तम ।
देव महादेव देवोत्तम
स्थाणो स्थितिस्थापक* ॥ २८ ।
भूत महाभूत भूताधिपते
यक्ष महायक्ष यक्षाधिपते ।
गुह्य महागुह्य गुह्याधिपते
सौम्य महासौम्य सौम्याधिपते ॥ २९ ।
पक्षि महापक्षिपते
दैत्य महादैत्याधिपते ।
रुद्र महारुद्राधिपते
विष्णो महाविष्णुपते ।
परमेश्वर नारायण
प्रजापतये नमः ॥ ३० ।

एवं स्तुतस्तदा ताभ्यामश्विभ्यां स प्रजापतिः† ।
तुतोष परमप्रीत्या वाक्यञ्चेदमुवाच ह ॥ ३१ ।
वरं वरयतां शीघ्रं देवैः परमदुर्लभम् ।
येन वो वरदानेन चरतस्त्रिदिवं सुखम् ॥ ३२ ।

अश्विनावूचतुः ।

आवयोर्देवभागन्तु देहि देव प्रजापते ।

स्थाणोत्तम स्थितिस्थापकसमेति (ग)
एतदर्द्धं (ग) पुस्तके नास्ति ।

सोमपत्वञ्च देवानां सामान्यत्वञ्च शाश्वतम् ॥ ३३ ।

ब्रह्मोवाच ।

रूपं कान्तिरनौपम्यं भिषक्त्वं सर्व्ववस्तुषु ।
सोमपत्वञ्च लोकेषु सर्व्वमेतद्भविष्यति ॥ ३४ ।

महातपा उवाच ।

एतत्सर्व्वं द्वितीयायामश्विभ्यां ब्रह्मणा पुरा ।
दत्तं यस्मादतस्तेषां तिथीनामुत्तमा तिथिः ॥ ३५ ।
एतस्यां रूपकामस्तु पुष्पाहारो भवेन्नरः ।
संवत्सरं शुचिर्नित्यं सुरूपो भवेन्नरः ॥ ३६ ।
अश्विभ्यां ये गुणाः प्रोक्तास्ते तस्यापि भवन्ति च ।
य इदं शृणुयान्नित्यमश्विनोर्जन्म चोत्तमम् ।
सर्व्वपापविनिर्मुक्तः पुत्रवाञ्जायते नरः ॥ ३७ ।

इति वराहपुराणे अश्व्युत्पत्तिर्नाम विंशोऽध्यायः ।

## एकविंशोऽध्यायः ।

प्रजापाल उवाच ।

कथं गौरी महाप्राज्ञ संस्तुता वरदानतः ।
मूर्त्तिं लब्धवती पुंसः परस्य परमात्मनः ॥ १

महातपा उवाच ।

पूर्व्वं प्रजापतिर्देवः सिसृक्षुर्विविधाः प्रजाः ।

चिन्तयामास धर्म्मात्मा यदान्तान्नाध्यगच्छत ॥
तदास्य कोपात्सञ्जज्ञे स च रुद्रः प्रतापवान् ।
रोदनात्तस्य रुद्रत्वं सञ्जातं परमेष्ठिनः ॥ २।३ ।
तस्य ब्रह्मा शुभां कन्यां भार्य्यार्थे मूर्त्तिसम्भवाम् ।
गौरीनाम्नीं स्वयं देवीं भारतीं तां ददौ पिता ।
रुद्रायामितदेहाय स्वयं ब्रह्मा प्रजापतिः ॥ ४ ।
स तां लब्ध्वा वरारोहां मुदा परमया युतः ।
सर्गकालेषु तं ब्रह्मा तपसा प्रत्युवाच ह ॥ ५ ।
रुद्र प्रजाः सृजस्वेति पौनःपुन्येन नोदितः ।
असमर्थ इति जले निमज्जत* महाबलः ॥ ६ ।
तपोऽर्थित्वं तपोहीनः स्रष्टुं शक्नोति न प्रजाः ।
एवं चिन्त्य† जले मग्नस्ततो रुद्रः प्रतापवान् ॥ ७ ।
तस्मिन्निमग्ने देवेशे तां ब्रह्मा कन्यकां पुनः ।
अन्तःशरीरगां कृत्वा गौरीम्परमशोभनाम् ॥
पुनः सिसृक्षुर्भगवानसृजत्सप्त मानसान् ।
दक्षश्च तेषामारभ्य‡ प्रजाः सम्यग्विवर्धिताः ॥ ८।९ ।
तत्र दाक्षायणी पुत्राः सर्व्वे देवाः सवासवाः ।
वसवोऽष्टौ च रुद्राश्च आदित्या मरुतस्तथा ॥ १० ।
सापि दक्षाय सुश्रोणी गौरी दत्ताथ ब्रह्मणा ।

* निमज्जतेति आर्षं, न्यमज्जदिति साधु ।

† चिन्त्येति आर्षं, चिन्तयित्वेति साधु ।

‡ तेषामारभ्येति आर्षं, तेभ्य आरभ्येति साधु ।

दुहितृत्वे पुरा या हि रुद्रेणोढ़ा महात्मना* ॥ ११ ।
सा च दाक्षायणी देवी पुनर्भूत्वा नृपोत्तम ॥ १२ ।
ततो दक्षः प्रहृष्टात्मा दौहित्रांस्तान्समर्हितत्† ।
इष्ट्वा यज्ञमथारेभे प्रीणनाय प्रजापतेः ॥ १३ ।
तत्र ब्रह्मसुताः सर्व्वे मरीच्याद्य एव च ।
चक्रुरार्त्विजकं कर्म्म स्वे स्वे मार्गे व्यवस्थिताः ॥ १४ ।
ब्रह्मा स्वयं मरीचस्तु बभूवाऽध्वे तथापरे ।
अत्रिस्तु यज्ञकर्म्मस्य आग्नीध्रस्त्वङ्गिराभवत् ॥ १५ ।
होता पुलस्त्यस्त्वभवदुद्गाता पुलहोऽभवत् ।
क्रतौ क्रतुस्तु प्रस्तोता तदा यज्ञे महातपाः ॥ १६ ।
प्रतिहर्त्ता प्रचेतास्तु तस्मिन् क्रतुवरे बभौ ।
सुब्रह्मण्यो वशिष्ठस्तु सनकाद्याः सभासदः ॥ १७ ।
तत्र याज्यः स्वयं ब्रह्मा स च इज्यस्तु विश्वकृत्‡ ।
पूज्या दक्षस्य दौहित्रा रुद्रादित्योऽङ्गिरादयः ॥ १८ ।
प्रत्यक्षं पितरस्ते हि तैः प्रीतैः प्रीयते जगत् ।
तत्र भागार्थिनो देवा आदित्या वसवस्तथा ॥ १९ ।
विश्वेदेवाः सपितरो गन्धर्व्वाद्या मरुद्गणाः ।
जगृहुर्यज्ञभागांस्तान्यावन्तो हविषार्पिताः ॥ २० ।
तावत्कालं जलात्मद्य उत्तस्थौ ब्रह्मणः पुनः ।

* श्लोकोऽयं (ग) पुस्तके नास्ति ।

† वर्द्धिकृदिति (ग) ।

‡ पूज्यते इति (ख) ।

रुद्रः कोपोद्भवो यस्तु पूर्व्वमुक्तो महाजले ॥ २१ ॥
स सत्कार्य्यसहायो निश्चक्राम जलात्ततः ।
सर्व्वज्ञानमयो देवः सर्व्वदेवमयोऽमलः ॥ २२ ॥
प्रत्यक्षदर्शी सर्व्वस्य जगतस्तपसा बभौ ।
तस्मिंस्तु काले पञ्चानाञ्जातः सर्गो नरोत्तम ॥ २३ ॥
दिव्यानां पृथिवीस्थानां चतुर्णां नरजातिनाम्* ।
रौद्रसर्गस्य सम्भूतिस्तदा सद्योऽपि जायते ।
इदानीं रुद्रसर्गस्त्वं शृणु पार्थिवसत्तम ॥ २४ ॥
दशवर्षसहस्राणि तपस्तप्त्वा महज्जले ।
प्रतिरुद्धो यदा रुद्रस्तदा चोर्व्वीं सकाननाम् ॥
दृष्ट्वा शस्यवतीं रम्यां मनुष्यपशुसङ्कुलाम् ।
शुश्राव च तदा शब्दानृत्विजां दक्षसद्मनि ।
आश्रमे यज्ञियानोत्थैर्योगस्थैरिति कीर्त्तितान् ॥ २५।२
ततः श्रुत्वा महातेजाः सर्व्वज्ञः परमेश्वरः ।
चुकोप सुभृशन्देवो वाक्यञ्चेदमुवाच ह ॥ २७ ॥
अहं पूर्व्वन्तु कविना सृष्टः सर्व्वात्मना विभुः ।
प्रजाः सृजस्वेति तदा वाक्यमेतत्तथोक्तवान् ॥ २८ ॥
इदानीं केन तत्कर्म्म कृतं सृष्ट्यादिवर्णनम् ।
एवमुक्तो भृशं कोपात्ननाद परमेश्वरः ॥ २९ ॥
तस्यैव नदतो ज्वालाः श्रोत्रेभ्यो निर्ययुस्तदा ।
तत्र भूतानि वैताला उच्छुष्मा प्रेतपूतनाः ।

---

* जातीनामिति साधु ।

उत्तस्थुः कोटिशस्तत्र नानाप्रहरणावृताः ॥ २० ।
तं दृष्ट्वा भूतसङ्घाता विविधायुधपाणयः ।
ससर्ज वेदविद्याङ्गरथं परमशोभनम् ॥ २१ ।
तस्मिन्मृगद्वयं स्वश्वौ* चितस्तत्र त्रिवेणुकम् ।
त्रिपूजकं त्रिषवणं धर्म्माद्यं मारुतध्वनिम् ।
अहोरात्रे पताके द्वे धर्म्माधर्मौ† तु दण्डकम् ।
शकटं सर्व्वविद्याश्च त्वयं ब्रह्मा हि सारथिः । २२।२३ ।
गायत्री च धनुस्तस्य ओङ्कारो गुण एव च ।
स्वराः सप्त शरास्तस्य देवदेवस्य सुव्रत ॥ २४ ।
एवं कृत्वा स सामग्रीन्देवदेवः प्रतापवान् ।
जगाम दक्षयज्ञाय कोपाद्रुद्रः प्रतापवान् ॥ २५ ।
गच्छतस्तस्य देवस्य अम्बराङ्गिरसन्नयत् ।
ऋत्विजां मन्त्रनिचयो नष्टो रुद्रागमे तदा ॥ २६ ।
विपरीतमिदं दृष्ट्वा तदा सर्व्वेऽत्र ऋत्विजः ।
ऊचुः सन्नह्यतां देवा महद्वो भयमागतम् ॥ २७ ।
कश्चिदायाति बलवानसुरो ब्रह्मनिर्म्मितः ।
यज्ञभागार्थमेतस्मिन् क्रतौ परमदुर्लभम् ॥ २८ ।
एवमुक्तास्ततो देवा ऊचुर्मातामहं तदा ।
दक्ष तात किमत्रास्मत्कार्य्यं ब्रूहि विवक्षितम् ॥ २९ ।

* अश्वदिति (क), (ख) ।

† धर्म्माधर्म्मौ इति साधुः ।

दक्ष उवाच ।

अद्यन्तां द्रुतमज्ञापि सङ्ग्रामोऽद्य विधीयताम् ॥ ४० ॥
एवमुक्ते तदा देवैर्विविधायुधधारिभिः ।
रुद्रस्यानुचरैः सार्द्धं महद्युद्धं प्रवर्त्तितम् ॥ ४१ ॥
तत्र वेतालभूतानि कूष्माण्डा ग्रहपूतनाः ।
युयुधुर्लोकपालैश्च नानायुधधराणि च ॥ ४२ ॥
दिवो रौद्राणि भूतानि निर्गच्छन्तो यमालयम् ।
चिक्षिपुः सायकान् घोरानसीप्रासपरश्वधान् ॥ ४३ ॥
भूतान्यपि मृधे घोराण्युल्मुकैरस्थिभिः शरैः ।
जघ्नु*र्देवान्मृधे रोषाद्रुद्रस्य पुरतो बलात् ॥ ४४ ॥
ततस्तस्मिन्महारौद्रे संग्रामे भीमरूपिणी ।
रुद्रो भगस्य नेत्रे तु बिभेदैकेषुणा मृधे ॥ ४५ ॥
रुद्रस्य शरपातेन नष्टनेत्रं भगं तदा ।
दृष्ट्वास्य क्रोधात्तेजस्वी पूषा रुद्रमयोधयत् ॥ ४६ ॥
सृजन्तमिषुजालानि पूषणन्तु† महामृधे ।
दृष्ट्वा रुद्रोऽस्य दन्तांस्तु चकर्ष परवीरहा ॥ ४७ ॥
तस्य दन्तांस्तदा दृष्ट्वा पूष्णो रुद्रेण पातितान् ।
दुद्रुवुः सर्व्वतो दिक्षु रुद्रास्त्वेकादश द्रुतम् ॥ ४८ ॥
तां भग्नां सहसा दिक्षु दृष्ट्वा विष्णुः‡ प्रतापवान् ।

---

* जघ्नुरिति (ग) ।

† पूषाणमिति साधु ।

‡ रुद्र इति (ग) ।

आदित्यावरजो वाक्यमुवाच खबलं तदा ॥ ४९ ।
क्व यात पौरुषब्यक्ता दर्पं माहात्म्यमेव च ।
व्यवसायं कुलं भूतिं कथं न स्मर्य्यते द्रुतम् ॥ ५० ।
परमेष्ठिगुणैर्युक्ता लब्धमायुर्यतः पुरा ।
तं नमस्कुरुतामोघं पृथिव्यां पद्मजं* स्वयम् ॥ ५१ ।
*एवमुक्ता गरुत्मन्तमारुरोह हरिस्तदा ।*
शङ्खचक्रगदापाणिः पीतवासा जनार्द्दनः ॥ ५२ ।
ततो हरिहरं युद्धमभवल्लोमहर्षणम् ।
रुद्रः पाशुपतास्त्रेण विव्याध हरिमोजसा ॥ ५३ ।
हरिर्नारायणास्त्रेण रुद्रं विव्याध कोपवान् ।
नारायणं पाशुपतमुभेऽस्त्रे व्योम्नि रोषिते ।
युयुधाते भृशं दिव्यं परस्परजिघांसया ।
दिव्यं वर्षसहस्रन्तु तयोर्युद्धमभूत्तदा ॥ ५४।५५ ।
तत्रैकं मुकुटोद्बद्धमन्यच्च जटजालकम् ।
एकं प्रध्मापयच्छङ्खमन्यच्चमरकं शुभम् ॥ ५६ ।
एकं खड्गकरं तत्र तथान्यन्दण्डधारिणम् ।
एकङ्कौस्तुभदीप्ताङ्गमन्यं भस्मविभूषितम् ॥ ५७ ।
एकं गदां भ्रमयन्तं† द्वितीयं दण्डमेव च ।
एकं शोभति‡ कण्ठस्थैर्मणिभिः स्वस्थिभिः परम् ॥ ५८ ।

* यत्प्रजमिति (ग) ।

† भ्रमयतीति (क), (ख) ।

‡ शोभतीति चार्षं, शोभत इति साधु ।

एवं पीताम्बरं तच्च द्वितीयं सर्पमेखलम् ।
एवं तौ स्वर्द्दिमावन्तौ* रौद्रनारायणात्मकौ ।
अन्योऽन्यातिशयोपेतौ तदालोक्य पितामहः ।
उवाच शाम्यतामस्मि स्वस्वभावेन सुव्रते ॥ ५८।६० ।
एवं ते ब्रह्मणा प्रोक्ते शान्तभावं प्रजग्मतुः ।
अथ विष्णुहरौ ब्रह्मा वाक्यमेतदुवाच ह ॥ ६१ ।
उभौ हरिहरौ देवौ लोके ख्यातिं गमिष्यथः ।
अयञ्च यज्ञो विध्वस्तः सम्पूर्णत्वं गमिष्यति ॥ ६२ ।
दक्षस्य ख्यातिमांल्लोके सन्तत्यायं भविष्यति ॥ ६३ ।
एवमुक्त्वा हरिहरौ तदा लोकपितामहः ।
ब्रह्मा लोकानुवाचेदं रुद्रभागोऽस्य दीयताम् ॥ ६४ ।
रुद्रभागो ज्येष्ठभाग इतीयं वैदिकी श्रुतिः ।
स्तुतिञ्च देवाः कुरुत रुद्रस्य परमेष्ठिनः ॥ ६५ ।
भगनेत्रहरं देवं पूष्णो दन्तविनाशनम् ।
स्तुतिं कुरुत वः† शीघ्रं गीतैरेतैस्तु नामभिः ॥
येनायं वः प्रसन्नात्मा वरदत्वं भजेत ह ॥ ६६ ।
एवमुक्तास्तु ते देवा स्तोत्रं शम्भोर्महात्मनः ।
चक्रुः परमया भक्त्या नमस्कृत्य स्वयम्भुवे ॥ ६७ ।

देवा ऊचुः ।

नमो विषमनेत्राय नमस्ते त्र्यम्बकाय च ।

---

* अत्रास्तशब्दस्य तद्विशेषणानाञ्च पुंस्त्वमार्षम् ।

† चेति (ग) ।

नमः सहस्रनेत्राय नमस्ते शूलपाणिने ।
नमः खट्वाङ्गहस्ताय नमस्ते दण्डधारिणे ॥ ६८ ।
त्वं देव हुतभुग्ज्वालाकोटिभानुसमप्रभः ।
अदर्शने वयं देव मूढ़विज्ञानतोऽधुना ॥ ६९ ।

नमस्त्रिनेत्रार्त्तिहराय शम्भो
त्रिशूलपाणे विकृतास्यरूप ।
समस्तदेवेश्वर शुद्धभाव
प्रसीद रुद्राच्युत सर्व्वभाव ॥ ७० ।
पूष्णोऽस्य दन्तान्तक भीमरूप
प्रलम्बभोगीन्द्रलुलन्तकण्ठ ।
विशालदेहाच्युत नीलकण्ठ
प्रसीद विश्वेश्वर विश्वमूर्त्ते ॥ ७१ ।
भगाक्षिसंस्फोटनदक्षकर्म्मा
गृहाण भागं मखतः प्रधानम् ।
प्रसीद देवेश्वर नीलकण्ठ
प्रपाहि नः सर्व्वगुणोपपन्न* ॥ ७२ ।
सिताङ्गरागाप्रतिपन्नमूर्त्ते
कपालधारिंस्त्रिपुरघ्न देव† ।
प्रपाहि नः सर्व्वभयेषु चैवं‡

* सर्व्वभयेषु चैव इति (क) ।
† एतदर्द्धं (ख) पुस्तके नास्ति ।
‡ चैवेति (क), (ख) ।

उमापते पुष्करनालजन्म ॥ ७३ ।
पश्यामि ते* देहगतान्सुरेश
सर्गादयो वेदवराननन्त ।
साङ्गान् सविद्यान् सपदक्रमांश्च
सर्व्वान्निलीनांस्त्वयि देवदेव ॥ ७४ ।
भव सर्व्व महादेव पिनाकिन्रुद्र ते हर ।
नताः स्म सर्व्वे विश्वेश त्राहि नः परमेश्वर ॥ ७५ ।
इत्थं स्तुतस्तदा देवैर्देवदेवो महेश्वरः ।
तुतोष सर्व्वदेवानां वाक्यञ्चेदमुवाच ह ॥ ७६ ।

रुद्र उवाच† ।

भगस्य नेत्रं भवतु पूष्णो दन्तास्तथा मुखे ।
दक्षस्याच्छिद्रतां यातु यज्ञश्चाप्यदितेः सुताः ॥ ७७ ।
पशुभावं तथा चापि अपनेष्यामि वः सुराः ।
मद्दर्शनेन यो जातः पशुभावो दिवौकसाम् ।
स मयापहृतः सद्यः पतित्वं वो भविष्यति‡ ॥ ७८ ।
अहञ्च सर्व्वविद्यानां पतिराद्यः सनातनः ।
अहं वै पतिभावेन पशुमध्ये§ व्यवस्थितः ।

---

* पश्याम्यहमिति (ग) ।

† एष पाठः (ग) पुस्तके नास्ति ।

‡ (७८) अङ्कितः पाठः (क) पुस्तके नास्ति । (ख) पुस्तके स मयापहृत इत्यस्मादनन्तरं सभामध्ये व्यवस्थित इति पाठो वर्त्तते ।

§ मध्यमिति (ग) ।

अतः पशुपतिर्नाम मम लोके भविष्यति* ॥ ७९ ।
ये मां यजन्ति तेषां स्यादीशा पाशुपती भवेत् ॥ ८० ।
एवमुक्ते तु रुद्रेण ब्रह्मा लोकपितामहः ।
उवाच रुद्रं सस्नेहं स्मितपूर्व्वमिदं वचः ॥ ८१ ।
ध्रुवं पशुपतिर्देव त्वं लोके ख्यातिमेष्यसि ।
अयञ्च देवस्तन्नाम्ना लोके ख्यातिं गमिष्यति ॥ ८२ ।†
आराध्यश्च समस्तानां लोकादीनां गमिष्यति ॥ ८३ ।
एवमुक्त्वा तदा ब्रह्मा दक्षं प्रोवाच बुद्धिमान् ।
गौरीं प्रयच्छ रुद्राय पूर्व्वमेवोपपादिताम् ॥ ८४ ।
एवमुक्त्वा ददा देवस्तां कन्यां दक्षसन्निधौ ।
ददौ रुद्राय महते गौरीं परमशोभनाम् ॥ ८५ ।
दक्षस्य च प्रियं कुर्व्वन् बहुमानपुरःसरम् ।
गृहीतायान्तु कन्यायां दाक्षायण्यां पितामहः ।
ददौ रुद्राय निलयं कैलासं सुरसन्निधौ ॥ ८६ ।
रुद्रोऽपि प्रययौ भूतैः समं कैलासपर्व्वतम् ।
देवाश्चापि यथास्थानं स्वं स्वं जग्मुर्मुदान्विताः ॥ ८७ ।
ब्रह्मापि दक्षसहितः प्राजापत्यं पुरं ययौ ॥ ८८ ।

इति वराहपुराणे गौर्य्युत्पत्तिर्नाम एकविंशोऽध्यायः ।

* श्लोकोऽयं (ख) पुस्तके अन्यथैव पठितः । यथा—
स मयाऽपगतः उग्रसभामध्ये व्यवस्थितः ।
अतः पशुपतिर्नाम मम लोके भविष्यति ॥

† ८२ श्लोकः (क), (ख) पुस्तकयोर्नास्ति ।

# द्वाविंशोऽध्यायः ।

महातपा उवाच ।

तस्मिन्निवसतस्तस्य रुद्रस्य परमेष्ठिनः ।
चुकोप गौरी देवस्य पितुर्वैरमनुस्मरन्* ॥ १ ।
चिन्तयामास देवस्य अनेनापहृतं पुरम् ।
यज्ञो विधिध्वंसितो यस्मात्तस्माद्देहं त्यजाम्यहम् ॥ २ ।
आराध्य तपसा तस्य गृहे भूत्वा व्रजाम्यहम् ।
कथं गच्छामि पितरं दृष्टं क्षयितबान्धवम् ॥ ३ ।
भवपत्नी च दुहिता एवं सञ्चिन्त्य सुन्दरी ।
जगाम तपसे देवी हिमवन्तं महागिरिम् ॥ ४ ।
तत्र कालेन महता क्षपयन्ती कलेवरम् ।
स्वशरीराग्निना दग्ध्वा ततः शैलसुताभवत् ।
उमा नामेति महती कृष्णा चेत्यभिधानतः ॥ ५ ।
लब्ध्वा तु शोभनां मूर्त्तिं हिमवन्तगृहे शुभाम् ।
पुनस्तपश्चकारोग्रं देवं स्मृत्वा त्रिलोचनम् ॥ ६ ।
असावेव पतिर्मह्यमित्युक्त्वा तपसि स्थिता ॥ ७ ।
कुर्वन्त्या तत्तपश्चोग्रं हिमवन्ते महागिरौ ।
कालेन महता देवस्तपसाराधितस्तया ।
आजगामाश्रमन्तस्या विप्रो भूत्वा महेश्वरः ॥ ८ ।
वृद्धः शिथिलसर्व्वाङ्गः स्खलंश्चैव पदे पदे ।

* अनुस्मरन्तीति साधु । एवं परत्रापि ।

गच्छन्तस्याः समीपन्तु आगत्य द्विजसत्तमः।
बुभुक्षितोऽस्मि मे देहि भद्रे भोज्यं द्विजस्य तु। ९॥
एवमुक्ता तदा कन्या उमा शैलसुता शुभा।
उवाच ब्राह्मणं भोज्यं ददामि विप्र फलादिकम्।
कुरु स्नानं द्रुतं विप्र भुञ्जस्वान्नं* यदृच्छया॥ १०।
एवमुक्तस्तदा विप्रस्तस्याः पार्श्वे महानदीम्।
गङ्गां जगाम स्नानार्थं स्नानं कर्त्तुमवातरत्॥ ११।
स्नानन्तु कुर्व्वता तेन रुद्रेण द्विजरूपिणा।
भूत्वा मायामयं भीमं मकरं भयदर्शनम्।
ग्राहितस्तु तदा विप्रस्तेन दुष्टेन मद्गुना॥ १२।
दृष्ट्वा धृतमथात्मानं मकरेण बलीयसा।
हतमात्मानमन्यत्तां दर्शयन्वाक्यमब्रवीत्॥ १३।
अब्रह्मण्यङ्कृतं कन्ये त्रायस्व मामतो झषात्।
यावन्न याति विकृतिं तावन्मान्त्रातुमर्हसि॥ १४।
एवमुक्ता तदा कन्या चिन्तयामास पार्व्वती।
पितृभावेन शैलेन्द्रं भर्त्तृभावेन शङ्करम्।
स्पृशामि तपसा पूता कथं विप्रं स्पृशाम्यहम्॥ १५।
यद्येनन्नापकर्षामि करेण च जले धृतम्।
तदानीं ब्रह्मवध्या† मे भविष्यति न संशयः॥ १६।

* भुञ्जस्व इति आर्षं, भुङ्क्ष्वेति साधु।

† ब्रह्महत्येति साधु, एवं परत्रापि।

अन्यं व्यतिक्रमे धर्ममपनेतुश्च शक्यते ।
ब्रह्मवध्या पुनर्नैवमेवमुक्ता गतात्वरत्* ॥ १७ ।
सा गत्वा त्वरितं भीरुर्गृहीत्वा पाणिना द्विजम् ।
चकर्णान्तर्जलात्तावत्स्वयम्भूतपतिर्हरः ॥ १८ ।
यमाराध्य तपश्चर्तुमारब्धं शैलपुत्रयाण्† ।
स एव भगवान्रुद्रस्तस्याः पार्श्ववलम्बितः ॥ १९ ।
तं दृष्ट्वा लज्जिता देवी पूर्व्वत्यागमनुस्मरन् ।
न किञ्चिदुत्तरं सुभ्रूर्वदति स्म सुलज्जया ॥ २० ।
तूष्णीम्भूतान्तु तां दृष्ट्वा गौरीं रुद्रो हसन्निव ।
पाणौ गृहीत्वा मां भद्रे कथन्त्यक्तुमिहार्हसि ॥ २१ ।
मत्पाणि‡ग्रहणं भद्रे वृथा यदि करिष्यसि ।
तदानीं ब्रह्मणः पुत्रामाहारार्थं ब्रवीम्यहम्§ ॥ २२ ।
न भवेत्परिहासोऽयमुक्तं देवी परम्परा ।
लज्जमाना तदा वाक्यं वदति स्मितपूर्व्वकम् ॥ २३ ।
देवदेव त्रिलोकेश त्वदर्थोऽयं समुद्यमः ।
प्राग्जन्माराधितो भर्त्ता भवान्देवो महेश्वरः ॥ २४ ।
इदानीं मे भवान्देवः पतिर्नान्यो भविष्यति ।
किन्तु स्वामी पिता मह्यं शैलेन्द्रो मे व्रजामि तम् ॥ २५ ।

* अत्वरदिति आर्षं, अत्वरतेति साधु ।

† पुत्रयेति आर्षं, पुत्र्येति साधु ।

‡ त्वत्पाणीति (ग) ।

§ तदानीं ब्रह्मणः पुत्रीं त्वां भार्य्यार्थे ब्रवीम्यहमिति क्वचित्पाठः ।

अनुज्ञाप्य विधानेन ततः पाणिङ्ग्रहीष्यसि* ॥ २६ ।
एवमुक्ता† तदा देवी पितरं प्रति भामिनी ।
कृताञ्जलिपुटा भूत्वा हिमवन्तमुवाच ह ॥ २७ ।
इतोऽन्यजन्मभर्त्ता मे रुद्रो दक्षमखान्तकः ।
इदानीं तपसा सैव ज्ञातोऽभूद्गतिभावनः ॥ २८ ।
स च विप्रपतिर्भूत्वा ब्राह्मणो मे तपोवनम् ।
आगत्य भोजनार्थं मां याचयामास शङ्करः ॥ २९ ।
मया स्नातुं व्रजस्वेति चोदितो जाह्नवीं गतः ।
तत्रासौ द्रवभावेन द्विजरूपेण शङ्करः ।
मकरेण धृतः पूर्व्वमब्रह्मण्यमुवाच ह ॥ ३० ।
ब्रह्महत्याभयात्तात मया पाणौ धृतस्ततः ।
धृतमात्रः स्वकं देहं दर्शयामास शङ्करः ॥ ३१ ।
ततो मामब्रवीद्देवः पाणिग्रहणमागतम् ।
भविता देवि‡ मा किञ्चिद्विचारय तपोधने ॥ ३२ ।
एवमुक्ता त्वहं तेन शङ्करेण महात्मना ।
तदनुज्ञाप्य देवेशं भवन्तं प्रष्टुमागता ॥ ३३ ।
इदानीं यत्क्षमं§ कार्य्यं तच्छीघ्रं संविधीयताम् ॥ ३४ ।
एवं श्रुत्वा तदा वाक्यं शैलराजो मुदा युतः ।

* एष श्लोकः (ग) पुस्तके नास्ति ।

† ज्ञात्वेति (ग) ।

‡ भवती देवीति (ख) ।

§ यत्कर्म्मेति (ग) ।

ऊचे दुहितरं कन्यां* तस्मिन्काले वरानन: ॥ ३५ ।
पुत्रि धन्योऽस्म्यहं लोके यस्य रुद्र: स्वयं हर: ।
जामाता भविता देवस्त्वयाऽपत्यवदस्म्यहम्† ॥ ३६ ।
स्थापितो मूर्द्धि देवानामपि पुत्रि त्वया ह्यहम् ।
स्थीयतां क्षणमेकन्तु यावदागमनं मम ॥ ३७ ।
एवमुक्त्वा गतो राजा शैलानां ब्रह्मणोऽन्तिकम् ।
तत्र दृष्ट्वा महात्मानं सर्व्वदेवपितामहम् ॥
उवाच प्रणतो भूत्वा ब्रह्माणं शैलराट् तत:‡ ।
देवीमा दुहिता मह्यं§ तां रुद्राय ददाम्यहम्¶ ॥ ३८।३९ ।
प्रयच्छेत्योवाच देवानां तदा लोकपितामह: । ४० ।
एवमुक्त: शैलराज: स्ववेश्मागम्य सत्वरम् ।
तुम्बुरुर्नारदश्चैव हाहां हूहूस्तथैव च ।
स गत्वा किन्नरांश्चैव असुरान्राक्षसानपि‖ ॥ ४१ ।
पर्व्वता: सरित: शैला वृक्षा ओषधयस्तथा ।
आगता मूर्त्तिमन्तो वै पर्व्वता: सङ्गमोपला: ।

---

* उवाच दुहितां कन्यामिति (क), तत्र दुहितामिति चार्षं दुहितरमिति साधु । एवं सर्व्वत्र ।

† अपत्यवानिति साधु ।

‡ शैलराट् तथेति (ग) ।

§ मह्यमित्यत्र षष्ठीस्थाने चतुर्थी (आर्षमिदम्) ।

¶ देवीमा दुहिता मह्यमुद्दिवचति तां शुभामिति (ग) ।

‖ क्षमापिकाक्रिया नास्ति । तथा परत्रापि (४२) श्लोके ।

हिमवद्दुहितान्द्रष्टुं विवाहं शङ्करेण ह ॥ ४२ ।
तत्र वेदी क्षितिश्चासीत्कलशाः सप्त सागराः ।
सूर्य्यो दीपस्तथा सोमः सरितो ववहुर्जलम्* ॥ ४३ ।
एवं विवाहसामग्रीं ज्ञात्वा शैलनराधिपः ।
प्रेषयामास रुद्राय समीपं मन्दरं गिरिम् ॥ ४४ ।
स तदा शङ्करोक्तस्तु मन्दरो द्रुतमाययौ ।
विधिना सोमयां† पाणिं जग्राह परमेश्वरः ॥ ४५ ।
तत्रोत्सवे पर्व्वतनारदौ द्वौ
जगुश्च सिद्धा ननृतुर्वनस्पताः‡ ।
पुष्पाण्यनेकानि विचिक्षिपुः शुभा-
ननृतुश्चैः सुरयोषितो भृशम् ॥ ४६ ।
तस्मिन्विवाहे सलिलप्रवाहे
चतुर्मुखो लोकपरस्वसंस्थः ।
उवाच कन्यां तव पुत्रि लोके
नारी प्रभर्त्री तव चान्यपुंसाम् ॥ ४७ ।
इत्येवमुक्त्वा स उमां सरुद्रां
पितामहः स्वं पुरमाजगाम ॥ ४८ ।
स बभूव यथा प्रोक्तं प्रजापालाय पृच्छते ।

* ववहुरिति आर्षं, जहुरिति साधु । सरितो वै वहञ्जलमिति (ग), तत्राप्यवह-न्निति साधु ।

† स उमयेति साधु ।

‡ वनस्पता इति आर्षं, वनस्पतय इति साधु ।

ऋषिणा महता पूर्व्वं तपसा भावितात्मना ॥ ४९ ।
गौर्य्या उत्पत्तिरेषा वै कथिता परमर्षिणा ।
विवाहश्च यथा वृत्तस्तत्सर्व्वं कथितन्तव ॥ ५० ।
एतत्सर्व्वन्तु गौर्य्या वै सम्पन्नन्तु तृतीयया ।
तस्यान्तिथौ तृतीयायां लवणं वर्ज्जयेत्सदा ॥ ५१ ।
यश्चोपोष्यति* नारी वा सा सौभाग्यन्तु विन्दति ॥ ५२
दुर्भगा या तु नारी स्यात्पुरुषश्चातिदुर्भगः ।
एतच्छ्रुत्वा तृतीयायां लवणन्तु विवर्ज्जयेत् ॥ ५३ ।
सर्व्वकामानवाप्नोति सौभाग्यं द्रव्यसम्पदः ।
आरोग्यञ्च सदा लोके कान्तिं पुष्टिञ्च विन्दति ॥ ५४ ।

इति वराहपुराणे गौर्य्युत्पत्तौ नाम द्वाविंशोऽध्यायः ।

## त्रयोविंशोऽध्यायः ।

प्रजापाल उवाच ।

कथं गणपतेर्जन्म मूर्त्तिमन्तश्च सत्तम ।
एतन्मे संशयञ्छिन्धि हृदि कष्टं व्यवस्थितम् ॥ १ ।

* उपोष्यतीति आर्षं, उपवत्स्यतीति साधु ।

महातपा उवाच ।

पूर्व्वं देवगणाः सर्व्वे ऋषयश्च तपोधनाः ।
कार्य्यारम्भं तथा चक्रुः सिध्यते च न संशयः ॥ २ ।
सन्मार्गवर्त्तिषु तथा सिध्यन्ते विघ्नतः क्रियाः* ।
असत्कारिषु सर्व्वेषु तद्वदेवमविघ्नतः ॥ ३ ।
ततो देवाः सपितरश्चिन्तयामासुरोजसः ।
असत्कार्य्येषु विघ्नार्थं सर्व्व एवाभ्यमन्त्रयन् ॥ ४ ।
ततस्तेषां तदा मन्त्रं कुर्व्वतां त्रिदिवौकसाम् ।
बभूव बुद्धिर्गमने रुद्रं प्रति महामतिम् ॥ ५ ।
ते तत्र रुद्रमामन्त्र्य कैलासनिलयं गुरुम् ।
ऊचुः सविनयं सर्व्वे प्रणिपातपुरःसरम् ॥ ६ ।

देवा ऊचुः ।

देवदेव महादेव शूलपाणे त्रिलोचन ।
विघ्नार्थमविशिष्टानामुत्पादयितुमर्हसि ॥ ७ ।
एवमुक्तस्तदा देवैर्भवः परमया मुदा ।
उमां निरीक्षयामास चक्षुषा निमिषेण ह ॥ ८ ।
देवानां सन्निधौ तस्य पश्यतोमां† महात्मनः ।
चिन्ताभूद्व्योम्नि मूर्त्तिर्नो दृश्यते केन हेतुना ॥ ९ ।
पृथिव्यां विद्यते मूर्त्तिरपां मूर्त्तिस्तथैव च ।
तेजसः श्वसनस्यापि मूर्त्तिरेषा तु दृश्यते ॥ १० ।

* 'ख'पुस्तकेऽतःपरं पादचतुष्टयं नास्ति ।

† पश्यतोमामिति आर्षं, पश्यत उमामिति साधु ।

आकाशस्य कथं नेति मत्वा देवो जहास च ।
ज्ञानशक्तिः पुमान्दृष्ट्वा यदृष्टं व्योम्नि शम्भुना ॥ ११ ।
यथोक्तं ब्रह्मणा पूर्व्वं शरीरन्तु शरीरिणाम् ।
यथापि हसितस्तेन देवेन परमेष्ठिना ॥
एतत्कार्य्यं चतुष्केण पृथिव्यादिचतुर्ष्वपि ।
मूर्त्तिमानतितेजस्वी हसतः परमेष्ठिनः ॥
प्रदीप्तास्यो महादीप्तः कुमारो भासयन्दिशः ।
परमेष्ठिगुणैर्युक्तः साक्षाद्रुद्र इवापरः ॥
उत्पन्नमात्रो देवानां व्युषितः संप्रमोहयन् ।
कान्त्या दीप्त्या तथा मूर्त्त्या रूपेण च महात्मवान् ॥१२-१५।
तं दृष्ट्वा परमं रूपं कुमारस्य महात्मनः ।
उमाऽनिमिषनेत्राभ्यां तमपश्यत* भामिनी ॥ १६ ।
तं दृष्ट्वा कुपितो देवः स्त्रीभावञ्चञ्चलं तथा ।
मत्वा कुमाररूपन्तु शोभनं मोहनं दृशाम् ॥ १७ ।
ततः शशाप तन्देवो गणेशम्परमेश्वरः ।
कुमार गजवक्त्रस्त्वं प्रलम्बजठरस्तथा ।
भविष्यसि तथा सर्पै†रुपवीतगतिर्ध्रुवम् ॥ १८ ।
एवं शशाप तन्देवस्तीव्रकोपसमन्वितः ।
धुन्वन् शरीरमुत्थाय ततो देवो रुषान्वितः ॥ १९ ।
यथा यथासौ स्वशरीरमाध-

* अपश्यत इति आर्षं, अपश्यदिति साधु ।

† सर्वैरिति (क), (ख) ।

स्तुनोति देवस्त्रिगिरिस्त्वामपाणिः।
तथा तथा चाम्बुरुहासनाद्ये
जलं क्षितौ संन्यपतत्तथाब्धे॥
विनायकानेकविधा* गजास्या-
स्तमालनीलाञ्जनसन्निकाशाः।
उत्तस्थुरुच्चैर्विविधास्त्रहस्ता-
स्ततस्तु देवी मनसाकुलेन॥२०।२१।
किमेतदित्यद्भुतकर्मकारी
स्रेकः करोत्यप्रतिमं महच्च।
कार्य्यं सुराणां कतमेतदिष्टं
भवेद्यथैनं चरितः कुतस्तत्॥२२।
दिवौकसश्चिन्तयतां तथा तु
विनायकैः क्ष्मा क्षुभिता बभूव।
चतुर्मुखश्चाप्रतिमं† विमान-
मारुह्य खे वाक्यमिदं जगाद॥२३।
धन्याः स्थ देवाः सुरनायकेन
त्रिलोचनेनाद्भुतरूपिणा च।
अनुगृहीताः परमेश्वरेण
सुरद्विषां विघ्नकृतान्नतौ च॥२४।
इत्येवमुक्त्वा प्रपितामहस्ता-

* विनायका अनेकविधा इति साधु।

† चतुर्मुखश्चाऽप्रतिम इति (ख)।

नुवाच देवस्त्रिशिखाख्यपाणिम् ।
यस्ते विभो वक्त्रसमुद्भवः प्रभु-
र्विनायकानां भव* सर्व्वमेऽनुगाः ॥ २५ ॥
भवन्तथास्याभवरेण चाम्बरे
त्वया चतुर्व्वसु शरीरचारी ।
आकाशमेतद्बहुधा व्यवस्थितं
त्वया चैको वदतान्तेऽपयाताः† ॥ २६ ॥
प्रभुर्भव त्वं प्रतिमास्त्रपाणिना
इमानि चास्त्रेषु वरांश्च देहि ।
इत्येवमुक्त्वा विगते पितामहे
त्रिलोचनश्चाभभवं जगाद ॥ २७ ॥
विनायको विघ्नकरो गजास्यो
गणेशनामा च भवस्य पुत्रः ।
एते च सर्व्वे त्वपयान्तु भृत्या-
विनायकाः क्रूरदृशः प्रचण्डाः ॥ २८ ॥
उच्छुष्मदानादिविहद्धदेहाः
कार्य्येषु सिद्धिं प्रतिपादयन्तः ।
भवांश्च देवेषु तथा मखेषु
कार्य्येषु चान्येषु महानुभावान् ॥ २९ ॥
अग्रेषु पूजां लभतेऽन्यथा च

* भवेत्यार्षं, भवत्विति साधु ।

† प्रयता इति (ग) ।

विनाशयिष्यस्यथ कार्य्यसिद्धिम् ।
इत्येवमुक्त्वा परमेश्वरेण
सुरैः समं काञ्चनकुम्भसंस्थैः ॥ ३० ।
जलैस्तथासावभिषिक्तगात्रो
रराज राजेन्द्र*विनायकानाम् ॥ ३१ ।
दृष्ट्वाभिषिच्यमानन्तु देवास्तङ्गणनायकम् ।
तुष्टुवुः प्रयताः सर्व्वे त्रिशूलास्तस्य सन्निधौ ॥ ३२ ।
देवा ऊचुः ।
नमस्ते गजवक्त्राय नमस्ते गणनायक ।
विनायक नमस्तेऽस्तु नमस्ते चण्डविक्रम ॥ ३३ ।
नमोऽस्तु ते विघ्नकर्त्रे नमस्ते सर्पमेखल ।
नमस्ते रुद्रवक्त्रोत्थप्रलम्बजठराश्रित ।
सर्व्वदेवनमस्कारादविघ्नं कुरु सर्व्वदा ॥ ३४ ।
एवं स्तुतस्तदा देवैर्महात्मा गणनायकः ।
अभिषिक्तस्तु रुद्रेण सोमायाः†ऽपत्यताङ्गतः ॥ ३५ ।
एतच्चतुर्थ्यां सम्पन्नं गणाध्यक्षस्य पार्थिवः ।
यतस्ततोऽयं‡ महती तिथीनां परमा तिथिः ॥ ३६ ।
एतस्यां यस्तिलान् भुक्त्वा भक्त्या गणपतिन्नृप ।
आराधयति तस्याशु तुष्यते नात्र संशयः ॥ ३७ ।

---

* राजेन्द्रोविनायकानामिति साधु ।

† स उमाया इति साधु ।

‡ तत इयमिति साधु ।

यश्चैतत्पठते स्तोत्रं यश्चैतच्छृणुयात्सदा ।
न तस्य विघ्ना जायन्ते न पापं सर्वथा नृप ॥ ३८

इति वराहपुराणे विनायकोत्पत्तिर्नाम त्रयोविंशोऽध्यायः ।



## चतुर्विंशोऽध्यायः ।

धरण्युवाच ।

कथन्ते गात्रसंस्पर्शान्मूर्त्तिमन्तो महाकलाः ।
नागा बभूवुर्देवस्य कारणन्ते महीधर ॥ १ ।

वराह उवाच ।

श्रुत्वा गणपतेर्जन्म प्रजापालो नराधिपः ।
उवाच श्लक्ष्णया वाचा तं मुनिं शंसितव्रतम् ॥ २ ।

प्रजापाल उवाच ।

भगवंस्तार्क्ष्यविषयाः कथं मूर्त्तिमुपागताः ।
नागा बभूवुः कुटिला एतदाख्यातुमर्हसि ॥ ३ ।

महातपा उवाच ।

सृजता ब्रह्मणा सृष्टिं मरीचिसूतिकारणम् ।
प्रथमं मनसा ध्यातस्तस्य पुत्त्रस्तु कश्यपः ॥ ४ ।

तस्य दाक्षायणी भार्य्या कद्रुर्नाम शुचिस्मिता ।
मारीचो जनयामास तस्यां पुत्रान्महाबलान् ॥ ५ ।
अनन्तं वासुकिञ्चैव कम्बलञ्च महाबलम् ।
कर्कोटकञ्च राजेन्द्र पद्मञ्चान्यं सरीसृपम् ॥
महापद्मस्तथा शङ्खं कुलिकं पापराजितम् ।
एते कश्यपदायादाः प्रधानाः परिकीर्त्तिताः ॥ ६।७ ।
एतेषान्तु प्रसूत्या तु इदमापूरितं जगत् ॥ ८ ।
कुटिला हीनकर्म्माणस्तीक्ष्णास्योत्थविषोल्बणाः ।
दृष्ट्वा सन्दश्य मनुजान् भस्म कुर्य्युः क्षणाद्ध्रुवम् ॥ ९ ।
शब्दगामी यथा सर्पो मनुष्याणां नराधिप ।
अहन्यहनि जायेत क्षयः परमदारुणः ॥ १० ।
आत्मनस्तु क्षयं दृष्ट्वा प्रजाः सर्वाः समन्ततः ।
जग्मुः शरण्यं शरणं परन्तु परमेश्वरम् ॥ ११ ।
इममेवार्थमुद्दिश्य प्रजाः सर्व्वा महीपते ।
ऊचुः कमलजन्देवं पुराणं ब्रह्मसंश्रितम् ॥ १२ ।
त्राहि नस्तीक्ष्णदंष्ट्रेभ्यो भुजङ्गेभ्यो महाबल ।
अहन्यहनि ये देव पश्येयुरुरगा इमा ।
मनुष्यं मृगयूथं वा तत्सर्वं भस्मसाद्भवेत् ॥ १३ ।
त्वया सृष्टिः कृता देव लीयते सा भुजङ्गमैः ।
एतज्ज्ञात्वा तु दुर्वृत्तं तत्कुरुष्व महामते ॥ १४ ।

ब्रह्मोवाच ।

अहं रक्षां विधास्यामि भवतीनां न संशयः ।

व्रजध्वं स्वानि धिष्ण्यानि प्रजापाला: ससाध्वसा:* ॥ १५
एवमुक्ताव्रजंस्तेन ब्रह्मणाव्यक्तमूर्त्तिना ।
आगतास्तु प्रजास्ताश्चस्तानाहूय भुजङ्गमान् ।
शशाम† परमक्रुद्धो वासुकिप्रमुखांस्तथा ॥ १६ ।
ब्रह्मोवाच ।
यतो मत्प्रभवान्नित्यं क्षयं नयत मानुषान् ।
भवान्तरे ह्यथान्यस्मिन्मातुः शापात्सुदारुणात् ।
भवितातिक्षयो घोरो नूनं स्वायम्भुवेऽन्तरे‡ ॥ १७ ।
एवमुक्तास्तु वेपन्तो ब्रह्मणो भुजगोत्तमा: ।
निपत्य पादयोस्तस्य इदमूचुर्वचस्तदा ॥ १८ ।
नागा ऊचुः ।
भगवन्कुटिला जातिरस्माकं भवता कृता ।
विषोल्वणत्वं क्रूरत्वं दृक्शस्त्रत्वञ्च नो त्वया ।
सम्पादितं त्वया देव इदानीं शमयाच्युत ॥ १९ ।
ब्रह्मोवाच ।
यदि नाम मया सृष्टा भवन्तः कुटिलाशया: ।
ततः किं मनुजान्नित्यं भक्षयध्वं गतव्यथा: ॥ २० ।
नागा ऊचुः ।
मर्य्यादां कुरु देवेश स्थानञ्चैव पृथक् पृथक् ॥ २१ ।

* ससाध्वसा इति (ग) ।

† शमयामास इति साधु ।

‡ तस्य इदमूचुर्वचस्तदेति (ग), तत्र १८शः श्लोको नास्ति ।

नागानां वचनं श्रुत्वा देवी वचनमब्रवीत् ।
समयं करोमि वो नागाः समयं मनुजैः सह ॥ २२ ।
तदेकमनसः सर्व्वे शृणुध्वं मम शासनम् ॥ २३ ।
पातालं वितलञ्चैव सुतलाख्यं तृतीयकम् ।
दत्तं वै वसुकामानां गृहं तत्र गमिष्यथ ॥ २४ ।
तत्र भोगान्बहुविधान्भुञ्जाना मम शासनात् ।
तिष्ठध्वं सप्तमं यावद्वापरान्तं ते पुनः पुनः* ॥ २५ ।
ततो वैवस्वतस्यादौ काश्यपेया भविष्यथ ।
दायादाः सर्व्वदेवानां सुपर्णस्य च धीमतः† ॥ २६ ।
तदा प्रसूतिर्वः सर्व्वा भोक्ष्यते चित्रभानुना ।
भवतान्नैव दोषोऽयं भविष्यति न संशयः ॥ २७ ।

ये वै क्रूरा भोगिनो दुर्विनीता-
स्तेषामन्तो भविता नान्यथैतत् ।
कालप्राप्तं भक्षयध्वं दशध्वं
तथाऽपकारे च कृते मनुष्यान् ॥ २८ ।
मन्त्रौषधैर्गारुडमण्डलैश्च
बद्धैर्दृष्टैर्मानवा ये चरन्ति ।
तेषां भीतैर्वर्त्तितव्यं न चान्य-

---

* २४, २५ श्लोकौ (ग) पुस्तके न स्तः ।

† श्लोकोऽयं (ग) पुस्तके एवं पठितः—
दत्तं तत्ते पुनस्तत्र आदौ वैवस्वतान्यथा ।
आयाताः सर्व्वदेवानां सुपर्णस्य च धीमतः ॥ इति

विषं वार्यवाच्यथा यो विनाशः ॥ २९ ।
इतीरिते ब्रह्मणि ते भुजङ्गा-
जग्मुः स्थानं पातालाख्यं हि सर्वे ॥ ३० ।
एवं शापन्ते तु लब्ध्वा प्रसादञ्च चतुर्मुखात् ।
तस्थुः पातालनिलये मुदितेनान्तरात्मना ॥ ३१ ।
एतत्सर्व्वञ्च पञ्चम्यां तेषाञ्जातं महात्मनाम् ।
अतः प्रियं* तिथिर्धन्या सर्व्वपापहरा शुभा ॥ ३२ ।
एतस्यां संयतो यस्तु अम्लन्तु† परिवर्ज्जयेत् ।
क्षीरेण स्नापयेन्नागांस्तस्य यास्यन्ति मित्रताम् ॥ ३३

इति वराहपुराणे नागोत्पत्तिर्नाम चतुर्विंशोऽध्यायः ।



## पञ्चविंशोऽध्यायः ।

प्रजापाल उवाच ।

अहङ्कारात्कथं जज्ञे कार्त्तिकेयो द्विजोत्तम ।
एतन्मे संशयञ्छिन्धि पृच्छतो वै महामुने ॥ १ ।

* अन्तरिक्षमिति (ग) ।

† अल्पमिति (ग) ।

महातपा उवाच ।

सर्व्वेषामेव तत्त्वानां यः परः पुरुषः स्मृतः ।
तस्मादव्यक्तमुत्पन्नं तत्त्वादि त्रिविधन्तु तत् ॥ २ ।
पुरुषाव्यक्तयोर्मध्ये महत्त्वं समपद्यत ।
सचाहङ्कार इत्युक्तो यो महान्समुदाहृतः ॥ ३ ।
पुरुषो विष्णुरित्युक्तः शिवो वा नामतः स्मृतः ।
अव्यक्तन्तु उमा देवी श्रीर्वा पद्मनिभेक्षणा ॥ ४ ।
तत्संयोगादहङ्कारः स च सेनापतिर्गुहः ।
तस्योत्पत्तिम्प्रवक्ष्यामि शृणु राजन्महामते ॥ ५ ।
आद्यो नारायणो देवस्तस्माद्ब्रह्मा ततोऽभवत् ।
अतः स्वयम्भुवश्चान्ये मरीच्याद्यार्कसम्भवाः ॥ ६ ।
तेष्वारभ्य सुरा दैत्या गन्धर्व्वा मानुषाः खगाः ।
पशवः सर्व्वभूतानि सृष्टिरेषा प्रकीर्त्तिता ॥ ७ ।
सृष्ट्यां विस्तारितायान्तु देवदैत्या महाबलाः ।
सात्वतं भावमास्थाय युयुधुर्विजिगीषवः ॥ ८ ।
दैत्यानाम्बलिनः सन्ति नायका युद्धदुर्मदाः ।
हिरण्यकशिपुः पूर्व्वं हिरण्याक्षो महासुरः ॥
विप्रचित्तिर्विचित्रस्तु भीमाक्षः क्रौञ्च एव च ।
एतेऽतिबलिनः शूरा देवसैन्यं महामृधे ।
अमरांश्चाशितैर्वाणैर्जयन्ते*ऽनुदिनं मृधे ॥ ९।१० ।
तेषां पराजयं दृष्ट्वा देवानाञ्च बृहस्पतिः ।

* जयन्ते इति आर्षं, जयन्तीति साधु ।

जयाय हीनं वै सैन्यं* नायकेन विना सुराः ॥ ११ ॥
एकेनेन्द्रेण हि यत्तु सैन्यं त्रातुं न शक्यते ।
अतः सेनापतिं कञ्चिदन्वेषयत मा चिरम् ॥ १२ ॥
एवमुक्तास्ततो देवा जग्मुर्लोकपितामहम् ।
सेनापतिञ्च नो देहि वाक्यमूचुः ससम्भ्रमम् ॥ १३ ॥
ततो दध्यौ चतुर्वक्त्रः किमेषां क्रियते मया ।
ब्रह्मणश्चिन्त्यमानस्य रुद्रम्प्रति मनो गतम् ॥ १४ ॥
ततो देवाः सगन्धर्वा ऋषयः सिद्धचारणाः ।
ब्रह्माणं पुरतः कृत्वा जग्मुः कैलासपर्व्वतम् ॥ १५ ॥
तत्र दृष्ट्वा महादेवं शिवं पशुपतिं विभुम् ।
तुष्टुवुर्विविधैः स्तोत्रैः शक्राद्यास्त्रिदिवौकसः ॥ १६ ॥

देवा ऊचुः ।

नमाम† सर्व्वे शरणार्थिनो वयं
महेश्वरन्त्र्यम्बकभूतभावनम् ।
उमापते विश्वपते मरुत्पते
जगत्पते शङ्कर पाहि नः स्वयम् ॥ १७ ॥
जटाकलापाग्रशशाङ्कदीधिति-
प्रकाशिताशेषजगत्त्रयामल ।
त्रिशूलपाणे पुरुषोत्तमाच्युत

* (ग) पुस्तके एतेऽतिबलिनः शूरा इत्यतः परं हीनं वै सैन्यमित्यवधिकाः नास्ति । तत्र १२श श्लोकस्य परार्द्धं, १३श श्लोकस्य पूर्व्वार्द्धञ्च नास्ति ।

† नमामः सर्व्वे इति साधु ।

प्रपाहि नो दैत्यभयादुपस्थितात् ॥ १८ ।
त्वमादिदेवः पुरुषोत्तमो हरि-
र्भवो महेशस्त्रिपुरान्तको विभुः ।
भगाक्षहा दैत्यरिपुः पुरातनो
वृषध्वजः पाहि सुरोत्तमोत्तम* ॥ १९ ।
गिरीशजानाथ गिरिप्रियाप्रिय
प्रभुः समस्तामरलोकपूजितः ।
गणेश भूतेश शिवाक्षयाय
प्रपाहि नो दैत्यवरान्तकाच्युत ॥ २० ।
पृथ्व्यादितत्त्वेषु भवान्प्रतिष्ठितो
ध्वनिस्वरूपो गगने विशेषतः ।
लीनो द्विधा तेजसि स त्रिधा जले
चतुः क्षितौ पञ्च गुणप्रधानः ॥ २१ ।
अग्निस्वरूपोऽसि तरौ तथोपले
सत्यस्वरूपोऽसि तथानिलेष्वपि ।
तैलस्वरूपो भगवान्महेश्वरः
प्रपाहि नो दैत्यगणार्दितान्हर ॥ २२ ।
नासीद्यदा काण्डमिदन्त्रिलोचन
प्रभाकरेन्द्रेन्दुविनापि वा कुतः ।
तदा† भवानेव विरूपलोचन

* १९श श्लोकस्य परार्द्धं (ग) पुस्तके नास्ति, २०श श्लोकस्य प्रथमपादश्च ।
† सदेति (ग) ।

प्रमाणबाधादि*विवर्ज्जितः स्थितः ॥ २३ ।
कपालमालिन् शशिखण्डशेखर
श्मशानवासिन्सितभस्मगुण्ठितः ।
फणीन्द्रसंवीततनोऽन्तकाय
प्रपाहि नो दग्धधिया सुरेश्वर ॥ २४ ।
भवान्पुमान् शक्तिरियं गिरेः सुता-
सर्व्वाङ्गरूपा भगवंस्तथा त्वयि ।
त्रिशूलरूपेण जगद्भयङ्करे
स्थितं त्रिनेत्रेषु मखाग्नयस्त्रयः ॥ २५ ।
जटास्वरूपेण समस्तसागराः
कुलाचलाः सिन्धुवहाश्च सर्व्वशः ।
शरीरजं ज्ञानमिदन्त्ववस्थित-
न्तदेव पश्यन्ति कुदृष्टयो जनाः ॥ २६ ।
नारायणस्त्वं जगतां समुद्भव-
स्तथा भवानेव चतुर्मुखो महान् ।
सत्त्वादिभेदेन तथाग्निभेदतो
युगादिभेदेन च संस्थितस्त्रिधा ॥ २७ ।
भवन्तमेते सुरनायकाः प्रभो
भवार्थिनोऽन्यस्य वदन्ति तोषयन् ।
यतस्ततो नो भवभूतिभूषण
प्रपाहि विश्वेश्वर रुद्र ते नमः ॥ २८ ।

* वाय्वादीनि (ग) ।

महातपा उवाच ।

एवं स्तुतस्तदा देवो रुद्रः पशुपतिः सुरैः ।
उवाच देवानव्यग्रः किं कार्य्यं ब्रूत मा चिरम् ॥ २९ ।

देवा ऊचुः ।

सेनापतिञ्च देवेश देहि दैत्यवधाय वै ।
देवानां ब्रह्ममुख्यानामेतदेव हितम्भवेत् ॥ ३० ।

रुद्र उवाच ।

ददामि सेनानाथं वो देवा भवत विज्वराः ।
भविष्यमस्ति पौराणां योगादीनामचिन्तयत् ॥ ३१ ।
एवमुक्त्वा हरो देवान्विसर्ज्ज्य* स्वाङ्गसंस्थिताम् ।
शक्तिं सङ्क्षोभयामास पुत्रहेतोः परन्तप ॥ ३२ ।
तस्य क्षोभयतः शक्तिं ज्वलनार्कसमप्रभः ।
कुमारः सहजां शक्तिं बिभ्रच्छानैकशाखिनीम् ॥ ३३ ।
उत्पत्तिस्तस्य राजेन्द्र बहुरूपा व्यवस्थिता ।
मन्वन्तरेष्वनेकेषु देवसेनापतिः किल ॥ ३४ ।
योऽसौ शरीरगो देवः अहङ्कारेति† कीर्त्तितः ।
प्रयोजनवशाद्देवः सैव‡ सेनापतिर्बभौ ॥ ३५ ।
तस्मिन्जाते स्वयं ब्रह्मा सर्व्वदेवैः समन्वितः ।

* विसर्ज्ज्येति आर्षं, विसृज्येति साधु ।

† अहङ्कार इति साधु ।

‡ स एवेति साधु ।

पूजयामास देवेशं शिवं पशुपतिस्तदा* ॥ ३६ ।

सर्व्वैश्च देवैर्ऋषिभिश्च सिद्धैः
सेनापतिर्दानवरेण तेन ।
आप्यायितः सोऽपि सुरानुवाच
सहायौ मे क्रीड़नकञ्च दध्वम् ॥ ३७ ।
श्रुत्वा वचस्तस्य महानुभावो
वाक्यं महादेव इदं जगाद ।
ददामि ते क्रीड़नकन्तु कुक्कुटं
तथानुगौ शाखविशाखसंज्ञौ ॥
कुमार भूतग्रहनायको भवान्
भवस्व देवेश्वर सेनायाः पतिः ॥ ३८ ।

एवमुक्ता ततो देवः सर्व्वदेवाश्च पार्थिव ।
तुष्टुवुर्वाग्भिरिष्टाभिः स्कन्दं सेनापतिस्तदा ॥ ३९ ।

देवा ऊचुः ।

भवस्व† देवसेनानीर्महेश्वरसुत प्रभो ।
षण्मुख स्कन्द विश्वेश कुक्कुटध्वज पावके ॥ ४० ।
कम्पितारे कुमारेश स्कन्द बालग्रहानुग ।
जितारे क्रौञ्चविध्वंस कृत्तिकाज शिवात्मज ॥ ४१ ।
भूतग्रहपतिश्रेष्ठ पावकप्रियदर्शन ।
महाभूतपतेः पुत्र त्रिलोचन नमोऽस्तु ते ॥ ४२ ।

---

* एतदर्द्धं (ग) पुस्तके नास्ति ।

† भवस्वेति आर्षं, भव इति साधु ।

एवं स्तुतस्तदा देवैर्विवर्द्धन्* भवनन्दनः ।
द्वादशादित्यसङ्काशो बभूवातुलविक्रमः ॥ ४३ ।
त्रैलोक्यन्तेजसा स्वेन तपयामास† पार्थिव ॥ ४४ ।

प्रजापाल उवाच ।

कथं त्वं कृत्तिकापुत्रमुक्तवान् शंस मे गुरो ।
कथं वा पावकिरसौ कथं षण्मातृनन्दनः ॥ ४५ ।‡

महातपा उवाच ।

आदिमन्वन्तरे देवस्योत्पत्तिर्या मयोदिता ।
परोक्षदर्शिभिर्देवैरेवमेव स्तुतः प्रभो ॥ ४६ ।
कृत्तिका पावकस्तस्य मातरौ गिरिजा तथा ।
द्वितीयजन्मनि गुहस्यैते उत्पत्तिहेतवः ॥ ४७ ।
एवमेतत्तवाख्यातं पृच्छतो पार्थिवोत्तम ।
आत्मविद्यामृतं गुह्यमहङ्कारस्य सम्भवः ॥ ४८ ।
स्वयं स्कन्दो महादेवः सर्व्वपापप्रणाशनः ।
तस्य षष्ठीं तिथिं प्रादादभिषेके पितामहः ॥ ४९ ।
अस्यां फलाशनो यस्तु पूजे§न्नियतमानसः ।

* विवर्द्धन्निति आर्षं, विवर्द्धमान इति साधु ।

† तापयामासेति साधु ।

‡ एष श्लोकः (ख) (ग) पुस्तकयोर्नास्ति ।

§ पूजयेदिति साधु ।

अपुत्रो लभते पुत्रमधनोऽपि* धनं लभेत्† ॥ ५० ।
यं यमिच्छेत‡ मनसा तत्तं लभति मानवः ॥ ५१ ।
यश्चैतत्पठति स्तोत्रं कार्त्तिकेयस्य मानवः ।
तस्य गेहे कुमाराणां क्षेमारोग्यं भविष्यति ॥ ५२ ।

इति वराहपुराणे स्कन्दोत्पत्तिर्नाम पञ्चविंशोऽध्यायः ।



## षड्विंशोऽध्यायः ।

प्रजापाल उवाच ।

शरीरस्य कथं मूर्त्तिग्रहणं ज्योतिषो द्विज ।
एतन्मे संशयं छिन्धि प्रणतस्य द्विजोत्तम ॥ १ ।

महातपा उवाच ।

योऽसावात्मा ज्ञानशक्तिरेक एव सनातनः ।
स द्वितीयं यदा चैच्छत्तदा तेजः समुत्थितम् ॥ २ ।
तत्सूर्य्य इति भास्वांस्तु अन्योन्येन महात्मनः ।
लीनीभूतानि तेजांसि भासयन्ति जगत्त्रयम् ॥ ३ ।

* पुत्रान्निर्द्धनोऽपीति (ग) ।

† लभेतेति साधु ।

‡ इच्छेत इति आर्षं, इच्छेदिति साधु । लभतीति आर्षं लभत इति साधु अपिच सामान्यार्थे नपुंसकमिति न्यायाद्यत्तत्तदित्युचितम् ।

तस्मिन् सर्व्वे सुराः सिद्धा गणाः सर्व्वैर्महर्षिभिः ।
स्वयम्भूत इति विभो तस्मात्सूर्य्यस्तु सोऽभवत् ॥ ४ ।
लीनीभूतस्य तस्याशु तेजसोऽभूच्छरीरकम् ।
पृथक्त्वेन रविः सोऽथ कीर्त्त्यते वेदवादिभिः ॥ ५ ।
भासयेत्सर्व्वलोकांस्तु यतोऽसावुत्थितो दिवि ।
अतोऽसौ भास्करः प्रोक्तः प्रकर्षाच्च प्रभाकरः ॥ ६ ।
दिवा दिवस इत्युक्तस्तत्कारित्वाद्दिवाकरः ।
सर्व्वस्य जगतस्त्वादिरादित्यस्तेन उच्यते ॥ ७ ।
एतस्य तेजसो जाता आदित्या द्वादश पृथक् ।
प्रधान एक एवायं जगत्तु परिवर्त्तते ॥ ८ ।
तं दृष्ट्वा जगतो व्याप्तिं कुर्व्वाणं परमेश्वरम् ।
तस्यैवान्तःस्थिता देवा विनिष्क्रम्य स्तुतिं जगुः ॥ ९ ।

देवा ऊचुः ।

भवान् प्रसूतिर्जगतः पुराणः
प्रपासि विश्वं प्रलये च हंसि ।
समुत्थितस्त्वं सततं प्रपासि
विश्वं सदा त्वां प्रणताः स्म नित्यम् ॥ १० ।
त्वया ततं सर्व्वत एव तेजः
प्रतापितं सूर्य्य यस्त्वप्रवृत्तौ ।
सप्ताश्वयुक्ते च रथे स्थितस्त्वं
कालाच्चमन्वन्तरवेगयुक्ते ॥ ११ ।
प्रभाकरस्त्वं रविरादिदेवः

आत्मा समस्तस्य चराचरस्य ।
पितामहस्त्वं वरुणो यमश्च
भूतभविष्यञ्च वदन्ति सिद्धाः ॥ १२ ।
तेजोऽरिविध्वंसन वेदमूर्त्ते
प्रपाहि चास्मान् शरणागतान् सदा ।
वेदान्तवेद्योऽसि मखेषु देव
त्वं हूयसे विष्णुरिति प्रसन्न ॥ १३ ।
इति स्तुतस्तैः सुरनाथ भक्त्या
प्रपाहि शम्भो न इति प्रसह्य ॥ १४ ।
एवमुक्तस्तदा देवैः सौम्यां मूर्त्तिमथाकरोत् ।
प्रकाशत्वं जगामाशु देवतानां महाप्रभः ॥ १५ ।
एतत्सर्व्वसुराणान्तु दहनं शमितन्त्वशः ।
सप्तम्यां खलु सूर्य्येण मूर्त्तित्वं कृतवान् भुवि । १७ ।
एतां यः पुरुषो भक्त्या उपास्ते सूर्य्यमर्च्चयेत् ।
भास्करश्चैव तस्यासौ फलमिष्टं प्रयच्छति ॥ १८ ।
एतत् ते कथितं राजन् सूर्य्याख्यानं पुरातनम् ।
आदिमन्वन्तरे वृत्तं मातरः* शृणु साम्प्रतम् ॥ १९ ।

इति वराहपुराणे आदित्योत्पत्तिर्नाम षड्विंशोऽध्यायः ।

---

* मातर इति आर्षं, मातृरिति साधु ।

# सप्तविंशोऽध्यायः ।

महातपा उवाच ।

पूर्व्वमासीन्महादैत्यो बलवानन्धको भुवि ।
स देवान्वशमानिन्ये ब्रह्मणो वरदर्पितः ॥ १ ।
तेनात्मसात्सुराः कृत्वा त्याजिता मेरुपर्व्वतम् ।
ब्रह्माणं शरणं जग्मुरन्धकस्य भयार्द्दिताः ॥ २ ।
तानागतांस्तदा ब्रह्मा उवाच सुरसत्तमान् ।
किमागमनकृत्यं वो देवा ब्रूत किमास्यते ॥ ३ ।

देवा ऊचुः ।

अन्धकेनार्द्दिताः सर्वे वयं देवा जगत्पते ।
त्राहि सर्वांश्चतुर्वक्त्र पितामह नमोऽस्तु ते ॥ ४ ।

ब्रह्मोवाच ।

अन्धकान्नैव शक्तोऽहन्त्रातुं वै सुरसत्तमाः ।
भवं शर्वं महादेवं व्रजामः शरणार्थिनः ॥ ५ ।
किन्तु पूर्व्वं मया दत्तो वरस्तस्य सुरोत्तमाः ।
अवध्यस्त्वं हि भविता न शरीरं स्पृशेन्महीम्* ॥ ६ ।
तस्यैवं बलिनस्त्वेको हन्ता रुद्रः परन्तप ।
तत्र गच्छामहे सर्वे कैलासनिलयं प्रभुम् ॥ ७ ।
एवमुक्त्वा ययौ ब्रह्मा सदेवो भवसन्निधौ ।
तस्य सन्दर्शनाद्रुद्रः प्रत्युत्थानादिकाः क्रियाः ।

---

* न शरीरं स्पृशत्यहमिति (ग) ।

ज्ञात्वाभ्युवाच देवेशो प्रणतं भुवनेश्वरम् ॥ ८ ।

शम्भुरुवाच ।

किं कार्य्यन्देवताः सर्व्वा आगता मम सन्निधौ ।
येनाहं तत्करोम्याशु आज्ञा कार्य्या हि सत्वरम् ॥ ९ ।
रक्षस्व देव बलिनस्त्वन्धकाद्दुष्टचेतसः ॥ १० ।
यावद्देव सुराः सर्व्वे शंसन्ति परमेष्ठिनः ।
तावत्सैन्येन महता तत्र* चान्धक आययौ ॥ ११ ।
बलेन चतुरङ्गेण हन्तुकामो भवं मृधे ।
तस्य भार्य्यां गिरिसुतां हन्तुमिच्छं†ससाधनः ॥ १२ ।
तं दृष्ट्वा सहसायातं देवो दैत्यं प्रहारिणम् ।
सन्नह्य सहसा देवा रुद्रस्यानुचराभवन्‡ ॥ १३ ।
रुद्रोऽपि वासुकिम्ध्यात्वा तक्षकञ्च धनञ्जयम् ।
वलयं कटिसूत्रञ्च चकार परमेश्वरः ॥ १४ ।
नीलनामा तु दैत्येन्द्रो हस्ती भूत्वा भवान्तिकम् ।
आगतस्त्वरितः शत्रुर्हस्तीवाद्भुतरूपवान् ॥ १५ ।
संज्ञातो नन्दिना दैत्यो वीरभद्राय दर्शितः ।
वीरभद्रोऽपि सिंहेन रूपेणाहत्य च द्रुतम् ॥
तस्य कृत्तिं विदार्य्याशु करिणस्त्वञ्जनप्रभाम् ।
रुद्रायार्पितवान्सोऽपि तमेवाम्बरमाकरोत् ॥ १६।१७ ।

---

* तत्रैवेति (ग) ।

† इच्छदिति आर्षं, ऐच्छदिति साधु ।

‡ अनुचरा अभवन्निति साधु ।

ततः प्रभृति रुद्रोऽपि गजचर्म्मपटोऽभवत् ॥ १८ ।
गजचर्म्मपटो भूत्वा भुजङ्गाभरणोज्ज्वलः ।
आदाय त्रिशिखं शूलं सगणोऽन्धकमन्वयात् ॥ १९ ।
ततः प्रववृते युद्धं देवदानवयोर्महत् ॥ २० ।
इन्द्राद्या लोकपालास्तु स्कन्दः सेनापतिस्तथा ।
सर्व्वे देवगणाश्चान्ये युयुधुः समरे तदा ॥ २१ ।
तद्दृष्ट्वा नारदस्तूर्णं ययौ नारायणं प्रति ।
शशंस च महद्युद्धं कैलासे दानवैः सह ॥ २२ ।
तच्छ्रुत्वा चक्रमादाय गरुड़स्थो जनार्द्दनः ।
तमेव देशमागत्य युयुधे दानवैः सह ॥ २३ ।
आगत्य च ततो देवा हरिणाप्यायिता रणे ।
विषस्सवदनाः सर्व्वे पलायनपराभवन्* ॥ २४ ।
तत्र भग्नेषु देवेषु स्वयं रुद्रोऽन्धकं ययौ ।
तत्र तेन महद्युद्धमभवल्लोमहर्षणम् ॥ २५ ।
तत्र देवोऽप्यसौ दैत्यं त्रिशूलेनाहनद्भृशम् ।
तस्याहतस्य यद्रक्तमपतद्भूतले किल ।
तत्रान्धका असंख्याता बभूवुरपरे भृशम् ॥ २६ ।
तद्दृष्ट्वा महदाश्चर्य्यं रुद्रो भूत्वान्धकं मृधे ।
गृहीत्वा त्रिशिखाग्रेण ननर्त्त परमेश्वरः ॥ २७ ।
इतरेऽप्यन्धकाः सर्वे चक्रेण परमेष्ठिना ।
नारायणेन निहतास्तत्र येऽन्ये समुत्थिताः ॥ २८ ।

* पलायनपरा अभवन्निति साधु ।

असृक्धारातुषारैस्तु शूलप्रोतस्य चासकृत् ।
अनारतं समुत्तस्थौ ततो रुद्रो रुषान्वितः ॥ २९ ।
तस्य क्रोधेन महता मुखाज्ज्वाला विनिर्ययौ ।
तद्रूपधारिणी देवी या तां योगेश्वरीं विदुः ॥ ३० ।
स्वरूपधारिणी चान्या विष्णुनापि विनिर्म्मिता ।
ब्रह्मणा कार्त्तिकेयेन इन्द्रेण च यमेन च ॥ ३१ ।
वराहेण च देवेन विष्णुना परमेष्ठिना ।
पातालोद्धारणं रूपं तस्या देव्या विनिर्ममे ।
माहेश्वरी च माहेन्द्री इत्येता अष्ट मातरः* ॥ ३२ ।
कारणं यस्य यत्प्रोक्तं चेतज्ञेनावधारितम् ।
शरीरन्देवतानान्तु तदिदं कीर्त्तितं मया ॥ ३३ ।
कामः क्रोधस्तथा लोभो मदो मोहोऽथ पञ्चमः ।
मात्सर्य्यं षष्ठमित्याहुः पैशुन्यं सप्तमन्तथा ।
असूयाष्टमी ज्ञेया इत्येता अष्ट मातरः ॥ ३४ ।†
कामं योगीश्वरीं विद्धि क्रोधो माहेश्वरी तथा ।
लोभस्तु वैष्णवी प्रोक्ता ब्रह्माणी मद एव च ॥ ३५ ।
मोहः स्वयम्भूः कौमारी मात्सर्य्यञ्चेन्द्रजां विदुः ।
यमदण्डधरा देवी पैशुन्यं स्वयमेव च ॥ ३६ ।
असूया वराहाख्या इत्येताः परिकीर्त्तिताः ।
कामादिगण एषोऽयं शरीरम्परिकीर्त्तितम् ॥ ३७ ।

---

* माहेश्वरी च राजेन्द्र इत्येता अष्टमातरः इति (ख) ।

† (ख) पुस्तके ३३।३४ श्लोकौ न स्तः ।

जग्राह मूर्त्तिन्तु तथा यथा ते कीर्त्तितं मया ॥ ३८ ।
एताभिर्देवताभिश्च तस्य रक्षोऽतिशोषिते ।
क्षयं गतासुरी माया स च सिद्धोऽन्धकोऽभवत् ॥ ३९ ।
एतत्ते सर्वमाख्यातमात्मविद्यामृतं मया ॥ ४० ।
य एतच्छृणुयान्नित्यं मातॄणामुद्भवं शिवम् ।
तस्य ताः सर्वतो रक्षां कुर्वन्त्यनुदिनं नृप ॥ ४१ ।
यश्चैतत्पठते जन्म मातॄणां पुरुषोत्तम ।
स धन्यः सर्वथा लोके शिवलोकञ्च गच्छति ॥ ४२ ।
तासाञ्च ब्रह्मणा दत्ता अष्टमी तिथिरुत्तमा ।
एताः सम्पूजयेद्भक्त्या बिल्वाहारो नरः सदा ।
तस्य ताः परितुष्टाः स्युः क्षेमारोग्यं ददन्ति च ॥ ४३ ।

इति वराहपुराणे मातादिमातृगणोत्पत्तिर्नाम सप्तविंशोऽध्यायः ।

## अष्टाविंशोऽध्यायः ।

प्रजापाल उवाच ।

कथं माया समुत्पन्ना दुर्गा कात्यायनी शुभा ।
आदित्येन स्थिता सूक्ष्मा पृथङ्मूर्त्ति व्यजायत ॥ १ ।

महातपा उवाच ।

आसीद्राजा पुरा राजन् सिन्धुद्वीपः प्रतापवान् ।
वरुणांशो महाराज सोऽरण्ये तपसि स्थितः ॥ २ ।
पुत्रो मे शक्रनाशाय भवेदिति नराधिपः ।
एवं कृतमतिः सोऽथ महता तपसा स्वकम्* ।
कलेवरं स्थिरो† भूत्वा शोषयामास सुव्रत ॥ ३ ।

प्रजापाल उवाच ।

कथं तस्य द्विजश्रेष्ठ शक्रेणापकृतम्भवेत् ।
येनासौ तद्विनाशाय पुत्रमैच्छन् व्रते स्थितः ॥ ४ ।

महातपा उवाच ।

सोऽन्यजन्मनि पुत्रोऽभूत्त्वष्टुर्बलभृतां वरः‡ ।
अवध्यः सर्व्वशस्त्रौघैरपां फेनेन नाशितः ॥ ५ ।
जलफेनेन निहतस्तस्मिँश्चयमवाप्तवान्§ ।
पुनर्श्चैवान्वये जातः सिन्धुद्वीपः प्रतापवान् ॥ ६ ।
स तेपे परमं तीव्रं शक्रवैरमनुस्मरन् ॥ ७ ।
ततः कालेन महता नदी वेत्रवती शुभा ।
मानुषं रूपमास्थाय सालङ्कारं मनोरमम् ।
आजगाम यतो राजा तेपे परमकल्मषः ॥ ८ ।

---

* सदेति (ख) ।

† स्थित इति (ग) । त्वष्टुश्च वदतां वर इति (ग) ।

‡ बलवतां वर इति (ख) ।

§ ततो क्षयमवाप्तवानिति (ख) ।

तां दृष्ट्वा रूपसम्पन्नां स राजा क्षुब्धमानसः ।
उवाच कासि सुश्रोणि सत्यं कथय भामिनि ॥ ९ ।

नद्युवाच ।

अहं जलपतेः पत्नी वरुणस्य महात्मनः ।
नाम्ना वेत्रवती एषा त्वामिच्छन्तीहमागता ॥ १० ।
साभिलाषां परस्त्रीञ्च भजमानां विसर्ज्जयेत् ।
स पापः पुरुषो ज्ञेयो ब्रह्महत्याञ्च विन्दति ॥ ११ ।
एवं ज्ञात्वा महाराज भजमानां भजस्व माम् ।
एवमुक्तस्तया राजा साभिलाषोपभुक्तवान् ॥ १२ ।
तस्य सद्योऽभवत्पुत्रो द्वादशार्कसमप्रभः ।
वेत्रवत्युदरे जातो नाम्ना वेत्रासुरोऽभवत् ।
बलवानतितेजस्वी प्राग्ज्योतिषपतिर्भवत्* ॥ १३ ।
स कालेन युवा जातो बलवान्दृढविक्रमः† ।
महायोगेन संयुक्तो जिगायेमां वसुन्धराम् ॥
सप्तद्वीपवतीं पश्चान्मेरुपर्व्वतमारुहत् ।
तत्रेन्द्रं प्रथमं जिग्ये पश्चादग्निं यमं ततः ॥ १४।१५ ।
इन्द्रो भग्नो गतः सोऽग्निमग्निर्भग्नो यमं ययौ ।
यमो निर्ऋतिमागच्छन्निर्ऋतिर्वरुणं ययौ‡ ॥ १६ ।

* अभवदिति साधु ।

† बभूव दृढविक्रम इति (ख) ।

‡ (ग) पुस्तके यमोभग्नोगतः सोऽपि धर्म्मोनिर्ऋतिमारुहत् । तत्रेन्द्रश्च प्रगच्छन्तं निर्ऋतिर्वरुणं ययावित्यधिकः पाठो वर्त्तते ।

इन्द्रादिभिरुपेतस्तु वरुणो वायुमन्वगात् ।
वायुर्धनपतिं त्वाशात्स सर्वैरिन्द्रादिभिः सह ॥ १७ ।
धनदोऽपि स्वकं शिवमीशं देवं समन्वितः ।
ययाच गत्वा सोऽपि दानवो बलगर्वितः ।
महामायाय रुद्राय शिवलोकं प्रति प्रभो ॥ १८ ।
शिवोऽप्यवध्यस्तं मत्वा देवान्गृह्य* ययौ पुरीम् ।
ब्रह्मणः सुरसिद्धाद्यैर्वन्दितां पुण्यकादिभिः ॥ १९ ।
तत्र ब्रह्मा जगत्स्रष्टा विष्णुपादोद्भवे जले ।
नियमेन च संयुक्तोऽजपतास्तर्जले शुभे ॥
वेदब्रह्ममायां गायत्रीं ततो देवा विभुक्रुशुः ।
त्राहि प्रजापते सर्व्वान्देवानृषिवरानपि ।
असुराद्भयमापन्नांस्त्राहि त्राहीत्यचोदयत् ॥ २०।२१ ।
एवमुक्तस्तदा ब्रह्मा दृष्ट्वा देवांस्तदागतान् ।
चिन्तयामास देवस्य मायेयं विगतज्वगत् ।
नासुरा न च रक्षोऽत्र मायेयं कीदृशी मता ॥ २२ ।
एवं चिन्तयतस्तस्य प्रादुरासीदयोनिजा ।
शुक्लाम्बरधरा कन्या स्रक्किरीटोज्ज्वलानना ॥
अष्टभिर्बाहुभिर्युक्ता दिव्यप्रहरणोद्यता† ।
चक्रं शङ्खं गदां पाशं खड्गं घण्टां तथा धनुः ॥
धारयन्ती तथा चान्यान्बहुतूणा जलाद्बहिः ।

* गृह्य इति आर्षं, गृहीत्वेति साधु ।

† प्रहरणोद्यतेति (ग) ।

निश्चक्राम महायोगि*सिंहवाहनवेगिता ॥ २३।२४।२५ ।
युयुधे चासुरान्सर्व्वानेकैव बहुधा स्थिता ।
दिव्यं वर्षसहस्रन्तु दिव्यैरस्त्रैर्महाबला ॥ २६ ।
युद्धा कालात्यये देव्या हतो वेत्रासुरो रणे† ।
ततः किलकिलाशब्दो देवसैन्येऽभवन्महान् ॥ २७ ।
हते वेत्रासुरे भीमे तदा सर्व्वे दिवौकसः ।
प्रणेमुर्जय युद्धेति स्वयमीशः स्तुतिं जगौ ॥ २८ ।

महेश्वरोवाच‡ ।

जयस्व देवि गायत्रे महामाये महाप्रभे ।
महादेवि महाभागे महासत्त्वे महोत्सवे ॥ २९ ।
दिव्यगन्धानुलिप्ताङ्गि दिव्यस्रग्दामभूषिते ।
वेदमातर्नमस्तुभ्य§मक्षरस्थे महेश्वरि ॥ ३० ।
त्रिलोकस्थे त्रितत्त्वस्थे त्रिवह्निस्थे त्रिशूलिनि ।
त्रिनेत्रे भीमवक्त्रे च भीमनेत्रे भयानके ॥ ३१ ।
कमलासनजे देवि सरस्वति नमोऽस्तु ते ।
नमः पङ्कजपत्राक्षि महामायेऽमृतस्रवे¶ ।
सर्व्वगे सर्वभूतेशि स्वाहाकारे स्वधेऽम्बिके ॥ ३२ ।

* महायोगीति (ग)।

† स दैत्यो युद्धदुर्म्मद इति (ग)। तत्र परार्द्धं नास्ति ।

‡ महेश्वरोवाच इति आर्षं, महेश्वर उवाच इति साधु ।

§ देवमातर्नमस्तुभ्यमिति (ख)।

¶ नमो महाऽमृतस्रवे इति (ग)।

सम्पूर्णे पूर्णचन्द्राभे भास्वराङ्गि भवोद्भवे ।
महाविद्ये महावेद्ये महादैत्यविनाशिनि ॥ ३३ ।
महाबुद्ध्युद्भवे देवि वीतशोके किरातिनि ।
त्वं नीतिस्त्वं महाभागे गीस्त्वं* त्वं गौस्त्वमक्षरम् ॥ ३४ ।
त्वं धीस्त्वं श्रीस्त्वमोङ्कारस्तत्त्वे चापि परिस्थिता ।
सर्वसत्त्वहिते देवि नमस्ते परमेश्वरि ॥ ३५ ।
इत्येवं संस्तुता देवी भवेन परमेष्ठिना ।
देवैरपि जयेत्युच्चैरित्युक्ता परमेश्वरी ॥
यावदास्ते चतुर्वक्त्रस्तावदन्तर्जलाद्धरिः ।
निश्चक्राम ततो देवीं कृतकृत्यां ददर्श सः ॥ ३६।३७ ।
तां दृष्ट्वा देवकार्य्यञ्च सिद्धं मत्वा पितामहः ।
भविष्यं कार्य्यमुद्दिश्य ततो वचनमब्रवीत् ॥ ३८ ।

ब्रह्मोवाच ।

इयं देवी वरारोहा यातु शैलं हिमालयम् ।
तत्र यूयं सुराः सर्वे गत्वा नन्दत मा चिरम्† ॥ ३९ ।
नवम्याञ्च सदा पूज्या इयं देवी समाधिना ।
वरदा सर्वलोकानां भविष्यति न संशयः ॥ ४० ।
नवम्यां यस्तु पिष्टाशी भविष्यति हि मानवः ।
नारी वा तस्य सम्पन्नं भविष्यति मनोगतम् ॥ ४१ ।
यश्च स्वयं सदा प्रातरिदं स्तोत्रं पठिष्यति ।

* त्वं गौरिति (ग) ।

† नन्दितमानस इति (ग) ।

त्वयेरितं महादेव तस्य देव्या समं भवान्।
वरदो देव सर्वासु आपत्स्वप्युद्धरेस्स्वयम् ॥ ४२ ।
एवमुक्त्वा भवं ब्रह्मा पुनर्देवीं स चाब्रवीत्।
त्वया देवि महाकार्य्यं कर्त्तव्यञ्चान्यदस्ति नः।
भविष्यं महिषाख्यस्य असुरस्य विनाशनम् ॥ ४३ ।
एवमुक्त्वा ततो ब्रह्मा सर्वे देवाश्च पार्थिव।
यथागतं ततो जग्मुर्देवीं स्थाप्य* हिमे गिरौ ॥ ४४ ।
संस्थाप्य नन्दिता यस्मात्तस्मान्नन्दाऽभवत्तु सा।
यश्चेदं शृणुयाज्जन्म देव्या यश्च स्वयं पठेत्।
सर्वपापविनिर्मुक्तः परं निर्वाणमृच्छति ॥ ४५ ।

इति वराहपुराणे देव्युत्पत्तिर्नाम अष्टाविंशोऽध्यायः।

# ऊनविंशोऽध्यायः।

महातपा उवाच।

शृणु राजन्नवहितः प्रजापाल कथामिमाम्।
यदा दिशः समुत्पन्नाः श्रोत्रेभ्यः पृथिवीपते ॥ १ ।
ब्रह्मणः सृजतः सृष्टिमादिसर्गे समुत्थिते।

* स्थाप्य इति पाठं, स्थापयित्वा इति साधु।

चिन्ताभून्महती को मे प्रजाः सृष्टा धरिष्यति ॥ २ ।
एवं चिन्तयतस्तस्य अवकाशं व्रजन्निह ।
प्रादुर्बभूवुः श्रोत्रेभ्यो दश कन्या महाप्रभाः ॥ ३ ।
पूर्वा च दक्षिणा चैव प्रतीची चोत्तरा तथा ।
ऊर्द्धाधरा च षट् मुख्याः कन्या ह्यासंस्तदा नृप ॥ ४ ।
तासां मध्ये चतस्रस्तु कन्याः परमशोभनाः ।
रूपवन्त्यो महाभागा गाम्भीर्य्येण समन्विताः ॥ ५ ।
ता ऊचुः प्रणयाद्देवं प्रजापतिमकल्मषम् ।
अवकाशन्तु नो देहि देवदेव प्रजापते ॥ ६ ।
यत्र तिष्ठामहे सर्वा भर्त्तृभिः सहिताः सुखम् ।
पतयश्च महाभागा* देहि नोऽव्यक्तसम्भव ॥ ७ ।

ब्रह्मोवाच ।

ब्रह्माण्डमेतत्सुश्रोण्यः शतकोटिप्रविस्तरम् ।
तस्यान्ते स्वेच्छया तुष्टा उष्यतां मा विलम्बथ ॥ ८ ।
भर्त्तॄंश्च वः प्रयच्छामि सृष्ट्वा रूपस्विनोऽनघाः ।
यथेष्टं गम्यतां देशो यस्या यो रोचतेऽधुना ॥ ९ ।
एवमुक्ताश्च ताः सर्वा यथेष्टं प्रययुस्तदा ।
ब्रह्मा ससर्ज तूर्णं ताँल्लोकपालान्महाबलान् ॥ १० ।
सृष्ट्वा तु लोकपालांस्तांस्ताः कन्याः पुनराह्वयत् ।
विवाहं कारयामास ब्रह्मा लोकपितामहः ॥ ११ ।
एकामिन्द्राय स प्रादादग्नयेऽन्यां यमाय च ।

---

* पतयश्च महाभागा इति पार्षं, पतींश्चैव महाभागानिति साधु ।

निऋतये च देवाय वरुणाय महात्मने ॥
वायवे धनदेशाय ईशानाय च सुव्रत ।
ऊर्ध्वां स्वयमधिष्ठाय शेषायाधोव्यवस्थिताम् ॥ १२।१३ ।
एवं दत्त्वा पुनर्ब्रह्मा तिथिं प्रादाद्दिशान्तथा ।
दशमी च तिथिस्तासामतीव दयिताभवत् ॥ १४ ।
तस्यां दध्याशनो यस्तु सुव्रत भवते नरः ।
तस्य पापक्षयन्तास्तु कुर्वन्त्यहरहर्नृप ॥ १५ ।
यश्चैतच्छृणुयाज्जन्म दिशान्नियतमानसः ।
स प्रतिष्ठामवाप्नोति ब्रह्मलोके न संशयः ॥ १६ ।*

इति वराहपुराणे दिगुत्पत्तिर्नाम ऊनत्रिंशोऽध्यायः ।

# त्रिंशोऽध्यायः ।

महातपा उवाच ।

शृणु चान्यां वसुपतेरुत्पत्तिं पापनाशिनीम् ।
यथा वायुशरीरस्थो धनदः सम्बभूव ह ॥ १ ।
आद्यं शरीरं यत्तस्मिन्वायुरन्तःस्थितोऽभवत् ।
प्रयोजनान्मूर्त्तिमत्त्वमातिष्ठत्तेन्नदेवता ॥ २ ।

* (ख) पुस्तके १५श्लोकस्य उत्तरार्द्धं, १६श्लोकस्य च पूर्व्वार्द्धं नास्ति ।

तत्रमूर्त्तस्य वायोस्तु उत्पत्तिः कीर्त्तिता मया ।
तां शृणुष्व महाभाग कथ्यमानां मयानघ ॥ ३ ।
ब्रह्मणः सृष्टिकामस्य मुखाद्वायुर्विनिर्ययौ ।
प्रचण्डशर्करावर्षी तं ब्रह्मा प्रत्यषेधयत् ॥ ४ ।
मूर्त्तो भवस्व शान्तश्च तेनोक्तो मूर्त्तिमान्भवत्* ।
सर्वेषाञ्चैव देवानां† यद्वित्तं फलमेव च ।
तत्सर्वं पाहि येनोक्तं तस्माद्धनपतिर्भवान् ॥ ५ ।
तस्य ब्रह्मा ददौ तुष्टस्तिथिमेकादशीं प्रभुः ।
तस्यामनग्निपक्काशी यो भवेन्नियतं शुचिः ।
तस्यापि धनदो देवस्तुष्टः सर्वं प्रयच्छति ॥ ६ ।
एषा धनपतेर्मूर्त्तिः सर्वकिल्बिषनाशनी ।
य एतां शृणुयाद्भक्त्या पुरुषः पठतेऽपि वा ।
सर्वकामानवाप्नोति स्वर्गलोकञ्च गच्छति ॥ ७ ।

इति वराहपुराणे धनदोत्पत्तिर्नाम त्रिंशोऽध्यायः ।

* अभवदिति साधु ।

† सर्वेषामेव देवानामिति (ख)

# एकत्रिंशोऽध्यायः ।

महातपा उवाच ।

मनोर्नाम मनुत्वञ्च यदेतत्पठ्यते किल ।
प्रयोजनवशाद्विष्णुरसावेव तु मूर्त्तिमान् ॥ १ ।
योऽसौ नारायणो देवः परात्परतरो नृप ।
तस्य चिन्ता समुत्पन्ना सृष्टिं प्रति नरोत्तम ॥ २ ।
सृष्टा चेयं मया सृष्टिः पालनीया मयैव ह ।
कर्म्मकाण्डन्त्वमूर्त्तेन कर्त्तुं न चेह शक्यते ।
तस्मान्मूर्त्तिं सृजाम्येकां यया* पाल्यमिदं जगत् ॥ ३ ।
एवं चिन्तयतस्तस्य सत्याभिध्यायिनो नृप ।
प्राक्सृष्टिजातं राजन्वै मूर्त्तिमत्तत्पुरो बभौ ॥ ४ ।
पुरोभूतस्ततस्तस्मिन्देवो नारायणः स्वयम् ।
प्रविशन्तं ददर्शाथ त्रैलोक्यन्तस्य देहतः ॥ ५ ।
ततः सस्मार भगवान्वरदानं पुरातनम् ।
वागादीनां ततस्तुष्टः प्रादात्तस्य पुनर्वरम् ।
सर्व्वज्ञः सर्व्वकर्त्ता त्वं सर्व्वलोकनमस्कृतः ॥ ६ ।
त्रैलोक्यप्रतिपालाच्च भव विष्णुः सनातनः† ॥ ७ ।
देवानां सर्व्वदा कार्य्यं कर्त्तव्यं ब्रह्मणः सदा ।
सर्व्वज्ञत्वञ्च भवतु तव देव न संशयः ॥ ८ ।

---

* मयेति (ग) ।

† (ग) पुस्तके सर्व्वज्ञ इत्यारभ्य षट् पादा न सन्ति ।

एवमुक्त्वा ततो देवः प्रकृतिस्थो बभूव ह ।
विष्णुरप्यधुना पूर्व्वां बुद्धिं सस्मार स प्रभुः ॥ ९ ।
तदा सञ्चिन्त्य भगवान्योगनिद्रां महातपाः ।
तस्यां संस्थाप्य भगवानिन्द्रियार्थोद्भवाः प्रजाः ॥ १० ।
ध्यात्वा परेण रूपेण ततः सुष्वाप वै प्रभुः ।
तस्य सुप्तस्य जठरान्महत्पद्मं विनिःसृतम् ॥ ११ ।
सप्तद्वीपवती पृथ्वी ससमुद्रा सकानना ।
तस्य रूपस्य विस्तारं पातालातलसंस्थितम् ।
कर्णिकायां तथा मेरुस्तन्मध्ये ब्रह्मणो भवः ॥ १२ ।
एवं दृष्ट्वा परन्तस्य शरीरस्य तु सम्भवम् ।
मुमुदे तच्छरीरस्थो वायुर्वायुं समसृजत् ॥ १३ ।
अविद्या विजयश्चेमं शङ्खरूपेण धारय ।
अज्ञानच्छेदनार्थाय खड्गस्तेऽस्तु सदा करे ॥ १४ ।
कालचक्रमयं घोरं चक्रं तद्धारयाच्युत ।
अधर्मराजघातार्थं गदां धारय केशव ॥ १५ ।
मालेयं भूतमाता ते कण्ठे तिष्ठतु सर्व्वदा ।
श्रीवत्सकौस्तुभौ चेमौ चन्द्रादित्यच्छलेन ह ॥ १६ ।
मारुतस्ते गतिर्वीर गरुत्मान् स च कीर्त्तितः ।
त्रैलोक्यगामिनी देवी लक्ष्मीस्तेऽस्तु सदाश्रये ॥ १७ ।
द्वादशी च तिथिस्तेऽस्तु कामरूपी च जायते ।
घृताशनो भवेद्यस्तु द्वादश्यान्त्वत्परायणः ।
स स्वर्गवासी भवतु पुमान् स्त्री वाविशेषतः ॥ १८ ।

स च विष्णुस्तवाख्यातो* मूर्त्तयो देवदानवाः ॥ १९ ।
हन्ति पाति शरीराणि सृजत्यन्यानि चात्मनः ।
युगे युगे सर्व्वगोऽयं वेदान्तपुरुषो ह्यसौ ॥ २० ।
न हीनबुद्ध्या वक्तव्यो मनुष्योऽयं कदाचन ।
य एवं शृणुयात्सर्गं वैष्णवं पापनाशनम् ।
स कीर्त्तिमिह सम्प्राप्य स्वर्गलोके महीयते ॥ २१ ।

इति वराहपुराणे परापरनिर्णयो नाम एकत्रिंशोऽध्यायः ।

## द्वात्रिंशोऽध्यायः ।

महातपा उवाच ।

अथोत्पत्तिं प्रवक्ष्यामि धर्म्मस्य महतो नृप ।
माहात्म्यञ्च तिथिञ्चैव तन्निबोध नराधिप ॥ १ ।
पूर्व्वं ब्रह्माव्ययः शुद्धः परात्परसंज्ञितः ।
स सिसृक्षुः प्रजास्त्वादौ पालनञ्च विचिन्तयन् ॥ २ ।
तस्य चिन्तयतस्त्वङ्गाद्दक्षिणाच्छ्वेतकुण्डलः ।
प्रादुर्बभूव पुरुषः श्वेतमाल्यानुलेपनः ॥ ३ ।
तं दृष्ट्वोवाच भगवांश्चतुष्पादं वृषाकृतिम् ।

* एष विष्णुस्तवाख्यात इति (ग) (ख)

पालयेमाः प्रजाः साधो त्वं ज्येष्ठो जगतो भव ॥ ४ ।
इत्युक्तः समवस्थोऽसौ चतुष्पात्स्यात्कृते युगे ।
त्रेतायां त्रिपदश्चासौ द्विपादो द्वापरेऽभवत् ॥ ५ ।
कलावेकेन पादेन प्रजाः पालयते प्रभुः ।
षड्भेदो ब्राह्मणानां स त्रिधा चत्रे व्यवस्थितः ।
द्विधा वैश्येकधा* शूद्रे स्थितः सर्व्वगतः प्रभुः ॥ ६ ।
रसातलेषु सर्वेषु द्वीपवर्षेष्वयम्प्रभुः ।
गुणद्रव्यक्रियाजातिचतुष्पादः प्रकीर्त्तितः ॥ ७ ।
त्रिशृङ्गोऽसौ स्मृतो वेदे ससंहितपदक्रमः ।
तथा आद्यन्त ओङ्कारद्विशिराः सप्तहस्तवान् ॥ ८ ।
उदात्तादित्रिभिर्बद्ध एवं धर्म्मो व्यवस्थितः ।
स धर्म्मः पीड़ितः पूर्वं सोमेनाद्भुतकर्म्मणा ॥ ९ ।
ताराञ्जिहीर्षुणा पत्नीं भ्रातुराङ्गिरसस्य च ।
सोऽपायाद्धर्षितस्तेन बलिना क्रूरकर्म्मणा ।
अरण्यं गहनं घोरमाविवेश तदा प्रभुः ॥ १० ।
तस्मिन् गते सुराः सर्वे असुराणान्तु पक्षयः ।
जिहीर्षन्तस्तदौकांसि बभ्रमुर्द्धर्म्मवञ्चिताः ।
असुरा अपि तद्वच्च सुरवेश्मनि बभ्रमुः ॥ ११ ।
निर्म्मर्य्यादे तथा जाते धर्म्मनाशे च पार्थिव ।
देवासुरा युयुधिरे सोमदोषेण कोपिताः ॥ १२ ।
स्त्रीहेतोश्च महाभाग विविधायुधपाणयः ।

---

* वैश्यकर्धेति आर्षं, वैश्य एकधेति साधु ।

तान्दृष्ट्वा युध्यतो देवानसुरैः सह कोपितान् ।
नारदः प्राह सङ्गम्य पितरं प्रति हर्षितः ॥ १३ ।
स हंसयानमारुह्य सर्व्वलोकपितामहः ।
निवारयामास तदा कस्यार्थे युद्धमब्रवीत् ॥ १४ ।
सर्व्वे शंशसुः सोमन्तु स तु बुद्ध्या स्वकं सुतम् ।
पीड़नादपयातन्तु गहनं वनमाश्रितम् ॥ १५ ।
ततो ब्रह्मा ययौ तत्र देवासुरयुतस्त्वरन्* ।
ददर्श च हरैः सार्द्धं चतुष्पादं वृषाकृतिम्† ।
चरन्तं शशिसङ्काशं दृष्ट्वा देवानुवाच ह ॥ १६ ।

ब्रह्मोवाच ।

अयं मे प्रथमः पुत्रः पीड़ितः शशिना भृशम् ।
पत्नीं जिहीर्षुणा भ्रातुर्धर्म्मसंज्ञो महामुनिः ॥ १७ ।
इदानीं तोषयध्वं वै सर्व्वे एव सुरासुराः‡ ।
येन स्थितिर्वै भवति समं देवासुरा इति ॥ १८ ।
ततः सर्वे स्तुतिञ्चक्रुस्तस्य देवस्य हर्षिताः ।
विदित्वा ब्रह्मणो वाक्यात्सम्पूर्णं शशिसन्निभम्§ ॥ १९ ।

देवा ऊचुः ।

नमोऽस्तु शशिसङ्काश नमस्ते जगतः पते ।

* त्वरमाण इति साधु ।

† वृषाकपिमिति (ख) ।

‡ सर्व्वं एनं सुरासुराः इति (ख) ।

§ सम्पूर्णंशशिसन्निभमिति (ख) ।

नमोऽस्तु देवरूपाय स्वर्गमार्गप्रदर्शक ॥ २० ।
कर्म्ममार्गस्वरूपाय सर्व्वगाय नमो नमः ।
त्वयैव पाल्यते पृथ्वी त्रैलोक्यञ्च त्वयैव हि ॥ २१ ।
जनस्तपस्तथा सत्यं त्वया सर्व्वन्तु पाल्यते ।
न त्वया रहितं किञ्चिज्जगत्स्थावरजङ्गमम् ।
विद्यते त्वद्विहीनन्तु सद्यो नश्यति वै जगत् ।
त्वमात्मा सर्व्वभूतानां* सतां सत्त्वस्वरूपवान् ॥ २२।२३ ।
राजसीनां रजस्त्वञ्च तामसीनां तमोमयः ।
चतुष्पादो भवान्वेदश्चतुःशृङ्गस्त्रिलोचनः ॥ २४ ।
सप्तहस्तस्त्रिबन्धश्च वृषरूप नमोऽस्तु ते ।
त्वया हीना वयं देव सर्व्वे उन्मार्गवर्त्तिनः ।
तन्मार्गं यच्छ मूढ़ानां त्वं हि नः परमा गतिः ॥ २५ ।
एवं स्तुतस्तदा देवैर्वृषरूपी प्रजापतिः ।
तुष्टः प्रसन्नमनसा शान्तचक्षुरभाषत ॥ २६ ।
दृष्टमात्रास्तु ते देवाः स्वयं धर्म्मेण चक्षुषा ।
क्षणेन गतसम्मोहाः सम्यक्सद्धर्म्मसंहिताः ॥ २७ ।
असुरा अपि तद्वच्च ततो ब्रह्मा उवाच तम् ।
अद्यप्रभृति ते धर्म्म तिथिरस्तु त्रयोदशी ॥
यस्तामुपोष्य पुरुषो भवन्तं समुपार्ज्जयेत् ।
कृत्वा पापसमाचारं तस्मान्मुच्यति मानवः ॥ २८ ।
यच्चारण्यमिदं धर्म्म त्वया व्याप्तं चिरम्प्रभो ।

* (ख) पुस्तकेऽतः परं दश पादा न सन्ति ।

नाम्ना भविष्यति ह्येतद्धर्म्मारण्यमिति प्रभो ॥ २९ ।

चतुस्त्रिपाद्द्व्येकपादश्च प्रभो त्वं
कृतादिभिर्लक्ष्यसे येन लोकैः ।
तथा तथा कर्म्मभूमौ नभश्च
प्रायो युक्तः स्वग्टहं पाहि विश्वम् ॥ ३० ।

इत्युक्तमात्रः प्रपितामहोऽधुना
सुरासुराणामथ पश्यतां नृप ।
अदृश्यतामगमत्स्वालयांश्च
जग्मुः सुराः सहसा वीतशोकाः ॥ ३१ ।

धर्म्मोत्पत्तिं य इमां श्रावयीत*
तदा श्राद्धेन तर्पयीत* पितृंश्च ।
त्रयोदश्यां पायसेन स्वशक्त्या
स स्वर्गगामी तु सुरानुपेयात् ॥ ३२ ।

इति वराहपुराणे धर्म्मोत्पत्तिर्नाम द्वात्रिंशोऽध्यायः ।



* श्रावयीत, तर्पयीतेति चार्षप्रयोगौ, श्रावयेत्, तर्पयेदिति साधु ।

## त्रयस्त्रिंशोऽध्यायः ।

महातपा उवाच ।

अथापरां रुद्रसम्भूतिमाद्यां
शृणुष्वेमां यत्नतः सोऽभ्युवाच ।
महातपाः पातिताधर्म्मवृत्तः
क्षमास्त्रधारी ऋषिरुग्रतेजाः ॥ १ ॥

जातः प्रजानाम्पतिरुग्रतेजा
ज्ञानम्परन्तत्त्वभावं विदित्वा ।
सृष्टिं सिसृक्षुः क्षुभितोऽतिरोषा-
दहर्द्विकाले जगतः प्रकामम् ॥ २ ॥

तपस्यतोऽन्तः स्थिरकीर्त्तिपुण्ये
रजस्तमोध्वस्तगतिर्बभूव ।
वरो वरेण्यो वरदः प्रतापी
कृष्णारुणः पुरुषः पिङ्गनेत्रः ॥ ३ ॥

रुद्रमुक्तो ब्रह्मणा मा रुद त्वं
रुद्रस्ततोऽसावभवत्पुराणः ।
नयस्व सृष्टिं विततस्वरूपां
भवान् समर्थोऽसि महानुभाव ॥ ४ ॥

इत्युक्तमात्रः सलिले ममज्ज
मग्ने ससर्जात्मभवाय दक्षः ।
कष्टे तदा देववरेऽपि ते तु

सृष्टिश्चक्रुर्मानसा ब्रह्मजाताः ॥ ५ ।
तस्मान्ततायान्तु सुराधिपे तु
पैतामहं यज्ञवरञ्चकामम् ।
मग्नः पुरा यत्सलिले स रुद्र
उत्सृज्य विश्वन्तु सुरान् सिसृक्षुः* ॥ ६ ।
सुस्राव यज्ञं सुरसिद्धयक्षा-
नुपागतान् क्रोधवशं जगाम ।
कन्यां च दीप्तां परिभाव्य केन
सृष्टं जगन्मां व्यतिरिच्य मोहात् ॥ ७ ।
हा हेति चोक्ते ज्वलनार्चिषस्तु
निश्चेरुरास्यात्परिपिङ्गलस्य ।
तत्राभवन् क्षुद्रपिशाचसङ्घा
वेतालभूतानि च योगिसङ्घाः ॥ ८ ।
घनं यदा तैर्विततं वियच्च
भूमिश्च सर्व्वाश्च दिशश्च लोकाः ।
तदा स सर्व्वज्ञतया चकार
धनुश्चतुर्व्विंशतिहस्तमात्रम् ॥ ९ ।
गुणन्त्रिवृत्तञ्च चकार रोषा-
दादत्त दिव्ये इषुधी शरांश्च ।
ततश्च पूष्णो दशनानपातय-

* उत्सृज्य विश्वं स सुरान् सिसृक्षुरिति (ख) ।

र्भगस्य नेत्रे दृषणौ कृतौ च ॥ १० ॥
स विश्वबीजो व्यपयात्क्रतुश्च
मार्गं वायुर्द्धारयन्यज्ञवाटात् ।
देवाश्च सर्व्वे पशुतामुपेयु-
र्जग्मुश्च सर्व्वे प्रणतिम्भवस्य ॥ ११ ॥
आगम्य तत्रैव पितामहस्तु
भवम्प्रतीतः सम्परिष्वज्य देवान् ।
भक्त्योपेतानीक्षयन्देवदेवा-
न्विज्ञाय रुद्रेण कृतापकारान् ॥ १२ ॥
रुद्रं दृष्ट्वा देवदेवो जगाद
मा तात कोपेन गतो हि यज्ञः ।
इति ब्रह्मवचः श्रुत्वा
रुद्रः प्रोवाच कोपवान् ॥ १३ ॥

रुद्र उवाच ।

सृष्टः पूर्व्वं भवताहं तवेमे
कस्मान्न भागम्परिकल्पयन्ति ।
यस्मोद्भवन्तेन रूपं मयेमे
वीतज्ञाना विकृता देवदेव ॥ १४ ॥

ब्रह्मोवाच ।

देवाः शम्भुं स्तुतिभिर्ज्ञानहेतो-
र्यजध्वमुच्चैरसुराश्च सर्वे ।
येन रुद्रो भगवांस्तोषमेति

सर्व्वज्ञता तोषमात्रस्य च स्यात् ॥
इत्युक्तास्तेन ते देवाः स्तुतिञ्चक्रुर्महात्मनः ॥ १५ ।
देवा ऊचुः ।
नमो देवातिदेवाय त्रिनेत्राय महात्मने ।
रक्तपिङ्गलनेत्राय जटामुकुटधारिणे ॥ १६ ।
भूतवेतालजुष्टाय महाभोगोपवीतिने ।
भीमाट्टहासवक्त्राय कपर्दिस्थाणवे नमः ॥ १७ ।
पूष्णो दन्तविनाशाय भगनेत्रहने नमः ।
भविष्यद्वृषचिह्नाय महाभूतपते नमः ॥ १८ ।
भविष्यत्त्रिपुरान्ताय तथान्धकविनाशिने ।
कैलासवरवासाय करिकृत्तिनिवासिने ॥ १९ ।
विकरालोर्द्ध्वकेशाय भैरवाय नमो नमः ।
अग्निज्वालाकरालाय शशिमौलिकृते नमः ॥ २० ।
भविष्यत्कृतकापालिव्रताय परमेष्ठिने ।
तथा दारुवनध्वंसकारिणे तिग्मशूलिने ॥ २१ ।
कृतकङ्कणभोगीन्द्रनीलकण्ठत्रिशूलिने ।
प्रचण्डदण्डहस्ताय वड़वाग्निमुखाय च ॥ २२ ।
वेदान्तवेद्याय नमो यज्ञमूर्त्ते नमो नमः ।
दक्षयज्ञविनाशाय जगद्भयकराय च ॥ २३ ।
विश्वेश्वराय देवाय शिव शम्भो भवाय च* ।

* एतदर्द्धं (क) पुस्तके नास्ति ।

कपर्द्दिने करालाय महादेवाय ते नमः ॥ २४ ।
एवं देवैः स्तुतः शम्भुरुग्रधन्वा सनातनः ।
उवाच देवदेवोऽहं यत्करोमि तदुच्यते ॥ २५ ।

देवा ऊचुः ।

वेदशास्त्राणि विज्ञानं देहि नो भव मा चिरम् ।
यज्ञश्च सरहस्यो भो यदि तुष्टोऽसि नः प्रभो ॥ २६ ।

महादेव उवाच ।

भवन्तः पशवः सर्व्वे भवन्तु सहिता इति ।
अहं पतिश्च भवतां ततो मोक्षमवाप्स्यथ ॥ २७ ।
तथेति देवास्तं प्राहुस्ततः पशुपतिर्भवत्* ।
ब्रह्मा पशुपतिम्प्राह प्रसन्नेनान्तरात्मना ॥ २८ ।
चतुर्द्दशी ते देवेश तिथिरस्तु न संशयः ॥
तस्यान्तिथौ भवन्तं ये यजन्ति श्रद्धयान्विताः ।
उपोष्य भोजनीयास्तु गोधूमान्नेन वै द्विजाः ।
तेषान्त्वं तुष्टिमापन्नो नय स्थानमनुत्तमम् ॥ २९।३० ।
एवमुक्तस्तथा रुद्रो ब्रह्मणाव्यक्तजन्मना ।
दन्तान्नेत्रे फलम्प्रादाद्भगपूष्णोः क्रतोरपि ॥ ३१ ।
परिज्ञानञ्च सकलं स प्रादादमरेष्वपि ॥ ३२ ।
एवं रुद्रस्य सम्भूतिः सम्भूता ब्रह्मणः पुरा ।
अनेनैव प्रयोगेण देवानां पतिरुच्यते ॥ ३३ ।

* भवदित्यार्षं, अभवदिति साधु ।

यश्चैतच्छृणुयान्नित्यं प्रातरुत्थाय मानवः।
सर्व्वपापविनिर्मुक्तो रुद्रलोकमवाप्नुयात् ॥ ३४ ।

इति वराहपुराणे रुद्रोत्पत्तिर्नाम त्रयस्त्रिंशोऽध्यायः ।



## चतुस्त्रिंशोऽध्यायः ।

महातपा उवाच ।

पितॄणां सम्भवं राजन् कथ्यमानं निबोध मे ॥ १ ।
पूर्व्वं प्रजापतिर्ब्रह्मा सिसृक्षुर्विविधाः प्रजाः ।
एकाग्रमनसः सर्व्वांस्तन्मात्रा मनसा वहिः ।
कृत्वा परमकं ब्रह्मा ध्यायन्सर्व्वेषु रूपकैः ॥ २ ।
तस्यात्मनि तदा योगं गतस्य परमेष्ठिनः ।
तन्मात्रा निर्ययुर्देहाद्धूमवर्णकृतत्विषः ॥ ३ ।
पिवाम इति भाषन्तः सुरान्सोममिति स्म ह ।
ऊर्द्धं जिगमिषन्तो वै वियत्संस्थास्तपस्विनः ॥ ४ ।
तान्दृष्ट्वा सहसा ब्रह्मा तिर्यक्संस्थास्ततोन्मुखान्* ।
भवन्तः पितरः सन्तु सर्व्वेषां गृहमेधिनाम् ॥ ५ ।
ऊर्द्धवक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः ।
इत्युक्त्वा तु तदा ब्रह्मा तेषां पन्थानमाकरोत् ॥ ६ ।

* तत उन्मुखानिति साधु ।

दक्षिणायनसंस्थस्तु पितॄणाञ्च पितामहः ।
तूष्णीं ससर्ज भूतानि तामूचुः पितरस्ततः ।
वृत्तिं नो देहि भगवन् यया विन्दामहे सुखम् ॥ ७

ब्रह्मोवाच ।

अमावास्यादिनं वोऽस्तु तस्यां कुशतिलोदकैः ।
तर्पिता मानुषैस्तृप्तिं परां गच्छत नान्यथा ॥ ८ ।
तिला देया तथैतस्यामुपोष्य पितृभक्तितः ।
परमं तस्य सन्तुष्टा वरं यच्छत मा चिरम् ॥ ९ ।

इति वराहपुराणे पितृसर्गस्थितिवर्णनं नाम चतुस्त्रिंशोऽध्यायः ।

## पञ्चत्रिंशोऽध्यायः ।

महातपा उवाच ।

ब्रह्मणो मानसः पुत्रः अत्रिर्नाम महायशाः ।
तस्य पुत्रोऽभवत्सोमो दक्षजामातृताङ्गतः ॥ १ ।
याः सप्तविंशतिः कन्या दाक्षायण्यः प्रकीर्त्तिताः ।
सोमपत्न्योऽतिमान्यास्तास्तासां श्रेष्ठा तु रोहिणी ॥ २ ।
तामेव रमते सोमो नेतरास्विति शुश्रुम ।
इतराः प्रोचुरागत्य चन्द्रस्यासमतां पितुः ।
दक्षोऽप्यसकृदागत्य तमुवाच स नाकरोत् ॥ ३ ।

समतां सोऽपि तं दक्षः शशापान्तर्हितो भव ।
एवमुक्तः क्षयं सोम अगमद्दक्षशापतः ॥ ४ ।
देवा मनुष्याः पशवो नष्टे सोमे सवीरुधः ।
क्षीणाभवं*स्तदा सर्वा ओषध्यश्च विशेषतः ॥ ५ ।
क्षयं गच्छद्भिरत्यर्थमोषधीभिः सुरर्षभाः ।
मूलेषु वीरुधां सोमः स्थित इत्यूचुरातुराः ॥ ६ ।
तेषाञ्चिन्ताभवत्तीव्रा विष्णुञ्च शरणं ययुः ।
भगवानाह तान् सर्वान् ब्रूत किं क्रियते मया ॥ ७ ।
ते चोचुर्देव दक्षेण शप्तः सोमो विनाशितः ।
तानुवाच तदा देवो मथ्यताञ्जलधोदधिः ।
ओषध्यः† सर्व्वतो देवाः प्रक्षिप्याशु सुसंयतैः ॥ ८ ।
एवमुक्त्वा ततो देवान्दध्यौ रुद्रं हरिः स्वयम् ।
ब्रह्माणञ्च तथा दध्यौ वासुकिन्नेत्रकारणम् ॥ ९ ।
ते सर्वे तत्र सहिता ममन्थुर्वरुणालयम् ।
तस्मिन् सुमथिते जातः पुनः सोमो महीपते ॥ १० ।
योऽसौ क्षेत्रज्ञसंज्ञो वै देहेऽस्मिन् पुरुषः परः ।
स एव सोमो मन्तव्यो देहिनां जीवसंज्ञकः‡ ॥ ११ ।
परोक्षया§ स मूर्त्तिन्तु पृथक् सौम्यां प्रपेदिवान् ।

---

* क्षीणा अभवन्निति साधु ।

† ओषधीरिति साधु ।

‡ जीवसंज्ञित इति (ग) ।

§ परेच्छयेति (ग) ।

तमेव देवमनुजाः षोडशेमाश्च देवताः ॥
उपजीवन्ति तृष्णाश्च तथैवौषधयः प्रभुम् ।
रुद्रस्तमेव सकलं दधार शिरसा तदा ॥ १२।१३ ।
तदात्मिका भवन्त्यापो विश्वमूर्त्तिरसौ स्मृतः ।
तस्य ब्रह्मा ददौ प्रीतः पौर्णमासीन्तिथिं प्रभुः ॥ १४ ।
तस्यामुपोषयेद्राजंस्तमर्थम्प्रतिपादयेत् ।
स चान्नाहारश्च भवेत्तस्य ज्ञानम्प्रयच्छति ।
कान्तिम्पुष्टिञ्च राजेन्द्र धनं धान्यञ्च केवलम् ॥ १५ ।

इति वराहपुराणे सोमोत्पत्तिस्थितिरहस्यं नाम पञ्चत्रिंशोऽध्यायः ।

## षट्त्रिंशोऽध्यायः ।

महातपा उवाच ।

आदित्रेतासु राजानो मणिजा ये प्रकीर्त्तिताः ।
कथयिष्यामि तान्राजन्यत्र जातोऽसि पार्थिव ॥ १ ।
योऽसौ सुप्रभनामासीत्स त्वं राजन्कृते युगे ।
जातोऽसि नाम्ना विख्यातः प्रजापालेति शोभनः ॥ २ ।
शेषास्त्रेतायुगे राजन् भविष्यन्ति महाबलाः ।
यो दीप्ततेजा मणिजः स शान्त इति कीर्त्तितः ॥ ३ ।
सुरश्मिर्भविता राजा शशकर्णो महाबलः ।
शुभदर्शनः पाञ्चालो भविष्यति न संशयः ॥ ४ ।

सुशान्तिरङ्गवंशे वै सुन्दरोऽप्यङ्ग इत्युत ।
सुन्दरञ्च मुचुकुन्दोऽभूत्सुद्युम्नस्तुदरेव च ॥ ५ ॥
सुमनाः सोमदत्तस्तु शुभः संवरणोऽभवत् ।
सुशीलो वसुदानस्तु सुखदोऽसुपतिर्भवत्* ॥ ६ ॥
शम्भुः सेनापतिरभूत्कान्तो दशरथः स्मृतः ।
सोमोऽभूज्जनको राजा एते त्रेतायुगे नृपाः ॥ ७ ॥
सर्व्वे भूमिमिमां राजन् भुक्ता ते वसुधाधिपाः ।
इष्ट्वा च विविधैर्यज्ञैर्दिवं प्राप्स्यन्त्यसंशयम् ॥ ८ ॥

वराह उवाच ।

एवं श्रुत्वा स राजर्षिर्ब्रह्मविद्यासुतप्रभुः† ।
आख्यानं परमप्रीतस्तपश्चर्त्तुमगाहनम् ॥ ९ ॥
ऋषिरध्यात्मयोगेन विहायेदं कलेवरम् ।
ब्रह्मभूतोऽभवद्यात्रि हरौ लयमवाप च ॥ १० ॥
वृन्दावनञ्च राजासौ तपोऽर्थे‡ गतवान् प्रभुः ।
तत्र गोविन्दनामानं हरिं स्तोतुमथारभत्§ ॥ ११ ॥

राजोवाच ।

नमामि देवं जगताञ्च मूर्त्तिं
गोपेन्द्रमिन्द्रानुजमप्रमेयम् ।

* अभवदिति साधु ।

† शुभमिति (ग) ।

‡ तपोऽर्थमिति (ग) ।

§ आरभदिति आर्षम्, आरभतेति साधु ।

संसारचक्रक्रमणैकदक्षं
पृथ्वीधरन्देववरं नमामि ॥ १२ ।
भवोदधौ दुःखशतोर्म्मिभीमे
जरावर्त्ते क्षण पातालमूले ।
तदन्त एको ददते सुखं मे
नमोऽस्तु ते गोपतिरप्रमेय ॥ १३ ।
व्याध्यादियुक्तैः पुरुषैर्यदैव
सहृष्टमानं पुनरेव देव ।
नमोऽस्तु ते युद्धरते महात्मन्
जनार्द्दनोपेन्द्र समस्तबन्धो ॥ १४ ।
त्वमुत्तमः सर्व्वविदां सुरेश
त्वया ततं विश्वमिदं समस्तम् ।
गोपेन्द्र मां पाहि महानुभाव
भवाद्भीतं तिग्मरथाङ्गपाणे* ॥ १५ ।
परोऽसि देवः प्रवरः सुराणां
पुराणरूपोऽसि शशिप्रकाशः ।
हुताशवक्त्राच्युत तीव्रभाव
गोपेन्द्र मां पाहि भवे पतन्तम्† ॥ १६
संसारचक्रक्रमणान्यनेका-

* (ख) पुस्तके श्लोकस्यास्य शेषपादौ नास्ति ।

† एष श्लोकः (ख) पुस्तके नास्ति ।

न्याविर्भवस्त्यच्युत देहिनां यत्* ।
त्वन्मायया मोहितानां सुरेश
कस्ते मायान्तरतेत्† इन्द्रधामा ॥ १७ ।
अगोत्रमस्पर्शमरूपगन्ध-
मनाममनिर्द्देशमजं वरेण्यम् ।
गोपेन्द्र ये त्वामुपासन्ति‡ धीरा-
स्ते मुक्तिभाजो भवधर्म्ममुक्ताः ॥ १८ ।
शब्दातिगं व्योमरूपं विमूर्त्तिं
विकर्म्मिणं शुभभावं वरेण्यम् ।
चक्राब्जपाणिन्तु तथोपचारा-
दुक्तं पुराणे सततन्नमामि ॥ १९ ।
त्रिविक्रमं क्रीतजगत्त्रयञ्च
चतुर्मूर्त्तिं विश्वजगत्क्षितीशम् ।
शम्भुं विभुं भूतपतिं सुरेशं
नमाम्यहं विष्णुमनन्तमूर्त्तिम् ॥ २० ।
त्वं देव सर्व्वाणि चलाचराणि
सृजस्यथो संहरसे§ त्वमेव ।
मां मुक्तिकाममय देव शीघ्रं

* (ख)पुस्तकेऽत्र श्लोकपादोऽधिको वर्त्तते, यथा "परात्परं देवगुरो नमस्ते" इति ।

† तरतीति साधु ।

‡ उपासते इति साधु ।

§ संहरसीति साधु ।

यस्मिन् गता योगिनो नोपयान्ति ॥ २१ ।
जयस्व गोविन्द महानुभाव
जयस्व विष्णो जय पद्मनाभ ।
जयस्व सर्व्वज्ञ जयाप्रमेय
जयस्व विश्वेश्वर विश्वमूर्त्ते ॥ २२ ।

वराह उवाच ।

एवं स्तुत्वा तदा राजा निधाय स्वकलेवरम् ।
परमात्मनि गोविन्दे मोक्षमागाच्च शाश्वतम् ॥ २३ ।

इति वराहपुराणे भगवच्छास्त्रे षट्त्रिंशोऽध्यायः ।



## सप्तत्रिंशोऽध्यायः ।

धरण्युवाच ।

कथमाराध्यसे देव भक्तिमद्भिर्नरैर्विभो ।
स्त्रीभिर्वा सर्वमेतन्मे शंस त्वं भूतभावन ॥ १ ।

वराह उवाच ।

भावसाध्योऽस्म्यहन्देवि न वित्तैर्न जपैरहम् ।
साध्यस्तथापि भक्तानां कायक्लेशं वदामि ते ॥ २ ।
कर्म्मणा मनसा वाचा मच्चित्तो यो नरो भवेत् ।

तस्य व्रतानि वक्ष्येऽहं विविधानि निबोध मे ॥ ३ ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यमकीर्त्तितम् ।
एतानि मानसान्याहुर्व्रतानि तु धराधरे ॥ ४ ।
एकभक्तं तथा नक्तमुपवासादिकञ्च यत् ।
तत्सर्व्वं कायिकम्पुंसां व्रतम्भवति नान्यथा ॥ ५ ।
वेदस्याध्ययनं विष्णोः कीर्त्तनं सत्यभाषणम् ।
अपैशुन्यं हितं धर्म्मवाचिकं व्रतमुत्तमम्* ॥ ६ ।
अत्रापि श्रूयते चान्यदृषिरुग्रतपाः पुरा ।
ब्रह्मपुत्रः पुराकल्पे आरुणिर्नाम नामतः ॥ ७ ।
सोऽरण्यमगमत्किञ्चित्तपोऽर्थी द्विजसत्तमः ।
तपस्तेपे ततस्तस्मिन्नुपवासपरायणः ॥ ८ ।
देविकायास्तटे रम्ये सोऽवसद्ब्राह्मणः किल ।
कदाचिदभिषेकाय स जगाम महानदीम् ॥ ९ ।
तत्र स्नात्वा जपन्विप्रो ददर्शाथान्तमग्रतः ।
व्याधं महाधनुःपाणिमुग्रनेत्रं विभीषणम् ॥ १० ।
तं द्विजं हन्तुमायातः वल्कलानां जिघृक्षया ।
तं दृष्ट्वा क्षुभितो विप्रो ब्रह्मघ्नस्य भयादिति ॥ ११ ।
ध्यायन्नारायणं देवं तस्थौ तत्रैव स द्विजः ॥ १२ ।
तं दृष्ट्वान्तर्गतं हरिं व्याधो भीत इवाग्रतः ।
विहाय सशरञ्चापं ततो वचनमब्रवीत् ॥ १३ ।

* एष श्लोकः (ख) पुस्तके नास्ति ।

व्याध उवाच ।

हन्तुमिच्छन्नहं ब्रह्मन् भवन्तम्मागिहागतः ।
इदानीं दर्शनात्तुभ्यं सा मतिः क्कापि मे गता: ॥ १४
ब्राह्मणानां सहस्राणि सत्स्त्रीणामयुतानि च ।
निहतानि मया ब्रह्मन्सततं पापकारिणा ॥ १५ ।
काङ्गतिं प्रतिपत्स्यामि ब्रह्मन्सोऽहं द्विजोत्तम ।
इदानीं तप्तुमिच्छामि तपोऽहन्त्वत्समीपतः ।
उपदेशप्रदानेन प्रसादङ्कर्त्तुमर्हसि ॥ १६ ।
एवमुक्तोऽप्यसौ विप्रो नोत्तरं प्रत्यपद्यत ।
ब्रह्महा पापकर्म्मेति* मत्वा ब्राह्मणपुङ्गवः ॥ १७ ।
अनुक्तोऽपि स धर्म्मेप्सुर्व्याधस्तत्रैव तस्थिवान् ।
स्नात्वा नद्यां द्विजः सोऽपि वृक्षमूलमुपाश्रितः ॥ १८ ।
कस्यचित्त्वथ कालस्य तां नदीमगमत्किल ।
व्याघ्रो बुभुक्षितः श्रान्तं तं विप्रं हन्तुमुद्यतः ॥ १९ ।
अन्तर्जलगतं विप्रं यावद्व्याघ्रो जिघृक्षति ।
तावद्व्याधेन व्याघ्रोऽसौ सद्यः प्राणैर्वियोजितः ॥ २० ।
तस्माद्व्याघ्रशरीरात्तु उत्थाय पुरुषः किल ।
विप्रस्यान्तर्जले मग्नः श्रुत्वा तं शब्दमाकुलम् ।
नमो नारायणायेति वाक्यमेतदुवाच ह ॥ २१ ।
व्याघ्रेणापि श्रुतो मन्त्रः प्राणैः कण्ठस्थितैस्ततः ।
श्रुतमात्रे जहौ प्राणान् पुरुषश्चाभवच्छुभः ॥ २२ ।

---

* पापकर्मेति (ख) (ग) पुस्तकयोः पाठः ।

सोऽब्रवीद्यामि तन्देशं यत्र विष्णुः सनातनः ।
त्वत्प्रसादाद्विजश्रेष्ठ मुक्तपाप्मा निरामयः ॥ २३ ।
इत्युक्तो ब्राह्मणः प्राह कोऽसि त्वं पुरुषोत्तम ।
सोऽब्रवीत्तस्य राजेन्द्र यद्वृत्तं पूर्व्वजन्मनि ॥ २४ ।
दीर्घबाहुरिति ख्यातः सर्व्वधर्म्मविशारदः ।
अहं जानामि वेदांश्च अहं वेद्मि शुभाशुभम् ।
ब्राह्मणैर्नैव मे कार्य्यं किं वस्तु ब्राह्मणा इति ॥ २५ ।
तस्यैवंवादिनो विप्राः सर्व्वे क्रोधसमन्विताः ।
ऊचुः शापं दुराधर्षं क्रूरो व्याघ्रो भविष्यसि* ॥ २६ ।
अवमानात्तु विप्राणां नात्यर्थं स्मरणन्तव ।
मृत्युकाले तु संमूढ़ केशवेति शृणुष्यसि* ॥ २७ ।
इत्युक्तोऽहं पुरा तैस्तु ब्राह्मणैर्वेदपारगैः ।
तदेव सर्व्वं सम्प्राप्तो ब्रह्मशापं सुपुष्कलम् ॥ २८ ।
ततस्ते ब्राह्मणाः सर्व्वे प्रणिपत्य मया मुने ।
उक्तानुग्रह†हेतोर्वै त ऊचुर्मामिदं पुरा ॥ २९ ।
षष्ठान्नकालिकस्याग्रे यस्ते स्थास्यति कश्चन ।
स भक्ष्यस्ते तु भविता कञ्चित्कालन्नराधिप ॥ ३० ।
यदेषुघातं लब्ध्वा तु प्राणैः कण्ठगतैर्भवान् ।
श्रोष्यसे द्विजवक्त्रात्तु नमो नारायणेति च ।
तदा स्वर्गगतिस्तुभ्यं भविता नात्र संशयः ॥ ३१ ।

---

* श्रोष्यसीति साधु ।

† उक्ताः अनुग्रह इति साधु ।

परवक्रगतश्चापि विष्णोर्नाम श्रुतं मया ।
कृतद्वेषस्य विप्राणां प्रत्यक्षोऽभवदच्युतः ॥ ३२ ।
यः पुनर्ब्राह्मणान् पूज्य* स्ववक्रेण नमो हरिम् ।
वदन् प्राणैर्वियुज्येत मुक्तोऽसौ वीतकिल्बिषः ॥ ३३ ।
सत्यं सत्यं पुनः सत्यमुत्क्षिप्य भुजमुच्यते ।
जङ्गमाः ब्राह्मणा देवाः कूटस्थः पुरुषोत्तमः ॥ ३४ ।
एवमुक्त्वा गतः स्वर्गं स राजा वीतकल्मषः ।
ब्राह्मणोऽपि सदा मुक्तस्तं व्याधम्प्रत्यभाषत ॥ ३५ ।

ऋषिरुवाच ।

जिघृक्षोर्मृगराजस्य यत्त्वया रक्षितो ह्यहम् ।
तत्पुत्र तुष्टस्ते दद्मि वरं वरय सुव्रत ॥ ३६ ।

व्याध उवाच ।

एष एव वरो मह्यं यत्त्वं मां भाषसे द्विज ।
अतः परं वरेणाहं किङ्करोमि प्रशाधि माम् ॥ ३७

ऋषिरुवाच ।

अहं त्वया पुरा व्याध प्रार्थितोऽस्मि तपोऽर्थिना ।
बहुपातकयुक्तेन घोररूपेण चानघ ॥ ३८ ।
इदानीं तव पापानि देविकाभिषवेण च ।
मद्दर्शनेन च चिरं विष्णुनामश्रुतेन च ।
नष्टानि शुद्धदेहोऽसि साम्प्रतन्नात्र संशयः ॥ ३९ ।

---

* पूजयित्वेति साधु ।

इदानीं वरमेकन्त्वं गृहाण मम सन्निधौ ।
तपः कुरुष्व साधो त्वं चिरकालं यदिच्छसि ॥ ४० ।

व्याध उवाच ।

य* एष भवता प्रोक्तो विष्णुर्नारायणः प्रभुः ।
स कथं प्राप्यते मर्त्यैरेष एव वरो मम ॥ ४१ ।†

ऋषिरुवाच ।

तमुद्दिश्य व्रतं कुर्य्याद्यत्किञ्चित्पुरुषोऽच्युतम् ।
स परन्तमवाप्नोति भक्त्या युक्तः पुमानिति ॥ ४२ ।
एवं ज्ञात्वा भवान् पुत्र व्रतमेतत्समाचर ।
न भक्षयेद्गणान्नन्तु न वदेदनृतं क्वचित् ॥ ४३ ।
एतत्ते व्रतमादिष्टं मया व्याध वरं ध्रुवम् ।
अत्रैव तपसा युक्तस्तिष्ठ त्वं यावदिच्छसि ॥ ४४ ।

वराह उवाच ।

एवञ्चिन्तान्वितं मत्वा वरदो ब्राह्मणोऽभवत् ।
मोक्षार्थिनमथोक्तं‡ बुद्ध्वा वञ्चयित्वा गतो मुनिः ॥ ४५ ।

इति वराहपुराणे प्रागितिहासे सप्तत्रिंशोऽध्यायः ।

—०:०—

* स एष इति (ग) ।

† एवमुक्त्वा तु तं व्याधं तस्मात्प्राणात्यये द्विजः ।
इत्येवं सह पुत्रेभ्यो प्रागिति प्राह संक्षेपः ॥
(ख) पुस्तके एषश्लोकोऽधिकोवर्त्तते ।

‡ नामत इति (ग) ।

# अष्टाविंशोऽध्यायः ।

वराह उवाच ।

स शुभं शोभनं मार्गमास्थाय व्याधसत्तमः ।
तपस्तेपे निराहारस्तं गुरुं मनसा स्मरन् ॥ १ ।
भिक्षाकाले* तु सम्प्राप्ते शीर्णपर्णान्यभक्षयत् ॥ २ ।
स कदाचित्क्षुधाविष्टो वृक्षमूलं समाश्रितः ।
बुभुक्षितस्तरोः पर्णान्यैच्छद्भक्षितुमन्तिकात् ॥ ३ ।
इत्येवं कुर्वतो व्योम्नि वागुवाचाशरीरिणी ।
मा भक्षयस्व सकठमुच्चैरेवं प्रभाषिते ॥
ततोऽसौ तद्विहायान्यद्वार्चं पतितमग्रहीत् ।
तदप्येवं निषिद्धं स्यादन्यदेव तथैव च ॥ ४ । ५ ।
एवं स सकठं मत्वा व्याधः किञ्चिन्न भक्षयत्† ।
निराहारस्तपस्तेपे स्मरन् गुरुमतन्द्रितः ॥ ६ ।
एवन्तपस्यतस्तस्य काले ऋषिवरोऽभ्ययात् ।
दुर्वासाः शंसितात्मा वै प्राणयुक्तमपश्यत ।
व्याधन्तपोत्थ‡तेजोभिर्ज्वलमानं§ हविर्यथा ॥ ७ ।
सोऽपि व्याधस्तु तं नत्वा शिरसाऽथ महामुनिम् ।

* भक्ष्यकाल इति (ग) ।

† अभक्षयदिति साधु ।

‡ तप उत्थेति साधु ।

§ ज्वलन्तमिति साधु ।

उवाच तं कृतार्थोऽस्मि भगवन्दर्शनात्तव ।
इदानीं श्राद्धकाले त्वं प्राप्तोऽसि मम दैवतम् ।
शीर्णपर्णादिभिः कृत्वा प्रीणयामि द्विजोत्तमम् ॥ ८।९ ।
दुर्वासा अपि तं शुद्धभावपूतं जितेन्द्रियम् ।
जिज्ञासुस्तत्तपो वाक्यमिदमुच्चैरुवाच ह ॥ १० ।
यवगोधूमशालीनामन्नञ्चैव सुसंस्कृतम् ।
दीयतां मे क्षुधार्त्ताय त्वामुद्दिश्यागताय च ॥ ११ ।
इत्युक्ते न्वसौ व्याधश्चिन्तां परमिकाङ्गतः ।
क्व संभविष्यते* मद्यमिति चिन्तापरोऽभवत् ॥ १२ ।
तस्य चिन्तयतः पात्रमाकाशात्पतितं शुभम् ।
सौवर्णं सिद्धिसंयुक्तं तज्जग्राह करेण सः ॥ १३ ।
तद्गृहीत्वा मुनिं प्राह दुर्वासाख्यं ससाध्वसः ।
अत्रैव स्थीयतां ब्रह्मन्यावद्भिक्षाटनं त्वहम् ।
करोमि मत्प्रसादोऽयं क्रियतां ब्रह्मवित्तम ॥ १४ ।
एवमुक्त्वा ततो भिक्षां याचितुं व्याधसत्तमः ।
नातिदूरेण नगरं वनघोषसमन्वितम् ॥ १५ ।
तस्य तत्र प्रयातस्य अग्रतः सर्व्वशोभनाः ।
वृक्षेभ्यो निर्ययुश्चान्या हेमपात्राग्रपाणयः ॥ १६ ।
विविधान्नानि तस्याशु दत्त्वा पात्रम्प्रपूरितम् ।
स च भूतार्थमात्मानं मत्वा पुनरथाश्रमम् ।
आजगाम ततोऽपश्यत्तमृषिं जपतां वरम् ॥ १७ ।

* संभविष्यतीति साधु ।

तं दृष्ट्वा स्थाप्य* तां भिक्षां शुची देशे प्रसन्नधीः ।
प्रणम्य तमृषिं वाक्यमुवाच व्याधसत्तमः ॥ १८ ॥
ब्रह्मन् चालय पादौ त्वमुपविश्यासने शुभे ।
यदि मेऽनुग्रहो देव तदेवं कर्त्तुमर्हसि ॥ १९ ॥
एवमुक्तः स जिज्ञासुस्तपोवीर्य्यं शुभं मुनिः ।
नदीं गन्तुं न शक्नोमि जलपात्रं न चास्ति मे ।
कथं प्रचालनं व्याध पादयोर्मे भविष्यति ॥ २० ॥
इत्येवं मुनिना प्रोक्तो व्याधश्चिन्तापरोऽभवत् ।
किङ्करोमि कथञ्चास्य भोजनं वै भविष्यति ॥ २१ ॥
एवं सञ्चिन्त्य मनसा गुरुं स्मृत्वा विचक्षणः ।
जगाम शरणन्तान्तु सरितन्देविकां सुधीः ॥ २२ ॥

व्याध उवाच ।

व्याधोऽस्मि पापकर्म्मास्मि ब्रह्महास्मि सरिद्वरे ।
तथापि संस्मृता देवी पाहि मां शरणागतम् ॥ २३ ॥
देवतां नैव जानामि न मन्त्रं न तथार्चनम् ।
गुरुपादौ परन्ध्यात्वा पश्यामि सततं शुभम्॥ २४ ॥
एवंविधस्य मे देवि दयां कुरु सरिद्वरे ।
ऋषेरासन्नतां याहि पादशौचार्थमापगे ॥ २५ ॥
एवमुक्ता तु व्याधेन देविका पापनाशिनी ।
आजगाम यतस्तस्थौ दुर्वासा शंसितव्रतः ॥ २६ ॥
तद्दृष्ट्वा महदाश्चर्य्यं दुर्वासा विस्मयं ययौ ।

* स्थापयित्वेति भाषु ।

प्रक्षाल्य हस्तपादौ च तदन्नं श्रद्धयान्वितम्।
बुभुजे परमप्रीतस्तथाचम्य विचक्षणः॥ २७।
तमस्थिशेषं व्याधन्तु क्षुधा दुर्बलताङ्गतम्।
उवाच वेदाः साङ्गास्ते सरहस्या पदक्रमाः।
ब्रह्मविद्या पुराणानि प्रत्यक्षाणि भवन्तु ते॥ २८।
एवमुदाहरंस्तस्य दुर्वासा नाम चाकरोत्।
भवान्सत्यतपा नाम ऋषिराद्यो भविष्यसि॥ २९।
एवं दत्तवरो व्याधस्तमाह मुनिसत्तमम्।
व्याधो भूत्वा कथं ब्रह्मन्वेदानध्यापयाम्यहम्॥ ३०।

ऋषिरुवाच।

प्राक्शरीरङ्गतन्तेऽद्य निराहारस्य सत्तम।
तपोमयं शरीरन्ते पृथग्भूतं न संशयः॥ ३१।
प्राग्विज्ञानं गतन्नाशमिदानीं शुद्धमक्षरम्।
उत्पन्नं शुद्धकायोऽसि सत्यमेतद्ब्रवीमि ते।
तेन वेदाश्च शास्त्राणि प्रतिभास्यन्ति वै मुने॥ ३२।

इति वराहपुराणे सत्यतप उपाख्याने अष्टात्रिंशोऽध्यायः।

---

# ऊनचत्वारिंशोऽध्यायः ।

सत्यतपा उवाच* ।

भगवन्द्वे शरीरे तु इति यत्परिकीर्त्तितम् ।
तन्मे कथय भेदं वै केन ब्रह्मविदां वर ॥ १ ।

दुर्वासा उवाच ।

न द्वे त्रीणि शरीराणि वाच्यं तद्विपरीतकम् ।
विभोगायतनञ्चैव शरीराणीति देहिनाम् ॥ २ ।
प्रागवस्थमधर्म्माख्यं परिज्ञानविवर्ज्जितम् ।
अपरं सव्रतं तद्धि ज्ञेयमत्यन्तधार्म्मिकम् ॥ ३ ।
धर्म्माधर्म्मोपभोगाय यत्तृतीयमतीन्द्रियम् ।
तत्त्रिभेदं विनिर्द्दिष्टं ब्रह्मविद्भिर्विचक्षणैः ॥ ४ ।
यावता धर्म्मभोगश्च भुक्तिश्चेति त्रिभेदकम् ॥ ५ ।
यस्तु भावः पुरा ह्यासीत्प्राणिनो निघ्नतस्तव ।
तत्पापाख्यं शरीरन्ते† पापसंघमतोऽभवत् ॥ ६ ।
इदानीं शुभवृत्तिन्तु कुर्व्वतस्तप आर्जवम् ।
अपरन्धर्मरूपन्तु शरीरन्ते व्यवस्थितम् ।
तेन‡ वेदपुराणानि ज्ञातुमर्हस्यसंशयम् ॥ ७ ।
यदाष्टके सम्परिवर्त्तते पुमां-

* व्याध उवाच इति (ख) ।

† शरीरन्तु इति (क) ।

‡ येनेति (ग) ।

स्तदान्यवस्तो भवतीह निश्चितम् ।
गताष्टवर्षस्तु पुमान्यदा भवे-
त्तदान्यचेष्टो भवतीह मानवः ॥ ८ ।
एकं शरीरं हि पृथक् निर्द्दिष्टं ब्रह्मवादिभिः ।
अवस्थाभेदतश्चैवं तदेतत्कथितन्त्रिधा ।
अन्तरन्नास्ति चैतस्य यथा मृद्घटयोरिव ॥ ९ ।
कर्म्मकाण्डश्चतुर्भेदं ब्राह्मणादिषु कीर्त्तितम् ।
तत्र वेदोक्तकर्म्माणि त्रयः कुर्व्वन्ति नित्यशः ॥ १० ।
त्रिशुश्रूषामथैकस्तु एता वेदोदिताः क्रियाः ।
एतान्धर्म्मांस्तु विज्ञाय ब्राह्मणो यस्तपस्यति ।
तस्य मुक्तिर्भवेन्नूनं वेदवादरतस्य च ॥ ११ ।
सत्यतपा उवाच ।
यत्तदेतत्परं ब्रह्म त्वया प्रोक्तं महामुने ।
तस्य रूपं न जानन्ति योगिनोऽपि महात्मनः ॥ १२ ।
अनामगोचरह्वितममूर्त्तं मूर्त्तिवर्ज्जितम् ।
कथं तज्ज्ञायते ब्रह्म संज्ञानामविवर्ज्जितम् ॥ १३ ।
तत्तस्य संज्ञां कथय येन जानाम्यहं गुरो ॥ १४ ।
दुर्व्वासा उवाच ।
यदेतत्परमं ब्रह्म वेदे शास्त्रेषु पठ्यते ।
स वेदः पुण्डरीकाक्षः स्वयं नारायणो हरिः ॥ १५ ।
स यज्ञैर्विविधैरिष्टैर्दानैर्दत्तैश्च सत्तम ।
प्राप्यते परमो देवः स्वयं नारायणो हरिः ॥ १६ ।

सत्यतपा उवाच ।

भगवन् बहुवित्तेन ऋत्विग्भिर्वेदपारगैः ।
प्राप्यते पुण्यवद्भिर्हि देवो नारायणो भ्रमम् ॥ १७ ।
अधनेन* कथन्देवः प्राप्यते तद्वदस्व मे ।
वित्तेन च विना दानं दातुं विप्र न शक्यते ॥ १८ ।
विद्यमानेऽपि न मतिः कुटुम्बासक्तचेतसः ।
तस्य नारायणो दूरे सर्व्वथा प्रतिभाति मे ॥ १९ ।
अल्पायासेन लभ्येत येन देवः सनातनः ।
तन्मे विशेषतो ब्रूहि सर्व्ववर्णैः कृतम्भवेत् ॥ २० ।

दुर्वासा उवाच ।

कथयामि परं गुह्यं रहस्यन्देवनिर्म्मितम् ।
धरण्या यत्कृतं पूर्व्वं मज्जन्त्या तु रसातले ॥ २१ ।
पृथिव्याः पार्थिवो भावः सलिलेनातिरेचितः ।
तस्मिन् सलिलमग्ने तु पृथ्वी प्रायाद्रसातलम् ॥ २२ ।
सा भूतधारिणी देवी रसातलगता शुभा ।
आराधयामास विभुं देवन्नारायणं विभुम् ॥ २३ ।
उपवासव्रतैर्द्देवी नियमैश्च पृथग्विधैः ।
कालेन महता तस्याः प्रसन्नो गरुड़ध्वजः ।
उज्जहार स्थितौ स्थित्यां स्थापयामास सोऽव्ययः ॥ २४ ।

सत्यतपा उवाच ।

कोऽसौ धरण्या सञ्चीर्ण उपवासो महामुने ।

* अधमेनेति (क), (ख) ।

कानि व्रतानि च तथा एतन्मे वक्तुमर्हसि ॥ २५ ॥

दुर्वासा उवाच ।

यदा मार्गशिरे* मासि दशम्यान्नियतात्मवान् ।
कृत्वा देवार्च्चनन्धीमानग्निकार्य्यं यथाविधि ॥
शुचिवासाः प्रसन्नात्मा हव्यमन्नं सुसंस्कृतम् ।
भुक्त्वा पञ्चपदङ्गत्वा पुनः शौचन्तु पादयोः ॥
कृत्वाष्टाङ्गुलमात्रन्तु क्षीरवृक्षसमुद्भवम् ।
भक्षयेद्दन्तकाष्ठन्तु तत आचम्य यत्नतः ॥ २६।२७।२८ ।
स्पृष्ट्वा द्वाराणि सर्व्वाणि चिरन्ध्यात्वा जनार्द्दनम् ।
शङ्खचक्रगदापाणिं पीताम्बरधरं विभुम् ॥
प्रसन्नवदनं देवं सर्व्वलक्षणपूजितम् ।
ध्यात्वा पुनर्जलं हस्ते गृह्य† भावैर्जनार्द्दनम् ॥
दद्यादर्घञ्च देवाय करतोयेन मानवः ।
एवमुच्चारयन्वाचं तस्मिन् काले महामुने ॥ २९।३०।३१ ।
एकादश्यान्निराहारः स्थित्वा चैवापरेऽहनि ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ॥ ३२ ।
एवमुक्त्वा ततो रात्रौ देवदेवस्य सन्निधौ ।
जपन्नारायणायेति स्वपित्तत्र विधानतः ॥ ३३ ।
ततः प्रभाते विमले नदीङ्गत्वा समुद्रगाम् ।
इतरां वा तडागं वा गृहे वा नियतात्मवान् ॥

* मार्गशिर इति आर्षं, मार्गशिरसीति साधु ।

† गृहीत्वेति साधु ।

आनीय मृत्तिकां शुद्धां मन्त्रेणानेन मानवः* ।
धारणं पोषणन्त्वत्तो भूतानां देवि सर्व्वदा ॥
तेन सत्येन मे पापं यावन्मोचय सुव्रते ।
ब्रह्माण्डोदरतीर्थानि त्वया स्पृष्टानि देवते ।
तेनेमां मृत्तिकान्त्वत्तो गृह्य† स्नास्येऽद्य मेदिनि ।
त्वयि सर्व्वे रसा नित्याः स्थिता वरुण सर्व्वदा ॥
तेनेमां मृत्तिकां प्लाव्य‡ पूतां कुरुहि§ मा चिरम् ।
एवं मृदं तथा तोयं प्रगृह्यात्मानमालभेत् ।
तिः कृत्वा शेषमृत्स्नात्वा सर्व्वाङ्गं लेपयेद्बुधः¶॥ ३४—३७।
वारुणैरेव मन्त्रैस्तु स्नानं कुर्य्याद्यथाविधि ।
स्नात्वा चावश्यकं कृत्वा पुनर्देवगृहं व्रजेत् ॥ ३८ ।
तत्राराध्य मया युक्तं देवं नारायणं प्रभुम् ।
केशवाय नमः पादौ कटिं दामोदराय च ॥ ३९ ।
ऊरुयुग्मं नृसिंहाय उरः श्रीवत्सधारिणे ।
कोष्ठं कौस्तुभवासाय वक्षः श्रीपतये तथा ॥ ४० ।
त्रैलोक्ये विजयायेति बाहू सर्व्वात्मने शिरः ।
रथाङ्गधारिणे चक्रं शङ्करायेति वारिजम् ॥ ४१ ।

---

* (ग) पुस्तके अधनेन कथं देव इत्यस्मात् नागरं तत्र कार्य्यदित्यन्तः सन्दर्भो नास्ति ।

† गृहीत्वेति साधु ।

‡ प्लावयित्वेति साधु ।

§ कुरुहीति चार्षं, कुरु इति साधु ।

¶ (ख) पुस्तके (३७) श्लोकस्य शेषचरणं तथाऽपरश्लोकस्य चरणत्रयं नास्ति ।

गम्भीरायेति च गदामम्भोजं शान्तिमूर्त्तये।
एवमभ्यर्च्य देवेशं देवं नारायणं प्रभुम्।
पुनस्तस्याग्रतः कुम्भान् चतुरः स्थापयेद्बुधः।
जलपूर्णान्समाल्यांश्च तिलपूर्णैः सकाञ्चनैः॥ ४२।४३।
चत्वारस्ते समुद्रास्तु कलशाः परिकीर्त्तिताः।
तेषां मध्ये शुभं पीठं स्थापयेद्वस्त्रगर्भितम्॥ ४४।
सौवर्णं राजतं पात्रं ताम्रं वाद्रवं तथा।
अलाभे सर्व्वपात्राणां पालाशं पत्रमिष्यते॥ ४५।
तोयपूर्णन्तु तत्कृत्वा तस्मिन्पात्रे ततो न्यसेत्।
सौवर्णं मत्स्यरूपेण कृत्वा देवं जनार्द्दनम्॥
सर्व्वावयवसंयुक्तं सर्व्वाभरणभूषितम्।
तत्रानेकविधैर्भक्ष्यैः फलैः पुष्पैश्च शोभितम्।
गन्धधूपैश्च वस्त्रैश्च अर्च्चयित्वा यथाविधि॥ ४६।४७।
रसातलगता वेदा यथा देव त्वया हृताः।
मत्स्यरूपेण तद्वन्मां भवानुद्धर केशव॥ ४८।
एवमुच्चार्य तस्याग्रे जागरं तत्र कारयेत्॥ ४९।
यथा विभवसारेण प्रभाते विमले तथा।
चतुर्णां ब्राह्मणानाञ्च चतुरो दापयेद्घटान्॥ ५०।
पूर्व्वन्तु बह्वृचे* दद्याच्छन्दोगे दक्षिणं तथा।
यजुःशाखान्विते दद्यात्पश्चिमं घटमुत्तमम्॥ ५१।
उत्तरङ्कामतो दद्यादेष एव विधिः स्मृतः।

* बह्वच इति (ग)।

ऋग्वेदः प्रीयतां पूर्व्वे सामवेदस्तु दक्षिणे ॥
यजुर्वेदः पश्चिमतो ह्यथर्व्वश्चोत्तरेण तु ।
अनेन क्रमयोगेन प्रीयतामिति वाचयेत् ॥ ५२।५३ ।
सौवर्णं मत्स्यरूपन्तु आचार्य्याय निवेदयेत् ।
गन्धधूपादिवस्त्रैश्च सम्पूज्य विविधक्रमात् ॥ ५४ ।
यस्त्विमं सरहस्यञ्च मन्त्रैश्चैवोपपादयेत् ।
विधानं तस्य वै दत्त्वा फलं कोटिगुणोत्तरम् ॥ ५५ ।
प्रतिपद्य गुरुं यस्तु मोहाद्विप्रतिपद्यते ।
स कोटिजन्म नरके पच्यते पुरुषाधमः ॥ ५६ ।
विधानस्य प्रदातासौ गुरुरित्युच्यते बुधैः ।
एवं दत्त्वा विधानेन द्वादश्यां विष्णुमर्च्य च* ॥
विप्राणां भोजनं दद्याद्यथाशक्त्या सदक्षिणम् ॥ ५७ ।
सतिलं ताम्रपात्रञ्च स्थापितं कलशोपरि ।
तत्सर्व्वं जलपात्रस्थं ब्राह्मणाय कुटुम्बिने ।
देवं दद्यान्महाभागस्ततो विप्रांश्च भोजयेत् ॥ ५८ ।
भूरिणा परमान्नेन ततः पश्चात्स्वयन्नरः ।
भुञ्जीत सहितो बालैर्वाग्यतः संयतेन्द्रियः ॥ ५९ ।
अनेन विधिना यस्तु धरणीव्रतकृन्नरः ।
तस्य पुण्यफलञ्चाग्र्यं शृणु बुद्धिमतां वर ॥ ६० ।
यदि वक्त्रसहस्राणि भवन्ति मम सुव्रत ।
आयुश्च ब्रह्मणस्तुल्यं भवेद्यदि महाव्रत ।

---

* अर्च्य च इति पाठम्, अर्च्चयित्वा इति साधु ।

तदानीमस्य धर्मस्य फलं कथयितुं भवेत् ॥ ६१ ।
तथाप्युद्देशतो ब्रह्मन् कथयिष्यामि तच्छृणु ।
दशसप्तदशाब्दे च अष्टौ चत्वार एव च ॥
लक्षायुतानि चत्वारि* एकस्यास्य चतुर्युगम् ।
तैरेकसप्ततियुगं भवेन्मन्वन्तरं मुने ॥ ६२।६३ ।
चतुर्दशाहोरात्रस्तु तावती रात्रिरिष्यते ।
एवं त्रिंशद्दिनो मासः ते द्वादश समाः स्मृताः ॥ ६४ ।
तेषां शतं ब्रह्मणस्तु आयुर्नास्त्यत्र संशयः ॥ ६५ ।
यः सकृद्द्वादशीमेतामनेन विधिना क्षिपेत् ।
स ब्रह्मलोकमाप्नोति तावत्कालञ्च तिष्ठति ॥ ६६ ।
ततो ब्रह्मोपसंहारं संहारे तल्लयेच्चिरम् ।
पुनः सृष्टौ भवेद्देवो राजा नाम महातपाः ॥ ६७ ।
ब्रह्महत्यादिपापानि इहलोककृतान्यपि ।
अकामः कामतो वापि तानि नश्यन्ति तत्क्षणात् ॥ ६८ ।
इह लोके दरिद्री यो भ्रष्टराज्योऽथवा नृपः ।
उपोष्यते विधानेन स राजा जायते ध्रुवम् ॥ ६९ ।
बन्ध्या नारी भवेद्या तु अनेन विधिना शुभा ।
उपोष्यति भवेत्तस्याः पुत्रः परमधार्म्मिकः ॥ ७० ।
अगम्यागमनं येन कृतं जानाति मानदः ।
स इमं विधिमासाद्य तस्मात्पापाद्विमुच्यते ॥ ७१ ।
ब्रह्मक्रियाया लोपेन बहुवर्षशतेन च ।

---

* चाशीतीति (ग) ।

उपोष्येमां सकृद्भक्त्या वेदसंस्कारमाप्नुयात् ॥ ७२ ।
किमत्र बहुनोक्तेन न तदस्ति महामुने ।
अप्राप्यं प्रापयति या अतः कार्य्या सदा नरैः ॥ ७३ ।
अनेन विधिना ब्रह्मन् स्वयमेव ह्युपोषिता ।
धरण्या मन्नया तात नात्र कार्य्या विचारणा ॥ ७४ ।
अदीक्षिताय नो देयं विधानं नास्तिकाय च ।
देवब्रह्मद्विषे वापि न श्राव्यन्तु कदाचन ॥ ७५ ।
गुरुभक्ताय दातव्यं सद्यः पापप्रणाशनम् ।
इह जन्मनि सौभाग्यं धनं धान्यं वरस्त्रियः ।
भवन्ति विविधास्तस्य य उपोष्यति मानवः ॥ ७६ ।
य इमं श्रावयेद्भक्त्या द्वादशीकल्पमुत्तमम् ।
शृणोति वा स पापेभ्यः सर्व्वैरेव प्रमुच्यते ॥ ७७ ।

इति वराहपुराणे धरणीव्रते मत्स्यद्वादशीव्रतं नाम ऊनचत्वारिंशोऽध्यायः ।



## चत्वारिंशोऽध्यायः ।

दुर्वासा उवाच ।

तथैव पौषमासे तु अमृतं मथितं सुरैः ।
तत्र कूर्म्मो भवेद्देवः स्वयमेव जनार्द्दनः ॥ १ ।
तस्येयन्तिथिरुद्दिष्टा महती कूर्म्मरूपिणः ।
पौषमासस्य या शुक्ला दशमीति निगद्यते ॥ २

तस्यां प्रागेव सङ्कल्प्य प्राग्वत्स्नानादिकाः क्रियाः।
निर्वर्त्त्याराधयेद्भक्त्या एकादश्यां जनार्द्दनम्।
पृथङ्मन्त्रैर्मुनिश्रेष्ठ देवदेवं जनार्द्दनम्॥ ३।

कूर्म्माय पादौ प्रथमं प्रपूज्य
नारायणायेति हरेः कटिञ्च।
सङ्कर्षणायेत्युदरं विशोके-
त्युरोभवायेति तथैव कण्ठम्॥ ४।
सुबाहवे चैव भुजौ शिरश्च
नमोविशालाय नमोऽस्तु देवः।
स्वनाममन्त्रेण सुगन्धपुष्पै-
र्धूपादिनैवेद्यफलैर्विचित्रैः॥ ५।
अभ्यर्च्य देवं कलशं तदग्रे
संस्थाप्य मालासितवस्त्रयुक्तम्।
तं रत्नगर्भन्तु पुरेव कृत्वा
स्वशक्तितो हेममयञ्च देवम्॥ ६।
समन्दरं कूर्म्मरूपेण कृत्वा
संस्थाप्य ताम्रे घृतपूर्णपात्रे।
पूर्णे घटस्योपरि सन्निवेश्य
तद्ब्राह्मणं पूज्य* तथैव दद्यात्॥ ७।
श्वो ब्राह्मणान्पूज्य च दक्षिणादिभि-
र्यथाशक्त्या प्रीणयेद्देवदेवम्।

* पूजयित्वेति साधुः।

नारायणं कूर्म्मरूपेण युक्तं
पश्चात्तु भुञ्जीत सभृत्यवर्गः* ॥ ८ ।
एवं कृते विप्र समस्तपापं
विनश्यते नात्र कुर्य्याद्विचारः ।
संसारचक्रं स विहाय शुद्धं
प्राप्नोति लोकञ्च हरेः पुराणम् ॥ ९ ।
प्रयान्ति पापानि विनाशमाशु
श्रीमांस्तथा जायते सत्यधर्म्मः ।
अनेकजन्मान्तरसञ्चितानि
नश्यन्ति पापानि नरस्य भक्त्या ॥ १० ।
प्रागुक्तरूपन्तु फलं लभेत
नारायणस्तुष्टिमायाति सद्यः ॥ ११ ।

इति वराहपुराणे कूर्म्मद्वादशीव्रतं नाम चत्वारिंशोऽध्यायः ।

## एकचत्वारिंशोऽध्यायः ।

दुर्वासा उवाच ।

एवं माघे सिते पक्षे द्वादशी धरणीभृतः ।
वराहस्य शृणुष्वाद्यां मुने परमधार्म्मिक ॥ १ ।

---

* पश्चात् स्वयं भुञ्जीत भृत्यवर्गं इति (ख) ।

प्रागुक्तेन विधानेन सङ्कल्पस्थानमेव च ।
कृत्वा देवं समभ्यर्च्य एकादश्यां विचक्षणः ॥ २ ॥
धूपनैवेद्यगन्धैश्च अर्चयित्वाच्युतन्नरः ।
पश्चात्तस्याग्रतः कुम्भं जलपूर्णन्तु विन्यसेत् ॥ ३ ॥
वराहायेति पादौ तु माधवायेति वै कटिम् ।
क्षेत्रज्ञायेति जठरं विश्वरूपायेत्युरो हरेः* ॥ ४ ॥
सर्व्वज्ञायेति कण्ठन्तु प्रजानां पतये शिरः ।
प्रद्युम्नायेति च भुजौ दिव्यास्त्राय सुदर्शनम् ॥ ५ ॥
अमृतोद्भवाय शङ्खन्तु एष देवार्च्चने विधिः ।
एवमभ्यर्च्य मेधावी तस्मिन्कुम्भे तु विन्यसेत् ॥ ६ ॥
सौवर्णं रौप्यताम्रे वा पात्रे विभवशक्तितः ।
सर्व्वबीजैस्तु सम्पूर्णं स्थापयित्वा विचक्षणः ॥ ७ ॥
तत्र शक्त्या तु सौवर्णं वराहङ्कारयेद्बुधः† ।
दंष्ट्राग्रेणोद्धृतां भूमिं सपर्व्वतवनद्रुमाम् ।
माधवं मधुहन्तारं वराहरूपमास्थितम् ॥ ८ ॥
सर्व्वबीजभृतं पात्रं रत्नगर्भं घटोपरि ।
स्थापयेत्परमं देवं जातरूपमयं‡ हरिम् ॥ ९ ॥
सितवस्त्रयुगाच्छन्नं ताम्रपात्रे तु वै मुने ।

* अत्र छन्दोदोष आर्षः, एवमन्यत्रापि ।

† स्थापयित्वा विचक्षणः इति (ख) ।

‡ ज्ञानरूपमयमिति (क), (ख) ।

स्थाप्या*र्चयेद्गन्धपुष्पैर्नैवेद्यैर्विविधैः शुभैः ॥ १० ।
पुष्पमण्डलिकां कृत्वा जागरं तत्र कारयेत् ।
प्रादुर्भावान्हरेस्तत्र वाचयेद्भावयेद्बुधः ॥ ११ ।
एवम्पूजां विधायाथ प्रभाते उदिते रवौ ।
शुचिः स्नात्वा हरिं पूज्य† ब्राह्मणाय निवेदयेत् ॥ १२ ।
वेदवेदाङ्गविदुषे साधुवृत्ताय धीमते ।
विष्णुभक्ताय शान्ताय‡ श्रोत्रियाय कुटुम्बिने ॥ १३ ।
एवं सकुम्भन्तं दत्त्वा हरिं वराहरूपिणम्§ ।
दत्त्वा चाथ लभेद्यत्तु फलं तन्मे निशामय ॥ १४ ।
इह जन्मनि सौभाग्यं श्रीः कान्तिस्तुष्टिरेव च ।
दरिद्रो वित्तवान्सद्य अपुत्रो लभते सुतम् ॥ १५ ।
अलक्ष्मीर्नश्यते सद्यो लक्ष्मीः संविशते बलात् ।
इह जन्मनि सौभाग्यं परलोके निशामय ॥ १६ ।
अस्मिन्नर्थे पुरा वृत्तमितिहासं पुरातनम् ।
प्रतिष्ठानेऽभवद्राजा वीरधन्वेति विश्रुतः ॥ १७ ।
स कदाचिद्वनम्प्रायान्मृगयार्थी परन्तपः ।
व्यापादयन्मृगगणान्तत्र पि वनमध्यगः ॥ १८ ।
जघान मृगरूपान्सोऽज्ञानतो ब्राह्मणान्नृपः ।

* स्थापयित्वेति साधु ।

† पूज्य इति आर्षं, पूजयित्वा इति साधु

‡ विदुष इति (ग) ।

§ आर्षत्वाद्द्वितीया ।

भ्रातरस्तव पञ्चाशन्मृगरूपेण संस्थिताः ।
संवर्त्तस्य सुता ब्रह्मन्वेदाध्ययनतत्पराः ॥ १९ ।

सत्यतपा उवाच ।

कारणं किं समाश्रित्य ते चक्रुर्मृगरूपताम् ।
एतन्मे कौतुकं ब्रह्मन्प्रणतस्य प्रसीद मे ॥ २० ।

दुर्वासा उवाच ।

ते कदाचिद्वनं याता दृष्ट्वा हरिणपोतकान् ।
जातमात्रान् स्वमात्रा तु विहीनान्नृपसत्तम ॥ २१ ।
एकैकं जगृहुस्ते हि ते मृताः कन्दरास्थिताः ।
ततस्ते दुःखिताः सर्व्वे ययुः पितरमन्तिकम् ॥ २२ ।
ऊचुश्च वचनञ्चेदं मृगहिंसाकृते मुने ॥ २३ ।

ऋषिपुत्रा ऊचुः ।

जातमात्रा मृगाः पञ्च अस्माभिर्निहता मुने ।
अकामतस्ततोऽस्माकं प्रायश्चित्तं विधीयताम् ॥ २४ ।

संवर्त्त उवाच ।

मत्पिता हिंसकश्चासीदहन्तस्माद्विशेषतः ।
भवन्तः पापकर्म्माणः सञ्जाता मम पुत्रकाः ॥ २५ ।
इदानीं मृगचर्म्माणि परिधाय यतव्रताः ।
चरध्वं पञ्च वर्षाणि ततः शुद्धा भविष्यथ ॥ २६ ।
एवमुक्तास्तु ते पुत्रा मृगचर्म्मोपवीतिनः ।
वनं विविशुरव्यग्रा जपन्तो ब्रह्म शाश्वतम् ॥ २७ ।
तथा वर्षे व्यतिक्रान्ते वीरधन्वा महीपतिः ।

तत्राजगाम यस्मिंस्ते चरन्ति मृगरूपिणः ॥ २८ ।
ते चाप्येकतरोर्मूले मृगचर्म्मोपवीतिनः ।
जपन्तः संस्थितास्ते हि राज्ञा दृष्टा मृगा इति ॥ २९ ।
मत्वा विद्धास्तु युगपन्मृतास्ते ब्रह्मवादिनः ॥ ३० ।
तान्दृष्ट्वा तु मृतान्राजा ब्राह्मणान्शंसितव्रतान् ।
भयेन वेपमानस्तु देवरातास्रमं ययौ ॥ ३१ ।
तत्रापृच्छद्ब्रह्महत्या मम जाता महामुने ।
आमूलात्तद्वधं वृत्तं कथयित्वा नराधिपः ॥ ३२ ।
भृशं शोकपरीतात्मा रुरोदातीव दुःखितः ।
स ऋषिर्द्देवरातस्तु रुदन्तं नृपसत्तमम् ॥
उवाच मा भैर्नृपते अपनेष्यामि पातकम् ।
पाताले सुतलाख्ये च यथा धात्री निमज्जती ।
उद्धृता देवदेवेन विष्णुना क्रोड़मूर्त्तिना ॥ ३३ ।
तस्माद्भवन्तं राजेन्द्र ब्रह्मवध्यापरिप्लुतम् ।
उद्धरिष्यति देवोऽसौ स्वयमेव जनार्द्दनः ॥ ३४ ।
एवमुक्तस्ततो राजा हर्षितो वाक्यमब्रवीत् ।
कतरेण प्रकारेण स मे देवः प्रसीदति ।
प्रसन्ने चाशुभं सर्व्वं येन नश्यति सत्तम ॥ ३५ ।

दुर्वासा उवाच ।

एवमुक्तो मुनिस्तेन देवरात इदं व्रतम् ।
आचख्यौ सोऽपि तत्कृत्वा भुक्त्वा भोगान्सुपुष्कलान् ॥
मृत्युकाले मुनिश्रेष्ठ सौवर्णेन विराजता ।

विमानेनागमत्स्वर्गमिन्द्रलोकं स पार्थिवः ॥ ३६।३७ ।
तस्येन्द्रस्त्वर्घमादाय प्रत्युत्थानेन निर्ययौ ।
आयान्तमिन्द्रं दृष्ट्वा तु तमूचुर्विष्णुकिङ्कराः ॥ ३८ ।
न द्रष्टव्यो देवराजस्त्वं हीनस्तपसा इति ॥ ३९ ।
एवं सर्व्वे लोकपाला निर्ययुस्तस्य तेजसा ।
प्रत्याख्याताश्च तैर्विष्णुकिङ्करैर्हीनकर्म्मणः* ॥ ४० ।
एवं स सत्यलोकाग्र्यं गतो राजा महामुने ।
अपुनर्मारके लोके दाहप्रलयवर्ज्जिते† ॥
अद्यापि तिष्ठते देवैः स्तूयमानो महानृपः ।
प्रसन्ने यज्ञपुरुषे किञ्चिन्नं येन तद्भवेत् ॥ ४१।४२ ।
इह जन्मनि सौभाग्यमायुरारोग्यसम्पदः ।
एकैका विधिनोपास्ता ददात्यमृतमुत्तमम् ॥
किं पुनः सर्व्वसंपूर्णः‡ स ददाति स्वकम्पदम् ।
नारायणश्चतुर्मूर्त्तिः परार्द्धश्च न संशयः ॥ ४३।४४ ।
यथैवोद्धृतवान्वेदान्मत्स्यरूपेण केशवः ।
क्षीराम्बुधौ मथ्यमाने मन्दरं धृतवान्प्रभुः ॥ ४४ ।
तद्वच्च कूर्म्मरूपी स्याद्द्वितीया पश्य वैष्णवी ।

* हीनकर्म्मण इति हेत्वर्थे पञ्चमी, लोकपालविशेषणत्वे हीनकर्म्माण इति भवितु-मर्हति, तथा कृतेऽत्र छन्दोभङ्गः ।

† वर्ज्जित इति (क), (ख) ।

‡ वर्षसम्पूर्णे इति बहुषु पाठः ।

यथा रसातलात्तस्मात्त्व धृतवान् पुरुषोत्तमः ।
वराहरूपी तद्दच्च तृतीया पश्य वैष्णवी ॥ ४६ ।

इति वराहपुराणे धरणीव्रते वराहद्वादशीव्रतं नाम एकचत्वारिंशोऽध्यायः ।

## द्वाचत्वारिंशोऽध्यायः ।

दुर्वासा उवाच ।

तद्वत्फाल्गुनमासे तु या शुक्लैकादशी भवेत् ।
तामुपोष्य विधानेन हरिमाराधयेत्सुधीः ॥ १ ।
नरसिंहाय पादौ तु गोविन्दायेत्यूरू तथा ।
कटिं विश्वभुजे पूज्य* अनिरुद्धेत्युरस्तथा ॥ २ ।
कण्ठन्तु शितिकण्ठाय पिङ्गकेशाय वै शिरः ।
असुरध्वंसनायेति चक्रन्तोयात्मने तथा ॥ ३ ।
शङ्खमित्येव सम्पूज्य गन्धपुष्पफलैस्तथा ।
तदग्रे घटमादाय सितवस्त्रयुगान्वितम् ॥ ४ ।
तस्योपरि नृसिंहन्तु सौवर्णं ताम्रभाजने ।
यथाविभवतः कृत्वा दारुवंशमयेऽपि वा ॥ ५ ।
रत्नगर्भे घटे स्थाप्य तं सम्पूज्य च मानवः ।
द्वादश्यां वेदविदुषे ब्राह्मणाय निवेदयेत् ॥ ६ ।

* पूजयित्वेति साधु. ।

एवङ्कृते फलं प्राप्तं यत्पुरा पार्थिवेन तु ।
तस्याहं सम्प्रवक्ष्यामि वत्सनामा महामुने ॥ ७ ।
आसीत्किम्पुरुषे वर्षे राजा परमधार्म्मिकः ।
भारतेति च विख्यातस्तस्य वत्सः सुतोऽभवत् ॥ ८ ।
स शत्रुभिर्जितः संख्ये हृतकोशो द्विपाद्वान् ।
वनं प्रायात्सपत्नीको वशिष्ठस्याश्रमेऽवसत् ॥ ९ ।
कालेन महता* सोऽथ वशिष्ठेन महात्मना ।
किमर्थमिति स प्रोक्तो वसत्यस्मिन्महाश्रमे ॥ १० ।

राजोवाच ।

भगवन्हृतकोशोऽहं† हृतराज्योऽसहायवान्‡ ।
शत्रुभिर्हृत§सर्व्वस्वो भवन्तं शरणं गतः ॥ ११ ।
उपदेशप्रदानेन प्रसादं कर्त्तुमर्हसि ॥ १२ ।

दुर्वासा उवाच ।¶

एवमुक्तो वशिष्ठस्तु तस्येमां द्वादशीं मुने ।
आदिदेश विधानेन|| सोऽपि सर्व्वमथाकरोत् ॥ १३ ।

* गच्छता सोऽसौ इति (ख) ।

† हृतकोशोऽहमिति (ख) ।

‡ हृतराज्यो विशेषत इति (ख), (ग) ।

§ हृतसर्व्वस्व इति (ख), हृतसङ्कल्प इति (ग) ।

¶ एष पाठः (ख) पुस्तके नास्ति ।

|| विधिना प्रत्युवाचाऽथ इति (ख) ।

तस्य व्रतान्ते भगवान्* नरसिंहस्तुतोष ह ।
चक्रमादाय शत्रूणां विध्वंसनकरं शुभं† ॥ १४

तेनास्यैव स्वकं राज्यं जितवान् स नृपोत्तमः ।
राज्ये स्थित्वाश्वमेधानां सहस्रमकरोत्प्रभुः‡ ।
अन्ते च विष्णुलोकाख्यं§ पदमागाच्च¶ सत्तमः ॥ १५

एषा धन्या पापहरा द्वादशी भवता मुने ।
कथितेमां‖ प्रसन्नेन श्रुत्वा कुरु यथेप्सितम् ॥ १६ ।

इति वराहपुराणे नरसिंहद्वादशीव्रतं नाम द्वाचत्वारिंशोऽध्यायः ।

* वृत्तान्ते तस्य भगवान् इति (ख)

† परमिति (ख), (ग) ।

‡ विभुरिति (ग) ।

§ ब्रह्मलोकाख्यमिति (क) ।

¶ पदमापच इति (ख), (ग) ।

‖ कथिता चेति (ग) ।

# त्रयश्चत्वारिंशोऽध्यायः ।

दुर्वासा उवाच ।

एवमेव मुने मासि चैत्रे सङ्कल्प्य द्वादशीम् ।
उपोष्याराधयेद्भक्त्या देवदेवं जनार्दनम्* ॥ १ ॥
वामनायेति पादौ तु विष्णवे कटिमर्चयेत् ।
वासुदेवाय जठरमुरः सङ्कर्षणाय च† ॥ २ ॥
कण्ठं विश्वभृते‡ पूज्य§ शिरो वै व्योमरूपिणे ।
बाहू विश्वजिते पूज्यौ¶ स्वनाम्ना शङ्खचक्रकौ ॥ ३ ॥
अनेन विधिनाभ्यर्च्य देवदेवं सनातनम्‖ ।
प्राग्वद्दलोदकं कुम्भं सम्पूतं पुरतो न्यसेत्** ॥ ४ ॥
प्रागुक्तपात्रे संस्थाप्य काञ्चनं वामनं बुधः ।
यथाशक्त्या कृतं सर्व्वं सितयज्ञोपवीतिनम् ॥ ५ ॥
कुण्डिकां स्थापयेत्पार्श्वे छत्रिका पादुका तथा ।

* (ख) (ग) पुस्तकयोः श्लोकोऽयमेवं पठितः—

एवं मुने मासि चैत्रे या शुक्लैकादशी भवेत् ।
तामुपोष्य यजेत्पश्चाद्भक्त्या देवन्तु वामनम् ॥

† वासुदेवेति जठरमुरः सम्पूर्णकाय चेति (क) ।

‡ विश्वहने इति (ख), (ग) ।

§ पूजयित्वेति साधु ।

¶ पूज्येति (ग) ।

‖ विधिना पूज्य देवदेवं जनार्द्दनमिति (ख), (ग) ।

** प्राग्वदेवोत्तमं कुम्भं सत्वरं पुरतो न्यसेदिति (ख), (ग) ।

अक्षमालाश्च संस्थाप्य द्रुषिकाश्च विशेषतः ॥ ६ ।
एतैरुपस्करैर्युक्तं प्रभाते ब्राह्मणाय च* ।
दापयेत्प्रीयतां विष्णुर्ऋस्वरूपीत्युदीरयेत्† ॥ ७ ।
मासनाम्ना तु संयुक्तं प्रादुर्भावाभिधानकम् ।
प्रीयतामिति सर्व्वत्र विधिरेष प्रकीर्त्तितः ॥ ८ ।
श्रूयते च पुरा राजा‡ हर्य्यश्वः पृथिवीपतिः ।
अपुत्रः स तपस्तेपे पुत्रमिच्छंस्तपोधन ॥ ९ ।
तस्यैवं कुर्व्वतस्त्विष्टिं पुत्रार्थे§ मुनिसत्तम ।
आजगाम हरिर्देवो¶ द्विजरूपं समाश्रितः ॥ १० ।
स उवाच नृपं राजन् किन्ते व्यवसितन्त्विति|| ।
पुत्रार्थमिति सोवाच** तं विप्रः प्रत्युवाच ह ॥ ११ ।
इदमेव विधानन्तु कुरु राजन्प्रयत्नतः†† ।
एवमुक्त्वा तु राजानं क्षणादन्तर्हितः प्रभुः ॥ १२ ।
राजाऽपि तं चकाराशु मन्त्रवित्तं‡‡ द्विजातये ।

* सद्द्विजातये इति (ख), (ग) ।

† संपूज्य विधिवद्दद्यात् ब्राह्मणाय हि वामनमिति (ख), (ग) ।

‡ पुरा राजन् इति (ख) ।

§ त्विष्टिं पुत्रार्थं इति (ख), (ग) ।

¶ तूर्णमिति (ग) ।

|| उवाच तपसा राजन् किन्ते व्यवसितं प्रभो इति (ख), (ग) ।

** पुत्रार्थमिति चोवाच इति (क), सोवाचेति पाठः स चवाचेति साधु ।

†† कुरु राजन्नुवाच ह इति (ख), (ग) ।

‡‡ मन्त्रवत्तमिति (ग) ।

हरिद्राय तथा प्रादाज्ज्योतिर्गर्भाय धीमते* ॥ १३ ।
ययातिरपुत्रायाः† स्वयं पुत्रत्वमागतः ।
भगवंस्तेन सत्येन ममाप्यस्तु सुतो वरः ॥ १४ ।
अनेन विधिनोक्तेन तस्य पुत्रोऽभवन्मुने‡ ।
उग्राश्व इति विख्यात§श्चक्रवर्त्ती महाबलः ॥ १५ ।
अपुत्रो लभते पुत्रं धनार्थी लभते धनम् ।
भ्रष्टराज्यो लभेद्राज्यं मृतो विष्णुपुरं व्रजेत् ॥ १६ ।
क्रीड़ित्वा सुचिरं तत्र इह मर्त्त्यमुपागतः¶ ।
चक्रवर्त्ती भवेच्छ्रीमान् ययातिरिव नाहुषः ॥ १७ ।

इति वराहपुराणे वामनद्वादशीव्रतं नाम त्रयश्चत्वारिंशोऽध्यायः ।

## चतुश्चत्वारिंशोऽध्यायः ।

दुर्वासा उवाच ।

वैशाखेऽप्येवमेवन्तु सङ्कल्प्य विधिना नरः ।
तद्वत्स्नानं मृदा कृत्वा ततो देवालयं व्रजेत् ॥ १ ।

---

* गर्गाचार्य्याय धीमते इति (ख), (ग) ।

† ययातिरपुत्राया इति (ख) ।

‡ भवेन्मुने इति (ग) ।

§ कुवलयाश्वेति विख्यात इति (ख), (ग) ।

¶ तत्र स्थित्वा बहून् भोगान् भुक्त्वा मर्त्त्यमुपागत इति (ख) ।

तत्राराध्य हरिं भक्त्या एभिर्मन्त्रैर्विचक्षणः* ।
जामदग्न्याय पादौ तु उदरं सर्व्वधारिणे ॥ २ ।
मधुसूदनायेति कटिमूरू श्रीवत्सधारिणे ।
क्षत्रान्तकायेति भुजौ शितिकण्ठाय कूर्चकम् ।
स्वनाम्ना शङ्खचक्रौ तु शिरो ब्रह्माण्डधारिणे ॥ ३ ।†
एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् ।
विन्यसेत्स्थापितं तद्वद्वस्त्रं युग्मं विशेषतः‡ ॥ ४ ।
वैणवेन तु पात्रेण तस्मिंस्तु स्थापयेद्धरिम् ।
जामदग्न्येन रूपेण कृत्वा सौवर्णमग्रतः ॥ ५ ।§
दक्षिणे परशुं हस्ते तस्य देवस्य कारयेत् ।
अर्घगन्धैस्तु सम्पूज्य पुष्पैर्नानाविधैस्तथा¶ ॥ ६ ।
ततस्तस्याग्रतः कृत्वा जागरं भक्तिभावितः‖ ।
प्रभाते विमले सूर्य्ये ब्राह्मणाय निवेदयेत् ॥ ७ ।
एवं नियमयुक्तस्य तत्फलन्तु निबोध** मे ॥ ८ ।

---

* देवमन्त्रैर्विचक्षण इति (क)।

† एष श्लोकः (ख) (ग) पुस्तकयोर्नास्ति ।

‡ संस्थाप्योत्तमवस्त्रेण वेष्टयेत्पुष्पमण्डपमिति (ख), (ग) ।

§ (ख), (ग) पुस्तकयोः श्लोक एष एवं पठितः—

कृत्वा तु वैणवे पात्रे तस्मिन् संस्थापयेद्धरिम् ।
जामदग्न्येति विख्यातं नाम्ना क्लेशविनाशनम् ॥

¶ नानाविधैः शुभैरिति (ख), (ग) ।

‖ जागरं भक्तिभावत इति (ख), (ग) ।

** तन्निबोधेति (ग) ।

आसीद्राजा महाभागो वीरसेनो महाबलः।
अपुत्रः स पुरा तीव्रन्तपस्तेपे महामनाः* ॥ ९ ।
चरतस्तु तपो घोरं याज्ञवल्क्यो महामुनिः।
आजगाम महायोगी तन्द्रष्टुं नातिदूरतः ॥ १० ।
तमायान्तमथो दृष्ट्वा ऋषिम्परमवर्च्चसम्।
कृताञ्जलिपुटो भूत्वा राजाभ्युत्थानमाकरोत् ॥ ११ ।
स पूजितो मुनिः प्राह किमर्थं क्रियते तपः† ।
राजन्कथय धर्म्मज्ञ किङ्कार्य्यं ते‡ विवक्षितम् ॥ १२ ।

राजोवाच ।

अपुत्रोऽहं महाभाग नास्ति मे पुत्रसन्ततिः।
तेनेदन्तप आस्थाय क्षयिष्ये स्वतनूं द्विज§ ॥ १३ ।

याज्ञवल्क्य उवाच ।

अलं ते तपसानेन महाक्लेशेन पार्थिव ।
अल्पायासेन ते पुत्रो भविष्यति न संशयः ॥ १४ ।

राजोवाच ।

कथं मे भविता पुत्रः स्वल्पायासेन वै द्विज¶ ।

* महाबल इति (क)।

† तप्यते तप इति (ख), (ग)।

‡ किन्ते कार्य्यमिति (ग)।

§ तेन मे तप आस्थाय क्षिप्यते स्वतनुर्द्विज इति (ख), (ग)।

¶ अल्पायासात्तु वै द्विज इति (ख)।

एतन्मे कथय प्रीत्या* भगवन् प्रणतस्य वै† ॥ १५ ।

दुर्वासा उवाच ।

एवमुक्तो मुनिस्तेन पार्थिवेन यशस्विना ।
आचख्यौ द्वादशीञ्चेमां वैशाखे सितपक्षजाम् ॥ १६ ।
स हि राजा विधानेन पुत्रकामो विशेषतः ।
उपोष्य लब्धवान् पुत्रं नलं परमधार्म्मिकम् ॥ १७ ।
योऽद्यापि कीर्त्यते लोके पुण्यश्लोको नरोत्तमः ।
प्रासङ्गिकं फलं ह्येतद्व्रतस्यास्य महामुने ॥ १८ ।
सुपुत्रो जायते तस्य‡ विद्या श्रीः कान्तिरुत्तमा§ ।
इह जन्मनि किञ्चित्तं परलोके शृणुष्व मे ॥ १९ ।
कल्पमेकं ब्रह्मलोक उषित्वाप्सरसाङ्गणैः¶ ।
क्रीड़न्ति ते पुनः सृष्टौ जायन्ते चक्रवर्त्तिनः‖ ॥ २० ।
विंशत्कल्पसहस्राणि जीवन्ते नात्र संशयः** ॥ २१ ।

इति वराहपुराणे द्वादशीमाहात्म्ये नामदशद्वादशीव्रतं नाम चतुश्चत्वारिंशोऽध्यायः ।

* प्रीत इति (ग) ।

† प्रणतस्य इति (ग) ।

‡ निश्चमिति (ग) ।

§ विद्यावान् कान्तिरुत्तमा इति (ख), (ग) ।

¶ वभिर्वृति (ग), आर्षस्त्वत्र ।

‖ क्रीड़न्त्यन्ते पुनः सृष्टौ चक्रवर्त्ती भवेद्ध्रुवमिति (ख), (ग) ।

** विंशद्वर्षसहस्राणि जीवते नाऽत्र संशय इति (ख), (ग) ; जीवन्ति, जीवति वा साधु ।

## पञ्चचत्वारिंशोऽध्यायः ।

दुर्वासा उवाच ।

ज्येष्ठमासेऽप्येवमेवं सङ्कल्प्य विधिना नरः ।
अर्चयेत्परमं देवं पुष्पैर्नानाविधैः शुभैः ॥ १ ।
नमो रामाभिरामाय पादौ पूर्व्वं समर्चयेत् ।
त्रिविक्रमायेति कटिं धृतविश्वाय चोदरम् ॥ २ ।
उरः संवत्सरायेति कण्ठं संवर्त्तकाय च ।
सर्व्वास्त्रधारिणे बाहू स्वनाम्नाजरथाङ्गकैः ॥ ३ ।
सहस्रशिरसेऽभ्यर्च्य शिरस्तस्य महात्मनः ।
एवमभ्यर्च्य विधिवत्प्राग्वत्कुम्भन्तु विन्यसेत् । ४ ।
प्राग्वद्दस्त्रेण संच्छन्नं सौवर्णौ रामलक्ष्मणौ ।
अर्चयित्वा विधानेन प्रभाते ब्राह्मणाय तौ ।
दातव्यौ मनसा काममीहता पुरुषेण तु ॥ ५ ।
अपुत्रेण पुरा पृष्टो राज्ञा दशरथेन च ।
पुत्रकामपरः पश्चाद्वशिष्ठः परमार्च्चितः ।
इदमेव विधानन्तु कथयामास स द्विजः ॥ ६ ।
प्राग्रहस्यं विदित्वा तु स राजा कृतवानिदम् ।
तस्य पुत्रः स्वयं जज्ञे रामनामा महाबली ॥ ७ ।
चतुर्द्धा सोऽव्ययो विष्णुः परितुष्टो महामुने ।
एतदैहिकमाख्यानं पारत्रिकमथो शृणु ॥ ८ ।

तावद्भोगान् भुञ्जते स्वर्गलोके

यावदिन्द्रो देवसङ्घाश्च सर्व्वे ।
अतीतकाले पुनरेत्य मर्त्त्यं
भवेत्स राजा शतयज्ञयाजी ॥ ९ ।
निष्काम एवं व्रतमस्य चीर्त्वा*
नश्यन्ति पापानि च तस्य पुंसः ।
प्राप्नोति निर्व्वाणमलञ्च शाश्वतम् ॥ १० ।
इति वराहपुराणे रामद्वादशीव्रतं नाम पञ्चचत्वारिंशोऽध्याय.

## षट्चत्वारिंशोऽध्यायः ।

दुर्वासा उवाच ।
आषाढ़ेऽप्येवमेव स्यात्सङ्कल्प्य विधिना नरः ।
चक्रपाणयेति भुजौ कण्ठं भूपतये तथा ॥ १ ।
स्वनाम्ना शङ्खचक्रौ तु पुरुषायेति वै शिरः ।
एवमभ्यर्च्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् ॥ २
विन्यस्य वस्त्रसंयुक्तं तस्योपरि ततो न्यसेत् ।
काञ्चनं वासुदेवन्तु चतुर्व्यूहं सनातनम् ॥ ३ ।
तमभ्यर्च्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ।
प्राग्वत्तं ब्राह्मणे दद्याद्देवाद्दरते तथा ॥ ४ ।

---

* एतच्चरणद्वयं (ग) पुस्तके नास्ति ।

एवं नियमयुक्तस्य यत्पुण्यं तच्छृणुष्व मे ।
वसुदेवोऽभवच्छ्रेष्ठो यदुवंशविवर्द्धनः ॥ ५ ।
देवकी तस्य भार्य्या तु समानव्रतधारिणी ।
सा त्वपुत्राभवत्साध्वी पतिधर्म्मपरायणा ॥ ६ ।
तस्य कालेन महता नारदोऽभ्यगमद्गृहम् ।
पूजितो वसुदेवेन भक्त्यासौ वाक्यमब्रवीत् ॥ ७ ।
वसुदेव शृणुष्वेदं देवकार्य्यं ममानघ ।
श्रुत्वैताञ्च कथां शीघ्रमागतोऽस्मि तवान्तिकम् ॥ ८ ।
पृथिवी देवसमितिं मया दृष्टा यदूत्तम ।
गत्वा च जल्पती भारं न शक्ता जहितुं* सुराः ।
पीड़यन्ति समेता मां ताञ्हनध्वं† सुरोत्तमाः‡ ॥ ९ ।
एवमुक्ताः पृथिव्या तै देवा नारायणं गताः ।
मनसा ध्यातमात्रः स देवः प्रत्यक्षतां ययौ ॥ १० ।
उवाच च सुरश्रेष्ठः स्वयं कार्य्यमिदं सुराः ।
साधयामि न सन्देहो मर्त्यङ्गत्वा मनुष्यवत् ॥ ११ ।
किन्त्वाषाढ़े शुक्लपक्षे या नारी सह भर्त्तृणा ।
उपोष्यति मनुष्येषु तस्या गर्भे भवाम्यहम् ॥ १२ ।
एवमुक्ता गता देवाः स्वयञ्चाहमिहागतः ।
उपदिष्टन्तु भवतः अपुत्रस्य विशेषतः ॥ १३ ।

---

* न शक्या जहितुरिति (ग) पुस्तके पाठः । वोढुं वोढुर्वेति साधु ।

† हनध्वमिति आर्षं, हतेति साधु ।

‡ सुरोत्तम इति (ग) ।

एताञ्च द्वादशीं कृत्वा वसुदेवो महायशाः ।
पुत्रं लेभे स कृष्णाख्यं* महतीञ्च श्रियं तथा ॥ १४ ।
भुक्त्वा प्राज्यश्रियं सोऽथ गतिम्परमिकां ययौ ।
एष ते विधिरुद्दिष्ट आषाढ़े मासि वै मुने ॥ १५ ।

इति वराहपुराणे कृष्णद्वादशीव्रतं षट्चत्वारिंशोऽध्यायः ।

## सप्तचत्वारिंशोऽध्यायः ।

दुर्वासा उवाच ।

श्रावणे मासि शुक्लायामेकादश्याञ्चरेद्व्रतम् ।
अर्च्चयेत्पूर्व्वविधिना गन्धपुष्पैर्जनार्द्दनम् ॥ १ ।
दामोदराय पादौ तु हृषीकेशाय वै कटिम् ।
सनातनेति जठरमुरः श्रीवत्सधारिणे ॥ २ ।
चक्रपाणयेति भुजौ कण्ठञ्च हरये तथा* ।
मुञ्जकेशायेति शिरो भद्राय च शिखां तथा† ॥ ३ ।

* पुत्राख्यमिति (ग) ।

---

* कण्ठं भूपतये तथा इति (ख) ।
† स्वनाम्ना शङ्खचक्रौ तु पुरुषायेति वै शिरः इति (ख) ।

एवं सम्पूज्य संस्थाप्य कुम्भं पूर्व्ववदेव तु ।
संवेष्ट्य वस्त्रयुग्मेन तस्योपरि ततो न्यसेत्* ॥ ४ ॥
काञ्चनं देवदेवन्तु† दामोदरसनामकम् ।
तमभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ॥ ५ ॥
प्राग्वत्तं ब्राह्मणे दद्याद्वेदवेदाङ्गपारगे ।
एवं नियमयुक्तस्य प्रभावं तच्छृणुष्व मे ॥ ६ ॥
एष वै विधिरुद्दिष्टः श्रावणे मासि वै मुने ।
एतस्याश्च प्रभावं यच्छृणु पापप्रणाशनम् ॥ ७ ॥
पुरा कृतयुगे राजा नृगो नाम महाबलः ।
बभ्राम स वनं घोरं मृगयासक्तमानसः ॥ ८ ॥
स कदाचित्तुरङ्गेण गतो दूरं महद्वनम् ।
व्याघ्रसिंहगजाकीर्णं दस्युसर्पनिषेवितम् ॥ ९ ॥
एकाकी तत्र राजा तु अश्वं मुच्य‡ तरोरधः ।
स्वयं कुशमथास्तीर्य्य सुप्तो दुःखसमन्वितः ॥ १० ॥
तावत्तत्रैव लुब्धानां सहस्राणि चतुर्द्दश ।
आगतानि मृगान्हन्तुं रात्रौ राज्ञः समन्ततः ॥ ११ ॥
तत्रापश्यन्ततः सुप्तं हेमरत्नविभूषितम् ।

* (ख) पुस्तके श्लोक एष एवं पठितः—

एवमभ्यर्च्य मेधावी प्राग्वत्तस्यायतो घटम् ।
विन्यस्य वस्त्रसंयुक्तं तस्योपरि ततोन्यसेत् ॥

† काञ्चनं वासुदेवन्तु इति (ख) ।

‡ मुच्येति चार्षं, मुक्त्वेति साधु ।

नृगं राजानमव्यग्रं श्रिया परमया युतम् ॥ १२ ।
ते गत्वा त्वरितं व्याधाः स्वभर्त्रे सम्यवेदयन् ।
सोऽपि रत्नसुवर्णार्थं राजानं हन्तुमुद्यतः ॥ १३ ।
तुरगस्य च हेतोस्तु निस्त्रिंशान्वनचारिणः ।
राजानं सुप्तमासाद्य निगृहीतुं* प्रचक्रमुः ॥ १४ ।
तावद्राज्ञः शरीरात्तु श्वेताभरणभूषिता ।
नारी काचित्समुत्तस्थौ स्रक्चन्दनविभूषिता ॥ १५ ।
उत्थाय चक्रमादाय ते म्लेच्छा विनिपातिताः ॥ १६ ।
दस्यून्निहत्य सा देवी तस्य राज्ञस्तनुं पुनः ।
प्रविशन्त्याशु राजापि प्रतिबुद्धः प्रदृष्टवान् ॥ १७ ।
म्लेच्छांस्तु निहतान्दृष्ट्वा तां स्वमूर्त्तौ लयङ्गताम् ।
अश्वमारुह्य स पुनर्वामदेवाश्रमं ययौ ॥ १८ ।
तत्रापृच्छदृषिं भक्त्या का स्त्री के ते निपातिताः ।
एतत्कार्य्यं ऋषे मह्यं प्रसीद कथयस्व मे ॥ १९ ।

वामदेव उवाच ।

त्वमासीच्छूद्रजातीयः अन्यजन्मनि पार्थिवः ।
तत्र त्वया ब्राह्मणेभ्यः श्रुता चेयं कृता पुरा ॥ २० ।
श्रावणस्य तु मासस्य शुक्लपक्षेषु द्वादशी ।
सा विधानात्त्वया राजन् भक्त्या च समुपोषिता ॥ २१ ।
उपोषितायां तस्यान्तु राज्यं लब्धं त्वयाऽनघ ।

निगृहीतुमिति साधु

सर्व्वापत्सु च सा देवी भवन्तं परिरक्षति ॥ २२ ।
यया विनिहताः क्रूरा म्लेच्छाः पापसमन्विताः ।
भवांश्च रक्षितो राजन् श्रावणद्वादशीति सा ॥ २३ ।
एकैव पाति चापत्सु राज्यमेकैव यच्छति ।
किं पुनर्द्वादशैतास्तु याभ्य ऐन्द्रञ्च गच्छति ॥ २४ ।

इति वराहपुराणे बुद्धद्वादशीव्रतं नाम सप्तचत्वारिंशोऽध्यायः ।

# अष्टचत्वारिंशोऽध्यायः ।

दुर्वासा उवाच ।

तद्वद्भाद्रपदस्यापि या शुक्लैकादशी भवेत् ।
तस्यां सङ्कल्प्य विधिना देवदेवं समर्च्चयेत् ॥ १ ।
नमोऽस्तु कल्किने पादौ हृषीकेशाय वै कटिम् ।
म्लेच्छविध्वंसनायेति जगन्मूर्त्तं तथोदरम् ॥ २ ।
शितिकण्ठाय कण्ठन्तु खड्गपाणीति* वै भुजौ ।
चतुर्भुजायेति हस्तौ विश्वमूर्त्तेन† तथा शिरः ॥ ३ ।
एवमभ्यर्च्च मेधावी प्राग्वत्तस्याग्रतो घटम ।

* खड्गपाणये इति साधु ।

† विश्वमूर्त्तये इति साधु । एवमन्यत्र

विन्यसेल्लाञ्छिनं देवं सौवर्णं तत्र कारयेत् ॥ ४ ।
सितवस्त्रेण संयुक्तं गन्धपुष्पोपशोभितम् ।
कृत्वा प्रभाते विप्राय प्रदेयं शास्त्रवित्तमे* ॥ ५ ।
एवं कृते भवेद्यत्तु तन्निबोध महामुने ।
पूर्व्वं राजा विशालोऽभूत्काशिपुर्य्यां महाबलः ।
गोत्रजैर्हृतराज्योऽसौ गन्धमादनमाविशत् ॥ ६ ।
तस्य द्रोण्यां महाराज वदरीं प्राप शोभनाम् ।
हृतराज्यो विशेषेण गतश्रीको नरोत्तमः ॥ ७ ।
कदाचिदागतौ तत्र पुराणावृषिसत्तमौ ।
नरनारायणौ देवौ सर्व्वदेवनमस्कृतौ ॥ ८ ।
तौ दृष्ट्वा तत्र राजानं पूर्व्वागतमरिन्दमौ ।
ध्यायन्तं परमं ब्रह्म विष्ण्वाख्यं परमं पदम् ॥ ९ ।
तौ प्रीतावूचतुश्चैवं राजानं क्षीणकल्मषम् ।
वरं वृणीष्व राजेन्द्र वरदौ स्वस्त्वागतौ ॥ १० ।

राजोवाच ।

भवन्तौ कौ न जानामि कस्य गृह्णाम्यहं वरम् ।
आराधयामि यं तस्मादरमिच्छामि शोभनम् ॥ ११
एवमुक्तौ तु तौ प्रोचुः† कमाराधयसे प्रभो ।
कं वा वरं वृणोषि त्वं कथयस्व कुतूहलात् ॥ १२ ।

* शास्त्रवित्तमायेति साधु ।

† प्रोचतुरिति साधु ।

एवमुक्तस्ततो राजा विष्णुमाराधयाम्यहम् ।
कथयित्वा स्थितस्तूष्णीं ततस्तावूचतुः पुनः ॥ १३ ।
राजंस्तस्यैव देवस्य प्रसादादावयोर्वरः ।
दातव्यस्ते वरं ब्रूहि कस्ते मनसि वर्त्तते ॥ १४ ।

राजोवाच ।

यथा यज्ञेश्वरं देवं यज्ञैर्विविधदक्षिणैः ।
यष्टुं समर्थता मे स्यात्तथा मे ददतां* वरम् ॥ १५ ।
स्वयं नारायणो देवो लोकमार्गप्रदर्शकः ।
मया सह तपः कुर्व्वन्वदर्य्यां लोकभावनः ॥ १६ ।
अयं मत्स्योऽभवत्पूर्व्वं पुनः कूर्म्मः सुरूपवान् ।
वराहश्चाभवद्देवो नरसिंहस्ततोऽभवत् ॥ १७ ।
वामनस्तु ततो जातो जामदग्न्यो महाबलः ।
पुनर्द्दाशरथीभूत्वा मोहयामास पार्थिवः ॥ १८ ।
स कलान्दस्यवो† म्लेच्छान् घातयित्वा महीमिमाम् ।
प्रकृतिस्थां चकारायं‡ स एष भगवान्हरिः ॥ १९ ।
नारसिंहेण रूपेण तहत्पापभयान्नरैः ।
वामनं मोहनाशाय वित्तार्थे जमदग्निजम् ॥ २० ।
क्रूरशत्रुविनाशाय यजेद्दाशरथिं बुधः ।
बलकृष्णौ यजेद्धीमान् पुत्रकामो न संशयः ॥ २१ ।

* दत्तामिति साधु ।

† दस्यव इति आर्षं, दस्यूनिति साधु ।

‡ चकाराद्य इति (ग) ।

रूपकामो यजेद्रुद्रं मन्युघाताय कल्किनम् ।
एवमुक्ता नरस्तस्य इमामेवाब्रवीन्मुनिः ॥ २२ ।
द्वादशीं क्रतवान्सोऽपि चक्रवर्त्ती बभूव ह ।
तस्यैव नाम्ना बदरी विशालाख्याभवन्मुने ॥ २३ ।
इहजन्मनि राजासौ राज्यं क्रत्वा द्रयाद्दनम्* ।
यज्ञैश्च विविधैरिष्ट्वा परं निर्वाणमाप्तवान् ॥ २४ ।

इति वराहपुराणे कल्किद्वादशीव्रतं नाम अष्टचत्वारिंशोऽध्यायः ।



## ऊनपञ्चाशोऽध्यायः ।

दुर्वासा उवाच ।

तद्वदश्वयुजे मासि द्वादशी शुक्लपक्षजा ।
तस्यामभ्यर्च्चयेद्देवं पद्मनाभं सनातनम् ॥ १ ।
पद्मनाभाय पादौ तु कटिं वै पद्मयोनये ।
उदरं सर्व्वदेवाय पुष्कराक्षाय वै उरः ।
अव्ययाय तथा पाणिं प्राग्वदस्त्राणि पूजयेत् ॥ २ ।
प्रभवाय शिरः पूज्य प्राग्वदग्रे घटं न्यसेत् ॥ ३ ।
तस्मिन् सौवर्णकं देवं पद्मनाभन्तु विन्यसेत् ।
तमेव देवं संपूज्य गन्धपुष्पादिभिः क्रमात् ।

* द्रयादिति आर्षं, द्रयाचेति साधु ।

प्रभातायान्तु शर्व्वर्य्यां ब्राह्मणाय निवेदयेत्॥ ४ ।
एवं कृते तु यत्पुण्यं तन्निबोध महामते ॥ ५ ।
आसीत्कृतयुगे राजा भद्राश्वो नाम वीर्य्यवान् ।
यस्य नाम्नाभवद्वर्षं भद्राश्वं नाम नामत: ॥ ६ ।
तस्यागस्त्य: कदाचित्तु गृहमागत्य सत्तम ।
उवाच सप्तरात्रन्तु वसामि भवतो गृहे ।
तं राजा शिरसा नत्वा स्थीयतामित्यभाषत ॥ ७ ।
तस्य कान्तिमती नाम भार्य्या परमशोभना।
तस्यास्तेज: सम्भवद्द्वादशादित्यसन्निभम् ॥ ८ ।
शतानि पञ्च तस्यासन्सपत्नीनां यतव्रता: ।
ता दास्य इव कर्म्माणि कुर्व्वन्त्यहरह: शुभा: ॥ ९ ।
कान्तिमती महाभागा भार्य्या तस्य विशेषत: ।
तामगस्त्यस्तथा दृष्ट्वा रूपतेजोऽन्वितां शुभाम् ॥ १० ।
सपत्न्यश्च भयात्तस्या: कुर्व्वन्त्य: कर्म्म शोभना: ।
राजा तु तस्या मुदितं मुखमेवान्वलोकयत् ॥ ११ ।
एवम्भूतामथो दृष्ट्वा राज्ञीं परमशोभनाम् ।
साधु साधु जगन्नाथेत्याहागस्त्य: प्रहर्षित: ॥ १२ ।
द्वितीये दिवसेऽप्येवं राज्ञीं दृष्ट्वा महाप्रभाम् ।
अहो मुष्टमहो मुष्टं जगदेतच्चराचरम् ॥ १३ ।
इत्यगस्त्यो द्वितीयेऽह्नि राज्ञीं दृष्ट्वाभ्युवाच ह ।
तृतीयेऽहनि तां दृष्ट्वा पुनरेवमुवाच ह* ॥ १४ ।

* पुनरेवाभ्युवाच च इति (ख), (ग) ।

अहो मूढा न जानन्ति गोविन्दं परमेश्वरम् ।
य एकेन दिनेनैव राज्ञस्तुष्टः प्रदत्तवान् ॥ १५ ।
चतुर्थे दिवसे हस्तावुत्क्षिप्य पुनरब्रवीत् ।
साधु साधु भगवान् स्त्रीशूद्राः साध्विति ॥ १६ ।
द्विजाः साधु नृपाः साधु वैश्याः साधु पुनः पुनः ।
साधु भद्राश्व साधु त्वं साधु भोऽगस्त्य साधु ते ॥ १७ ।
साधु प्रह्लाद साधुस्ते ध्रुव साधो महाव्रत ।
एवमुक्त्वा ननर्त्तोच्चैरगस्त्यो राजसन्निधौ ॥ १८ ।
एवम्भूतञ्च तं दृष्ट्वा सपत्नीको नृपोत्तमः ।
किं हर्षकारणं ब्रह्मन्येनेत्थं नृत्यते* भवान् ॥ १९ ।

अगस्त्य उवाच ।

अहो मूर्खः कुराजा त्वं अहो मूर्खाऽनुगास्त्वमी ।
अहो पुरोहिता मूर्खा ये न जानन्ति मे मतम्† ॥ २० ।
एवमुक्ते ततो राजा कृताञ्जलिरभाषत ।
न जानीमो वयं ब्रह्मन् प्रश्नमेतत्त्वयेरितम् ।
कथयस्व महाभाग यद्यनुग्रहकृद्भवान् ॥ २१ ।

अगस्त्य उवाच ।

इयं राज्ञी पुरा चाभूद्दासी वैश्यस्य वै गृहे ।
नगरे हरिदत्तस्य त्वमस्याः पतिरेव च ।
तस्यैव कर्म्मकारोऽभूः शूद्रः सेवनतत्परः ॥ २२ ।

* नृत्यतीति माध ।

† मतिमिति (ख), (ग) ।

स वैश्योऽश्वयुजे मासि द्वादश्यां नियतः स्थितः ।
स्वयं विष्णालयं गत्वा पुष्पधूपादिभिर्हरिम् ।
अभ्यर्च्य स्वगृहं प्रायाद्भवन्तौ रक्षपालकौ ।
स्थाप्य द्वावपि दीपानां ज्वलनार्थं महामते ॥ २३।२४ ।
गते वैश्ये भवन्तौ तौ दीपान् प्रज्वाल्य संस्थितौ ।
यावत्प्रभाता रजनी निशामेकां नरोत्तम ॥ २५ ।
ततः काले मृतौ तौ तु उभौ द्वावपि दम्पती ॥ २६ ।
तेन पुण्येन ते जन्म प्रियव्रतगृहेऽभवत् ।
इयं पत्नी तु ते जाता पुरा वैश्यस्य दासिका ॥ २७ ।
पारक्यस्यापि दीपस्य ज्वालितस्य हरेर्गृहे ।
यः पुनः स्वेन वित्तेन विष्णोरग्रे प्रदीपकम् ।
ज्वालयेत्तस्य यत्पुण्यं तत्संख्यातुं न शक्यते ।
तेन साधो हरेः साधु इत्युक्तं वचनं मया ॥ २८।२९ ।
पूर्णे संवत्सरे भक्तिं हरेः कृत्वा विचक्षणः ।
संवत्सरार्द्धे त्रेतायां सममेतन्न संशयः ॥ ३० ।
त्रिमासे द्वापरे भक्त्या पूजयँल्लभते फलम् ।
नमो नारायणेत्युक्त्वा कलौ तु लभते फलम् ॥ ३१ ।
तेन सृष्टं जगत्सर्व्वं भक्तिमात्रं मयेरितम् ।
पारक्यदीपस्योत्कर्षाद्देवाग्रे फलमीदृशम् ॥ ३२ ।
भो राजन्यत्त्वया प्राप्तं फलमेतन्मयेरितम् ।
अहो मूढ़ा न जानन्ति हरेर्दीपक्रियाफलम् ॥ ३३ ।
एवंविधा द्विजाग्रे च राजानो ये च भक्तितः ।

यजन्ते विविधैर्यज्ञैस्तेन ते साधवः स्मृताः ॥ ३४ ।
अहन्तमेव मुक्त्वान्यं न पश्यामि महीतले ।
तेन साधो अगस्त्येति मया चात्मा प्रशंसितः ॥ ३५ ।
सा स्त्री धन्या स शूद्रस्तु तथा धन्यतरो मतः ।
भर्त्तुः शुश्रूषणङ्कृत्वा तत्परोचे हरेरिति ॥ ३६ ।
सा स्त्री धन्या तथा शूद्रो द्विजशुश्रूषणे रतः ।
तदाज्ञया हरेर्भक्तिः स्त्रीशूद्रौ तेन साध्विति ॥ ३७ ।
आसुरं भावमाश्रित्य प्रह्लादः पुरुषोत्तमम् ।
मुक्त्वा चान्यं न जानाति तेनासौ साधुरुच्यते ॥ ३८ ।
प्रजापतिकुले भूत्वा बाल एव वनं गतः ।
आराध्य विष्णुं प्राप्तश्च स्थानं परमशोभनम् ॥ ३९ ।
तेन साधो ध्रुवेत्येवं मयोक्तं राजसत्तम ॥ ४० ।
इति राजा वचः श्रुत्वा अगस्त्यस्य महात्मनः ।
अस्योपदेशं राजासौ पप्रच्छ मुनिपुङ्गवम् ।
अगस्त्यश्च महाभागः कार्त्तिक्यां पुष्करं व्रजत्* ॥ ४१ ।
गतेऽगस्त्ये प्रगच्छन्वै भद्राश्वस्य निवेशनम् ।
पृष्टश्च राज्ञा तामेव द्वादशीं मुनिसत्तमः ॥ ४२ ।

दुर्वासा उवाच ।

इदमेव मया तुभ्यं कथितं ते तपोधन ।
कथयित्वा पुनर्वाक्यमगस्त्यो नृपसत्तमम् ॥ ४३ ।

---

* अव्रजदिति साधु । व्रजन्निति (ग) इत्यपि शतृप्रत्ययान्तस्य विशेषणत्वादन्या समापकक्रिया काङ्क्षिता भवति ।

उवाच पुष्करं यामि सपुत्रस्त्वामु ते गृहम् ।*
एवमुक्त्वा जगामाशु सद्योऽदर्शनतां मुनिः ॥ ४४ ।
द्वादशीं पद्मनाभस्य राजा स विधिना ततः ।
उपोष्य परमङ्कामभिष्ट जन्मनि चाप्तवान् ॥ ४५ ।
पुत्रपौत्रैः परिवृतो भुक्त्वा भोगानथोत्तमान् ।
पद्मनाभप्रसादेन वैष्णवं स्थानमाप सः ॥ ४६ ।

इति वराहपुराणे पद्मनाभद्वादशीव्रतं नाम ऊनपञ्चाशोऽध्यायः ।

## पञ्चाशोऽध्यायः ।

दुर्वासा उवाच ।

गत्वा तु पुष्करन्तीर्थमगस्त्यो मुनिपुङ्गवः ।
कार्त्तिक्यामाजगामाशु पुनर्भद्राश्वमन्दिरम् ॥ १ ।
तमागतं मुनिं प्रेक्ष्य राजा परमधार्म्मिकः ।
अर्घपाद्यादिभिः पूज्य कृतासनपरिग्रहम् ।
उवाच हृषितो* राजा तमृषिं शंसितव्रतम् ॥ २ ।

राजोवाच ।

भगवन् कथितं पूर्व्वं त्वया ऋषिवरोत्तम ।

---

* एतदर्द्धं (ख) (ग) पुस्तकयोर्नास्ति ।

* हर्षित इति (ख), (ग) ।

आश्विने मासि द्वादश्यां विधानन्तत्कृतं मया ।
इदानीं कार्त्तिके मासि यत्स्यात्पुण्यं वदस्व मे ॥ ३ ।
*अगस्त्य उवाच ।*
कार्त्तिकी द्वादशी राजन्नुक्ता परमपावनी ।
उपोष्य विधिना येन यच्चास्याः प्राप्यते फलम् ।
तदहं संप्रवक्ष्यामि शृणोत्ववहितो भवान् ॥ ४ ।
पूर्व्वोक्तविधिना सम्यक् सङ्कल्प्य स्नानमाचरेत् ॥ ५ ।
तमेव पूजयेद्देवं नारायणमकल्मषम् ।
नमः सहस्रशिरसे शिरः सम्पूजयेद्धरेः* ॥ ६ ।
पुरुषायेति च भुजौ कण्ठं वै विश्वरूपिणे ।
ज्ञानास्त्रायेति चास्त्राणि श्रीवत्साय तथा उरः ॥ ७ ।
जगद्ग्रसिष्णवे तुभ्यं† उदरं दिव्यमूर्त्तये ।
कटिं सहस्रपादाय पादौ देवस्य पूजयेत् ॥ ८ ।
अनुलोमेन देवेशं पूजयित्वा विचक्षणः ।
नमो दामोदरायेति सर्व्वाङ्गं पूजयेद्धरेः ॥ ९ ।
एवं सम्पूज्य विधिना तस्याग्रे चतुरो घटान्‡ ।
स्थापयेद्रत्नगर्भांस्तु सितचन्दनचर्च्चितान् ॥ १० ।
स्रग्दामबद्धग्रीवांस्तु सितवस्त्रावगुण्ठितान् ।

* (ग) पुस्तके एतस्मादनन्तरं एवं सम्पूज्य विधिना तस्याग्रे चतुरो घटानित्यधिकः पाठो वर्त्तते ।

† पूज्यमिति (ख) ।

‡ एवं संपूज्य यत्नेन तदग्रे चतुरो घटामिति (ख), (ग) ।

स्थापितांस्ताम्रपात्रैस्तु तिलपूर्णैः सकाञ्चनैः ॥ ११ ।
चत्वारः सागराश्चैव कल्पयेद्राजसत्तम ।
तन्मध्ये प्राग्विधानेन सौवर्णं स्थापयेद्धरिम् ॥ १२ ।
योगीश्वरं योगिगम्यं पीताम्बरधरं विभुम् ।
एवं सम्पूज्य विधिवज्जागरन्तत्र* कारयेत् ॥ १३ ।
कुर्य्याच्च वैष्णवं यज्ञं यजेद्योगीश्वरं हरिम् ।
षोड़शारे तथा चक्रे योगिभिर्बहुभिः कृते ॥ १४ ।
एवं कृत्वा प्रभातेषु ब्राह्मणाय निवेदयेत् ।
चत्वारः सागरा देयाश्चतुर्णां पञ्चमस्य च ॥ १५ ।
योगीश्वरन्तु देवेशन्दद्यात्प्रयतमानसः ।
वेदार्थं† तु समन्दत्तं द्विगुणं तद्विदे तथा‡ ॥ १६ ।
आचार्य्ये पञ्चरात्राणां सहस्रगुणितं भवेत् ।
यस्त्विमं सरहस्यन्तु समन्वञ्चोपपादयेत् ॥ १७ ।
विधानं तस्य वै दत्तं कोटिकोटिगुणोत्तरम् ।
गुरौ सति तु यश्चान्यमाश्रयेत्पूजये§त्कुधीः ॥ १८ ।
स दुर्गतिमवाप्नोति दत्तमस्य च निष्फलम् ।
प्रयत्नेन गुरौ पूर्व्वं पश्चादन्यस्य दापयेत् ॥ १९ ।
अविद्यो वा सविद्यो वा गुरुरेव जनार्द्दनः ।

* एवं सम्पूजयेद्धरेर्जागरमिति (ख) ।

† वेदार्थ (ग) ।

‡ तद्दत्तं द्विगुणं तथा इति (ग) ।

§ पूजयन्निति (ग) ।

मार्गस्थो वाप्यमार्गस्थो गुरुरेव परा गतिः ॥ २० ।
प्रतिपद्य गुरुं यस्तु मोहाद्विप्रतिपद्यते ।
युगकोटिं स नरके पच्यते पुरुषाधमः ॥ २१ ।
*एवं दत्त्वा विधानेन* द्वादश्यां विष्णुमर्च्य च ।
विप्राणां भोजनं दद्याद्यथाशक्त्या सदक्षिणम् ॥ २२ ।
धरणीव्रतमेतद्धि पुरा कृत्वा प्रजापतिः ।
प्राजापत्यं तथा लेभे मुक्तिं ब्रह्म च शाश्वतम् ॥ २३ ।
तथा च हैहयो राजा कृतवीर्य्यो नराधिपः ।
कार्त्तवीर्य्यं सुतं लेभे परं ब्रह्म च शाश्वतम् ॥ २४ ।
शकुन्तलाप्येवमेव व्रतं कृत्वा महामते ।
लेभे च भरतं पुत्रं दौष्यन्तं चक्रवर्त्तिनम् ॥ २५ ।
तथातीताश्च राजानो वेदोक्ताश्चक्रवर्त्तिनः ।
अनेन विधिना प्राप्ताश्चक्रवर्त्तित्वमुत्तमम् ॥ २६ ।
धरण्या अपि पाताले मग्नया* च पुरा कृतम् ।
व्रतमेतत्ततो नाम्ना धरणीव्रतमुत्तमम् ॥ २७ ।
समाप्तेऽस्मिन्धरा देवी हरिणा क्रोड़मूर्त्तिना ।
उद्धृता चापि तुष्टेन स्थापिता नौरिवाम्भसि ॥ २८ ।
धरणीव्रतमेतद्धि कीर्त्तितं ते मया मुने ।
य इदं शृणुयाद्भक्त्या यश्च कुर्य्यान्नरोत्तमः ।
सर्व्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ २९ ।

इति वराहपुराणे धरणीव्रतं नाम पञ्चाशोऽध्यायः ।

---

* पाताले मग्नयेति (ख), (ग) ।

# एकपञ्चाशोऽध्यायः ।

वराह उवाच ।

श्रुत्वा दुर्वाससो वाक्यं धरणीव्रतमुत्तमम् ।
ययौ सत्यतपाः सद्यो हिमवत्पार्श्वमुत्तमम् ॥ १ ।
पुष्पभद्रा नदी यत्र शिला चित्रशिला तथा ।
वटो भद्रवटो यत्र तत्र तस्याश्रमो बभौ ।
तत्रोपरि महत्तस्य चरितं सम्भविष्यति ॥ २ ।

धरण्युवाच ।

बहुकल्पसहस्राणि व्रतस्यास्य सनातन ।
मया कृतस्य तपसस्तन्मया विस्मृतं प्रभो ॥ ३ ।
इदानीन्त्वत्प्रसादेन प्राक्तनं स्मरतीं मम ।
जातं जातिस्मरत्वञ्च विशोका परमेश्वर ॥ ४ ।
यदि नाम परन्देव कौतुकं हृदि वर्त्तते ।
अगस्त्यः पुनरागत्य भद्राश्वस्य निवेशनम् ।
यच्चकार स राजा तु तन्ममाचक्ष्व भूधर ॥ ५ ।

वराह उवाच ।

प्रत्यागतमृषिं दृष्ट्वा भद्राश्वः श्वेतवाहनः ।
वीरासनगतं दृष्ट्वा कृत्वा पूजां विशेषतः* ।
अपृच्छन्मोक्षधर्म्माख्यं प्रश्नं सकलधारिणि ॥ ६ ।

---

* एतदर्द्धं (ग) पुस्तके नास्ति ।

भद्राश्व उवाच ।

भगवन् कर्म्मणा केन छिद्यते भवसंस्रुतिः ।
किं वा कृत्वा न शोचन्ति मूर्त्ता मूर्त्तोपपत्तिषु ॥ ७ ।

अगस्त्य उवाच ।

शृणु राजन्कथान्दिव्यां दूरासन्नव्यवस्थिताम् ।
दृश्यादृश्यविभागोत्थां समाहितमना नृप: ॥ ८ ।

नाहोन रात्रिर्न दृशो दिशश्च
न द्यौर्न देवा न दिनं न सूर्य्यः ।
तस्मिन्काले पशुपालेति राजा
स पालयामास पशूननेकान् ॥ ९ ।

तान् पालयन्* स कदाचिद्दिदृक्षुः
पूर्व्वं समुद्रञ्च जगाम तूर्णम् ।
अनन्तपारस्य महोदधेस्तु
तीरे वनं तत्र वसन्ति सर्पाः ॥ १० ।

अष्टौ द्रुमाः कामवहा नदी च
तिर्यक् चोर्द्धं बभ्रमुस्तत्र चान्ये ।
पञ्च प्रधानाः पुरुषास्तथैकः
स्त्रियं बिभ्रते तेजसा दीप्यमानाम् ॥ ११ ।

सापि स्त्री स्वे वचसि धारयन्ती
सहस्रसूर्य्यप्रतिमं विशालम् ।

* तानालपन्निति (ग) ।

तस्याधरस्त्रिर्विकारस्त्रिवर्ण-
स्तं राजानं पश्य* परिभ्रमन्तम् ॥ १२ ।
तूष्णीभूता मृतकल्पा इवासन्†
नृपोऽप्यसौ तद्वनं संविवेश ।
तस्मिन् प्रविष्टे सर्व्वं एते विविशु-
र्भयादैक्यं गतवन्तः क्षणेन ॥ १३ ।
तैः सर्पैः स नृपो दुर्विनीतैः
संवेष्टितो दस्युभिश्चिन्तयानः ।
कथं चैतै न भविष्यन्ति येन
कथं चैते संमृताः सम्भवेयुः ॥ १४ ।
एवं राज्ञश्चिन्तयतस्त्रिवर्णः पुरुषोऽपरः ।
श्वेतं रक्तं तथा पीतं त्रिवर्णं धारयन्नरः ॥ १५ ।
स संज्ञां कृतवान्मह्यं‡मपरोऽथ क्व यास्यसि ।
एवं तस्य ब्रुवाणस्य महन्नाम व्यजायत ॥ १६ ।
तेनापि राजा संवीतः स बुध्यस्वेति चाब्रवीत् ।
एवमुक्ते ततः स्त्री तु तं राजानं रुरोध ह ॥ १७ ।
मायाततं मा भैष्ट तं§ ततोऽन्यः पुरुषो नृपम् ।
संवेष्ट्यास्थितवान्वीरस्ततः सर्व्वेश्वरेश्वरः ॥ १८ ।

* 'दृष्टा' स्थाने पश्येति आर्षम् ।

† आसीदिति स्थाने आसन्निति आर्षम् ।

‡ मत्त. इत्यस्य स्थाने मह्यमिति आर्षम् ।

§ तं माभैष्टेति (ग) ।

ततोऽन्ये पञ्च पुरुषा आगत्य नृपसत्तमम् ।
संवेष्ट्य संस्थिताः सर्वे ततो राजावरोधितः* ॥ १९ ।
रुध्यं† राजन्निताः सर्वे एकीभूतास्तु दस्यवः ।
मथितं शस्त्रमादाय लीनान्योऽन्यं ततो भयात् ॥ २० ।
तैर्लीनैर्नृपतेर्वेश्म बभौ परमशोभनम् ।
अन्येषामपि पापानां कोटिः साग्राभवन्नृप ॥ २१ ।
गृहे भूः सलिलं वह्निः सुखशीतश्च मारुतः ।
सावकाशानि शुभ्राणि पञ्चैकेन गुणानि च ॥ २२ ।
एकैव तेषां सुचिरं संवेष्ट्यासज्य संस्थितम् ।
एवं स पशुपालोऽसौ कृतवानञ्जसा नृप ॥ २३ ।
तस्य तल्लाघवं दृष्ट्वा रूपश्च नृपतेर्मृधे ।
त्रिवर्णः पुरुषो राजन्नब्रवीद्राजसत्तमम् ॥ २४ ।
त्वत्पुत्रोऽस्मि महाराज ब्रूहि किङ्करवाणि ते ।
अस्माभिर्बन्धुमिच्छद्भिर्भवन्तं निश्चयः कृतः ॥ २५ ।
यदि नाम कृताः सर्वे वयन्देव पराजिताः ।
एवमेव शरीरेषु लीनास्तिष्ठामः‡ पार्थिव । २६ ॥
मय्येकेऽ§ तव पुत्रत्वङ्गते सर्व्वेषु सम्भवः ।
एवमुक्तस्ततो राजा तन्नरं पुनरब्रवीत् ॥ २७ ।

---

* राजनिरोधने इति (ख), विरोधित इति (ग) ।

† रुध्येति आर्षं, रुद्धा इति साधु ।

‡ अत्र विसर्गलोप आर्षः ।

§ एकस्मिन्निति साधु ।

पुत्रो भवति मे कर्त्ता अन्येषामपि सत्तम।
पृथग्सुखैर्नरैर्भावैर्नाहं लिप्ये कदाचन॥ २८।
एवमुक्का स नृपतिस्तमात्मजमथाकरोत्।
तैर्विमुक्तः स्वयन्तेषां मध्ये स विरराम ह॥ २९।

इति वराहपुराणे भगवच्छास्त्रे एकपञ्चाशोऽध्यायः।

# द्वापञ्चाशोऽध्यायः।

अगस्त्य उवाच।

स त्रिवर्णो नृपः सृष्टः स्वतन्त्रत्वाच्च पार्थिवः।
अहंनामानमसृजत्पुत्रं पुत्रस्त्रिवर्णकः॥ १।
तस्यापि चाभवत्कन्या अवबोधस्वरूपिणी।
सा तु विज्ञानदं पुत्रं मनोज्ञं विससर्ज ह॥ २।
तस्यापि सर्व्वरूपाः स्युस्तनयाः पञ्च भोगिनः।
यथासङ्ख्येन पुत्रास्तु तेषामन्याभिधानकाः॥ ३।
एते पूर्व्वं दस्यवस्तु ततो राज्ञा वशीकृताः।
अमूर्त्ता इव ते सर्व्वे चक्रुरायतनं शुभम्॥ ४।
नवद्वारं पुरं तस्य एकस्तम्भं चतुष्पथम्।
नदीसहस्रसङ्कीर्णं जलक्षत्यसमाश्रितम्॥ ५।

तत्पुरं ते प्रविविशुरेकीभूतास्ततो नव ।
पुरुषो मूर्त्तिमान्राजा पशुपालोऽभवत् क्षणात् ॥ ६ ।
ततस्तत्पुरसंस्थस्तु पशुपालो महानृप: ।
संसूच्य वाचकान् शब्दान्वेदान्सस्मार तत्पुरे ॥ ७ ।
आत्मस्वरूपिणो नित्यांस्तदुक्तानि व्रतानि च ।
नियमान् कृतवांश्चैव सर्व्वान्राजा चकार ह ॥ ८ ।
स कदाचिन्नृप: खिन्न: कर्म्मकाण्डमरोचयत् ।
सर्व्वज्ञो योगनिद्रायां स्थित्वा पुत्रं ससर्ज्ज ह ।
चतुर्व्वक्त्रं चतुर्ब्बाहुं चतुर्व्वेदं चतु:पदम् ॥ ९ ।
तस्मादारभ्य नृपतेर्विषय: स्वपदास्थित: ।
तस्मिन् समुद्रे स नृपो वने तस्मिंस्तथैव च ॥ १० ।
तृणादिषु नृपश्चैव हस्त्यादिषु तथैव च ।
सर्गोऽभवत्कर्म्मकाण्डादनुजानन्महामते ॥ ११ ।

इति वराहपुराणे भगवच्छास्त्रे [illegible] ऽध्याय: ।

# त्रिपञ्चाशोऽध्यायः ।

भद्राश्व उवाच ।

मत्प्रश्नविषये ब्रह्मन् कथेयं कथिता त्वया ।
तस्याविर्भूतिरभवत्तस्य केन कृतेन ह ॥ १ ।

अगस्त्य उवाच ।

आगतेयं कथा चित्रा सर्व्वस्य विषये स्थिता ।
त्वद्देहे मम देहे च सर्व्वजन्तुषु सा समा ॥ २ ।
तस्याः सम्भूतिमिच्छन्यस्तस्योपायं स्वयम्परम् ।
पशुपालात्समुत्पन्नो यश्चतुष्पाच्चतुर्मुखः ॥ ३ ।
स गुरुः स कथायास्तु तस्याश्चैव प्रवर्त्तकः ।
तस्य पुत्रः स्वरो नाम सत्यमूर्त्तिरसौ स्मृतः ॥ ४ ।
तेन प्रोक्तन्तु यत्किञ्चिच्चतुर्णां स धनन्नृप ।
ऋगर्थानां*चतुर्भिस्ते तद्भक्त्याराध्यतां ययुः ॥ ५ ।
चतुर्णां प्रथमो यस्तु चतुःशृङ्गः समास्थितः ।
वृषद्वितीयस्तत्प्रोक्तमार्गेणैव तृतीयकः ।
चतुर्थस्तत्प्रणीतस्तां पूज्य भक्त्याशु तं व्रजेत् ॥ ६ ।
सत्यमूर्त्तेस्तु चरितं शुश्रुवुः प्रथमन्नृपः ।
ब्रह्मचर्य्येण वर्त्तेत द्वितीयोऽस्य सनातनः ॥ ७ ।
ततो भृत्यादिभरणं वृषभारोहणं नृषु ।
वनवासश्च निर्द्दिष्ट आत्मस्थे वृषभे सति ॥ ८ ।

* क्रियार्थानामिति (ग) ।

अहमस्मिन्वदन्यन्यश्चतुर्द्धा एकधा द्विधा ।
भेदभिन्नमहीत्पन्नास्तस्यापत्यानि जज्ञिरे ॥ ९ ।
नित्यानित्यस्वरूपाणि दृष्ट्वा पूर्व्वञ्चतुर्मुखः ।
चिन्तयामास जनकं* कथं पश्याम्यहं नृप ॥ १० ।
मदीयस्य पितुर्ये हि गुणा ह्यासन्महात्मनः ।
न ते सम्प्रति दृश्यन्ते स्वरापत्येषु केषुचित् ॥ ११ ।
पितुः पुत्रस्य यः पुत्रः स पितामहनाम यत् ।
एवं श्रुतिः स्थिता चेयं स्वरापत्येषु नान्यथा ॥ १२ ।
क्वापि सम्प्रत्यतं भावो द्रष्टव्यश्चापि ते पिता ।
एवं नीतेऽपि किङ्कार्य्यमिति चिन्तापरोऽभवत् ॥ १३ ।
तस्य चिन्तयतः शस्त्रं पितृक†म्पृरतो बभौ ।
तेन पुत्रेण तं रोषान्ममन्थ स्वरमन्तिके ॥ १४ ।
तस्मिन्मथितमात्रे तु शिरस्तस्यातिदुर्ग्रहम् ।
नारिकेलफलाकारं चतुर्वक्त्रोऽन्वपश्यत ॥ १५ ।
तच्चाहतं प्रधानेन दशधा संवृतो बभौ ।
चतुष्पादेन शस्त्रेण चिच्छेद तिलकाण्डवत्‡ ॥ १६ ।
प्रकामन्तिलशश्छिन्ने तदमूलो न मे बभौ ।
अहं त्वहं वदन् भूतन्तमप्येवमथाच्छिनत् ॥ १७ ।
तस्मिन् भागे दृशङ्कृत्वा क्रम्वमन्यमवेचत ।

---

* जननमिति (ख) ।

† पैतृकमिति साधु ।

‡ (ख) पुस्तके श्लोकस्यास्य सार्द्धैक. पादो नास्ति ।

अहं भूतादि वः पश्च यदन्तं भूतिमन्तिकात् ॥ १८ ।
तमप्येवमथो छित्वा पश्चासन्यानमीक्षत* ।
ज्वलावकाशमन्ते सर्व्वं ज्वलन्त इदमन्तिकात् ॥ १९ ।
तमप्यसङ्गशस्त्रेण चिच्छेद तिलकाण्डवत् ।
तस्मिंश्छिन्ने दशांशेन कृत्स्नमन्यमपश्यत† ॥ २० ।
पुरुषं रूपशस्त्रेण तच्छित्त्वान्यमपश्यत ।
तद्वद्ध्रस्वं सितं सौम्यं तमप्येवं तदाकरोत् ॥ २१ ।
एवङ्कृते शरीरन्तु ददर्श स पुनः प्रभुः ।
स्वकीयमेव तस्यान्तः पितरं नृपसत्तम ॥ २२ ।
त्रसरेणुसमं मूर्त्या अव्यक्तं सर्व्वजन्तुषु ।
स मे दृष्ट्वा परं हर्षमुभौ हि स स्वरोऽभवत्‡ ॥ २३ ।
एवंविधोऽसौ पुरुषः स्वरनामा महातपाः ।
मूर्त्तिस्तस्य प्रवृत्ताख्यं निवृत्ताख्यं शिरो महत् ॥ २४ ।
एतस्मादेव तस्याशु कथया राजसत्तम ।
सम्भूतिरभवद्राजा विवृतस्त्वेष एव तु ॥ २५ ।
एषेतिहासः§ प्रथमः सर्व्वस्य जगतो भृशम् ।
य इमं वेत्ति तत्त्वेन साक्षात्कर्म्मपरो भवेत् ॥ २६ ।

इति वराहपुराणे अगस्तिगीतासु पशुपालोपाख्यानं नाम त्रिपञ्चाशोऽध्यायः ।

---

* इक्षत इति आर्षं, ऐक्षत इति साधु ।

† अपश्यत इति साधु, एवं परत्रापि ।

‡ विसस्वरास्तंवदिति (ग) ।

§ एषेतिहास इति सन्धिरार्षप्रयोग. सैषदाशरथीराम इतिवत्पादपूरणार्थम् ।

# चतुःपञ्चाशोऽध्यायः ।

भद्राश्व उवाच ।

विज्ञानोत्पत्तिकामस्य क आराध्यो भवेद्द्विज ।
कथञ्चाराध्यते सो हि* एतदाख्याहि† भो द्विज ॥ १ ॥

अगस्त्य उवाच ।

विष्णुरेव सदाराध्यः सर्व्वदेवैरपि प्रभुः ।
तस्योपायं प्रवक्ष्यामि येनासौ वरदो भवेत् ॥ २ ॥
रहस्यं सर्व्ववेदानां मुनीनां मनुजां‡ तथा ।
नारायणः परो देवस्तं प्रणम्य न सीदति ॥ ३ ॥
श्रूयते च पुरा राजन्नारदेन महात्मना ।
कथितन्तुष्टिदं विष्णोर्व्रतमप्सरसान्तथा ॥ ४ ॥

अप्सरस ऊचुः ।

भगवन् ब्रह्मतनय भर्तृकामा वयं द्विज ।
नारायणश्च भर्त्ता नो यथा स्यात्तत्प्रचक्ष्व नः ॥ ५ ॥

नारद उवाच ।

प्रणामपूर्व्वकः§ प्रश्नः सर्व्वत्र विहितः शुभाः ।
स च मे न कृतो गर्व्वाद्युष्माभिर्यौवनस्मयात् ॥ ६ ॥

* सोहीति आर्षं, सहीति साधु ।

† तन्ममाचक्ष्व भो द्विज इति (ख) ।

‡ मनुजानामिति साधु । मनुजानां तथा गणा इति (ख) ।

§ प्रेरणापूर्व्वकः इति (ख) ।

तथापि देवदेवस्य विष्णोर्यन्नाम कीर्त्तितम् ।
भवतीभिस्तथा भर्त्ता भवत्विति वरः कृतः ।
तन्नामोच्चारणादेव कृतं सर्व्वं न संशयः ॥ ७ ।
इदानीं कथयाम्याशु व्रतं येन हरिः स्वयम् ।
वरदत्वमवाप्नोति भर्त्तृत्वञ्च नियच्छति ॥ ८ ।

नारद उवाच ।

वसन्ते शुक्लपक्षस्य द्वादशी या भवेच्छुभा ।
तस्यामुपोष्य विधिवन्निशायां हरिमर्च्चयेत् ॥ ९ ।
तस्योपरि रक्तपुष्पैर्मण्डलङ्कारयेद्बुधः ।
नृत्यवादित्रगीतैश्च जागरन्तत्र कारयेत् ॥ १० ।
नमो भवायेति शिरः अनङ्गायेति वै कटिम् ।
कामाय बाहुमूले तु सुशास्त्रायेति चोदरम् ॥ ११ ।
मन्मथायेति पादौ तु हरयेति* च सर्व्वतः ।
चक्षुर्द्दिक्षु भृशं तस्य प्रणतश्च ततो नृप ॥ १२ ।
एवङ्कृत्वा प्रभाते तु दापयेद्ब्राह्मणाय च ।
वेदवेदाङ्गयुक्ताय सम्पूर्णाङ्गाय धीमते ॥ १३ ।
ब्राह्मणांश्च तथा पूज्य व्रतमेतत्समापयेत् ।
एवङ्कृते तथा विष्णुर्भर्त्ता वो भविता ध्रुवम् ॥ १४ ।
पश्चात्तु रसमादाय इक्षुकाण्डात्सुशोभनात् ।
पुष्पैः सम्पूज्य देवेशं मल्लिकाजातिभिस्तथा ॥ १५ ।

---

* हरयेति चार्षं, हरय इति साधु ।

अकृत्वा मत्प्रणाममस्तु पृष्टो गर्व्वेण शोभनाः ।
अवमानस्य तस्यायं विपाको वो भविष्यति ॥ १६ ।
एतस्मिन्नेव सरसि अष्टावक्रो महामुनिः ।
तस्योपहासमङ्कृत्वा तु शापं लप्स्यथ शोभनाः ॥ १७ ।
व्रतेनानेन देवेशं पतिं लब्धाभिमानतः ।
अवमानेन हरणं गोपालैर्वोभविष्यति ।
पुरा हर्त्ता च कन्यानां देवो भर्त्ता भविष्यति ॥ १८ ।

अगस्त्य उवाच ।

एवमुक्त्वा स देवर्षिः प्रययौ नारदः क्षणात् ।
ता अप्येतद्व्रतञ्चक्रुस्तुष्टश्चासां स्वयं हरिः ॥ १९ ।

इति वराहपुराणे उत्तमभर्तृप्राप्तिव्रतं नाम चतुःपञ्चाशोऽध्यायः ।

## पञ्चपञ्चाशोऽध्यायः ।

अगस्त्य उवाच ।

शृणु राजन्महाभाग व्रतानामुत्तमं व्रतम्* ।
येन सम्प्राप्यते विष्णुः शुभेनैव न संशयः ॥ १ ।
मार्गशीर्षस्य मासे तु प्रथमेऽह्नि समारभेत् ।

* (ख) पुस्तकेऽतः परं सार्द्धपट्श्लोका न सन्ति ।

सिते पक्षे दशम्यान्तु एकभक्तं समाचरेत् ॥ २ ।
ततो दशम्यां स्नात्वा तु मध्याह्ने विष्णुमर्च्चयेत् ।
भुक्त्वा सङ्कल्पयेत्प्राग्वद्द्वादशीमक्षतां नृप ॥ ३ ।
विप्रेभ्यश्च यवान्दद्यात्तामुपोष्य विधानतः ।
सर्वदा च हरिर्वाच्यो दाने होमे तथार्च्चने ॥ ४ ।
चातुर्मास्यमथैवन्तु क्षपित्वा राजसत्तम ।
चैत्रादिषु पुनस्तद्वदुपोष्य प्रयतः सुधीः ॥ ५ ।
सक्तुपात्राणि दद्यात्तु विप्रेभ्यः प्रीतिपूर्वकम् ।
श्रावणादिषु मासेषु शालीर्दद्यात्प्रयत्नतः ॥ ६ ।
त्रिषु मासेषु यावच्च कार्त्तिकस्यादिरागतः ।
तमप्येवं क्षपित्वा तु दशम्यां प्रयतः शुचिः ॥ ७ ।
अर्च्चयित्वा हरिं भक्त्या मासनाम्ना विचक्षणः ।
सङ्कल्प्य पूर्ववद्भक्त्या द्वादश्यां संयतेन्द्रियः ॥ ८ ।
एकादश्यां यथाशक्त्या कारयेत्पृथिवीं नृप ।
काञ्चनाङ्गाश्च पाताल कुलपर्वतसंयुताम् ॥ ९ ।
भूमिन्यासविधानेन स्थापयेत्तां हरेः पुरः* ।
सितवस्त्रयुगच्छन्नां सर्ववीजसमन्विताम् ॥ १० ।
सम्पूज्य प्रियदत्तेति पञ्चरत्नैर्विचक्षणः ।
जागरं तत्र कुर्व्वीत प्रभाते तु पुनर्द्विजान् ॥ ११ ।
आमन्त्य संख्यया राजंश्चतुर्विंशति† यत्नतः ।

* पुनरिति (ख) ।

† चतुर्व्विंशतिमिति युक्तम् ।

एकैकाय च गान्दद्यादनड्वाहं सदक्षिणम् ॥ १२ ।
एकैकं वस्त्रयुग्मञ्च अङ्गुलीयकमेव च ।
कटकानि च सौवर्णकर्णाभरणकानि च ॥ १३ ।
एकैकङ्ग्राममेतेषां राजा राजन् प्रदापयेत् ।
स्वशक्त्या भरणञ्चैव दरिद्रस्य स्वशक्तितः ॥ १४ ।
यथाशक्त्या महीं कृत्वा काञ्चनीङ्गोयुगं तथा ।
वस्त्रयुग्मञ्च दातव्यं यथाविभवशक्तितः ॥ १५ ।
सर्व्वाभरणसंयुक्ताङ्गाश्च दद्याद्विशेषतः ।
एवङ्कृते सकृद्राजन्तुष्टिमायाति वै विभुः ॥ १६ ।
रौप्यां वा पृथिवीङ्कृत्वा यथाविभवशक्तितः ।
दद्यात्तां ब्राह्मणेभ्यश्च यथाशक्त्या हरिं स्मरन् ॥ १७ ।
तथा भोजनमेतेषामुपानच्छत्रिकां तथा ।
पादुके च तथा दद्यात्कृष्णो दामोदरो मम ॥ १८ ।
प्रीयतां सर्व्वदो देवो विश्वरूपो हरिर्मम ।
दानं सुभोजनं दत्त्वा मकृत्यत्फलमाप्यते ॥ १९ ।
वर्षाणाञ्च सहस्रेण कीर्त्तितुन्नैव शक्यते ।
तथाप्युद्देशतः किञ्चित्फलं वक्ष्यामि तेऽनघ ॥ २० ।
व्रतेनानेन यद्दत्तं शुभं यस्य शृणुष्व तत् ।
आसीदादियुगे राजा ब्रह्मवादी दृढ़व्रतः ॥ २१ ।
स पुत्रकामः पप्रच्छ ब्रह्माणं परमेश्वरम् ।
तस्येदं व्रतमाचख्यौ ब्रह्मा स कृतवान् पुरा ॥ २२ ।
तस्य व्रतान्ते विश्वात्मा स्वयं प्रत्यक्षतां गतः ।

दृष्ट्वा चोवाच भो राजन्वरो मे व्रियतां वरः ॥ २३ ।

राजोवाच ।

पुत्रं मे देहि देवेश वेदमन्त्रविशारदम् ।
याजकं यजनासक्तं कीर्त्त्या युक्तं चिरायुषम् ॥ २४ ।
असंख्यातगुणञ्चैव ब्रह्मभूतमकल्मषम् ।
एवमुक्त्वा ततो राजा पुनर्वचनमब्रवीत् ॥ २५ ।
ममाप्येतच्छुभं स्थानं प्रयच्छ परमेश्वर ।
यत्तन्मुनिपदं नाम यत्र गत्वा न शोचति ॥ २६ ।
एवमस्त्विति तं देवः प्रोक्त्वा चादर्शनं गतः ।
तस्यापि राज्ञः पुत्रोऽभूद्दत्तश्रीर्नाम नामतः ॥ २७ ।
वेदवेदाङ्गसम्पन्नो यज्ञयाजी बहुश्रुतः ।
तस्य कीर्त्तिर्महाराज विस्तृता धरणीतले ॥ २८ ।
राजापि तं सुतं लब्ध्वा विष्णुदत्तं प्रतापिनम् ।
जगाम तपसे युक्तः सर्व्वद्वन्द्वसहः प्रभुः ॥ २९ ।
आराधयामास हरिं निराहारो जितेन्द्रियः ।
हिमवत्पर्व्वते रम्ये स्तुतिञ्चापि सदापठत् ॥ ३० ।

भद्राश्व उवाच ।

कीदृशी सा स्तुतिर्ब्रह्मन् यां चकार स पार्थिवः ।
किञ्च तस्याभवद्देवं स्तुन्वतः पुरुषोत्तमम् ॥ ३१ ।

दुर्वासा उवाच ।

हिमवन्तं समाश्रित्य राजा तद्गतमानसः ।
स्तुतिञ्चकार देवस्य विष्णोरद्भुतकर्म्मणः ॥ ३२ ।

राजोवाच ।

चराचरं चीरसमुद्रशायिनं
पृथ्वीधरं मूर्त्तिमतां परम्पदम् ।
अतीन्द्रियं विश्वभुजां पुरःकृतं
नीराकृतिं स्तौमि जनार्द्दनं प्रभुम् ॥ ३३ ।
त्वमादितस्त्वं परमार्थरूपी
विभुः पुराणः पुरुषोत्तमश्च ।
अतीन्द्रियो वेदविदां प्रधानः
प्रपाहि मां शङ्खगदास्त्रपाणे ॥ ३४ ।
कृतस्त्वया देव सुरासुराणां
सङ्कीर्त्यमानेन अनन्तमूर्त्ते ।
छद्मार्थमेतत्तव देव विश्वां
सच्चेष्टितं कूटगतस्य तत्स्यात् * ॥ ३५ ।
तथापि कूर्म्मत्वमृगत्वमुच्चै-
स्त्वया कृतं रूपमनेकरूप ।
सर्व्वप्रभावादसकृच्च जन्म
सङ्कीर्त्यते तेऽच्युत नैतदस्ति ॥ ३६ ।
नृसिंह वामन नमो जमदग्निनाम
दशास्यगोत्रान्तक वासुदेव ।

* ते स्यादिति (ग) ।

नमोऽस्तु ते बुद्ध कल्किन्वरेश*
शम्भो नमस्ते विबुधारिनाशन ॥ ३७ ।
नमोऽस्तु नारायण पद्मनाभ
नमो नमस्ते पुरुषोत्तमाय ।
नम: समस्तामरसङ्घपूज्य
नमोऽस्तु ते सर्व्वविदां प्रधान ॥ ३८ ।
नम: करालास्य नृसिंहमूर्त्ते
नमो विशालाद्रिसमान कूर्म्म ।
नम: समुद्रप्रतिमान मत्स्य
नमामि त्वां क्रोड़रूपिन्ननन्त ॥ ३९ ।
सृष्ट्यर्थमेतत्तव देव चेष्टितं
न मुख्यपक्षे तव मूर्त्तिता विभो ।
अजानता ध्यानमिदं प्रकाशितं
न लक्ष्यसे त्वं पुरुष: पुराण: ॥ ४० ।
आद्यो मखस्त्वं स्वयमेव विष्णो
मखाङ्गभूतोऽसि हविस्त्वमेव ।
पशुर्भवान् ऋत्विगाज्यन्त्वमेव
त्वां देवसङ्घा मुनयो यजन्ति† ॥ ४१ ।
चलाचलं जगदेतच्च यस्मिन्
सुरादिकालानलसंस्थमुत्तमम् ।

* सुरेश इति (ख) ।

† यजन्ते इति साधु ।

न त्वं विभक्तोऽसि जनार्द्दनेश
प्रयच्छ सिद्धिं हृदयेप्सितां मे ॥ ४२ ।
नमः कमलपत्राक्ष मूर्त्तामूर्त्त नमो हरे ।
शरणन्त्वां प्रपन्नोऽस्मि संसारान्मां समुद्धर ॥ ४३ ।
एवं स्तुतस्ततो देवस्तेन राज्ञा महात्मना ।
विशालाम्रतलस्थेन तुतोष परमेश्वरः ॥ ४४ ।
कुब्जरूपस्ततो भूत्वा आजगाम हरिः स्वयम् ।
तस्मिन्नागतमात्रे तु सोऽप्याम्रः* कुब्जकोऽभवत् ॥ ४५ ।
तद्दृष्ट्वा महदाश्चर्य्यं स राजा शंसितव्रतः ।
विशालस्य कथं कौब्जमिति चिन्तापरोऽभवत् ॥ ४६ ।
तस्य चिन्तयतो बुद्धिर्जातेयं ब्राह्मणम्प्रति ।
अनेनागतमात्रेण कृतमेतन्न संशयः ॥ ४७ ।
एतस्मादेव भविता भगवान्पुरुषोत्तमः ।
एवमुक्त्वा नमश्चक्रे तं विप्रं स नृपोत्तमः ॥ ४८ ।
अनुग्रहाय भगवन्नूनं त्वं पुरुषोत्तमः ।
आगतोऽसि स्वरूपं मे दर्शयस्वाधुना हरे ॥ ४९ ।
एवमुक्तस्तदा देवः शङ्खचक्रगदाधरः ।
बभौ तत्पुरतः सौम्यो वाक्यञ्चेदमुवाच ह ॥ ५० ।
वरं वृणीष्व राजेन्द्र यत्ते मनसि वर्त्तते ।
मयि प्रसन्ने त्रैलोक्यं तिलमात्रमिति प्रभो ॥ ५१ ।

* सोऽप्याम्र इति (ग) ।

एवमुक्तस्ततो राजा हर्षोत्फुल्लितलोचनः।
मोक्षं प्रयच्छ देवेशेत्युक्त्वा नोवाच किञ्चन॥ ५२।
एवमुक्तः स भगवान् पुनर्वाक्यमुवाच ह॥ ५३।
मय्यागते विशालोऽयमाम्रः कुब्जत्वमागतः।
यस्मात्तस्मात्तीर्थमिदं कुब्जकाम्रं भविष्यति॥ ५४।
तिर्य्यग्योन्यादयोऽप्यस्मिन् ब्राह्मणा वा यदि स्वकम्।
कलेवरं त्यजिष्यन्ति* तेषां पञ्च शतानि च।
विमानानि भविष्यन्ति योगिनो मुक्तिरेव च॥ ५५।
एवमुक्त्वा नृपं देवः शङ्खाग्रेण जनार्द्दनः।
स्पृश्य* संस्पृष्टमात्रोऽसौ† परं निर्व्वाणमाप्तवान्॥ ५६।
तस्मात्त्वमपि राजेन्द्र तं देवं शरणं व्रज।
येन भूयः पुनः शोच्यपदवीं नो प्रयास्यसि॥ ५७।
य इदं शृणुयान्नित्यं प्रातरुत्थाय मानवः।
पठेद्यश्चरितन्ताभ्यां मोक्षधर्मार्थदो भवेत्॥ ५८।
शुभ्रव्रतमिदं पुण्यं यश्च कुर्य्याज्जनेश्वर।
स सर्व्वसम्पदश्चेह भुक्त्वान्ते तन्मयं व्रजेत्॥ ५९।

इति वराहपुराणे शुभव्रतं नाम पञ्चपञ्चाशोऽध्यायः।

* त्यक्ष्यन्तीति साधु।

† स्पृष्टवान् इति स्थाने स्पृश्येति पाठ आर्षः।

# षट्पञ्चाशोऽध्यायः ।

अगस्त्य उवाच ।

अतः परं प्रवक्ष्यामि धन्यव्रतमनुत्तमम् ।
येन सद्यो भवेद्धन्यः अधनोऽपि हि यो भवेत् ॥ १

मार्गशीर्षे सिते पक्षे प्रतिपद्या तिथिर्भवेत् ।
तस्यां नक्तं प्रकुर्व्वीत विष्णुमग्निं प्रपूजयेत् ॥ २ ।

वैश्वानराय पादौ तु अग्नयेत्युदरं तथा ।
हविर्भुजाय च उरो द्रविणोदेति वै भुजौ ॥ ३ ।

संवर्त्तायेति च शिरो ज्वलनायेति सर्वतः ।
अभ्यर्च्यैवं विधानेन देवदेवं जनार्द्दनम् ॥ ४ ।

तस्यैव पुरतः कुण्डं कारयित्वा विधानतः ।
होमं तत्र प्रकुर्वीत एभिर्मन्त्रैर्विचक्षणः ॥ ५ ।

ततः सयावकान्नं भुञ्जीयाद्घृतसंयुतम् ।
कृष्णपक्षेऽप्येवमेव चातुर्मास्यन्तु यावता ॥ ६ ।

चैत्रादिषु च भुञ्जीत पायसं सघृतं बुधः ।
श्रावणादिषु सक्तूंश्च ततश्चैतत्समाप्यते ॥ ७ ।

समाप्ते तु व्रते वह्निं काञ्चनं कारयेद्बुधः ।
रक्तवस्त्रयुगच्छन्नं रक्तपुष्पानुलेपनम् ॥ ८ ।

कुङ्कुमेन तथालिप्य* ब्राह्मणं सत्त्वमेव च ।

* अत्र तथा, आलिप्य इति पदच्छेदः कर्तव्यः, अन्यथा लिप्येति साधु

सर्व्वावयवसम्पूर्णं ब्राह्मणं प्रियदर्शनम् ।
पूजयित्वा विधानेन रक्तवस्त्रयुगेन च ।
दद्यात्पश्चाच्च तं तस्य मन्त्रेणानेन बुद्धिमान् ॥ ९।१० ।
धन्योऽस्मि धन्यकर्म्मास्मि धन्यचेष्टोऽस्मि धन्यवान् ।
धन्येनानेन चीर्णेन व्रतेन स्यां सदा सुखी ॥ ११ ।
एवमुच्चार्य्य तं विप्रे* न्यस्य कोशं महात्मने ।
सद्यो धन्यत्वमाप्नोति योऽपि स्याद्भागवर्ज्जितः† ॥ १२ ।
इह जन्मनि सौभाग्यं धनं धान्यञ्च पुष्कलम् ।
अनेन कृतमात्रेण जायते नात्र संशयः ॥ १३ ।
प्राग्जन्मजनितं यावदग्निर्दहति पातकम्‡ ।
दग्धे पापे विमुक्तात्मा इह जन्मन्यसौ भवेत् ॥ १४
योऽपीदं शृणुयान्नित्यं यश्च भक्त्या पठेद्द्विजः§ ।
उभौ ताविह लोकौ तु धन्यौ सद्यो भविष्यतः ॥ १५ ।
श्रूयते च व्रतञ्चैतच्चीर्णमासीन्महात्मना ।
धनदेन पुरा कल्पे शूद्रायोनौ स्थितेन हि ॥ १६ ।

इति वराहपुराणे धन्यव्रतं नाम षट्पञ्चाशोऽध्यायः ।

* विप्राय इति साधु ।

† भगवर्ज्जित इति (ग) ।

‡ पापकमिति (क), (ख)

§ पठेन्नर इति (ख) ।

# सप्तपञ्चाशोऽध्यायः ।

अगस्त्य उवाच ।

अतःपरं प्रवक्ष्यामि कान्तिव्रतमनुत्तमम् ।
यत्कृत्वा तु पुरा सोमः कान्तिमानभवत्पुनः ॥ १
यक्ष्मणा दक्षशापेन पुरा क्रान्तो निशाचरः ।
एतच्चीर्त्त्वा व्रतं सद्यः कान्तिमानभवत्किल ॥ २ ।
द्वितीयायान्तु राजेन्द्र कार्त्तिकस्य सितन्दिनम् ।
नक्तं कुर्व्वीत यत्नेन अर्च्चयन् बलकेशवम् ॥ ३ ।
बलदेवाय पादौ तु केशवाय शिरोऽर्च्चयेत् ।
एवमभ्यर्च्च मेधावी वैष्णवं रूपमुत्तमम् ॥ ४ ।
परन्तु रूपं सोमाख्यं द्विकलं तद्दिने हि यत् ।
तस्य देवस्य चार्घ्यन्तु दद्यान्मन्त्रेण सुव्रत* ॥ ५ ।
नमोऽस्त्वमृतरूपाय स वै विधिवराय च ।
यज्ञलोकाधिपतये सोमाय परमात्मने† ॥ ६ ।
रात्रौ स विप्रो भुञ्जीत यवान्नं सघृतन्नरः ॥ ७ ।
फाल्गुनादिचतुष्कन्तु पायसम्भक्षयेच्छुचिः ।
शालिहोमं प्रकुर्व्वीत कार्त्तिके तु यवैस्तथा ॥ ८ ।
आषाढ़ादिचतुष्के तु तिलहोमन्तु कारयेत् ।

---

* (ख) पुस्तकेऽतःपरं षट्पादा न सन्ति ।

† एष पादः (ग) पुस्तके नास्ति ।

तद्दत्तिलान्नं भुञ्जीत एष एव विधिः स्मृतः ॥ ९ ।
ततः संवत्सरे पूर्णे काञ्चनं शशिनं व्रती ।
सितवस्त्रयुगच्छन्नं सितपुष्पानुलेपनम् ॥ १० ।
दद्याद्द्विजाय सम्पूज्य काञ्चनं शशिनं तथा* ।
अथ संवत्सरे पूर्णे कृत्वा सोमन्तु राजतम् ॥ ११ ।
सितवस्त्रयुगच्छन्नं सितपुष्पानुलेपनम् ।
एवमेव द्विजं पूज्य ततस्तं प्रतिपादयेत्† ॥ १२ ।
कान्तिमानपि लोकेऽस्मिन् सर्व्वस्त्रः प्रियदर्शनः ।
त्वत्प्रसादात्सोमरूपिन्नारायण नमोऽस्तु ते ॥ १३ ।
अनेन किल मन्त्रेण दत्त्वा विप्राय वाग्यतः ।
दत्तमात्रे ततस्तस्मिन् कान्तिमाञ्जायते नरः ॥ १४ ।
आत्रेयेणापि सोमेन कृतमेतत्पुरा नृप ।
तस्य व्रतान्ते सन्तुष्टः स्वयमेव जनार्द्दनः ॥ १५ ।
यक्ष्माणमपनीयाशु अमृताख्यां कलां ददौ ।
तां कलां सोमराजासौ तपसा लब्धवान्निमि ॥ १६ ।
सोमत्वञ्चागमत्सोमो द्विजराजत्वमेव च ।
द्वितीयामश्विनौ सोमभुजौ कीर्त्त्यौ तु तद्दिने ॥ १७ ।
तौ शेषविष्णुविख्यातौ‡ शुक्लपक्षौ न संशयः ।

* अतःपरं षट्पादाः (ख) पुस्तके न सन्ति ।

† एष पाठः (ग) पुस्तके नास्ति ।

‡ नृप तौ शेषविख्यातौ इति (ग), शुक्लपक्षौ इति (क), (ख)

न विष्णोर्व्यतिरिक्तः स्याद्देवतं नृपसत्तम ।
नामभेदेन सर्व्वत्र संस्थितः पुरुषोत्तमः ॥ १८ ।

इति वराहपुराणे कान्तिव्रतं नाम सप्तपञ्चाशोऽध्यायः ।

## अष्टपञ्चाशोऽध्यायः ।

अगस्त्य उवाच ।

अतःपरं महाराज सौभाग्यकरणं व्रतम् ।
शृणु येनाशु सौभाग्यं स्त्रीपुंसोरुपजायते ॥ १ ।
फाल्गुनस्य तु मासस्य तृतीया शुक्लपक्षगा ।
उपासितव्या नक्तेन शुचिना सत्यवादिना ॥ २ ।
सस्त्रीकश्च हरिं पूज्य रुद्रं वा चोमया सह ।
या श्रीः सा गिरिजा प्रोक्ता यो हरिः स त्रिलोचनः ॥ ३
एवं सर्व्वेषु शास्त्रेषु पुराणेषु च गद्यते ।
एतस्मादन्यथा यस्तु ब्रूते शास्त्रं पृथक्तया ॥ ४ ।
रुद्रो जनानां मर्त्यानां कार्य्यं शास्त्रं न तद्भवेत् ।
विष्णुं रुद्रकृतं ब्रूयाच्छ्रीर्गौरीति निगद्यते ॥ ५ ।
एतयोरन्तरं* यश्च सोऽधमित्युच्यते जनैः ।

---

* एतयोरन्तरं ब्रूयादिति (क)। (ख, पुस्तके अन्तरेति ।

† अधमित्युच्यते इत्यार्षम्, अधम इत्युच्यते इति साधु ।

तं नास्तिकं विजानीयात्सर्व्वधर्म्मवहिष्कृतम् ॥ ६ ।
एवं ज्ञात्वा सलक्ष्मीकं हरिं सम्पूज्य यत्नतः ।
मन्त्रेणानेन राजेन्द्र ततस्तं परमेश्वरम् ॥ ७ ।
गम्भीरायेति पादौ तु सुभगायेति वै कटिम् ।
उदरं देवदेवाय त्रिनेत्रायेति वै मुखम् ॥ ८ ।
शिरश्च वाचस्पतये रुद्रायेति च सर्वतः ।
एवमभ्यर्च्य मेधावी विष्णुं लक्ष्म्या समन्वितम् ॥ ९ ।
हरं वा गौरीसंयुक्तं गन्धपुष्पादिभिः क्रमात् ।
ततस्तस्याग्रतो होमं कारयेन्मधुसर्पिषा ।
तिलैः सह महाराज सौभाग्यपतयेति* च ॥ १० ।
ततस्त्वक्षारविरसं निस्नेहं धरणीतले ।
गोधूमान्नन्तु भुञ्जीत कृष्णेऽप्येवं विधिः स्मृतः ॥ ११ ।
आषाढ़ादिद्वितीयां† तु पारणां तत्र कल्पयेत् ।
यवान्नेन ततः पश्चात्कार्त्तिकादिषु पार्थिव ॥ १२ ।
श्यामाकं तत्र भुञ्जीत त्रीन्मासान्नियतः शुचिः ॥ १३ ।
ततो माघसिते पक्षे तृतीयायां नराधिप ।
सौवर्णं कारयेद्गौरीं रुद्रञ्चैकत्र बुद्धिमान् ।
सलक्ष्मीकं हरिं वापि यथाशक्त्या‡ प्रसन्नधीः ॥ १४ ।

* पतयेति इत्यार्षं पतय इति साधु ।

† द्वितीये तु इति (क),

‡ यथाशक्तीति साधु ।

ततस्तान् ब्राह्मणे* दद्यात्पात्रभूते विचक्षणे ॥
अन्नेन हीने वेदानां पारगे साधुवर्त्तिनि ।
सदाचारेऽथ वा दद्याद्विष्णुभक्ते विशेषतः ॥ १५।१६ ।
षड्भिः पात्रैरुपेतन्तु ब्राह्मणाय निवेदयेत् ।
एकं मधुमयं पात्रं द्वितीयं घृतपूरितम् ॥
तृतीयं तिलतैलस्य चतुर्थं गुड़संयुतम् ।
पञ्चमं लवणैः पूर्णं षष्ठं गोक्षीरसंयुतम् ॥ १७।१८ ।
एतानि दत्त्वा पात्राणि सप्तजन्मान्तरे भवेत् ।
सुभगो दर्शनीयश्च नारी वा पुरुषोऽपि वा ॥ १९ ।

इति वराहपुराणे सौभाग्यव्रतं नाम अष्टपञ्चाशोऽध्यायः ।

## ऊनषष्टितमोऽध्यायः ।

अगस्त्य उवाच ।

अथ विघ्नहरं राजन् कथयामि शृणुष्व मे ।
सम्यक्कृतेन येनाशु न विघ्नैः परिभूयते ॥ १ ।
चतुर्थ्यां फाल्गुने मासि ग्रहीतव्यं व्रतन्त्विदम् ।
नक्ताहारेण राजेन्द्र तिलान्नं पारणं स्मृतम् ॥ २ ।

---

* ब्राह्मणायेति साधु, एवमन्यत्र ।

तदेवाग्नौ तु होतव्यं ब्राह्मणाय च तद्भवेत् ।
चातुर्मास्यं व्रतञ्चैतत्कृत्वा वै पञ्चमे तथा ॥ ३ ।
विप्राय दद्यात्सौवर्णं गजवक्त्रं सुपूजितम् ।
पायसैः पञ्चभिः पात्रैरुपेतन्तु तिलैस्तथा ॥ ४ ।
एवं कृत्वा व्रतञ्चैतत्सर्व्वविघ्नैर्विमुच्यते ।
हयमेधस्य विघ्ने तु* सञ्जाते सगरस्तथा ॥ ५ ।
एतदेव चरित्वा तु हयमेधं स आप्तवान् ।
तथा रुद्रेण देवेन त्रिपुरं निघ्नता पुरा ॥ ६ ।
एतदेव कृतन्तस्मात्त्रिपुरस्तेन पातितः ।
मया समुद्रं पिवता एतदेव कृतं व्रतम् ॥ ७ ।
अन्यैरपि महीपालैरेतदेव कृतं पुरा ।
तपोऽर्थिभिर्ज्ञानकृद्भिरविघ्नार्थे परन्तप ॥ ८ ।

शूराय धीराय गजाननाय
लम्बोदरायैकदंष्ट्राय चैव ।
एवं सम्पूज्य तद्दिने पुण्यकृद्भि-
र्होमं कुर्य्याद्विघ्ननाशस्य हेतोः ॥ ९ ।

अनेन कृतमात्रेण सर्व्वविघ्नैः प्रमुच्यते ।
विनायकस्य दानेन कृतकृत्यो नरो भवेत् ॥ १० ।

इति वराहपुराणे अविघ्नव्रतं नाम ऊनषष्टितमोऽध्यायः ।

* अग्नौ चेति (ग)

# षष्टितमोऽध्यायः।

अगस्त्य उवाच।

शान्तिव्रतं प्रवक्ष्यामि तव राजन् शृणुष्व तत्।
येन चीर्णेन शान्तिः स्यात्सर्वदा गृहमेधिनाम्॥ १।
पञ्चम्यां शुक्लपक्षस्य कार्त्तिके मासि सुव्रत।
आरम्भे वर्षमेकन्तु भुञ्जीयादुष्णवर्ज्जितम्॥ २।
नक्तं देवन्तु सम्पूज्य हरिं शेषोपरि स्थितम्।
अनन्तायेति पादौ तु कटिं वासुकिने नमः॥ ३।
तक्षकायेति जठरमुरः कर्कोटकाय च।
पद्माय कण्ठं सम्पूज्य महापद्माय दोर्युगम्॥ ४।
शङ्खपालाय वक्त्रन्तु कुटिलायेति वै शिरः।
एवं विष्णुगतं पूज्य* पृथगेव च पूजयेत्॥ ५।
क्षीरेण स्नपनं कुर्य्यात्तानुद्दिश्य हरेः पुनः।
तदग्रे होमयेत् क्षीरं तिलैः सह विचक्षणः॥ ६।
एवं संवत्सरस्यान्ते ब्राह्मणान् भोजयेत्ततः।
नागन्तु काञ्चनं कुर्य्याद्ब्राह्मणाय निवेदयेत्॥ ७।
एवं यः कुरुते भक्त्या व्रतमेतन्नराधिप।
तस्य शान्तिर्भवेन्नूनं नागेभ्यो न भयं तथा॥ ८।

इति वराहपुराणे शान्तिव्रतं नाम षष्टितमोऽध्यायः।

# एकषष्टितमोऽध्यायः।

अगस्त्य उवाच।

कामव्रतं महाराज शृणु मे गदतोऽधुना।
येन कामाः समृद्ध्यन्ते मनसा चिन्तिता अपि॥ १॥
षष्ठ्यां फलाशनो यस्तु वर्षमेकं व्रतं चरेत्।
पौषमासे सिते पक्षे पञ्चम्यां कृतभोजनः॥ २॥
षष्ठ्यान्तु प्राशयेद्धीमान्प्रथमन्तु फलं नृप।
ततो भुञ्जीत यत्नेन वाग्यतः शुद्धमोदनम्॥ ३॥
ब्राह्मणैः सह राजेन्द्र अथवा केवलैः फलैः।
तमेकं दिवसं स्थित्वा सप्तम्यां पारयेन्नृप॥ ४॥
अग्निकार्य्यन्तु कुर्व्वीत गुहरूपेण* केशवम्।
पूजयित्वा विधानेन वर्षमेकं व्रतं चरेत्॥ ५॥
षड्वक्त्रः कार्त्तिकेयश्च सेनानीः कृत्तिकासुतः।
कुमारः स्कन्द इत्येवं पूज्यो विष्णुः स्वनामभिः॥ ६॥
समाप्तौ तु व्रतस्यास्य कुर्य्याद्ब्राह्मणभोजनम्।
षण्मुखं मूर्त्तसौवर्णं† ब्राह्मणाय निवेदयेत्॥ ७॥
सर्वे कामाः समृद्ध्यन्तां मम देव कुमारक।
त्वत्प्रसादादिमं भक्त्या गृह्यतां विप्र मा चिरम्॥ ८॥
अनेन दत्तमात्रेण ब्राह्मणाय सवस्त्रकम्।

* गुहरूपेणेति (ग)।

† सर्व्वसौवर्णमिति (ग)।

ततः कामाः समृद्ध्यन्ति सर्वे वै इह जन्मनि ॥ ९ ।
अपुत्रो लभते पुत्रं धनार्थी* लभते धनम् ।
भ्रष्टराज्यो लभेद्राज्यं नात्र कार्य्या विचारणा ॥ १० ।
एतद्व्रतं पुरा चीर्णं नलेन नृपसत्तम ।
ऋतुपर्णस्य विषये वसता व्रतचर्य्यया ॥ ११ ।
तथा राज्यच्युतैरन्यैर्बहुभिर्नृपसत्तमैः ।
पौराणिकैर्व्रतञ्चैव सिद्धार्थं नृपसत्तम ॥ १२ ।

इति वराहपुराणे कामव्रतं नाम एकषष्टितमोऽध्यायः ।

## द्विषष्टितमोऽध्यायः ।

अगस्त्य उवाच ।

अथापरं महाराज व्रतमारोग्यसंज्ञितम्* ।
कथयामि परं पुण्यं सर्व्वपापप्रणाशनम् ॥ १ ।
आदित्य भास्कर रवे भानो सूर्य्य दिवाकर ।
प्रभाकरेति सम्पूज्य† एवं व्रतमुपाचरेत् ॥ २ ।

---

* अधन इति (ग) ।

* अथाऽपरं प्रवक्ष्यामि व्रतमारोग्यसंज्ञितमिति (क) ।

† कर्णेहि सम्पूज्य इति (ख) ।

षष्ठ्याञ्चैव कृताहारः सप्तम्यां भानुमर्चयेत्।
अष्टम्याञ्चैव भुञ्जीत एष एव विधिक्रमः॥ ३॥
अनेन वत्सरं पूर्णं विधिना योऽर्चयेद्रविम्।
तस्यारोग्यं धनं धान्यमिह जन्मनि जायते॥ ४॥
परत्र च शुभं स्थानं यद्गत्वा न निवर्त्तते।
सार्वभौमः पुरा राजा अनरण्यो महाबलः॥ ५॥
तेनायमर्चितो देवो व्रतेनानेन पार्थिव।
यस्य तुष्टोऽभवद्देवः* प्रादादारोग्यमुत्तमम्॥ ६॥

भद्राश्व उवाच।

किमसौ रोगवान्राजा येनारोग्यमवाप्तवान्।
सार्व्वभौमस्य च कथं व्रह्मरोगस्य सम्भवः॥ ७॥

अगस्त्य उवाच।

स राजा सार्व्वभौमोऽभूद्यशस्वी च सुरूपवान्।
स कदाचिन्महाराज नृपश्रेष्ठो महाबलः॥ ८॥
गतवान्मानसं दिव्यं सरो देवगणान्वितम्।
तत्रापश्यद्बृहत्पद्मं सरोमध्यगतं सितम्॥ ९॥
तत्र चाङ्गुष्ठमात्रन्तु स्थितं पुरुषसत्तमम्।
रक्तवासोभिराच्छन्नं द्विभुजन्तिग्मतेजसम्॥ १०॥
तं दृष्ट्वा सारथिम्प्राह पद्ममेतन्ममानय।
इदन्तु शिरसा बिभ्रत्सर्व्वलोकस्य सन्निधौ॥ ११॥
श्लाघनीयो भविष्यामि तस्मादानय मा चिरम्।

* वरं देव इति (ख)।

एवमुक्तस्तदा तेन सारथिः प्रविवेश ह ॥ १२ ।
गृहीतुमुपचक्राम तत्पद्मं नृपसत्तम ।
स्पृष्टमात्रे ततः पद्मे हुङ्कारः समजायत ॥ १३ ।
तेन शब्देन वित्रस्तः स पपात ममार च ।
राजा च तत्क्षणादेव शब्देन समपद्यत ॥ १४ ।
कुष्ठी विगतवर्णश्च बलवीर्य्यविवर्ज्जितः ।
तथागतमथात्मानं दृष्ट्वा स पुरुषर्षभः ॥ १५ ।
तस्थौ तत्रैव शोकार्त्तः किमेतदिति चिन्तयन् ।
तस्य चिन्तयतो धीमानाजगाम महातपाः ॥ १६ ।
वसिष्ठो ब्रह्मपुत्रोऽथ स तं पप्रच्छ पार्थिवम् ।
कथन्ते राजशार्दूल इह देहस्य शासनम् ॥ १७ ।
इदानीं मे च किङ्कार्य्यं तन्ममाचक्ष्व पृच्छतः ।
एवमुक्तस्ततो राजा वसिष्ठेन महात्मना ॥ १८ ।
सर्व्वं पद्मस्य वृत्तान्तं कथयामास च प्रभुः ।
तं श्रुत्वा स मुनिस्तत्र साधु राजन्तथाब्रवीत् ॥ १९ ।
असाधुरथ चातिष्ठस्तस्मात्कुष्ठित्वमागतः ।
एवमुक्तस्तदा राजा वेपमानः कृताञ्जलिः ॥ २० ।
पप्रच्छ साध्वहं विप्र कथं वासाध्वहं मुने ।
कथं मे कुष्ठं सञ्जातमेतन्मे वक्तुमर्हसि ॥ २१ ।

वसिष्ठ उवाच ।

एतद्ब्रह्मोद्भवं नाम पद्मं त्रैलोक्यविश्रुतम् ।
दृष्टमात्रेण चानेन दृष्टाः स्युः सर्व्वदेवताः ॥ २२ ।

एतस्मिन्दृश्यते चैतत् षण्मासं क्वापि पार्थिव।
एतस्मिन्दृष्टमात्रे तु यो जलं विशते नरः॥ २३।
सर्वपापविनिर्मुक्तः परं निर्वाणमर्हति।
ब्रह्मणः प्रागवस्थायां मूर्त्तिरप्सु व्यवस्थिता॥ २४।
एतां दृष्ट्वा जले मग्नः संसाराब्धिं प्रमुच्यते।
इमञ्च दृष्ट्वा ते सूतो जले मग्नो नरोत्तम॥ २५।
प्रविष्टश्च पुनरिमं हन्तुमिच्छन्नराधिप।
प्राप्तवानसि दुर्बुद्धे कुष्ठित्वं पापपूरुष॥ २६।
दृष्टमेतत्त्वया यस्मात्त्वं साध्विति ततः प्रभो।
मयोक्तो मोहमापन्नस्तेनासाधुरितीरितः॥ २७।
ब्रह्मपुत्रो वदन्नेवं नृपमन्तर्हितोऽभवत्।
स तद्वचनमाकर्ण्य राजापि परमेश्वरम्॥ २८।
अहन्यहनि चागच्छत्तं पुनर्दृष्टवानपि।
देवा अपि वदन्त्येते पद्मं काञ्चनमुत्तमम्॥ २९।
मानसे ब्रह्मपद्मन्तु दृष्ट्वा चाब्जगतं हरिम्।
प्राप्स्यामस्तत्परं ब्रह्म यद्गत्वा न पुनर्भवेत्॥ ३०।
इदञ्च कारणं चान्यत्कुष्ठस्य शृणु पार्थिव।
आदित्यः पद्मगर्भोऽस्मिन्स्वयमेव व्यवस्थितः॥ ३१।
तं दृष्ट्वा तत्त्वतो भावः परमात्मैष शाश्वतः।
धारयामि शिरस्येनं ततः ख्यातिर्भविष्यति॥ ३२।
इतीमं भावमास्थाय सूतोऽयं प्रेषितस्त्वया।
तत्क्षणादेव स स्मृतः त्वञ्च कुष्ठित्वमागतः॥ ३३।

तस्मात्त्वमपि राजेन्द्र व्रतमेतत्समाचर ।
व्रतस्यास्य प्रभावेण कुष्ठरोगात्प्रमुच्यसे ॥ ३४ ॥

इति वराहपुराणे आरोग्यव्रतं नाम द्विषष्टितमोऽध्यायः ।

# अथ त्रिषष्टितमोऽध्यायः ।

अगस्त्य उवाच ।

अथापरं महाराज पुत्रप्राप्तिव्रतं शुभम् ।
कथयामि समासेन तन्मे निगदतः शृणु ॥ १ ॥
मासे भाद्रपदे या तु कृष्णपक्षे नरेश्वर ।
अष्टम्यामुपवासेन पुत्रप्राप्तिव्रतं हि तत् ॥ २ ॥
सप्तम्याञ्चैव सङ्कल्प्य अष्टम्यामर्च्चयेद्धरिम्* ।
देवक्युत्सङ्गगं विष्णुं मातृभिः परिवेष्टितम् ॥ ३ ॥
प्रभाते विमलेऽष्टम्यामर्च्चयेत्प्रयतो हरिम् ।
प्राग्विधानेन गोविन्दमर्च्चयित्वा विधानतः ॥ ४ ॥
ततो यवैः कृष्णतिलैः सघृतैर्होमयेद्दधि ।
ब्राह्मणान्भोजयेद्भक्त्या यथाशक्त्या सदक्षिणम् ॥ ५

---

* षष्ठ्याञ्चैव तु संकल्प्य सप्तम्यां पूजयेद्धरिमिति (क), (ग)।

ततः स्वयन्तु भुञ्जीत प्रथमं विल्वमुत्तमम् ।
पश्चाद्यथेष्टं भुञ्जीत स्नेहैः सर्व्वरसैर्युतम् ॥ ६ ।
प्रतिमासमनेनैव विधिनोपोष्य मानवः ।
कृष्णाष्टम्यां व्रतं कृत्वा अपुत्रः पुत्रवान्भवेत् ॥ ७ ।
श्रूयते च पुरा राजा शूरसेनः प्रतापवान् ।
अपुत्रः स तपस्तेपे पर्व्वते च हिमालये ॥ ८ ।
तस्यैवं कुर्व्वतो देवो व्रतमेतज्जगाद ह ।
सोऽप्येतत्कृतवान्राजा पुत्रञ्चैवोपलब्धवान् ॥ ९ ।
वसुदेवं महाभागमनेकव्रतयाजिनम् ।
तं लब्ध्वा सोऽपि राजर्षिः परं निर्व्वाणमाप्तवान् ॥ १० ।
एवं कृष्णाष्टमी राजन्मया ते परिकीर्त्तिता ।
संवत्सरान्ते दातव्यं गोयुग्मन्तु द्विजातये ॥ ११ ।
एतत्पुत्रव्रतं नाम मया ते परिकीर्त्तितम् ।
एतत्कृत्वा नरः पापैः सर्व्वैरेव प्रमुच्यते ॥ १२ ।

इति वराहपुराणे पुत्रप्राप्तिव्रतं नाम नय.षष्टितमोऽध्यायः ।

———•———

# चतुःषष्टितमोऽध्यायः ।

अगस्त्य उवाच ।

अथापरं प्रवक्ष्यामि शौर्य्यव्रतमनुत्तमम् ।
येन भीरोरपि महच्छौर्य्यं भवति तत्क्षणात् ॥ १ ।
मासि चाश्वयुजे शुद्धां नवमीं समुपोषयेत् ।
सप्तम्यां कृतसङ्कल्पः स्थित्वाष्टम्यां निरोदनः ।
नवम्यां प्राशयेत्पिष्टं प्रथमं भक्तितो नृप ॥ २ ।
ब्राह्मणान्भोजयेद्भक्त्या देवीञ्चैव तु पूजयेत् ।
दुर्गां देवीं महाभागां महामायां महाप्रभाम् ॥ ३ ।
एवं संवत्सरं यावदुपोष्येति विधानतः ।
व्रतान्ते भोजयेद्धीमान्यथाशक्त्या* कुमारिकाः ॥ ४ ।
हेमवस्त्रादिभिस्तास्तु भूषयित्वा तु शक्तितः ।
पश्चात्क्षमापयेत्तास्तु देवी मे प्रीयतामिति† ॥ ५ ।
एवं कृते भ्रष्टराज्यो लभेत्‡ राज्यं न संशयः ।
अविद्यो लभते विद्यां भीतः शौर्य्यञ्च विन्दति ॥ ६ ।

इति वराहपुराणे शौर्य्यव्रतं नाम चतुःषष्टितमोऽध्यायः ।

* यथाशक्तीति साधु ।

† भूषयित्वा स्वशक्तित इति (ग) ।

‡ लभेतेति साधु ।

# पञ्चषष्टितमोऽध्यायः।

अगस्त्य उवाच।

सार्व्वभौमव्रतञ्चान्यत्कथयामि समासतः।
येन सम्यक्कृतेनाशु सार्व्वभौमो नृपो भवेत्॥ १।
कार्त्तिकस्य तु मासस्य दशमी* शुक्लपक्षगा।
तस्यां नक्ताशनो भूत्वा दिक्षु शुद्धबलिं हरेत्॥ २
विचित्रैः कुसुमैर्भक्त्या पूजयित्वा द्विजोत्तमान्।
दिशान्तु प्रार्थनां कुर्य्यान्मन्त्रेणानेन सुव्रतः॥ ३।
सर्वा भवत्यः सिध्यन्तु मम जन्मनि जन्मनि।
एवमुक्त्वा बलिन्ताभ्यो दत्त्वा शुद्धेन चेतसा॥ ४।
ततो रात्रौ स भुञ्जीत दध्यन्नन्तु सुसंस्कृतम्।
पूर्व्वं पश्चाद्यथेष्टन्तु एवं संवत्सरन्नृप॥ ५।
यः करोति नरो नित्यं तस्य दिग्विजयो भवेत्।
एकादश्यां निराहारो नरः कुर्य्याद्यथाविधि॥ ६
मार्गशीर्षे शुक्लपक्षादारभ्याब्दं विचक्षणः।
तद्व्रतं धनदस्येष्टं कृतं वित्तं प्रयच्छति॥ ७।
एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने।
शुक्ले वाप्यथवा कृष्णे तद्व्रतं वैष्णवं महत्॥ ८।
एवञ्चीर्णं सुघोराणि हन्ति पापानि पार्थिव।

---

* अष्टमीति (ग)।

त्रयोदश्यान्तु नक्तेन धर्म्मव्रतमथोच्यते ॥ ९ ॥
शुक्लपक्षे फाल्गुनस्य तथारभ्य विचक्षणः ।
रौद्रव्रतं चतुर्द्दश्यां कृष्णपक्षे विशेषतः ॥ १० ॥
माघमासात्तथारभ्य* पूर्णं संवत्सरं नृप ।
इदं व्रतन्तु पञ्चम्यां† शुक्लायां नक्तभोजनम् ।
पितृव्रतममायां स्यादिति राजन्नथेरितम् ॥ ११ ॥
दश पञ्च च वर्षाणि य एवं कुरुते नृप ।
तिथिव्रतादिकं तस्य फलं स्यात्तत्प्रमाणतः‡ ॥ १२ ॥
अश्वमेधसहस्राणि राजसूयशतानि च ।
यष्टानि तेन राजेन्द्र कल्पोक्तव्रतकारिणा ॥ १३ ॥
एकमेव कृतं हन्ति व्रतं पापानि नित्यशः ॥ १४ ॥
यः पुनः§ सर्व्वमेतद्धि कुर्य्यान्नरवरात्मजः ।
स शुद्धो विरजाल्लोकानाप्नोति सकलान्नृप ॥ १५ ॥

इति वराहपुराणे भगवच्छास्त्रे चतुर्दिनोत्पत्तौ मासर्क्षभौमव्रतं नाम
पञ्चषष्टितमोऽध्यायः ।

* माघमासात्तथारभ्य वर्षमिति (ग) ।
† पञ्चदश्यामिति (ग) ।
‡ (ग) पुस्तके १२श श्लोकस्य परार्द्धं १०म श्लोकस्य यथास्थाने न स्तः ।
§ यत्पुनरिति (ख) ।

# षट्षष्टितमोऽध्यायः ।

भद्राश्व उवाच ।

आश्चर्य्यं यदि ते किञ्चिद्विदितं दृष्टमेव च* ।
तन्मे कथय धर्म्मज्ञ परं कौतूहलं महत् ॥ १ ।

अगस्त्य उवाच ।

आश्चर्य्यरूपो भगवानेष एव जनार्द्दनः ।
तस्याश्चर्य्याणि दृष्टानि बहूनि विविधानि वै ॥ २ ।
श्वेतद्वीपगतः पूर्वं नारदः किल पार्थिव ।
सोऽपश्यच्छङ्खचक्राब्जान्पुरुषांस्तिग्मतेजसः ॥ ३ ।
अयं विष्णुरयं विष्णुरेष विष्णुः सनातनः ।
चिन्ताऽभूत्तस्य तान्दृष्ट्वा कोऽस्मिन्विष्णुरिति प्रभुः ॥ ४ ।
एवं चिन्तयतस्तस्य चिन्ता कृष्णं प्रति प्रभो† ।
आराधयामि च कथं शङ्खचक्रगदाधरम् ॥ ५ ।
येन वेद्मि परं देवं कृष्णं नारायणं प्रभुम् ।
एवं सञ्चिन्त्य दध्यौ स तं देवं परमेश्वरम् ॥ ६ ।
दिव्यं वर्षसहस्रन्तु साग्रं ब्रह्मसुतस्तदा ।
ध्यायतस्तस्य देवोऽसौ परितोषं जगाम ह ॥ ७ ।
उवाच सः‡ प्रसन्नात्मा प्रत्यक्षत्वङ्गतः प्रभुः ।

* वेति (ग) ।

† कृष्णमिति प्रभो इति (ख) ; बभौ इति (ग) ।

‡ उवाच चेति (ग) ।

वरं ब्रह्मसुत ब्रूहि किन्ते दद्मि महामुने ॥ ८ ।

नारद उवाच ।

सहस्रमेकं वर्षाणां ध्यातस्त्वं भुवनेश्वर ।
त्वत्प्राप्तिर्येन तद्ब्रूहि यदि तुष्टोऽसि मेऽच्युत ॥ ९ ।

देवदेव उवाच ।

पौरुषं सूक्तमास्थाय ये यजन्ति* द्विजाश्च माम् ।
ते मां प्राप्स्यन्ति सततं संहिताध्ययनेन च ॥ १० ।
अलाभे वेदशास्त्राणां† पञ्चरात्रोदितेन हि ।
मार्गेण मां यजन्ते ये ते मां प्राप्स्यन्ति मानवाः ।
ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते ॥ ११ ।
शूद्रादीनां तु मे‡ चैत्रपदवीगमनं द्विज ।
मन्नाम विसहितस्तेषां नान्यत्पूजादिकं चरेत् ॥ १२ ।
एवं मयोक्तः विप्रेन्द्र पुराकल्पे पुरातनम् ।
पञ्चरात्रं सहस्राणां यदि कश्चिद्ग्रहीष्यति ॥ १३ ।
कर्मक्षये च मां कश्चिद्यदि भक्तो भविष्यति ।
तस्य चेदं पञ्चरात्रं नित्यं हृदि वसिष्यति ॥ १४ ।
इतरे राजसैर्भावैस्तामसैश्च समावृताः ।
भविष्यन्ति द्विजश्रेष्ठ मय्यासनपराङ्मुखाः§ ॥ १५ ।

* यजन्ते इति साधु ।

† अन्नाभे देवशास्त्राणामिति (ख) ।

‡ सर्वैश्चमिति (ग) ।

§ मय्यासनपराङ्मुखा इति (ग) ।

कृतं त्रेता द्वापरञ्च युगानि त्रीणि नारद ।
सत्त्वस्था मां समेष्यन्ति कलौ रजस्तमोऽधिकाः ॥ १६ ।
अन्यच्च ते वरं दद्मि शृणु नारद साम्प्रतम् ।
यदिदं पञ्चरात्रं मे शास्त्रं परमदुर्लभम् ।
तद्भवान्वेत्स्यते* सर्व्वं मत्प्रसादान्न संशयः ॥ १७ ।
वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विज ।
प्राप्योऽहं नान्यथा वत्स वर्षकोट्ययुतैरपि ॥ १८ ।
एवमुक्त्वा स भगवान्नारदं परमेश्वरः ।
जगामादर्शनं सद्यो नारदोऽपि दिवं ययौ ॥ १९ ।

इति वराहपुराणे भगवच्छास्त्रे नारदपुराणसूचनं नाम षट्षष्टितमोऽध्यायः ।

## सप्तषष्टितमोऽध्यायः ।

भद्राश्व उवाच ।

भगवन्सितकृष्णे द्वे ये ते जगति सत्तम ।
स्त्रियौ बभूवतुः के द्वे सिता कृष्णा च का शुभा ॥ १ ।
कश्चासौ पुरुषो ब्रह्मन्पावकः सप्तधाऽभवत् ।
कोऽसौ द्वादशधा विप्र द्विदेहः षट्शिराः प्रभुः ॥ २ ।

---

* वेत्स्यतीति साधु ।

दम्पत्यञ्च द्विजश्रेष्ठ ऋतसूर्योदयादलम् ।
कस्मादेतज्जगदिदं विततं द्विजसत्तम ॥ ३ ॥

भगवानुवाच ।

सितकृष्णे स्त्रियौ ये*ते ते भगिन्यौ प्रकीर्त्तिते ।
सितासिता† द्विवर्णा च नारी रात्रिरहात्मिका ॥ ४ ॥
यः पुमान्सप्तधा जात एको भूत्वा नरेश्वर ।
स समुद्रस्तु विज्ञेयः सप्त चैको व्यवस्थितः ॥ ५ ॥
योऽसौ द्वादशधा राजन्द्विदेहः षट्शिराः प्रभुः ।
संवत्सरः स विज्ञेयः शरीरे द्वे गती स्मृते ।
ऋतवः षट् च वक्त्राणि एष संवत्सरः स्मृतः ॥ ६ ॥
दम्पत्यं तदहोरात्रं सूर्याचन्द्रमसौ यतः ।
ततो जगत्समुत्तस्थौ देवादस्माच्च सत्तम ॥ ७ ॥
स विष्णुः परमो देवो विज्ञेयो नृपसत्तम ।
न च वेदक्रियाहीनः पश्यते‡ परमेश्वरम् ॥ ८ ॥

इति वराहपुराणे अगस्तिगीतासु विष्णुमाहात्म्यं नाम सप्तषष्टितमोऽध्यायः ।

* ये एते इति साधु ।

† सत्यामन्या इति (क), (ख) ।

‡ पश्यतीति साधु ।

# अष्टषष्टितमोऽध्यायः ।

भद्राश्व उवाच ।

योऽसौ सर्व्वगतो देवः परमात्मा व्यवस्थितः ।*
चतुर्युगे त्वसौ कीदृग्विज्ञेयः परमेश्वरः ॥ १ ।
युगे युगे क आचारो वर्णानां भविता मुने ।
कथञ्च शुद्धिर्विप्राणामन्यस्त्रीसङ्करे मुने ॥ २ ।

अगस्त्य उवाच ।

कृते युगे मही देवैर्युज्यते वेदकर्म्मणा ।
यजद्भिश्च† सुरांस्तिता तद्वद्देवैश्च सत्तम ॥ ३ ।
द्वापरे सत्त्वरजसोर्बहुले नृपसत्तम ।
यावद्धर्म्मसुतो राजा भविष्यति महामते ।
ततस्तमः प्रभविता कलिरूपो नरेश्वर ॥ ४ ।
तस्मिन् कलौ वर्त्तमाने स्वमार्गाच्चरविता द्विजाः ।
राजानो वैश्यशूद्राश्च प्रायशो हीनजातयः ॥ ५ ।
भविष्यन्ति नृपश्रेष्ठ सत्यशौचविवर्ज्जिताः ।
ततो विनश्यते लोको वर्णधर्म्मश्च नश्यति ॥ ६ ।

भद्राश्व उवाच ।

अगम्यागमनं कृत्वा ब्राह्मणः क्षत्रियोऽपि वा ।

* (ख) पुस्तकेऽतः परं चरणषट्कं नास्ति ।

† यजमानैरिति साधु ।

शूद्रोऽपि गम्यते* केन किं वागम्यन्तु गम्यते†। ॥ ७ ।

अगस्त्य उवाच ।

चतुर्गामी भवेद्विप्रस्त्रिगामी क्षत्रियः स्मृतः ।
द्विगामी तु भवेद्वैश्यः शूद्र एकगमः स्मृतः ॥ ८ ।
अगम्यां ब्राह्मणीं प्राहुः क्षत्रियस्य नरेश्वरः ।
क्षत्रिया चापि वैश्यस्य शूद्रस्य सा च पार्थिव ॥ ९ ।
अधमस्योत्तमा नारी अगम्या मनुरब्रवीत् ।
माता मातृष्वसा श्वश्रूर्भ्रातृपत्नी च पार्थिव ॥ १० ।
अधमस्योत्तमा नारी यत्नेन परिवर्ज्जयेत् ।
स्नुषां दुहितरञ्चैव मित्रपत्नीञ्च सर्व्वदा ।
जाया स्वमातृजा चैव अगम्याख्याः सुतस्त्रियः ॥ ११ ।
रजक्यादिषु चान्यास्व स्त्रियोऽगम्याः प्रकीर्त्तिताः ।
अगम्यागमनञ्चैतत्कृतं पापाय जायते ॥ १२ ।
त्रियोनिगमनादाशु ब्राह्मणाय भवत्यलम् ।
शेषस्याशुद्धिरप्येवं प्राणायामशतं भवेत् ॥ १३ ।
बहुनापि हि कालेन यत्पापं समुपार्ज्जितम् ।
वर्णसङ्करसङ्कल्पा ब्राह्मणेन नरर्षभ ॥ १४ ।
दशप्रणवगायत्रीप्राणायामशतैस्त्रिभिः ।
मुच्यते ब्रह्महत्याद्यैः किम्पुनः शेषपातकैः ॥ १५ ।
अथवा पररूपं यो देवं ब्राह्मणपुङ्गवः ।

---

* अत्रात्मनेपदमार्षम् ।

† (ख), (ग), आर्षः वर्त्तमानप्रयोगश्च ।

वेत्ति ध्यानादिभिः पूजां न स पापैर्हि लिप्यते ॥ १६ ।
वेदाध्यायी पापशतैः कृतैरपि न लिप्यते ।
स्मरन्विष्णुं पठन्वेदं ददन्दानं यजन्हरिम् ॥ १७ ।
ब्राह्मणः शुद्ध एवास्ते विरुद्धमपि तारयेत् ।
एतत्ते सर्व्वमाख्यातं यत्पृष्टोऽहं त्वया नृप ॥ १८ ।
मन्वादिभिर्विस्तरशः कथितं यच्च पार्थिव* ।
समासतस्तच्च मया कथितं नृपसत्तम ॥ १९ ।

इति वराहपुराणे प्राचीनतिहासे अष्टषष्टितमोऽध्यायः।

## ऊनसप्ततितमोऽध्यायः।

भद्राश्व उवाच ।

भगवंस्त्वच्छरीरे तु यद्वृत्तं द्विजसत्तम ।
चिरजीवी भवांस्तन्मे वक्तुमर्हसि सत्तम ॥ १ ।

अगस्त्य उवाच ।

मच्छरीरमिदं राजन् बहुकौतूहलान्वितम् ।
अनेककल्पसंस्थायि वेदविद्याविशोधितम् ॥ २ ।
अटन्नहं महीं सर्वां गतवानस्मि पार्थिव ।

---

* (ग) पुस्तके मन्वादिभिर्विस्तरशः कथितं ते नृपोत्तम इत्येतदर्द्धमात्रमस्ति ।

इलावृतं महावर्षं मेरोः पार्श्वे व्यवस्थितम् ॥ ३ ।
तत्र रम्यं सरो दृष्टं तस्य तीरे महाकुटी ।
तत्रोपवासशिथिलं दृष्टवानस्मि तापसम् ॥ ४ ।
अस्थिचर्म्मावशेषन्तु चीरवल्कलधारिणम् ।
तं दृष्ट्वाहं नृपश्रेष्ठ क एषस्तापसोत्तमः ॥ ५ ।
विश्वस्य प्रतिपत्त्यर्थं मयोक्तः स द्विजोत्तमः ।
ब्रह्मन्मे दीयतां किञ्चिदागतोऽहं तवान्तिके ।
इति मां स मुनिः प्राह स्वागतन्ते द्विजोत्तम ॥ ६ ।
स्थीयतां स्थीयतां ब्रह्मन्नातिथ्यं करवाणि ते ।
एतच्छ्रुत्वा वचस्तस्य प्रविष्टोऽहं कुटीं तु ताम् ॥ ७ ।
तावत्पश्याम्यहं विप्रं ज्वलन्तमिव तेजसा ।
भूमौ स्थितन्तु मां दृष्ट्वा हुङ्कारमकरोद्द्विजः ॥ ८ ।
तद्धुङ्काराच्च पातालं भित्त्वा पञ्च हि कन्यकाः ।
निर्ययुः काञ्चनं पीठमेका तासान्तु गृह्य* वै ॥ ९ ।
सा मां प्रादात्तदा कन्या सलिलं करसंस्थितम् ।
गृहीत्वान्या तु मे पादौ चालितुञ्चोपचक्रमे ॥ १० ।
अन्ये द्वे व्यजनं गृह्य* सत्पक्षाभ्यां व्यवस्थिते ।
ततो हुङ्कारमकरोत्पुनरेव महातपाः ॥ ११ ।
तच्छब्दानन्तरं हैमद्रोणीं योजनविस्तृताम् ।
गृह्याजगाम अकरोत्प्रावं सरसि पार्थिव ॥ १२ ।
तस्यान्तु कन्याः शतशो हेमकुम्भकराः शुभाः ।

* गृहीत्वेति पाठ ।

शायिता श्रथोद्दृष्टा स मुनिः प्राह मां नृप ॥ १३ ।
स्नानार्थं कल्पितं ब्रह्मन्निदं ते सर्व्वमेव तु ।
द्रोणीं प्रविश्य चेमां त्वं स्नातुमर्हसि सत्तम ॥ १४ ।
ततोऽहं तस्य वचनात्तस्यां द्रोण्यां नराधिप ।
विशामि तावत्*सरसि सा द्रोणी प्रत्यमज्जत ॥ १५ ।
द्रोण्यां जले निमग्नोऽहं तस्मिंस्तत्र वै पुरम् ।
तावन्मेरुगिरेर्मूर्द्धि पश्याम्यात्मानमात्मना ॥ १६ ।
समुद्रान् सप्त पश्यामि तथैव कुलपर्व्वतान् ।
सप्तद्वीपवतीं पृथ्वीं दृष्टवानस्मि पार्थिव ॥ १७ ।
अद्यापि तं लोकवरं ध्यायन्तिष्ठामि सुव्रत ।
कदा प्राप्स्येऽथ तं लोकमिति चिन्तापरोऽभवम् ॥ १८ ।
एवं ते कौतुकं राजन् कथितं परमेष्ठिनः ।
यद्वृत्तं मम देहे तु किमन्यच्छ्रोतुमिच्छसि ॥ १९ ।

इति वराहपुराणे नारायणाश्चर्य्यकथने ऊनसप्ततितमोऽध्यायः ।

## सप्ततितमोऽध्यायः ।

भद्राश्व उवाच ।

भगवन् किं कृतं लोकं त्वया तमनुपश्यता ।
व्रतं तपो वा धर्म्मो वा प्राप्त्यर्थं तस्य वै मुने ॥ १ ।

* यावदिति (ग) ।

अगस्त्य उवाच ।

अनाराध्य हरिं भक्त्या न लोकान् कामयेद्बुधः* ।
आराधिते हरौ लोकाः सर्व्वे करतलेऽभवन्† ॥ २ ।
एवं सञ्चिन्त्य राजेन्द्र मया विष्णुः सनातनः ।
आराधितो वर्षशतं क्रतुभिर्भूरिदक्षिणैः ॥ ३ ।
ततः कदाचिद्बहुना कालेन नृपनन्दन ।
यजतो मम देवेशं यज्ञमूर्त्तिं जनार्द्दनम् ॥ ४ ।
आहूता आगता देवाः सममेव सवासवाः
स्वे स्वे स्थाने स्थिता आसन्यावद्देवाः सवासवाः ॥ ५ ।
तावत् तत्रैव भगवानागतो वृषभध्वजः ।
महादेवो विरूपाक्षस्त्र्यम्बको नीललोहितः ॥ ६ ।
सोऽपि रौद्रे स्थितः स्थाने बभूव परमेश्वरः ।
तान्सर्व्वानागतान्दृष्ट्वा देवानृषिमहोरगान् ॥ ७ ।
सनत्कुमारो भगवानाजगामाब्जसम्भवः ।
त्रसरेणुप्रमाणेन विमाने सूर्य्यसन्निभे ॥
अवस्थितो महायोगी भूतभव्यभविष्यवित् ।
आगम्य शिरसा रुद्रं स ववन्दे महामुनिः ॥ ८ । ९ ।
तानहं संस्थितान्देवान्नारदादीनृषींस्तथा ।
सनत्कुमाररुद्रौ च दृष्ट्वाहमिदमब्रवम् ॥ १० ।

* लोकान् कान् कामयेद्बुध इति (ग) ।

† भवेयुरित्यर्थे अभवन्निति आर्षम् ।

क एषां भवतां याम्यो वरिष्ठश्च नृपोत्तम।
एवमुक्ते तदोवाच रुद्रो मां सुरसन्निधौ॥ ११।

रुद्र उवाच।

शृण्वन्तु विबुधाः सर्व्वे तथा देवर्षयोऽमलाः।
ब्रह्मर्षयश्च विख्याताः सर्व्वे शृण्वन्तु मे वचः।
त्वञ्चागस्त्य महाबुद्धे शृणु मे गदतो वचः* ॥ १२।
यो यज्ञैरिज्यते देवो यस्मात्सर्वमिदं जगत्।
उत्पन्नं सर्वदा यस्मिँल्लीनं भवति सामरम्।
नारायणः परो देवः सर्वरूपो जनार्दनः॥ १३।१४।
त्रिधात्मानं स भगवान्ससर्ज परमेश्वरः।
रजस्तमोभ्यां युक्तोऽभूत् रजःसत्त्वाधिकं विभुः॥ १५।
ससर्ज नाभिकमलाद्ब्रह्माणं कमलासनम्।
रजसा तमसा युक्तः सोऽपि मामसृजद्विभुः॥ १६।
यत्सत्त्वं स हरिर्देवो यो हरिस्तत्परं पदम्।
ये सत्त्वरजसी सोऽपि ब्रह्मा कमलसम्भवः॥ १७।
यो ब्रह्मा सैव देवस्तु यो देवः स चतुर्मुखः।
यद्रजस्तमसोपेतं सोऽहं नास्त्यत्र संशयः॥ १८।
सत्त्वं रजस्तमश्चैव त्रितयं चैतदुच्यते।
सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम्॥ १९।
रजसा सत्त्वयुक्तेन भवेत्सृष्टी रजोऽधिका।

* एतदर्द्धं (ख) पुस्तके नास्ति।

तच्च पैतामहं वृत्तं सर्वशास्त्रेषु पठ्यते ॥ २० ।
यद्देवाद्यं कर्म्म स्याच्छास्त्रमुद्दिश्य सेव्यते ।
तद्रौद्रमिति विख्यातं तदिष्टं गदितं नृणाम् ॥ २१ ।
यद्वा न रजसा कर्म्म केवलं तामसन्तु यत् ।
तद्दुर्गतिपरं नृणामिह लोके परत्र च ॥ २२ ।
सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम् ।
नारायणश्च भगवान्यज्ञरूपी विभाव्यते ॥ २३ ।
कृते नारायणः शुद्धः सूक्ष्मरूप उपास्यते ।
त्रेतायां यज्ञरूपेण पञ्चरात्रैस्तु द्वापरे ॥ २४ ।
कलौ मत्कृतमार्गेण बहुरूपेण तामसैः ।
इज्यते द्वेषबुद्ध्या सः परमात्मा जनार्द्दनः ॥ २५ ।
न तस्मात्परतो देवो भविता न भविष्यति ।
यो विष्णुः स स्वयं ब्रह्मा यो ब्रह्मासौ महेश्वरः ॥ २६ ।
वेदत्रये च यज्ञेऽस्मिन्पण्डितेष्वेष निश्चयः ।
यो भेदं कुरुतेऽस्माकं त्रयाणां द्विजसत्तमः ।
स पापकारी दुष्टात्मा दुर्गतिं समवाप्नुयात् ॥ २७ ।
इदञ्च शृणु मेऽगस्त्य गदतः प्राक्तनं तथा ।
यथाकल्पे हरेर्भक्तिं न कुर्व्वन्तीह मानवाः ॥ २८ ।
भूर्लोकवासिनः सर्व्वे पुरा यष्ट्वा* जनार्द्दनम् ।
भुवर्लोकं प्रपद्यन्ते तत्रस्था अपि केशवम् ॥ २९ ।

---

* इष्टेति ७।५ ।

आराध्य स्वर्गतिं यान्ति क्रमान्मुक्ता व्रजन्ति हि।
एवं मुक्तिपदे व्याप्ते* सर्व्वलोकैस्तथैव च।
मुक्तिभाजस्ततो देवास्तं दध्युः प्रयता हरिम्।
सोऽपि सर्व्वगतत्वाच्च प्रादुर्भूतः सनातनः॥ ३०। ३१।
उवाच ब्रूत किङ्कार्य्यं सर्व्वे योगिवराः सुराः।
ते तं प्रणम्य देवेशमूचुश्च परमेश्वरम्॥ ३२।
देवदेव जनः सर्व्वो मुक्तिमार्गे व्यवस्थितः†।
कथं सृष्टिश्च भविता नरकेषु च को वसेत्॥ ३३।
एवमुक्तस्ततो देवैस्तानुवाच जनार्द्दनः।
युगानि त्रीणि वह्वर्वा मामुपेष्यन्ति मानवाः॥ ३४।
अन्त्ये युगे प्रविरला भविष्यन्ति मदाश्रयाः।
एष मोहं सृजाम्याशु यो जनं मोहयिष्यति॥ ३५।
त्वञ्च रुद्र महाबाहो मोहशास्त्राणि कारय।
अल्पायासं दर्शयित्वा मोहयाशु महेश्वरः॥ ३६।
एवमुक्ता तदा तेन देवेन परमेष्ठिना।
आत्मा तु गोपितः सद्यः प्रकाशोऽहङ्कृतस्तदा॥ ३७।
तस्मादारभ्य कालात्तु मत्प्रणीतेषु सत्तमः‡।
शास्त्रेष्वभिरतो लोको बाहुल्येन भवेदतः॥ ३८।

* एवं मुक्तिपदे प्राप्ते इति (ख)।

† देवा ऋषिगणाः सर्व्वे मुक्तिमार्गे व्यवस्थिता इति (ख)

‡ (ग) पुस्तकेऽतः परमष्टौ पादा न सन्ति।

वेदानुवर्त्तिनं मार्गं देवं नारायणन्तथा ।
एकीभावञ्च पश्यन्तोमुक्ताश्चैव भवन्ति ते ॥ ३८ ।
मां विष्णोर्व्यतिरिक्तं ये ब्रह्माणञ्च द्विजोत्तम ।
भजन्ते पापकर्म्माणस्ते* यान्ति नरकं नराः ॥ ४० ।
ये वेदमार्गनिर्मुक्तास्तेषां मोहार्थमेव च ।
नयसिद्धान्तसंज्ञाभिर्मया शास्त्रन्तु दर्शितम् ॥ ४१ ।
पाशोऽयं पशुभावस्तु स यदा पतितो भवेत् ।
तदा पाशुपतं शास्त्रं जायते† वेदसंज्ञितम् ॥ ४२ ।
वेदमूर्त्तिरहं विप्र नान्यशास्त्रार्थवादिभिः ।
ज्ञायते मत्स्वरूपन्तु मुक्ता देवमनादिवत् ॥ ४३ ।
वेदवेद्योऽस्मि विप्रर्षे ब्राह्मणैश्च विशेषतः ।
युगानि त्रीण्यहं विप्र ब्रह्मा विष्णुस्तथैव च ॥ ४४ ।
त्रयोऽपि सत्त्वादिगुणास्त्रयो वेदास्त्रयोऽग्नयः ।
त्रयो लोकास्त्रयः सन्ध्यास्त्रयो वर्णास्तथैव च‡ ॥ ४५ ।
सवनानि तु तावन्ति त्रिधा बद्धमिदं जगत् ।
य एवं वेत्ति विप्रर्षे परं नारायणं तथा ॥ ४६ ।
अपरं पद्मयोनिन्तु ब्रह्माणं त्वपरन्तु माम् ।
गुणतो मुख्यतस्त्वेक एवाहं मोह इत्युभे ॥ ४७ ।

इति वराहपुराणे रुद्रगीतासु सप्ततितमोऽध्यायः ।

---

* भजन्ते मोहमाप्स्ये इति (ग) ।

† जायतेत्यर्थः 'जायते' इति पाठम् ।

‡ एष श्लोकः (ग) पुस्तके नास्ति ।

# एकसप्ततितमोऽध्यायः ।

अगस्त्य उवाच ।

एवमुक्तास्ततो देवा ऋषयश्च पिनाकिना ।
अहञ्च नृपते तस्य देवस्य प्रणतोऽभवम् ॥ १ ।
प्रणम्य शिरसा देवं यावत्पश्यामि हे नृप ।
तावत्तस्यैव रुद्रस्य देहस्थं कमलासनम् ॥ २ ।
नारायणञ्च हृदये त्रसरेणुसुसूक्ष्मकम् ।
ज्वलद्भास्करवर्णाभं पश्यामि भवदेहतः* ॥ ३ ।
तं दृष्ट्वा विस्मिताः सर्व्वे याजका ऋषयोऽभवन् ।
जयशब्दरवांश्चक्रुः सामऋग्यजुषां स्वनम् ॥ ४ ।
ऊचुश्चोचुस्तं तदा देवं किमिदं परमेश्वरम् ।
एकस्यामेव मूर्त्तौ ते लक्ष्यन्ते चित्तमूर्त्तयः ॥ ५ ।

रुद्र उवाच ।

यज्ञेऽस्मिन्यद्धुतं हव्यं मामुद्दिश्य महर्षयः ।
ते त्रयोऽपि वयं भागं गृह्णीमः कविसत्तमाः ॥ ६ ।
नास्माकं विविधो भावो वर्त्तते मुनिसत्तमाः ।
सम्यग्दृशः प्रपश्यन्ति विपरीतेष्वनेकशः ॥ ७ ।
एवमुक्ते तु रुद्रेण सर्व्वे ते मुनयो नृप ।
पप्रच्छुः शङ्करं देवं मोहशास्त्रप्रयोजनम् ॥ ८ ।

---

* भवदेहत इति (ख) ।

ऋषय ऊचुः ।

मोहनार्थन्तु लोकानां त्वया शास्त्रं पृथक्कृतम् ।
तत्त्वया हेतुना केन कृतं देव वदस्व नः ॥ ८ ।

रुद्र उवाच ।

अस्त्येके भारते वर्षे वनं दण्डकसंज्ञितम् ।
तत्र तीव्रन्तपो घोरं गौतमो नाम वै द्विजः ॥ १० ।
चकार तस्य ब्रह्मा तु परितोषं गतः प्रभुः ।
उवाच तं मुनिं ब्रह्मा वरं ब्रूहि तपोधन ॥ ११ ।
एवमुक्तस्तदा तेन ब्रह्मणा लोककर्त्तृणा ।
उवाच शस्यपंक्तिर्मे धान्यानां देहि सङ्गता ।
एवमुक्तो ददौ तस्य तमेवार्थं पितामहः ॥ १२ ।
लब्ध्वा तु तं वरं विप्रः शतशृङ्गे महाश्रमम् ।
चकार तस्याशसि च पाकान्ते शालयो द्विजः ॥
लूयन्ते तेन मुनिना मध्याह्ने पच्यते* तथा ।
सर्व्वातिथ्यमसौ विप्रो ब्राह्मणेभ्यो ददात्यलम् ॥ १३।१४
कस्यचित्त्वथ कालस्य महती द्वादशाब्दिका ।
अनावृष्टिर्द्विजवर अभवल्लोमहर्षिणी ॥ १५ ।
तां दृष्ट्वा मुनयः सर्व्वे अनावृष्टिं वनेचराः ।
क्षुधया पीड्यमानाश्च प्रययुर्गौतमं तदा ॥ १६ ।
अथ तानागतान्दृष्ट्वा गौतमः शिरसा नतः ।

* पच्यन्ते इति युक्तम् ।

उवाच स्थीयतां मह्यं गृहे मुनिवरात्मजाः ॥ १७ ॥
एवमुक्तास्तु ते तेन तस्थुर्विविधभोजनम्।
भुञ्जमानामनावृष्टिर्यावत्सा निवृत्ताऽभवत् ॥ १८ ॥
निवृत्तायाञ्च तै तस्यामनावृष्ट्यान्तु ते द्विजाः।
तीर्थयात्रानिमित्तन्तु प्रयातमनसोऽभवन् ॥ १९ ॥
तत्र शाण्डिल्यनामानं* तापसं मुनिसत्तमम्।
प्रत्युवाचेति सञ्चिन्त्य मारीचः परमो मुनिः ॥ २० ॥

मारीच उवाच।

शाण्डिल्य शोभनं वच्मि पिता ते गौतमो मुनिः।
तमनुक्त्वा न गच्छामस्तपश्चर्त्तुं तपोवनम् ॥ २१ ॥
एवमुक्तेऽथ जहसुः सर्व्वे ते मुनयस्तथा।
किमस्माभिः स्वकोऽदेहो विक्रीतोऽस्यान्नभक्षणात् ॥ २२ ॥
एवमुक्त्वा पुनश्चोचुः सोपाधिं गमनम्प्रति।
कृत्वा मायामयीङ्गान्तु तच्छालायां व्यसर्ज्जयन् ॥ २३ ॥
तां चरन्तीं ततो दृष्ट्वा शालायां गौतमो मुनिः।
गृहीत्वा सलिलं पाणौ प्राणिरुद्धेत्यभाषत।
ततो मायामयी सा गौः पपात जलविन्दुवत् ॥ २४ ॥
निहतां तां ततो दृष्ट्वा मुनिं जिगमिषूंस्तथा।
उवाच गौतमो धीमांस्तान्मुनीन्प्रणतः स्थितः ॥ २५ ॥

* शाण्डिल्यमासीनं इति (क)।

किमर्थं गम्यते विप्राः साधु शंसत मा चिरम् ।
मां विहाय सदा भक्तं प्रयतञ्च विशेषतः ॥ २६ ।

ऋषय ऊचुः ।

गोवध्येयमिह ब्रह्मन्यावत्तव शरीरगा ।
तावदत्र न भुञ्जामो भवतोऽन्नं महामुने ॥ २७ ।
एवमुक्तो गौतमस्तु तान्मुनीन्प्राह धर्म्मवित् ।
प्रायश्चित्तं गोवध्याया* दीयतां मे तपोधनाः ॥ २८ ।

ऋषय ऊचुः ।

इयं गौरमृता ब्रह्मन्मूर्च्छितेव व्यवस्थिता ।
गङ्गाजलप्लुता चेयमुत्थास्यति न संशयः ॥ २९ ।
प्रायश्चित्तं मृतायाः स्यादमृतायाः क्षतन्त्विदम् ।
व्रतं वा मा कृथाः कोपमित्युक्त्वा प्रययुस्तु ते ॥ ३० ।
गतैस्तैर्गौतमो धीमान् हिमवन्तं महागिरिम् ।
मामाराधयिषुः प्रायात्तप्त्वाशु महातपः ॥ ३१ ।
शतमेकन्तु वर्षाणामहमाराधितोऽभवम् ।
तुष्टेन च मया प्रोक्तो वरं वरय सुव्रत ॥ ३२ ।
सोऽब्रवीन्मां जटासंस्थां देहि गङ्गां तपस्विनीम् ।
मया सार्द्धं प्रयात्वेषा पुण्या भागीरथी नदी ॥ ३३ ।
एवमुक्ते जटाखण्डमेकं स प्रददौ शिवः ।

* वध्येति पाठं, हत्येति पाठः ।

तां दृष्ट्वा* गतवान् सोऽपि यत्रास्ते सा तु गौर्मृता ॥ ३४ ।
तज्जलप्लाविता सा गौर्गता चोत्थाय भामिनी ।
नदी च महती जाता पुण्यतोया शुचिह्रदा ॥ ३५ ।
तं दृष्ट्वा महदाश्चर्य्यं तत्र सप्तर्षयोऽमलाः ।
आजग्मुश्च विमानस्थाः साधु साध्विति वादिनः ॥ ३६ ।
साधु गौतम साधूनां कोऽस्ति वा सदृशं तव ।
यदेवं जाह्नवी देवी दण्डके चावतारिता ॥ ३७ ।
एवमुक्तस्तदा तैस्तु गौतमः किमिदं त्विति ।
गोवध्याकारणं मह्यं† तावत्पश्यति गौतमः ॥ ३८ ।
ऋषीणां मायया सर्व्वमिदं जातं विचिन्त्य वै ।
शशाप तांज्जटाभस्ममिथ्याव्रतधरांस्तथा ।
भविष्यथ त्रयीवाह्या वैदकर्म्मवहिष्कृताः ॥ ३९ ।
तच्छ्रुत्वा क्रूरवचनं गौतमस्य महामुनेः ।
ऊचुः सप्तर्षयो मैवं सर्वकालं द्विजोत्तम ॥ ४० ।
एवन्तु‡ किन्तु ते वाक्यं मोघं नास्त्यत्र संशयः ।
यदि नाम कलौ सर्व्वे भविष्यन्ति द्विजोत्तमाः ॥ ४१ ।
उपकारिषु एते हि अपकर्त्तार एव तु ।

* गच्छीर्त्विति साधु ।

† मम इत्यस्य स्थाने मह्यमिति चार्षम्

‡ भवन्त्विति (ग) ।

इत्यम्भूता अपि कलौ भक्तिभाजो भवन्तु ते* ॥ ४२ ।
त्वद्वाक्यवह्निनिर्द्दग्धाः सदा कलियुगे द्विजाः ।
भविष्यन्ति क्रियाहीना वेदकर्म्मबहिष्कृताः ॥ ४३ ।
अस्याश्च गौणं नामेह नदी गोदावरीति च ।
एतां प्राप्य कलौ ब्रह्मन् गास्ददन्ति† जनाश्च ये ।
यथाशक्त्या‡ तु दानानि मोदन्ते त्रिदशैः सह ॥ ४४ ।
सिंहस्थे च गुरौ तत्र यो गच्छति समाहितः ।
स्नात्वा च विधिना तत्र पितॄंस्तर्पयते तथा ॥ ४५ ।
स्वर्गं गच्छन्ति पितरो निरये पतिता अपि ।
स्वर्गस्थाः पितरस्तस्य मुक्तिभाजो न संशयः ।
त्वं ख्यातिं महतीं प्राप्य मुक्तिं यास्यसि शाश्वतीम् ॥ ४६ ।
एवमुक्त्वाथ मुनयो ययुः कैलासपर्व्वतम् ।
यत्राहममया सार्द्धं सदा तिष्ठामि सत्तमाः ॥ ४७ ।
ऊचुर्मान्ते च मुनयो भवितारो द्विजोत्तमाः ।
कलौ त्वद्रूपिणः सर्व्वे जटामुकुटधारिणः ॥ ४८ ।
स्वेच्छया प्रेतवेषाश्च मिथ्यालिङ्गधराः प्रभो ।
तेषामनुग्रहार्थाय किञ्चिच्छास्त्रं प्रदीयताम् ।
ये चास्मद्वंशजाः सर्व्वे वर्त्तेयुः§ कलिपीड़िताः ॥ ॥ ४९ ।

* एष श्लोकः (ख) पुस्तके नास्ति ।

† ददन्तीति पाठः, ददतीति साधु ।

‡ यथाशक्तीति साधु ।

§ वर्त्तेयुः इति पाठः, वर्त्तेरन्निति साधु ।

एवमभ्यर्थितस्तेन पुराहं द्विजसत्तम ।
वेदक्रियासमायुक्तां कृतवानस्मि संहिताम् ॥ ५० ।
निःश्वासाख्यां ततस्तस्यां लीना बाभ्रव्यशाण्डिलाः ।
अल्पापराधं श्रुत्वैव गतास्ते दाम्भिकाभवन्* ॥ ५१ ।
मयैव मोहितास्ते तु भविष्यज्जानता† द्विजाः ।
लौल्यार्थिनः स्वशास्त्राणि करिष्यन्ति कलौ नराः ॥ ५२ ।
निश्वाससंहितायां हि लक्षमात्रं प्रमाणतः ।
सैव पाशुपती दीक्षा योगः पशुपतेस्तथा ॥ ५३ ।
एतस्माद्वेदमार्गाद्धि यदन्यदिह जायते ।
तत्क्षुद्रकर्म्म विज्ञेयं रौद्रं शौचविवर्ज्जितम् ॥ ५४ ।
ये रुद्रमुपजीवन्ति कलौ वैदान्तिका नराः ।
लौल्यार्थिनः स्वशास्त्राणि करिष्यन्ति कलौ नराः ।
उच्छुष्मरुद्रास्ते ज्ञेया नाहन्तेषु व्यवस्थितः ॥ ५५ ।
भैरवेण स्वरूपेण देवकार्य्ये यदा पुरा ।
नर्त्तितन्तु मया सोऽयं‡ सम्बन्धः क्रूरकर्म्मणाम् ॥ ५६ ।
क्षयं निनीषता दैत्यान्सोऽट्टहासो मया कृतः ।
यः पुरा तत्र ये मह्यां§ पतिता अश्रुविन्दवः ।

* दाम्भिका अभवन्निति साधु ।

† भविष्यं जानता इति (ग) ।

‡ मया सोऽपि इति (ख) ।

§ मर्त्ये इति (ख), मह्यामिति (ग) तदर्थेनु मम ।

असंख्यातास्तु ते रौद्रा भवितारो महीतले ॥ ५७ ।
उच्छुष्मनिरता रौद्राः सुरामांसप्रियाः सदा* ।
स्त्रीलोलाः पापकर्म्माणः सम्भूता भूतलेषु ते ।
तेषां गौतमशापाग्नि भविष्यन्त्यन्वये द्विजाः ॥ ५८ ।
तेषां मच्छासनरताः सदाचाराश्च ये द्विजाः ।
स्वर्गञ्चैवापवर्गञ्च इत्युक्ता संशयात्पुरा ।
वैदान्तिकाऽधो यास्यन्ति मम सन्ततिदूषकाः ॥ ५९ ।
प्राग्गौतमोऽग्निना दग्धाः पुनर्मद्वचनाद्द्विजाः ।
नरकन्तु गमिष्यन्ति नात्र कार्य्या विचारणा ॥ ६० ।

रुद्र† उवाच ।

एवं मया ब्रह्मसुताः प्रोक्ता जग्मुर्यथागतम् ।
गौतमोऽपि स्वकं गेहं जगामाशु परन्तपाः ॥ ६१ ।
एतद्वः कथितं विप्रा मया धर्म्मस्य लक्षणम् ।
एतस्माद्विपरीतो यः स पाषण्डरतोऽभवत् ॥ ६२ ।

इति वराहपुराणे रुद्रगीतासु एकसप्ततितमोऽध्यायः ।

* भवितारो महीतले इति (ग) ।

† रुद्रस्य वचने 'रुद्र उवाच' इति पुनरुक्तः पाठः ।

# द्विसप्ततितमोऽध्यायः ।

वराह उवाच ।

सर्व्वज्ञं सर्व्वकर्त्तारं भवं रुद्रं पुरातनम् ।
प्रणम्य प्रयतोऽगस्त्यः पप्रच्छ परमेश्वरम् ॥ १ ।

अगस्त्य उवाच ।

भवान् ब्रह्मा च विष्णुश्च त्रयमेतत्त्रयी स्मृता ।
दीपोऽग्निर्दीपसंयोगैः सर्व्वशास्त्रेषु सर्व्वगः ॥ २ ।
कस्मिन् प्रधानो भगवान् काले कस्मिन्नधध्वजः ।
ब्रह्मा वा एतदाचक्ष्व मम देव त्रिलोचन ॥ ३ ।

रुद्र उवाच ।

विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते ।
वेदसिद्धान्तमार्गेषु तन्न जानन्ति मोहिताः ॥ ४ ।
विश प्रवेशने धातुस्तत्र स्नुप्रत्ययादनु ।
विष्णुर्यः सर्व्वदेवेषु परमात्मा सनातनः ॥ ५ ।
योऽयं विष्णुस्तु दशधा कीर्त्त्यते चैकधा द्विजाः ।
स आदित्यो महाभाग योगैश्वर्य्यसमन्वितः ॥ ६ ।
यो देवकार्य्याणि सदा कुरुते परमेश्वरः ।
मनुष्यभावमाश्रित्य स मां स्तौति युगे युगे ॥ ७ ।
लोकमार्गप्रवृत्त्यर्थं देवकार्य्यार्थसिद्धये ।
अहञ्च तौ सदा स्तौमि श्वेतद्वीपे कृते युगे ॥ ८ ।
सृष्टिकाले चतुर्वक्त्रं स्तौमि कालो भवामि च ।

ब्रह्मा देवासुराः स्तौति मां सदा तु कृते युगे* ॥ ९ ।
लिङ्गमूर्त्तिञ्च मां देवा यजन्ते भोगकाङ्क्षिणः ।
सहस्रशीर्षकं देवं मनसा तु मुमुक्षवः ।
यजन्ते यं स विश्वात्मा देवो नारायणः स्वयम् ॥ १० ।
ब्रह्मयज्ञेन ये नित्यं यजन्ते द्विजसत्तम ।
ते ब्रह्माणं प्रीणयन्ति वेदो ब्रह्मा प्रकीर्त्तितः ॥ ११ ।
नारायणः शिवो विष्णुः शङ्करः पुरुषोत्तमः ।
एतेषु नामभिर्ब्रह्म परं प्रोक्तं सनातनम् ॥ १२ ।
कर्म्मवेदयुजां विप्र ब्रह्मा विष्णुर्महेश्वरः ।
वयं त्रयोऽपि मन्त्राद्याः† नात्र कार्य्या विचारणा ॥ १३ ।
अहं विष्णुस्तथा वेदा ब्रह्मकर्म्माणि चाप्युत ।
एतत्त्रयन्त्वेकमेव न पृथग्भावयेत्सुधीः ॥ १४ ।
योऽन्यथा भावयेदेतत्पक्षपातेन सुव्रत ।
स याति नरकं घोरं तेनैवं पापपूरुषः ॥ १५ ।
अहं ब्रह्मा च विष्णुश्च ऋग्यजुः साम एव च ।
तेनास्मिन् भेदमप्यस्ति सर्व्वेषां द्विजसत्तमाः ॥ १६ ।

इति वराहपुराणे प्रकृतिपुरुषनिर्णये द्विसप्ततितमोऽध्यायः ।

* एष श्लोकः (ग) पुस्तके नास्ति ।

† मन्त्राणामिति (ख) ।

# त्रय:सप्ततितमोऽध्याय: ।

रुद्र उवाच ।

शृणु चान्यद्द्विजश्रेष्ठ कौतूहलसमन्वितम् ।
अपूर्वभूतं सलिले मग्नेन मुनिपुङ्गव ॥ १ ।
ब्रह्मणाहं पुरा सृष्टः प्रोक्तश्च सृज वै प्रजाः ।
अविज्ञानसमर्थोऽहं निमग्नः सलिले द्विज ॥ २ ।
तत्र यावत्क्षणस्त्वेकं तिष्ठामि परमेश्वरम् ।
अङ्गुष्ठमात्रपुरुषं ध्यायन् प्रयतमानसः ॥ ३ ।
तावज्जलात्समुत्तस्थुः प्रभयाग्निसमप्रभाः ।
पुरुषा दश चैकश्च तापयन्तोंऽशुभिर्जलम् ॥ ४ ।
मया पृष्टाः के भवन्तो जलादुत्तीर्य्य तेजसा ।
तापयन्तो जलञ्चेदं क्व वा यास्यथ शंसत ॥ ५ ।
एवमुक्ता मया ते तु नोचुः किञ्चन सत्तमाः ।
एवमेव गतास्तूष्णीन्ते नरा द्विजपुङ्गवाः ॥ ६ ।
ततस्तेषामनु महापुरुषोऽतीव शोभनः ।
स तस्मिन्मेघसङ्काशः पुण्डरीकनिभेक्षणः ॥ ७ ।
तमहं पृष्टवान् कस्त्वं के चेमे पुरुषा गताः ।
किं वा प्रयोजनमिह कथ्यतां पुरुषर्षभ ॥ ८ ।

पुरुष उवाच ।

य एते वै गताः पूर्वं पुरुषा दीप्ततेजसः ।
आदित्यास्ते त्वरन्यान्ति ध्याता वै ब्रह्मणाभवन् ॥ ९

सृष्टिं सृजति वै ब्रह्मा तदर्थं यास्यमी नराः ।
प्रतिपालनाय तस्यास्तु सृष्टेर्देव न संशयः ॥ १० ॥

शम्भुरुवाच ।

जानीयां भगवन्कथं महापुरुषसत्तमम् ।
भवेति* नाम्ना तत्सर्वं कथयस्व परोक्षहम् ॥ ११ ॥
एवमुक्तस्तु रुद्रेण स पुमान् प्रत्यभाषत ।
अहं नारायणो देवो जलशायी सनातनः ॥ १२ ॥
दिव्यं चक्षुर्भवति वै तव मां पश्य यत्नतः ।
एवमुक्तस्तदा तेन यावत्पश्याम्यहन्तु तम् ॥
तावदङ्गुष्ठमात्रन्तु ज्वलद्भास्करतेजसम् ।
तमेवाहं प्रपश्यामि तस्य नाभौ तु पङ्कजम् ।
ब्रह्माणं तत्र पश्यामि आत्मानञ्च तदङ्कतः ॥ १३।१४ ॥
एवं दृष्ट्वा महात्मानं ततो हर्षमुपागतः ।
तं स्तोतुं द्विजशार्दूल मतिर्मे समजायत ॥ १५ ॥
तस्यां मतौ तु जातायां स्तोत्रेणानेन सुव्रत ।
स्तुतो मया स विश्वात्मा तपसा स्मृतकर्म्मणा ॥ १६ ॥

रुद्र उवाच ।†

नमोऽस्त्वनन्ताय विशुद्धचेतसे
सरूपरूपाय सहस्रबाहवे ।

---

* भवेतीति स्थाने भवेदिति पाठान्तरम् ।
† एषोऽपि पुनरुक्तः पाठः ।

सहस्ररश्मिप्रवराय वेधसे
विशालदेहाय विशुद्धकर्म्मणे* ॥ १७ ।
समस्तविश्वार्त्तिहराय शम्भवे
सहस्रसूर्य्यानिलतिग्मतेजसे ।
समस्तविद्याविधृताय† चक्रिणे
समस्तगीर्वाणनुते सदा नमः ॥ १८ ।
अनादिदेवाच्युत शेषशेखर
प्रभो विभो भूतपते महेश्वर ।
मरुत्पते सर्व्वपते जगत्पते
भुवः पते भुवनपते‡ सदा नमः ॥ १९ ।
जलेश नारायण विश्वशङ्कर
क्षितीश विश्वेश्वर विश्वलोचन ।
शशाङ्क सूर्य्याच्युत वीर विश्वग
प्रतर्क्यमूर्त्तेऽमृतमूर्त्तिरव्यय ॥ २० ।
ज्वलद्धुताशार्च्चिविरुद्धमण्डल
प्रपाहि नारायण विश्वतोमुख ।
नमोऽस्तु देवार्त्तिहरामृताव्यय
प्रपाहि मां शरणगतं सदाच्युत§ ॥ २१ ।

---

* विशुद्धमूर्त्तये इति (ख) ।

† समस्तविद्याविहृतायेति (ख) ।

‡ (ख) पुस्तके भूपतये सदा नम इति च पाठो वर्त्तते ।

§ प्रपाहि मां त्वं शरणागतं सदेति क्वचित्पाठः ।

वक्त्राण्यनेकानि विभो तवाहं
पश्यामि मध्यस्थमतं पुराणम्* ।
ब्रह्माणमीशं जगतां प्रसूतिं
नमोऽस्तु मह्यन्तु† पितामहाय ॥ २२ ॥
संसारचक्रभ्रमणैरनेकैः
क्वचिद्भवान्देववरादिदेव ।
सन्मार्गिभिर्ज्ञानविशुद्धसत्त्वै-
रुपास्यसे किम्प्रलपाम्यहं त्वाम् ॥ २३ ॥
एकं भवन्तं प्रकृतेः परस्ता-
द्यो वेत्ति स सर्व्वविदादिदेव ।
गुणा न तेषु प्रसभं विभेद्या
विशालमूर्त्तिर्हि सुसूक्ष्मरूपः ॥ २४ ॥
वाग्योनिमत्तो‡ विगतेन्द्रियोऽसि
विकर्म्मा भवान्वो विगतैककर्म्मा ।
संसारवांस्त्वं हि न तादृशोऽसि
परं वपुर्देव विशुद्धभावैः ॥ २५ ॥
संसारविच्छित्तिकरैर्यजद्भि-
रतोऽवसीयेत चतुर्भुजस्त्वम् ।

---

* एतदर्द्धं ग पुस्तके नास्ति ।

† चचापि समस्थानि मद्यम ।

‡ वाग्योनिमान भो इति (ग) ।

परं न जानाति यतो वपुस्ते
देवादयोऽप्यद्भुतकारणं तत् ॥ २६ ।
अतोऽवतारान्तनुं पुराण-
माधारयेयुः कमलासनाद्याः ।
न ते वपुर्विश्वसृगब्जयोनि-
रेकान्ततो वेद महानुभावः ॥ २७ ।
परन्त्वहं वेद्मि कविं पुराणं
भवन्तमाद्यन्तपसा विशुद्धः ।
पद्मासनो मे जनकः प्रसिद्ध-
स्वेतः प्रसूतावसकृत्पुराणैः ॥ २८ ।
सम्बुध्यते नाथ न मद्विधाऽपि*
विदुर्भवन्तं तपसा विहीनाः ।
ब्रह्मादिभिस्तत्प्रवरैरबोध्यं
त्वां देवरूपाः† समनन्त नत्वा ॥ २९ ।
प्रबोधमिच्छन्ति न तेषु बुद्धे-
रुदारकीर्त्तिष्वपि वेदहीनाः ।
जन्मान्तरैर्वेदविदां विवेके-
र्बुद्धिर्भवेन्नाथ तव प्रसादात् ॥ ३० ।
त्वल्लब्धलाभस्य‡ न मानुषत्वं

---

* मद्विधा अपीति साधु ।

† त्वां देवमूर्त्त्या इति (ख) ।

‡ नाथस्येति (ग) ।

न देवगन्धर्व्वगतिः शिवं स्यात् ।
त्वं विश्वरूपोऽसि भवान्सुसूक्ष्म
स्थूलोऽसि चेदं* क्षतजात्यताद्य ॥ २१ ॥
स्थूलः सुसूक्ष्मः सुलभोऽसि देव
त्वद्बाह्यदृष्ट्या नरके पतन्ति ।
किमुच्यते वा भवति स्थितेऽस्मि-
वाद्ये तु वह्न्यर्कमरुन्महीभिः ॥ २२ ॥
सत्त्वैः सतोयैः समरूपधारि-
ण्यात्मस्वरूपे विततस्वभावे ।
इति स्तुतीर्मे भगवाननन्त
जुषस्व भक्तस्य विशेषतश्च ॥ २३ ॥
सृष्टिं सृजस्वेति तवोदितस्य
सर्व्वज्ञतां देहि नमोऽस्तु विष्णो ।
चतुर्मुखोवा यदि कोटिवक्त्रो
भवेन्नरः कोऽपि विशुद्धचेताः ।
स ते गुणानामयुतैरनेकै-
र्वदेत्तदा देववर प्रसीद ॥ २४ ॥
समाधियुक्तस्य विशुद्धभाव-
स्तद्भावभावैकमनोऽनुगस्य ।
सदा हृदिस्थोऽसि भवान्नमस्ते

* चेदमित्यत्र चेदमिति पाठः ।

न सर्व्वगस्यास्ति पृथग्व्यवस्था: ॥ ३५ ।
इति प्रकाशप्रकृतमेतदीश
त्वं मया सर्व्वगतं विबुद्धा ।
संसारचक्रक्रममाणयुक्त्या
भीतं पुनीह्यच्युत केवलत्वम् ॥ ३६ ।

वराह उवाच ।

इति स्तुतस्तदा देवो रुद्रेणामिततेजसा ।
उवाच वाक्यं सन्तुष्टो मेघगम्भीरनिस्वन: ॥ ३७ ।

विष्णुरुवाच ।

वरं वरय भद्रोऽस्तु देवदेव उमापते ।
न भेदश्चावयोर्देव एकावावामुभावपि ॥ ३८ ।

रुद्र उवाच ।

ब्रह्मणाहं नियुक्तस्तु प्रजा: सृज इति प्रभो ।
तत्र ज्ञानं प्रयच्छस्व त्रिविधं भूतभावन: ॥ ३९ ।

विष्णुरुवाच ।

सर्व्वज्ञस्त्वत्र सन्देहो ज्ञानराशि: सदातन: ।
देवानाञ्च परं पूज्य: सर्व्वथा त्वं भविष्यसि ॥ ४० ।
एवमुक्त: पुनर्वाक्यमुवाचोमापतिस्तदा ।
अन्यं देहि वरं देव प्रसिद्धं सर्व्वजन्तुषु ॥ ४१ ।
मूर्त्तो भूत्वा भवानेव मामाराधय केशव ।
मां वहस्व स देवेश वरं मत्तो गृहाण च ।
येन त्वं सर्व्वदेवानां पूज्यात्पूज्यतरो भव ॥ ४२ ।

विष्णुरुवाच ।

देवकार्य्यावतारेषु मानुषत्वमुपागतः ।
त्वामेवाराधयिष्यामि त्वञ्च मे वरदो भव ॥ ४३ ।
यत्त्वयोक्तं वहस्वेति देवदेव उमापते ।
सोऽहं वहामि देव त्वां मेघो भूत्वा शतं समाः ॥ ४४ ।
एवमुक्त्वा हरिर्मेघः स्वयं भूत्वा महेश्वरम् ।
उज्जहार जलात्तस्माद्वाक्यं देवमुवाच ह ॥ ४५ ।
य एते दश चैकञ्च पुरुषाः प्राकृताः प्रभो ।
ते वैराजा महीं याता आदित्या इति संज्ञिताः ॥ ४६ ।
मदंशो द्वादशो यस्तु विष्णुनामा महीतले ।
अवतीर्णो भवन्तन्तु आराधयति शङ्कर ॥ ४७ ।
एवमुक्त्वा स्वकादंगात्सृष्टादित्यं घनं तथा ।
नारायणः शम्भुतश्च न विद्मः क्व लयं गतः । ४८ ।

रुद्र उवाच ।

एवमेष हरिर्देवः सर्व्वगः सर्व्वभावनः ।
वरदोऽभूत्पुरा मह्यं तेनाहं दैवतैर्वरः ।
नारायणात्परो देवो न भूतो न भविष्यति ॥ ४९ ।
एतद्रहस्यं वेदानां पुराणानाञ्च सत्तम ।
मया वः कीर्त्तितं सर्व्वं यथा विष्णुरिहेज्यते ॥ ५० ।

इति वराहपुराणे रुद्रगीतासु त्रयःसप्ततितमोऽध्यायः ।

# चतु:सप्ततितमोऽध्याय: ।

वराह उवाच ।

पुनस्ते ऋषय: सर्व्वे तं पप्रच्छु: सनातनम् ।
रुद्रं पुराणपुरुषं शाश्वतं क्रतुमव्ययम् ।
विश्वरूपमजं शम्भुं त्रिनेत्रं शूलपाणिनम् ॥ १ ।

ऋषय ऊचु: ।

त्वं पर: सर्व्वदेवानामस्माकञ्च सुरेश्वर ।
पृच्छामस्तेन* त्वां प्रश्नमेकं तद्वक्तुमर्हसि ॥ २ ।
भूमिप्रमाणं संस्थानं पर्व्वतानाञ्च विस्तरम् ।
अस्माकं ब्रूहि कृपया देवदेव उमापते ॥ ३ ।

रुद्र उवाच ।

सर्व्वेष्वेव पुराणेषु भूर्लोक: परिकीर्त्यते ।
इदानीञ्च प्रवक्ष्यामि समासाद्द: समातलम् ।
तन्निबोधत धर्म्मज्ञा गदतो मम सत्तमा: ॥ ४ ।

योऽसौ सकलविद्यावबोधितपरमात्मरूपी विगतकल्मष: परमाणुरचिन्त्यात्मा नारायण: सकललोकालोकव्यापी पीताम्बरोरुवक्ष:क्षितिधरो गुणत:† सूक्ष्मेत् तमस्त्वप्रपञ्चमदीर्घमस्वमकृशमलोहितमित्येवमाद्योपलक्षित:‡ विज्ञानमात्ररूप: स

* अत्र नकारस्य संयोगात्पूर्व्वगुरुत्वमपीति ज्ञेयम् ।

† गुणित इति (ग) ।

‡ उपलक्षितेति (ग) ।

भगवांस्त्वप्रकारः सत्त्वरजस्तमोरहितः सलिलं ससर्ज्ज। तस्मिन्नादिपुरुषः परमेश्वरो नारायणः सकलजगन्मयः सर्व्वमयो देवमयो यज्ञमय आपोमय आपोमूर्त्तिर्योगनिद्रया सुप्तस्य तस्य नाभौ तत्पद्मं निःससार। तस्मिन् सकलवेदनिधिरचिन्त्यात्मा परमेश्वरो ब्रह्मा प्रजापतिरभवत्। स च सनकसनन्दनसनातनसनत्कुमारादीन् ज्ञानधर्म्मिणः पूर्व्वमुत्पाद्य पश्चात्तु स्वायम्भुवं मरीच्यादींन्दक्षान्तान् ससर्ज्ज। यः स्वायम्भुवो मनुर्भगवता सृष्टस्तस्मादारभ्य भुवनस्यातिविस्तरो वर्ण्यते। तस्य च मनोर्द्वौ पुत्रौ बभूवतुः प्रियव्रतोत्तानपादौ।

प्रियव्रतस्य दश पुत्राः बभूवुः*, अग्नीध्रोऽग्निबाहुर्मेधा मेधातिथिर्ध्रुवो ज्योतिष्मान्द्युतिमान्हव्योवपुष्मान् सवनान्ताः। द्वितीयः स च प्रियव्रतः सप्तद्वीपेषु सप्तपुत्रान्† स्थापयामास। तत्र चाग्नीध्रं जम्बुद्वीपेश्वरं चक्रे शाकद्वीपेश्वरं मेधातिथिं ज्योतिष्मन्तं क्रौञ्चे द्युतिमन्तं शाल्मलौ गोमेदस्येश्वरं हव्यं वपुष्मन्तं प्लक्षद्वीपेश्वरं पुष्कराधिपतिं सवनमिति। पुष्करेशस्यापि सवनस्य द्वौ पुत्रौ महावीतिधातकौ भवेताम्‡। तयोर्नाम्ना तौ देशौ व्यवस्थितौ धातके धातकीखण्डं कुमुदस्य च कौमुदम्। शाल्मलाधिपतेरपि ज्योतिष्मतस्त्रयः पुत्राः स्युः कुशवैद्युत-

---

* (ख) पुस्तके अग्नीध्र इत्यारभ्य सप्तपुत्रानित्यन्तः सन्दर्भो नास्ति।

† (ग) पुस्तके सवनान्तास्तदनन्तरं सप्तद्वीपेषु सप्तवीरान् स्थापयामास इति पाठो वर्त्तते।

‡ अभवन् अभवतां अभवतां वा साधु।

जीमूतवाहनास्तेषां नाम्ना ते देशा ज्ञाताः। तथा च द्युतिमतः
सप्त पुत्राः कुशलो* मनुगव्यौ स्तः† पीवरोऽथान्धकारकमुनि-
दुन्दुभियेति तन्नाम्ना क्रौञ्चे सप्त महादेशनामानि। कुशद्वीपे-
श्वरस्यापि ज्योतिष्मतः सप्त पुत्राः। उद्भिदो वेणुमांश्चैव रथो-
पलं मनो धृतिः प्रभाकरः कपिल इति तत्तन्नामानि वर्षाणि
द्रष्टव्यानि। शाकाधिपस्यापि मेधातिथेः सप्त पुत्रा नाभि‡
शान्तभयशिशिरसुखोदमन§न्दशिवक्षेमकध्रुवा इति। तन्ना-
मान्येव वर्षाणि नाभेर्हिमवन्तं हेमकूटं किम्पुरुषं नैषधं हरि-
वर्षं मेरुमध्यमिलावृतं नीलं रम्यकं श्वेतं हिरण्मयमुत्तरञ्च
शृङ्गवतः कुरवो माल्यवन्तं भद्राश्वं गन्धमादनम्। केतुमाले तु
एवं स्वायम्भुवेऽन्तरे भुवनप्रतिष्ठा कल्पे कल्पे चैवमेव सप्तसप्त-
पार्थिवैः क्रियते भूमेः पालनव्यवस्था च एष स्वभावः कल्पस्य
सदा भवतीति। अथ नाभेः सर्गं कथयामि, नाभिर्मेरुदेव्यां
पुत्रमजनयदृषभनामानं, तस्य भरतो ज्येष्ठ पुत्रश्च तावदग्रजः,
तस्य भरतस्य पिता ऋषभः हेमाद्रेर्दक्षिणं वर्षं महद्भारतं
नाम शशास। भरतस्य पुत्रः सुमतिस्तस्य राज्यं दत्त्वा
सोऽपि वनं ययौ। सुमतेस्तेजसस्तत्पुत्रः सत्सुतस्तस्याऽपीन्द्र-

* कुशलमीति (ग)।
† गव्यौ स्त इति (ग)।
‡ नाभीति (ग) पुस्तके नास्ति।
§ दयर्मेति (क)।

पुत्रस्तस्यापि परमेष्ठी तस्य प्रतिहर्त्ता, तस्य निखातः, निखा-तस्य उन्नेता,* उन्नेतुरप्यभावस्तस्योद्गाता, तस्य प्रस्तोता, प्रस्तोतुर्विभुर्विभोः पृथुः पृथोरनन्तः, अनन्तस्य गयः, गयस्य नयस्तस्य विराट्, तस्य महावीर्य्यस्य सुधीमान् ।

तस्य पुत्रशतं जज्ञे तेनेमा वर्द्धिता प्रजाः ।
तैरिदं भारतं वर्षं सप्तद्वीपं समाङ्कितम् ॥ १ ।
तेषां वंशप्रसूत्या तु भुक्तेयं भूमिरुत्तमा ।
कृतत्रेतादियुक्त्या तु युगाख्या ह्येकसप्ततिः ॥ २ ।
भुवनस्य प्रसङ्गेन मन्वन्तरमिदं शुभम् ।
स्वायम्भुवस्य कथितमपरं यन्निबोधत ॥ ३ ।

इति वराहपुराणे रुद्रगीतासु भुवनकोषे मनुमन्वन्तरं नाम चतुःसप्ततितमोऽध्यायः ।

## पञ्चसप्ततितमोऽध्यायः ।

रुद्र उवाच ।

अत ऊर्द्धं प्रवक्ष्यामि जम्बूद्वीपं यथातथम् ।
संख्या चापि समुद्राणां द्वीपानाञ्चैव विस्तरम् ॥ १ ।
यावन्ति चैव वर्षाणि तेषु नद्यश्च याः स्मृताः ।
महाभूतप्रमाणञ्च गतिश्चन्द्रार्कयोः पृथक् ॥ २ ।

---

* तस्य उन्नेता इति (ग) ।

द्वीपभेदसहस्राणि सप्तस्वन्तर्गतानि च।
न शक्यन्ते क्रमेणेह वक्तुं यैर्विततं जगत्॥ ३॥
सप्त द्वीपान् प्रवक्ष्यामि चन्द्रादित्यग्रहैः सह।
येषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते॥ ४॥
अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत्।
प्रकृतेश्च परं यत्तु तदचिन्त्यं विभाव्यते॥ ५॥
नववर्षं प्रवक्ष्यामि जम्बूद्वीपं यथातथम्।
विस्तारं मण्डलञ्चैव* योजनैस्तन्निबोधत॥ ६॥
शतमेकं सहस्राणां योजनानां समन्ततः।
नानाजनपदाकीर्णं योजनैर्विविधैः शुभैः॥ ७॥
सिद्धचारणसङ्कीर्णं पर्व्वतैरुपशोभितम्।
सर्व्वधातुविद्धैश्च शिलाजालसमुद्भवैः॥ ८॥
पर्व्वतप्रभवाभिश्च नदीभिः सर्व्वतश्चितम्।
जम्बूद्वीपं पृथु श्रीमत्सर्व्वतः परिमण्डलम्॥ ९॥
नवभिश्चावृतं श्रीमान्यश्चास्ते भूतभावनः।
लवणेन समुद्रेण सर्व्वतः परिवारितः॥ १०॥
जम्बूद्वीपस्य विस्तारात्समेन तु समन्ततः।
तस्य प्रागायता दीर्घाः षडेते वर्षपर्व्वताः।
उभयत्रावगाढाश्च समुद्रौ पूर्व्वपश्चिमौ॥ ११॥
हिमप्रायश्च हिमवान्हेमकूटश्च हेमवान्।

---

* मण्डलाद्यैवेति (ग)।

सर्वत्र सुसुखश्चापि निषधः पर्वतो महान् ॥ १२ ।
चतुर्वर्णः ससौवर्णो मेरुश्चोक्तो मया गिरिः ।
वृत्ताकृतिप्रमाणश्च चतुरस्रः समुत्थितः* ॥ १३ ।
नानावर्णः सुपार्श्वेषु प्रजापतिगुणान्वितः ।
नाभिमण्डलसम्भूतो ब्रह्मणः परमेष्ठिनः ॥ १४ ।
पूर्व्वतः श्वेतवर्णस्तु ब्राह्मण्यं तेन तस्य तत् ।
पीतश्च दक्षिणेनासौ तेन वैश्यत्वमिष्यते ॥ १५ ।
भृङ्गपत्रनिभश्चासौ पश्चिमेन यतोऽथ सः ।
तेनास्य शूद्रता प्रोक्ता मेरोर्नामार्थकर्म्मणः ॥ १६ ।
पार्श्वमुत्तरतस्तस्य रक्तवर्णं विभाव्यते ।
तेनास्य क्षत्रभावः स्यादिति वर्णाः प्रकीर्त्तिताः ॥ १७ ।
वृत्तः स्वभावतः प्रोक्तो वर्णतः परिमाणतः ।
नीलश्च वैदूर्य्यमयः श्वेतशृङ्गो हिरण्मयः ।
मयूरबर्हिवर्णस्तु शातकौम्भस्य शृङ्गवान् ॥ १८ ।
एते पर्वतराजानः सिद्धचारणसेविताः ।
तेषामन्तरविष्कम्भो नवसाहस्र उच्यते ॥ १९ ।
मध्ये त्विलावृतं नाम महामेरोस्तु सम्भवः ।
तेनैव तु सहस्राणि† विस्तीर्णः सर्वतश्च सः ॥ २० ।
मध्यं तस्य महामेरुर्विधूम इव पावकः ।

* समुच्छ्रित इति (ग) ।

† तेनैव शतसहस्राणीति (क), (ख) । पञ्चाधिकाचरलोपश्छन्दोदोषः ।

वेद्यर्द्धं दक्षिणं मेरोरुत्तरार्द्धं तथोत्तरम्॥ २१।
वर्षाणि यानि षड़त्र* तेषान्ते वर्षपर्वताः।
योजनाग्रन्तु वर्षाणां सर्व्वेषां तद्विधीयते॥ २२।
द्वे द्वे वर्षे सहस्राणां राजन्यानां समुच्छ्रयः।
जम्बूद्वीपस्य विस्तारस्तेषामायाम उच्यते॥ २३।
योजनानां सहस्राणां शते द्वे चापि† तौ गिरी।
नीलश्च निषधश्चैव ताभ्यां हीनाश्च ये परे।
श्वेतश्च हेमकूटश्च हिमवाञ्छृङ्गवांश्च यः॥ २४।
जम्बूद्वीपप्रमाणेन निषधः परिकीर्त्तितः।
तस्माद्द्वादशभागेन हेमकूटः प्रहीयते।
हिमवान्विंशभागेन हेमकूटात्प्रहीयते॥ २५।
अष्टांशाद्धिमवाञ्छैल आयतः पूर्व्वपश्चिमे।
द्वीपस्य मण्डलीभावाद्ध्रासवृद्धी प्रकीर्त्त्यते॥ २६।
वर्षाणां पर्व्वतानाञ्च यथा चेमे तथोत्तरम्।
तेषां मध्ये जनपदास्तानि वर्षाणि चैव तत्॥ २७।
प्रपातविषमैस्तैस्तु पर्व्वतैरावृतानि तु।
सन्ततानि नदीभेदैरगम्यानि परस्परम्॥ २८।
वसन्ति तेषु सत्त्वानि नानाजातीनि सर्व्वशः।
एतद्धैमवतं वर्षं भारती यत्र सन्ततिः॥ २९।

---

* षट् त्वत्रेति (ग)।

† चायेति (ग)।

हेमकूटे परं यत्र नाम्ना किम्पुरुषोत्तमः ।
हेमकूटात्तु निषधं हरिवर्षन्तदुच्यते ॥ ३० ।
हरिवर्षात्परश्चैव हेमपार्श्वे इलावृतम् ।
इलावृतात्परं नीलं रम्यकं नाम विश्रुतम् ॥ ३१ ।
रम्यकाच्च परं श्वेतं विश्रुतं तद्धिरण्मयम् ।
हिरण्मयात्परश्चैव शृङ्गवन्तं कुरु स्मृतम् ॥ ३२ ।
धनुःसंस्थे तु द्वे वर्षे विज्ञेये दक्षिणोत्तरे ।
द्वीपानां खलु चत्वारि चतुरस्रमिलावृतम् ॥ ३३ ।
अर्वाक् च निषधस्याथ वेद्यर्द्धं दक्षिणं स्मृतम् ।
परं शृङ्गवतो यच्च वेद्यर्द्धं हि तदुत्तरम् ॥ ३४ ।
वेद्यर्द्धदक्षिणे त्रीणि वर्षाणि त्रीणि चोत्तरे ।
तयोर्मध्ये तु विज्ञेयो यत्र मेरुस्त्विलावृतः ॥ ३५ ।
आयामतश्चतुस्त्रिंशत्सहस्राणि प्रकीर्त्तितः ।
तस्य प्रतीच्यां विज्ञेयः पर्व्वतो गन्धमादनः ॥ ३६ ।
आयामोच्छ्रायविस्तारात्तुल्यो माल्यवता तु सः ।
परिमण्डलस्तयोर्मध्ये मेरुः कनकपर्व्वतः ।
चतुर्वर्णः स सौवर्णश्चतुरस्रः समुत्थितः ॥ ३७ ।
अव्यक्तधातवः सर्व्वे समुत्पन्ना जनादयः ।
अव्यक्तपृथिवी पद्मं मेरुस्तस्य च कर्णिका ॥ ३८ ।
चतुष्पत्रं समुत्पन्नं व्यक्तं पञ्चगुणं महत् ।
ततः सर्व्वाः समुत्पन्ना वितता हि प्रवृत्तयः ॥ ३९ ।
अनेककल्पजीवद्भिः पुरुषैः पुण्यकारिभिः ।

कृतात्मभिर्महात्मभिः प्राप्यते पुरुषोत्तमः ॥ ४० ।
महायोगी महादेवो जगद्वेरयो जनार्द्दनः ।
सर्व्वलोकगतोऽनन्तो व्यापको मूर्त्तिरव्ययः ॥ ४१ ।
न तस्य प्राकृता मूर्त्तिर्मांसमेदोऽस्थिसम्भवा ।
योगित्वाच्चेश्वरत्वाच्च सर्व्वरूपधरो विभुः ॥ ४२ ।
तन्निमित्तं समुत्पन्नं लोके पद्मं सनातनम् ।
कल्पशेषस्य तस्यासौ कालस्य गतिरीदृशी ॥ ४३ ।
तस्मिन् पद्मे समुत्पन्नो देवदेवश्चतुर्मुखः ।
प्रजापतिपतिर्देवः ईशानो जगतः प्रभुः ॥ ४४ ।
तस्य वीजनिसर्गं* हि पुष्करस्य यथार्थवत् ।
कृत्स्नं प्रजानिसर्गेण विस्तरेणैव वर्ण्यते ॥ ४५ ।
तदम्बु वैष्णवः कायो यतो रत्नविभूषितः ।
पद्माकारा समुत्पन्ना पृथिवी सवनद्रुमा ॥ ४६ ।
तत्तस्य लोकपद्मस्य विस्तरं सिद्धभाषितम् ।
वर्ण्यमानं विभागेन क्रमशः शृणुत द्विजाः ॥ ४७ ।
महावर्षाणि ख्यातानि चत्वार्यत्र च संस्थिताः† ।
तत्र पर्व्वतसंस्थानो मेरुर्नाम महाबलः ॥ ४८ ।
नानावर्णः स पार्श्वेषु पूर्व्वतः श्वेत उच्यते ।
पीतश्च दक्षिणे तस्य भृङ्गवर्णन्तु पश्चिमम् ।
उत्तरं रक्तवर्णन्तु तस्य पार्श्वं महात्मनः ॥ ४९ ।

* निसर्गमित्यत्र क्लीवत्वमार्षं निसर्ग इति साधु ।

† संस्थिता इत्यत्र संस्थितानीति चेत्सङ्गतिर्भवेत् ।

मेरुस्तु शोभते शुक्लो राजवंशेष्वधिष्ठितः ।
तरुणादित्यसङ्काशो विधूम इव पावकः ॥ ५० ॥
योजनानां सहस्राणि चतुरशीतिमुच्छ्रितः ।
प्रविष्टः षोडशाधस्ताद्विस्तृतः षोडशैव तु ॥ ५१ ॥
शरावसंस्थितत्वाच्च द्वात्रिंशन्मूर्द्धि विस्तृतः ।
विस्तारत्रिगुणश्चास्य परिणाहः समन्ततः ॥ ५२ ॥
मण्डलेन प्रमाणेन व्यस्यमानन्तदिष्यते* ।
नवतिश्च सहस्राणि योजनानां समन्ततः ॥ ५३ ॥
ततः षट्काधिकानाञ्च व्यस्यमानं प्रकीर्त्तितम् ।
चतुरस्रेण मानेन परिणाहः समन्ततः ॥ ५४ ॥
स पर्व्वतो महादिव्यो दिव्यौषधिसमन्वितः ।
भवनैरावृतः सर्व्वैर्जातरूपमयैः शुभैः ॥ ५५ ॥
तत्र देवगणाः सर्व्वे गन्धर्व्वोरगराक्षसाः ।
शैलराजे प्रमोदन्ते तथैवाप्सरसां गणाः ॥ ५६ ॥
स तु मेरुः परिवृतो भवनैर्भूतभावनैः ।
चत्वारो यस्य देशास्तु नानापार्श्वेष्वधिष्ठिताः ॥ ५७ ॥
भद्राश्वो भारतश्चैव केतुमालश्च पश्चिमे ।
उत्तरे कुरवश्चैव कृतपुण्यप्रतिश्रयाः ॥ ५८ ॥
कर्णिका तस्य पद्मस्य समन्तात्परिमण्डलम् ।
योजनानां सहस्राणि योजनानां प्रमाणतः ॥ ५९ ॥
तस्य केसरजालानि नव षट् च प्रकीर्त्तिताः ।

---

* प्रकीर्त्तितमिति (ग), तत्र एतच्छ्लोकार्द्धमारभ्य परश्लोकस्य पूर्व्वार्द्धं नास्ति ।

चतुरशीतिविस्तीर्णो विवरान्तरगोचराः ॥ ६० ।
त्रिंशच्चापि सहस्राणि योजनानां प्रमाणतः ।
तस्य केसरजालानि विकीर्णानि समन्ततः ॥ ६१ ।
शतसाहस्र आयामः अशीतिः पृथुलानि च ।
चत्वारि तत्र पर्व्वाणि योजनानां चतुर्द्दश ॥ ६२ ।
तत्र या सा मया तुभ्यं कर्णिकेत्यभिविश्रुता ।
तां वर्ण्यमानामेकाग्रात्समासेन निबोधत ॥ ६३ ।
मणिपर्णशतैश्चित्रां नानावर्णप्रभासिताम् ।
अनेकपर्णनिचयं सौवर्णमरुणप्रभम् ॥ ६४ ।
कान्तं सहस्रपर्व्वाणं सहस्रोदरकन्दरम् ।
सहस्रशतपत्रञ्च वृतमेकं नगोत्तमम् ।
मणिरत्नार्पितैः स्वस्मैर्मणिचित्रिततोरणैः ॥ ६५ ।
तत्र ब्रह्मसभा रम्या ब्रह्मर्षिजनसङ्कुला ।
नाम्ना मनोवती सा तु सर्व्वलोकेषु विश्रुता ॥ ६६ ।
तत्रेशानस्य देवस्य सहस्रादित्यवर्च्चसः ।
महाविमानसंस्थस्य महिमा वर्त्तते सदा ॥ ६७ ।
तत्र सर्व्वे देवगणाश्चतुर्वक्त्रं स्वयं प्रभुम् ।
इष्ट्वा पूज्या नमस्कारैरर्च्चनीयमुपस्थिताः ॥ ६८ ।
यैस्तदा जितसङ्कल्पैर्ब्रह्मचर्य्यं महात्मभिः ।
चीर्णं चारुमनोभिश्च सदाचारपरिस्थितैः ॥ ६९ ।
सम्यग्भक्त्या सुतुष्ट्या च पितृदेवार्च्चने रताः ।
गृहाश्रमपरास्तत्र विनीता अतिथिप्रियाः ॥ ७० ।

मद्दिष: शुक्लकर्माणो विरजा: कामवर्जिता: ।
शमैर्नियमदानैश्च दग्धनिर्दग्धकिल्विषा: ॥ ७१ ।
तेषां निवास: शुक्रे च मत्र्यलोके प्रतिष्ठिते ।
उपर्य्युपरि सर्व्वासां गतीनां परमा गति: ॥ ७२ ।
चतुर्द्दशसहस्राणि योजनानान्तु कीर्त्तितम् ।
ततोऽर्कमचिरे कर्णे तरुणादित्यवर्च्चसि ॥ ७३ ।
महागिरौ ततो रम्ये रत्नधातुविचित्रिते ।
नैकरत्नसमावासे मणितोरणमन्दिरे ।
मेरु: सर्व्वेषु पार्श्वेषु समन्तात्परिमण्डले ॥ ७४ ।
त्रिंशद्योजनसाहस्रं चक्रपादो नगोत्तम: ।
दशयोजनविस्तीर्णा चक्रपादोपनिर्गता ॥ ७५ ।
सा तुर्ङ्गवाहिनी* चापि नदी भूमौ प्रतिष्ठिता ।
सा पुर्य्याममरावत्यां† क्रममाणेन्दुमप्रभा ॥ ७६ ।
तया तिरस्कृता वापि सूर्य्येन्दुज्योतिषां गणा: ।
उदयास्तमिते सन्ध्ये ये सेवन्ते द्विजोत्तमा: ॥ ७७ ।
तान्तुष्यन्ते द्विजा: सर्व्वानष्टावप्यचलोत्तमान् ।
परिभ्रमज्ज्योतिषां या सा रुद्रेन्द्रमता शुभा ॥ ७८ ।

इति वराहपुराणे रुद्रगीतासु भुवनकोशे पञ्चसप्ततितमोऽध्याय: ।

* मुद्गवाहिनीति (ग) ।

† सा पुनर्यांमयावत्यामिति (ग,

# षट्सप्ततितमोऽध्यायः।

रुद्र उवाच ।

तस्यैव मरोः पूर्व्वे तु देशे परमवर्च्चसे ।
चक्रपादपरिक्षिप्ते नानाधातुविराजिते ।
तत्र सर्व्वामरपुरं चक्रपादसमुद्‌धृतम् ॥ १ ।
दुर्धर्षबलदृप्तानां देवदानवरक्षसाम् ।
तत्र जाम्बूनदमयः सुप्राकारः सुतोरणः ॥ २ ।
तस्याप्युत्तरपूर्व्वे तु देशे परमवर्च्चसे ।
अर्कलोकजनसम्पूर्णा विमानशतसङ्कुला ॥ ३ ।
महावापीसमायुक्ता नित्यं प्रमुदिता शुभा ।
शोभिता पुष्पशबलैः पताकाध्वजमालिनी ॥ ४ ।
देवैर्यक्षोऽप्सरोभिश्च ऋषिभिश्च सुशोभिता ।
पुरन्दरपुरी रम्या समृद्धा त्वमरावती ॥ ५ ।
तस्या मध्येऽमरावत्या वज्रवैदूर्य्यवेदिका ।
त्रैलोक्यगुणविख्याता सुधर्मा नाम वै सभा ॥ ६ ।
तत्रास्ते श्रीपतिः श्रीमान्सहस्राक्षः शचीपतिः ।
सिद्धादिभिः परिवृतः सर्व्वाभिर्देवयोनिभिः ॥ ७ ।
तत्र चैत्र तु वंशः स्याद्भास्करस्य महात्मनः ।
साक्षात्तत्र सुराध्यक्षः सर्व्वदेवनमस्कृतः ॥ ८ ।
तस्याश्च दिक्षु विस्तीर्णा तत्तद्‌गुणसमन्विता ।
तेजोवती नाम पुरी हुताशस्य महात्मनः ॥ ९ ।

तद्वद्गुणवती रम्या* पुरी वैवस्वतस्य च ।
नाम्ना संयमनी नाम पुरी त्रैलोक्यविश्रुता ॥ १० ॥
तथा चतुर्थे दिग्भागे नैर्ऋताधिपतेः श्रुता ।
नाम्ना कृष्णवती† नाम विरूपाक्षस्य धीमतः ॥ ११ ॥
पञ्चमे त्वन्तरपुटे नाम्ना शुद्धवती पुरी ।
उदकाधिपतेः ख्याता वरुणस्य महात्मनः ॥ १२ ॥
तथा पश्चोत्तरे देवस्यास्योत्तरपुटे पुरी ।
वायोर्गन्धवती नाम ख्याता सर्व्वगुणोत्तरा ॥ १३ ॥
तस्योत्तरपुटे रम्या‡ गुह्यकाधिपतेः पुरी ।
नाम्ना महोदया नाम शुभा वैदूर्य्यवेदिका ॥ १४ ॥
तथाष्टमेऽन्तरपुटे ईशानस्य महात्मनः ।
पुरी मनोहरा नाम भूतैर्नानाविधैर्युता ॥ १५ ॥
पुष्पैर्धन्यैश्च विविधैर्वनैराश्रमसंस्थितैः ।
प्रार्थ्यते देवलोकोऽयं स स्वर्ग इति कीर्त्तितः ॥ १६ ॥

इति वराहपुराणे रुद्रगीतासु भुवनकोशे षट्सप्ततितमोऽध्यायः ।

* ताभ्यां गुणवती रम्या इति (ख) ।

† कृष्णावतीति (ग) ।

‡ तस्योत्तरपुरे रम्या इति (ख) ।

# सप्तसप्ततितमोऽध्यायः ।

रुद्र उवाच ।

यदेतत्कर्णिकामूलं मेरोर्मध्यं प्रकीर्त्तितम् ।
तद्योजनसहस्राणि संख्यया मानतः स्मृतम् ॥ १ ।
चत्वारिंशत्तथा चाष्टौ सहस्राणि तु मण्डलैः ।
शैलराजस्य तत्तत्र मेरुमूलमिति स्मृतम् ॥ २ ।
तेषां गिरिसहस्राणामनेकानां महोच्छ्रयः ।
दिगष्टौ च पुनस्तस्य मर्य्यादापर्व्वताः शुभाः ॥ ३ ।
जठरो देवकूटश्च पूर्व्वस्यां दिशि पर्व्वतौ ।
मर्य्यादापर्व्वतानेतानष्टावाहुर्मनीषिणः ॥ ४ ।
योऽसौ मेरुर्द्विजश्रेष्ठाः प्रोक्तः कनकपर्व्वतः ।
दिगस्यास्य तु वक्ष्यामि शृणुध्वङ्गदतस्ततः ॥ ५ ।
मर्य्यादायास्तु चत्वारो गिरीरयं चतुर्द्दश ।
येनाचचाल विष्टब्धा सप्तद्वीपवती मही ॥ ६ ।
दशयोजनसाहस्रं व्यायामस्तेषु शङ्करे* ।
तिर्य्यगूर्द्धञ्च रचिता हरितालतलैर्वृता ॥ ७ ।
मनःशिलादरीभिश्च सुवर्णमणिचित्रिता ।
अनेकसिद्धभवनैः क्रीड़ास्थानैश्च सप्रभा ॥ ८ ।
पूर्व्वेण मन्दरस्तस्य दक्षिणे गन्धमादनः ।

---

* शङ्करेति (ग) ।

विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्थितः ॥ ९ ॥
तेषां शृङ्गेषु चत्वारो महावृक्षाः प्रतिष्ठिताः ।
देवदैत्याप्सरोभिश्च सेविताः सुसमृद्धिभिः ॥ १० ॥
मन्दरस्य गिरेः शृङ्गे कदम्बो नाम पादपः ।
प्रलम्बशाखाशिखरः कदम्बश्चैव पादपः* ॥ ११ ॥
महाकुम्भप्रमाणैश्च पुष्पैर्विकचकेसरैः ।
महागन्धमनोज्ञैश्च शोभितः सर्व्वकालजः ॥ १२ ॥
समन्तेनापरिवृतो भुवनैर्भूतभावनैः ।
सहस्रमधिकं सोऽथ गन्धेनापूरयन्दिशः ॥ १३ ॥
भद्राश्वो नाम वर्षोऽयं वर्षाद्रिः केतुसम्भवः† ।
कीर्त्तिमान्रूपवान् श्रीमान्महापादपपादपः ॥ १४ ॥
यत्र साक्षाद्धृषीकेशः सिद्धसङ्घैर्निषेवितः ।
तस्य लोकसहस्रस्य तथा स्वयदनो हरिः ॥ १५ ॥
दृष्टवांश्चामरश्रेष्ठः स हि सानुं पुनः पुनः ।
तेन चालोकितं वर्षं सर्व्वद्विपदनायकाः ।
यस्य नाम्ना समाख्यातो भद्राश्वेति न संशयः ॥ १६ ॥
दक्षिणस्यापि शैलस्य शिखरे हे च सेविते ।
जम्बूवृक्षः पुष्पफलमहाशाखोपशोभितः ॥ १७ ॥
सदा ह्यतिमनामानि स्वादूनि सुरभीणि च ।

* ग पुस्तके एतदर्द्धं पर्य्यन्तस्य पूर्व्वार्द्धस्य नास्ति ।

† वर्षाद्रिः केतुसम्भव इति ख ।

फलान्यमृतकल्पानि पतन्ति गिरिमूर्द्धनि।
तस्माद्गिरिवरश्रेष्ठात्फलप्रस्रववाहिनी: ॥ १८।
तत्र जाम्बूनदं नाम सुवर्णमनलप्रभम्।
देवालङ्कारमतुलमतिसुन्दरवर्चसम् ॥ १९।
देवदानवगन्धर्वयक्षराक्षसगुह्यकाः।
पिवन्त्यमृतकल्पञ्च प्रीत्या जम्बूफलासवम् ॥ २०।
सा चते दक्षिणे वर्षे जम्बूर्लोकेति विश्रुता।
यस्या नाम्ना समाख्याता जम्बूद्वीपेति* मानवैः ॥ २१।
विपुलस्य च शैलस्य दक्षिणेन महात्मनः।
जातिशृङ्गोऽतिसुमहानश्वत्थश्चेति पादपः ॥ २२।
महोच्छ्रायो महास्कन्धो नैकसत्त्वगुणालयः।
कुम्भप्रमाणैरुचिरैः फलैः सर्व्वर्त्तुकैः शुभैः ॥ २३।
सकेतुकेतुमालाक्य देवगन्धर्व्वसेवितैः।
केतुमालेति* यः ख्यातो नाम्ना तत्र प्रकीर्त्तितः।
तन्निबोधत विप्रेन्द्रा निरुक्तान्तेन वर्षके ॥ २४।
क्षीरोदमथने वृत्ते मालां स्कन्धनिषेविताम्।
इन्द्रेण चैत्यकेतौ च केतुमालस्ततः स्मृतः।
तेन तच्चिह्नितं वर्षं केतुमालेति विश्रुतम् ॥ २५।
सुपार्श्वस्योत्तरे शृङ्गे वटोनाम महाद्रुमः।
न्यग्रोधो विपुलस्कन्धो यस्त्रियोजनमण्डलः ॥ २६।

---

* जम्बुद्वीपमिति, केतुमालमिति च साधु।

माल्यमान*कलापैश्च विविधैस्तु समन्ततः ।
शाखाभिर्लम्बमानाभिः सेविते सिद्धसेविते ॥ २७ ।
प्रलम्बकुम्भसदृशैर्हेमवर्णफलैः सदा ।
सन्त्यस्ते वै ततस्तस्मिन्वटवृक्षप्रकाशकाः ॥ २८ ।
सनत्कुमारावरजा मानसा ब्रह्मणः सुताः ।
सप्त तत्र महाभागाः कुरवो नाम विश्रुताः ॥ २९ ।
तत्र स्थिरगतैः शान्तैर्नीरजस्कैर्महात्मभिः ।
अस्ते: स्वपक्षपर्य्यन्तैः स्वम्भामास्ते सनातनाः ॥ ३० ।
तस्य नामाङ्कितं वर्षं सप्ततिर्वै महात्मनः ।
दिवि देवैश्च विख्याता भर्त्तारः कुरवः सदा ॥ ३१ ।

इति वराहपुराणे रुद्रगीतासु भुवनकोषे सप्तसप्ततितमोऽध्यायः ।

---

## अष्टसप्ततितमोऽध्यायः ।

रुद्र उवाच ।

तथा चतुर्णां वक्ष्यामि शैलेन्द्राणां यथाक्रमम् ।
अनुविस्थानि रम्याणि विहङ्गैः कूजितानि च ॥ १ ।
अनेकपक्षियुक्तान्यशृङ्गाणि सुबहूनि च ।
देवानां दिव्यनारीभिः समं क्रीडामयानि च ॥ २ ।

* माल्यदामैरिति ग, ।

किन्नरोद्गितघुष्टानि शीतमन्दसुगन्धिभिः ।
पवनैः सेव्यमानानि रमणीयतराणि च ॥ ३ ।
चतुर्दिक्षु विराजन्ते नामतः शृणु ता नदीः ।
पूर्व्वे चैत्ररथं नाम दक्षिणे गन्धमादनम् ।
प्रभावेण सुतोयानि वनखण्डयुतानि च ॥ ४ ।
वनखण्डांस्तथाक्रम्य देवताललना युताः ।
यत्र क्रीड़न्ति चोद्देशे मुदा परमया युताः ॥ ५ ।
रत्नौघकीर्णतीर्थानि महापुण्यजलानि च ।
अनेकजलयन्त्रैश्च नादितानि महान्ति च ॥ ६ ।
शाखाभिर्लम्बमानाभीरुवत्पक्षिकुलालिभिः ।
कमलोत्पलकह्लारशोभितानि सरांसि च ।
चतुर्षु तेषु गिरिषु नानागुणयुतेषु च ॥ ७ ।
अरुणोदन्तु पूर्व्वेण दक्षिणे मानसं स्थितम्* ।
असितोदं पश्चिमे च महाभद्रं तथोत्तरे ।
कुमुदैः श्वेतकपिलैः कह्लारैर्भूषितानि च ॥ ८ ।
अरुणोदस्य ये शैलाः प्राच्या वै नामतः स्मृताः ।
तान्कीर्त्त्यमानांस्त्वेन शृणुध्वङ्गदतो मम ॥ ९ ।
विकङ्को मणिशृङ्गश्च सुपार्श्वोपलो महान् ।
महानीलोऽथ कुम्भश्च सुविन्दुर्मदनस्तथा ।
वेणुनद्धः सुमेदाश्च निषधो देवपर्व्वतः ॥ १० ।

---

* स्मृतमिति (ख) ।

इत्येते पर्व्वतवराः पुण्याश्च गिरयोऽपि च* ।
सरसो मानसस्येह दक्षिणेन महाचलाः ।
ये कीर्त्तिता मया तुभ्यं नामतस्तान्निबोध मे ॥ ११ ।
शैलस्त्रिशिखरश्चैव शिशिरश्चाचलोत्तमः ।
कपिश्च शतमचश्च† तुरगश्चैव सानुमान् ॥ १२ ।
ताम्राहश्च विषश्चैव तथा श्वेतोदनो‡ गिरिः ।
समूलश्चैव सरलो रत्नकेतुश्च पर्व्वतः ॥ १३ ।
एकमूलो महाशृङ्गो गजमूलोऽपि शावकः ।
पञ्चशैलश्च कैलासो§ हिमवानचलोत्तमः ॥ १४ ।
उत्तरा ये महाशैलास्तान्वक्ष्यामि निबोधत ।
कपिलः पिङ्गलो भद्रः¶ सरसश्च महाचलः‖ ॥ १५ ।
कुमुदो मधुमांश्चैव गर्जनो मर्कटस्तथा ।
कृष्णश्च पाण्डवश्चैव सहस्रशिरसस्तथा ॥ १६ ।
पारिपात्रश्च शैलेन्द्रः शृङ्गवानचलोत्तमः ।
इत्येते पर्वतवराः श्रीमन्तः पश्चिमे स्मृताः ॥ १७ ।
महाभद्रस्य सरस उत्तरेण द्विजोत्तमाः ।

* एतदर्द्धं (ग) पुस्तके नास्ति ।
† शतमर्ज्जश्चेति (ग) ।
‡ विप. श्वेतो मूलं वै स्यन्दन इति ।
§ कैलाश इति (ग) ।
¶ भद्रश्चेति (ग) ।
‖ महाचल इति (ग) ।

ये पर्वताः स्थिता विप्रास्तान्वक्ष्यामि निबोधत ॥ १८ ।
हंसकूटो महाशैलो वृषहंसश्च पर्वतः ।
कपिञ्जलश्च शैलेन्द्र इन्द्रशैलश्च सानुमान् ॥ १९ ।
नीलः कनकशृङ्गश्च शतशृङ्गश्च पर्वतः ।
पुष्पकरो मेघशैलो विराजश्चाचलोत्तमः ॥ २० ।
जारुधिश्चैव शैलेन्द्र इत्येते उत्तरा स्मृताः ॥ २१ ।
इत्येतेषान्तु मुख्यानामन्तरेषु यथाक्रमम् ।
स्थलीर्नगरद्रोणीश्च सरांसि च निबोधत ॥ २२ ।

इति वराहपुराणे रुद्रगीतासु भुवनकोशे अष्टसप्ततितमोऽध्यायः ।

## ऊनाशीतितमोऽध्यायः ।

रुद्र उवाच ।

सीतान्तस्याचलेन्द्रस्य कुमुदस्यान्तरेण च ।
द्रोण्यां विहङ्गजुष्टायां नानासत्त्वनिषेविताम् ॥ १ ।
त्रियोजनशतायामां शतयोजनविस्तृताम् ।
सुरसामलपानीयां रम्यां तत्र सुरोचनीम् ॥ २ ।
द्रोणमात्रप्रमाणैश्च पुण्डरीकैः सुगन्धिभिः ।
सहस्रशतपत्रैश्च महापद्मैरलङ्कृतम् ॥ ३ ।

देवदानवगन्धर्व्वैर्महासर्पैरधिष्ठितम् ।
पुण्यं तच्छ्रीसरो नाम सप्रकाशमिहैव च ।
प्रसन्नसलिलैः पूर्णं* शरण्यं सर्वदेहिनाम् ॥ ४ ।
तत्र त्वेकं महापद्मं मध्ये पद्मवनस्य च ।
कोटिपत्रप्रकलितं तरुणादित्यवर्चसम् ॥ ५ ।
नित्यं† व्याकोशमधुरं चरत्वादतिमण्डलम्‡ ।
चारुकेसरजालाढ्यं मत्तभ्रमरनादितम् ॥ ६ ।
तस्मिन्मध्ये भगवती साक्षाच्छ्रीर्नित्यमेव हि ।
लक्ष्मीस्तं§ तदावासं मूर्त्तिमन्तं न संशयः ॥ ७ ।
सरसस्तस्य तीरे तु तस्मिन् सिद्धनिषेवितम् ।
सदापुष्पफलं रम्यं तत्र विल्ववनं महत् ।
शतयोजनविस्तीर्णं द्वियोजनशतायतम् ॥ ८ ।
अर्द्धक्रोशोच्चशिखरैर्महावृक्षैः समन्ततः ।
शाखासहस्रकलितैर्महास्कन्धैः समाकुलम् ॥ ९ ।
फलैः सहस्रसङ्काशैर्हरितैः पाण्डुरैस्तथा ।
अमृतस्वादुसदृशैर्भेरीमात्रैः सुगन्धिभिः ॥ १० ।
शीर्य्यद्भिश्च पतद्भिश्च कीर्णभूमिवनान्तरम् ।
नाम्ना तच्छ्रीवनं नाम सर्व्वलोकेषु विश्रुतम् ॥ ११ ।

* स्वच्छमिति (ग) ।

† नित्यव्याकोशमिति (ग) ।

‡ चमत्वादतिमण्डलमिति (क), (ग) ।

§ सदाभासमिति (ग) ।

देवादिभिः समाकीर्णमष्टाभिः ककुभिः* शुभम् ।
विल्वाशिभिश्च मुनिभिः सेवितं पुण्यकारिभिः ॥ १२ ।
तत्र श्रीः संस्थिता नित्यं सिद्धसङ्घनिषेविता ।
एकैकस्याचलेन्द्रस्य मणिशैलस्य चान्तरम् ॥ १३ ।
शतयोजनविस्तीर्णं द्वियोजनशतायतम् ।
विमलं पङ्कजवनं सिद्धचारणसेवितम् ॥ १४ ।
पुष्पं लक्ष्म्या धृतं† भाति नित्यमुज्ज्वलतीव ह ।
अर्द्धक्रोशश्च शिखरैर्महास्कन्धैः समावृतम् ।
प्रफुल्लशाखाशिखरं पिञ्जरं भाति तद्वनम् ॥ १५ ।
द्विबाहुपरिणाहैस्तैस्त्रिहस्तायामविस्तृतैः ।
मनःशिलापूर्व्वनिभैः पाण्डुकेसरशालिभिः ॥ १६ ।
पुष्पैर्मनोहरैर्व्याप्तं व्याकाशैर्गन्धशालिभिः‡ ।
विराजति वनं सर्व्वं मत्तभ्रमरनादितम् ॥ १७ ।
तद्वनं दानवैर्देवैः§ गन्धर्व्वैर्यक्षराक्षसैः ।
किन्नरैरप्सरोभिश्च महाभोगैश्च¶ सेवितम् ॥ १८ ।
तत्राश्रमो भगवतः कश्यपस्य प्रजापतेः ।

* ककुभिरिति पाठे ककुभिरिति स्यात् ।

† धृतमिति (ख) ।

‡ एतदर्द्धं (ग) पुस्तके नास्ति ।

§ दैत्यैःरति (ग) ।

¶ महाभागैरिति (ख) ।

सिद्धसाधुगणाकीर्णं नानाश्रमसमाकुलम् ॥ १९ ।
महानीलस्य मध्ये तु ककुभस्य गिरेस्तथा ।
मध्ये सुखा* नदी नाम तस्यास्तीरे महद्वनम् ॥ २० ।
पञ्चाशद्योजनायामं त्रिंशद्योजनमण्डलम् ।
रम्यं तालवनं श्रीमत्कोशाशीतिकृतपादपम् ॥ २१ ।
महाबलैर्महासारैः स्थिरैरविचलैः शुभैः ।
महदञ्जनसंस्थानैः परिवृत्तैर्महाफलैः ।
मृष्टगन्धगुणोपेतैरुपेतं सिद्धसेवितम् ॥ २२ ।
ऐरावतस्य करिणस्तत्रैव समदाहृतिः ।
ऐरावतस्य रुद्रस्य देवशैलस्य चान्तरे† ॥ २३ ।
सहस्रयोजनायामः शतयोजनविस्तृतः ।
सर्व्वा ह्येकशिला भूमिर्वृक्षवीरुधवर्ज्जिता ।
आप्लुता पादमात्रेण सलिलेन समन्ततः ॥ २४ ।
इत्येतान्यन्तरे‡ द्रोण्यो नानाकाराः प्रकीर्त्तिताः ।
मेरोः पार्श्वेन विप्रेन्द्रा यथावदनुपूर्व्वशः ॥ २५ ।

इति वराहपुराणे रुद्रगीतासु भुवनकोषे ऊनाशीतितमोऽध्यायः ।

* सुखनदीति ग ।

† चान्तरे इति (क), (ख) ।

‡ इत्येतान्यन्तरद्रोण्य इति (ग), इत्येता अभ्यन्तरे इति पाठः ।

# अशीतितमोऽध्यायः।

रुद्र उवाच।

अथ दक्षिणदिग्व्यवस्थिताः पर्व्वतद्रोण्यः सिद्धाचरिताः कीर्त्यन्ते। शिशिरपतङ्गयोर्मध्ये शुक्ला भूमिः स्निग्धा मुक्ता गलितपादपा।

इक्षुक्षेपे च शिखरे पादपैरुपशोभिते।
उदुम्बरवनं रम्यं पक्षिसङ्घनिषेवितम्॥१॥
फलितं तद्वनं भाति महाकूर्म्मोपमैः फलैः।
तद्वनं देवयोन्योऽष्टौ सेवन्ते सर्व्व एव हि*॥२॥

तत्र प्रसन्नस्वादुसलिला बह्वुदका नद्यो वहन्ति। तत्राश्रमो भगवतः कर्दमस्य प्रजापतेः नानामुनिजनाकीर्णस्तच्च शतयोजनमेकं परिमण्डलं वनञ्च। तथाच ताम्राभस्य शैलस्य पतङ्गस्य चान्तरे शतयोजनविस्तीर्णं द्विगुणायतं बालार्कसदृशराजीवपुण्डरीकैः समन्ततः सहस्रपत्रैरविरलैरलङ्कृतं महत्सरोऽनेकगन्धसिद्धगन्धर्वाध्युषितम्। तस्य च मध्ये महाशिखरः शतयोजनायामस्त्रिंशद्योजनविस्तीर्णोऽनेकधातुरत्नभूषितस्तस्य चोपरि महती रथ्या रत्नप्राकारतोरणा तस्यां महद्विद्याधरपुरन्तत्र पुलोमनामा विद्याधरराजः शतसहस्रपरीवारः। तथाच विशाखाचलेन्द्रस्य श्वेतस्य चान्तरे सरः।

* सर्व्वदेव हीति (ग)। देवयोनय इति साधु।

तस्य च पूर्वतीरे महदाम्रवनं कनकसङ्काशैः फलैरतिसुगन्धिभिर्महत्कुम्भमात्रैः* सर्वतश्चितं देवगन्धर्वादयश्च तत्र निवसन्ति ।

सुमूलस्याचलेन्द्रस्य वसुधारस्य चान्तरे ।
त्रिंशद्योजनविस्तीर्णं पञ्चाशद्योजनायते ॥

विल्वस्थली नाम, तत्र फलानि महाकुम्भसङ्काशानि, तैश्च पतद्भिः स्थलमृत्तिका क्लिन्ना, तां च स्थलीं सगुह्यकादयः सेवन्ते विल्वफलाशिनः। तथाच वसुधाररत्नधारयोर्मध्ये त्रिंशद्योजनविस्तीर्णं शतयोजनायतं सुगन्धि किंशुकवनं सदा कुसुमचयस्य गन्धेन वासयते योजनशतम्। तच्च सिद्धाध्युषितं ज्वलितञ्च। तत्र चादित्यस्य देवस्य महदायतनम्। स मासे मासे भगवानवतरति सूर्य्यः। प्रजापतिं लोकजनकं देवादयो नमस्यन्ति। तथाच पञ्चकूटस्य कैलासस्य चान्तरे सहस्रयोजनायामं विस्तीर्णं शतयोजनं हंसपाण्डुरं क्षुद्रसत्त्वैरनाधृष्यं स्वर्गसोपानमिव भूमण्डलम्। अथ पश्चिमे दिग्भागे व्यवस्थिता गिरिद्रोण्यः कीर्त्त्यन्ते। सुपार्श्वशिखिशैलयोर्मध्ये समन्ताद्योजनशतमेकं भौमशिलातलं नित्यतप्तं दुस्पर्शम्, तस्य मध्ये त्रिंशद्योजनविस्तीर्णं मण्डलं वह्निस्थानं स च सर्वकालमनिन्धनो भगवाँल्लोकक्षयकारी संवर्त्तको ज्वलति†।

* महाकुम्भमात्रैरिति ख,पु

† ज्वलतीति ख,पु।

अन्तरे च शैलवरयोः कुमुदाञ्जनयोः शतयोजनविस्तीर्णा मातुलुङ्गस्थली सर्वसत्त्वानामगम्या पीतवर्णैः फलैरावृता सा स्थली शोभते। तत्र च पुष्पोत्कटः सिद्धैरुपेतः। वृहस्पतेस्तद्वनम्। तथाच शैलयोः पिञ्जरगौरयोरन्तरे सरो द्रोण्यो ह्यनेकशतयोजनायताः*। मत्तद्विज षट्पदोऽकुलैः कुमुदैरुपशोभिताः। तत्र च भगवतो विष्णोः परमेश्वरस्यायतनम्। तथाच शुक्लपाण्डुरयोरपि महागिर्य्योरन्तरे त्रिंशद्योजनविस्तीर्णो नवत्यायत एकः शिलातिर्शी वृक्षविवर्ज्जितः। तत्र च निष्कम्पा दीर्घिका सवृक्षा स्थलपद्मिनी अनेकजातिजैश्च† पद्मैः शोभिता तस्याश्च मध्ये पञ्चयोजनप्रमाणो न्यग्रोधो वृक्षस्तस्मिंश्चन्द्रशेखरोमापतिर्नीलवासाश्च देवो निवसति यक्षादिभिरीड्यमानः। सहस्रशिखरस्य गिरेः कुमुदस्य चान्तरे वर्त्तमानं पञ्चाशद्योजनायामं विंशद्योजनविस्तृतं‡ इक्षुक्षेपोच्छशिखरमनेकपक्षिसेवितमनेकवृत्तफलैर्मधुरसैरुपशोभितम्। तत्र चेन्द्रस्य महानाश्रमो दिव्याभिप्रायनिर्म्मितः। तथाच शङ्खकूट-ऋषभयोर्मध्ये पुरुषस्थली रम्याऽनेकगुणा§ अनेकयोजनायता विल्वप्रमाणैः कङ्कोलकैः सुगन्धिभिरुपेता। तत्र पुरुषरसोन्मत्ताः नागाद्याः प्रतिवसन्ति। तथा कपिञ्जल-

* ह्यनेकाः शतयोजनायता इति (ग)।

† अनेकजातीयैरिति (ग)।

‡ विंशतियोजनेति साधु।

§ रम्याऽनेकगुणाऽलङ्कृतेति (ख)।

नागशैलयोरन्तरे द्विशतयोजनमायता* शतयोजनविस्तीर्णा स्थली नानाजनविभूषिता द्राक्षाखर्ज्जूरखण्डैरुपेता अनेकवृक्षवल्लीभिरुपेता सा स्थली। तथाच पुष्करमहामेघयोरन्तरे षष्टियोजनविस्तीर्णा शतायामा पाणितलप्रख्या महती स्थली वृक्षवीरुधविवर्ज्जिता, तस्याश्च पार्श्वे चत्वारि महावनानि सरांसि चानेकयोजनानि। दश पञ्च सप्त तथाष्टौ† त्रिंशद्विंशतियोजनाः स्थल्यो द्रोण्यश्च तत्र काश्चिन्महाघोराः पर्व्वतचयाः।

इति वराहपुराणे रुद्रगीतासु भुवनकोषे अशीतितमोऽध्यायः।

## एकाशीतितमोऽध्यायः।

रुद्र उवाच।

अतःपरं पर्व्वतान्तेषु* देवानामवकाशा वर्ण्यन्ते। तत्र योऽसौ सीताख्यः पर्व्वतस्तस्योपरि महेन्द्रस्य क्रीडास्थानम्। तत्र देवराजस्य पारिजातकतरुवनम्। तस्य पूर्व्वपार्श्वे कुञ्जरो

* द्विशतयोजनमायतेति क, ग।

† दश पञ्च सप्त तथाष्टौ त्रिंशद्विंशतियोजना इति पाठः (ग, पुस्तके नास्ति।

* पर्व्वतेष्विति (ग)।

नाम गिरिः। तस्योपरि दानवानामष्टौ पुराणि च। तथा वज्रके पर्व्वते राक्षसानामनेकानि पुराणि। ते च नाम्ना नीलकाः कामरूपिणः। महानीले च शैलेन्द्रे पुराणि पञ्चदश-सहस्राणि किन्नराणां ख्यातानि तत्र देवदत्तचन्द्राद्या राजानः पञ्चदश किन्नराणां गर्व्विताः। तानि सौवर्णानि विलप्रवेश-नानि च पुराणि चन्द्रोदये च पर्वतवरे नागानामधिवासः। ते च विलप्रवेशा विलेपु* वैनतेयविषयवर्त्तिना व्यवस्थितानु-रागे च दानवेन्द्रा व्यवस्थिताः। वेणुमत्यपि विद्याधरपुरत्रयं त्रिंशद्योजन†शतविस्तीर्णमेकैकन्तावदायतम्। उलूकरोमश-महावेत्राद्या राजानो विद्याधराणाञ्च। तत्र एकैके शैल-राजनि‡ स्वयमेव गरुड़ो व्यवस्थितः। कुञ्जरे तु पर्व्वतवरे नित्यं पशुपतिर्व्यवस्थितः। वसुधारे च वृषभाङ्को महादेवः शङ्करो योगिनां वरः अनेकगुणभूतकोटिसहस्रपरीवारोऽनादिपुरुषो व्यवस्थितः। वसुधारे च पुण्यवतां वसूनां समवासः। वसु-धार-रत्नधारयोर्मूर्द्धि अष्टौ सप्त च संख्यया पुराणि वसुसप्-र्षीणाञ्चेति। एकशृङ्गे च पर्वतोत्तमे प्रजापतेः स्थानं चतु-र्वक्त्रस्य ब्रह्मणः। गजपर्वते च महाभूतपरिवृता स्वयमेव भगवती तिष्ठतीति। वसुधारे च पर्वतवरे मुनिसिद्धविद्या-धराणामायतनं चतुराशीत्यं वरपुरमिह प्राकारतोरणाः। तत्र

* विलपर्व्वशालोनिष्विति (क), (ख)।

† त्रिंशद्योजनेति (ग) विंशतियोजनेति साधु।

‡ एकैकस्मिन् इति शैलराजे इति च साधु।

चानेकपर्व्वता नाम गन्धर्व्वा युद्धशालिनो निवसन्ति। तेषा-
ञ्चाधिपतिर्देवो राजराजैकपिङ्गलः। सुरराक्षसाः पञ्चकूटे
दानवाः शतशृङ्गे दानव*यक्षाणां पुरःशतम्। अभेदकस्य
पश्चिमे दन्ते† देवदानवसिद्धादिपुराणि। तस्य गिरेर्मूर्द्ध्नि महती
नाम शिला तिष्ठति, तस्याञ्च पर्व्वणि पर्व्वणि सोमः स्वयमेवाव-
तरति। तस्यैवोत्तरपार्श्वे त्रिकूटं नाम, तत्र ब्रह्मा तिष्ठति।
कश्चित्तत्र तथा च वह्न्यायतनम्‡। मूर्त्तिमान्वह्निरुपास्यते देवैः।
उत्तरे च शृङ्गाख्ये पर्व्वतवरे देवतानामायतनानि। पूर्व्वेण नारा-
यणस्यायतनम्। मध्ये ब्रह्मणः शङ्करस्य पश्चिमे तत्र यक्षादीनां
कानिचित्पुराणि। तस्य चोत्तरे तीरे जातुद्धमहापर्व्वते त्रिंश-
द्योजनमण्डलं नन्दजलं नाम सरस्तत्र नन्दो नाम नागराजो
वसति। शतशीर्षप्रचण्ड इति इत्येतेऽष्टौ देवपर्व्वता विज्ञेयाः
ते चानुक्रमेण हेमरजतरत्नवैदूर्य्यमनःशिलादिवर्णाः। इयञ्च
पृथ्वी लक्षकोटिगतानेकसंख्याता पूर्णा तेषु च सिद्धविद्याधराणां
निलयाः। तद्यथा मेरोः पार्श्वतः केसरवलयालवालं सिद्धलोक-
इति कीर्त्त्यते। इयञ्च पृथ्वी पद्माकारेण व्यवस्थिता। एष
सर्व्वपुराणेषु क्रमः सामान्यतः प्रतिपाद्यते।

इति वराहपुराणे रुद्रगीतासु भुवनकोषे पञ्चाशीतितमोऽध्यायः।

* दानवेति (ग) पुस्तके नास्ति।

† पश्चिमे दन्ते इत्यत्र पश्चिमेन इति (ग)।

‡ वह्न्यायतनमिति (क), (ख)।

# द्व्यशीतितमोऽध्यायः।

रुद्र उवाच।

अथ नदीनामवतारं शृणुत। आकाशसमुद्रो यः प्रोच्यते तस्मादाकाशगामिनी नदी प्रवृत्ता सा चानवरतमिन्द्रगजेन क्षोभ्यते सा च चतुरशीतिसहस्रोच्छ्रयान्मेरोरुपरि पतति। सा च मेरुकूटतटान्तेभ्यः प्रस्खलिता चतुर्द्धा सञ्जाता षष्टिसहस्र-योजनान्निरालम्बा पतमाना प्रदक्षिणमनुसरन्ती चतुर्द्धा जगाम। सीता चालकनन्दा चक्षुर्भद्रा चेतिनामभिः। तासां मध्ये एका-शीतिसहस्रपर्वतान्दारयन्ती गां गता गङ्गेत्युच्यते। अथ गन्ध-मादनपार्श्वेऽमरगण्डिका वर्ण्यते। एकत्रिंशद्योजनसहस्राणि आयामश्चतुःशतविस्तीर्णम्। तत्र केतुमालाः सर्व्वे जनपदाः कृष्णवर्णाः पुरुषा महाबलिन उत्पलवर्णाः स्त्रियः शुभदर्शनाः। तत्र च महावृक्षाः पनसाः सन्ति। तत्रेश्वरो ब्रह्मपुत्रस्तिष्ठति तत्रोदपानाच्च जरारोगविवर्जिता वर्षायुतायुषो जुष्टाश्च नराः। माल्यवतः पूर्वपार्श्वे पूर्वगण्डिका एकत्रिंशद्योजन-सहस्राणि मानतस्ते च भद्राश्वा नाम जनपदाः। भद्रसाल-वनञ्च तत्र व्यवस्थितम्। कालाम्रवृक्षाः पुरुषाः श्वेताः पद्म-वर्णिनः स्त्रियः कुमुदवर्णा दशवर्षसहस्राणि तेषामायुस्तत्र च पञ्च कुलपर्वतास्ते च शैलवर्णो मालाख्यः कोरजस्कस्त्रिपर्णः नीलश्चेति तद्विनिर्गताः, तदभ्यःस्थितानां देशानां तान्येव नामानि। ते च देशा एता नदीः पिबन्ति, तद्यथा सीता

सुवाहिनी हंसवती कासा महावक्रा चन्द्रवती कावेरी सुर-साख्यावती इन्द्रवती अङ्गारवाहिनी हरित्तोया सोमावर्त्ता शतह्रदा वनमाला वसुमती हंसा सुपर्णा पञ्चगङ्गा धनुष्मती मणिवप्रा* सुब्रह्मभागा विलासिनी कृष्णतोया पुण्योदा नागवती शिवा शैवालिनी मणितटा क्षीरोदा वरुणतालीं† विष्णुपदी महानदी ये पिबन्ति ते दशवर्षसहस्रायुषो रुद्रोमा-भक्ता इति ।

इति वराहपुराणे [illegible] भुवनकोशे द्व्यशीतितमोऽध्यायः ।

## त्र्यशीतितमोऽध्यायः ।

रुद्र उवाच ।

निसर्ग एष भद्राश्वानां कीर्त्तितो नः केतुमालानां विस्तरेण कथितम् । नैषधस्याचलेन्द्रस्य पश्चिमेन कुलाचलजनपदनद्यः कीर्त्त्यन्ते । तथाच विशाखकम्बलजयन्तकृष्णहरिताशोक-वर्द्धमान इत्येते सप्त कुलपर्वतानां कोटिशः प्रसूतिः । तन्नि-वासिनो जनपदास्तन्नामान एव द्रष्टव्याः । तद्यथा सौरग्रा-

* [illegible]

† [illegible]

मान्त सातपः कनसुराग्रवणकम्बलमाहेयाचल कूटवासमूल-तपकौञ्चकृष्णाङ्गमणिपङ्कज चूड़मल सोमीय समुद्रान्तक कुरकुञ्च सुवर्णतट कुह श्वेताङ्ग कृष्णपाद विद कपिल कर्णिक महिष कुब्ज करनाट महोत्कट शुक नाक* सगज भूम ककुरञ्जन महानाह† किकिसपर्ण भौमक चौरक धूमजन्म अङ्गारज जीवलौकिता‡ वाचांसहाङ्गमधुरेय शुकेय चकेय श्रवण मत्तका-षिक गोदावाम कुलपञ्जाब वर्ज्जह मोदशालका एते जन-पदास्तत्पर्वतस्था नदीः पिबन्ति। तद्यथा प्राच्या महाकदम्बा मानसी श्यामा सुमेधा बहुला विवर्णा मुङ्खा§ माला दर्भवती भद्रनदी शुकनदी पल्लवा भीमा प्रभञ्जना काम्बा कुशावती दक्षा काशवती तुङ्गा पुण्योदा चन्द्रावती¶ सुमूलावती ककु-पद्मिनी‖ विशाला करण्टका पीवरी महामाया महिषी मानुषी चण्डा एताः नद्यः प्रधानाः शेषाः क्षुद्रनद्यः सहस्र-शश्चेति** ।

इति वराहपुराणे रुद्रगीतासु चाशीतितमोऽध्यायः।

* शुक भाव इति (ख) नाभगर्भेति (ग)।

† मनोहेति (ग)।

‡ जीवनजीवलौकिनेति (ग)।

§ पुङ्गेति (ग)।

¶ (ख) पुस्तकेऽत्र वेत्रपार्श्वेति पठितम्।

‖ (ख) पुस्तकेऽत्र पद्मावतीति पठितम्। ककुद्मिनीति (ग)। (ख) पुस्तकेऽतः परं विलासप्रभृतयः पञ्च महामहीयोगितदश्चा नवनदीरेताः प्रधाना इत्येवं पाठो वर्त्तते।

** (ख) पुस्तके सहस्रशश्चेतीति न पठितम्।

# चतुरशीतितमोऽध्यायः ।

रुद्र उवाच ।

उत्तराणाञ्च वर्षाणां दक्षिणानाञ्च सर्व्वशः ।
आचक्षते* यथान्यायं ये ये पर्व्वतवासिनः† ।
तच्छृणुध्वं मया विप्राः कीर्त्त्यमानं समाहिताः ॥ १ ॥
दक्षिणेन तु मेरोश्च श्वेतस्य चोत्तरेण च‡ ।
वायव्यं रम्यकं नाम जायन्ते तत्र मानवाः ।
मतिप्रधाना विमला जरादुर्गतिवर्ज्जिताः§ ॥ २ ॥
तत्रापि सुमहान्वृक्षो न्यग्रोधो रोहितः स्मृतः ।
तत्फलरसपानाच्च¶ दशवर्षसहस्रिणः ।
आयुषा सर्व्वमनुजा जायन्ते देवरूपिणः ॥ ३ ॥
उत्तरेण च श्वेतस्य त्रिशृङ्गस्य च दक्षिणे ।
वर्षं हिरण्मयं नाम तत्र हैरण्वती नदी ।
यक्षा वसन्ति तत्रैव बलिनः कामरूपिणः ॥ ४ ॥
एकादशसहस्राणि समानास्ते हि जीव्यते|| ।

---

* आख्यायन्त इति [illegible] ।

† ते इह पर्व्वतवासिन इति क ।

‡ दक्षिणे निषधस्याथ नीलस्याप्युत्तरेण च इति ख ।

§ मतिप्रधानविमला जरादुर्गतिवर्ज्जिता इति ख ।

¶ तत्फलाद्दशमानाञ्च इति ख ।

|| एवां दशसहस्राणि समानां तत्र जीवनमिति ख ।

शतान्यन्यानि जीवन्ते वर्षाणां दश पञ्च च ॥ ५ ॥
लकुचाः पनसाः* वृक्षास्तस्मिन्देशे व्यवस्थिताः ।
तत्फलप्राशनादेव जीवन्ति बहुवासरम्† ॥ ६ ॥

तथा त्रिशृङ्गे च मणिकाञ्चनसर्व्वरत्नशिखरोत्क्रमेण तस्य चोत्तरशृङ्गाद्दक्षिणसमुद्रान्तं चोत्तरकुरवः। तत्र च क्षीर-वृक्षास्त्रासवाः सन्ति। तेषु वृक्षेष्वेव वस्त्राण्याभरणानि च। मणिमया भूमिः सुवर्णवालुका‡ तस्मिन् स्वर्गच्युताः पुरुषा वसन्ति त्रयोदशवर्षसहस्रायुषः। तस्यैव द्वीपस्य पश्चिमेन चतुर्योजनसहस्रमतिक्रम्य देवलोकाच्चन्द्रद्वीपो भवति योजन-साहस्रपरिमण्डलः। तस्य मध्ये चन्द्रकान्तसूर्य्यकान्तनामानौ गिरिप्रस्रवणौ तयोर्मध्ये चन्द्रावर्त्ता§ नाम महानदी अनेकवृक्ष-समाकुलानेकनदीयुक्ता¶। एतत्कुरुवर्षान्तस्योत्तरपार्श्वे समुद्रो-र्मिमालाढ्यं पञ्चयोजनसहस्रमतिक्रम्य देवलोकात्सूर्य्यद्वीपो

* लकुचाः पनसा इति क्वचित्पाठः।

† तत्फलाहारमात्रेण तेन वर्त्तन्ते मानवा इति (ख)। 'वर्त्तन्ते' इति साधु।

‡ मधुस्रवाश्च वृक्षास्तु वस्त्राभरणादीनि च वृक्षेष्वेव जीवन्ते क्षीरस्रवः सन्ति मणि-मयसुवर्णवालुका इति (ख)। जीवन्तीति साधु।

§ सन्ति वरुण्यो मानवाश्च एवं चन्द्रकान्तसूर्यकान्तनामानौ तयोर्मध्ये चन्द्रमसीति (ख)। पश्चिमेन चतुर्योजनसहस्रपरिमण्डलम्. तस्य मध्ये चन्द्रकान्तसूर्यकान्तनामानौ गिरिवरौ तयोर्मध्ये चन्द्रावर्त्तानामेति (ग)।

¶ अनेकफलाऽनेकनदीसमाकुलेति (ख)।

भवति* योजनसहस्रपरिमण्डलः। तस्य मध्ये गिरिवरः शतयोजनविस्तीर्णस्तदुच्छ्रितः†। तस्मात्सूर्य्यावर्त्तनामा‡ नदी निर्गता, तत्र च सूर्य्यस्याधिष्ठानं, तत्र सूर्य्यदैवत्यास्तद्वर्णाश्च प्रजाः दशवर्षसहस्रायुषः। तस्य च द्वीपस्य§ पश्चिमेन चतुर्योजनसहस्रमतिक्रम्य समुद्रदेशे योजनसाहस्रपरिमण्डलेन¶ द्वीपो भद्राकारो‖ नाम। तत्र च भद्रासनं वायोरनेकरत्नशोभितं, तत्र सकलविग्रहवान्वायुस्तिष्ठति। तपनीयवर्णाश्च प्रजाः पञ्चवर्षसहस्रायुषः।

इति वराहपुराणे रुद्रगीतासु भुवनकोशे चतुरशीतितमोऽध्यायः।

---

* चन्द्रद्वीपो भवतीति (ख)।

† स्तावदुच्छ्रित इति (ग)।

‡ तस्माच्चन्द्रवर्तानामेति (ख), एवं तत्रान्यत्रापि सूर्य्यस्थाने चन्द्रः पठितः

§ तस्यैव द्वीपस्येति (ख)।

¶ परिमण्डलत्वे तद्द्वीप इति (ग)।

‖ रुद्राकरा नाम इति (ग)।

# पञ्चाशीतितमोऽध्यायः ।

रुद्र उवाच ।

इयम्भूः पञ्चव्यवस्था कथिता इदानीं भारतं नवभेदं शृणुत*। तद्यथा। इन्द्रः कसेरः† ताम्रवर्णो गभस्तिः‡ नागद्वीपः तथा सौम्यो गान्धर्व्वो वारुणो भारतश्चेति। सागरसंवृत-मेकैकं योजनसहस्रप्रमाणम्। तत्र§ च सप्त कुलपर्व्वताः सन्ति¶। तद्यथा

महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्व्वतः‖।
विन्ध्यश्च पारिपात्रश्च इत्येते कुलपर्व्वताः॥

अन्ये च मन्दर शारदर्दूर** कैलास†† मैनाक वैद्युत वारन्धम पाण्डुर तुंग प्रस्थ कृष्णगिरि जयन्तैरावत ऋष्यमूक

* नवभेतद्यथेति (ग)।

† इन्द्रः सकेतुरिति (ख)।

‡ गभस्तिमानिति (ख)।

§ भर्त्तेति (ख)।

¶ भवन्तीति (ख)।

‖ (ख) पुस्तके शुक्तिमानृक्षपर्व्वत इत्यत्र वेणुमान् भृगुपर्व्वत इति पाठो वर्त्तते।

** सारदर्दुरेति (ग)।

†† (ख) पुस्तके कैलास इत्यतः परं युतं तत्र पाण्डुर प्रस्थ कृष्ण गुरु तुङ्ग प्रस्थतुङ्ग गिरि रैवतक ऋष्यमूक गोमन्तकूट शैल कृत्यस्थान इत्येते क्षुद्रपर्व्वताः शेषाः क्षुद्रतरास्तथा नाम्ना जनपदा निवसन्तीति पाठो वर्त्तते।

गोमन्त चित्रकूट श्रीपर्व्वत चकोरकूट शैल शतस्थल* इत्येते क्षुद्रपर्व्वताः एतेषामपि क्षुद्रतराः। तेषामार्य्या म्लेच्छा जनपदा वसन्ति। पिबन्ति चैतासु नदीषु पानीयम्। तद्यथा गङ्गा सिन्धुः सरस्वती शतद्रुर्व्वितस्ता विपाशा चन्द्रभागा सरयूर्यमुना इरावती देविका कुहूर्गोमती† धूतपापा बाहुदा दृषद्वती कौशिकी निस्वीरा गण्डकी चक्षुष्मती लोहिता इत्येता हिमवत्पादनिर्गताः। वेदस्मृतिर्वेदवती सिन्धुपर्णा चन्दनाभा नाशदाचारा रोहीपारा‡ चर्म्मण्वती विदिशा वेदत्रयी वपन्ती इत्येता पारिपात्रोद्भवाः। शोणो ज्योतीरथा नर्म्मदा सुरसा मन्दाकिनी दशार्णा चित्रकूटा तमसा पिप्पला करतोया पिशाचिका चित्रोत्पला विशाला वञ्जुका बालुवाहिनी§ शुक्तिमती वीरजा पङ्क्तिनी रात्री इत्येताः ऋक्षप्रसूताः। मणिजाला शुभा तापी पयोष्णी शीघ्रोदा वेण्णापाशा¶ वैतरणी वेदिपाला कुमुद्वती तोया दुर्गा अन्त्या गिरा एता विन्ध्यपादोद्भवाः। गोदावरी भीमरथी मरथी कृष्णा वेणा वञ्जुला तुङ्गभद्रा सुप्रयोगा वाह्यकावेरी इत्येताः सह्यपादोद्भवाः। शतमाला ताम्रपर्णी पुष्पावती उत्पलावती इत्येता मलयजाः। त्रियामा

* (क), (ख) पुस्तकयोः सर्व्वे एते क्लीबे पठिताः।

† गौतमीति (ग)।

‡ नाशदाचारा रोहिपारेति (ग)।

§ बालवाहिनीति (ग)।

¶ वेस्रपाशेति (ग)।

ऋषिकुल्या इक्षुला त्रिविन्दाला मूलिनी वंशवरा महेन्द्र-तनयाः। ऋषिका लूसती मन्दगामिनी पलाशिनी इत्येताः शुक्तिमत्प्रभावाः, एताः प्राधान्येन कुलपर्व्वतनद्यः। शेषाः क्षुद्र-नद्यः। एष जम्बूद्वीपो योजनलक्षप्रमाणः।

इति वराहपुराणे रुद्रगीतासु भुवनकोशे पञ्चाशीतितमोऽध्यायः।

# षड़शीतितमोऽध्यायः।

रुद्र उवाच।

अतः परं शाकद्वीपं निबोधत। जम्बूद्वीपस्य विस्ताराद्विगुणपरिणाहाल्लवणोदकश्च जम्बूद्वीपसमस्तेन द्विगुणावृतस्तत्र च पुण्याः जनपदाश्चिरात्मानः* ते दुर्भिक्षजराव्याधिरहिताश्च। देशेऽत्र सप्तैव कुलपर्व्वतास्तावत्तिष्ठन्ति, तस्य चोभयतो लवणक्षीरोदधी व्यवस्थितौ। तत्र च प्रागायतः शैलेन्द्र-उदयो नाम पर्व्वतः तस्यापरेण जलधारो नाम गिरिः स एव चन्द्रेति† कीर्त्तितः। तस्य जलञ्च इन्द्रो गृहीत्वा वर्षति। तस्यापरः‡ श्वेतकोनाम गिरिस्तस्मिन्षट्चेति कीर्त्तिताः प्रजा-

* चिरान्म्रियन्ते इति (ग)।

† चन्द्र इति साधु।

‡ तस्मादपर इति साधु, एवं परत्रापि।

ऽनेकविधाः* क्रीडन्ति, तस्यापरो रजतो गिरिः स एव शाको- च्यते†। तस्य परेणाम्बिकेयः स च विभ्राजसो भण्यते। स एव केसरीत्युच्यते। ततो वायुः प्रवर्त्तते। गिरिनामान्येव वर्षाणि‡ तद्यथा। उदयसुकुमारौ जलधारनैमकमहाद्रुमेतिप्रधान- नामानि द्वितीयपर्व्वतनामभिरपि वक्तव्यानि, तस्य च मध्ये शाकवृक्षस्तत्र च सप्त महानद्यो द्विनाम्न्यस्तद्यथा सुकुमारी कुमारी नन्दा वेणिका धेनुरिक्षुमती गभस्तिरित्येता नद्यः।

इति वराहपुराणे रुद्रगीतासु भुवनकोषे षडशीतितमोऽध्यायः।



## सप्ताशीतितमोऽध्यायः।

रुद्र उवाच।

अथ तृतीयं कुशद्वीपं शृणुत। कुशद्वीपेन क्षीरोदः परि- वृतः शाकद्वीपस्य विस्तारद्विगुणेन। तत्रापि सप्त कुलपर्व्वताः सर्व्वे च द्विनामानः, तद्यथा कुमुदः विद्रुमेति* च उच्यते स-

* प्रजा अनेकविधा इति साधु।

† शाक उच्यते इति साधु।

‡ गिरिनामान्येव वर्षाणीति ग।

* विद्रुम इतीति साधु

उन्नतो हेमपर्व्वतः स एव द्रोणः पुष्पवान् स एव कङ्क पर्व्वतः स एव कुशेशर्योऽग्निमान् स एव तथा षष्ठो महिषनामा स एव हरिरुच्यते तत्राग्निर्वसति। सप्तमन्तु ककुद्मनामा स एव मन्दरः कीर्त्त्यते इत्येते पर्वताः कुशद्वीपे व्यवस्थिताः। एतेषां वर्षभेदो भवति द्विनामसंज्ञः। कुमुदस्य श्वेतमुद्भिदन्तदेवादौ कीर्त्त्यते। उन्नतस्य लोहितं वेणुमण्डलं तदेव भवति बलाहकस्य जीमूतं तदेवास्य रथाकार इति। द्रोणस्य हरिं तदेव बलाधनं भवति। तत्र द्विनाम्न्यो नद्यः प्रतोया* प्रवेशा सैवोच्यते। द्वितीया शिवा यशोदी सा च भवति। तृतीया चित्रा नाम सैव कृष्णा भण्यते। चतुर्थी ह्रादिनी नाम सैव चन्द्रा निगद्यते। विद्युता पञ्चमी शुक्ला सैव वर्णा षष्ठी सैव विभावरी महती सप्तमी सैव धृतिः। एताः प्रधानाः शेषाः क्षुद्रनद्यः। इत्येष कुशद्वीपस्य सन्निवेशः। शाकद्वीपोऽपि द्विगुणसन्निवेशश्च कथितः। तस्य च मध्ये महाकुशस्तम्बः। एष च कुशद्वीपः दधिमण्डादेनामृतसम्मितेन क्षीरोदद्विगुणेन।

इति वराहपुराणे रुद्रगीतासु भुवनकोशे सप्ताशीतितमोऽध्यायः।

* प्रतपेति (ग)।

# अष्टाशीतितमोऽध्यायः।

रुद्र उवाच।

अथ क्रौञ्चो भवति चतुर्थः* कुशद्वीपाद्द्विगुणमानतः समुद्रः क्रौञ्चेन द्विगुणेनावृतस्तस्मिंश्च सप्तैव प्रधानपर्वताः प्रथमः क्रौञ्चो विद्युल्लतो रैवतो मानसः सैव† पावकः, तथैवान्धकारः सैवाच्छोदकः‡। देवावृत्तोदेवावृतः स च सुरापो भण्यते। ततोदेविष्ठः स एव काञ्चनशृङ्गो भवति। देवनन्दात्परो गोविन्दो द्विविन्द इति। ततः पुण्डरीकः स एव तोयासहः। एते सप्त रत्नमयाः पर्वताः क्रौञ्चद्वीपे व्यवस्थिताः सर्वे च परस्परेणोच्छ्रयाः। तत्र वर्षाणि तथा क्रौञ्चस्य कुशलोदेशः स एव माधवः स्मृतो वामकस्य मनोऽनुगः स एव संवर्त्तकस्ततोष्णवान्§ स सप्रकाशस्ततः पावकः सैव सुदर्शनस्तथा चान्धकारः सैव संमोहः, ततो मुनिदेशः स च प्रकाशः, ततोदुन्दुभिः सैवानर्थ उच्यते। तत्रापि सप्तैव नद्यः

गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा।
ख्यातिश्च पुण्डरीका च नद्यः सप्तविधाः स्मृताः॥

* क्रौञ्च भवति चतुर्थमिति ख।

† ख पुस्तके नास्ति

‡ अत्रापि ख पुस्तके नास्ति, एवं परत्रापि

§ तत उच्चवानिति पाठः।

गौरी सैव पुष्पवहा कुमुद्वती नार्द्रवती रौद्रा सन्ध्या सुखावहा भोगजवा त्रिप्रोदा चाख्यातिः सैव बहुला पुण्डरीका चित्र-वर्णदेशा सुद्रनद्यः। क्रौञ्चद्वीपो घृताह्वेऽ*नावृतो घृतोदः शाल्मलेनेति ।

इति वराहपुराणे रुद्रगीतासु भुवनकोषे अष्टाशीतितमोऽध्यायः ।

# ऊननवतितमोऽध्यायः ।

रुद्र उवाच ।

त्रिषु शिष्टेषु वक्ष्यामि द्वीपेषु मनुजाच्युत ।
शाल्मलं पञ्चमं वर्षं प्रवक्ष्यन्तं निबोधत ।
क्रौञ्चद्वीपस्य विस्ताराच्छाल्मलो द्विगुणो मतः ॥ १ ॥

घृतसमुद्रमावृत्य व्यवस्थितस्तद्विस्तारो द्विगुणस्तत्र च सप्त पर्व्वताः प्रधानाः* तावत्योनद्यः। तत्र च पर्व्वताः सुमहाम्पीत-शातकौम्भास्सर्व्वगुणसौवर्णरोहित-सुमनस-कुशल जाम्बूनदवैद्युत-द्युत्येते कुलपर्व्वताः वर्षाणि चेति । अथ षष्ठं गोमेदं कथ्यते । शाल्मलं यथा सुरोदेनावृतं तद्वत्सुरोदोऽपि तद्द्विगुणेन गोमेदेना-

---

* घृताद्धेनेति (ग) ।

---

* प्रवरा इति (ग) ।

वृतस्तत्र च प्रधानपर्व्वतौ द्वावेव। एकश्च तावत्तावसर:* अपरश्च कुमुद इति। समुद्रैक्षुरसस्तद्द्विगुणेन पुष्करेणावृत:, तत्र च पुष्कराख्ये मानसो नाम पर्व्वत:, तदपि द्विधा च्छिन्नं वर्षं तत्प्रमाणेन च स्वादूदकेनावृत:। ततश्च कटाहम्। एतत् पृथिव्या: प्रमाणं ब्रह्माण्डस्य च सकटाहविस्तारप्रमाणम्। एवंविधानां मण्डलानां परिसंख्यानं विद्यते†। एतानि कल्पे कल्पे भगवान्नारायण: क्रोड़रूपी रसातलान्त:प्रविष्टान्दंष्ट्रयैकयोद्धृत्य स्थितौ स्थापयति।

एष व:‡ कथितो मार्गो भूमेरायामविस्तर:।
स्वस्ति वोऽस्तु गमिष्यामि कैलासनिलयं द्विजा:॥

वराह उवाच।

एवमुक्त्वा गतो रुद्र: क्षणात्कैलासपर्व्वतम्§।
ते च सर्व्वे गता देवा ऋषयश्च यथागतम्॥

इति वराहपुराणे षट्त्रिंशत्सु भुवनकोषे ऊननवतितमोऽध्याय:।

* तावत्तावसर इति (ग)।

† परिसंख्या न विद्यत इति (ग)।

‡ एवं व इति (ग)।

§ कैलासपर्व्वते इति (क), (ख)।

# नवतितमोऽध्यायः ।

धरण्युवाच ।

परमात्मा शिवः पुण्य इति केचिद्भवं विदुः ।
अपरे हरिमीशानं इति केचिच्चतुर्मुखम् ॥ १ ॥
एतेषां कतमो देवः परः को वाथवापरः ।
एतद्देव ममाचक्ष्व परं कौतूहलं हि मे ॥ २ ॥

वराह उवाच ।

परो नारायणो देवस्ततस्तस्माच्चतुर्मुखः ।
तस्माद्रुद्रोऽभवद्देवि स च सर्व्वज्ञतां गतः ॥ ३ ॥
तस्याश्चर्य्याण्यनेकानि विविधानि वरानने ।
शृणु सर्व्वाणि चार्व्वङ्गि कथ्यमानं मयानघे ॥ ४ ॥
कैलासशिखरे रम्ये नानाधातुविचित्रिते ।
वसत्यनुदिनं देवः शूलपाणिस्त्रिलोचनः ॥ ५ ॥
सैकस्मिन्दिवसे देवः सर्व्वभूतनमस्कृतः ।
गणैः परिवृतो देव्या महानासीत्* पिनाकधृक् ॥ ६ ॥
तत्र सिंहमुखाः केचिद्गणा नर्द्दन्ति सिंहवत् ।
अपरे हस्तिवक्त्राश्च हयवक्त्रास्तथापरे ॥ ७ ॥
अपरे शिशुमारास्या अपरे शूकराननाः ।
अपरेऽश्वमुखा रौद्राः खरास्याजाननास्तथा ।
छागमत्स्याननाः शूरा अनन्ताः शस्त्रपाणयः ॥ ८ ॥

* महाभाग इति (ख) ।

केचिद्गायन्ति नृत्यन्ति धावन्ति स्फोटयन्ति च ।
हसन्ति किलकिलायन्ति गर्ज्जन्ति च महाबलाः ॥ ९ ॥
केचिन्नागांस्तु संगृह्य युयुधुर्गणनायकाः ।
अपरे मल्लयुद्धेन युयुधुर्बलदर्पिताः ॥ १० ॥
एवं गणसहस्रेण वृतो देवो महेश्वरः ।
यावदास्ते स्वयं देव्या क्रीडन्देववरः स्वयम् ।
तावद्ब्रह्मा स्वयं देवैरुपायात्सह सत्वरः ॥ ११ ॥
तमागतमथो दृष्ट्वा पूजयित्वा विधानतः ।
उवाच परमो देवो रुद्रो ब्रह्माणमव्ययम् ॥ १२ ॥
किमागमनकृत्यन्ते ब्रह्मन्ब्रूहि ममाचिरम् ।
किञ्च देव त्वरायुक्त आगतो मम सन्निधौ ॥ १३ ॥

ब्रह्मोवाच ।

अस्त्यन्धको महादैत्यस्तेन सर्व्वे दिवौकसः ।
अर्द्दिता मत्समीपन्तु दृष्ट्वा मां शरणैषिणः ॥ १४ ॥
ततश्चैते मया प्रोक्ताः सर्व्वे देवा भवम्प्रति ।
गच्छाम इति देवैश्च ततस्त्वेते समागताः ॥ १५ ॥
एवमुक्त्वा स्वयं ब्रह्मा वीक्षाञ्चक्रे पिनाकिनम् ।
नारायणञ्च मनसा सस्मार परमेश्वरम् ॥ १६ ॥
ततो नारायणो देवो द्वाभ्यां मध्ये व्यवस्थितः ।
ततस्त्वेकीगतास्ते* तु ब्रह्मविष्णुमहेश्वराः ॥ १७ ॥

---

* एकीगता इति ग,, स च न सम्यक् पाठः, अभूततद्भाव एव च्विर्भवति । एकीभूता इति सम्यक् पाठः, तथात्वे छन्दोभङ्गश्च ।

परस्परं मुखमद्राक्षुर्वीक्षाचक्रुर्मुदा युताः।
ततस्तेषां त्रिधा दृष्टिर्भूत्वैका समजायत॥ १८॥
तस्यां दृष्ट्यां समुत्पन्ना कुमारी दिव्यरूपिणी।
नीलोत्पलदलश्यामा नीलकुञ्चितमूर्द्धजा।
सुनासा सुललाटास्या सुवक्त्रा सुप्रतिष्ठिता॥ १९॥
त्वष्ट्रा यदग्निजिह्वन्तु लक्षणम्परिभाषितम्।
तत्सर्व्वमेकतः संस्थं कन्यायां सम्प्रदृश्यते॥ २०॥
अथ तां दृश्य* कन्यान्तु ब्रह्मविष्णुमहेश्वराः।
ऊचुः कासि शुभे ब्रूहि किं वा कार्य्यं विपश्चिते॥ २१
त्रिवर्णा च कुमारी सा† कृष्णा शुक्ला च पीतिका‡।
उवाच भवतां दृष्टेर्योगाज्जातास्मि सत्तमाः।
किं मां न वेत्थ सुश्रोणीं स्वशक्तिं परमेश्वरीम्॥ २२॥
ततो ब्रह्मादयस्ते च तस्यान्तुष्टा वरं ददुः।
नाम्नासि त्रिकला देवी पाहि विश्वस्य सर्व्वदा॥ २३॥
अपराण्यपि नामानि भविष्यन्ति तवानघे।
गुणोत्थानि महाभागे सर्व्वसिद्धिकराणि च॥ २४॥
अन्यच्च कारणं देवि त्रिवर्णासि वरानने।
मूर्त्तित्रयं त्रिभिर्वर्णैः कुरु देवि स्वकं द्रुतम्॥ २५॥

* दृष्टेति साधु।

† त्रिवर्णा कुमारीति (ख)।

‡ शुक्लकृष्णा च पीतिकेति (ग)। रक्तिकेति साधु।

एवमुक्ता तदा देवैरकरोत्त्रिविधात्मनुम् ।
सितां रक्तां तथा कृष्णां त्रिमूर्त्तित्वं जगाम सा ॥ २६ ॥
या सा ब्राह्मी शुभा मूर्त्तिस्तया सृजति वै प्रजाः ।
सौम्यरूपेण सुश्रोणी ब्रह्मसृष्टिविधानतः ॥ २७ ॥
या सा रक्तेन वर्णेन सुरूपा तनुमध्यमा ।
शङ्खचक्रधरा देवी वैष्णवी सा कला स्मृता ।
सा पाति सकलं विश्वं विष्णुमायेति कीर्त्त्यते ॥ २८ ॥
या सा कृष्णेन वर्णेन रौद्रा मूर्त्तिस्त्रिशूलिनी ।
दंष्ट्राकरालिनी देवी सा संहरति वै जगत् ॥ २९ ॥
या सृष्टिर्ब्रह्मणो देवी श्वेतवर्णा विभावरी ।
सा कुमारी महाभागा विपुलाक्षदलेक्षणा ।
सद्यो ब्रह्माणमामन्त्र्य तत्रैवान्तरधीयत ॥ ३० ॥
सान्तर्हिता ययौ देवी वरदा श्वेतपर्व्वतम्* ।
तपस्तप्तुं† महत्तीव्रं सर्व्वज्ञत्वमभीप्सती ॥ ३१ ॥
या वैष्णवी कुमारी तु साप्यनुज्ञाय केशवम् ।
मन्दराद्रिं ययौ तप्तुं तपः परमदुश्चरम् ॥ ३२ ॥
या सा कृष्णा विशालाक्षी रौद्री दंष्ट्राकरालिनी ।
सा नीलपर्व्वतवरं तपश्चर्त्तुं ययौ शुभा ॥ ३३ ॥

* श्वेतपर्व्वते इति (क, ख) ।

† क, ख पुस्तकयोः ३१ श्लोकस्य परार्द्धं ३२ श्लोकस्य भ्रष्टं, तत्र केवलं तपस्तप्तुं महाभागे तपः परमदुश्चरमिति पाठो वर्त्तते ।

अथ कालेन महता प्रजाः स्रष्टुं प्रजापतिः।
आरब्धवान तास्तस्य ववृधुः सृजतः प्रजाः* ॥ २४ ।
यदा न ववृधुस्तस्य ब्रह्मणो मानसप्रजाः।
तदा दध्यौ किमेतन्मे न तथा वर्द्धते प्रजाः ॥ २५ ।
ततो ब्रह्मा तदा दध्यौ योगाभ्यासेन सुव्रते।
चिन्तयन् बुबुधे देवस्तां कन्यां श्वेतपर्व्वते।
तपश्चरन्तीं सुमहत्तपसा दग्धकिल्बिषाम् ॥ २६ ।
ततो ब्रह्मा ययौ तत्र यत्र सा कमलेक्षणा।
तपश्चरन्तीं तां दृष्ट्वा वाक्यमेतदुवाच ह ॥ २७ ।

ब्रह्मोवाच।

किन्तपः क्रियते भद्रे कार्य्यमापेक्ष्य शोभने।
तुष्टोऽस्मि ते विशालाक्षि वरं वरय कन्यके ॥ २८ ।

सृष्टिरुवाच।

भगवन्नेकदेशस्था† नोत्सहे स्थातुमञ्जसा।
अतोऽर्थं त्वां वरं याचे सर्व्वगत्वमभीप्सती ॥ २९ ।
एवमुक्तस्तदा देव्या सृष्ट्या ब्रह्मा प्रजापतिः।
उवाच तां तदा देवीं सर्व्वगा त्वं भविष्यसि ॥ ४० ।
एवमुक्ता तदा तेन सृष्टिः सा कमलेक्षणा।
तस्य वृद्धिं लयं प्राप्ता सा देवी पद्मलोचना ॥ ४१ ।
तस्मादारभ्य कालात्तु ब्रह्मसृष्टिर्व्यवर्द्धत।

---

* (ग) पुस्तके २५ श्लोको नास्ति।

† भगवन्नेकदेशस्थिता (क), (ख)।

ब्रह्मणो मानसाः सप्त तेषामन्ये तपोधनाः ॥ ४२ ।
तेषामन्ये ततस्त्वन्ये चतुर्द्धा भूतसंग्रहः ।
सस्थाणुजङ्गमानाञ्च सृष्टिः सर्व्वत्र संस्थिता ॥ ४३ ।
यत्किञ्चिद्वाङ्मयं लोके जगत्स्थावरजङ्गमम् ।
तत्सर्व्वं स्थापितं सृष्ट्या भूतं भव्यञ्च सर्व्वदा ॥ ४४ ।

इति वराहपुराणे सृष्टिविभागे नवतितमोऽध्यायः ।

## एकनवतितमोऽध्यायः ।

वराह उवाच ।

शृणु चान्यं वरारोहे तस्या देव्या महाविधिम् ।
या सा त्रिशक्तिरुद्दिष्टा शिवेन परमेष्ठिना ॥ १ ।
तत्र सृष्टिः पुरा प्रोक्ता* श्वेतवर्णा सुरूपिणी ।
एकाक्षरेति विख्याता सर्व्वाक्षरमयी शुभा ॥ २ ।
वागीशेति समाख्याता क्वचिद्देवी सरस्वती ।
सैव विश्वेश्वरी देवी सैव क्वाप्यमिताक्षरा ।
सैव ज्ञाननिधिः क्वापि सैव देवी विभावरी ॥ ३ ।
यानि सौम्यानि नामानि यानि ज्ञानोद्भवानि च† ।

* पुरा प्रोक्तान्यदेहेनेति (ग) ।

† ज्ञानोद्भवकराणि च इति (ग) ।

तानि तस्या विशालाक्षि द्रष्टव्यानि वरानने ॥ ४ ॥
या वैष्णवी विशालाक्षी रक्तवर्णा सुरूपिणी ।
अपरा सा समाख्याता रौद्री चैव परायणा ॥ ५ ॥
एतास्त्रयो*ऽपि सिध्यन्ति यो वद्दं वेत्ति तत्त्वतः ।
सर्व्वा सेयं वरारोहे एकैव त्रिविधा स्मृता ॥ ६ ॥
एषा सृष्टिर्वरारोहे कथिता ते पुरातनी ।
तया सर्व्वमिदं व्याप्तं जगत्स्थावरजङ्गमम् ॥ ७ ॥
या साद्दौ वर्णिता सृष्टिर्ब्रह्मणोऽव्यक्तजन्मनः ।
तया तुष्टां स्तुतिं चक्रे तस्या देव्याः पितामहः ॥ ८ ॥

ब्रह्मोवाच ।

जयस्त्वं† सत्यसम्भूते ध्रुवे देवि धरेऽचरे‡ ।
सर्व्वगे सर्व्वजननि सर्व्वभूतमहेश्वरि ॥ ९ ॥
सर्व्वज्ञा त्वं वरारोहे सर्व्वसिद्धिप्रदायिनी ।
सिद्धिबुद्धिकरे§ देवि प्रसूतिः परमेश्वरी ॥ १० ॥
त्वं स्वाहा त्वं स्वधा देवि त्वमुत्पत्तिर्वरानने ।
त्वमोङ्कारस्थिता देवि वेदोत्पत्तिस्त्वमेव च ॥ ११ ॥
देवानां दानवानाञ्च यक्षगन्धर्व्वरक्षसाम् ।

* त्रय इति आर्षं, त्रिस्र इति साधु ।

† जयस्त्वमिति आर्षं, जयतात् जय त्वमिति साधु ।

‡ वरे क्षमे इति (ग) ।

§ बुद्धिकरीति (ग) ।

पशूनां वीरुधाञ्चापि त्वमुत्पत्तिर्वरानने ॥ १२ ।
विद्या विद्येश्वरी सिद्धा प्रसिद्धाहं सुरेश्वरी ।
सर्व्वज्ञा त्वं वरारोहे सर्व्वसिद्धिविधायिनी* ॥ १३ ।
सर्व्वगा गतसन्देहा सर्व्वशत्रुनिवर्हिणी ।
सर्व्वविद्येश्वरी देवी नमस्ते स्वस्तिकारिणि ॥ १४ ।
ऋतुस्नातां स्त्रियं गच्छेद्यस्त्वां स्मृत्वा वरानने ।
तस्यावश्यं भवेत्सृष्टिस्त्वत्प्रसादात्प्रजेश्वरि ।
स्वरूपा विजया भद्रे सर्व्वशत्रुविनाशिनि ॥ १५ ।

इति वराहपुराणे सृष्टिस्तुतिर्नाम एकनवतितमोऽध्यायः ।

## द्विनवतितमोऽध्यायः ।

वराह उवाच* ।
या मन्दरगता देवी तपः कर्त्तुन्तु वैष्णवी ।
राजसी परमा शक्तिः कौमारव्रतधारिणी ॥ १ ।

---

* प्रदायिनीति (ग) ।

* एष पाठः (ख) पुस्तके नास्ति ।

सैकाकिनी तपस्तेपे विशालायान्तु शोभना।
तस्यास्तपस्या: कालेन महता चुभितं मनः॥ २॥
तस्मात्चोभात्समुत्तस्थु: कुमार्थ्यः सौम्यलोचनाः।
नीलकुञ्चितकेशान्ता बिम्बोष्ठ्यायतलोचनाः।
नितम्बरसनोद्दाम*नूपुराढ्याः सुवर्चसः॥ ३।
एवंविधाः स्त्रियो देव्याः चोभिते मनसि द्रुतम्।
उत्तस्थु: शतमाहस्राः कोटिशो विविधाः प्रजाः॥ ४।
दृष्ट्वा कुमार्य्यः† सा देवी तस्मिन्नेव गिरौ शुभाः‡।
तपसा निर्ममे देवि पुरं हर्म्यशताकुलम्॥ ५।
विशालरथ्यं सौवर्णप्रासादैरुपशोभितम्।
अन्तर्जलानि वेश्मानि मणिसोपानवन्ति च।
रत्नजालगवाचाणि आसन्नोपवनानि च॥ ६।
असंख्यातानि हर्म्याणि तथा कन्या धराधरे§।
प्राधान्येन प्रवच्यामि कन्यानामानि शोभने॥ ७।
विद्युत्प्रभा चन्द्रकान्तिः सूर्य्यकान्तिस्तथापरा।
गम्भीरा चारुकेशी च सुजाता मुञ्जकेशिनी॥ ८।
घृताची चोर्व्वशी चान्या शशिनी शीलमण्डिता।

* रत्नमादाम इति (ख)।

† कुमार्य्य इति चार्षं, कुमारीरिति साधु।

‡ शुभे इति (ग)।

§ धरावरे इति (ख)।

चारुकन्या* विशालाक्षी धन्या पीनपयोधरा । ९ ।
चन्द्रप्रभा गिरिसुता तथा सूर्य्यप्रभासुता ।
स्वयम्प्रभा चारुमुखी शिवदूती विभावरी ।
जया च विजया चैव जयन्ती चापराजिता ॥ १० ।
एताश्चान्याश्च शतशः कन्यास्तस्मिन्पुरोत्तमे ।
देव्या अनुचराः सर्व्वाः पाशाङ्कुशधराः शुभाः ॥ ११ ।
ताभिः परिवृता देवी सिंहासनगता शुभा ।
सुसितैश्चामरैः स्त्रीभिर्वीज्यमाना विलासिनी ॥ १२ ।
कौमारं व्रतमास्थाय तपः कर्त्तुं समुद्यता ।
पूज्यमाना वरस्त्रीभिः कुमारीभिः समन्ततः ॥ १३ ।
सर्व्वाङ्गशोभिनी देवी यावदास्ते तपोऽन्विता ।
तावदागतवांस्तत्र नारदो ब्रह्मणः सुतः ॥ १४ ।
तं दृष्ट्वा सहसा देवी ब्रह्मपुत्रं तपोधनम् ।
विद्युत्प्रभामुवाचेदमासनन्दीयतामिति ।
पाद्यमाचमनीयञ्च त्विप्रमस्मै प्रदीयताम् ॥ १५ ।
एवमुक्ता तदा देव्या कन्या विद्युत्प्रभा शुभा ।
आसनं पाद्यमर्घ्यञ्च नारदाय न्यवेदयत् ॥ १६ ।
ततः कृतासनन्दृष्ट्वा प्रणतन्नारदं मुनिम् ।
उवाच देवी वचनं हर्षेण महतान्विता ॥ १७ ।
स्वागतन्ते मुनिश्रेष्ठ कस्माल्लोकादिहागतः ।

* चारुकर्मेति (ग) ।

किङ्कार्य्यं वद ते क्षत्यं मा ते कालात्ययो भवेत्॥ १८।
एवमुक्तस्तदा देव्या नारदः प्राह लोकवित्।
ब्रह्मलोकादिन्द्रलोकं तस्माद्रौद्रमथाचलम्।
ततस्त्वामिह देवेशि द्रष्टुमभ्यागतः शुभे॥ १९।
एवमुक्त्वा मुनिः श्रीमांस्तां देवीमन्ववेक्षयत्*।
दृष्ट्वा मुहूर्त्तं देवेशि विस्मितो नारदोऽभवत्॥ २०।
अहो रूपमहो कान्तिरहो धैर्य्यमहो वयः।
अहो निष्कामता देव्या इति खेदमुपाययौ॥ २१।
देवगन्धर्व्वसिद्धानां यक्षकिन्नररक्षसाम्।
न रूपमीदृशं क्वापि स्त्रीष्वन्यासु प्रदृश्यते॥ २२।
एवं सञ्चिन्त्य मनसा नारदो विस्मयान्वितः।
प्रणम्य देवीं सहसा उत्पपात नभस्तलम्॥ २३।
गतश्च त्वरया युक्तः पुरीन्दैत्येन्द्रपालिताम्।
महिषाख्येन भूतेशि समुद्रान्तस्थितां पुरीम्॥ २४।
तत्रासमाद भगवानसुरं महिषाकृतिम्।
दृष्ट्वा लब्धवरं वीरं देवसैन्यान्तकं महत्॥ २५।
स तेन पूजितो भक्त्या तदा लोकचरो मुनिः।
प्रीतात्मा नारदस्तस्मै देव्या रूपमनुत्तमम्।
आचचक्षे यथान्यायं यद्दृष्टं देवतापुरे॥ २६।

नारद उवाच।

असुरेन्द्र शृणुष्वैकं कन्यारत्नं समाहितः।

* अन्ववेक्षत इति (ख), (ग)।

त्रैलोक्यं वरदानेन स्वाधीनन्ते चराचरम् ॥ २७ ॥
ब्रह्मलोकादहं दैत्य मन्दराद्रिमुपागतः ।
तत्र देवीपुरं दृष्टं कुमारीशतसङ्कुलम् ॥ २८ ॥
तत्र प्रधाना या कन्या तापसी व्रतचारिणी* ।
सा देवदैत्ययक्षाणां मध्ये काचिन्न दृश्यते ॥ ८२ ॥
यादृशी सा मया दृष्टा तादृशी काप्यसम्भ्रतः ।
भ्रमता चेदृशी दृष्टा न कदाचिन्मया सती ॥ ३० ॥
तस्याश्च देवगन्धर्व्वा ऋषयः सिद्धचारणाः ।
उपासाञ्चक्रिरे सर्व्वे येऽप्यन्ये दैत्यनायकाः ॥ ३१ ॥
तां दृष्ट्वा वरदां देवीमहं तूर्णमिहागतः ।
अजित्वा देवगन्धर्व्वांश्च तां जयति कश्चन ॥ ३२ ॥
एवमुक्त्वा क्षणं स्थित्वा तमनुज्ञाप्य नारदः ।
यथागतं ययौ धीमानन्तर्द्धानेन तत्क्षणात् ॥ ३३ ॥

इति वराहपुराणे द्वानवतितमोऽध्यायः ।

## त्रयोनवतितमोऽध्यायः ।

वराह उवाच ।

गते तु नारदे दैत्यश्चिन्तयामास तां शुभाम् ।
कथितां नारदमुखात्कृत्वा विस्मितमानसः ॥ १ ॥

* व्रतचारिणीति (ग) ।

तामेव चिन्तयञ्शर्म्म न लेभे दैत्यसत्तमः।
मन्त्रिणश्चानयामास प्रलंशर्म्माणमुत्तमम्॥ २।
तस्याष्टौ मन्त्रिणः शूरा नीतिमन्तोबहुश्रुताः।
प्रघसो विघसश्चैव शङ्कुकर्णो विभावसुः।
विद्युन्माली सुमाली च पर्ज्जन्यः क्रूर एव च॥ ३।
एते मन्त्रिवरास्तस्य प्राधान्येन प्रकीर्त्तिताः।
ते दानवेन्द्रमासीनमूचुः कृत्यं विधीयताम्॥ ४।
तेषां तद्वचनं श्रुत्वा दानवेन्द्रो महाबलः।
उवाच कन्यालाभार्थं नारदावाप्तनिश्चयः॥ ५।

महिष उवाच।

मह्यन्तु कथिता बाला नारदेन महर्षिणा।
सा चाजित्य सुराध्यक्षं न लभ्येत वराङ्गना॥ ६।
एतदर्थं भवन्तो वै कथयन्तु विमृश्य मे।
कथं सा लभ्यते बाला कथं देवाश्च निर्ज्जिताः।
भवेयुरिति तत्सर्व्वं कथयन्तु द्रुतं मम॥ ७।
एवमुक्तास्ततः सर्व्वं कथयामासुरञ्जसा।
एवमुक्तस्तथोवाच प्रघसो दानवेश्वरम्॥ ८।
या सा ते कथिता दैत्य नारदेन महासती।
सा शक्तिः परमा देवी वैष्णवी रूपधारिणी॥ ९।
गुरुपत्नी राजपत्नी तथा सामन्तयोषितः।
जिघृक्षन्नश्यते* राजा तथागम्यागमेन च॥ १०।

* नश्यतीति साधु।

प्रघसेनैवमुक्तस्तु विघसो वाक्यमब्रवीत् ।
सम्यगुक्तं प्रघसेन* तान्देवीं प्रति पार्थिव ।
यदि नाम मतैक्यन्तु बुद्धिः स्मरणमागता ॥ ११ ।
वरणीया कुमारी तु सर्व्वदा विजिगीषुभिः ।
न स्वतन्त्रेण कन्यायाः कार्य्यं क्वापि प्रकर्षणम् ॥ १२ ।
यदि वो रोचते वाक्यं मदीयं मन्त्रिसत्तमाः ।
तदानीं तां शुभां देवीं गत्वा याचन्तु† मन्त्रिणः ।
यो महात्मा भवेत्तस्या बन्धुस्तं याचयामहे ॥ १३ ।
साम्नैवादौ ततः पश्चात्करिष्यामः प्रदानकम् ।
ततो भेदं करिष्यामस्ततो दण्डं क्रमेण च ॥ १४ ।
अनेन क्रमयोगेन यदि सा नैव लभ्यते ।
ततः सबलं गच्छामो बलाद्दक्षीम‡ तां शुभाम् ॥ १५ ।
विघसेनैवमुक्तन्तु श्रेयास्तु मन्त्रिणां वचः ।
शुभमूचुः प्रशंसन्तः सर्व्वे हर्षितमानसाः§ ॥ १६ ।
साधूक्तं विघसेनेदं यत्तां प्रति वराननाम् ।
तदेव क्रियतां शीघ्रं दूतस्तत्र विसर्ज्यताम्¶ ॥ १७ ।
यः सर्व्वशास्त्रनीतिज्ञः शुचिः शौर्य्यसमन्वितः ।

* अत्र [illegible] छन्दोदोषः ।

† याचन्तु इति पाठे, याचन्त्विति साधु ।

‡ [illegible]मिति साधु । अन्यथा छन्दोदोषः ।

§ हृष्टमानसा इति युक्तम् ।

¶ विसृज्यतामिति साधु ।

तस्मात्त्वात्वा तु तान्देवीं वर्णतो रूपतो गुणैः ॥ १८ ॥
पराक्रमेण शौर्य्येण शौण्डीर्य्येण बलेन च।
बन्धुवर्गेण सामग्राबास्थानकरणेन च।
एवं ज्ञात्वा तु तान्देवीं ततः कार्य्यं विधीयताम्* ॥ १८ ।
ततः सपदि दैत्यस्य तद्वचः साधु साध्विति।
प्रशशंसुर्बरारोहे विघसं मन्त्रिसत्तमम्।
प्रशस्य सर्व्वे तं दूतं सन्देष्टुमुपचक्रमुः ॥ २० ।
विद्युत्प्रभं महाभागं बहुमायाविदं शुभम्।
विसर्जयित्वा† तन्दूतं विघसो वाक्यमब्रवीत् ॥ २१ ।
क्रियतां विजयस्तावद्देवसैन्यं प्रति प्रभो ॥ २१ ।
समाद्यतां दानवेन्द्राश्चतुरङ्गबलेन ह।
असुरेन्द्र सुरैर्भग्नैस्त्वत्पराक्रमभीषितैः।
सा कन्या वशतामेति त्वयि शक्रे समागते ॥ २२ ।
लोकपालैर्जितैः सर्व्वैस्तथैव मरुतां गणैः।
नागैर्विद्याधरैः सिद्धैर्गन्धर्वैः सर्पभोजनैः।
रुद्रैर्वसुभिरादित्यैस्त्वमेवेन्द्रो भविष्यसि ॥ २३ ।
इन्द्रस्य ते शतं कन्या देवगन्धर्वयोषितः।
वशमायान्ति सापि स्यात्सर्वथा वशमागता ॥ २४ ।
एवमुक्तस्तदा दैत्यः सेनापतिमुवाच ह।
विरूपाक्षं महामेघवर्णं नीलाञ्जनप्रभम् ॥ २५ ।

* (ग) पुस्तके एवं ज्ञात्वेत्यनन्तरं षट्पादा न सन्ति।

† विसृज्येति खपुस्तके।

आनीयतां द्रुतं सैन्यं हस्त्यश्वरथपत्तिनाम्।
येन देवान्सगन्धर्व्वान् जयामि युधि दुर्ज्जयान्॥ २६॥
एवमुक्ते विरूपाक्षे तदा सेनापतिर्द्रुतम्।
आनिनाय महत्सैन्यमनन्तमपराजितम्॥ २७॥
एकैकोदानवस्तत्र वज्रहस्तसमो युधि।
एकैकं स्पर्द्धते देवं जेतुं स्वेन बलेन ह*॥ २८॥
तेषां प्रधानभूतानामर्बुदं नवकोटयः।
एकस्य येषां†मनुपाति तावद्बलमर्थोर्ज्जितम्॥ २९॥
तेषां नैकसहस्राणि दैत्यानान्तु महात्मनाम्।
समितिं‡चक्रुरव्यग्रास्तदा दैत्याः प्रहारिणः।
प्रयाणङ्कारयामासुर्देवसैन्यजिघांसया॥ ३०॥

विचित्रयाना विविधध्वजाग्रा
विचित्रगन्धा विविधाग्ररूपाः।
दैत्याः सुराञ्जेतुमिच्छन्त उच्चै-
र्ननर्त्तुरात्तायुधयुक्तहस्ताः॥ ३१॥

इति वराहपुराणे [illegible]महिषासुरयोः [illegible] नाम
चतुर्नवतितमोऽध्यायः।

* बलेन हीति (ख)।
† तेषामिति (ख)।
‡ सम्मतिमिति (ग)।

# चतुर्नवतितमोऽध्यायः ।

वराह उवाच ।

ततो महिषदैत्यस्तु कामरूपी महाबलः ।
मत्तहस्तिनमारुह्य यियासुर्मेरुपर्व्वतम् ॥ १ ।
तत्रेन्द्रपुरमासाद्य देवैः सह शतक्रतुम् ।
अभिदुद्राव दैत्येन्द्रो देवान्क्रोधसमन्वितः ॥ २ ।
आदाय स्वानि शस्त्राणि वाहनानि विशेषतः ।
अधिष्ठाय सुरानीकौ दुद्रुवुर्मुदिता भृशम् ॥ ३ ।
तेषां प्रवद्धते* युद्धन्तुमुलं लोमहर्षणम् ।
घोरं प्रचण्डयोधानामन्योन्यमभिगर्ज्जताम् ॥ ४ ।
तत्राञ्जनो नीलकुक्षिर्मेघवर्णो वलाहकः ।
उदाराक्षो ललाटाक्षः सुभीमो भीमविक्रमः ।
स्वर्भानुश्चेति दैत्याष्टौ वसून्दुद्रुवुराहवे ॥ ५ ।
यथासंख्येन तद्वच्च दैत्या द्वादश चापरे ।
आदित्यान्दैत्यवर्य्यास्तु तेषां प्राधान्यतः शृणु ॥ ६ ।
भीमोध्वांक्षोध्वस्तकर्णः शङ्कुकर्णस्तथैव च ।
वज्रको ज्योतिवीर्य्यश्च† विद्युन्माली तथैव च ।
रक्ताक्षो भीमदंष्ट्रस्तु विद्युज्जिह्वस्तथैव च‡ ॥ ७ ।

---

* प्रावर्त्तत इति (क) ।

† ज्योतिर्वीर्य्यश्चेति साधु, तथा क्वते छन्दोदोषः ।

‡ (ग) पुस्तके एतदर्द्धं नास्ति ।

अतिकायो महाकायो दीर्घबाहुः कृतान्तकः ।
एते द्वादश दैत्येन्द्रा आदित्यान्युधि दुद्रुवुः ॥ ८ ॥
स्वकं सैन्यमुपादाय तद्वदन्येऽपि दानवाः ।
रुद्रान्दुद्रुवुरव्यग्रा यथासंख्येन कोपिताः ॥ ९ ॥
कालः कृतान्तो रक्ताक्षो हरणोमित्रहा नलः ।
यज्ञहा ब्रह्महा गोघ्नः स्त्रीघ्नः संवर्त्तकस्तथा ॥ १० ॥
इत्येते दश चैकश्च दैत्येन्द्रा युद्धदुर्मदाः ।
यथासंख्येन रुद्रांश्च दुद्रुवुर्भीमविक्रमाः ॥ ११ ॥
शेषान्देवाञ्शेषदैत्या यथायोगमुपाद्रवन् ।
स्वयं महिषदैत्यश्च इन्द्रं दुद्राव वेगतः ॥ १२ ॥
स चापि बलवान्दैत्यो ब्रह्मणो वरदर्पितः ।
अवध्यः पुरुषेणाजौ यद्यपि स्यात्पिनाकधृक् ॥ १३ ॥
आदित्यैर्वसुभिः सार्द्धं रुद्रैश्च निहता भृशम् ।
असुरा यातुधानाश्च संख्यापूरणकेवलाः ।
देवानामपि सैन्यानि निहतान्यसुरैर्युधि ॥ १४ ॥
एवम्भूते तदा भग्ने देवसैन्ये विद्रुताः सुराः ।
अर्द्दिता विविधैः शस्त्रैः शूलपट्टिशमुद्गरैः ॥ १५ ॥
गतवन्तो ब्रह्मलोकमसुरैरर्द्दिताः सुराः ॥ १६ ॥

इति वराहपुराणे त्रिशक्तिमाहात्म्ये महिषासुरवधे
चतुर्नवतितमोऽध्यायः ।

—०:०—

# पञ्चनवतितमोऽध्यायः ।

वराह उवाच ।

अथ विद्युत्प्रभो दैत्यस्तथा दूतो विसर्ज्जितः ।
प्रणम्य प्रयतोभूत्वा कुमारीगतसङ्कुलाम् ।
अस्थाने विजयापन्नस्ततो वचनमब्रवीत् ॥ १ ।

विद्युत्प्रभ उवाच ।

देवि पूर्व्वमृपिस्त्वासीदादिसर्गैकसम्भवः । .
सखा सारस्वतो जातः सुपार्श्वो नाम वै विभुः ॥ २ ।
तस्याभवन्महातेजाः सिन्धुद्वीपः प्रतापवान् ।
स हि तीव्रस्तपस्तेपे माहिष्मत्यां पुरोत्तमे ॥ ३ ।
कुर्व्वतस्तु तपो घोरं निराहारस्य शोभने ।
आद्या तु विप्रचित्तेः सा सुता परमशोभना ।
माहिष्मतीति विख्याता रूपेणासदृशीभुवि* ॥ ४ ।
सा सखीभिः परिवृता विहरन्ती यदृच्छया ।
आगता मन्दरद्रोणीं तत्रापश्यत्तपोवनम् ॥ ५ ।
मुनेरम्बरसंज्ञस्य विविधद्रुममालितम् ।
लताग्टहैस्तु विविधैर्वकुलैर्लकुचैस्तथा ।
चन्दनैः स्यन्दनैः शालैः सरलैरुपशोभितम्† ॥ ६ ।

* रूपेणासदृशा विभुरिति (क), (ख) ।

† शोभितैरिति (ख) ।

विचित्रवनखण्डैश्च भूषितन्तु महात्मनः ।
दृष्ट्वाश्रमपदं रम्यं साऽसुरी कन्यका शुभम् ।
माहीष्मती वरारोहा चिन्तयामास भामिनी ॥ ७ ।
भीषयित्वाऽहमेनन्तु तापसन्त्वाश्रमे स्वयम् ।
तिष्ठामि क्रीडती साहं सखीभिः परमार्च्चिता ॥ ८ ।
एवं सञ्चिन्त्य सा देवी महिषी सम्बभूव ह* ।
सखीभिः सह विप्रेन्द्र तीक्ष्णशृङ्गाग्रधारिणी ॥ ९ ।
तमृषिं भीषितुं† ताभिः सह गत्वा वरानना ।
असौ विभीषितस्ताभिस्तां ज्ञात्वा ज्ञानचक्षुषा ।
आसुरीं क्रोधसम्पन्नः शशाप शुभलोचनाम् ॥ १० ।
यस्माद्भीषयसे मान्त्वं महिषीरूपधारिणी ।
अतो भव महिष्येव पापकर्म्मे शतं समाः ॥ ११ ।
एवमुक्ता ततः सा तु सखीभिः सह वेपती‡ ।
पादयोर्न्यपतत्तस्य शापान्तं कुरु जल्पती§ ॥ १२ ।
तस्यास्तद्वचनं श्रुत्वा स मुनिः करुणान्वितः ।
शापान्तमकरोत्तस्या वाक्यञ्चेदमुवाच ह ॥ १३ ।
अनेनैव स्वरूपेण पुत्रमेकं प्रसूय वै ।
शापान्तो भविता भद्रे मद्वाक्यं न मृषा भवेत् ॥ १४ ।

* सम्बभूवेति ग० ।

† भीषयितुमिति माधु ।

‡ वेपमानेति माधु ।

§ जल्पन्तीति माधु ।

एवमुक्त्वा गता सा तु नर्म्मदातीरमुत्तमम् ।
यत्र तेपे तपो घोरं सिन्धुद्वीपो महातपाः ॥ १५ ।
तत्र चेन्दुमती नाम दैत्यकन्यातिरूपिणी ।
सा दृष्टा तेन मुनिना विवस्त्रा मज्जती जले ।
चस्कन्द स मुनिः शुक्रं शिलाद्रोण्यां महातपाः ॥ १६ ।
तच्च माहिष्मती दृष्ट्वा दिव्यगन्धि सुगन्धि च ।
ततः सखीरुवाचेदं पिबामीदं जलं शुभम् ॥ १७ ।
एवमुक्त्वा तु सा पीत्वा तच्छुक्रं मुनिसम्भवम् ।
प्राप्ता गर्भं मुनेर्वीर्य्यात्सुषुवे च तदा सती ॥ १८ ।
तस्याः पुत्रोऽभवद्वीमान्महाबलपराक्रमः ।
महिषेति* स्मृतो नाम्ना ब्रह्मवंशविवर्द्धनः ॥ १९ ।
स त्वां वरयते देवि देवसैन्यविमर्द्दनः ।
स सुरानपि जित्वाजौ त्रैलोक्यञ्च तवानघे ।
दास्यते देवि सुप्रीतस्तव सर्व्वं महासुरः ।
तस्यात्मोपप्रदानेन कुरु देवि महत्कृतम् ॥ २० ।
एवमुक्त्वा तदा देवी तेन दूतेन शोभना ।
जहास परमा देवी वाक्यं नोवाच किञ्चन ॥ २१ ।
तस्या हसन्त्या दूतोऽसौ त्रैलोक्यं सचराचरम् ।
ददर्श कुक्षौ सम्भ्रान्तस्तत्क्षणात्समजायत† ॥ २२ ।

* महिष इति साधु ।

† समपद्यतेति (ग) ।

ततो देव्याः प्रतीहारी जयाख्या पतितेक्षणा ।
देव्या हृदि स्थितं वाक्यमुवाच तनुमध्यमा ॥ २३ ॥

जया उवाच ।

कन्यार्थी वदते* यत्त्, तत्त्वया समुदीरितम् ।
यदि नाम व्रतञ्चास्याः कौमारं सर्व्वकालिकम् ॥ २४ ॥
अपि चान्याः कुमार्य्योऽत्र सन्ति देव्याः पदानुगाः ।
तासामेकापि नो लभ्या किमु देवी स्वयं शुभा ।
याहि दूत त्वरं† मा ते किञ्चिदन्यद्भविष्यति ॥ २५ ॥
एवमुक्तो गतो दूतस्तावद्व्योम्नि महामुनिः ।
आयातो नारदस्तूर्णं तृणत्रयैः‡ महातपाः ॥ २६ ॥
दिष्ट्या दिष्ट्येति चागत्य तां कन्यां प्रणिपत्य च§ ।
उपविष्टो जगादाथ आसने परमेऽर्च्चितः ।
प्रणम्य देवीः सर्व्वास्ताः|| उवाच च महातपाः ॥ २७ ॥
देवि देवैरहं प्रीतः प्रेषितोऽस्मि तवान्तिकम् ।
महिषाख्येन दैत्येन युधि देवा विनिर्जिताः¶ ॥ २८ ॥

---

* ब्रवीतीति साधु ।

† त्वरमित्यार्षं, त्वरया, सत्वरं वेति साधु ।

‡ तृणत्रयैरिति (ख) ।

§ दिष्ट्या दिष्ट्येति वदन्सौ देवीं शुभलोचनामिति (ग) ।

|| देवीं सर्व्वाश्चेति (ग) ।

¶ निर्जिता देवि दैत्येन महिषाख्येन निर्जिता इति (ख) । अत्र विजितैर्निर्जिते-विति पाठे तु सङ्गतिः स्यात् ।

त्वाङ्गृहीतुं प्रयत्नं स ज्ञातवान्देवि दैत्यराट् ।
एवमुक्तोऽस्मि* देवैस्त्वां बोधयामि वरानने ॥ २८ ।
स्थिरीभूता महादेवी तं दैत्यम्प्रतिघातय ।
उक्त्वैवान्तर्हितः सद्यो नारदः स्वेच्छया ययौ ।
देवी च कन्यास्ताः सर्व्वाः सन्नद्धास्तामुवाच ह ॥ ३० ।
ततः कन्या महाभागाः सर्व्वास्ता देवीशासनात् ।
बभूवुर्घोररूपिण्यः खड्गचर्म्मधनुर्धराः ।
सङ्ग्रामहेतोः सन्तस्थु†र्दैत्यविध्वंसनाय ताः ॥ ३१ ।
तावद्दैत्यबलं सर्व्वं मुक्त्वा देवचमून्द्रुतम् ।
आययौ यत्र तद्देव्याः सन्नद्धं स्त्रीबलं महत् ॥ ३२ ।
ततस्ता युयुधुः कन्या दानवैः सह दर्पिताः ।
क्षणेन तद्बलन्ताभिश्चतुरङ्गं निपातितम् ॥ ३३ ।
शिरांसि तत्र केषाञ्चिच्छिन्नानि पतितानि च ।
अपरेषां विदार्य्योरः क्रव्यादाः पान्ति शोणितम् ॥ ३४ ।
अन्ये कबन्धभूतास्तु ननृतुर्दैत्यनायकाः ।
एवं क्षणेन ते सर्व्वे विद्रुताः पापचेतसः ॥ ३५ ।
अपरे विद्रुताः सर्व्वे यत्रासौ महिषासुरः ।
ततो हाहाकृतं सर्व्वं तथा दैत्यबलं महत् ॥ ३६ ।
एवं तदाकुलं दृष्ट्वा महिषो वाक्यमब्रवीत् ।

---

* उक्तोऽयेति (ग) ।

† सन्तस्थुरिति आर्षं, सन्तस्थिरे इति साधु ।



सेनापते किमेतद्धि बलं भग्नं समागतः । ३७ ।
ततो यज्ञहनुर्नामा दैत्यो हस्तिस्वरूपवान्
उवाच भग्नमेतद्धि कुमारीभिः समन्ततः ॥ ३८ ।
ततो दुद्राव महिषस्ताः कन्याः शुभलोचनाः ।
गदामादाय तरसा घातितुस्तास्ततोऽसुरः* ॥ ३९ ।
यत्र तिष्ठति सा देवी देवगन्धर्व्वपूजिता ।
तत्रैव सोऽसुरः प्रायाद्यत देवी व्यवस्थिता ॥ ४० ।
सा च दृष्ट्वा तमायान्तं विंशहस्ता† बभूव ह ।
धनुः खड्गं तथा शक्तिं‡ शरान् शूलं गदान्तथा ॥ ४१ ।
मुसलञ्च§ तथा चक्रं भिन्दिपालं तथैव च ।
दण्डं पाशं ध्वजञ्चैव पद्मञ्चेति च विंशतिः ॥ ४२ ।
भूत्वा विंशद्भुजा देवी सिंहमास्थाय रंगिता ।
सस्मार रुद्रं देवेशं रौद्रं संहारकारणम् ॥ ४३ ।
ततो वृषध्वजः साक्षात्तत्रैव आययौ
तया प्रणम्य विज्ञप्तः सर्व्वान्दैत्यान्जयाम्यहम् ।
त्वयि सन्निधिमात्रे तु देवदेव सनातन ॥ ४४ ।
एवमुक्त्वाऽसुरान्सर्व्वाञ्जिगाय परमेश्वरी ।
मुक्त्वा तमेकं महिषं शेषं हत्वा तमभ्ययात् ।

---

* कन्या दुद्राव वेगवानिति (ग) ।

† विंशद्भुजेति पाठं, विंशतिहस्तेति साधु । एवं परत्र विंशद्भुजेति ।

‡ धनुः शक्तिं तथा खड्गमिति (ख) ।

§ [illegible]मिति (ग) ।

यावद्देवी ततः सापि तां दृष्ट्वा सोऽपि दुद्रुवे ॥ ४५ ॥
क्वचिद्युध्यति* दैत्येन्द्रः क्वचिन्नैव पलायति ।
क्वचित्पुनर्मृधञ्चक्रे क्वचित्पुनरुपारमत् ॥ ४६ ॥
एवं वर्षसहस्राणि दश तस्य तया सह ।
दिव्यानि विगतानि स्युः† युध्यतश्चैव‡ शोभने ॥ ४७ ॥
बभ्राम सकलञ्चाजौ ब्रह्माण्डं भीतमानसम् ।
ततः कालेन महता शतशृङ्गे महागिरौ ।
पद्भ्यामाक्रम्य शूलेन निहतो दैत्यनायकः§ ॥ ४८ ॥
शिरश्चिच्छेद खड्गेन तत्र चान्तःस्थितः¶ पुमान् ।
निर्गत्य विगतः स्वर्गं देव्याः शस्त्रनिपातनात् ॥ ४९ ॥
ततो देवगणाः सर्व्वे महिषं वीक्ष्य निर्ज्जितम् ।
सब्रह्मकाः स्तुतिञ्चक्रुर्देव्याम्हृष्टेन चेतसा ॥ ५० ॥

देवा ऊचुः ।

नमो देवि महाभागे गम्भीरे भीमदर्शने ।
जयस्थे स्थितिसिद्धान्ते त्रिनेत्रे विश्वतोमुखि ॥ ५१ ॥
विद्याविद्ये जये जाप्ये महिषासुरमर्द्दिनि ।

* द्रुह्यतीति (क), (ख) ।

† बभूवुरित्यर्थे स्युरित्यार्षम् ।

‡ युध्यतस्तस्य शोभन इति (ग)

§ दैत्यसत्तम इति (ग) ।

¶ घने स्थित इति (ग) ।

सर्व्वगे सर्व्वदेवेशि विश्वरूपिणि वैष्णवि ॥ ५२ ॥
वीतशोके ध्रुवे देवि पद्मपत्त्रशुभेक्षणे ।
शुद्धसत्त्वव्रतस्थे च चण्डरूपे विभावरि ॥ ५३ ॥
ऋद्धिसिद्धिप्रदे देवि विद्येऽविद्येऽमृते शिवे ।
शाङ्करी वैष्णवी ब्राह्मी सर्व्वदेवनमस्कृते ॥ ५४ ॥
घण्टाहस्ते त्रिशूलास्त्रे महामहिषमर्द्दिनि ।
उग्ररूपे विरूपाक्षि महामायेऽमृतस्रवे ॥ ५५ ॥
सर्व्वसत्त्वहिते देवि सर्व्वसत्त्वमये ध्रुवे ।
विद्यापुराणशिल्पानां जननी भूतधारिणि ॥ ५६ ॥
सर्व्ववेदरहस्यानां सर्व्वसत्त्ववतां* शुभे ।
त्वमेव शरणं देवि विद्येऽविद्ये श्रियेऽम्बिके ॥ ५७ ॥
विरूपाक्षि तथा क्षान्तिः क्षोभितान्तर्जलेऽमले† ।
नमोऽस्तु ते महादेवि नमस्ते परमेश्वरि‡ ॥ ५८ ॥
शरणं त्वां प्रपद्यन्ते ये देवि परमेश्वरि ।
न तेषाञ्जायते किञ्चिदशुभं रणसङ्कटे ॥ ५९ ॥
यश्च व्याघ्रभये घोरे चौरराजभये तथा ।
स्तवमेनं सदा देवि पठिष्यति यतात्मवान् ॥ ६० ॥
निगडस्थोऽपि यो देवि त्वां स्मरिष्यति मानवः ।

* सत्त्वमनाशिनि (ग) ।

† अम्ब विन्ध्य इति (ग ।

‡ (ग) पुस्तके नमस्ते सर्व्वदेवानां भावनिष्ठे चण्डवले इत्यधिकाहं वर्त्तते ।

सोऽपि बन्धैर्विनिर्मुक्तः* सुसुखं वसते सुखी ॥ ६१ ।

वराह उवाच ।

एवं स्तुता तदा देवी देवैः प्रणतिपूर्व्वकम् ।
उवाच देवान् सर्व्वाणि वृणुध्वं† वरमुत्तमम् ॥ ६२ ।

देवा ऊचुः ।

देवि स्तोत्रमिदं ये हि पठिष्यन्ति तवानघे ।
सर्व्वकामसमापन्नान् कुरु देवि स नो वरः‡ ॥ ६३ ।
एवमस्त्विति तान्देवानुक्त्वा देवी परापरा ।
विससर्ज ततो देवान् स्वयं तत्रैव संस्थिता ॥ ६४ ।
एतद्द्वितीयं यो जन्म वेद देव्या धराधरे ।
स वीतशोको विरजाः पदं गच्छत्यनामयम् ॥ ६५ ।

इति वराहपुराणे त्रिशक्तिमाहात्म्ये महिषासुरवधो नाम
पञ्चनवतितमोऽध्यायः ।

* विमुक्तस्त्विति (ग) ।

† प्रणुध्वमिति (ख), वृणुर्ध्वेति (ग) ।

‡ सुनो वर इति ।

# पञ्चनवतितमोऽध्यायः ।

वराह उवाच ।

या सा नीलगिरिं याता तपसे धृतमानसा ।
रौद्री तमोद्भवा शक्तिस्तस्याः शृणु धरे व्रतम् ॥ १ ॥
तपः कृत्वा चिरं कालं पालयाम्यखिलं* जगत् ।
एवमुद्दिश्य पञ्चाग्निं साधयामास भामिनी ॥ २ ॥
तस्याः कालान्तरे देव्यास्तपन्त्यास्तपः† उत्तमम् ।
रुरुर्नाम महातेजा ब्रह्मदत्तवरोऽसुरः ॥ ३ ॥
समुद्रमध्ये रत्नाढ्यं पुरमस्ति महावनम्‡ ।
तत्र राजा स दैत्येन्द्रः सर्व्वदेवभयङ्करः ॥ ४ ॥
अनेकशतसाहस्रकोटिकोटिशतोत्तरैः ।
असुरैरन्वितः श्रीमान्द्वितीयो नमुचिर्यथा ॥ ५ ॥
कालेन महता चासौ§ लोकपालपुराण्यथ ।
जिगीषुः सैन्यसंवीतो देवैर्युद्धमरोचयत् ॥ ६ ॥

उत्तिष्ठतस्तस्य महासुरस्य
समुद्रतोयं वव्रधेऽतिमात्रम् ।

---

* चिरं कालमिति (ग) ।

† [illegible] इति साधु ।

‡ महावनमिति (ग) ।

§ सोऽसौ इति (ग) ।

अनेकनक्रग्राहमीनजुष्ट-*
माप्लावयत्पर्व्वतसानुदेशान्† ॥ ७ ।
अन्तःस्थितानेकसुरारिसङ्घा-
द्विचित्रवर्म्मायुधचित्रशोभम् ।
भीमं बलं वर्म्मितचारुयोधं
विनिर्ययौ सिन्धुजलाद्विशालात्‡ ॥ ८ ।
तत्र द्विपा दैत्यवरैरुपेताः
समानघण्टायुतकिङ्किणीकाः ।
विनिर्ययुः स्वाकृतिभीषणाश्च
समत्वमुच्चैः खलु दर्शयन्तः ॥ ९ ।
अश्वास्तथा काञ्चनपीठनद्धा
रोहैस्तु युक्ताः सितचामरैश्च§ ।
व्यवस्थितास्ते सममेव तूर्णं
विनिर्ययुर्लक्षशः कोटिशश्च ॥ १० ।
रथा रविस्यन्दनतुल्यवेगाः
सुचक्रदण्डाक्षत्रिवेणुयुक्ताः¶ ।

* ग्राहजालजुष्टमिति (ग) ।
† आपातयत्पर्व्वतचारुदेशानिति (क), (ख) ।
‡ विशालमिति (ग) ।
§ रोहितमश्वाः समभा जलान्तरिति (ग) ।
¶ त्रियवेणुयुक्ता इति (ख) ।

सुग्रस्तयन्ता: परि*पीड़िताङ्गा-
श्चलन्त्यमक्ता:† त्वरितं विग्रस्ता: ॥ ११ ।
तथैव योधा: स्थगितेतरेतरा-
स्तितीर्षवो ये वरतूणपाणय: ।
पदे पदे लब्धजया: प्रहारिणो
विरेजुरुच्चैरसुरानुगा भृग्रम् ॥ १२ ।
देवेषु चैव भग्नेषु विनिर्गत्य जलात्तत: ।
चतुरङ्गबलोपेत: प्रायादिन्द्रपुरं प्रति ॥ १३ ।
युयोध च सुरै: सार्द्धं रुरुदैत्यपतिस्तथा ।
मुद्गरैर्मुग्रलैर्घोरै:‡ ग्ररैर्दण्डायुधैस्तथा ।
जघ्नुर्दैत्या:§ सुरान् संख्ये सुराश्चैव तथासुरान् ॥ १४ ।
एवं चणमथो युद्धा तदा देवा: सवासवा: ।
असुरैर्निर्ज्जिता: सद्यो दुद्रुवुर्विमुखा भृग्रम् ॥ १५ ।
देवेषु चैवभग्नेषु विद्रुतेषु विग्रेषत: ।
असुर: सर्व्वदेवानामन्वधावत वीर्य्यवान् ॥ १६ ।
ततोदेवगणा: सर्व्वं द्रवन्तो भयविह्वला: ।
नीलं गिरिवरं जग्मुर्यत्र देवी व्यवस्थिता ॥ १७ ।

* सुग्रस्तपत्रीपरीति (ग) ।

† चलत्पताका इति (ख), (ग) ।

‡ ग्रूलैरिति (ग) ।

§ ययुर्दैत्या इति (ग) ।



रौद्री तपोरता देवी तामसी शक्तिरुत्तमा ।
संहारकारिणी देवी कालरात्रीति तां विदुः ॥ १८ ॥
सा दृष्ट्वा तांस्तदा देवान् भयत्रस्तान्विचेतसः ।
मा भैष्टेत्युच्चकैर्देवी तानुवाच सुरोत्तमान् ॥ १९ ॥

देव्युवाच ।

किमियं व्याकुला देवा गतिर्व उपलक्ष्यते ।
कथयध्वं द्रुतन्देवाः सर्व्वथा भयकारणम्* ॥ २० ॥

देवा ऊचुः ।

अयमायाति दैत्येन्द्रो रुरुर्भीमपराक्रमः ।
एतस्य† भीतांस्त्रायस्व त्वं देवान् परमेश्वरि ॥ २१ ॥
एवमुक्ता तदा देवैर्देवी भीमपराक्रमा ।
जहास परया प्रीत्या देवानां पुरतः शुभा ॥ २२ ॥
तस्या हसन्त्या वक्त्रात्तु बह्व्योदेव्योविनिर्ययुः ।
याभिर्विश्वमिदं व्याप्तं विकृताभिरनेकशः ॥ २३ ॥
पाशाङ्कुशधराः सर्व्वाः सर्व्वाः पीनपयोधराः ।
सर्व्वाः शूलधरा भीमाः सर्व्वाश्चापधराः शुभाः ॥ २४ ॥
ताः सर्व्वाः कोटिशो देव्यस्तां देवीं वेष्ट्य‡ संस्थिताः ।
युयुधुर्दानवैः सार्द्धं बद्धतूणा महाबलाः ॥ २५ ॥

---

* भयकारिणमिति (ख) ।

† एतस्येति विवक्षायां षष्ठी, एतस्मादिति साधु ।

‡ वेष्ट्येति आर्षं, वेष्टयित्वेति साधु ।

क्षणेन दानवबलं तत्सर्व्वं निहतन्तु तैः ।
देवाश्च सर्व्वे सम्भ्रमा युयुधुर्दानवं बलम् ॥ २६ ।
कालरात्र्या बलञ्चैव यच्च देवबलं महत् ।
तत्सर्व्वन्दानवबलमनयद्यमसादनम् ॥ २७ ।
एक एव महादैत्यो रुरुस्तस्थौ महामृधे ।
स च* मायां महारौद्रीं रौरवीं विससर्ज्ज ह ॥ २८ ।
सा माया ववृधे भीमा सर्व्वदेवप्रमोहिनी ।
तया विमोहिता देवाः सर्व्वे निद्रान्तु लेभिरे† ॥ २९ ।
देवी च त्रिशिखेनाजौ तं दैत्यं समताड़यत् ॥ ३० ।
तया तु ताड़ितस्यास्य दैत्यस्य शुभलोचने ।
चर्म्ममुण्डे उभे सम्यक् पृथग्भूते बभुवतुः ॥ ३१ ।
रुरोस्तु दानवेन्द्रस्य चर्म्ममुण्डे क्षणाद्यतः ।
अपहृत्याहरद्देवी चामुण्डा तेन साऽभवत् ॥ ३२ ।
सर्व्वभूतमहारौद्री या देवी परमेश्वरी ।
संहारिणी तु या चैव कालरात्रिः प्रकीर्त्तिता ॥ ३३ ।
तस्या ह्यनुचरा देव्यो वाह्यसंख्यातकोटयः ।
तास्तान्देवीं महाभागां परिवार्य्य व्यवस्थिताः ।
याचयामासुरव्यग्रास्तास्तान्देवीं बुभुक्षिताः ॥ ३४ ।
वयं देवि क्षुधार्त्ताः स्मो देहि नो भोजनं शुभे ।

---

* स्वाचेति (ग) ।

† सर्वो निद्रान्तु भेजिरे इति (ग) ।

एवमुक्ता तदा देवी दध्यौ तासान्तु भोजनम्॥ ३५।
न चाध्यगच्छत्* यदा तासां भोजनमन्तिकात्।
ततो दध्यौ महादेवं रुद्रं पशुपतिं विभुम्॥ ३६।
सोऽपि ध्यानात्समुत्तस्थौ परमात्मा त्रिलोचनः।
उवाच च द्रुतं देवीं किन्ते कार्य्यं विवक्षितम्।
ब्रूहि देवि वरारोहे यत्ते मनसि वर्त्तते॥ ३७।

देव्युवाच।

भक्ष्यार्थमासां देवेश किञ्चिद्दातुमिहार्हसि।
बलात्कुर्व्वन्ति मामेता भक्षार्थिन्यो महाबलाः।
अन्यथा मामपि बलाद्भक्षयिष्यन्ति ताः प्रभो॥ ३८।

रुद्र उवाच।

एतासां शृणु देवेशि भक्ष्यमेकं मयोदितम्।
कथ्यमानं वरारोहे कालरात्रि† महाप्रभे॥ ३९।
या स्त्री सगर्भा देवेशि अन्यस्त्रीपरिधानकम्।
परिधत्ते स्पृशेच्चापि‡ पुरुषस्य विशेषतः।
स भागोऽस्तु महाभागे कासाञ्चित्पृथिवीतले॥ ४०।
अन्यास्छिद्रेषु बाऽग्नानां§ गृहीत्वा तत्र वै बलिम्।

* नाध्यगच्छद्यदेति (ग)।

† कालरात्रीति (ग)।

‡ स्पृशेच्चापीति (ग)।

§ बालानामिति (क), (ख), भवाऽपत्यानीत्युक्तं, सामान्यार्थे नपुंसकम्।



लब्ध्वा भवन्तु सुप्रीता अपि वर्षशतान्यपि ॥ ४१ ॥
अन्याः सूतिगृहे च्छिद्रं गृह्णीयुस्तत्र पूजिताः ।
निवसिष्यन्ति* देवेशि† तथान्या जातहारिकाः ॥ ४२ ॥
गृहे चैत्रे तड़ागेषु वाप्युद्यानेषु चैव हि ।
अन्यचित्ता‡ रुदन्त्यो याः स्त्रियस्तिष्ठन्ति नित्यशः ।
तासां शरीराण्याविश्य काश्चि§त्तृप्तिमवाप्स्यथ ॥ ४३ ॥
एवमुक्त्वा तदा देवीं स्वयं रुद्रः प्रतापवान् ।
दृष्ट्वा रुरुञ्च सबलमसुरेन्द्रं निपातितम् ।
स्तुतिञ्चकार भगवान् स्वयं देवस्त्रिलोचनः ॥ ४४ ॥

रुद्र उवाच ।

जयस्व देवि चामुण्डे जय भूतापहारिणि ।
जय सर्व्वगते देवि कालरात्रि¶ नमोऽस्तु ते‖ ॥ ४५ ॥
विश्वमूर्त्ते शुभे शुद्धे विरूपाक्षि त्रिलोचने ।
भीमरूपे शिवे वेद्ये महामाये महोदये ॥ ४६ ॥
मनोजवे** जये जृम्भे भीमाक्षि क्षुभितक्षये ।

---

* निवसिष्यन्तीति आर्षं, निवत्स्यन्तीति साधु ।
† देशं चेति (ख) ।
‡ अन्यचिन्ता इति (ख) ।
§ काश्चिदिति (ग)
¶ कालरात्रीति (ग) ।
‖ मार्कण्डेये देवीमाहात्म्येऽपि श्लोकोऽयं वर्त्तते ।
** महाजवे इति (ख) ।

महामारि विचित्राङ्गे जय नृत्यप्रिये शुभे ॥ ४७ ।
विकराले* महाकालि कालिके पापहारिणि ।
पाशहस्ते दण्डहस्ते भीमरूपे भयानके ॥ ४८ ।
चामुण्डे ज्वलमानास्ये तीक्ष्णदंष्ट्रे महाबले† ।
शवयानस्थिते देवि प्रेतासनगते शिवे ॥ ४९ ।
भीमाक्षि भीषणे देवि सर्व्वभूतभयङ्करि ।
कराले विकराले च महाकाले करालिनि ।
काली कराली विक्रान्ता कालरात्रि नमोऽस्तु ते ॥ ५० ।
इति स्तुता तदा देवी रुद्रेण परमेष्ठिना ।
तुतोष परमा देवी वाक्यञ्चेदमुवाच ह ।
वरं वृणीष्व देवेश यत्ते मनसि वर्त्तते ॥ ५१ ।

रुद्र उवाच ।

स्तोत्रेणानेन ये देवि त्वां स्तुवन्ति वरानने ।
तेषान्त्वं वरदा देवि भव सर्व्वगता सती ॥ ५२ ।
यश्चेमन्त्रिःप्रकारन्तु देवि भक्त्या समन्वितः ।
स पुत्रपौत्रपशुमान् समृद्धिमुपगच्छति ॥ ५३ ।
यश्चेमं शृणुयाद्भक्त्या त्रिशक्त्यास्तु समुद्भवम् ।
सर्व्वपापविनिर्मुक्तो पदङ्गच्छत्यनामयम् ॥ ५४ ।

* विकरालीति (ग) ।

† महाशये इति (क) ।

एवं स्तुत्वा भवो* देवीं चामुण्डाञ्च सुरेश्वरीम्† ।
क्षणादन्तर्हितो देवस्ते च देवा दिवं ययुः ॥ ५५ ॥
य एतां वेद वै देव्या उत्पत्तिं त्रिविधां वराम्‡ ।
स कर्म्मपाशनिर्मुक्तः§ परं निर्व्वाणमृच्छति ॥ ५६ ॥
भ्रष्टराज्यो यदा राजा नवम्यान्नियतः शुचिः ।
अष्टम्याञ्च चतुर्द्दश्यामुपवासी नरोत्तमः ।
संवत्सरेण लभते राज्यं निष्कण्टकं नृपः ॥ ५७ ॥
एषा त्रिशक्तिरुद्दिष्टा नयसिद्धान्तगामिनी ।
एषा श्वेता¶परा सृष्टिः सात्त्विकी ब्रह्मसंस्थिता ॥ ५८ ॥
एषैव रक्ता रजसि वैष्णवी परिकीर्त्तिता ।
एषैव कृष्णा तमसि रौद्री देवी प्रकीर्त्तिता ॥ ५९ ॥
परमात्मा यथा देव एक एव त्रिधा स्थितः ।
प्रयोजनवशाच्छक्तिरेकैव त्रिविधाऽभवत् ॥ ६० ॥
य एतं शृणुयात्सर्गं त्रिशक्त्याः परमं शिवम् ।
सर्व्वपापविनिर्मुक्तः परन्निर्व्वाणमाप्नुयात् ॥ ६१ ॥
यश्चेमं शृणुयान्नित्यं नवम्यां नियतः स्थितः ।

* तत इति (क), (ख) ।

† परमेश्वरीमिति (ख) ।

‡ धरे इति (ग) ।

§ सर्व्वपापविनिर्मुक्त इति (ख) ।

¶ एषा चिन्नेति (ग) ।

स राज्यमतुलं लेभे* भयेभ्यश्च प्रमुच्यते ॥ ६२ ।
यस्येदं लिखितं गेहे सदा तिष्ठति धारितम्† ।
न तस्याग्निभयं घोरं सर्पचौरादिजं भवेत् ॥ ६३ ।
यश्चेमं पूजयेद्भक्त्या पुस्तकेऽपि स्थितं बुधः ।
तेन यष्टं‡ भवेत्सर्व्वं त्रैलोक्यं सचराचरम् ॥ ६४ ।
जायन्ते पशवः पुत्रा धनं धान्यं वराः स्त्रियः ।
रत्नान्यश्वास्तथा गावो दासा दास्यो भवन्ति हि§ ।
यस्येदं तिष्ठते¶ गेहे तस्य सम्पद्भवेद्ध्रुवम् ॥ ६५ ।

वराह उवाच ।

एतद्देव‖ रहस्यन्ते कीर्त्तितं भूतधारिणि ।
रुद्रस्य खलु माहात्म्यं सकलं कीर्त्तितं मया ॥ ६६ ।
नवकोट्यस्तु चामुण्डा भेदभिन्ना व्यवस्थिताः ।
या रौद्री तामसी शक्तिः सा चामुण्डा प्रकीर्त्तिता ॥ ६७ ।
अष्टादश तथा कोट्योवैष्णव्या भेद उच्यते ।
या विष्णोः** राजसी शक्तिः पालनी चैव वैष्णवी ।

* लेभे इत्यार्षं, लभेतेति साधु ।

† धारिणीति (ग) ।

‡ इष्टमिति साधु ।

§ भवन्त्यपीति (ख) । रत्नान्यश्वगजा भृत्या यानान्याशु भवन्त्विति (ग) ।

¶ तिष्ठतीति साधु ।

‖ एतद्देवीति (ग) ।

** या सात्त्विति (ग) ।

या ब्रह्मशक्तिः सत्त्वस्था सा अनन्ता प्रकीर्त्तिता* ॥ ६८ ।
एतासां सर्व्वभेदेषु पृथगेकैकशो धरे† ।
सर्व्वासां भगवान्रुद्रः सर्व्वगश्च पतिर्भवेत् ॥ ६९ ।
यावन्त्यस्या महाशक्त्यास्तावद्रूपाणि शङ्करः ।
कृतवांस्ताश्च‡ भजते पतिरूपेण सर्व्वदा ॥ ७० ।
यश्चाराधयते तस्य रुद्रस्तुष्टो भविष्यति§ ।
सिध्यन्ति तस्य कामाश्च मनसा चिन्तिता अपि¶ ॥ ७१ ।

इति वराहपुराणे त्रिशक्तिमाहात्म्यं नाम षण्णवतितमोऽध्यायः ।

## सप्तनवतितमोऽध्यायः ।

वराह उवाच ।

अथ रुद्रव्रतोत्पत्तिं शृणु देवि वरानने ।
येन व्रतेन पापेभ्यो* मुच्यते नात्र संशयः ॥ १ ।

---

* अनन्तास्तु प्रकीर्त्तिताः इति (ग) ।

† साधने इति (ख) ।

‡ कृत्तिवासाश्चेति (ग) ।

§ यश्चाराधयेत्तान्तु तस्य रुद्रो भविष्यतीति (ग) ।

¶ सिध्यन्ति ताश्च सदा देव्यो मन्त्रिणो नात्र संशय इति (ग) ।

---

* पापानामिति (ग) ।

ब्रह्मणा तु यदा सृष्टः पूर्व्वं रुद्रो* वरानने।
तृतीये जन्मनि विभुः पिङ्गाक्षो नीललोहितः॥ २॥
तदा कौतूहलाद्ब्रह्मा स्कन्धे तं जगृहे प्रभुः।
स्कन्धारूढ़स्तदा रुद्रो ब्रह्मणोऽव्यक्तजन्मनः॥ ३॥
जन्मतश्च शिरो यच्च पञ्चमन्तज्जगाद ह।
मन्त्रमाथर्व्वणं रुद्रो† येन सद्यः प्रमुच्यते॥ ४॥
कपालिन् रुद्र बभ्रोऽथ भव कैरात सुव्रत।
पाहि विश्वं विशालाक्ष कुमार वरविक्रम॥ ५॥
एवमुक्तस्तदा रुद्रो भविष्यैर्नामभिर्भवः।
कपालशब्दात्कुपितस्तच्छिरो विचकर्त्त ह॥ ६॥
वामाङ्गुष्ठनखेनाद्यं प्राजापत्यं विचक्षणः।
तन्निकृत्तं शिरो धात्रि हस्तलग्नं बभूव ह॥ ७॥
तस्मिन्निकृत्ते‡ शिरसि प्राजापत्यं त्रिलोचनः।
ब्रह्माणं प्रयतोभूत्वा रुद्रो वचनमब्रवीत्॥ ८॥

रुद्र उवाच।

कथं कपालं मे देव करात्पतति सुव्रत।
नश्यते§ च कथं पापं ममैतद्वद सुव्रत॥ ९॥

* ब्रह्मणा तु यदा रुद्र पूर्वं सृष्ट इति (ग)।
† धात्रीति (ग)।
‡ तस्मिन् छिन्नेऽथेति (ग)।
§ नश्यतीति साधु।

ब्रह्मोवाच ।

इदमेव व्रतं देव चर कापालिकं विभो ।
समयाचारसंयुक्तं कृत्वा स्वेनैव तेजसा ॥ १० ।
एवमुक्तस्तदा रुद्रो ब्रह्मणाऽव्यक्तमूर्त्तिना ।
आजगाम गिरिश्रेष्ठं माहेन्द्रं पापनाशनम् ॥ ११ ।
तत्र स्थित्वा महादेवस्तच्छिरो विभिदे त्रिधा ।
तस्मिन् भिन्ने पृथक्केशान् गृहीत्वा भगवान् भवः ॥ १२ ।
यज्ञोपवीतं केशन्तु महास्थाचमणींस्तथा* ।
कपालशकलञ्चैकमसृक्पूर्णं करे स्थितम् ॥ १३ ।
अपरं खण्डशः कृत्वा जटाजूटे न्यवेशयत् ।
एवं कृत्वा महादेवो बभ्रामेमां वसुन्धराम् ॥ १४ ।
सप्तद्वीपवतीं पुण्यां मज्जंस्तीर्थेषु नित्यशः ।
समुद्रे प्रथमं स्नात्वा ततो गङ्गां व्यगाहत ॥ १५ ।
सरस्वतीं ततो गत्वा यमुनासङ्गमन्ततः ।
शतद्रुञ्च ततो गत्वा देविकाञ्च महानदीम् ॥ १६ ।
वितस्तां चन्द्रभागाञ्च† गोमतीं सिन्धुमेव च ।
तुङ्गभद्रां तथा गोदामुत्तरे गण्डकीं तथा‡ ॥ १७ ।

* महदस्थिमणींस्तथेति (क), (ख) ।

† (ख) पुस्तकेऽतः परं सार्द्धश्लोकद्वयं नास्ति ।

‡ एतदर्द्धं (ग) पुस्तके नास्ति ।

नेपालञ्च* ततो गत्वा ततो† रुद्रमहालयम् ।
ततो दारुवनं गत्वा केदारगमनम्पुनः ॥ १८ ।
भद्रेश्वरं‡ ततो गत्वा गयां पुण्यमथाऽगमत् ।
तत्र फल्गु§कृतस्नानः पितॄन् सन्तर्प्य यत्नतः ॥ १९ ।
एवं¶ वेगेन सकलं ब्रह्माण्डं भूतधारिणि ।
बभ्राम सर्व्वदेवेशः षष्ठेऽब्दे तस्य चापतत् ।
परिधानन्तु कौपीनं नग्नः कापालिकोऽभवत्|| ॥ २० ।
पुनरब्दद्वयम्भ्रान्तस्तीर्थे तीर्थे हरः स्वयम् ।
कपालन्त्यक्तुकामः सन्तद्धस्तात्तु नापतत्** ॥ २१ ।

* ऊर्द्धंगश्चेति (ग) ।

† यत इति (ग) ।

‡ महेश्वरमिति (ग) ।

§ गयां गत्वेति (ग) ।

¶ पश्चादिति (ग) ।

|| नग्नः कोपोऽभवत्तदेति (ख) ।
भ्रमतः परिधानन्तु कौपीनं रसनागतम् ।
तस्मिंस्तु पतिते देवि नग्नः कापालिकोऽभवदिति ॥ (ग)

** पुनरब्दद्वयं भ्रान्तो ब्रह्माण्डं तीर्थकारणात् ।
तीर्थे तीर्थे हरः स्नात्वा कपालं त्यक्तुमिच्छति ।
त्यजतोऽपि न तद्धस्ताच्च्यवते भूतधारिणीति (ग) ॥

ततोऽब्दमेकं बभ्राम हिमवत्पर्व्वते शुभे* ।
गत्वा हरिहरक्षेत्रं स्नात्वा देवाङ्गदे तथा ।
सोमेश्वरं समभ्यर्च्च्य गतोऽसौ चक्रतीर्थकम् ॥ २२ ।
तत्र स्नात्वा तथा नत्वा त्रिजलेश्वरसंस्थितम् ।
अयोध्यायां तथा गत्वा वाराणस्यां ततोऽगमत् ॥ २३ ।
द्वादशाब्दैर्गतस्तत्र: सीमाचारिगणैस्तथा ।
बलात्कारेण तद्धस्तात्कपालं पातितं भुवि ।
कपालमोचनं तीर्थं ततो जातमघापहम् ॥ २४ ।
गङ्गाम्भसि तत: स्नाप्य† विश्वेशम्पूज्य भक्तित: ।
रुद्रो विशुद्धिमापन्नो मुक्त: स ब्रह्महत्यया ॥ २५ ।
कपालमोचनं नाम तीर्थं त्रैलोक्यविश्रुतम् ।

* इत: षड्विंशश्लोकपर्य्यन्तं (ग) पुस्तकेऽन्यथैव पाठ: । यथा-
ततोऽन्यद्वर्षमेकन्तु वर्त्तते हिमवद्गिरौ ।
भ्रमतो विभ्रमो जातस्त्रिनेत्रस्य महात्मन: ॥
पुनरब्दद्वयञ्चान्यत्परमेष्ठी वृषाकपि: ।
बभ्राम रुद्रस्तीर्थानि पुराणानि समन्तत: ॥
कस्यचित्त्वथ कालस्य द्वादशेऽब्दे धराधरे ।
वाराणसीं गतो देवस्तत्र स्नानमथारभत ॥
गङ्गायां देवदेवेशो यावन्मज्जति भामिनि ।
भवत्कपालं पतितं हस्ताग्राद्ब्रह्मण: पुरा ॥
कपालमोचनं नाम ततस्तीर्थमनुत्तमम् ।
† पृथिव्यां ख्यातिमगमद्वाराणस्यां धराधरे ॥
‡ स्नापयित्वेति साधु ।

यत्राप्लुतो नरो भक्त्या ब्रह्महा तु विशुध्यति ॥ २६ ।
कपालं पतितं दृष्ट्वा रुद्रहस्ताच्चतुर्मुखः ।
आगतो देवसहितो वाक्यञ्चेदमुवाच ह ॥ २७ ।

ब्रह्मोवाच ।

भव रुद्र विरूपाक्ष लोकमार्गव्यवस्थित:* ।
व्रतानि कुरुते देव त्वत्कृतानि हि पुत्रक ।
स त्वत्प्रसादाद्देवेश ब्रह्महापि विशुध्यति ॥ २८ ।
यद्व्रतं नग्नकापालं यद्बाभ्रव्यन्त्वया कृतम् ।
यत्कृतं शुद्धशैवञ्च तत्तन्नाम्ना भविष्यति ॥ २९ ।
मां पुरस्कृत्य देवस्त्वं पूज्यसे यैर्विधानतः ।
तेषां शास्त्राणि सर्व्वाणि शास्त्रं पाशुपतं तथा ।

* इतोऽपि त्रिंशच्छ्लोकपर्य्यन्तं (ग) पुस्तकेऽन्यथा पाठो दृश्यते । यथा-
रुद्र भव विरूपाक्ष लोकमार्गे व्यवस्थित: ।
व्रतानि कुरुते देव त्वच्चीर्णानि महाप्रभ ॥
कपालं गृह्य यद्भ्रान्तं कपालव्यग्रपाणिना ।
तद्व्रतं नग्नकापालं भविष्यति नृणां भुवि ॥
यच्च ते बभ्रुता जाता हिमवत्यचलोत्तमे ।
अमतस्तद्व्रतं देव बाभ्रव्यन्तद्भविष्यति ॥
यच्चेदानीं विशुद्धस्य तीर्थेऽस्मिन् देवशुद्धता ।
तच्छुद्धशैवं भवतु व्रतं ते पापनाशनम् ॥
ये पुरस्कृत्य देवास्त्वां पूज्यन्ते विविधान्विताः ।
शास्त्राणि तानि सर्व्वेषां कथयिष्यामि गाथया ॥

कथयस्व महादेव सविधानं समासतः ॥ ३० ।
एवमुक्तस्ततो रुद्रो ब्रह्मणाऽव्यक्तमूर्त्तिना ।
देवैर्ज्जयेति सन्तुष्टः कैलासनिलयं ययौ ॥ ३१ ।
ब्रह्मा अपि सुरैः सार्द्धं गतः स्वर्लोकमुत्तमम् ।
देवा अपि ययुः स्वञ्च स्वस्थानं स्वं यथागतम् ॥ ३२ ।
एतद्रुद्रस्य माहात्म्यं मया ते परिकीर्त्तितम् ।
चरितं यच्च देवस्य वित्तं समभवद्भुवि ॥ ३३ ।

इति वराहपुराणे रुद्रमाहात्म्यं नाम सप्तनवतितमोऽध्यायः ।

# अष्टनवतितमोऽध्यायः ।

धरण्युवाच ।

योऽसौ सत्यतपा नाम लुब्धो भूत्वा द्विजो बभौ* ।
येनारुणिर्व्याघ्रभयाद्रक्षितो यः स्वशक्तितः ॥ १ ।
दुर्वासाः संस्तुतार्थश्च हिमवन्तं नगं ययौ ।
तस्योपरि महच्चित्रं भवतीति त्वयेरितम् ।
कीदृशं तन्ममाचक्ष्व महत्कौतूहलं विभो ॥ २ ।

* बभूवार्थे बभाविति प्रयोगः । दिवौ भुवीति क्वचित् पाठः ।

वराह उवाच ।

स हि सत्यतपाः पूर्व्वं भृगुवंशोद्भवोद्विजः ।
दस्युसंसर्गसम्भूतो दस्युवत्समजायत ॥ ३ ।
ततः कालेन महता ऋषिसङ्गात्पुनर्द्विजः ।
बभौ दुर्व्वाससा सम्यग्बोधितश्च विशेषतः ॥ ४ ।
हिमाद्रेरुत्तरे पादे पुष्पभद्रा नदी शुभा ।
तस्यास्तीरे शिला दिव्या नाम्ना चित्रशिला धरे ॥ ५ ।
न्यग्रोधश्च महांस्तत्र नाम्ना भद्रो महावटः ।
तत्र सत्यतपाः स्थित्वा तपः कुर्वन्महातपाः ॥ ६ ।
स कदाचित्कुठारेण चकर्त्त समिधः किल ।
चिच्छेद अङ्गुलीमेकां वामतर्जनिकां मुनिः ॥ ७ ।
छिन्नायामङ्गुलौ तस्य भस्मचूर्णं भवत्किल* ।
न लोहितं न मांसन्तु न मज्जा तत्र दृश्यते ॥ ८ ।
अङ्गुली सन्धिता तेन† पूर्व्ववच्चाभवत्कृते ॥ ९ ।
तस्मिन् भद्रवटे चैकं मिथुनं किन्नरं स्थितम् ।
रात्रौ सुप्तमृषेस्तस्य दृष्ट्वा तन्महदद्भुतम् ।
प्रभाते विमले प्राप्तमिन्द्रलोकमिति स्मृतिः ॥ १० ।
अथेन्द्रेण सुराः सर्व्वे यक्षगन्धर्वकिन्नरैः‡ ।

* (ग) पुस्तके श्लोकस्यास्य परार्द्धं परश्लोकस्य पूर्व्वार्द्धञ्च न स्तः ।

† अङ्गुलीसविधानेनेति (ग) ।

‡ सहार्थे तृतीया । किन्नरा इति (ग) ।

पृष्टाः किञ्चिदिहाश्चर्य्यमपूर्व्वं कथ्यतामिति ॥ ११ ।
तत्र रुद्रसरस्तीरे यदेतन्मिथुनं शुभम् ।
स्थितं किन्नरयोस्तच्च वाक्यञ्चेदमुवाच ह ॥ १२ ।
दृष्टन्तु महदाश्चर्य्यं पुष्पभद्रातटे शुभे ।
यदेतत्सत्यतपसः समवोचत्ततः शुभे* ॥ १३ ।
स्तवणं भक्षनञ्चैव श्रुतं सर्व्वं शशंस ह ।
तच्छ्रुत्वा सहसा शक्रो विस्मितो विष्णुमब्रवीत् ॥ १४ ।
आगच्छ विष्णो गच्छामो हिमवत्पार्श्वमुत्तमम् ।
तत्राश्चर्य्यमपूर्व्वं मे कथितं किन्नरेण ह ॥ १५ ।
एवमुक्तस्ततो विष्णुर्वाराहं रूपमग्रहीत् ।
मृगयुश्च तथैवेन्द्रो जग्मतुस्तमृषिं प्रति ॥ १६ ।
विष्णुर्वाराहरूपेण ऋषिदृष्टिपथे स्थितः ।
भूत्वा दृश्योऽप्यदृश्योऽभूत्पुनरेव च दृश्यते ॥ १७ ।
तावदिन्द्रो धनुष्पाणिस्तीक्ष्णसायकभृग्वने† ।
आगत्य सत्यतपसमृषिमेनमुवाच ह ॥ १८ ।
भगवन्निह दृष्टस्ते वराहः पृथुलो महान् ।
येन तं हन्मि भृत्यानां पोषणाय महामुने ॥ १९ ।

* दृष्टं किञ्चिदिहाश्चर्य्यं दृष्टिन्तु हिमवद्गिरौ ।
पुष्पभद्रानदीतीरे महदाश्चर्य्यमुत्तमम् ।
यदेतत्सत्यतपसः समवोचत्ततः शुभे ॥ इति (ग)

† स्वयमिति (ग) ।

एवमुक्तोमुनिस्तेन चिन्तयामास तत्क्षणात् ।
यदि तं दर्शयाम्यस्मै वराहं हन्यते तदा ।
नो चेत्कुटुम्बः क्षुधया सीदत्यस्य न संशयः ॥ २० ।
जायापुत्रसमायुक्तो लुब्धकोऽयं क्षुधान्वितः ।
सशल्यश्च वराहोऽयं ममाश्रममुपागतः ॥ २१ ।
एवं गते तु किं कार्य्यमथासौ चिन्तयन् प्रभुः* ।
नाध्यगच्छत बुद्धिञ्च क्षणात्तस्य व्यजायत ॥ २२ ।

दृष्टं चक्षुर्निहितं जङ्गमेषु
जिह्वा वक्तुं मृगयौ तद्विसृष्टम् ।
द्रष्टुं चक्षुर्नास्ति जिह्वेह वक्तुं
जिह्वायाः स्यात्तत्त्वतोऽस्तीह चक्षुः ॥ २३ ।
एवं श्रुत्वा द्वावपि तस्य तुष्टौ
इन्द्राविष्णू दर्शयन्तौ स्वमूर्त्तिम् ।
वाक्यं चेदमूचतुर्ब्रूहि नौ तं
तुष्टौ धन्यं वरमेकं वदस्व
तच्छ्रुत्वाऽसौ सत्यतपा उवाच ॥ २४ ।
न चातिरिक्तोऽस्ति वरः पृथिव्याम् ।
यद्दृष्टौ मे पुरतो देवदेवा-
वलं वरेणापि कृतार्थतासीत् ॥ २५ ।
तथापीदं ये सदा पर्व्वकाले

---

* मुनिरिति (ग) ।

विप्रा विप्रांश्चार्चयन्तीह भक्त्या ।
तेषां पापं नश्यतां* मासमेकं
यत्सञ्चितं त्वेष एको वरोऽस्तु ॥ २६ ।
मुक्तिञ्चाहं व्रजामीति द्वितीयोऽस्तु वरो मम ॥ २७ ।
तथेत्युक्त्वा तु तौ देवौ दत्त्वा तस्य वरं शुभम् ।
अदर्शनं गतौ देवौ सोऽपि तत्र व्यवस्थितः ।
लब्ध्वा वरं सत्यतपा ब्रह्मभूतोऽभवद्धृदि ॥ २८ ।
यावदास्ते शुभे देशे कृतकृत्यो महामुनिः ।
तावत्तस्य गुरुस्तत्र आरुणिः समदृश्यत ।
पृथ्वीं प्रदक्षिणीकृत्य तीर्थहेतोर्विचक्षणः ॥ २९ ।
तेन चासौ महाभक्त्या पूजितो मुनिपुङ्गवः ।
पाद्याचमनगोदानैः कृतासनपरिग्रहः ॥ ३० ।
ज्ञात्वा स शिष्यं सिद्धन्तु तपसा दग्धकिल्बिषम् ।
उवाच विनयापन्नं प्राञ्जलिं पुरतः स्थितम् ॥ ३१ ।

आरुणिरुवाच ।

पुत्र सिद्धोऽसि तपसा ब्रह्मभूतोऽसि सुव्रत ।
इदानीमात्मना सार्द्धं मुक्तिकालो मतोऽस्ति ते ॥ ३२ ।
उत्तिष्ठ गम्यतां पुत्र मया सार्द्धं परं पदम् ।
यद्गत्वा न पुनर्जन्म भवतीति न संशयः ॥ ३३ ।
एवमुक्त्वा तु तौ सिद्धौ उभौ सत्यतपारुणी ।

* नश्यतामित्यार्षं, नश्यत्विति साधु ।

ध्यात्वा नारायणं देवं तद्देहे तौ लयं गतौ* ॥ ३४ ।
यश्चापि शृणुयात्पादं पर्व्वाध्यायं सविस्तरम् ।
श्रावयेद्वापि स नरो गतिमिष्टामवाप्नुयात् ॥ ३५ ।

इति वराहपुराणे पर्व्वाध्यायो नाम अष्टनवतितमोऽध्यायः ।



## नवनवतितमोऽध्यायः ।

धरण्युवाच ।

या सा माया शरीरात्तु ब्रह्मणोऽव्यक्तजन्मनः ।
गायत्र्यष्टभुजा भूत्वा वैत्रासुर*मयोधयत् ॥ १ ।
सैव नन्दाभवद्देवी देवकार्य्यचिकीर्षया ।
महिषाख्यासुरवधं कुर्व्वती ब्रह्मणेरिता† ।
वैष्णव्याख्या ततो देव कथमेतद्वि शंस मे ॥ २ ।

वराह उवाच ।

इयं जगद्धिता देवी गङ्गा शङ्करसुप्रिया ।

* तदर्च्चौ दिवं गताविति (ग) ।

* वैत्रासुर इति (ग) ।

† ब्रह्मणेरितमिति (ग) ।



क्वचित्किञ्चिन्नवेद्द्सं स्वपदं वेद सर्व्ववित् ॥ ३ ।
स्वायम्भुवे हतोदैत्यो वैष्णव्या मन्दरे गिरौ ।
महिषाख्यः परः पश्चात्स वै चैत्रासुरो हतः* ।
नन्दया निहतो विन्ध्ये महाबलपराक्रमः ॥ ४ ।
अथवा ज्ञानशक्तिः सा महिषोऽज्ञानमूर्त्तिमान् ।
अज्ञानं ज्ञानसाध्यन्तु भवतीति न संशयः ॥ ५ ।
मूर्त्तिपक्षे चेतिहासममूर्त्तें चैकवहृदि ।
ख्याप्यते† वेदवाक्यैश्च इह सा वेदवादिभिः ॥ ६ ।
इदानीं शृणु मे देवि पञ्चपातकनाशनम् ।
यजनन्देवदेवस्य विष्णोः पुत्रवसुप्रदम् ॥ ७ ।
इहजन्मनि दारिद्र्य‡व्याधिकुष्ठादिपीड़ितः ।
अलक्ष्मीवानपुत्रस्तु§ योभवेत्पुरुषो भुवि ॥ ८ ।
तस्य सद्यो भवेल्लक्ष्मीरायुर्वित्तं सुतः सुखम् ।
दृष्ट्वा तु मण्डलगतं देवं देव्या समन्वितम् ॥ ९ ।
नारायणं परन्देवं यः पश्यति विधानतः ।
आचार्य्यदर्शितं देवि मन्त्रमूर्त्तिमयोनिजम् ॥ १० ।
कार्त्तिके मासि शुक्लायां द्वादश्यान्तु विशेषतः ।

* वृत्रासुरः पुनरिति (ग) ।

† ख्यायत इति (क), (ख) ।

‡ द्रव्यादीति (ख) ।

§ नैव देवीति (क) ।

सर्व्वासु वा यजेद्देवं द्वादशीषु विधानतः ॥ ११ ।
संक्रान्त्यां वा महाभागं चन्द्रसूर्य्यग्रहे तथा* ।
यः पश्यति हरिं देवि पूजितं गुरुणा शुभे ।
तस्य सद्योभवेत्तुष्टिः पापध्वंसश्च जायते ।
सामान्यदेवतानाञ्च भवतीति न संशयः ॥ १२।१३ ।
ब्राह्मणक्षत्रियविशां भक्तानान्तु परीक्षणम् ।
संवत्सरं गुरुः कुर्य्याज्जातिशौचक्रियादिभिः ।
उपासन्न†न्ततोज्ञात्वा हृदयेनावधारयेत् ॥ १४ ।
तेऽपि भक्तिमतो‡ ज्ञात्वा आत्मानं परमेश्वरम्§ ।
संवत्सरं गुरोर्भक्तिं कुर्य्युर्विष्णोरिवाचलाम् ॥ १५ ।
संवत्सरे ततः पूर्णे गुरुश्चैव प्रसादयेत् ।
भगवंस्त्वत्प्रसादेन संसारार्णवतारणम् ।
इच्छामस्त्वैहिकीं लक्ष्मीं विशेषेण तपोधन ॥ १६ ।
एवमभ्यर्च्य मेधावी¶ गुरुं विष्णुमिवाग्रतः ।
अभ्यर्च्चितस्तैः सोऽप्याशु दशम्यां कार्त्तिकस्य तु ॥ १७ ।
क्षीरवृक्षसमुद्भूतं दन्तकाष्ठं समन्त्रकम्‖ ।

* ग्रहेऽपि वेति (ग) ।

† उपसन्नमिति (ग) ।

‡ भक्तिमन्त इति साधु ।

§ परमेश्वरे इति (ग) ।

¶ विद्यावानिति (ग) ।

‖ मन्त्रितं परमेष्ठिन इति (ग) ।

भक्षयित्वा स्वपेयुर्हि देवदेवस्य सन्निधौ ॥ १८ ।
स्वप्नान्दृष्ट्वा गुरोरग्रे श्रावयेत* विचक्षणः ।
ततः शुभाशुभं तत्र लक्षयेत्परमो गुरुः ॥ १९ ।
एकादश्यामुपोष्यैवं स्नात्वा देवालयं व्रजेत् ।
गुरुश्च मण्डलं भूमौ कल्पितायान्तु वर्त्तयेत् ॥ २० ।
लक्षणैर्विविधैर्भूमिं लक्षयित्वा विधानतः ।
षोड़शारं लिखेच्चक्रं सर्व्वतोभद्रमेव च† ॥ २१ ।
अथवा अष्टपत्रञ्च‡ लिखित्वा दर्शयेद्बुधः ।
नेत्रबन्धन्तु कुर्व्वीत सितवस्त्रेण यत्नतः ॥
वर्णानुक्रमतः शिष्यान् पुष्पहस्तान् प्रवेशयेत् ॥ २२ ।
नवनाभं यदा कुर्य्यान्मण्डलं वर्णकैर्बुधः ।
तदानीं पूर्व्वतो देवमिन्द्रपूर्व्वन्तु§ पूजयेत् ॥ २३ ।
लोकपालैः समं पूज्य¶ अग्निं सम्पूजयेच्छुभे ।
स्वदिक्षु तद्वद्याम्यायां नैर्ऋत्यान्निर्ऋतिं न्यसेत् ॥ २४ ।
वरुणं वारुणायाञ्च वायुं वायव्यतो न्यसेत् ।
धनदञ्चोत्तरे न्यस्य रुद्रमीशानगोचरे ॥ २५ ।

* श्रावयेदिति साधु ।

† एवञ्चेति (ख), नवनाभमथापि वेति (ग) ।

‡ अष्टपत्रमथोवापीति (ग) ।

§ ऐन्द्राग्निरिति (ग) ।

¶ तद्वदिति (ग), पूज्येति पाठे पूजयित्वेति साधु ।

पूर्व्ववेव तु विधानेन दिक्पत्रेषु व्यवस्थितान्।
पद्ममध्ये तथा विष्णुमर्च्चयेत्परमेश्वरम्॥ २६॥
पूर्व्वपत्रे बलं पूज्य* प्रद्युम्नं दक्षिणे तथा।
अनिरुद्धं तथा पूज्य† पश्चिमे चोत्तरे तथा।
पूजयेद्वासुदेवन्तु सर्व्वपातकशान्तिदम्॥ २७॥
ऐशान्यां विन्यसेच्छङ्खमाग्नेय्याञ्चक्रमेव तु‡।
याम्यायान्तु गदां पूज्य वायव्यां पद्ममेव च॥ २८॥
ऐशान्यां मुसलं§म्पूज्य दक्षिणे गरुड़ं न्यसेत्।
वामतो विन्यसेल्लक्ष्मीं देवदेवस्य बुद्धिमान्॥ २९॥
धनुश्चैव तु खड्गन्तु देवस्य पुरतो न्यसेत्।
श्रीवत्सं कौस्तुभञ्चैव नवमन्तत्र कल्पयेत्¶॥ ३०॥
एवं पूज्य यथान्यायं देवदेवं जनार्द्दनम्।
दिक्षु दलेषु‖ विन्यस्य अष्टौ कुम्भान्विधानतः।
वैष्णवं कलसञ्चैवं नवमं तत्र कल्पयेत्॥ ३१॥
स्नापयेन्मृत्तिकामन्तु वैष्णवेन घटेन ह।

* पूर्व्वमिति (ख)।
† पूज्यमिति (ग)।
‡ च इति (ख)।
§ मुशलमिति (ख), (ग)।
¶ देवस्य पुरतो न्यसेदिति (ख), (ग)।
‖ दिक्षदलेष्विति (ग)।

श्रीकामं स्नापयेत्तद्वदैन्द्रेण तु घटेन च* ॥ ३२ ॥
प्राज्यप्रतापकामस्य आग्नेयेन तु स्नापयेत् ।
मृत्युञ्जयविधानाय याम्येन स्नपनन्तथा† ।
दुष्टप्रध्वंसनायालं नैर्ऋतेन विधीयते ।
शान्तये वारुणेनाशु पापनाशाय वायवे‡ ॥ ३४ ॥
द्रव्यसम्पत्तिकामस्य कौवेरेण विधीयते ।
रौद्रेण स्नानहेतोश्च§ लोकपालपदाश्रये¶ ॥ ३५ ॥
एकैकेन नरः स्नातः सर्व्वपापविवर्ज्जितः ।
भवेदव्याहतं स्नानं श्रीमान्विप्रो विचक्षणः ॥ ३६ ॥
किं पुनर्नवभिः स्नातो नरः पातकवर्ज्जितः ।
जायते विष्णुसदृशः सद्योराजाथ वा भवेत्‖ ॥ ३७ ॥
अथवा दिक्षु सर्व्वासु यथासंख्येन लोकपान् ।
पूजयीत स्वशास्त्रोक्तविधानेन विधानवित् ॥ ३८ ॥
एवं सम्पूज्य देवांश्च** लोकपालान् प्रसन्नधीः ।
पश्चात्प्रदक्षिणान् शिष्यान् बद्धनेत्रान् प्रवेशयेत् ॥ ३९ ॥

---

* (ग) पुस्तके ३२श्लोकानन्तरवर्त्तिश्लोकद्वयञ्च न स्तः ।

† स्नापयेत्तथेति (ख) ।

‡ वायवेऽनिलेति साधु ।

§ हेतोश्चेति (ग) ।

¶ क्रमेण त्विति (ग) ।

‖ पुनरिति (ग) ।

** तु इति (ख) ।

आग्नेयी वारुणी दग्धा वायुना विधिना ततः ।
सौमेनाप्यायिता पश्चाच्छ्रावयेत्समयान् बुधः ॥ ४० ॥
अनिन्द्या ब्राह्मणा वेदा विष्णुर्ब्रह्मा एव च ।
रुद्रमादित्यमग्निञ्च लोकपालग्रहांस्ततः ॥ ४१ ॥
गुरुंश्च* वैष्णवांश्चा†पि पुरुषः पूर्व्वदीक्षितः ।
एवन्तु समयं श्राव्य‡ पश्चाद्धोमन्तु§ कारयेत् ॥ ४२ ॥
ओं नमो भगवते सर्व्वरूपिणे हुँ फट् स्वाहा¶ ।
षोड़शाक्षरमन्त्रेण होमयेज्ज्वलिताग्नये ॥ ४३ ॥
गर्भाधानादिकाश्चैव क्रियाः समवधारयेत् ।
त्रिभिराहुतिभिश्चापि‖ देवदेवस्य सन्निधौ ॥ ४४ ॥
होमान्ते दीक्षितः पश्चाद्दद्याच्च गुरुदक्षिणाम् ।
हस्त्यश्वकटकादीनि हेमग्रामादिकन्नृपः** ।
दद्याच्च गुरवे प्राज्ञो मध्यमे मध्यमन्तथा ॥ ४५ ॥
एवं कृते तु यत्पुण्यं माहात्म्यञ्जायते धरे ।
तन्न शक्यन्तु गदितुमपि वर्षशतैरपि ॥ ४६ ॥

* वा इति (ख) ।
† वा इति (ख) ।
‡ समये स्थाप्य इति (ख) ।
§ च इति (ख) ।
¶ विष्णवे स्वाहेति (ग) ।
‖ त्रिभिस्त्रिभिश्चाहुतिभिरिति (ग) ।
** नर इति (क), (ख) ।

दीक्षितात्मा पुन*र्भूत्वा वराहं शृणुयाद्यदि ।
तेन वेदपुराणानि सर्व्वे मन्त्राः ससंग्रहाः ॥ ४७ ।
जप्ताः स्युः पुष्करे तीर्थे प्रयागे सिन्धुसङ्गमे ।
देवागारे कुरुक्षेत्रे वाराणस्यां विशेषतः ॥ ४८ ।
ग्रहणे विषुवे चैव यत्फलं जपतां भवेत् ।
तत्फलं द्विगुणं तस्य दीक्षितो यः शृणोति च ॥ ४९ ।
देवा अपि तपः कृत्वा ध्यायन्ते† च वदन्ति च ।
कदा नो भारते वर्षे जन्म स्याद्भूतधारिणि ॥ ५० ।
दीक्षिताश्च भविष्यामो वराहं शृणुमः कथम् ।
वराहं मोऽङ्गमात्मानन्त्यक्त्वा देहं कदा वयम् ॥
यास्यामः परमं स्थानं यद्गत्वा न पुनर्भवेत् ।
एवं जल्पन्ति विबुधा मनसा चिन्तयन्ति च ॥ ५१ । ५२ ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वसिष्ठस्य च संवादं श्वेतस्य च महात्मनः ॥ ५३ ।
स्वर्गवासे स्थितोह्यासीच्छ्वेतो राजा महायशाः ।
आसीदिलावृते वर्षे श्वेतोराजा बृहत्तपाः‡ ॥ ५४ ।
स महीं सकलान्देवि§ सपल्लववनद्रुमाम् ।

* पुरेति (ख) ।

† ध्यायन्तीति साधु ।

‡ नाम महामना इति (ग) ।

§ देवीमिति (ग) ।

दातुमिच्छन्स चोवाच वसिष्ठं तपसान्निधिम् ॥ ५५ ।
भगवन्दातुमिच्छामि ब्राह्मणेभ्यो वसुन्धराम् ।
देह्यनुज्ञां स चोवाच वसिष्ठो राजसत्तमम् ॥ ५६ ।
अन्नं देहि सदा राजन् सर्व्वकालसुखावहम् ।
अन्नेन चैव दत्तेन किन्न दत्तं महीतले* ॥ ५७ ।
सर्व्वेषामेव दानानामन्नदानं विशिष्यते† ।
अन्नाद्भवन्ति भूतानि अन्नेनैव च वर्द्धते‡ ।
तस्मात्सर्व्वप्रयत्नेन अन्नन्दानं ददस्व भोः§ ॥ ५८ ।
वसिष्ठस्य वचः श्रुत्वा स राजा न तथाकरोत् ॥ ५९ ।
रत्नवस्त्रमलङ्कारान् श्रीमन्ति नगराणि च ।
यत्किञ्चित्कोषजातं स द्विजानाहूय तद्ददौ¶ ॥ ६० ।
स कदाचिन्नृपः पृथ्वीं जित्वा परमधर्म्मवित् ।
पुरोहितमुवाचेदं वसिष्ठं जपतां वरम् ॥ ६१ ।
भगवन्नश्वमेधानां सहस्रं कर्त्तुमुत्सहे ।
सुवर्णरौप्यताम्राणि यागकृत्वा द्विजातिषु‖ ॥
दत्तानि तेन राज्ञा वै नान्नं दत्तं तथा जलम् ।

* (ख) पुस्तके एतदर्द्धं परश्लोकस्य च पूर्व्वार्द्धं न स्तः ।

† विशिष्यते इति सार्व्वत्रिकः पाठः, स च लिपिकरप्रमादज इति परित्यक्तः ।

‡ विवर्द्धते इति (ग) ।

§ अन्नं ददस्व भूपते इति (ग) ।

¶ प्रदत्तं ब्राह्मणस्याथ कुञ्जरानजिनानि चेति (ग) ।

‖ द्विजातिष्विति विवक्षायां सप्तमी, द्विजातिभ्यः इति साधु ।

स्वल्पं वस्तु इति ज्ञात्वा सोऽजन्तु नाददत्प्रभुः ॥ ६२।६३ ।
एवं विभवयुक्तस्य तस्य राज्ञो महात्मनः ।
कालधर्म्मवशाद्देवि मृत्युः समभवत्तदा ॥ ६४ ।
परलोके वर्त्तमानः स च राजा महामनाः ।
क्षुधया पीड़ितोह्यासीत्तृषया च विशेषतः ॥ ६५ ।
आनिनायाप्सरोभागङ्गत्वा श्वेताख्यपर्व्वतम् ।
तत्र प्राग्जन्ममूर्त्तिश्च पुरा दग्धा महात्मनः ॥
तत्रास्थीनि स संगृह्य लिहन्नास्ते स पार्थिवः ।
पुनर्विमानमारुह्य दिवमाचक्रमे नृपः ॥ ६६।६७ ।
अथ कालेन महता स राजा शंसितव्रतः ।
तान्यस्थीनि लिहन्दृष्टो वसिष्ठेन महात्मना ॥ ६८ ।
उक्तश्च तेन किञ्च त्वं स्वास्थिं भुङ्क्ष नराधिप ।
एवमुक्तस्तदा राजा वसिष्ठेन महात्मना ।
उवाच वचनञ्चेदं श्वेताराजा मुनिन्तदा ॥ ६९ ।
भगवन्क्षुधितश्चास्मि अन्नपानं पुरा मया ।
न दत्तं मुनिशार्दूल तेन मां बाधते क्षुधा* ॥ ७० ।
एवमुक्तस्ततो राज्ञा वसिष्ठो मुनिपुङ्गवः ।
उवाच च मुनिर्भूयः श्वेतं वाक्यं महानृपम् ।
किन्ते करोमि राजेन्द्र क्षुधितस्य विशेषतः ।
अदत्तं नोपतिष्ठेत कस्यचित्किञ्चिदुत्तमम् ॥ ७१ ।

* मे ग्रावया क्षुधेति (ग) ।

रत्नहेमप्रदानेन भोगवाञ्जायते नरः ।
अन्नपान*प्रदानेन सर्व्वकामैस्तु तर्पितः ।
तन्न दत्तं त्वया राजन्स्तोकं मत्वा नराधिप ॥ ७२ ।

श्वेत उवाच ।

अदत्तस्य च सम्प्राप्तिस्तन्ममाचक्ष्व पृच्छतः ।
शिरसा भक्तियुक्तेन याचितोऽसि महामुने ॥ ७३ ।

वसिष्ठ उवाच ।

अस्त्येकं कारणं येन जायते तन्न संशयः ।
तच्छृणुष्व† नरव्याघ्र कथ्यमानं मयाऽनघ ॥ ७४ ।
आसीद्राजा पुराकल्पे विनीताश्वेति‡ विश्रुतः ।
स सर्व्वमेधमारेभे स्वयं क्रतुवरन्नृपः ॥ ७५ ।
यजता§नेन विप्रेभ्यो दत्ता गावो द्विपा वसु ।
नान्नन्तेन तदा दत्तं स्वल्पं मत्वा यथा त्वया ॥ ७६ ।
ततः कालेन महता मृतोऽसौ जाह्नवीजले ।
कृत्वा पुण्यं विनीताश्वः सार्व्वभौमो नृपोत्तमः¶ ॥ ७७ ।
स्वर्गञ्च गतवान्सोऽपि यथा राजन्भवान् प्रभो ।
असावपि क्षुधाविष्ट एवमेव गतो नृपः ॥ ७८ ।

* अन्नदानेति (ग) ।

† शृणुष्वेति आर्षं, शृणु इति साधु ।

‡ विनीताश्व इति साधु ।

§ यजमानेनेति साधु ।

¶ नृपोमहदिति (ग) ।

मर्त्त्यलोके नदीतीरे गङ्गायां नीलपर्व्वतम्* ।
विमानेनार्कवर्णेन भास्वता देववन्नृप: ॥ ७९ ।
ददर्श च तदा राजा क्षुधित: स्वं कलेवरम् ।
पुरोहितन्ददर्शाथ होतारं जाह्नवीतटे ॥ ८० ।
तद्दृष्ट्वाऽसावपि नृप: पप्रच्छ मुनिसत्तमम् ।
क्षुधाया: कारणं किं मे स होता तमुवाच ह ॥ ८१ ।
तिलधेनुर्भवान्राजञ्जलधेनुश्च सत्तम ।
घृतधेनुश्च धेनुश्च रसधेनुश्च पार्थिव ।
देहि शीघ्रं येन भवान् क्षुधया वर्ज्जितोभवेत् ॥ ८२ ।
तपते† यावदादित्यस्तपते वापि चन्द्रमा: ।
एवमुक्तस्ततो राजा तं पुन: पृष्टवानिदम् ॥ ८३ ।

विनीताश्व उवाच ।

कथं सा दीयते ब्रह्मंस्तिलधेनुर्जिगीषुभि: ।
भुङ्क्ते स्वर्गश्च विप्रेन्द्र तन्ममाचक्ष्व पृच्छत: ॥ ८४ ।

होतोवाच ।

विधानन्तिलधेनोश्च‡ त्वं शृणुष्व§ नराधिप ।
चतुर्भि: कुड़वैश्चैव¶ प्रस्थ एक: प्रकीर्त्तित: ॥ ८५ ।

* नीलपर्व्वते इति (ग) ।

† तपतीति साधु । एवं परत्रापि ।

‡ धेनोस्त्विति (ग) ।

§ शृणु इति साधु ।

¶ चतुर्विंशतिकाभिश्चेति (ग) ।

सा तु षोड़शभिः कार्य्या चतुर्भिर्वत्सकोभवेत्* ॥ ८६ ।
नासा† गन्धमयी तस्या जिह्वा गुड़मयी शुभा ।
पुच्छे प्रकल्पनीया सा घण्टाभरणभूषिता ॥ ८७ ।
ईदृशीं कलयित्वा तु स्वर्णशृङ्गीन्तु कारयेत् ।
कांस्यदोहां रौप्यखुरां पूर्व्वधेनुविधानतः ॥ ८८ ।
कृत्वा तां ब्राह्मणायाशु दद्याच्चैव नराधिपः ।
कृष्णाजिनं धेनुवासो नन्दितां कल्पितां शुभाम् ॥ ८९ ।
सूत्रेण सूत्रिताङ्कृत्वा सर्व्वरत्नसमन्विताम् ।
सर्व्वौषधिसमायुक्तां मन्त्रपूतान्तु दापयेत्‡ ॥ ९० ।
अन्नं मे जायतामद्य§पानं सर्व्वरसास्तथा ।
सर्व्वं सम्पादयास्माकं तिलधेनो द्विजार्पिता ॥ ९१ ।
गृह्णामि देवि त्वां भक्त्या कुटुम्बार्थं विशेषतः ।
भजस्व¶ कामान्मां देवि तिलधेनो नमोऽस्तु ते ॥ ९२ ।
एवंविधान्ततो दद्यात्तिलधेनुं नृपोत्तम ।
सर्व्वकामसमावाप्तिं कुरुते नात्र संशयः ॥ ९३ ।

* तैः षोड़शैर्भवेत्सा च चतुर्भिर्वत्सको भवेदिति (ग) ।

† नानेति (ग) ।

‡ मन्त्रपूतां सुदापयेदिति (ग) ।

§ सद्य इति (ग) ।

¶ देहीत्यर्थः ।

यश्चेदं शृणुयाद्भक्त्या कुर्य्यात्कारयतेऽपि वा ।
सर्व्वपापविनिर्मुक्तो विष्णुलोकञ्च गच्छति* ॥ ८४ ॥

इति वराहपुराणे श्वेतविनीताश्वोपाख्याने† तिलधेनुमाहात्म्यं
नाम नवनवतितमोऽध्यायः ।



## शततमोऽध्यायः ।

होतोवाच ।
जलधेनुं प्रवक्ष्यामि पुण्येऽह्नि विधिपूर्व्वकम् ।
गोचर्म्ममात्रं भूभागं गोमयेनोपलेपयेत्* ॥ १ ॥
तत्र मध्ये तु† राजेन्द्र पूर्णं कुम्भञ्च विन्यसेत् ।
जलपूर्णं सुगन्धाढ्यं कर्पूरागुरुचन्दनैः ।
वासितं गन्धतोयेन तां धेनुं परिकल्पयेत् ॥ २ ॥
वत्सं तथापरं कल्प्य‡ जलेन§ परिपूरितम् ।

* स गच्छतीति (ख) ।
† श्वेतकौर्योपाख्याने इति (ग) ।

* गोमये मण्डले कृत्वा गोचर्म्मतदनन्तरमिति (ग) ।
† मध्ये चेति (ग) ।
‡ कल्प्य इति चार्षं, कल्पयित्वा इति साधु ।
§ घृतेनेति (ग) ।

वर्द्धनीकं* महाराज गन्धपुष्पैः समन्वितम्।
दूर्व्वाङ्कुरैरुपस्तीर्य्य स्रग्भिश्चैव विभूषितम्॥ ३॥
पञ्चरत्नानि निक्षिप्य† तस्मिन् कुम्भे नराधिप।
मांसीमुशीरं कुष्ठञ्च तथा शैलेयबालुकम्॥ ४॥
धात्रीफलं सर्षपाश्च‡ सर्व्वधान्यानि पार्थिव।
चतुर्द्दिक्ष्वपि पात्राणि चत्वार्य्येव प्रकल्पयेत्॥ ५॥
एकं घृतमयं पात्रं द्वितीयं दधिपूरितम्।
तृतीयं मधुनश्चैव चतुर्थं शर्कराधृतम्॥ ६॥
सुवर्णमुखचञ्चूंषि शृङ्गं कृष्णाङ्गरेषु च।
प्रशस्तपत्रश्रवणां मुक्ताफलमयेक्षणाम्॥ ७॥
ताम्रपृष्ठां§ कांस्यदेहां दर्भरोमसमन्विताम्।
पुच्छं सूत्रमयं कृत्वा कृष्णाभरणघण्टिकाम्॥ ८॥
कम्बले पुष्पमालाञ्च गुडास्यां शुक्तिदन्तिकाम्।
जिह्वां शर्करया कृत्वा नवनीतेन च स्तनान्॥ ९॥
इक्षुपादान्तु राजेन्द्र गन्धपुष्पोपशोभिताम्।
कृष्णाजिनोपरि स्थाप्य¶ वस्त्रेणाच्छादितान्तु ताम्।

* (ग) पुस्तके वर्द्धनीकामिति पाठः, ततश्च तद्विशेषणानि स्त्रीलिङ्गे पठितानि।

† संक्षिप्य इति (ख)।

‡ आमला सर्षपाः श्वेता इति (ग)।

§ ताम्रपृष्ठीमिति (ग)।

¶ स्थापयित्वेति साधु।

गन्धपुष्पैः समभ्यर्च्च्य विप्राय विनिवेदयेत् ॥ १० ॥
एवं धेनुस्तदा दत्त्वा ब्राह्मणे वेदपारगे* ।
साधुविप्राय राजेन्द्र श्रोत्रियायाहिताग्नये ।
तपोवृद्धाय पात्राय दातव्या च कुटुम्बिने ॥ ११ ॥
यो ददाति नरो राजन्यः पश्यति शृणोति च ।
प्रतिगृह्णाति यो विप्रः सर्व्वे मुच्यन्ति† पातकात् ॥ १२
ब्रह्महा पितृहा गोघ्नः सुरापो गुरुतल्पगः ।
विमुक्ताः सर्व्वपापेभ्यो गच्छन्ति विष्णुमन्दिरे‡ ॥ १३ ॥
योऽश्वमेधेन यजते समाप्तवरदक्षिणः ।
जलधेनुञ्च यो दद्यात्सममेतन्नराधिप ॥ १४ ॥
जलाहारस्त्वेकदिनं तिष्ठेच्च जलधेनुदः ।
ग्राहकोऽपि त्रिरात्रं वै तिष्ठेदेवं न संशयः ॥ १५ ॥
यत्र क्षीरवहा नद्यो मधुपायसकर्द्दमः ।
यत्र चाप्सरसाङ्गीतं तत्र यान्ति जलप्रदाः ॥ १६ ॥
दाता च दापकश्चैव प्रतिग्राही च यो द्विजः§ ।
सर्व्वपापविनिर्मुक्ता विष्णुसायुज्यमाप्नुयुः¶ ॥ १७ ॥

* अत्र विवत्सावशात्सप्तमी ।

† मुच्यन्ते इति साधु । सर्व्वे तरति दुष्कृतमिति (ग) ।

‡ विमुक्तः सर्व्वपापेभ्यो विष्णुलोकं स गच्छतीति (ग) ।

§ (ख) पुस्तकेऽतः परं चत्वारः पादा न सन्ति ।

¶ विष्णुमेति न संशय इति (ग) ।

जलधेनु*विधानं यः शृणुयात्कीर्त्तयेत्ति वा ।
सर्व्वपापविनिर्मुक्तः स्वर्गमेति जितेन्द्रियः ॥ १८ ॥

इति वराहपुराणे जलधेनुविधिर्नाम शततमोऽध्यायः ।

---

## एकाधिकशततमोऽध्यायः ।

होतोवाच ।

रसधेनुविधानन्ते कथयामि समासतः ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशास्तरे* ॥ १ ।
रसस्य तु घटं राजन् सम्पूर्णं स्थापयेत्तु† ।
तद्वत्सङ्कल्पयेत्प्राज्ञश्चतुर्थांशेन वत्सकम्‡ ॥ २ ।
इक्षुदण्डमयाः पादा रजतस्य खुरैर्युताः§ ।
सुवर्णशृङ्गाभरणा वस्त्रपुच्छा घृतस्तनी¶ ॥ ३ ।

* रसधेनुमिति (क), (ख) ।

---

* कुशोत्तरे इति (ग) ।

† स्थापयेत्तत इति (ग) ।

‡ तुरीयांशेन वत्सन्तु तत्पार्श्वे स्थापयेत् सुधीरिति (ग) ।

§ एवं कार्य्यारसधेनुरिक्षुपादसमन्वितेति (ग) ।

¶ शतस्तना इति (ख) ।

पुष्पकम्बलसंयुक्ता शर्करामुखजिह्वका* ।
दन्ताः फलमयास्तस्याः पुच्छन्तास्रमयं शुभम् ॥ ४ ।
पुष्परोमान्तु राजेन्द्र मुक्ताफलकृतेक्षणाम् ।
सप्तव्रीहिसमायुक्तां चतुर्दिक्षु च दीपिताम् ॥ ५ ।
सर्व्वोपस्करसंयुक्तां सर्व्वगन्धादिवासिताम् ।
चत्वारि तिलपात्राणि चतुर्दिक्षु निवेशयेत् ॥ ६ ।
सर्व्वलक्षणयुक्ताय श्रोत्रियाय कुटुम्बिने ।
रसधेनुः प्रदातव्या स्वर्गकामेन नित्यदा ॥ ७ ।
दाता स्वर्गमवाप्नोति सर्व्वपापविवर्ज्जितः ।
दाता च ग्राहकश्चैव एककालमभोजनः ॥ ८ ।
सोमपानफलं तस्य सर्व्वत्र तु फलं भवेत् ।
दीयमानान्तु पश्यन्ते† ते च यान्ति परां‡ गतिम् ॥ ९ ।
धेनुञ्च पूजयित्वाग्रे गन्धधूपस्रगादिभिः ।
पूर्व्वोक्तैरेव मन्त्रैस्तु ततस्तां प्रार्थयेत्सुधीः ॥ १० ।
प्रार्थनापूर्व्वकं भक्त्या द्विजाग्र्याय निवेदयेत् ।
दशपूर्वान् परांश्चैव आत्मानञ्चैकविंशकम् ।
प्रापयेत्परमं स्थानं स्वर्गान्नावर्त्तते पुनः ॥ ११ ।
एषा ते कथिता राजन्रसधेनुरनुत्तमा ।

* जिह्विकेति (ग) ।

† पश्यन्ते इति चार्षं, पश्यन्तीति साधु ।

‡ परमामिति (ग) ।

ददस्व च महाराज परं स्थानमवाप्नुहि ॥ १२ ।
य इदं पठते नित्यं शृणुयादथ भक्तितः ।
सर्व्वपापविनिर्म्मुक्तो विष्णुलोके महीयते ॥ १३ ।

इति वराहपुराणे श्वेतोपाख्याने रसधेनुमाहात्म्यं
नाम एकाधिकशततमोऽध्यायः ।

# द्व्यधिकशततमोऽध्यायः ।

होतोवाच ।

गुडधेनुं प्रवक्ष्यामि सर्व्वकामार्थसाधिनीम् ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशास्तृते ॥ १ ।
तस्योपरिक्षतं वस्त्रं गुडमानीय पुष्कलम् ।
कृत्वा गुडमयीं धेनुं सवत्साङ्गांस्यदेहिनीम् ॥ २ ।
सौवर्णे मुखशृङ्गे च दन्ताश्च मणिमौक्तिकैः ।
ग्रीवा रत्नमयी तस्या घ्राणं गन्धमयन्तथा ॥ ३ ।
शृङ्गे त्वगुरुकाष्ठेन पृष्ठं ताम्रमयं तथा* ।

* पृष्ठीं ताम्रमयीन्तथेति (ग) ।

पुच्छं क्षौममयन्तस्याः सर्व्वाभरणभूषिताम्* ॥ ४ ।
इक्षुपादां रौप्यखुरां कम्बलं पट्टसूत्रकम् ।
आच्छाद्य पट्टवस्त्रेण† घण्टाचामरशोभिताम्‡ ॥ ५ ।
प्रशस्तपत्रश्रवणां नवनीतस्तनीं बुधः ।
फलैर्नानाविधैस्तस्या उपशोभाम्प्रकल्पयेत् ॥ ६ ।
उत्तमा गुड़धेनुः स्यात्सदा भारचतुष्टयम् ।
भागार्द्धेन तु तौल्येन चतुर्थांशेन वत्सकम् ॥ ७ ।
मध्यमा च तदर्द्धेन भारेणैकेन चाधमा ।
वित्तहीनो यथाशक्त्या शतैरष्टाभिरेव च ॥ ८ ।
अत ऊर्द्धन्तु कर्त्तव्या§ गृहवित्तानुसारतः ।
गन्धपुष्पादिभिः पूज्य ब्राह्मणाय निवेदयेत्¶ ॥ ९ ।
श्रोत्रियाय‖ प्रदातव्या सहस्रकनकेन तु ।
तदर्द्धेन महाराज तस्याप्यर्द्धेन वा पुनः ॥ १० ।
शतेन वा शतार्द्धेन यथाशक्त्या** निवेदयेत्†† ।

---

* कांस्यपादद्वयन्तस्याः पुच्छ क्षौरमयन्तथेति (ग) ।

† पट्टयुग्मेनेति (ग) ।

‡ भूषितामिति (ग) ।

§ एवमेव तु कर्त्तव्यमिति (ग) ।

¶ गन्धपुष्पादिभिः कृत्वा धूपनैवेद्यदीपकान् ।
एवं कृत्वा द्विजेन्द्राय चाहिताग्निर्विशेषतः ॥ इति (ग) ।

‖ इष्टशायेति (ग) ।

** यथाशक्तीति साधु ।

†† यथाशक्त्या तु दापयेदिति (ग) ।

गन्धपुष्पादिभिः पूज्य* मुद्रिकाकर्णभूषणैः† ।
छत्रिकापादुके दत्त्वा इमं मन्त्रमुदीरयेत् ॥ ११ ॥
गुड़धेनो महावीर्य्ये सर्व्वसम्पत्प्रदे शुभे ।
दानादस्माच्च भो देवि भक्ष्यभोज्यं प्रयच्छ मे‡ ।
प्राङ्मुखोवापि दाता च ब्राह्मणाय निवेदयेत् ॥ १२ ॥
वाचा कृतं कर्म्मकृतं मनसा यद्विचिन्तितम् ।
मानकूटं तुलाकूटं कन्यागोऽर्थे उदाहृतम्§ ॥ १३ ॥
अनृतं नाशमायातु¶ गुड़धेनो द्विजार्पिता ।
दीयमानां प्रपश्यन्ति ते यान्ति परमां गतिम् ॥ १४ ॥
यत्र क्षीरवहा नद्यो घृतपायसकर्द्दमाः ।
ऋषयो मुनयः सिद्धास्तत्र गच्छन्ति धेनुदाः ॥ १५ ॥
दश पूर्व्वान्दश परानात्मानञ्चैकविंशतिम्‖ ।
विष्णुलोकं नयत्याशु गुड़धेनोः प्रसादतः ॥ १६ ॥
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये** ।

---

* पूजयित्वेति साधु ।

† कृत्वा मुद्रिकाकर्णपत्रकैरिति (ग) ।

‡ (ग) पुस्तके चरणद्वयमात्रं वर्त्तते तच्च भिन्नरूपमेव । यथा—
याश्रियादीनि मन्त्राणि पूर्व्वोक्तानि चरेद्बुध इति ।

§ कन्याशृतगवाकृतमिति (ग) ।

¶ आयातीति (क) । तत्सर्व्वं नाशयेद्वा चेति (ग) ।

‖ तारयेद्गुड़धेनुद इति (ग) ।

** एतदेव विधानं स्यादेते चोपस्कराः स्मृताः ।
मन्त्रावाहनसंयोगः सदा पर्व्वणि पर्व्वणि ॥ इति (ग) ।

सर्व्वदैव* प्रदातव्या पार्थं दृष्टा महामते ॥ १७ ।
श्रद्धान्वितेन दातव्या भुक्तिमुक्तिफलप्रदा ।
सर्व्वकामप्रदा नित्यं सर्व्वपापहरा स्मृता† ॥ १८ ।
गुड़धेनोः प्रसादात्तु सौभाग्यमखिलं भवेत्‡ ।
वैष्णवं पदमाप्नोति दौर्गत्यन्तस्य नश्यति§ ॥ १९ ।

इति वराहपुराणे धेनोपाख्याने गुडधेनुमाहात्म्यं
नाम द्व्यधिकशततमोऽध्यायः ।

* तस्माद्देवेति (ग) ।

† शुभेति (ग) ।

‡ इह सौभाग्यमतुलमायुरारोग्यसम्पद. इति (ग) ।

§ स्मरणे स्मरणं हरेरिति (ग) । ततः परं (ग) पुस्तके द्वौ श्लोकौ चाधिकौ वर्त्तेते । यथा—

दशद्वादशमासेषु दश चाष्टौ च जन्मनि ।
न शोकदुःखदौर्गत्यं तस्य सञ्जायते क्वचित् ।
इति पठति शृणोति चैव सम्यक् मतिमपि ददाति योऽजनानाम् ।
स इह विभवैश्चिरं वसित्वा वसति चिरं दिवि दैवतादिपूज्यः ॥ इति
वसित्वेति चार्षम्, उषित्वेति साधु ।

# अधिकशततमोऽध्यायः।

होतोवाच।

तद्वच्च* शर्कराधेनुं शृणु राजन्यथार्थतः।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशान्तरे† ॥ १ ॥
धेनुं शर्करया राजन्कृत्वा भारचतुष्टयम्।
उत्तमा कथ्यते सद्भिश्चतुर्थांशेन वत्सकम् ॥ २ ॥
तदर्द्धं मध्यमा प्रोक्ता कनिष्ठा भारकेण तु।
तद्वद्वत्सं प्रकुर्व्वीत चतुर्थांशेन तत्त्वतः ॥ ३ ॥
अथ कुर्य्याद्दृष्टशतैरूर्द्धं नृपतिसत्तम।
स्वशक्त्या कारयेद्धेनुं तथात्मानं न पीड़येत् ॥ ४ ॥
सर्व्ववीजानि संस्थाप्य चतुर्द्दिक्षु समन्ततः।
सुवर्णस्य मुखं शृङ्गे मौक्तिकैर्नयने तथा‡ ॥ ५ ॥
गुड़ेन तु मुखं कार्य्यं जिह्वा पिष्टमयी तथा।
कम्बलं पट्टसूत्रेण कण्ठाभरणभूषिताम् ॥ ६ ॥
इक्षुपादां रौप्यखुरां नवनीतस्तनीं तथा।
प्रशस्तपत्रश्रवणां सितचामरभूषिताम् ॥ ७ ॥

* वत्सेति इति (ग)।

† कुशोत्तरे इति (ग)।

‡ सौवर्णमुखशृङ्गाणि मौक्तिकानयनानि चेति (ग)।

पञ्चरत्नसमायुक्तां वस्त्रेणाच्छादितां तथा* ।
गन्धपुष्पैरलङ्कृत्य ब्राह्मणाय निवेदयेत्† ॥ ८ ॥
श्रोत्रियाय दरिद्राय साधुवृत्ताय धीमते ।
वेदवेदाङ्गविदुषे साग्निकाय कुटुम्बिने‡ ।
अदुष्टाय प्रदातव्या न तु मत्सरिणे द्विजे§ ॥ ९ ॥
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।
एषु पुण्येषु कालेषु यथाविभवशक्तितः¶ ॥ १० ॥
सत्पात्रञ्च द्विजं दृष्ट्वा आगतं श्रोत्रियं गृहे ।
आगताय‖ प्रदातव्या पुच्छदेशे विमृष्य** च ॥ ११ ॥
पूर्व्वाभिमुखमास्थाय†† अथवा स उदङ्मुखः ।
गां‡‡ पूर्व्वाभिमुखीं कृत्वा वत्समुत्तरतो न्यसेत् ॥ १२ ॥
दानकाले तु ये मन्त्रास्तान्पठित्वा समर्पयेत् ।
सम्पूज्य विधिवद्विप्रं मुद्रिकाकर्णभूषणैः ॥ १३ ॥
स्वशक्त्या दक्षिणा देया वित्तशाठ्यविवर्ज्जितः ।

---

* आच्छादितोपरीति (ग) ।

† कुटुम्बिने इति (ग) ।

‡ आहिताग्निर्विशेषत इति (ग) ।

§ द्विजायेति साधु ।

¶ यदृच्छया वा सुदापयेदिति (ग) ।

‖ तादृशायेति (ग) ।

** उपविश्येति (ग) ।

†† पूर्व्वामुखः स्थितोदातेति (ग) ।

‡‡ धेनुमिति (ग) ।

हस्ते तु दक्षिणां दत्त्वा गन्धपुष्पसचन्दनाम्।
धेनुं समर्पयेत्तस्य मुखञ्च न विलोकयेत् ॥ १४ ॥
एकाहं शर्कराहारो ब्राह्मणस्त्रिदिनं वसेत्।
सर्व्वपापहरा धेनुः सर्व्वकामप्रदायिनी ॥ १५ ॥
सर्व्वकामसमृद्धस्तु जायते नात्र संशयः।
दीयमानं प्रपश्यन्ति ते यान्ति परमां गतिम् ॥ १६ ॥
य इदं शृणुयाद्भक्त्या पठते वापि मानवः।
मुच्यते सर्व्वपापेभ्यो विष्णुलोकं स गच्छति ॥ १७ ॥

इति वराहपुराणे शर्कराधेनुमाहात्म्यं नाम त्र्यधिकशततमोऽध्यायः।

## चतुरधिकशततमोऽध्यायः।

होतोवाच।

मधुधेनुं प्रवक्ष्यामि सर्व्वपातकनाशिनीम्।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ॥ १ ॥
धेनुं मधुमयीं कृत्वा सम्पूर्णघटषोड़शाम्।
चतुर्थेन तथांशेन वत्सकं परिकल्पयेत् ॥ २ ॥
सौवर्णन्तु मुखं कृत्वा शृङ्गाण्यगुरुचन्दनैः* ।

* चन्दनमिति (ग)

पृष्ठं ताम्रमयं कृत्वा साश्नां पटमयीं तथा ॥ ३ ।
पादानिक्षुमयान्कृत्वा सितकम्बलकम्बलम्* ।
मुखं गुड़मयं कृत्वा जिह्वां शर्करया तथा ॥ ४ ।
ओष्ठौ पुष्पमयौ तस्या दन्ताः फलमयाः स्मृताः ।
दर्भरोममयी† देवी खुरैरोप्यैश्च भूषिता‡ ॥ ५ ।
प्रशस्तपत्रश्रवणा प्रमाणात्परिलक्षिता ।
सर्व्वलक्षणसंयुक्ता सप्तधान्यान्विता तथा§ ॥ ६ ।
चत्वारि तिलपात्राणि चतुर्दिक्षु प्रकल्पयेत्¶ ।
छादिता वस्त्रयुग्मेन कण्ठाभरणभूषिता ।
कांस्योपदोहिनीं कृत्वा गन्धपुष्पैस्तु पूजिताम्|| ॥ ७ ।
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये
संक्रान्त्यामुपरागे च सर्व्वकाले यदृच्छया ॥ ८ ।
द्रव्यब्राह्मणसम्पत्तिं दृष्ट्वा तां प्रतिपादयेत् ।
ब्राह्मणाय दरिद्राय श्रोत्रियायाहिताग्नये** ।

* कम्बलमिति (ग) ।
† रोमभरेति (ग) ।
‡ रौप्यखुरविभूषितेति (ग) ।
§ धान्यानि दापयेदिति (ग) ।
¶ दिक्ष्वपि दापयेदिति (ग) ।
|| धूपितामिति (क), (ख) ।
** गुणयुक्ताय पाठके (क), (ख) ; (ग) पुस्तकेऽतः परं 'आर्य्यावर्त्ते समुत्पन्ने वेदवेदाङ्गपारगे' इत्यधिकपाठो वर्त्तते, तत्र विवक्षायां सप्तमी ।

तादृशाय प्रदातव्या मधुधेनुर्नरोत्तमे ॥ ९ ।
पुच्छदेशे विसृज्याथ जलपूर्णां सदक्षिणाम् ।
दद्याद्विप्राय धेनुन्तां मन्त्रपूर्व्वां विचक्षणः* ॥ १० ।
रसज्ञा सर्व्वदेवानां सर्व्वभूतहिते रता ।
प्रीयन्तां पितरो देवा मधुधेनो† नमोऽस्तु ते ।
एवमुच्चार्य्य तान्धेनुं ब्राह्मणाय निवेदयेत् ॥ ११ ।
अहं गृह्णामि त्वां देवि कुटुम्बार्थे विशेषतः ।
कामं कामदुघे कामान्मधुधेनो नमोऽस्तु ते ॥ १२ ।
मधुवातेति मन्त्रेण दद्याद्दाशुचिकेन तु ।
दत्त्वा धेनुं महाराज छत्रिकोपानहौ तथा ॥ १३ ।
एवं यः कुरुते भक्त्या मधुधेनुं नराधिप ।
दत्त्वा दानं पायसेन मधुना च दिनं नयेत् ॥ १४ ।
ब्राह्मणश्च‡ त्रिरात्रन्तु मधुपायससंयुतम् ।
एवं कृते तु यत्पुण्यं तन्निबोध नराधिप ॥ १५ ।
यत्र नद्यो मधुवहा यत्र पायसकर्द्दमाः ।

* (ग) पुस्तकेऽन्यथैव पाठो दृश्यते । यथा—
पुच्छदेशोपविष्टन्तु गन्धधूपादिपूजिता ।
आच्छाद्य वस्त्रयुग्मेन मुद्रिकावर्णमात्रकैः ॥
स्वशक्त्या दक्षिणां दत्त्वा वित्तशाठ्यविवर्ज्जितः ।
जलपूर्व्वन्तु कर्त्तव्यं पश्चाद्दानं समर्पयेत् ॥ इति ।

† मम धना इति (क), (ख) ।

‡ ब्राह्मणोऽपीति (ग) ।

ऋषयो मुनयः सिद्धास्तत्र गच्छन्ति धेनुदाः ।
तत्र भोगानथो भुङ्क्ते ब्रह्मलोकं* स गच्छति† ॥ १६ ।
दश पूर्व्वान्दश परानात्मानञ्चैकविंशकम् ।
नयते विष्णुसायुज्यं मधुधेनुप्रसादतः ॥ १७ ।
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।
सर्व्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ १८ ।

इति वराहपुराणे मधुधेनुमाहात्म्यं नाम चतुरधिकशततमोऽध्यायः ।

## पञ्चाधिकशततमोऽध्यायः ।

होतोवाच ।

क्षीरधेनुं प्रवक्ष्यामि तां निबोध नराधिप ।
अनुलिप्ते महीपृष्ठे गोमयेन नृपोत्तम ॥ १ ।
गोचर्म्ममात्रमानेन कुशानास्तीर्य्य सर्व्वतः ।
तस्योपरि* महाराज न्यसेत्कृष्णाजिनं बुधः ॥ २ ।

* विष्णोर्लोकमिति (ख) ।

† (ग) पुस्तकेऽतः परं
क्रीड़ित्वा सुचिरं कालं पुनर्मर्त्यमुपागतः ।
स भुक्त्वा विपुलान् भोगान् विष्णुलोकं स गच्छतीति ॥

* तस्योपरीति (ग) ।

तत्र कृत्वा* कुण्डलिकां गोमयेन सुविस्तृताम्† ।
क्षीरकुम्भं ततः स्थाप्य‡ चतुर्थांशेन वत्सकम् ॥ ३ ॥
सुवर्णमुखशृङ्गाणि चन्दनागुरुकाणि च ।
प्रशस्तपत्रश्रवणां तिलपात्रोपरि न्यसेत् ॥ ४ ॥
मुखङ्कुङ्कुमयं तस्या जिह्वां शर्करया तथा ।
फलप्रशस्तदशनां§ मुक्ताफलमयेक्षणाम् ॥ ५ ॥
इक्षुपादां दर्भरोमां सितकम्बलकम्बलाम् ।
ताम्रपृष्ठां कांस्यदेहां पट्टसूत्रमयीं शुभाम्¶ ॥ ६ ॥
पुच्छञ्च नृपशार्दूल नवनीतमयस्तनीम् ।
स्वर्णशृङ्गीं रौप्यखुरां पञ्चरत्नसमन्विताम् ॥ ७ ॥
चत्वारि तिलपात्राणि चतुर्दिक्ष्वपि विन्यसेत्|| ।
सप्तधान्ययुतं पात्रं दिक्षु दिक्षु च विन्यसेत्** ॥ ८ ॥
एवं लक्षणसंयुक्तां क्षीरधेनुं प्रकल्पयेत् ।
आच्छाद्य वस्त्रयुग्मेन गन्धपुष्पैः समर्चयेत् ॥ ९ ॥

* तत्रोपरीति (ग) ।

† कृतामपीति (ग) ।

‡ स्थापयित्वेति साधु ।

§ फलप्रशस्तपत्राणामिति (ख) ।

¶ तथेति (ग) ।

|| स्थापयेदिति (ग) ।

** सप्तत्रीहिमयीयुक्तां दिक्षु सर्व्वासु स्थापयेदिति (ग) ।

धूपदीपादिकं कृत्वा ब्राह्मणाय निवेदयेत् ।
वस्त्रादिभिरलङ्कृत्य* मुद्रिकाकर्णकुण्डलैः† ।
पादुकोपानहौ छत्रं दत्त्वा दानं समर्पयेत् ॥ १० ।
दद्यादनेन मन्त्रेण क्षीरधेनुं प्रयत्नतः‡ ।
आप्यायस्वेति मन्त्रेण वेदोक्तेन विधानतः§ ।
प्रतिग्राही पठेन्मन्त्रमेवं¶ दानविधिः स्मृतः‖ ॥ ११ ।
दीयमानां प्रपश्यन्ति ते यान्ति परमां गतिम् ।
एतां हेमसहस्रेण शतेनाथ स्वशक्तितः ।
दत्त्वा धेनुं महाराज शृणु तस्यापि यत्फलम् ॥ १२ ।
षष्टिवर्षसहस्रन्तु इन्द्रलोके महीयते ।
पित्रादिभिश्च सहितो** ब्रह्मणो भवनं व्रजेत् ॥ १३ ।
दिव्यं विमानमारूढ़ो दिव्यस्रगनुलेपनः ।
क्रीड़ित्वा†† सुचिरं कालं विष्णुलोकं स गच्छति ॥ १४ ।

* आच्छाद्यालङ्कृतां कृत्वेति (ग) ।

† मात्रकैरिति (ग) ।

‡ अनेनैव तु मन्त्रेण क्षीरधेनुं प्रदापयेदिति (ग) ।

§ आश्रयः सर्व्वभूतानामित्यादि नरपुङ्गव ।
आप्यायस्वेति मन्त्रेण क्षीरधेनुं प्रसादयेदिति (ग) ।

¶ एवमिति (ख) ।

‖ गृह्णीति च पठेन्मन्त्रं ग्राहकौराजसत्तम इति (ग) ।

** पितृपितामहैः सार्द्धमिति (ग) ।

†† क्रीड़यित्वेति (ख) ।

द्वादशादित्यसङ्काशे विमानवरमण्डिते ।
गीतवादित्रनिर्घोषैरप्सरोगणसेविते ।
तत्रोष्य* विष्णोर्भवने विष्णुसायुज्यमाप्नुयात्† ॥ १५ ॥
य इमं शृणुयाद्राजन् पठेद्वा भक्तिभावतः‡ ।
सर्व्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ १६ ॥

इति वराहपुराणे क्षीरधेनुविधिर्नाम पञ्चाधिकशततमोऽध्यायः ।



## षड़धिकशततमोऽध्यायः ।

होतोवाच ।

दधिधेनोर्महाराज विधानं शृणु साम्प्रतम् ।
अनुलिप्ते महाभागे* गोमयेन नराधिप ॥ १ ॥

* उष्य इति आर्षम्, उषित्वेति साधु ।

† सायुज्यतां व्रजेदिति (ग) ।

‡ भावित इति (ग) ।

---

* अनुलिप्ते महाभाग इत्यारभ्य पादसप्तकं (ख) पुस्तके नास्ति ।

गोचर्म्ममात्रन्तु पुनः पुष्पप्रकरशोभिते ।
कुशैरास्तीर्य्य वसुधां कृष्णाजिनकृशोत्तरीम् ॥ २ ॥
दधिकुम्भन्तु संस्थाप्य सप्तधान्यचयोपरि* ।
चतुर्थांशेन वत्सन्तु सौवर्णमुखमण्डितम्† ॥ ३ ॥
आच्छाद्य वस्त्रयुग्मेन पुष्पगन्धैस्तु पूजिताम् ।
ब्राह्मणाय कुलीनाय साधुवृत्ताय धीमते ।
क्षमादिगुणयुक्ताय‡ दद्यात्तां दधिधेनुकाम् ॥ ४ ॥
पुच्छदेशोपविष्टस्तु मुद्रिकाकर्णभूषणैः§ ।
पादुकोपानहौ छत्रं दत्त्वा मन्त्रमिमं पठेत्¶ ।
दधिक्राव्णेति मन्त्रेण दद्याद्धेनुं सुपूजिताम्‖ ॥ ५ ॥
एवं दधिमयीं धेनुं दत्त्वा राजर्षिसत्तम ।
एकाहारी** दिनं तिष्ठेद्दध्ना च नृपनन्दन ॥ ६ ॥
यजमानोवसेद्राजंस्त्रिरात्रञ्च द्विजोत्तमः ।
दीयमानाम्प्रपश्यन्ति ते यान्ति परमं पदम् ॥ ७ ॥

* धान्यस्य चोपरीति (ग) ।

† संयुक्तमिति (ग) ।

‡ क्षमाद्यगुणयुक्तायेति (ख) । क्षमादमशमोपेतायेद्द्राय प्रदापयेदिति (ग) ।

§ मात्रकैरिति (ग) ।

¶ मनुस्मरेदिति (ग) ।

‖ दधिधेनुं प्रदापयेदिति (ग) ।

** दध्याहारीति (ग) ।

य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।
सोऽश्वमेधफलं प्राप्य विष्णुलोकञ्च* गच्छति ॥ ८ ।

इति वराहपुराणे दधिधेनुमाहात्म्यं नाम षडधिकशततमोऽध्यायः ।

## सप्ताधिकशततमोऽध्यायः ।

होतोवाच ।

नवनीतमयीं धेनुं शृणु राजन्प्रयत्नतः ।
यां श्रुत्वा सर्व्वपापेभ्यो मुच्यते नात्र संशयः ॥ १ ।
गोमयेनानुलिप्तायां भूमौ गोचर्म्ममानतः ।
चर्म्म कृष्णमृगस्यैव तस्योपरि च धारयेत्* ॥ २ ।
कुम्भन्तु नवनीतस्य प्रस्थमात्रस्य धारयेत् ।
वत्सं चतुर्थभागस्य तस्यानुत्तरतो न्यसेत् ॥ ३ ।
कृत्वा विधानेन च राजसिंह
सुवर्णशृङ्गी सुमुखा च कार्य्या ।

* स इति (ग) ।

* तस्योपरि कृष्णमृगस्य च चर्म्मप्रसारितमिति (ग)

नेत्रे च तस्या मणिमौक्तिकैस्तु
कृत्वा तथान्यच्च गुड़ेन जिह्वाम्* ।
ओष्ठौ च पुष्पैश्च फलैश्च दन्ताः
प्रकल्प्य सास्नाश्च सितैश्च सूत्रैः† ॥ ४ ।
नवनीतस्तनीं राजन्निक्षुपादां‡ प्रकल्पयेत् ।
ताम्रपृष्ठां रौप्यखुरां§ दर्भरोमकृतच्छविम् ॥ ५ ।
चतुर्भिस्तिलपात्रैश्च संवृतां¶ सर्व्वतो दिशि ।
आच्छाद्य वस्त्रयुग्मेन गन्धपुष्पैरलङ्कृताम् ॥ ६ ।
दीपांश्च दिक्षु‖ प्रज्वाल्य ब्राह्मणाय निवेदयेत् ।
मन्त्रास्त एव जप्तव्याः सर्वधेनुषु ये स्मृताः ॥ ७ ।
पुरा देवासुरैः सर्वैः सागरस्य तु मन्थने ।
उत्पन्नं दिव्यममृतं नवनीतमिदं शुभम् ।
आप्यायनन्तु** भूतानां नवनीत नमोऽस्तु ते ॥ ८ ।

---

* तस्या इति (ग) ।

† जिह्वां तथा शर्करया प्रकल्प्य फलानि दन्ताः कम्बलं पट्टसूत्रमिति (ग) ।

‡ तिलपादामिति (ग) ।

§ सूत्रपुच्छामिति (ग), तत्रातः परं स्वर्णशृङ्गां रौप्यखुरां पञ्चरत्नसमन्वितामित्यधिकः पाठो वर्त्तते ।

¶ तां संवृतामिति (ग) ।

‖ दिग्भागे दीपांश्चेति (ग), तत्रातः परं वेदवेदाङ्गविदुषे आहिताग्नये द्विजात्मजामित्यधिकः पाठो वर्त्तते ।

** चेति (ग) ।

एवमुच्चार्य्य तां दद्याद्ब्राह्मणाय कुटुम्बिने।
धेनुञ्च दत्त्वा सुदुघां सोपधानां नयेद्गृहम्* ॥ ९।
हविरेवं रसञ्चैव विप्रवर्य्यस्य भूपते।
भुक्ता तिष्ठेद्दिनं राजन्धेनुदस्त्रीणि वै द्विजः॥ १०।
यः प्रपश्यति तान्धेनुं दीयमानां नरोत्तम।
सर्व्वपापविनिर्मुक्तः शिवसायुज्यतां व्रजेत्॥ ११।
पितृभिः पूर्व्वजैः सार्द्धं भविष्यद्भिश्च मानवः।
विष्णुलोकं व्रजत्याशु यावदाभूतसंप्लवम्† ॥ १२।
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः‡।
सर्व्वपापविशुद्धात्मा विष्णुलोके महीयते॥ १३।

इति वराहपुराणे नवनीतधेनुमाहात्म्यं नाम सप्ताधिकशततमोऽध्यायः।

* गृहे इति (ख)।

† यावदाहूतसंप्लवमिति (ख), (ग)।

‡ मानवैरिति (ग)।

# अष्टाधिकशततमोऽध्यायः ।

होतोवाच ।

लवणधेनुं प्रवक्ष्यामि तान्निबोध नृपोत्तम* ।
षोड़शप्रस्थसंयुक्तां धेनुं कृत्वा तु मानवः† ॥ १ ॥
वत्सं चतुर्भी राजेन्द्र इक्षुपादांश्च‡ कारयेत् ।
सुवर्ण§मयशृङ्गाणि खुरा रौप्यमया¶स्तथा ॥ २ ॥
मुखं गुड़मयस्तस्या दन्ताः फलमया नृप ।
जिह्वां शर्करया राजन् घ्राणं गन्धमयं तथा ॥ ३ ॥
नेत्रे रत्नमये कुर्य्यात्कर्णौ पत्रमयौ तथा ।
श्रीखण्डमयकाष्ठौ च|| नवनीतमयाः स्तनाः ॥ ४ ॥
सूत्रपुच्छान्ताम्रपृष्ठान्दर्भरोमां पयस्विनीम् ।
कांस्योपदोहां राजेन्द्र घण्टाभरणभूषिताम् ॥ ५ ॥
सुगन्धपुष्पधूपैश्च पूजयित्वा विधानतः ।

* महीपते इति (ग)।

† अनुलिप्ते महीपृष्ठे कृताजिनकुशोत्तरे, धेनुं लवणमयीं कृत्वा षोड़शप्रस्थसंयुतामिति (ग)।

‡ तु इति (ग)।

§ सौवर्णेति (ग)।

¶ रौप्यमयीति (ग)।

|| श्रीखण्डमयकाष्ठौ चेति (ग)।

आच्छाद्य वस्त्रयुग्मेन ब्राह्मणाय निवेदयेत्* ॥
ग्रहणे वाथ संक्रान्तौ व्यतीपाते तथायने।
द्विजाय साधुवृत्ताय वेदवेदाङ्गपारगे† ॥ ६।७।
ब्राह्मणम्पूज्य‡ विधिवत्पूर्व्वोक्तविधिना नृप।
सदक्षिणाञ्च गोपुच्छं दत्त्वा ब्राह्मणहस्तके।
इमं मन्त्रं समुच्चार्य्य ततस्तां प्रतिपादयेत् ॥ ८।
इमां गृहाण भो विप्र रुद्ररूपां नमोऽस्तु ते।
रसज्ञा सर्व्वभूतानां सर्व्वदेवनमस्कृता।
कामं पूरय मे देवि रुद्ररूपे नमोऽस्तु ते§ ॥ ९।
दत्त्वा धेनुं लवणेन एकाहञ्चैव तिष्ठति।
स्वयं त्रिरात्रं विप्रेण तथैव लवणाशिना ॥ १०।
सहस्रेण शतेनाथ स्वशक्त्या कनकेन तु।

* अतः परं (ग) पुस्तके—
नक्षत्रग्रहपीड़ासु सर्व्वकालं प्रदापयेदित्यधिकः पाठो वर्त्तते।

† (ग) पुस्तके द्विजाय साधुवृत्ताय कुलीनाय च धीमते।
वेदवेदाङ्गविदुषे श्रोत्रियायाहिताग्नये।
ईदृशाय प्रदातव्या तथाऽमत्सरिणे नृप ॥
यष्टाभिवञ्च मन्त्रन्तु पुच्छदेशोपविश्य च।
छत्रकोपानहौ देये मुद्रिकाकर्णमात्रकैः ॥
आच्छाद्य वस्त्रयुग्मेन दक्षिणां कम्बलं वदेत्।
पूर्व्वोक्तेन विधानेन स्वशक्त्या कनकेन तु ॥ इत्यधिकः पाठो वर्त्तते।

‡ पूजयित्वेति साधु।

§ कामं कामदुघे कामं लवणधेनो नमोऽस्तु ते इति (ग)।

दत्त्वेमां स्वर्गमाप्नोति यत्र देवो वृषध्वजः ॥ ११ ।
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।
मुच्यते सर्व्वपापेभ्यो रुद्रलोकञ्च गच्छति ॥ १२ ।
इति वराहपुराणे लवणधेनुमाहात्म्यं नाम अष्टाधिकशततमोऽध्यायः ।



## नवाधिकशततमोऽध्यायः ।

होतोवाच ।
अथातः सम्प्रवक्ष्यामि धेनुं कार्पासकीं* नृप ।
यत्प्रदानान्नरो याति ऐन्द्रलोकमनुत्तमम् ॥ १ ।
विषुवे त्वयने पुण्ये युगादिग्रहणे तथा ।
ग्रहपीड़ासु चोग्रासु दुःस्वप्ने रिष्टदर्शने† ॥ २ ।
पुण्येष्वायतने‡ राजंच्छुचिदेशे गवां गणे ।
गोमयेनोपलिप्तायां दर्भानास्तीर्य्य वै तिलान् ॥ ३ ।
तन्मध्ये स्थापयेद्धेनुं वस्त्रमाल्यानुलेपनाम्§ ।

---

* कार्पासमयीमिति (ग) ।

† तथा च ग्रहपीड़ासु दुःस्वप्नाद्भुतदर्शने इति (ग) ।

‡ पुण्येऽप्यायतने इति (ग) ।

§ लेपनैरिति (ग) ।

धूपदीपादिनैवेद्यैः पूजयेच्च विमत्सरः ॥ ४ ॥
उत्तमा च चतुर्भारैरर्द्धेनैव* तु मध्यमा।
भारेण चाधमा प्रोक्ता वित्तशाठ्यं विवर्ज्जयेत् ॥ ५ ॥
चतुर्थांशेन वत्सन्तु कल्पयित्वा विधानतः† ।
कर्त्तव्या रुक्मशृङ्गी तु रजतस्य खुरान्विता।
नानाफलमया दन्ता रत्नगर्भसमन्विताः ॥ ६ ॥
इत्येवं सर्व्वं सम्पूर्णां कृत्वा श्रद्धासमन्वितः।
आवाहयेत्तां कार्पासधेनुं मन्त्रैर्द्दिजातये।
दद्यादेनं धर्म्मपाणिः प्रयतः श्रद्धयाऽन्वितः ॥ ७ ॥
पूर्व्वोक्तस्तु विधिः कार्य्यो दानमन्त्रपुरःसरः ॥ ८ ॥
यथा देवगणः सर्व्वस्त्वया हीनो न वर्त्तते।
तथा उद्धर मां देवि पाहि संसारसागरात् ॥ ९ ॥

इति वराहपुराणे कार्पासधेनुमाहात्म्यं नाम नवाधिकशततमोऽध्यायः।

* तदर्द्धेन त्विति (ग)।

† कृत्वा वै वत्सन्तु परिकल्पयेदिति (ग)।

# दशाधिकशततमोऽध्यायः।

होतोवाच।

शृणु राजन्प्रवक्ष्यामि धान्यधेनुमनुत्तमाम्*।
यस्याः† सङ्कीर्त्तनादेव सा तुष्येत्पार्थितो स्वयम्॥ १॥
विषुवे चायने वापि कार्त्तिक्यान्तु विशेषतः।
यां दत्त्वा मुच्यते पापाच्छशाङ्क इव राहुणा‡॥ २॥
दशधेनुप्रदानेन यत्फलं राजसत्तम।
तत्सर्व्वमेव प्राप्नोति व्रीहिधेनुप्रदानतः§॥ ३॥
कृष्णाजिनं ततः कृत्वा प्राग्वत्सं स्थापयेद्बुधः¶।
गोमयेनानुलिप्तायां भूमौ तां परिपूजयेत्‖॥ ४॥
उत्तमा तु भवेद्धेनु**र्द्रोणैश्चापि चतुष्टयैः।
मध्यमा च तदर्द्धेन वित्तशाठ्यं न कारयेत्॥ ५॥

* दानमाहात्म्यमुत्तममिति (ग)।

† यस्येति (ग)।

‡ तदिदानीं प्रवक्ष्यामि धान्यधेनुविधिं परमिति (ग), तत्रातः परं यां दत्त्वेत्याद्यर्द्धं वर्त्तते।

§ व्रीहिधेनुप्रदानेन इति (ग)।

¶ कृष्णाजिनं समीचीनं प्राचीनं विन्यसेद्बुध इति (ग)।

‖ गोमयेनानुलिप्तायां शोभनां वस्त्रसंयुताम्।
पूजयेद्वेदिमध्ये तु वेदनिर्घोषमङ्गलैः॥ इति (ग)।

** सा च धेनुः स्यादिति (ग)।

चतुर्थांशेन वत्सन्तु कल्पयित्वा विधानतः* ।
शृङ्गन्तु पूर्व्ववत्कार्य्यं मुखं चौद्रमयं शुभम् ॥ ६ ॥
पूर्व्ववदर्च्चयित्वा† तां कृत्वा दीपार्च्चनादिकम् ।
पुण्यकालञ्च सम्प्राप्य स्नातः शुक्लाम्बरो गृही ।
त्रिः प्रदक्षिणमावृत्य दण्डवत्प्रणमेच्च ताम्‡ ॥ ७ ॥
त्वं हि विप्र महाभाग वेदवेदाङ्गपारग ।
मया दत्ताञ्च गृह्णीष्व§ प्रसीदस्व¶ त्वं द्विजोत्तम ।
प्रीयतां मम देवेशो भगवान्मधुसूदनः ॥ ८ ॥
या च लक्ष्मीस्तु गोविन्दे स्वाहा या च विभावसौ ।
शक्रे शचीति विख्याता शिवे गौरी च संस्थिता ॥ ९ ॥

* चतुर्थांशेन धेनोर्वै वत्सन्तु परिकल्पयेत् ।
कर्त्तव्यौ रुक्मशृङ्गौ तु राजतखुरसंयुतौ ।
गोमेधा कुर्व्वीत घ्राणं अगुरुं चन्दनन्तथा ॥
मुक्ताफलमया दन्ता घृतचौद्रमय मुखम् ।
प्रशस्तपत्रश्रवणं कांस्यदोहनकारिताम् ॥
इक्षुपृष्टिमयाः पादाः चौमपुच्छसमन्विताम्
नानाफलसमुपेतां रत्नगर्भसमन्विताम् ।
पादुकोपानहच्छत्रभाजनं तर्पणं तथा ॥
इत्यधिकः पाठः (ग) पुस्तके दृश्यते ।

† इत्येवं रञ्जयित्वेति (ग)।

‡ मन्त्राणामनुकीर्त्तयेदिति (ग)।

§ गृहाणेति साधु ।

¶ प्रदत्ताञ्चोपकाराय गृह्णीष्वेति (ग)।

गायत्री ब्रह्मणः प्रोक्ता ज्योत्स्ना चन्द्रे रवेः प्रभा ।
बुद्धिर्वृहस्पतेः ख्याता मेधा मुनिषु सत्तमा ॥ १० ।
तस्मात्सर्व्वमयी देवी धान्यरूपेण संस्थिता ।
एवमुच्चार्य्य तां धेनुं ब्राह्मणाय निवेदयेत् ।
दत्त्वा प्रदक्षिणं कृत्वा तं क्षमाप्य द्विजोत्तमम् ॥ ११ ।
यावच्च पृथिवी सर्व्वा वसुरत्नानि भूपते ।
तावत्पुण्यं समधिकं व्रीहिधेनोश्च तत्फलम् ॥ १२ ।
तस्मान्नरेन्द्र* दातव्या भुक्तिमुक्तिफलप्रदा ।
इहलोके च सौभाग्यमायुरारोग्यवर्द्धनम् ॥ १३ ।
विमानेनार्कवर्णेन किङ्किणीजालमालिना† ।
स्तूयमानोऽप्सरोभिश्च स याति शिवमन्दिरम्‡ ॥ १४ ।
यावच्च स्मरते जन्म तावत्स्वर्गे महीयते ।
ततः स्वर्गात्परिभ्रष्टो जम्बूद्वीपपतिर्भवेत् ॥ १५ ।
एवं हरेण चोद्गीर्णं श्रुत्वा वाक्यं नरोत्तमः ।
सर्व्वपापविशुद्धात्मा रुद्रलोके महीयते ॥ १६ ।

इति वराहपुराणे धान्यधेनुमाहात्म्यं नाम दशाधिकशततमोऽध्यायः ।

* नरेन्द्रेति (ख), राजेन्द्रेति (ग) ।

† मालिनेति (ग) ।

‡ शिवमन्दिरे इति (ग) ।

# एकादशाधिकशततमोऽध्यायः।

होतोवाच।

अथातः सम्प्रवक्ष्यामि कपिलां धेनुमुत्तमाम्।
यत्प्रदानान्नरो याति विष्णुलोकमनुत्तमम्॥ १॥
पूर्व्वोक्तेन विधानेन दद्याद्धेनुं सवत्सकाम्।
सर्व्वालङ्कारसंयुक्तां सर्व्वरत्नसमन्विताम्॥ २॥
शिरो ग्रीवा कपिलायाः सर्व्वतीर्थानि भामिनि।
पितामहनियोगाच्च निवसन्ति हि निश्चयः* ॥ ३
प्रातरुत्थाय यो मर्त्यः कपिलागलमस्तकात्।
च्युतन्तु भक्त्या पानीयं शिरसा वन्दते शुचिः॥ ४॥
स तेन पुण्यतो येन तत्क्षणाद्दग्धकिल्बिषः।
त्रिंशद्वर्षकृतं पापं दहत्यग्निरिवेन्धनम्॥ ५॥
कल्यमुत्थाय यो मर्त्यः कुर्य्यात्तासां प्रदक्षिणम्।
प्रदक्षिणीकृता तेन पृथिवी स्याद्वसुन्धरे॥ ६॥
प्रदक्षिणेन चैकेन श्रद्धायुक्तेन तत्क्षणात्।
दशजन्मकृतं पापं तस्य नश्यत्यसंशयम्॥ ७॥
कपिलायास्तु मूत्रेण स्नायाच्चैव शुचिव्रतः।
स गङ्गादिषु तीर्थेषु स्नातो भवति मानवः॥ ८॥
तेन स्नानेन चैकेन भावयुक्तेन वै नरः।

* नित्यश इति (ग)।

यावज्जीवकृतात्पापान्मुच्यते नात्र संशयः ॥ ९ ।
गोसहस्रन्तु यो दद्यादेकां वा कपिलां नरः ।
सममितत्पुरा प्राह ब्रह्मा लोकपितामहः ॥ १० ।
यथामक्षि ततोऽग्रेनमूतगन्धेन धूपयेत् ।
यावज्जिघ्रति तं गन्धं तावत्पुण्येन पूर्य्यते ॥ ११ ।
गवां कण्डूयनं श्रेष्ठं तथा च परिपालनम् ।
तुल्यं गोशतदानस्य भयरोगादिपालने ॥ १२ ।
तृणोदकानि यो दद्यात्क्षुधितेन गवाह्निकम् ।
गोमेधस्य फलं दिव्यं लभते मानवोत्तमः ॥ १३ ।
विमानैर्विविधैर्दिव्यैः कन्याभिरभितोऽर्पितैः* ।
सेव्यमानः सुगन्धैर्वै दीप्यमान इवाग्नयः† ॥ १४ ।
सुवर्णकपिला पूर्व्वं द्वितीया गौरपिङ्गला ।
तृतीया चैव रक्ताक्षी चतुर्थी गुडपिङ्गला ॥ १५ ।
पञ्चमी बहुवर्णा स्यात्षष्ठी च श्वेतपिङ्गला ।
सप्तमी श्वेतपिङ्गाक्षी अष्टमी कृष्णपिङ्गला ॥ १६ ।
नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला‡ ।
एकादशी खुरश्वेता एतासां सर्व्वलक्षणाः ॥ १७ ।
सर्व्वलक्षणसंयुक्ता सर्व्वालङ्कृतसुन्दरी ।

* चर्जितैरिति (ग) ।
† यथाग्नय इति (ग) ।
‡ श्वेतपिङ्गलेति (ग) ।

ब्राह्मणाय प्रदातव्या सर्व्वमुक्तिप्रदायिनी।
भुक्तिमुक्तिप्रदा तेषां विष्णुमार्गप्रदायिनी॥ १८।

इति वराहपुराणे कपिलामाहात्म्यं नाम एकादशाधिकशततमोऽध्यायः।

# द्वादशाधिकशततमोऽध्यायः।

होतोवाच।

अतः परं महाराज शृणूभयमुखीं ततः*।
विधानं तद्वरारोहे धरण्या कथितं पुरा।
तदहं सम्प्रवक्ष्यामि तव पुण्यफलं महत्† ॥ १।

धरण्युवाच।

या त्वया कपिला प्रोक्ता‡ पूर्व्वमुत्पादिता प्रभो।
होमधेनुः सदा पुण्या सा ज्ञेया कतिलक्षणा॥ २।
कियत्यः कपिलाः प्रोक्ताः स्वयमेव स्वयम्भुवा।
प्रसूयमाना दानेन किं पुण्यं स्याच्च माधव।
एतदिच्छाम्यहं श्रोतुं विस्तरेण जगद्गुरो॥ ३।

---

* महाराजोभयमुख्याः समासत इति (ग)।

† तावत्पुण्यफलञ्चयेदिति (ग)।

‡ नामेति (ग)।

वराह उवाच ।

शृणुष्व देवि* तत्त्वेन पवित्रं पापनाशनम् ।
यच्छ्रुत्वा सर्व्वपापेभ्यो मुच्यते नात्र संशयः ॥ ४ ॥
कपिला ह्यग्निहोत्रार्थे यज्ञार्थे च वरानने ।
उद्धृत्य† सर्व्वतेजोभिर्ब्रह्मणा निर्म्मिता पुरा ॥ ५ ॥
पवित्राणां पवित्रञ्च मङ्गलानाञ्च मङ्गलम् ।
पुण्यानां परमं पुण्यं कपिला च वसुन्धरे ॥ ६ ॥
तपसस्तप एवाग्र्यं व्रतानां व्रतमुत्तमम् ।
दानानामुत्तमन्दानं निधीनां ह्येतदव्ययम् ॥ ७ ॥
पृथिव्यां यानि तीर्थानि गुह्यान्यायतनानि च ।
पवित्राणि च पुण्यानि सर्व्वलोकेषु सुन्दरि ॥ ८ ॥
होतव्यान्यग्निहोत्राणि सायं प्रातर्द्विजातिभिः ।
कपिलाया घृतेनेह दध्ना क्षीरेण वा पुनः ॥ ९ ॥
जुह्वते‡ ह्यग्निहोत्राणि मन्त्रैश्च विविधैः सदा ।
पूजयन्नतिथींश्चैव परां भक्तिमुपागताः ॥ १० ॥
ते यान्त्यादित्यवर्णैश्च विमानैर्द्विजसत्तमाः ।
सूर्य्यमण्डलमध्यात्तु§ ब्रह्मणा निर्मिता पुरा¶ ॥ ११ ॥

* भद्रे इति (ग) ।
† उद्धृतेति (ग) ।
‡ जुह्वतीति साधु ।
§ सूर्य्यमण्डलमध्येनेति (ग) ।
¶ तु सेति (ग) ।

कपिला या पिङ्गलाक्षी* सर्व्वसौख्यप्रदायिनी।
सिद्धिबुद्धिप्रदा धेनुः कपिलानन्तरूपिणी॥ १२॥
पूर्व्वोक्ता यास्तु कपिलाः† सर्व्वलक्षणलक्षिताः।
सर्व्वा ह्येता महाभागास्तारयन्ति न संशयः॥ १३॥
सङ्गमेषु प्रशस्ताश्च सर्व्वपापविनाशनाः‡।
अग्निपुच्छा अग्निमुखी अग्निलोमानलप्रभा।
तथाग्नाग्री तथा देवी सुवर्णाख्या प्रवर्त्तते॥ १४॥
गृहीत्वा कपिलां शूद्रान् कामतः सदृशीं पिबेत्।
पतितः स हि विज्ञेयश्चाण्डालसदृशोऽधमः॥ १५॥
तस्मान्न प्रतिगृह्णीयाच्छूद्राद्विप्रः प्रतिग्रहम्।
दूरात्ते परिहर्त्तव्याः श्वभिस्तुल्या इवाध्वरे॥ १६॥
पर्व्वकाले§ हि सर्व्वे वै¶ वर्ज्जिताः पितृदैवतैः
असम्भाष्याप्रतिग्राह्याः शूद्रास्ते पापकर्मणः॥ १७॥
पिबन्ति यावत्कपिलां यावत्तेषां पितामहाः।
भूमेर्मलं समश्नन्ति जायन्ते विड्भुजश्चिरम्॥ १८॥
तासाङ्क्षीरं घृतं वापि नवनीतमथापि वा।
उपजीवन्ति ये शूद्रास्तेषाङ्गतिमतः शृणु॥ १९॥

* पिङ्गलाक्षेति (ग)।

† कपिला तत्र इति (ख)। एतादृशी समाख्याता कपिला ते वरानने इति (ग)।

‡ प्रणाशना. इति (ख)।

§ सर्व्वकाले इति (क), (ख)।

¶ ते सर्व्वे इति (ग)।

कपिलाजीविनः* शूद्राः क्रूरा गच्छन्ति रौरवम् ।
रौरवे तु महारौद्रे† वर्षकोटिगतन्ध्रवं ॥ २० ।
ततोविमुक्ताः कालेन शुनोयोनिं व्रजन्ति हि‡ ।
शुनोयोन्या विमुक्तास्तु विष्ठाभुक्कृमयस्ततः§ ॥ २१ ।
विष्ठास्थानेषु पापिष्ठः सुदुर्गन्धिषु नित्यशः ।
भूयोभूयोजायमानस्ततोन्तारं न विन्दति ॥ २२ ।
ब्राह्मणश्चैव यो विद्वान् कुर्य्यात्तेषां प्रतिग्रहम् ।
ततः प्रभृत्यमेध्यान्तः पितरस्तस्य शेरते ॥ २३ ।
न तं विप्रन्तु सम्भाषयेच्च¶ चैवैकासनं विशेत् ।
स नित्यं वर्ज्जनीयो हि दूरात्तु ब्राह्मणैर्धरे‖ ॥ २४ ।
यस्तेन सह सम्भाषेत्तथा चैकासनं व्रजेत् ।
प्राजापत्यञ्चरेत्कृत्स्नं तेन शुध्यति स द्विजः ॥ २५ ।
एकस्य गोप्रदानस्य सहस्रांशेन पूर्य्यते ।
किमन्यैर्बहुभिर्दानैः कोटिसंख्यानविस्तरैः ॥ २६ ।
श्रोत्रियाय दरिद्राय सुवृत्तायाहिताग्नये ।
आसन्नप्रसवाम्धेनुन्दानार्थं प्रतिपालयेत् ।

* कपिलोपजीविन इति बहुषु पाठस्तत्र छन्दोदोषः ।

† रौरवेषु च पच्यन्त इति (ग) ।

‡ त इति (ग) ।

§ विष्ठायां जायते कृमिरिति (ग) ।

¶ सम्भाषयेदिति शुद्धम । एवं परत्रापि ।

‖ ब्राह्मणोऽध्वरे इति (ग) ।

कपिलाईप्रसूता वै दातव्या च द्विजन्मने ॥ २७ ।
जायमानस्य वत्सस्य मुखं योन्यां प्रदृश्यते ।
तावत्सा पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ २८ ।
धेन्वा यावन्ति रोमाणि सवत्साया वसुन्धरे ।
तावत्योवर्षकोट्यस्तु ब्रह्मवादिभिरर्चिताः ॥ २९ ।
वसन्ति ब्रह्मलोके वै ये नित्यं कपिलाप्रदाः* ॥ ३० ।
सुवर्णशृङ्गीं यः कृत्वा रौप्ययुक्तखुरां तथा ।
ब्राह्मणस्य करे दत्त्वा सुवर्णं रौप्यमेव च ।
कपिलायास्तदा पुच्छं ब्राह्मणस्य करे न्यसेत् ॥ ३१ ।
उदकञ्च करे दत्त्वा वाचयेच्छुद्धया गिरा† ।
ससमुद्रवना तेन सशैलवनकानना ।
रत्नपूर्णा भवेद्दत्ता पृथिवी नात्र संशयः ॥ ३२ ।
पृथिवीदानतुल्येन दानेनैतेन वै नरः ।
नन्दितो याति पितृभिर्विष्णाख्यं परमम्पदम् ॥ ३३ ।
ब्रह्मस्वहारी वा गोघ्नो भ्रूणहा पापदेहकः‡ ।
महापातकयुक्तोऽपि वञ्चको ब्रह्मदूषकः ॥ ३४ ।
निन्दको ब्राह्मणानाञ्च तथा कर्म्मविदूषकः§ ।

* ब्रह्मलोके निवसन्ति ये च वै कपिलाप्रदा इति (ग)।

† दिने इति (ग)।

‡ ब्रह्मस्वहारिणो ये वै, ब्रह्महत्यावदूषक इति (ग)।

§ उपदूषक इति (ग)।

महापातकयुक्तोऽपि गवां दानेन शुध्यति ॥ ३५ ।
यश्चोभयमुखीं दद्यात्प्रभूतकनकान्विताम् ।
तद्दिनं पायसाहारं पयसा वापि वा भवेत्* ॥ ३६ ।
सुवर्णस्य सहस्रेण तदर्द्धेनापि भामिनि ।
तस्याप्यर्द्ध†शतेनाथ पञ्चाशच्च ततोऽर्द्धकम्‡ ।
यथाशक्त्या प्रदातव्या वित्तशाठ्यं विवर्ज्जयेत् ॥ ३७ ।
इमां गृह्णा§भयमुखीमुभयत शर्मोऽस्तु वै ।
दद्दे वंशविवृद्ध्यर्थं सदा स्वस्तिकरी भव ॥ ३८ ।
प्रतिगृह्णामि त्वा धेनो¶ कुटुम्बार्थे विशेषतः ।
शुभं भवतु मे नित्यं देवधात्रि नमोऽस्तु ते‖ ॥ ३९ ।
श्रीं द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु** ।
क इदं कस्मा अदादिति जपित्वा वै वसुन्धरे ।
विसृज्य ब्राह्मणं देवि तां धेनुं तद्गृहं नयेत् ॥ ४० ।
एवं प्रसूयमानां यो गान्ददाति वसुन्धरे ।
पृथिवी तेन दत्ता स्यात्सद्वीपा न संशयः ॥ ४१ ।

---

* पयसा वाऽपि निर्वपेदिति (ग) ।

† शस्याप्यर्द्ध इति (ख) ।

‡ तदर्द्धत इति (ग) ।

§ गृहाणेति साधु ।

¶ प्रतिगृह्णाति ता धेनुमिति (ग) ।

‖ स्वस्ति भवतु मे नित्यं रुद्राक्षेति नमोऽनम इति (ग) ।

** द्यौस्त्वाददात्विति मन्त्रेण कपिलां प्रतिगृह्णाति इति (ग) ।

वदन्ति तां चन्द्रसमानवक्त्रां
प्रतप्तजाम्बूनदतुल्यवर्णाम् ।
महासितत्त्वां तनुवृत्तमध्यां
सेवन्त्यजस्रं कुलितां हि देवाः ॥ ४२ ।
प्रातरुत्थाय यो मर्त्यः कल्पश्चेदं समाहितः ।
जितेन्द्रियः शुचिर्भूत्वा पठेद्भक्त्या समन्वितः ॥ ४३ ।
त्रिः सदावर्त्तनं कृत्वा पापं वर्षकृतञ्च यत् ।
नश्यते तत्क्षणादेव वायुना पांशवो यथा ॥ ४४ ।
श्राद्धकाले पठेयस्तु इदं पावनमुत्तमम् ।
तस्यान्नं संस्कृतन्तद्धि पितरोऽश्नन्ति धीमतः ॥ ४५ ।
अमायां वाथ यः कश्चिद्द्विजानामग्रतः पठेत् ।
पितरस्तस्य तृप्यन्ति वर्षाणां शतमेव च ॥ ४६ ।
यश्चैतच्छृणुयान्नित्यं तद्गतेनान्तरात्मना ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥ ४७ ।

होतोवाच ।

इदं रहस्यं राजेन्द्र वराहेण पुरातनम् ।
धरण्यै कथितं राजन्धेनुमाहात्म्यमुत्तमम् ।
मया ते कथितं सर्व्वं सर्व्वपापप्रणाशनम् ॥ ४८ ।
द्वादश्यां माघमासस्य शुक्लायां तिलधेनुदः ।
सर्व्वकामसमृद्धार्थो वैष्णवं पदमाप्नुयात् ॥ ४९ ।
द्वादश्यां श्रावणे मासि शुक्लायां राजसत्तम ।
मत्स्यधेनुर्दातव्या सहिरण्या नृपोत्तम ॥ ५० ।

सर्व्वदा सर्व्वधेनूनां प्रदानं राजसत्तम।
सर्व्वपापप्रशमनं भुक्तिमुक्तिप्रदायकम्* ॥ ५१ ।
एतत्ते सर्व्वमाख्यातं समासाद्बहुविस्तरम्।
धेनूनां फलमुद्दिश्य सर्व्वकामप्रदं नृणाम्† ॥ ५२ ।
अथवा पीड्यसेऽत्यन्तं क्षुधया पार्थिवोत्तम।
इदानीं कार्त्तिकी चेयं वर्त्तते च नराधिप‡ ॥ ५३ ।
ब्रह्माण्डं सर्व्वसम्पन्नं भूतरत्नौषधैर्युतम्।
देवदानवयक्षैश्च§ युक्तमेतत्सदा विभो ॥ ५४ ।
एतद्धेममयं कृत्वा सर्व्ववीजसमान्वितम्।
सरत्नं पुरुषः कृत्वा कार्त्तिक्यां द्वादशीदिने ॥ ५५ ।
अथवा पञ्चदश्याञ्च कार्त्तिकस्य विशेषतः।
पुरोहिताय गुरवे दद्याद्भक्तिसमन्वितः¶ ॥ ५६ ।
ब्रह्माण्डोदरवर्त्तीनि यानि भूतानि पार्थिव।
तानि दत्तानि तेन स्युः समासात्कथितं तव ॥ ५७ ।
यो यज्ञे यजते राजन्सहस्रशतदक्षिणैः।

* (ग) पुस्तके ४० श्लोकात् ५० श्लोकपर्य्यन्तो ग्रन्थांशो नास्ति।

† नित्यादिसर्व्वधेनूनां प्रदानं राजसत्तम इति (ख)। धेनूनां फलमुद्दिश्य ब्रह्मणा लोककर्त्तृणेति (ग)।

‡ श्लोकोऽयं (ग) पुस्तके नास्ति।

§ चेति (ग)।

¶ दापयेद्भक्तिमान्नर इति (ग)।

सैकदेशो यजे*त्तस्य ब्रह्माण्डस्य विशेषतः ॥ ५८ ।
यः पुनः सकलञ्चेदं ब्रह्माण्डं यजते नरः ।
तेन यष्टं हुतं दत्तं पठितं कीर्त्तितं भवेत् ॥ ५९ ।
एवं श्रुत्वा ततो राजा हेमकुम्भप्रकल्पितम् ।
ब्रह्माण्डमृषये प्रादात्सपिधानञ्च तत्क्षणात्† ॥ ६० ।
सर्व्वकामैः सुसंवीतो ययौ स्वर्गं नराधिपः ।
तस्मात्त्वमपि राजेन्द्र तद्दत्त्वा तु सुखी भव ॥ ६१ ।
एवमुक्तो वसिष्ठेन सोऽप्येवमकरोन्नृपः‡ ।
जगाम परमां सिद्धिं यत्र गत्वा न शोचति ॥ ६२ ।

वराह उवाच ।

इयं ते कथिता देवि संहिता सर्व्वकामिका ।
वराहाख्या वरारोहे सर्व्वपातकनाशिनी ॥ ६३ ।
सर्व्वज्ञादुत्थिता चेयं ततो ब्रह्मा बुबोध ह ।
ब्रह्मा स्वसूनवे§ प्रादात्पुलस्त्याय महात्मने ॥ ६४ ।
सोऽपि रामाय च प्रादा¶द्भार्गवाय महात्मने ।
असावपि स्वशिष्याय‖ प्रादादुग्राय धारिणि ॥ ६५ ।

* यजतेति साधु ।

† गुरोः क्षणादिति (ग) ।

‡ (ग) पुस्तके ६० श्लोकस्य परार्द्धं, ६१ श्लोकस्य पूर्व्वार्द्धञ्च न स्तः ।

§ ब्रह्माऽपि स्वसुते इति (ग) ।

¶ पुलस्त्योऽपि प्रददाविति (ग) ।

‖ वशिष्ठायेति (क), (ख) ।

उभयोऽपि समवे प्रादादेष वः कीर्त्तितो मया* ।
सम्बन्धः पूर्व्वकल्पीयो द्वितीयं शृणु साम्प्रतम् ॥ ६६ ।
सर्व्वशास्त्रज्ञवानस्मि त्वत्र मर्त्ता धराधरे ।
त्वत्तश्च तपसा सिद्धा† वेत्स्यन्ते‡ कपिलादयः ॥ ६७ ।
क्रमेण यावद्व्यासेन ख्यातमेतद्भविष्यति ।
तस्यापि शिष्यो भविता नाम्ना वै रोमहर्षणिः ।
असौ शुनकपुत्राय§ कथयिष्यति नान्यथा ॥ ६८ ।
अष्टादश पुराणानि वेद द्वैपायनो गुरुः ।
ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतन्तथा ॥ ६९ ।
तथान्यं नारदीयञ्च मार्कण्डेयञ्च सप्तमम् ।
आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा ॥ ७० ।
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम् ।
वाराहं द्वादशं प्रोक्तं स्कान्दञ्चापि त्रयोदशम् ॥ ७१ ।
चतुर्द्दशं वामनकं कौर्म्मं पञ्चदशं स्मृतम् ।
मात्स्यञ्च गारुड़ञ्चैव ब्रह्माण्डञ्च ततः परम् ॥ ७२ ।
य एतत्पाठयेद्भक्त्या कार्त्तिक्यां द्वादशीदिने ।

* एषोऽपि परिकीर्त्तित इति (ग) ।

† तपसा युक्ता इति (ग) ।

‡ वेत्स्यन्तीति साधु ।

§ शुनकपुत्रस्येति (क) ।

तस्य नूनं भवेत्पुत्रो ह्यपुत्रस्यापि धारिणि ॥ ७३ ।
यस्येदं तिष्ठते* गेहे लिखितं पूज्यते सदा ।
तस्य नारायणो देवः स्वयं तिष्ठति धारिणि ॥ ७४ ।
यश्चैतच्छृणुयाद्भक्त्या नैरन्तर्य्येण मानवः ।
श्रुत्वा तु पूजयेद्यस्तु† शास्त्रं वाराहसंज्ञितम् ।
सर्व्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ ७५ ।

इति वराहपुराणे श्वेतोपाख्यानं नाम द्वादशाधिकशततमोऽध्यायः ।

---

* तिष्ठतीति साधु ।

† यो वै इति (ख) । (ग) पुस्तकेऽत्र अधिकः पाठो वर्त्तते यथा—
श्रुत्वा तु पूजयेच्छास्त्रं तथा विष्णुं सनातनम् ।
गन्धैः पुष्पैस्तथा वस्त्रैर्ब्राह्मणानाञ्च तर्पणैः ।
यथाशक्त्या नृपो ग्रामैः पूजयेद्दत्येकं धरे ॥ इति ।

# त्रयोदशाधिकशततमोऽध्यायः । *

स तेन सान्त्वितायां वै पृथिव्यां यः समागतः ।
सनत्कुमारस्तत्रैवे दृष्ट्वा तां संस्थितां महीम् ।
स्वस्तिवाच्याह पुण्याये प्रत्युवाच वसुन्धराम् ॥ १ ॥

सनत्कुमार उवाच ।

यं दृष्ट्वा वर्द्धसे देवि त्वञ्च यस्यासि माधवि ।
विष्णुना धार्य्यमाणा च किं त्वया दृष्टमद्भुतम् ॥ २ ॥
एतदाचक्ष्व तत्त्वेन यत्ते हरिमुखाच्छ्रुतम् ।
ब्रह्मपुत्रवचः श्रुत्वा पृथिवी वाक्यमब्रवीत् ॥ ३ ॥

* (ख) पुस्तके एतदध्यायप्रारम्भे ओं नमो वराहाय नमो ब्रह्मपुत्राय सनत्कुमाराय नम इत्यधिकः पाठोऽस्ति (ग) पुस्तके प्रथमश्लोकार्द्धपर्य्यन्तमन्यथैव पाठः । यथा—

नमस्तस्मै वराहाय लीलयोद्धरते महीम् ।
खुरमध्यगतो यस्य मेरुः खणखणायते ॥
दंष्ट्राग्रेणोद्धृता गौरुदधिपरिवृता पर्व्वतैर्निम्नगाभि-
र्भक्तानां भातिहन्तो भुवनककटग्राह्यान्तकः क्रोडरूपी ।
विष्णुः सर्व्वेश्वरोऽयं यमिह कृतमना मोक्षदा प्राप्नुवन्ति
त्यक्तात्मानोऽनवाप्यं प्रभवतु मुदितारातिपक्षक्षितीशम् ॥
यस्मिन् काले क्षितिः पूर्व्वकल्पे वाराहमूर्त्तिना ।
उद्धृता च यथा भक्त्या पप्रच्छ परमेश्वरम् ॥

धरण्युवाच ।

कल्पे कल्पे भवानेव मां समुद्धरते भवान् ।
न चाद्युष्टं ते मूर्त्तिमीदृशीं नाथ केशव ॥

धरण्युवाच।

यद्गुह्यं स मया पृष्टो यच्च मे सम्प्रभाषितम्।
शृणु तत्त्वेन विप्रेन्द्र गुह्यं धर्म्मं महौजसम्॥ ४।
भगवत्प्रोक्तधर्म्मेषु यद्गुह्यं कथयाम्यहम्।
तेन मे कथितं ह्येतत्संसारात्तु विमोचनम्।
विष्णुभक्तेन यत्कार्य्यं यत्क्रिया परितिष्ठता॥ ५।
उवाच परमं गुह्यं धर्म्माणां व्यासनिश्चयम्।
अयं धर्म्मो मया ह्येतच्छ्रुते धर्म्मे सनातने॥ ६।
ततो महीवचः श्रुत्वा ब्रह्मपुत्रो महातपाः।
कोकामुखे मम चेत्रं जपन्तो ब्रह्मवादिनः॥ ७।
तान्सर्व्वानानयामास यत्र देवी व्यवस्थिता।
सनत्कुमारः पूतात्मा प्रत्युवाच महीं प्रति॥ ८।
यन्मया पूर्व्वमुक्तासि कथयस्व वरानने।
अप्रमेयगतिश्चैव धर्म्ममाचक्ष्व तत्त्वतः॥ ९।
ततस्तस्य वचः श्रुत्वा प्रणम्य ऋषिपुङ्गवम्।
उवाच परमप्रीता धात्री मधुरया गिरा*॥ १०।

धरण्युवाच।

शृण्वन्तु ऋषयः सर्व्वे यत्तद्विष्णुमुखाच्छ्रुतम्।
बाढमित्येव तां देवि स्वस्ति ब्रूहीति सोऽब्रवीत्॥ ११।
नष्टचन्द्रानिले लोके नष्टभास्करतारके।

* परमया गिरेति (ख)।

स्तम्भिताश्च दिशः सर्व्वा न प्राज्ञायत किञ्चन ॥ १२ ॥
न वाति पवनस्तत्र नैव चाग्निर्न विद्युतः ।
न किञ्चित्तत्र विद्येत न तारा न च रश्मयः* ॥ १३ ॥
न चैवाङ्गारकस्तत्र न शुक्रो न बृहस्पतिः ।
शनैश्चरो बुधो नाम न चेन्द्रो धनदो यमः ॥ १४ ॥
वरुणोऽपि न विद्येत नान्ये केचिद्दिवौकसः ।

* वेदांश्चैव नष्टांश्च मत्स्यो भूत्वा रसातलम् ।
प्रविश्य लब्धवान् कृष्ण ब्रह्मणे दत्तवानसि ।
अन्यद्वै कूर्मरूपत्वं [illegible] मथने ।
धृतवानसि काष्ठेन मन्दरं मधुसूदन ।
पुनर्वाराहरूपेण मां मग्नाञ्च रसातलं ।
उज्जहारैकदंष्ट्रेण भवानेव महार्णवात्
[illegible]ऽर्हिरण्यकशिपुर्वरदानेन दर्पितः ।
भवानपि नृसिंहेन वपुषाख्यात शासनः ।
पुनर्निःक्षत्ररूपेण त्वयाऽहं विकृता पुरा ।
जामदग्न्येन रामेण त्वया दृष्टा सकृत् प्रभो ।
पुनश्च रावणोऽन्तः क्षपितं स्वेन तेजसा ।
बलिश्च बद्धो भगवन् त्वया वामनरूपिणा ।
न च जानाम्यहं देव तव किञ्चिद्विचेष्टितम् ।
उद्धृत्य मां कथं देव [illegible] किञ्च कारणम् ॥
स्तब्धा किमादिशः सर्व्वा न प्राज्ञायत किञ्चन ।
न वाति पवनस्तत्र नचैवाग्निर्न वाति च ॥
चंद्रमाश्च न विद्यन्ते न नक्षत्रा न वा ग्रहाः । इति (ग) ।

वर्ज्जयित्वा त्रयो* देवान्ब्रह्मविष्णुमहेश्वरान् ॥ १५ ।
पृथिवी भारसन्तप्ता ब्रह्माणं शरणं गता ।
गत्वा च शरणं देवी दैन्यं वदति माधवी ॥ १६ ।
प्रसीद मम देवेन्द्र मग्नाहं भारपीड़िता ।
सपर्व्वतवनैः सार्द्धं मां तारय पितामह ॥ १७ ।
पृथिव्या वचनं श्रुत्वा ब्रह्मा लोकपितामहः ।
मुहूर्त्तं ध्यानमास्थाय पृथिवीन्तामुवाच ह ॥ १८ ।
नाहं तारयितुं शक्तो विषमस्थां वसुन्धरे ।
लोकनाथं सुरश्रेष्ठमादिकर्त्तारमञ्जसा ॥
लोकेशं धन्विनं श्रेष्ठं† याहि मायाकरण्डकम् ।
सर्व्वेषामेव नः कार्य्यं यच्च किञ्चित्प्रवर्त्तते ॥ १९।२० ।
सर्व्वांस्तारयितुं शक्तः किं पुनस्त्वां वसुन्धरे ।
अनन्तशयने देवः शयानं योगशायिनम् ॥ २१ ।
ततः कमलपत्राक्षी नानाभरणभूषिता ।
कृताञ्जलिपुटा देवी प्रसादयति माधवम् ॥ २२ ।

धरण्युवाच‡ ।

अहं भारसमायुक्ता ब्रह्माणं शरणङ्गता ।
प्रत्याख्याता भगवता तेनाप्युक्तमिदं वचः ॥ २३ ।

* त्रीनिति साधु ।

† कृष्णमिति (ग) ।

‡ एष पाठः (ग) पुस्तके नास्ति ।

नाहं तारयितुं शक्तः सुश्रोणि व्रज माधवम् ।
स त्वान्तारयितुं शक्तो मग्नासि यदि सागरे ॥ २४ ।
प्रसीद मम देवेश लोकनाथ जगत्प्रभो* ।
भक्त्या त्वां शरणं यामि† प्रसीद मम माधव ॥ २५ ।
त्वमादित्यश्च चन्द्रश्च त्वं यमो धनदस्तु वै ।
वासवो वरुणश्चासि अग्निर्मारुत एव च ॥ २६ ।
अचरश्च चरश्चासि त्वं दिशो विदिशो भवान् ।
मत्स्यः कूर्म्मो वराहश्च नरसिंहोऽसि वामनः ॥ २७ ।
रामो रामश्च कृष्णश्च बुद्धः कल्की महात्मवान् ।
एवं पश्यसि योगिन शृगुते त्वं महायशाः ॥ २८ ।
युगायुगसहस्राणि व्यतीतान्यसि संस्थितः ।
पृथिवी वायुराकाशमापोज्योतिश्च पञ्चमम् ।
शब्दस्पर्शस्वरूपोऽसि रसोगन्धोऽसि नो भवान्‡ ॥ २९ ।
सग्रहाणि च ऋक्षाणि कला काष्ठा मुहूर्त्तकाः§ ।
ज्योतिश्चक्रं ध्रुवश्चासि सर्व्वेषु द्योतते भवान् ॥ ३० ।
मासः पक्षमहोरात्र¶मृतुः संवत्सराण्यपि ।

* जगत्पते इति (ग) ।

† भक्ताया: शरणायाश्चेति (ग) ।

‡ ज्योतिश्चक्रं ध्रुवश्चाऽसि सर्व्वेषु द्योतते भवानिति (क), (ख) ।

§ सग्रहा ये च नक्षत्रा कला काष्ठमुहूर्त्तका इति (ग) ।

¶ पक्षः, अहोरात्रः इति साधु ।

कला काष्ठापि* षण्मासाः षड्सायापि संयमः† ॥ ३१ ॥
सरितः सागराश्च त्वं‡ पर्व्वताश्च महोरगाः।
त्वं मेरुर्मन्दरो विन्ध्यो मलयो दर्दुरो भवान् ॥ ३२ ॥
हिमवान्निषधश्चासि सचक्रोऽसि वरायुधः।
धनुषाञ्च§ पिनाकोऽसि सांख्ययोगोऽसि¶ चोत्तमः ॥ ३३ ॥
परम्परोऽसि लोकानां नारायणः परायणः।
संक्षिप्तश्चैव विस्तारो गोप्ता यज्ञश्च शाश्वतः‖ ॥ ३४ ॥
यज्ञानाञ्च महायज्ञो यूपानामसि संस्थितः।
वेदानां सामवेदोऽसि साङ्गोपाङ्गो महाव्रतः ॥ ३५ ॥
गर्ज्जनं वर्षणञ्चासि त्वं वेधा अन्नतान्नते** ।
अमृतं सृजसे विष्णो येन लोकानधारयत् ॥ ३६ ॥
त्वं प्रीतिस्त्वं परा प्रीतिः पुराणः पुरुषो भवान्।
धेयाधेयं जगत्सर्व्वं यच्च किञ्चित्प्रवर्त्तते ॥ ३७ ॥
सप्तानामपि लोकानां त्वं नाथस्त्वमसङ्गहः।

* ऋतवश्चापीति (ग)।

† संयुत इति (ग)।

‡ सागरश्चासीति (ग)।

§ धनुःषु चेति (ग)।

¶ योगः सांख्योऽसीति (ग)।

‖ क्षेप्ता च वै भवानिति (ग)।

** त्वञ्च धामा भूतानामिति इति (ग)।

त्वञ्च कालश्च मृत्युश्च त्वं भूतो भूतभावनः ॥ ३८ ॥
आदिमध्यान्तरूपोऽसि मेधा बुद्धिः स्मृतिर्भवान् ।
आदित्यस्त्वं युगावर्त्तास्त्वं तपस्वी महातपाः ॥ ३९ ॥
अप्रमाणः प्रमेयोऽसि ऋषीणाञ्च महानृषिः ।
अनन्तश्चासि नागानां सर्पाणामसि* तक्षकः ॥ ४० ॥
उद्वहः प्रवहश्चासि वरुणो वारुणो भवान् ।
क्रीड़ाविक्षेपणश्चासि गृहेषु गृहदेवताः† ॥ ४१ ॥
सर्व्वात्मकः‡ सर्व्वगतो वर्द्धनो मन एव च ।
युगमन्वन्तरे चापि वृक्षाणाञ्च वनस्पतिः ॥ ४२ ॥
अश्वासि त्वञ्च देवेश दोषहन्तासि माधव§ ।
गरुड़ोऽसि महात्मानं वहसि त्वं परायणः ॥ ४३ ॥
दुन्दुभिर्नेमिघोषैश्च आकाशममलोऽ¶ भवान् ।
जयश्च विजयश्चासि गृहेषु गृहदेवताः ॥ ४४ ॥
सर्व्वात्मकः सर्व्वगतश्चेतनो मन एव च ।
भगस्त्वं विषलिङ्गश्च परस्त्वं परमात्मकः ॥ ४५ ॥

* मपीति (ग) । श्रीमद्भगवद्गीतायामप्येतदर्द्धं वर्त्तते ।

† एष श्लोको (ग) पुस्तके नास्ति ।

‡ अतः परं (ग) पुस्तके—
शाङ्गस्त्वं विद्युतीनाञ्च विद्युतानां महाद्युतिरित्यधिकः पाठो वर्त्तते ।

§ अण्डजोद्भिज्जस्वेदानां जरायूनाञ्च माधवेति (ग) ।

¶ आकाशगगन इति (ग) ।

सर्व्वभूतनमस्कार्य्यो नमो देवो नमो नमः* ।
आदिकालात्मकः कृष्णः सर्व्वलोकात्मको विभुः† ॥ ४६ ।
य इदं पठते स्तोत्रं केशवस्य दृढ़व्रतः ।
व्याधितो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ ४७ ।
अपुत्रो लभते पुत्रं दरिद्रो धनमाप्नुयात् ।
अभार्य्यो लभते भार्य्यामपतिः पतिमाप्नुयात् ॥ ४८ ।
उभे सन्ध्ये पठेद्यस्तु माधवस्य महात्मकम् ।
स गच्छेद्विष्णुलोकञ्च‡ नात्र कार्य्या विचारणा ॥ ४९ ।
एवन्तु§ अत्तरोक्तोऽपि भवे तु परिकल्पना ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ५० ।

इति वराहपुराणे विष्णुस्तवनं नाम त्रयोदशाधिकशततमोऽध्यायः ।

* (ग) पुस्तकेऽतः परं—

मां त्वं शरणमसि त्रातुं लोकनाथ इत्याद्यधिकमस्तीति (ग) ।

† आदिकालात्मकं ह्येतत्सर्व्वपापहरं शिवमिति (ग) ।

‡ ह्येति (ग) ।

§ अथन्त्विति (ग) ।

# चतुर्द्दशाधिकशततमोऽध्यायः ।

वराह उवाच ।

संस्तूयमानो भगवान्मुनिभिर्म्मन्त्रवादिभिः ।
तुष्टो नारायणो देवः केशवः परमो विभुः ॥ १ ।
ततो ध्यानं समास्थाय दिव्यं योगयश्च माधवः ।
मधुरं स्वरमास्थाय प्रत्युवाच वसुन्धराम् ॥ २ ।
तव देवि प्रियार्थाय भक्त्या यं त्वं व्यवस्थिता* ।
अहं त्वां धारयिष्यामि सशैलवनकाननाम् ।
ससागरां ससरितां सप्तद्वीपसमन्विताम् ॥ ३ ।
एवमाश्वासयित्वा† तु वसुधां स च माधवः ।
रूपं सङ्कल्पयामास वाराहं सुमहौजसम् ॥ ४ ।
षट् सहस्राणि चोच्छ्रायो विस्तारेण पुनस्त्रयः ।
एवं नवसहस्राणि योजनानां विधाय च ॥ ५ ।
वामया दंष्ट्रया गृह्य‡ उज्जहार च मेदिनीम् ।
सपर्व्वतवनाकारां सप्तद्वीपां सपत्तनाम्§ ॥ ६ ।

---

* अतः परं (ग) पुस्तके—

कारयिष्यामि ते सर्व्वं यत्ते हृदि व्यवस्थितम् ।

इत्यधिकः पाठो वर्त्तते ।

† आश्वासयित्वेति आर्षम्, आश्वास्येति साधु ।

‡ गृह्येति आर्षं, गृहीत्वेति साधु ।

§ (ग) पुस्तके एतदर्द्धं परश्लोकस्य पूर्व्वार्द्धंञ्च न स्तः ।

नगा विलग्नाः पतिताः केचिद्दिग्नानसंश्रिताः ।
शोभन्ते च विचित्राङ्गमेघाः सन्ध्यागमे यथा* ॥ ७ ।
चन्द्रनिर्म्मलसङ्काशा वराहमुखसंस्थिताः ।
शोभन्ते† चक्रपाणेश्च मृणालं कर्द्दमे यथा ॥ ८ ।
एवं हि धार्य्यमाणा सा पृथिवी सागरान्विता ।
वर्षाणाञ्च सहस्रं हि वज्रदंष्ट्रेण साधुना ॥ ९ ।
तस्यामेव तु कालस्य परिमाणं युगेषु च ।
एकसप्ततिमे कल्पे कर्द्दमोऽयं प्रजापतिः ॥ १० ।
ततः पृथिव्या देवश्च भगवान्विष्णुरव्ययः ।
अन्योन्याभिमताश्चैव वाराहे कल्प उत्तमे ॥ ११ ।
सा गौः स्तुवति‡ तच्चैव पुराणं परमव्ययम् ।
योगेन परमेणैव शरणञ्चैव गच्छति ॥ १२ ।
आधारः कीदृशो देव उपयोगश्च कीदृशः ।
काले काले च देवेश कर्म्मणश्चापि कीदृशः ॥ १३ ।
कीदृशी पश्चिमा सन्ध्या कीदृशी ह्यर्द्धरात्रतः ।
शेषाः समानास्त्वा देव ये तु कर्म्माणि कुर्व्वते ॥ १४ ।
किन्नु संस्थापनं देव आवाहनविसर्ज्जने ।
अगुरुङ्गन्धधूपञ्च प्रमाणं§ गृह्यसे कथम् ॥ १५ ।

---

* मेघवर्णमयास्तथेति (ग) ।

† निर्म्मलमिति (ख) ।

‡ स्तुवतीति आर्षं, स्तौति स्तवीतीति वा साधु ।

§ प्रापणमिति (ग) ।

कथं पाद्यञ्च गृह्णासि स्थापनालेपनानि च ।
कथं दीपश्च दातव्यः कन्द*मूलफलानि च ॥ १६ ॥
आसनं शयनञ्चैव किङ्कर्म्मणि विधीयते ।
कथं पूजाधिकर्त्तव्या प्राणास्तत्र च वै कति ॥ १७ ॥
पश्चिमा पूर्व्वसन्ध्यायां किं पुण्यञ्चापि† तत्र वै ।
शरदि कीदृशं कर्म्म शिशिरे कर्म्म कीदृशम् ॥ १८ ॥
वसन्ते कीदृशं कर्म्म ग्रीष्मे किङ्कर्म्म कारयेत् ।
प्रावृट्काले च किङ्कर्म्म वर्षान्ते किञ्च कारयेत् ॥ २९ ॥
यानि तत्रोपयोग्यानि पुष्पाणि च फलानि च ।
कर्म्मण्यास्ते अकर्म्मण्या ये च शास्त्रवहिष्कृताः ॥ २० ॥
किङ्कर्म्मणा भागवता यावद्गच्छति माधवः ।
कथं कर्म्म न चान्येषु अतिगच्छति कीदृशम् ॥ २१ ॥
अर्च्चायां किं प्रमाणन्तु स्थापनञ्चापि कीदृशम् ।
परिमाणं कथं देव उपवासश्च कीदृशः ॥ २२ ॥
पीतकं शुक्लरक्तं वा कथं गृह्णाति वाससाम्‡ ।
तेषान्तु कानि वस्त्राणि यैर्हि तं प्रतिपद्यते ॥ २३ ॥
केषु द्रव्येषु संयुक्तं मधुपर्कं प्रदीयते ।
के तु कर्म्मगुणास्तस्य मधुपर्कस्य माधव ।

* कथं मूलफलानि चेति (ग) ।

† चाप्नोति (ख) ।

‡ शाश्वतमिति (ग) ।

केषु लोकेषु* गच्छन्ति मधुपर्कस्य भक्षणात्† ॥ २४ ।
स्तवे परमकालेऽपि तव भक्तस्य माधव ।
किम्प्रमाणन्तु दातव्यं मधुपर्कसमन्वितम् ॥ २५ ।
कानि मांसानि ते देव फलं शाकश्च कीदृशः ।
प्रापणेष्वपि युज्येत कर्म्म शास्त्रसमायुतम् ॥ २६ ।
आहूतस्य च मन्त्रेण आगते धर्म्मवत्सल‡ ।
केन मन्त्रविधानेन प्राशनन्ते प्रदीयते§ ॥ २७ ।
हूतस्य चोपचारेषु अर्च्चयित्वा यथाविधि ।
कानि कर्म्माणि कुर्व्वीत तव भक्तस्य भोजनात् ॥ २८ ।
यस्तु तं प्रापणं देवं न च दोषप्रसादिकम् ।
केऽत्र भुञ्जति¶ तद्देव सर्व्वशुद्धिकरम्परम् ॥ २९ ।
ये तु एकाशिनो देवमुपसर्पति माधवम् ।
तेषान्तु का गतिर्द्देव तव मार्गानुसारिणाम् ॥ ३० ।
व्रतङ्कृत्वा यथोक्तेन येऽभिगच्छन्ति माधवम् ।
तेषान्तु का गतिर्द्देव तव भक्तिं प्रकुर्व्वताम्|| ॥ ३१ ।
कृच्छ्रसान्तपने कृत्वा येऽभिगच्छन्ति माधवम् ।

* कानि लोकानीति (ग) ।
† प्राशनादिति (ग) ।
‡ भक्तिवत्सलेति (ग) ।
§ प्रदापयेदिति (ग) ।
¶ भुञ्जते इति साधु ।
|| कां गतिं पुरुषा यान्ति भविता तव शासनादिति (ग)

कां गतिन्ते प्रपद्यन्ते तव कर्म्मपरायणाः ॥ ३२ ।
वाय्वाहारं ततः कृत्वा कृष्णं समधिगच्छति ।
तेषान्तु का गतिः कृष्ण तव भक्तौ व्यवस्थिताः ॥ ३३ ।
अक्षारलवणङ्कृत्वा येऽभिगच्छन्ति चाच्युतम् ।
कां गतिन्ते प्रपद्यन्ते तव कर्म्मानुसारिणः ॥ ३४ ।
कृत्वा पर्योव्रतञ्चैव येऽभिगच्छन्ति चाच्युतम् ।
कां गतिं प्रतिपद्यन्ते नरा ये व्रतकारिणः* ॥ ३५ ।
दत्त्वा गवाह्निकञ्चैव ये प्रपद्यन्ति† माधवम् ।
कां गतिन्ते प्रपद्यन्ते तव भक्त्या व्यवस्थिताः ॥ ३६ ।
उञ्छवृत्तिं समास्थाय येऽभिगच्छन्ति माधवम् ।
कां गतिन्ते प्रपद्यन्ते नरा भिक्षोपजीवनः ॥ ३७ ।
गृहस्थधर्म्मङ्कृत्वा वै येऽभिगच्छन्ति माधवम्‡ ।
कां गतिन्ते प्रपद्यन्ते तव कर्म्मपरायणाः ॥ ३८ ।
वैकुण्ठ तव क्षेत्रेषु§ ये तु प्राणान्विमुच्यते ।
काँल्लोकांस्ते प्रपद्यन्ते तव क्षेत्रेषु ये मृताः ॥ ३९ ।
कृत्वा पञ्चातपञ्चैव¶ माधवाय प्रयच्छति ।

* व्रतधारिण इति (ग) ।

† प्रपद्यन्ते इति साधु ।

‡ केशवमिति (ग) ।

§ तव क्षेत्रेषु ये देवेति (क), (ख) ।

¶ पञ्चात्मकञ्चैवेति (ग) ।

कां गतिं वै परायान्ति ये तु पञ्चातपे मृताः॥ ४०।
कण्टशय्यां समासाद्य ये प्रपश्यन्ति चाच्युतम्।
तेषान्तु का गतिर्द्देव कण्टशय्यां समाश्रिताः॥ ४१।
आकाशशयनङ्कृत्वा ये प्रपद्यन्ति* चाच्युतम्।
तेषान्तु का गतिः कृष्ण तव भक्तिपरायणाः॥ ४२।
गोव्रजे शयनं कृत्वा ये प्रपद्यन्ति केशवम्।
तेषान्तु का गतिर्ब्रह्मंस्तव भक्तिपथे स्थिताः† ॥ ४३।
शाकाहारं ततः कृत्वा येऽभिगच्छन्ति चाच्युतम्‡।
तेषान्तु का गतिर्द्देव कणभक्षास्तु ये नराः§ ॥ ४४।
पञ्चगव्यं ततः पीत्वा येऽभिगच्छन्ति माधवम्¶।
तेषान्तु का गतिर्द्देव ये नरा यावकाशिनः॥ ४५।
आहारं गोमयङ्कृत्वा येऽभिगच्छन्ति केशवम्।
नारायण गतिस्तेषां कीदृशोऽत्र विधिः स्मृतः‖ ॥ ४६।
सक्तुं वै भक्षयित्वा तु ये प्रपद्यन्ति चाच्युतम्।
तेषान्तु का गतिर्द्देव तव कर्म्मपरायणाः** ॥ ४७।

* प्रपद्यन्ते इति साधु, एवं परत्रापि।
† देव तव भक्तिपरायणा इति (ग)।
‡ माधवमिति (ग)।
§ तव भक्तिपरायणा इति (ग)।
¶ (ग) पुस्तके ये नरा यावकाशिन इत्येतावन्मात्रः पाठो दृश्यते।
‖ यवाहारं कृतं तेषां कीदृशोऽत्र विधीयते इति (ग)।
** शिरसा दोषधारणादिति (ग)। तत्र परश्लोको नास्ति।

शिरसा दीपकङ्कृत्वा येऽभिगच्छन्ति केशवम् ।
तेषान्तु का गतिर्देव शिरसा दीपधारणात् ॥ ४८ ।
ये हि नित्यं पयः पीत्वा तव चिन्ताव्यवस्थिताः ।
ते गतिं कां प्रपद्यन्ति तव चिन्तापरायणाः ॥ ४९ ।
अश्माशनं व्रतङ्कृत्वा ये प्रपद्यन्ति निश्चयाः ।
तेषान्तु का गतिर्देव तत्र भक्तिपरायणाः ॥ ५० ।
भक्षयित्वा तु दूर्व्वां ये प्रपद्यन्ति मनीषिणः ।
तेषान्तु का गतिर्देव स्वधर्म्म*गुणचारिणः ॥ ५१ ।
जानुभ्यां प्रतिपद्यन्ति† तव प्रीत्या च माधव ।
तेषान्तु का गतिर्देव तन्ममाचक्ष्व पृच्छतः ॥ ५२ ।
उत्तानशयनङ्कृत्वा धारयन्ति हि दीपिकाम्‡ ।
ते यान्ति कां गतिन्देव कथ्यते या च शाश्वती§ ॥ ५३ ।
जानुभ्यां दीपकं कृत्वा केशवाय प्रपद्यते¶ ।
तेषान्तु का गतिर्देव कथ्यते चैव शाश्वती ॥ ५४ ।
अवाङ्मुखन्तु भूत्वा‖ वै यः प्रपद्ये**ज्जनार्द्दनम् ।

* स्वकर्म्मेति (ग) ।

† प्रतिपद्यन्ते इति साधु ।

‡ येऽभिचार्य्यन्ति दीपिका इति (ग) । अभिचारयन्तीति साधु ।

§ तन्ममाचक्ष्व पृच्छतः इति (ग) ।

¶ परन्तु तेषामिति बहुवचनेन निर्द्देशादत्रापि प्रपद्यन्ते इति बहुवचनप्रयोग एव सम्यक्, तथा कृते तु छन्दोभङ्गः ।

‖ अवाक्शिरस्त्विति (ग), अवाक्शिरा इति साधु ।

** प्रपद्येतेति साधु ।

भगवन् का गतिस्तस्य अवाक्शिरसि शायिनः॥ ५५।
पुत्रदारगृहञ्चैव मुक्ता योऽनुप्रपद्यते।
का गतिस्तस्य सिद्धा तु कथयस्व सुरोत्तम॥ ५६।
भाषितोऽसि मया ह्येवं सर्व्वलोकसुखावहम्।
गमनागमनञ्चैव त्वत्प्रसन्नेन माधव॥ ५७।
त्वं त्राता त्वं पिता चैव* सर्व्वधर्म्म†विनिश्चयः।
अतस्त्वयैव वक्तव्यो योगसाङ्ख्यविनिश्चयः॥ ५८।
त्वां भजंश्च गते जीवे मधुपर्कसमन्वितम्।
अस्माकुलेषु निक्षिप्य कथञ्चाग्नौ प्रपद्यते॥ ५९।
कां गतिं प्रतिपद्यन्ते‡ त्वद्भक्ता जलमाश्रिताः।
त्वत्क्षेत्रसंस्थितो वापि तन्ममाचक्ष्व पृच्छतः§॥ ६०।
स्मरणं पुत्र ते कृष्ण यैस्तु नाम प्रकीर्त्यते।
नमो नारायणेत्युक्ता¶ तेषां वै का गतिर्भवेत्॥ ६१।
उद्यतेष्वपि शस्त्रेषु हन्यमाना रणे नराः।
नामप्रकीर्त्तनात्तेषां कीदृशी तु गतिर्भवेत्‖॥ ६२।
अहं शिष्या च दासी च तव भक्त्या व्यवस्थिता।

* त्वञ्चेति (ग)।

† कर्म्मेति (ग)।

‡ अत्र बहुवचनमार्षं, प्रतिपद्यते इति सम्यक्, तथा कृते तु छन्दोभङ्गः।

§ एतदर्द्धं परश्लोकस्य पूर्व्वार्द्धञ्च (ग) पुस्तके न स्तः।

¶ सकृन्नारायणेत्युक्तेति (ग)।

‖ ये तु नाम प्रकीर्त्तन्ते तेषां वै कीदृशी भवेदिति (ग)।

रहस्यं धर्म्मसंयुक्तं तन्ममाचक्ष्व माधव ॥ ६३ ।
एवं तत्परमं* गुह्यं मम प्रीत्या जगद्गुरो ।
सञ्चिन्त्य लोकधर्म्मार्थं† तद्भवान्वक्तुमर्हति ॥ ६४ ।

इति वराहपुराणे पृथिव्याः प्रश्नो नाम चतुर्द्दशाधिकशततमोऽध्यायः ।

—०ः०—

## पञ्चदशाधिकशततमोऽध्यायः ।

ततो महीवचः श्रुत्वा देवो नारायणोऽब्रवीत् ।
कथयिष्यामि ते देवि कर्म्म स्वर्गसुखावहम् ॥ १ ।
यत्त्वया पृच्छ्यते देवि तच्छृणुष्व* वसुन्धरे ।
स्थितिं सत्तान्तु मर्त्यानां भक्त्या ये च व्यवस्थिताः ॥ २ ।
नाहं दानसहस्रेण नाहं यज्ञशतैरपि ।
तुष्यामि न तु वित्तेन ये नराः स्वल्पचेतसः ॥ ३ ।
एकचित्तं समाधाय यो मां जानाति माधवि ।
नित्यं तुष्यामि तस्याहं पुरुषं बहुदोषकम् ॥ ४ ।

* ते परममिति (ग) ।
† लोकधर्म्मार्थविद्याऽपेति (ग) ।

* श्रणु इति साधु, एवं परत्रापि ।

यच्च पृच्छसि मां भद्रे कर्म्म स्वर्गसुखावहम् ।
तच्छृणुष्व वरारोहे गदतो मे शुचिस्मिते ॥ ५ ।
ये नमस्यति मां नित्यं पुरुषा बहुचेतसः ।
अर्द्धरात्रेऽन्धकारे च मध्याह्ने वापराह्णयोः ॥ ६ ।
यस्य चित्तं न नश्येत* मम भक्तिव्यवस्थितम् ।
द्वादश्यामुपवासन्तु यः कुर्य्यान्मम तत्परः ।
ते मामेव प्रपश्यन्ति मयि भक्तिपरायणाः† ॥ ७ ।
कृत्वा चैवोपवासन्तु गृह्य‡ चैव जलाञ्जलिम् ।
नमो नारायणेत्युक्त्वा आदित्यञ्चावलोकयेत् ॥ ८ ।
यावन्तो विन्दवः किञ्चित्पतन्त्येवाञ्जलेर्जलात् ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ९ ।
अथ चैव तु द्वादश्यां पुरुषा धर्म्मवादकाः ।

* नश्येदिति साधु ।

† न तेषां हि पश्यामि कदाचिदपि माधवीति (ग), तत्रातः परं—
लब्धचेतो गुणज्ञश्च नरो भक्तिव्यवस्थितः (परायणः) ।
इच्छयाऽपि भवेद्भद्रे स्वर्गे वसति सुन्दरि ॥
स्वल्पकेन न गम्यन्ते दुःप्राप्योऽहं वरानने ॥
यानि कर्म्माणि कुर्व्वन्तु मां प्रपश्यन्ति माधवि ।
तानि ते कथयिष्यामि येन भक्त्या व्यवस्थिताः ॥
द्वादश्यामुपवासन्तु ये च कुर्व्वन्ति ते नराः ।
तेषामेव प्रपश्यन्ति ममभक्तिपरायणाः ॥ इत्यधिकः पाठोऽस्ति ।

‡ गृहीत्वेति साधु ।

विधिना च प्रयत्नेन ये मां कुर्व्वन्ति मानुषाः* ॥ १० ।
पाण्डुरैश्चैव पुष्पैश्च सुष्टैर्धूपैस्तु धूपयेत् ।
यो मे धारयते भूमौ तस्यापि शृणु या गतिः ॥ ११ ।
दत्त्वा शिरसि पुष्पाणि इमं मन्त्रमुदीरयेत् ।
हृदि कृत्वा तु मन्त्रांश्च शुक्लाम्बरधरो धरे ।
सुमान्यः सुमना गृह्य प्रीयतां† मे भगवान्हरिः ॥ १२ ।

नमोऽस्तु विष्णवे व्यक्ताव्यक्तिगन्धिगन्धान् सुगन्धान् वा गृह्य गृह्य नमो भगवते विष्णवे । अनेन‡ मन्त्रेण गन्धं दद्यात् । श्रुत्वा प्रत्यागतमाधारसवनं पतये भवं प्रविष्टं मे धूप धूपनं गृह्णातु मे भगवानच्युतः । अनेन§ मन्त्रेण धूपं दद्यात् ।

श्रुत्वा चैवञ्च शास्त्राणि यो मामेव तु कारयेत् ।
मम लोकञ्च गच्छेत¶ जायेतैव चतुर्भुजः ॥ १३ ।
एतत्ते कथितं देवि श्रेष्ठञ्चैव मम प्रियम् ।
तव चैवं प्रियार्थाय मन्त्रपूजां सुखावहाम् ॥ १४ ।
श्यामाकं स्वस्तिकञ्चैव गोधूमं मुद्गकन्तथा ।
शालयस्तु यवाश्चैव तथा नीवारकाङ्कुकाः ॥ १५ ।

* मानवा इति (ग) ।
† प्रियोमे इति (ग) ।
‡ एतेनेति (ग) । गृह्णेति चार्षं, गृहाणेति साधु ।
§ एतेनेति (ग) ।
¶ गच्छेदिति साधु ।

एतानि यस्तु भुञ्जीत* मम कर्म्मपरायणः।
शङ्खं चक्रं लाङ्गलञ्च मुसलं स च पश्यति† ॥ १६ ॥
ब्राह्मणस्य तु वक्ष्यामि‡ शृणु कर्म्म वसुन्धरे।
यानि कर्म्माणि कुर्व्वीत मम भक्तिपरायणः ॥ १७ ॥
षट्कर्म्मनिरतोभूत्वा अहङ्कारविवर्ज्जितः।
लाभालाभं परित्यज्य भिक्षाहारी जितेन्द्रियः ॥ १८ ॥
मम कर्म्मसमायुक्तः पैशुन्येन विवर्ज्जितः।
शास्त्रानुसारिमध्यस्थो न ह्रद्रशिशुचेतनः ॥ १९ ॥
एतद्वै ब्रह्मणः कर्म्म एकचित्तो जितेन्द्रियः§।
इष्टापूर्त्तञ्च कुरुते स मामेति वसुन्धरे¶ ॥ २० ॥
क्षत्रियाणां प्रवक्ष्यामि मम कर्म्मसु तिष्ठताम्।
यानि कर्म्माणि कुर्व्वीत क्षत्रियोमध्यसंस्थितः ॥ २१ ॥
दानशूरश्च कर्म्मज्ञो यज्ञेषु कुशलः शुचिः।
मम कर्म्मसु मेधावी अहङ्कारविवर्ज्जितः ॥ २२ ॥
अल्पभाषी गुणज्ञश्च नित्यं भागवतप्रियः।
गुरुविद्योऽनसूयश्च निन्द्यकर्म्मविवर्ज्जितः।
अभ्युत्थानादिकुशलः पैशुन्येन विवर्ज्जितः ॥ २३ ॥

* एतान् प्रशस्य भुञ्जीतेति (ग)।

† पश्यति शङ्खचक्रञ्च लाङ्गलं मुषलं सदेति (ग)।

‡ प्रवक्ष्यामीति (ग)।

§ एकचित्तायनादिभिरिति (ग)।

¶ कारयेदिष्टपूर्त्तञ्च न स मामेव पश्यतीति (ग)।

एतैः*र्गुणैः समायुक्तो यो मां व्रजति क्षत्रियः ।
भजते मम यो नित्यं मम लोकाय गच्छति ॥ २४ ।
वैश्यानान्तु प्रवक्ष्यामि मम कर्म्मसु तिष्ठताम् ।
यानि कर्म्माणि कुरुते मम भक्तिपथे स्थितः ॥ २५ ।
एतैर्गुणैः स्वधर्म्मेण लाभालाभविवर्ज्जितः ।
ऋतुकालाभिगामी च शान्तात्मा मोहवर्ज्जितः ॥ २६ ।
शुचिर्दक्षो निराहारो मम कर्म्मरतः सदा ।
गुरुसम्पूजको नित्यं युक्तो भक्तानुवत्सलः ॥ २७ ।
वैश्योऽप्येवं सुसंयुक्तो यस्तु कर्म्माणि कारयेत्† ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ २८ ।
अथ शूद्रस्य वक्ष्यामि कर्म्माणि शृणु माधवि ।
कर्म्माणि यानि कृत्वा ह शूद्रो मह्यं व्यवस्थितः ॥ २९ ।
दम्पती मम भक्तौ यौ मम कर्म्मपरायणौ ।
उभौ भागवतौ भक्तौ मद्भक्तौ‡ कर्म्मनिष्ठितौ ॥ ३० ।
देशकालौ च जानाति रजसा तमसोज्झितः ।
निरहङ्कारशुद्धात्मा आतिथेयो विनीतवान्§ ॥ ३१ ।

* एभिरिति (ग) ।

† वैश्यस्त्वं तु संयुक्तो योऽनकर्म्मानुसारयेदिति (ग) ।

‡ मत्पराविति (ग) ।

§ निरहङ्कारशुद्धान्तौ अतिथि धर्म्मवत्सलाविति (ग) । तत्र परत्रापि द्विवचनान्तः पाठः ।

श्रद्दधानोऽतिपूतात्मा लोभमोहविवर्ज्जितः।
नमस्कारप्रियो नित्यं मम चिन्ताव्यवस्थितः॥ ३२।
शूद्रः कर्म्माणि मे देवि य एवं सममाचरेत्।
त्यक्ता ऋषिसहस्राणि शूद्रमेव भजाम्यहम्॥ ३३।
चातुर्वर्ण्यस्य कर्म्माणि यत्त्वया परिपृच्छितम्*।
एवं कर्म्मगुणाश्चैव येन भक्त्या व्यवस्थितः॥ ३४।
सर्व्ववर्णानि मां देवि अपरं चचिये शृणु।
येन तत्प्राप्यते योगं तच्छृणुष्व वसुन्धरे॥ ३५।
त्यक्ता लाभमलाभञ्च मोहं कामञ्च वर्ज्जयेत्।
न प्रीते च न चीणे च लब्धाऽलब्धं विचिन्तयेत्॥ ३६।
न तिक्तेनातिकटुना मधुराम्लैर्न लावणैः।
न कषायैः स्पृहा यस्य प्राप्नुयात्सिद्धिमुत्तमाम्॥ ३७।
भार्य्या पुत्राः पिता माता उपभोगार्थसंयुतम्।
य एतान्हि परित्यज्य मम कर्म्मरतः सदा॥ ३८।
धृतिश्चः कुशलश्चैव श्रद्दधानो धृतव्रतः।
तत्परो नित्यमुद्युक्तः अन्यकार्य्यजुगुप्सुकः॥ ३९।
बाले वयसि कल्पश्च अल्पभोगी कुलान्वितः।
कारुण्यः सर्व्वसत्त्वानां प्रत्युत्थायी महात्तमः॥ ४०।
काले मौनक्रियां कुर्य्याद्यावत्तत्कर्म्म कारयेत्।
त्रिकालञ्च दिशो भागं सदा कर्म्मपथि स्थितः॥ ४१।

* परिपृष्टमिति साधु। प्रतिभाषितमिति (ग)।

उपपन्नानुभुञ्जानः कर्म्माण्यभोजनानि च ।
अनुष्ठानपरश्चैव मम पार्श्वे मनश्चरः ॥ ४२ ॥
काले मूत्रपुरीषाणि विसृज्य स्नानवत्सलः ।
पुष्पे गन्धे च धूपे च मत्कर्म्मणि सदा रतः ॥ ४३ ॥
कदाचित्कन्दमूलानि फलानि च कदाचन ।
पयसा यावकेनापि कदाचिद्वायुभक्षणः ॥ ४४ ॥
कदाचित्षष्ठकालेन क्वचिदष्टमहाफलः ।
कदाचित्तु चतुर्थेन कदाचित्फलमेव च ।
कदाचिद्दशमे भुञ्जेत्यन्ते मासे वसुन्धरे ॥ ४५ ॥
य एतत्सप्त जन्मानि मम कर्म्माणि कुर्व्वते ।
योगिनस्तान् प्रपश्यन्ति पूर्व्वोक्तान् कर्म्मसु स्थितान्* ॥ ४६ ॥

इति वराहपुराणे विविधकर्म्मोत्पत्तौ पञ्चदशाधिकशततमोऽध्यायः ।

* योगिनस्तांश्च वक्ष्यामि तेनैव च सनातनमिति (ग) ।

# षोड़शाधिकशततमोऽध्यायः ।

वराह उवाच ।

मया प्रोक्तविधानेन यस्तु कर्म्माणि कारयेत् ।
तच्छृणुष्व* महाभागे येन साफल्यमाप्नुयात् ॥ १ ।
एकचित्तः समास्थाय† अहङ्कारविवर्ज्जितः ।
मच्चित्तसंहतो‡ नित्यं चान्तो दान्तो जितेन्द्रियः ॥ २ ।
फलमूलानि शाकानि द्वादश्यां वा§ कदाचन ।
पयोव्रतश्च तत्काले पुनरेव¶ निरामिषः ॥ ३ ।
षष्ठाष्टमी अमावास्या उभे पक्षे चतुर्द्दशी ।
मैथुनं नाभिसेवेत द्वादश्याञ्च तथा प्रिये ॥ ४ ।
एवं योगविधानेन कर्म्म कुर्य्याद्दृढ़व्रतः ।
पूतात्मा धर्म्मसंयुक्तो विष्णुलोकन्तु गच्छति ॥ ५ ।
न ग्लानिर्न जरा तस्य न मोहो रोग एव च ।
भुजाष्टादश जायन्ते धन्वी खड्गी शरी गदी ।
तेषां व्युष्टिं प्रवक्ष्यामि मम कर्म्मसमुत्थिताम् ॥ ६ ।

* शृणुष्व त्वमिति (ग) ।

† समादायेति (ग) ।

‡ मच्चित्तोपगत इति (ग) ।

§ वै इति (ग) ।

¶ चैवेति (ग) ।

षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
ममार्च्चनविधिङ्कृत्वा मम लोके महीयते ॥ ७ ।
दुःखमेवं प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
उचितेनोपचारेण दुःखमोक्षविनाशनम् ॥ ८ ।
अहङ्कारावृतो नित्यं नरो मोहेन चावृतः ।
यो मां नैव प्रपद्येत* ततो दुःखतरं नु किम् ॥ ९ ।
सर्व्वाशी सर्व्वविक्रेता नमस्कारविवर्ज्जितः ।
यो न मां प्रतिपद्येत ततो दुःखतरं नु किम् ॥ १० ।
प्राप्तकाले वैश्वदेवे दृष्ट्वा चातिथिमागतम् ।
अदत्त्वा तस्य यो भुङ्क्ते ततो दुःखतरं नु किम् ॥ ११ ।
सर्व्वान्नानि तु सिद्धानि पाकभेदं करोति यः† ।
तस्य देवा न चाश्नन्ति‡ ततो दुःखतरं नु किम् ॥ १२ ।
असन्तुष्टस्तु वैपश्ये§ परदाराभिमर्षकः¶ ।
परोपतापी मन्दात्मा ततो दुःखतरं नु किम् ॥ १३ ।
अकृत्वा पुष्कलं कर्म्म गृहे संवसन्‖ नरः ।

* ये मां नैव प्रपद्यन्त इति (ग) ।
† पाकभेदन्तु कारयेदिति (ग) ।
‡ न वैश्वदेवा नाश्नन्तीति (ग) ।
§ पैशुन्ये इति (ग) ।
¶ मर्द्दक इति (ग) ।
‖ संवसतीति साधु ।

मृत्युकालवशं प्राप्तस्ततो दुःखतरं नु किम् ॥ १४ ।
हस्त्यश्वरथयानानि गच्छमानानि* पश्यति ।
धावन्त्यस्याग्रतः पृष्ठे ततो दुःखतरं नु किम् ॥ १५ ।
अश्नन्ति पिशितं केचित्केचिच्छालिसमन्वितम्† ।
शुष्कान्नं केचिदश्नन्ति ततो दुःखतरं नु किम् ॥ १६ ।
वरवस्त्रावृतां शय्यां समासेवति‡ भूषिताम् ।
केचित्तृणेषु शेरन्ते§ ततो दुःखतरं नु किम्¶ ॥ १७ ।
विद्वान् कृती गुणज्ञश्च सर्व्वशास्त्रविशारदः ।
केचिन्मूकाश्च दृश्यन्ते ततो दुःखतरं नु किम् ॥ १८ ।
विद्यमाने धने केचित्कृपणा भोगवर्ज्जिताः ।
दरिद्रो जायते दाता ततो दुःखतरं नु किम् ॥ १९ ।
द्विभार्य्यः पुरुषो यस्तु तयोरेकाम्प्रशंसति ।
एका तु दुर्भगा तत्र ततो दुःखतरं नु किम् ॥ २० ।
ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णाः सुमध्यमे ।

* गच्छन्तीति साधु ।

† दत्तशालिसमन्वितमिति (ग) ।

‡ समासेवत इति साधु ।

§ शेरते इति साधु ।

¶ (ग) पुस्तकेऽतः परं
सुरूपो दृश्यते कश्चित्पुरुषश्चात्मकर्म्मभिः ।
केचिद्विरूपा दृश्यन्ते ततो दुःखतरं नु किम्
इत्यधिकः पाठो दृश्यते ।

पापकर्मरता ह्यासन्ततो दुःखतरं नु किम्* ॥ २१ ।
एतत्ते कथितं भद्रे दुःखकर्मविनिश्चयम् ।
सर्व्वभूताहितं पापं यत्त्वया परिपृच्छितम्† ॥ २२ ।
यच्च मां पृच्छसे‡ भद्रे शुभं कीदृशमुच्यते ।
तच्छृणुष्वानवद्याङ्गि मम कर्मविनिश्चयम् ॥ २३ ।
कृत्वा तु विपुलं कर्म्म मद्भक्तेषु निवेदयेत् ।
यस्य बुद्धिर्विजायेत§ स दुःखायोपजायते¶ ॥ २४ ।
मां पूजयित्वा नैवेद्यं विशिष्टं परिकल्प्य च‖ ।
शेषमन्नं समश्नाति ततः सौख्यतरं नु किम् ॥ २५ ।
त्रिकालं ये प्रपद्यन्ते मयोक्तेन** वसुन्धरे ।
कृत्वा सायाह्निकं कर्म्म ततः सौख्यतरं नु किम् ॥ २६ ।
देवतातिथिमर्त्त्यानां त्यक्त्वा चान्नं वसुन्धरे ।
यश्चात्मा वै समश्नाति ततः सौख्यतरं नु किम्†† ॥ २७ ।

* एष श्लोकः (ग) पुस्तके नास्ति, तत्राऽन्य एव श्लोको विद्यते । यथा—
लब्ध्वा तु मानुषीं संज्ञां पञ्चभूतसमन्विताम् ।
मामेव न प्रपद्यन्ति ततो दुःखतरं नु किम् ॥ इति ।

† परिपृष्टमिति साधु ।

‡ पृच्छसीति साधु ।

§ बुद्धावजायेतेति (ग) ।

¶ उपपद्यते इति (ग) ।

‖ मामेवमर्च्चनं कृत्वा तत्र प्राप्यमुत्तममिति (ग) ।

** मामेव चेति (ग) ।

†† एष श्लोकः (ग) पुस्तके नास्ति ।

प्रविष्टस्त्वतिथिर्यस्य निराशो यत्र गच्छति।
येन केनचिद्दत्तेन ततः सौख्यतरं नु किम्॥ २८।
मासि मास्येकदिवसः* अमावास्येति योच्यते† ।
पितरो यस्य तृप्यन्ति ततः सौख्यतरं नु किम्॥ २९।
भोजनेषु प्रपन्नेषु यवान्नं यः प्रयच्छति।
अभिन्नमुखरागेण ततः सौख्यतरं नु किम्॥ ३०।
उभयोरपि भार्य्यासु यस्य बुद्धिर्न नश्यति।
समं पश्यति यो देवि ततः सौख्यतरं नु किम्॥ ३१।
अहिंसनन्तु कुर्व्वीत विशुद्धेनान्तरात्मना।
अहिंसापरतः शुद्धः स सुखायोपजायते‡॥ ३२।
परभार्य्यां सुरूपान्तु दृष्ट्वा दृष्टिर्न चाल्यते§।
यस्य चित्तं न गच्छेत¶ ततः सौख्यतरं नु किम्॥ ३३।
मौक्तिकादीनि रत्नानि तथैव कनकानि च।
लोष्टवत्पश्यति‖ यस्तु ततः सौख्यतरं नु किम्॥ ३४।
मुदिते वाश्वनागेन्द्रे उभे सैन्ये पथि स्थिते।

* एकदिवसे इति (ग)।

† उपजायते इति (ग)।

‡ उपपद्यते इति (ग)।

§ परभार्य्यानुरूपानुदृष्ट्वा दृष्टिर्न चाल्यत इति (ग)।

¶ गच्छेदिति साधु।

‖ पश्यतीति साधु।

यस्तु प्राणान्प्रमुच्येत ततः सौख्यतरं न किम्* ॥ ३५ ।
लब्धेन चाप्यलब्धेन कुत्सितं कर्म्म गर्हयन्† ।
यस्तु जीवति सन्तुष्टः स सुखायोपपद्यते ॥ ३६ ।
भर्त्तुस्तु वै व्रतं‡ स्त्रीणामेवमेव वसुन्धरे ।
या तोषयति भर्त्तारं ततः सौख्यतरं नु किम् ॥ ३७ ।
विद्यते विभवेनापि पुरुषो यस्तु पण्डितः ।
निग्रहीतेन्द्रियः पञ्च§ ततः सौख्यतरं नु किम् ॥ ३८ ।
सहते चावमानन्तु व्यसने न तु दुर्मनाः ।
यस्येदं विदितं सर्व्वं ततः सौख्यतरं नु किम् ॥ ३९ ।
अकामो वा सकामो वा मम क्षेत्रे वसुन्धरे ।
यस्तु प्राणान्प्रमुच्येत¶ ततः सौख्यतरं नु किम् ॥ ४० ।
मातरं पितरञ्चैव यः सदा पूजयन्नरः ।
देवतेव सदा पश्येत्ततः सौख्यतरं नु किम् ॥ ४१ ।
ऋतुकाले तु यो गच्छेन्मासे मासे च मैथुनम् ।
अनन्यमानसो भूत्वा ततः सौख्यतरं नु किम् ॥ ४२ ।
प्रयुक्तः सर्व्वदेवानां यो मामेवं प्रपूजयेत् ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ४३ ।

* ३४, ३५ श्लोकौ (ग) पुस्तके न स्तः ।

† वर्ज्जितमिति (ग) ।

‡ भर्त्तुः सुखं व्रतमिति (ग) ।

§ निग्रहीतपञ्चेन्द्रिय इति समस्तमेवोचितं, असमस्तत्वार्षम् ।

¶ प्रमुच्येदिति साधु ।

एतत्ते कथितं भद्रे शुभनिर्द्दिष्टनिश्चयः।
सर्व्वलोकहितार्थाय यन्मात्त्वं परिपृच्छसि॥ ४४॥

इति वराहपुराणे सुखदुःखं नाम षोड़शाधिकशततमोऽध्यायः।

## सप्तदशाधिकशततमोऽध्यायः।

वराह उवाच।

शृणु भद्रे महाश्चर्य्यमाहारविधिनिश्चयम्।
आहारञ्चाप्यनाहारं तच्छृणोहि* वसुन्धरे॥ १॥
भुञ्जानोयाति चाश्नाति मम योगाय माधवि।
अशुभं कर्म्म कृत्वापि पुरुषोधर्म्ममाश्रितः॥ २॥
आहारञ्चैव धर्म्मञ्च उपभुञ्जीत† नित्यशः।
सर्व्वं चान्नेव कर्म्मण्या व्रीहयः शालयस्तथा॥ ३॥
अकर्म्मण्यानि वक्ष्यामि येन भोज्यन्ति‡ मां प्रति।
तेन वै भुक्तमार्गेण अपराधो महौजसः॥ ४॥

* शृणु इति साधु।

† उपभुञ्जति इति (क, ख). आर्षं तत्. उपभुङ्क्ते इति साधु।

‡ भुज्यन्ते इति साधु।

प्रथमश्चापराधास्त्वं न रोचते मम प्रिये ।
भुक्त्वा तु परकीयान्नं तत्परस्तन्निवर्त्तनः ।
द्वितीयस्त्वपराधोऽयं धर्म्मविघ्नाय वै भवेत् ॥ ५ ।
गत्वा मैथुनसंयोगं यो नु मां स्पृशते* नरः ।
तृतीयमपराधन्तु कल्पयामि वसुन्धरे ६ ।
दृष्ट्वा रजस्वलां नारीमस्माकं यः प्रपद्यते ।
चतुर्थमपराधन्तु दृष्टं नैवं† चमाम्यहम् ॥ ७ ।
स्पृष्ट्वा तु मृतकञ्चैव असंस्कारकृतन्तु वै‡ ।
पञ्चमश्चापराधं च न चमामि§ वसुन्धरे ॥ ८ ।
दृष्ट्वा तु मृतकं यस्तु नाचम्य स्पृशते तु माम्¶ ।
षष्ठन्तं चापराधं|| वै न चमामि वसुन्धरे ॥ ९ ॥
ममार्च्चनस्य काले तु पुरीषं यस्तु गच्छति** ।
सप्तमश्चापराधन्तु कल्पयामि वसुन्धरे ॥ १० ।
यस्तु नीलेन वस्त्रेण प्रावृतो मां प्रपद्यते ।
अष्टमश्चापराधश्च†† कल्पयामि वसुन्धरे ॥ ११ ।

* स्पृशतीति साधु ।

† वै नेति (ग) ।

‡ दृष्ट्वा तु मृतकञ्चैव नाचाम्य स्पृशते तु मामिति (ग) । स्पृशतीति साधु ।

§ अपराधन्तं न चमेयमिति (ग) ।

¶ (ग) पुस्तकेऽत्र स्पृष्ट्वा तु मृतकञ्चेत्याद्यर्द्धं वर्त्तते ।

|| षष्ठमिमञ्चापराधमिति (ग) ।

** यस्तु वाक्यं प्रभाषत इति (ग) ।

†† तु इति (ग) ।

ममैवार्च्चनकाले तु यस्त्वसमं प्रभाषते।
नवमश्चापराधन्तं* न रोचामि† वसुन्धरे ॥ १२ ।
अविधानं तु यः स्पृश्य‡ मामेव प्रतिपद्यते।
दशमश्चापराधोऽयं मम चाप्रियकारकः ॥ १३ ।
क्रुद्धस्तु यानि कर्म्माणि कुरुते कर्म्मकारकः।
एकादशापराधन्तु कल्पयामि वसुन्धरे ॥ १४ ।
अकर्म्मण्यानि पुण्यानि यस्तु मामुपकल्पयेत्।
द्वादशश्चापराधन्तं§ कल्पयामि वसुन्धरे ॥ १५ ।
यस्तु रक्तेन वस्त्रेण कौसुम्भेनोपगच्छति।
त्रयोदशश्चापराधं¶ कल्पयामि वसुन्धरे ॥ १६ ।
अन्धकारे च मान्देवि यः स्पृशेत‖ कदाचन।
चतुर्द्दशापराधन्तु कल्पयामि वसुन्धरे ॥ १७ ।
यस्तु कृष्णेन वस्त्रेण मम कर्म्माणि कारयेत्।
पञ्चदशापराधन्तं कल्पयामि वसुन्धरे** ॥ १८ ।
अधौतेन तु वस्त्रेण यस्तु मामुपकल्पयेत्।

---

* तु इति (ग)।

† रोचामीति चार्षं, रोचयामीति साधु।

‡ स्पृष्ट्वेति साधु।

§ तु इति (ग)।

¶ त्रयोदशापराधन्त्विति (ग)।

‖ स्पृशेदिति साधु।

** वरानने इति (ग)।

योऽशन्त्वपराधानां कल्पयामि वरानने ॥ १९ ।
स्वयमन्नन्तु योऽश्नीयादज्ञानादपि माधवि ।
सप्तदशापराधन्तु कल्पयामि वसुन्धरे ॥ २० ।
यस्तु मात्स्यानि मांसानि भक्षयित्वा प्रपद्यते ।
अष्टादशापराधञ्च कल्पयामि वसुन्धरे* ॥ २१ ।
जालपादं भक्षयित्वा यस्तु मामुपसर्पति ।
एकोनविंशापराधं कल्पयामि वसुन्धरे† ॥ २२ ।
यस्तु मे दीपकं स्पृष्ट्वा मामेव प्रतिपद्यते‡ ।
विंशकञ्चापराधन्तं कल्पयामि वरानने ॥ २३ ।
श्मशानं यस्तु वै गत्वा मामेव प्रतिपद्यते ।
एकविंशापराधन्तं कल्पयामि वसुन्धरे ॥ २४ ।
पिण्याकं भक्षयित्वा तु यो मामेवाभिगच्छति§ ।
द्वाविंशञ्चापराधन्तं कल्पयामि प्रिये सदा ॥ २५ ।
यस्तु वाराहमांसानि प्रापणेनोपपादयेत् ।
अपराधं त्रयोविंशं कल्पयामि वसुन्धरे ॥ २६ ।
सुरां पीत्वा तु यो मर्त्यः कदाचिदुपसर्पति ।
अपराधं चतुर्विंशं कल्पयामि वसुन्धरे ॥ २७ ।
यः कुसुम्भञ्च मे शाकं भक्षयित्वोपचक्रमे ।

---

* अनुजानामि माधवीति (ग) ।

† प्रतिजानामि सुन्दरीति (ग) ।

‡ नवमं दीपकं दृष्ट्वा यो मां स्पृशति माधवीति (ग) ।

§ उपचक्रमे इति (ग) ।

अपराधं पञ्चविंशं कल्पयामि वसुन्धरे* ॥ २८ ।
परप्रावरणेनैव यस्तु मामुपसर्पति ।
अपराधेषु षड्विंशं कल्पयामि वसुन्धरे† ॥ २९ ।
नवान्नं यस्तु भक्षेत‡ न देवान्न पितॄन्यजेत् ।
सप्तविंशञ्चापराधं कल्पयामि गुणान्विते ॥ ३० ।
उपानहौ च प्रपदे तथा वापीञ्च गच्छति ।
अपराधमष्टविंशं कल्पयामि गुणान्विते ॥ ३१ ।
शरीरं मर्द्दयित्वा§ तु यो मामाप्नोति माधवि ।
एकोनत्रिंशापराधो न स स्वर्गेषु गच्छति ॥ ३२ ।
अजीर्णेन समाविष्टो यस्तु मामुपगच्छति ।
त्रिंशकञ्चापराधन्तं कल्पयामि यशस्विनि¶ ॥ ३३ ।
गन्धपुष्पाण्यदत्त्वा तु यस्तु धूपं प्रयच्छति ।
एकत्रिंशञ्चापराधं कल्पयामि मनस्विनि‖ ॥ ३४ ।
विना भेर्य्यादिशब्देन द्वारस्योद्घाटनं मम ।
महापराधं जानीयाद्द्वात्रिंशन्तं मम प्रिये ॥ ३५ ।
अन्यच्च शृणु वक्ष्यामि दृढव्रतमनुत्तमम् ।

---

* मनोरमे इति (ग)।

† मनोरमे इति (ग)।

‡ भक्षयेदिति साधु।

§ मर्द्दयित्वेति (ग)।

¶ वसुन्धरे इति (ङ)।

‖ एकत्रिंशाऽपराधन्तु कल्पयामि यशस्विनीति (ग)।

कृत्वा चावश्यकं कर्म्म मम लोकञ्च गच्छति ॥ ३६ ।
नित्ययुक्तश्च शास्त्रज्ञो मम कर्म्मपरायणः ।
अहिंसापरमश्चैव सर्व्वभूतदयापरः ॥ ३७ ।
सामान्यश्च शुचिर्दक्षो मम नित्यं पथे स्थितः ।
निगृह्य चेन्द्रियग्राममपराधविवर्ज्जितः ॥ ३८ ।
उदारो धार्म्मिकश्चैव स्वदारेषु सुनिष्ठितः ।
शास्त्रज्ञः कुशलश्चैव मम कर्म्मपरायणः* ।
चातुर्वर्ण्यस्य मे भद्रे सन्मार्गेषु व्यवस्थितः† ॥ ३९ ।
आचार्य्यभक्ता देवेषु भक्ता भर्त्तरि वत्सला ।
संसारेष्वपि वर्त्तन्ती‡ गच्छन्ती अग्रतो यदि ।
मम लोकस्थिताः सा वै भर्त्तारम्प्रसमीचरेत्§ ॥ ४० ।
पुरुषो यदि मद्भक्तः स्त्रियन्त्यक्त्वा च गच्छति ।
स ततोऽत्र प्रतीचेत भार्य्यां भर्त्तरि वत्सलाम् ॥ ४१ ।
अन्यच्च ते प्रवक्ष्यामि कर्म्मणां कर्म्म चोत्तमम् ।
ऋषयो मां न पश्यन्ति मम कर्म्मपथे स्थिताः¶ ॥ ४२ ।

---

* कर्म्मपथे स्थित इति (ग) ।

† एतच्चरणद्वयं (ग) पुस्तके नास्ति ।

‡ वर्त्तमाना इति साधु ।

§ सम्प्रतीचरेत इति (ग) ।

¶ (ग) पुस्तकेऽतः परं—

द्रष्टव्या मम लोकेषु ऋषयोऽपि वरानने ।
किं पुनर्मानुषा ये च मम कर्म्मव्यवस्थिताः ॥

इत्यधिकः पाठो वर्त्तते ।

अन्यदेवेषु ये भक्ता मूढ़ा वै पापचेतसः।
मम मायाविमूढ़ास्तु न प्रपद्यन्ति* माधवि ॥ ४३ ।
मान्तु ये वै प्रपद्यन्ते मोक्षकामा वसुन्धरे।
तानहं भावसंसिद्धान्बुद्ध्वा संविभजामि वै ॥ ४४ ।
येन त्वं परया शक्त्या धारितासि मया धरे।
तेनेदं कथितन्देवि आख्यानं धर्म्मसंयुतम् ॥ ४५ ।
पिशुनाय न दातव्यं न च मूर्खाय माधवि† ।
नादीक्षिताय दातव्यं नोपसर्प्याय यत्नतः ॥ ४६ ।
शठाय च न दातव्यं नास्तिकाय न माधवि।
वर्ज्जयित्वा भागवतं मम कर्म्मपरायणम् ॥ ४७ ।
एतत्ते कथितन्देवि मम धर्म्मं महौजसम्।
सर्व्वलोकहितार्थाय किमन्यत्परिपृच्छसि ॥ ४८ ।

इति वराहपुराणे द्वात्रिंशदपराधकथनं नाम सप्तदशाधिकशततमोऽध्यायः।

* प्रपद्यन्ते इति साधु।

† (ग) पुस्तके एतदर्द्धमन्यथैव दृश्यते —

ततो न चोपदिष्टाय न शठाय प्रदापयेदिति।

# अष्टादशाधिकशततमोऽध्यायः ।

वराह उवाच ।

शृणु तत्त्वेन मे भद्रे प्रायश्चित्तं यथाविधि ।
यथावत्त च दातव्यो मम भक्तेन विद्यया ॥ १ ।
वक्ष्यमाणेन मन्त्रेण उद्धृत्य दन्तकाष्ठकम् ।
दीपं न ज्वालयेत्तावद्यावन्न स्पृश्यते धरा* ॥ २ ।
दीपे प्रज्वलिते तत्र हस्तशौचन्तु कारयेत् ।
ततः प्रक्षाल्य हस्तौ तु पुनरेवमुपागतः† ॥ ३ ।
वन्दयित्वास्य चरणौ दन्तधावनमानयेत् ।
अनेनैव तु मन्त्रेण दद्याद्वै दन्तकाष्ठकम् ॥ ४ ।
मन्त्रश्च । भुवनभवन रविसंहरण अनन्तो मध्यश्चेति गृह्णेमं भुवनं दन्तधावनम् ।
यत्त्वया भाषितं सर्व्वमेवं धर्म्मविनिश्चयम् ।
दन्तधावनं दन्ते दद्याद्यावत्कर्म्म वसुन्धरे ॥ ५ ।
निर्म्माल्यं शिरसोत्तार्य्य धृत्वा शिरसि चात्मनः ।
पश्चात्तु जलपूतेन ततो हस्तेन सुन्दरि ॥ ६ ।
कार्य्यात्तु मुखकर्म्माणि स्वल्पेन सलिलेन च ।

---

* यावन्न स्पृशते भूमिं तावद्दीपं न ज्वालयेदिति (ग), स्पृशतीति साधु ।

† अतः परं (ग) पुस्तके अन्यः पाठो वर्त्तते, यथा—
ततः प्रस्थाप्यैव दन्तैर्विगृह्य पूर्व्वं जलगुचिः ।
निरपराधो मध्यस्थ इदं मन्त्रमुदीरयेदिति ॥

मुखप्रक्षालने चेमं शृणु मन्त्रञ्च सुन्दरि ।
यश्चेमं कृतमन्त्रेण संसारात्तु प्रमुच्यते ॥ ७ ।

मन्त्रश्च । तद्भगवन्त्वां गुणश्च आत्मनश्चापि गण्डूषं वारिणः सर्व्वदेवतानां मुखमेवं प्रक्षालयेत् । एतेन मन्त्रेण सगन्धधूपदीपनैवेद्यं पुनरेवं समर्पयेत् ।

ततः पुष्पाञ्जलिन्दत्त्वा भगवन् भक्तवत्सल ।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत्* ॥ ८ ।
मन्त्रज्ञानां यज्ञयष्टारं भूतस्रष्टारमेव च ।
अन्यपुष्पाणि संगृह्य कल्यमुत्थाय माधवि ।
पूजयेद्देवदेवेशं ज्ञानी भागवतः शुचिः ।
निपतेद्दण्डवद्भूमौ‡ सर्व्वकर्म्मसमन्वितः ॥ ९।१० ।
कायं निपतितङ्कृत्वा प्रसीदेति जनार्द्दनम् ।
शिरसा चाञ्जलिङ्कृत्वा इमं मन्त्रमुदाहरेत् ॥ ११ ।

मन्त्रैर्लब्ध्वा संज्ञां त्वयि नाथ प्रसन्ने
त्वदिच्छातो ह्यपि योगिनाञ्चैव मुक्तिः ।
यतस्त्वदीयः कर्म्मकरोऽहमस्मि
त्वयोक्तं यत्तेन देवः प्रसीदतु§ ॥ १२ ।

* उदाहरेदिति (ग) ।

† एवं पुष्पाणीति (ग) ।

‡ देवीतले निपतेत्तु इति (ग) ।

§ लब्ध्वा संज्ञामपि नाथ प्रसन्नेच्छातः
संसारान्मुक्तयेऽहं कर्म्मकरो यत्त्वया पूर्व्वमुक्तं प्रसीदतु इति (ग) ।

एवं मन्त्रविधिं कृत्वा मम भक्तिव्यवस्थितः ।
पृष्ठतोऽनुपदं कृत्वा शीघ्रं यावन्न हीयते ॥ १३ ।
एवं सर्व्वं समादाय मम कर्म्म दृढ़व्रतः ।
शीघ्रं मेऽभ्यञ्जनं दद्यात्तैलेनाथ घृतेन वा ॥ १४ ।
ततः स्नेहं समुद्दिश्य* मन्त्रज्ञः कर्म्मकारकः ।
एवं चित्तं समाधाय इमं मन्त्रमुदीरयेत्† । १५ ।
मन्त्रः ।—स्नेहं स्नेहेन संगृह्य लोकनाथ मया हृतम् ।
सर्व्वलोकेषु सिद्धात्मा ददाम्यात्मकरेण च ।
मया प्रोक्तः क्षमस्वेति तुभ्यञ्चैव नमो नमः ॥ १६ ।
एवं मन्त्रः समाख्यातस्तेनाज्यात्प्रथमं शिरः‡ ।
दक्षिणाङ्गं ततोऽभ्यज्याद्वाममङ्गं ततोऽनु च§ ॥ १७ ।
पश्चात्पृष्ठं समभ्यज्य ततोऽभ्यज्यात्कटिं तथा¶ ।
पश्चाल्लिम्पेत्ततो भूमिं गोमयेन दृढ़व्रतः ॥ १८ ।
तस्य दृष्ट्वा श्रुतं भद्रे गोमयेन सुनिश्चितम्‖ ।
यानि पुण्यान्यवाप्नोति तानि मे गदतः शृणु** ॥ १९ ।

* ततश्च स्नेहमुद्दिश्येति (ग) ।

† (ग) पुस्तके अस्मादनन्तरं 'मन्त्रा ऊचुः' इत्यधिकः पाठो वर्त्तते ।

‡ एवं मन्त्रैः समाख्यातः शिरसि प्रथमं ददाविति (ग) ।

§ पश्चाद्दक्षिणमङ्गेषु ततो वाममनु लेपयेदिति (ग)।

¶ पश्चात्पृष्ठं समारभ्य ततः पश्चात्कटिन्तथेति (ग) ।

‖ लिम्प यत्र सुनिश्चितः इति (ग) ।

** मम मार्गानुसारिणि इति (ग) ।

अज्यमानमपि तथा यावन्तस्तैलविन्दवः* ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ २० ॥
ततः पुण्यकृताँल्लोकान्पुरुषो योऽनुलिप्यते† ।
एकैककणसंख्यातः स्वर्गलोके महीयते‡ ॥ २१ ॥
एवं योऽभ्यञ्जयेद्गात्रं तैलेन तु घृतेन वा§ ।
तावद्वर्षसहस्राणि मम लोके प्रतिष्ठति¶ ॥ २२ ॥
अथ चोद्वर्त्तनं भद्रे प्रवक्ष्यामि प्रियं मम ।
येन शुध्यन्ति चाङ्गानि मम प्रीतिश्च जायते‖ ॥ २३ ॥
भोगिना यदि वा रोध्रं यदि पिप्पलिकामधु ।
मधूकमश्वपर्णं वा रोहिणञ्चैव कर्कटम् ।
एतेषां प्राप्य लभते शास्त्रज्ञः कर्म्मकारकः ॥ २४ ॥
करेण यस्य चूर्णेन पिष्टचूर्णेन वा पुनः ।
एतदुद्वर्त्तनं** कुर्य्यान्मम गात्रसुखावहम् ॥ २५ ॥

* यावन्ति जलविन्दूनि लिप्यमानस्य सुन्दरीति (ग) ।
।न्दूनीति क्लीवमार्षं विन्दव इति साधु ।

† पुरुषैर्योऽनुलिप्यत इति (ग) ।

‡ एकेनैवानुलेपेन गोषु योन्या प्रमुच्यते इति (ग) ।

§ एवं योऽभ्यञ्जनं दत्त्वा विशिष्टेनैव कर्म्मणा ।
यावन्तो विन्दवः केचित्स्नेहं घृततैलानि वेति (ग) ।

¶ प्रतिष्ठते इति साधु ।

‖ विशुद्धिर्मम जायत इति (ग) ।

** एतेनोद्वर्त्तनमिति (ग) ।

यदीच्छेत्परमां सिद्धिं मम कर्म्मानुसारकः ।
एवमुद्वर्त्तनङ्कृत्वा स्नानकर्म्म तु* कारयेत् ॥ २६ ।
तत आमलकञ्चैव वसुगन्धार्णमुत्तमम् ।
तेन मे सर्व्वगात्राणि मर्द्दयित्वा दृढ़व्रतः ।
जलकुम्भं ततो गृह्य इमं मन्त्रमुदाहरेत्† ॥ २७ ।
देवानां देवदेवोऽसि देव अनादिभूत ।
तवाव्यक्तरूपं स्नानं गृहाण माम्‡ ॥ २८ ।
एवन्तु स्नापनं कुर्य्यान्मम मार्गानुसारकः ।
अथ सौवर्णकुम्भेन रजतस्य घटेन वा ।
एतेषामप्यलाभेन कर्म्मज्ञः कर्म्म कारयेत् ।
ताम्रकुम्भमयेनैव कुर्य्यात्स्नापनमुत्तमम् ॥ २९।३० ।
एवन्तु स्नापनङ्कृत्वा विधिदृष्टेन कर्म्मणा ।
पश्चाद्गन्धः प्रदातव्यः प्रकृष्टो मन्त्रसंयुतः§ ॥ ३१ ।
सर्व्वगन्धाः सौमनस्याः सर्व्ववर्णाश्च ते मताः ।
उत्पन्नाः सर्व्वलोकेषु त्वया सत्येषु योजिताः¶ ॥ ३२ ।

* सर्व्वकर्म्माणीति (ग) ।

† (ग) पुस्तकेऽतः परं (मन्त्रा ऊचुः) इति पाठः ।

‡ देवानां देवोऽसि देव अनादि अनन्तव्यक्तरूपस्नानं गृह्य मामिति (ग) ।

§ अतः परं (ग) पुस्तके (मन्त्रा ऊचुः) इति पाठः ।

¶ सर्व्वगन्धाः सर्व्वसौगन्धिभिश्चैव सर्व्वे वर्णा ये केचिदनिन्द्यवर्णास्त्वया दत्ताः सप्त-लोकेषु देवता वा देहेन गति सुगन्धं ममादाय समावेदमपयुषि मम भक्ताय तुष्टाय प्रतिगृह्णीष्व माधव इति (ग) ।

मया च ते तवाङ्गेषु तानावह शुचीन्प्रभो।
मम भक्त्या सुसन्तुष्टः प्रतिगृह्णीष्व* माधव॥ ३३।
एवं गन्धांस्ततो दत्त्वा उत्कृष्टं कर्म्म कारयेत्।
कर्म्मण्यान्यपि माल्यानि ततो मह्यं प्रदापयेत्† ॥ ३४।
तदेव‡ चार्च्चनङ्कृत्वा कर्म्मण्यः§ कर्म्मसम्मितः।
ततः पुष्पाञ्जलिं दत्त्वा इमं मन्त्रमुदीरयेत्¶ ॥ ३५।
जलजं स्थलजञ्चैव पुष्पं कालोद्भवं शुचि।
मम संसारमोक्षाय गृह्ण गृह्ण|| ममाच्युत॥ ३६।
एवंविधोपचारेण अर्च्चयित्वा मम प्रियम्।
पश्चाद्धूपञ्च मे दद्यात्सुगन्धद्रव्यसम्मितम्** ॥ ३७।
धूपं गृह्य विधानेन ममोक्तं सुखवल्लभम्††।
उभयेषु कुलेष्वात्मा धूपमन्त्रमुदीरयेत्‡‡ ॥ ३८।
वनस्पतिरसं दिव्यं बहुद्रव्यसमन्वितम्।
मम संसारमोक्षाय धूपोऽयं प्रतिगृह्यताम्॥ ३९।

---

* प्रतिगृहाणेति साधु।

† कर्म्मण्येष्वपि माल्येषु शीघ्रमेव प्रदापयेदिति (ग)।

‡ तमेवेति (ग)।

§ कर्म्मज्ञ इति (ग)।

¶ उदाहरेदिति (ग)।

|| गृहाण गृहाणेति साधु।

** पश्चाद्धूपांश्च मे दद्याद्गन्धद्रव्यसमन्वितानिति (ग)।

†† समायुक्तं महत्तरमिति (ग)।

‡‡ उदाहरेदिति (ग)।

मन्त्रः ।—शान्तिर्वै सर्व्वदेवानां शान्तिर्मम परायणम् ।
सांख्यानां शान्तियोगेन धूपं गृह्ण नमोऽस्तु ते* ।
त्राता नान्योऽस्ति मे कश्चित्त्वां विहाय जगद्गुरो ॥ ४० ।
एवमभ्यर्च्चनं कृत्वा माल्यगन्धानुलेपनैः ।
पश्चाद्वस्त्रञ्च वै दद्यात्† क्षौमशुक्लं सपीतकम् ॥ ४१ ।
एवञ्चैव‡ समादाय कृत्वा शिरसि चाञ्जलिम् ।
दिव्ययोगं समादाय इमं मन्त्रमुदीरयेत्§ ॥ ४२ ।

प्रीयतां भगवान्पुरुषोत्तमः
श्रीनिवासः श्रीमानानन्दरूपः ।
गोप्ता कर्त्ताधिकर्त्ता नान्यनाथ
भूतनाथ आदिरव्यक्तरूपः ।
क्षौमं वस्त्रं पीतरूपं मनोज्ञं
देवाङ्गे स्वे गात्रप्रच्छादनाय¶ ॥ ४३ ।

वस्त्रैर्विभूषणं कृत्वा मम गात्रानुसारिणम् ।
पश्चात्पुष्पं गृहीत्वा तु आसनञ्चोपकल्पयेत् ।
गृहीत्वा प्रणवाद्येन‖ धर्म्मपुण्येन संवृतः ॥ ४४ ।

---

* शान्तिर्देवतामित्र काष्ठे वसति शान्तिः ।
सांख्यानां शान्तियोगानां गृह्य धूपं मम संसारमोचणमिति (ग) ।

† ततो दद्यादिति (ग) ।

‡ एवं वस्त्रमिति (ग) ।

§ अतः परं (मन्त्रा ऊचुः) इति (ग) ।

¶ देव त्वं गृह्ण गात्रप्रदानाय चेति (ग) ।

‖ प्रणवाद्यैनेति (ग) ।

दं परायणं परस्परप्रीतिकरं प्राणरक्षणं प्राणिनां श्लिष्टं
दनुकल्पं सत्यमुपयुक्तमात्मने तदेव गृहाण* ।

एवन्तु प्रापणं कृत्वा मम मार्गानुसारकः ।
मुखप्रक्षालनं दत्त्वा शीघ्रमेव प्रकल्पितम्† ॥ ४५ ॥
शुचिः स्नुवति‡ देवानामेतदेव§ परायणम् ।
शौचार्थन्तु जलं गृह्य कृत्वा प्रापणमुत्तमम् ॥ ४६ ॥
एवन्तु भोजनं दत्त्वा व्यपनीय तु प्रापणम् ।
ताम्बूलन्तु ततो गृह्य इमं मन्त्रमुदीरयेत्¶ ॥ ४७ ॥

न्त्रः—अलङ्कारं सर्व्वतो देवानां द्रव्येणानुक्तः सर्व्वसौगन्धिका-
देभिः गृह्य ताम्बूल लोकनाथविशिष्टमस्माकञ्च भवनं तव
तिमा च ह‖ ।

अलङ्कारं मुखे श्रेष्ठं तव प्रीत्या मया कृतम् ।
मुखप्रसादनं श्रेष्ठं देव गृह्ण मया कृतम्** ॥ ४८ ॥

* इदं परापरं नाम परस्परेण शास्त्रपरप्रमाणं प्रमाणिनां वै श्लिष्टं तदनुकल्पप्रयुक्ता-
त्मानं सत्यं सदैव गृह्णात् इति (ग) ।

† मन्त्रप्रकल्पितमिति (ग) ।

‡ स्तवेति इति (ग) । स्नौतीति साधु ।

§ एवञ्चैवमिति (ग) ।

¶ अतः परं (मन्त्रा ऊचुः) इति (ग) ।

‖ तव प्रीतिर्मे भवमिति (ग) ।

** मनोहरमिति (ग) ।

एतेनैवोपचारेण मद्भक्तः कर्म्म कारयेत् ।
अनुमुक्तो महालोकान् पश्यति* मम नित्यशः ॥ ४९ ।

इति वराहपुराणे भगवच्छास्त्रे देवोपचारविधिर्नाम
अष्टादशाधिकशततमोऽध्यायः ।

## ऊनविंशत्यधिकशततमोऽध्यायः

धरण्युवाच

एवं कर्म्मविधिं श्रुत्वा सर्व्वसंसारमोक्षणम् ।
प्रसन्नवदनन्देवं पुनर्वाक्यमुवाच ह ॥ १ ।
एवं महौजसं कर्म्म तव मार्गानुसारतः ।
त्वत्तस्तु प्रापणविधिस्तव प्रीत्या मया श्रुतः ।
केन द्रव्येण संयुक्तं तन्ममाचक्ष्व माधव ॥ २ ।
वसुधाया वचः श्रुत्वा वराहः प्रीतमानसः* ।
उवाच धर्म्मसंयुक्तं धर्म्मज्ञो वाक्यकोविदः ॥ ३ ।

* पश्यतीति साधु ।

* परमात्मवानिति (ग) ।

वराह उवाच।

येन मन्त्रेण संयुक्तो मम प्रापणकं नयेत्।
सप्त व्रीहीन्ततो गृह्य पयसा सह संयुतम्॥ ४॥
परमन्नस्य शाकानि मधूकोदुम्बरन्तथा।
एते चान्ये च बहवः शतशोऽथ सहस्रशः।
कर्म्मण्याश्च त एतेषां ये मया* परिकीर्त्तिताः॥ ५॥
व्रीहीणाञ्च प्रवक्ष्यामि उपयोग्यानि माधवि।
एकाग्रं मानसं कृत्वा† प्रापणं शृणु सुन्दरि॥ ६॥
धर्म्मचिल्लिकशाकञ्च सुगन्धं रक्तसालिकौ।
दीर्घशालिमहाशाली वरकुङ्कुममाचिकौ॥ ७॥
आमोदाग्निवसुन्दर्य्यौ शिरीकाकुलशालिकाः‡।
विविधं यावकान्नञ्च ज्ञेयान्येतानि कर्म्मणि॥ ८॥
कर्म्मण्या मुद्गमाषा वै तिलकङ्कुलिच्यकाः।
गवेधुकं महामोहं मकुष्ठमथवाहिजाम्।
श्यामाकमिति चोक्तानि कर्म्मण्यानि वसुन्धरे§॥ ९॥
कर्म्मण्यानि च शाकानि विजानीहि वसुन्धरे।
एतानि प्रतिगृह्णामि यच्च¶ भागवतं प्रियम्॥ १०॥

* कर्म्मण्यश्च य एतेषां ते मयेति (ग)।

† एकचित्तं समादायेति (ग)

‡ कालिका इति (ग)।

§ (ग) ८ श्लोकस्य उत्तरार्द्धं ९ श्लोकश्च न स्तः।

¶ प्रतिगृह्णाम्यहमेतामिति (ग)।

मार्गमांसं वरं छागं शासं समनुयुज्यते ।
एतान् हि प्रापणे दद्यान्मम चैतत्* प्रियावहम् ॥ ११ ।
युञ्जानां वितते यज्ञे ब्राह्मणे वेदपारगे ।
भागो ममास्ति तत्रापि पशूनां छागलस्य च ॥ १२ ।
माहिषं वर्ज्जयेन्मह्यं चीरं दधि घृतं ततः ।
वर्ज्जयेत्तत्र मांसानि यजुषा वैष्णवोऽश्नुते ।
परं पायसमपि वर्ज्यानि तन्मांसं चेतकः खुरे ॥ १३ ।
पक्षिणाञ्च पवक्ष्यामि ये प्रयोज्या वसुन्धरे ।
ये चैव मम क्षेत्रेषु उपयुज्यन्ति† नित्यशः ॥ १४ ।
लावकं वार्त्तिकञ्चैव प्रशस्तञ्च कपिञ्जलम् ।
एते चान्ये च बहवः शतशोऽथ सहस्रशः ।
मम कर्म्मणि योग्या ये ते मया परिकीर्त्तिताः ॥ १५ ।
यस्त्वेतत्तु विजानीयात्कर्म्मकर्त्ता तथैव च‡ ।
नापराध्नोति स नरो मम चोक्तं§ वचः प्रिये ॥ १६ ।
ते च भोज्याश्च¶ मङ्गल्या मम भक्तसुखावहाः ।

* मम चैवेति (ग) ।

† उपयुज्यन्ते इति माधु ।

‡ कदाचनेति (ग) ।

§ ततश्च नापराधोक्तं ममैवोक्तमिति (ग) ।

¶ भोग्यार्थेति (ग) ।

ततोपष्टव्यमेवं हि य इच्छे*त्सिद्धिमुत्तमाम् ॥ १७ ।
य एतेन विधानेन यजिष्यन्ति वसुन्धरे ।
प्राप्नुवन्ति परां सिद्धिं ममैव कृतकर्म्मिणः† ॥ १८ ।

इति वराहपुराणे भगवच्छास्त्रे प्रापणद्रव्यकर्म्मण्यभोज्यनियमविधिर्नाम
ऊनविंशत्यधिकशततमोऽध्यायः ।

# विंशत्यधिकशततमोऽध्यायः ।

वराह उवाच ।

शृणुष्व परमं गुह्यं पूर्व्वं पृष्टं त्वया धरे* ।
देवि सर्व्वं प्रवच्यामि संसारतरणं महत् ॥ १ ।
स्नानं कृत्वा यथान्यायं मम कर्म्मपरायणाः ।
उपसर्पन्ति ये भक्त्या कद्रुनाग्रा जितेन्द्रियाः ॥ २ ।
यश्चैवमुच्यते भद्रे मम रूपं सनातनम् ।

* यदासीति (ग) ।

† प्राप्नोति परमां सिद्धिं ममैव कृतकर्म्मण इति (ग) ।

* शृणोहि परमं गुह्यं यत्त्वया परिपृच्छितमिति (ग) ।
शृणु इति साधु । परिपृष्टमिति साधु ।

अहमेव वरारोहे सर्व्वभूतसनातनम् ॥ ३ ।
अधश्चोर्द्धञ्च तिर्य्यक् च अहमेव व्यवस्थितः ।
दिशाश्च विदिशाश्चैव उपर्य्युपरि भाविनि ॥ ४ ।
सर्व्वथा वन्दनीयास्ते मम भक्तेन सर्व्वदा* ।
क्रियासमूहयुक्तेन यदीच्छेत्परमां गतिम् ॥ ५ ।
अन्यच्च ते प्रवक्ष्यामि† गुह्यं लोके महत्प्रयः ।
यथा वै वन्दनीयास्ते मम मार्गानुसारिणः ॥ ६ ।
कृत्वापि परमं कर्म्म बुद्धिमादाय तद्विधाम् ।
ततः पूर्व्वमुखो भूत्वा पुनर्गृह्य जलाञ्जलिम् ।
ओं नमो नारायणेत्युक्त्वा‡ इमं मन्त्रमुदीरयेत् ॥ ७ ।

यजामहे धर्म्मपरायणाङ्गवं
नारायणं सर्व्वलोकप्रधानम् ।
ईशानमाद्यं पुरुषं पुराणं
संसारमोक्षाय कृपाकरन्तम् ॥ ८ ।

ततः पश्चान्मुखो भूत्वा पुनर्गृह्य जलाञ्जलिम् ।
द्वादशाक्षरमुच्चार्य्य§ इमं मन्त्रमुदीरयेत्¶ ॥ ९ ।

* नित्यशः इति (ग) ।

† अन्यत्ते संप्रवक्ष्यामीति (ग) ।

‡ मूलयोगं समादायेति (ग) ।

§ ओंनमो नारायणेत्युक्त्वेति (ग) ।

¶ (ग) पुस्तकेऽतः परं (मन्त्रा ऊचुः) इत्यधिकः पाठो वर्त्तते ।

यथा तु देवः प्रथमादिकर्त्ता
पुराणकल्पश्च यथा विभूतिः।
तथा स्थितश्चादिमनन्तरूप-
ममोघसङ्कल्पमनन्तमीडे॥ १०।

ततस्तेनैव कालेन* पुनर्गृह्य जलाञ्जलिम्।
तेनैव चास्य योगेन भूत्वा चैवोत्तरामुखः।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदाहरेत्॥ ११।

यजामहे दिव्यं परं पुराण-
मनादिमध्यान्तमनन्तरूपम्।
भवोद्भवं विश्वकरं प्रशान्तं
संसारमोक्षावहमद्वितीयम्॥ १२।

ततस्तेनैव कालेन भूत्वा वै दक्षिणामुखः।
नमः पुरुषोत्तमायेत्युक्त्वा इमं मन्त्रमुदीरयेत्॥ १३।

यजामहे यज्ञमहो रूपन्तु सत्यं
ऋतञ्च कालादिमरूपमाद्यम्।
अनन्यरूपञ्च महानुभावम्।
संसारमोक्षाय कृतावतारम्॥ १४।

काष्ठकृत्यस्ततो भूत्वा कृत्वा चेन्द्रियनिग्रहम्।
अच्युते तु मनः कृत्वा इमं मन्त्रमुदाहरेत्॥ १५।

यजामहे सोमपं भवन्तं ते
सोमार्कनेत्रं शतपत्रनेत्रम्।

* अथ तस्मिंस्तु कालेऽस्मिन्निति (क)।

जगत्प्रधानं ननु लोकनाथं
मृत्युर्निसंसारविमोचणश्च॥ १६ ।
त्रिषु सन्ध्यास्वनेनैव विधिना कुर्य्यान्मम च कर्म्म तत् ।
बुद्ध्या युक्त्या च मत्या च यदीच्छेत्परमां गतिम्* ॥ १७
गुह्यानां परमं गुह्यं योगानां परमो निधिः† ।
सांख्यानां परमं सांख्यं कर्म्मणां कर्म्म चोत्तमम् ॥ १८ ।
एतन्न दद्यान्मूर्खाय पिशुनाय शठाय च ।
दीक्षितायैव दातव्यं सुशिष्याय दृढ़ाय च ॥ १९ ।
एतन्मरणकालेऽपि गुह्यं विष्णुप्रभाषितम् ।
बुद्ध्या धारयितव्यञ्च न विस्मर्त्तव्यं कदाचन‡ ॥ २० ।
य एतत्पठते§ नित्यं कल्पोच्छ्रायी दृढ़व्रतः ।
ममापि हृदये नित्यं स तिष्ठति न संशयः¶ ॥ २१ ।
य एतेन विधानेन त्रिसन्ध्यं कर्म्म कारयेत् ।
तिर्य्यग्योनिविनिर्मुक्तो‖ मम लोकाय गच्छति ॥ २२ ।

इति वराहपुराणे भगवच्छास्त्रे त्रिसन्ध्यामन्त्रोपस्थानकरणं नाम
त्रिंशत्यधिकशततमोऽध्यायः ।

---

* एतेषां त्रिषु सन्ध्यासु कर्म्मचैवं समाचरेत् ।
बुद्धिमान्मतिमान् भूत्वा यदीच्छेत्परमां गतिमिति (ग) ।

† योगानां परमो योगो गुह्यानां परमः पर इति (ग) ।

‡ बुद्धिमान्मतिमान् भूत्वा विस्मरेन्न कदाचनेति (ग) ।

§ पठतीति साधु ।

¶ संस्थितं त्रिगुणान्वितमिति (ग) ।

‖ तिर्य्यग्योन्यापि संप्राप्त इति (ग) ।

# एकविंशत्यधिकशततमोऽध्यायः ।

वराह उवाच ।

येन गर्भं न गच्छेत* तच्छृणुष्व वसुन्धरे† ।
कथयिष्यामि ते ह्येवं सर्व्वधर्म्मविनिश्चयम् ॥ १ ॥
कृत्वापि विपुलं कर्म्म आत्मानं न प्रशंसति ।
करोति बहुकर्म्माणि शुद्धेनैवान्तरात्मना ॥ २ ॥
कृत्वा तु मम कर्म्माणि‡ समर्थोऽनुग्रहे रतः ।
कार्य्याकार्य्ये विजानाति सर्व्वधर्म्मेषु निष्ठितः ॥ ३ ॥
शीतोष्णवातवर्षादिक्षुत्पिपासासहश्च यः ।
यो दरिद्रो निरालस्यः सत्यवागनसूयकः ॥ ४ ॥
स्वदारनिरतो नित्यं परदारविवर्जकः§ ।
सत्यवादी विशुद्धात्मा नित्यं भागवतप्रियः ॥ ५ ॥
संविभाज्य विशेषज्ञो नित्यं ब्राह्मणवत्सलः ।

---

* गच्छेदिति साधु ।

† तस्मै शृणुहि माधवीति (ग) । शृणु इति साधु ।

‡ कार्य्याणीति (ग) तत्राऽतः परं—
नैव कुर्व्वत्यहंकारं क्रोधं चैव न गच्छति ।
समं पश्यति चित्तेन लाभालाभविवर्ज्जितः ।
पञ्चानामिन्द्रियाणाञ्च समर्थो निग्रहे रतः ॥
इति पाठो वर्त्तते ।

§ विवर्ज्जितः इति (ग) ।

प्रियभाषी* द्विजानाञ्च मम कर्म्मपरायणः।
कुयोनिन्तु न गच्छेत मम लोकाय गच्छति ॥ ६ ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व† वसुन्धरे।
यो वियोनिं न गच्छेत‡ मम कर्म्मपरायणः ॥ ७ ।
जीवहिंसानिवृत्तस्तु§ सर्व्वभूतहितः शुचिः।
सर्व्वत्र समतायुक्तः समलोष्टाश्मकाञ्चनः ॥ ८ ।
बाल्ये स्थितोऽपि वयसि क्षान्तो दान्तः शुभे रतः।
नित्यं नैव विजानाति परेणापकृतं क्वचित् ॥ ९ ।
कर्त्तव्यं संस्मरेत्सर्व्वं मम सत्यञ्च जल्पति¶।
व्यलीकादिनिवृत्तो यस्तथेतिकृतनिश्चयः ॥ १० ।
नित्यञ्च वृत्तिमान्कश्चि‖त्परोक्षेऽपि न चाक्षिपेत्।
ऋतुकालेऽपि गच्छेद्यः अपत्यार्थे स्वकां स्त्रियम् ॥ ११
ईदृशास्तु नरा भद्रे मम कर्म्मपरायणाः।
ते वियोनिं न गच्छन्ति मम गच्छन्ति सुन्दरि ॥ १२ ।

* प्रियवादीति (ग)।

† शृणु इति साधु, एवं सर्व्वत्र।

‡ गच्छेदिति साधु।

§ जीवांस्तु ये न हिंसन्तीति (ग)।

¶ असत्यञ्च न जल्पतीति (ग), तत्र इतः पूर्व्वं पाठभेदोऽस्ति तच्चाशुद्धबहुलतया परित्यक्त एव।

‖ नित्यञ्च धृतिमान्यश्चेति (ग), तत्र परोक्षे च न निक्षिपेदिति च पाठः।

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व* वसुन्धरे।
पुरुषाणां प्रसन्नानां यस्य धर्म्मः† सनातनः॥ १३॥
मनुनाप्यन्यथा दृष्टोह्यन्यथाङ्गिरसेन च।
शुक्रेण चान्यथा दृष्टोगौतमेनापि चान्यथा॥ १४॥
सोमेन चान्यथा दृष्टोरुद्रेणाप्यन्यथा पुनः।
शङ्खेन चान्यथा दृष्टोलिखितेनापि चान्यथा॥ १५॥
कश्यपेनान्यथा दृष्टोधर्म्मेणाप्यन्यथा धरे।
अग्निना वायुना चैव दृष्टोधर्म्मोऽन्यथा धरे॥ १६॥
यमेन चान्यथा दृष्टइन्द्रेण वरुणेन च।
कुवेरेणान्यथा दृष्टः शाण्डिल्येनापि चान्यथा॥ १७॥
पुलस्त्येनान्यथा दृष्टआदित्येनापि चान्यथा।
पितृभिश्चान्यथा दृष्टोह्यन्यथापि स्वयम्भुवा॥ १८॥
आत्मनात्मनि धर्म्मेण ये नरा निश्चितव्रताः।
स्वकं पालयते धर्म्मं स्वमतेनैव भाषितम्॥ १९॥
परवादं न कुर्व्वीत सर्व्वधर्म्मेषु निश्चितम्।
न निन्देद्धर्म्मकार्य्याणि आत्मधर्म्मपथे स्थितः॥ २०॥
एभिर्गुणैः समायुक्तो मम कर्म्माणि कारयेत्‡।
विर्य्यानिं स न गच्छेत§ मम लोकाय गच्छति॥ २१॥

---

* शृणु इति साधु। एवं परत्रापि।

† मम इति (ग)।

‡ कुर्व्वतीति (ग)। करोतीति साधु।

§ गच्छेदिति साधु। एवं परत्रापि।

पुनरन्यत्तु वक्ष्यामि तच्छृणुष्वेह माधवि ।
तरन्ति पुरुषा येन गर्भसंसारसागरम् * ॥ २२ ।
जितेन्द्रिया जितक्रोधा लोभमोहविवर्ज्जिताः ।
आत्मोपकारका नित्यन्देवातिथिगुरुप्रियाः† ॥ २३ ।
हिंसादीनि न कुर्व्वन्ति मधुमांसविवर्ज्जकाः‡ ।
मनसा ब्राह्मणीञ्चैव योगच्छेन्न कदाचन ॥ २४ ।
विप्राय कपिलां दद्याद्दत्तं सान्त्वेन पालयेत् ।
सर्व्वेषाञ्चैव पुत्राणां न विशेषं करोति यः§ ॥ २५ ।
संक्रुद्धं ब्राह्मणं दृष्ट्वा यस्तु तत्र प्रसादयेत् ।
यः स्पृशेत्कपिलां भक्त्या कुमारीं न च दूषयेत् ॥ २६ ।
अग्निं न च क्रमेत्पद्भ्यां न च पुत्रेण भाषयेत् ।
जले न मेहयेद्यस्तु¶ गुरुभक्तो न जल्पकः ॥ २७ ।
एवं धर्म्मेण संयुक्तो योऽनु मां प्रतिपद्यते ।
स च गर्भं न गच्छेत मम लोकाय गच्छति ॥ २८ ।

इति वराहपुराणे श्रीनिगर्भमोचणो नाम
एकविंशत्यधिकशततमोऽध्यायः ।

* सागरादिति (ग) ।
† देवतातिथिषु प्रिया इति (ग) ।
‡ विवर्ज्जिता इति (ग) ।
§ विशेषं यो न कुर्व्वतीति (ग) ।
¶ जलेन मेहनञ्चैवेति (ग) ।

# द्वाविंशत्यधिकशततमोऽध्यायः ।

वराह उवाच ।

गुह्यानां परमं गुह्यं तच्छृणुष्व वसुन्धरे ।
तिर्य्यग्योनिगताश्चापि येन मुच्यन्ति* किल्बिषात् ॥ १ ।
अष्टम्याञ्च चतुर्द्दश्यां मैथुनं यो न गच्छति ।
भुक्त्वा परस्य चान्नानि यश्चैव न विकुत्सति ॥ २ ।
बाल्ये वयस्यपि च यो† मम नित्यमनुव्रतः ।
येन केनापि सन्तुष्टो यो मातापितृपूजकः ॥ ३ ।
आयासे जीवति न यः प्रविभागी गुणान्वितः‡ ।
दाता भोक्ता च कार्य्येषु स्वतन्त्रो नित्यसंयतः ॥ ४ ।
विकर्म्म नाभिकुर्व्वीत कौमारव्रतसंस्थितः ।
सर्व्वभूतदयायुक्तः सत्वेन च समन्वितः ॥ ५ ।

* मुच्यन्तीति आर्षं, मुच्यन्ते इति साधु । येन गच्छति किल्बिषा इति (ग) ।

† बाले वयसि वर्त्तेत इति (ग) ।

‡ (ग) पुस्तकेऽत्र एवं पाठोऽस्ति—

प्राशं भुञ्जीत नित्यञ्च स्वयं न परिवेषकः ।
अलुब्धः सर्व्वकार्य्येषु स्वतन्त्रो नित्यसंयतः ।
विकर्म्म नाभिकुर्व्वीत कौमारव्रतसंस्थितः ।
सर्व्वभूतदयीनित्यं संविभागी गुणान्वितः ।
दाता भोक्ता च सच वै सत्वेन च समन्वितः ॥ इति ।

मत्या च निस्पृहोऽत्यन्तं परार्थेष्वस्पृहः सदा* ।
ईदृग्बुद्धिं समादाय मम कर्म्म करोति यः† ।
तिर्य्यग्योनिं न गच्छेत मम लोकाय गच्छति ॥ ६ ।
इमं गुह्यं वरारोहे देवैरपि‡ दुरासदम् ।
तच्छृणुष्वानवद्याङ्गि कथ्यमानं मयाऽनघे ॥ ७ ।
जरायुजाण्डजोद्भिज्जस्वेदजानि कदाचन ।
ये न हिंसन्ति भूतानि शुद्धात्मानो दयापराः§ ॥ ८
यस्तु कोकामुखे देवि ध्रुवं प्राणान्परित्यजेत् ।
मनसा न चलत्येव मम वल्लभतां व्रजेत् ॥ ९ ।
ततो विष्णुवचः श्रुत्वा सा मही संशितव्रता ।
वराहरूपिणन्देवं प्रत्युवाच वसुन्धरा ॥ १० ।

धरण्युवाच ।

अहं शिष्या च दासी च भक्ता च त्वयि माधव ।
एवं मे परमं गुह्यं त्वद्भक्त्या वक्तुमर्हसि ॥ ११ ।
चक्रं वाराणसीञ्चैव अट्टहासञ्च नैमिषम् ।
भद्रकर्णह्रदञ्चैव हित्वा कोकां प्रशंससि¶ ॥ १२ ।

---

* मतिमान्नैव तप्यन्ते परार्थेषु कदाचनेति (ग) ।

† ईदृशीं बुद्धिमादाय मम कर्म्माणि कुर्व्वतीति (ग) ।

‡ देवैरतीति (क), (ख) ।

§ ये न हिंसन्ति भूतानि स्वेदजोद्भिज्जमण्डजान् ।
जरायुजानां शुद्धात्मा सर्व्वभूतदयापरः इति (ग) ।

¶ भद्रकर्णह्रदं नैव कोकं किं वै प्रशंससीति (ग) ॥

नगरञ्च हिरण्डञ्च मुकुटं* मण्डलेश्वरम्।
केदारञ्च ततो मुक्ता किन्नु कोकां प्रशंससि† ॥ १३ ॥
देवदारुवनं मुक्ता तथा जालेश्वरं‡ विभुम्।
दुर्गं महाबलं मुक्ता किं वै कोकां प्रशंससि ॥ १४ ॥
गोकर्णञ्च ततो मुक्ता शुक्कञ्जाल्मेश्वरन्तथा§।
एकलिङ्गं ततो मुक्ता किं वा कोकां प्रशंससि ॥ १५ ॥
एवं पृष्टस्तया भक्त्या माधवश्च महाप्रभुः।
वराहरूपी भगवान्प्रत्युवाच वसुन्धराम् ॥ १६ ॥

वराह उवाच।

एवमेतन्महाभागे यन्मान्त्वं भीरु भाषसे।
कथयिष्यामि ते गुह्यं कोका येन विशिष्यते ॥ १७ ॥
एते रुद्राश्रिताः क्षेत्रा ये त्वया परिकीर्त्तिताः¶।
एते पाशुपताश्चैषा कोका भागवतस्य ह|| ॥ १८ ॥
तत्रान्यत्ते** प्रवक्ष्यामि महाख्यानं वरानने।
क्षतं कोकामुखे चैव मम क्षेत्रे हि†† सुन्दरि ॥ १९ ॥

---

* कुक्कुटमिति (ग)।

† कोकां किं वै प्रशंससीति (ग)। एवं परत्रापि।

‡ यागेश्वरमिति (ग)।

§ गोकर्णञ्च ततोगुह्यं शुक्कञ्जाल्मेश्वरं तथेति (ग)।

¶ क्षेत्रशब्दस्य तद्विशेषणानाञ्च पुंस्त्वमार्षम्।

|| आर्षप्रयोगबाहुल्याच्छ्लोक एष (क) (ख) पुस्तकयोर्न धृत इत्यनुमीयते।

** अन्यच्च ते (ग)।

†† मम क्षेत्रेष्विति (ग)।

कश्चिल्लुब्धो मिषाहारश्चरन्वै* कोकमण्डले ।
तत्राल्पेनाम्बुना युक्ते ह्रदे मत्स्यस्तु तिष्ठति† ॥ २० ॥
दृष्ट्वा तं लुब्धकस्तूर्णं वडिशेनाजहार ह ।
तस्य हस्तात्तु बलवान्मत्स्यस्तूर्णं विनिर्गतः ॥ २१ ॥
अथ श्येनस्तु तं हर्त्तुं मन्त्रयित्वा नभश्चरः ।
निपत्य तं गृहीत्वैव प्रोड्डीनस्त्वरयान्वितः ।
अशक्तस्य ततोनेतुं मत्स्यः कोकामुखेऽपतत् ॥ २२ ॥
तत्तीर्थस्य प्रभावेण राजपुत्रोऽभवत्प्रभुः ।
रूपवान् गुणवान् शुद्धः कुलेन वयसान्वितः‡ ॥ २३ ॥
अथ कालेन तस्यैव मृगव्याधस्य चाङ्गना ।
गृहीत्वा चैव मांसानि गच्छन्ती याति तत्र वै§ ॥ २४ ॥
एका चिल्ली मांसलुब्धा तद्धस्तान्मांसगर्द्धिनी ।

* लुब्धोह्यामिषमाहारं चरन्तमिति (ग) ।

† अल्पोदके पु तिष्ठन्तं ततोमध्येन मत्स्यकमिति (ग) ।

‡ २१.२२.२३ श्लोकाः (ग) पुस्तके एवं पठिताः ।—

स तेनापि प्रवृद्धेन विद्धोमत्स्यः कदाचन ।
मत्स्योऽथ बलवांस्तत्र लुब्धकस्य च पाणितः ॥
दूरे चैव धृतस्तेन स तु मत्स्यो दिगम्बरे ।
श्येनोमन्यथते हन्तुं निःश्वसन् खचरस्तथा ॥
सोऽपतन्मम चैव तु कोकायान्तु वसुन्धरे ।
शकस्य पुत्रोजायेत रूपवान् बलवान् शुचिः ॥

§ (ग) पुस्तकेऽत्र पाठान्तरमस्ति, तथापुद्धिबाहुल्यान्नोद्धृतम् ।

आगत्यागत्य तरसा हर्त्तुं समुपचक्रमे* ॥ २५ ।
मृगव्याधा बलान्मांसं हर्त्तुकामान्तु चिल्लिकाम्† ।
बाणेनैकेन संहत्य पातिता भुवि तत्क्षणात्‡ ॥ २६ ।
आकाशात्पतिता भद्रे कौकायां मम सन्निधौ§ ।
जाता चन्द्रपुरे रम्ये¶ राजपुत्री यशस्विनी ॥ २७ ।
व्यवर्द्धत सा तु कन्या वयोरूपगुणान्विता ।
चतुःषष्टिकलायुक्ता पुरुषं सा जुगुप्सति ॥ २८ ।
रूपवान् गुणवान् शूरो युद्धकार्य्यार्थनिश्चितः ।
सौम्यश्च पुरुषश्चैव सा च नेति जुगुप्सति‖ ॥ २९ ।
अथ केनचित्कालेन शक आनन्दपूरके ।
सम्बन्धोऽजायत तयोर्मध्यमे वयसि स्थयोः** ॥ ३० ।

---

* अथ चामिषलुब्धा वै चिल्ली व्यचरदम्बरे ।
तस्मिन्देशे समागम्य मांसं हरितुमिच्छति ॥ इति (ग)। हर्त्तुमिति साधु

† मांसगर्द्धनलोलुपामिति (ग)।

‡ एकेनैव तु वाणेन सा वै निपतिता सहेति (ग)।

§ मण्डले इति (ग)।

¶ चैषेति (ग)।

‖ सा तु वै वर्द्धते कन्या चतुःषष्टिकलान्विता ।
रूपयौवनसम्पन्ना पुरुषं सा जुगुप्सति ॥
जुगुप्सतीति आर्षं, जुगुप्सते इति साधु। (ग) पुस्तकेऽतः परं
रूपवान् गुणवान् शूरो युद्धकार्य्यार्थनिश्चितः ।
सौम्यश्च पुरुषश्चैव सर्व्वानभिजुगुप्सतीत्यधिकः पाठो वर्त्तते ।

** सम्बन्धो जायते तेषां मभिच्छया वरानने इति (ग)।

तथा तु तौ समासाद्य परस्परमथ क्रमात्* ।
यथान्यायं स विप्राक्तं विधिदृष्टेन कर्म्मणा ॥ ३१ ।
स च तया समं नित्यं सा च तेन समं शुभा ।
अन्योन्यं रममाणौ तौ मुहूर्त्तमपि नोज्झत: ॥ ३२ ।
गच्छन्त्येवं बहुतरे काले चैवाप्यनिन्दिता† ।
समप्रेम्णा च संयुक्ता सौहृदेन च नायकम्‡ ।
भजनाना विनीता च सौहृदाच्च विशेषत: ॥ ३३ ।
एवं बहुगत: काल: कामभोगेषु§ सक्तयो: ।
राजपुत्रस्ततोऽप्यत्र शकानां नन्दवर्द्धन: ।
तस्याजायत मध्याह्ने शिरोरुगतिपीड़िनी¶ ॥ ३४ ।
ये केचिद्द्विपजस्तत्र गदेषु कुशला: शुभे ।
ते तत्रौषधयोगञ्च चक्रुस्तेनापि वेदना|| ।
ननाश नैव संयात: कालोबहुतिथस्तत: ॥ ३५ ।
न सम्बुध्यति चात्मानं विष्णुमायाविमोहित:** ।
पूर्णे हि समये तत्तु उभयोश्च तदन्तरम् ॥ ३६ ।

---

* प्राप्तौ तु ताविहान्योन्यमुभयोश्चैव सुन्दरि इति (ग) ।
† एवं सुबहुधाकाले गच्छन्त्येव अनिन्दिता इति (ग) ।
‡ नायिकेति (ग) ।
§ बहुश्चैव गत: काल: समभोगेष्विति (ग) ।
¶ अतिभीषणेति (ग) ।
|| ते तस्य सर्व्वमाचष्टे न सा तिष्ठति वेदनेति (ग) ।
** प्रमोहित इति (ग) ।

तस्य कालः संवृतस्य योऽसौ पूर्व्वप्रतिस्तवः ।
अयने गत एतेषां वृत्तं कौतूहलं भुवि ॥ ३७ ।
अन्योऽन्यप्रीतियुक्तौ तु नान्योऽन्यं जहतुः क्वचित् ।
ततः सर्व्वानवद्याङ्गी भर्त्तारमिदमब्रवीत् ॥ ३८ ।
किमिदन्तव भद्रन्ते वेदना जायते शिरे* ।
एतदाचक्ष्व तत्त्वेन यद्यहञ्च तव प्रिया ॥ ३८ ।
बहवो भिषजश्चैव नानाशास्त्रविशारदाः ।
कुर्व्वन्ति तव कर्म्माणि वेदना च न गच्छति† ।
एवं स प्रियया प्रोक्तस्तां प्रियां पुनरब्रवीत् ॥ ४० ।
इदं किं विस्मृता भद्रे सर्व्वव्याधिसमन्वितम् ।
यल्लब्धं मानुषत्वञ्च सुखदुःखसमन्वितम् ।
संसारसागरारूढ़ं नातिप्रष्टुन्त्वमर्हसि‡ ।

* शिरसीति साधु ।

† शिरे तिष्ठति वेदनेति (ग) ।

‡ (ग) पुस्तकेऽत्र पाठभेदो यथा—

इतः किं विस्मृता भद्रे न च त्वं ज्ञातुमर्हसि ।
मानुष्यमेव यद्भद्रे सर्व्वव्याधिसमन्वितम् ॥
लभते जातमात्रेण दुःखानि च सुखानि च ।
एवं ज्ञातं वरारोहे मानुषत्वञ्च संहृतम् ।
संसारसागरारूढ़ं नातिपृच्छितुमर्हसि ॥ इति

।तिप्रष्टुमिति साधु ।

तेनैवं भाषिता बाला* श्रोतुकामा वरानना ॥ ४१।४२ ।
ततः कदाचिच्छयने सुप्तौ तौ दम्पती किल ।
गते बहुतिथे काले पुनः पप्रच्छ सा प्रियम्† ॥ ४३ ।
कथयस्व तमेवार्थं यन्मया पूर्व्वपृच्छितम्‡ ।
किं मां न भाषसे नाथ साभिप्रायं वचस्तव ॥ ४४ ।
गोप्यं वा किञ्चिदस्तीह किं गोपयसि मे पुरः ।
अवश्यञ्चैव वक्तव्यं यद्यहन्तव वल्लभा ॥ ४५ ।
इति निर्बन्धतः पृष्टः स शकाधिपतिर्नृपः ।
तां प्रियां प्रणयात्प्राह बहुमानपुरःसरम् ॥ ४६ ।
मुच्यतां मानुषं भावं तां जातिं स्मर पौर्व्विकीम्§ ।
अथ कौतूहलं भद्रे श्रवणे पूर्व्वजन्मनः ।
मन्मातापितरौ गत्वा प्रसाद्य शुचिस्मिते ॥ ४७ ।
मानार्हौ मानयित्वा तौ ययाहं जठरे धृतः ।
तयोराज्ञां पुरस्कृत्य मानयित्वा यथार्हतः ।
अथ कोकामुखे गत्वा¶ कथयिष्याम्यसंशयम् ॥ ४८ ।
स्वपूर्व्वजन्मवृत्तन्तु देवानामपि दुर्लभम् ।

* एवं सा तेन प्रोक्ता त्विति (ग)।

† पञ्चमासे गते काले स्नातौ तौ शयने गतौ ।
जातकौतूहले चैवं पुनरेवान्वपृच्छत ॥ इति (ग) ।

‡ पृष्टमिति साधु ।

§ जन्मनीति (ग) ।

¶ गत्वा कोकामुखे स्नानमिति (ग) ।

तत्र ते कथयिष्यामि सर्व्वंवृत्तमनिन्दिते॥ ४९ ।
ततः सा ह्यनवद्याङ्गी श्वश्रूश्वशुरयोः पुरः ।
गत्वा गृहीत्वा चरणौ ततस्ताविदमब्रवीत्* ।
किञ्चिद्विज्ञप्तुकामास्मि तच्च वा†मवधीयताम् ॥ ५० ।
भवद्भ्यां पुरस्कृत्य भवद्भ्यामनुमानितौ ।
पुण्ये कोकामुखे गन्तुमिच्छावस्तत्र वां गुरू ।
कार्य्यगौरवभावेन न निषेध्यौ कथञ्चन ॥ ५१ ।
अद्य यावत्किमपि वां याचितन्न मया क्वचित् ।
पुरस्ताद्द्वावयोस्तन्मे याचितं दातुमर्हथः ॥ ५२ ।
शिरोवेदनयायुक्तः सदा तव सुतोह्ययम् ।
मध्याह्ने मृतकल्पो वै जायते ह्यचिकित्सकम् ॥ ५३ ।
सुखानि सर्व्वविषयान्विसृज्य परिपीड़ितः ।
कोकामुखं विना कष्टं न निवृत्तं भविष्यति ॥ ५४ ।
कदाचिन्नोक्तपूर्व्वन्ते रहस्यं परमं महत् ।
त्वरितङ्गन्तुमिच्छामि विष्णोस्तत्परमं पदम् ।
दम्पतीभ्यां हि मननं रोचतां सर्व्वथैव हि ॥ ५५ ।
ततोवधूवचः श्रुत्वा शकानामधिपो नृपः‡ ।
करेण स्वयमादाय वधूं पुत्रमुवाच ह ॥ ५६ ।

* अतः परं (ग) पुस्तकेऽशुद्धबहुलः पाठः ।

† वामिति आर्षम् ।

‡ शकादिः पृथिवीपतिः इति (ग) ।

किमिदं चिन्तितं वत्स कोकामुखगमं प्रति ।
हस्त्यश्वरथयानानि स्त्रियश्चाप्सरसोपमाः ॥ ५७ ।
सर्व्वमेतत्तु सम्पाङ्ग कोषकोष्ठादिसंयुतम् ।
मरणं वित्तयोराज्यं सर्व्वं त्वयि प्रतिष्ठितम्* ॥ ५८ ।
मित्रं वरासनञ्चैव गृहीष्व सुतसत्तम† ।
त्वयि प्रतिष्ठिताः प्राणाः सन्तानश्च तदुत्तरम्‡ ॥ ५९ ।
ततः पितुर्वचः श्रुत्वा राजपुत्रो यशस्विनि ।
पितुः पादौ गृहीत्वा च प्रोवाच विनयान्वितः§ ॥ ६० ।
अलं राज्येन कोशेन वाहनेन बलेन वा ।
गन्तुमिच्छामि तत्राहं तूर्णं¶ कोकामुखं महत् ॥ ६१ ।
शिरोवेदनया युक्तो यदि जीवाम्यहं पितः ।
तदा राज्यं बलं कोषो ममैवैतन्न संशयः ।
तत्रैव गमनान्मह्यं वेदना नाशमेष्यति‖ ॥ ६२ ।
पुत्रोक्तमवधार्य्यैवं शकानामधिपो नृपः ।
अनुजज्ञे ततः कोकां गच्छ पुत्र नमोऽस्तु ते ॥ ६३ ।

* निवर्ज्जितमिति (ग) ।

† गृह्ण पुत्र ममोत्तरमिति (ग) ।

‡ तदुत्तममिति (ग) ।

§ पितरं चरणौ गृह्य प्रत्युवाच पुनस्तत इति (ग) ।

¶ शीघ्रमिति (ग) ।

‖ एष श्लोकः (ग) पुस्तके नास्ति ।

वणिजश्चैव पौराश्च वैश्याश्चापि* वराङ्गनाः।
अनुजग्मु† राजपुत्रं कोकामुखपथे स्थितम्‡ ॥ ६४ ।
अथ दीर्घेण कालेन प्राप्तः कोकामुखन्त्विदम्।
तत्र गत्वा वरारोहा भर्त्तारमिदमब्रवीत् ॥ ६५ ।
पूर्व्वपृष्टं मया यत्ते वक्ष्यामीति च मां प्रति।
कोकामुखे त्वयाप्युक्तं तदेतन्मम कथ्यताम् ॥ ६६ ।
निशम्येति प्रियाप्रोक्तं राजपुत्रो यशस्विनि।
प्रहस्याह प्रियान्तान्तु समालिङ्ग्य वसुन्धरे ॥ ६७ ।
रजनी सम्प्रवृत्तेयं सुखं स्वापो विधीयताम्।
श्वः सर्व्वं कथयिष्यामि यत्ते मनसि वर्त्तते§ ॥ ६८ ।
प्रभातायान्तु शर्व्वर्य्यां स्नातौ चौमविभूषितौ।
प्रणम्य शिरसा विष्णुं हस्ते गृह्य ततः प्रियाम् ॥ ६९ ।
ततः पूर्व्वोत्तरे पार्श्वे नित्यं यो हृदि तिष्ठति।
अस्थीनि दर्शयामास अवशिष्टानि यानि तु ॥ ७० ।

* चैवेति (ग)।

† अधावदिति (ग)।

‡ (ग) पुस्तके श्लोक एष एवं पठितः।—
तथा वै धार्य्यमाणोऽसौ तिष्ठते सर्व्वकर्म्मवित्।
पित्रा तातोऽनुज्ञातो वै गच्छ पुत्र नमोऽस्तु ते ॥

§ सुखं स्वप वरारोहे ह्येकां रजनीं प्रिये।
कल्यन्ते कथयिष्यामि यच्च स्यात्ते मनीषितमिति (ग) ॥

एतानि मम चास्थीनि पूर्व्वदेहोद्भवानि च* ।
अहं पुराभवं मत्स्यः कौकेषु विचरञ्जले† ।
व्याधेन निगृहीतोऽस्मि वड़िशेन जलेचरः ॥ ७१ ।
तद्धस्तान्निर्गतस्तत्र बलेन पतितो भुवि ।
श्येनेनामिषलुब्धेन नखैर्विद्धोऽस्मि सुन्दरि ॥ ७२ ।
नीत आकाशमार्गेण तस्माच्च पतितोऽत्र वै ।
तेन तस्य प्रहारेण जाता शिरसि वेदना ।
अहमेव विजानामि नान्यो जानाति मां विना‡ ॥ ७३ ।
एतत्ते कथितं भद्रे पूर्व्वपृष्टञ्च यत्त्वया§ ।
गच्छ सुन्दरि भद्रन्ते यत्र ते वर्त्तते मनः ॥ ७४ ।
ततः साप्यनवद्याङ्गी रक्तपद्मशुभानना ।
करुणं स्वरमादाय भर्त्तारं पुनरब्रवीत् ॥ ७५ ।
एतदर्थं मया भद्र गुह्यं नोक्तं तथा स्वकम् ।
अहञ्च यादृशी पूर्व्वमभवन्तच्छृणुष्व मे ॥ ७६ ।
क्षुत्पिपासापरिश्रान्ता चिल्ली गगनगामिनी ।
वृक्षोपरि समासीना भक्ष्यञ्चैव विचिन्वती¶ ॥ ७७ ।

---

* पूर्व्वकाणि वरानने इति (ग) ।

† अहं मत्स्योनु कोके तु विचरामि जलेषु वै इति (ग) ।
अत्रातः परं चरणौ न स्तः ।

‡ न कश्चान्योविजानातीति (ग) ।

§ यत्त्वया पूर्व्वपृच्छितमिति (ग), आर्षमिदम् ।

¶ एष श्लोकः (ग) पुस्तके नास्ति ।

अथ कश्चिन्मृगव्याधो हत्वा वनचरान्बहून्।
संगृह्य मांसभारान्वै तेन मार्गेण सङ्गतः॥ ७८।
स्थापयित्वा मांसभारान् प्रियायाः सविधे स्वयम्।
काष्ठान्यानयितुं* यातः क्षुधितो मांसपाचने† ॥ ७९।
प्रवृत्तोऽग्निमुपादाय तावदुड्डीय सत्वरम्।
मांसपिण्डो मया विद्धोत्कृष्टैर्वज्रमयैर्नखैः॥ ८०।
न च शक्तास्मि संहर्त्तुं मांसभारप्रपीड़िता।
अशक्ता दूरगमने सविधे हि व्यवस्थिता‡॥ ८१।
भक्षयित्वा ततो मांसं व्याधः संहृष्टमानसः§।
अपश्यन्मांसपिण्डन्तु मृगयामास पार्श्वतः।

* आनेतुमिति साधु।

† (ग) पुस्तकेऽत्र पाठभेदा यथा—
स्थापयित्वा मांसभारं कश्चित्काष्ठं समाहरेत्।
अहं चरामि चाकाशे मार्गमादाय चामिषम्।
क्षुत्पिपासापरिश्रान्ता किञ्चिन्मांसानि छिन्दती।
तत आधार्य्य काष्ठानि प्रज्वाल्य च हुताशनम्।
पचतस्तत्र मांसानि क्षुत्पिपासापरिष्कृता।
ततोऽहं समासाद्य पश्यती मांसपङ्क्तिनी॥
पतितास्मि ततस्तत्र यत्रासौ पच्यते मिषम्।
अप्रमाणं मया मांसं विद्धं चन्द्रमयैर्नखैरिति॥
पच्यते मिषमित्यत्र पचत्यामिषमिति साधु।

‡ न दूरं गमिता तत्र तत्र स्थाने व्यवस्थितेति (ग)

§ प्रहृष्टेनान्तरात्मना इति (ग)।

तावद्दृष्टा मान्तत्र खादन्तीं मांसपिण्डकाम्* ॥ ८२ ।
ततः स धनुरुद्यम्य सशरञ्च व्यकर्षत† ।
छित्त्वा बाणेन मां तत्र भक्षयन्तीमपातयत्‡ ॥ ८३ ।
ततोऽहं भ्रममाणा वै निश्चेष्टा गतजीविता§ ।
पतितास्मि वशात् भद्र कालतस्थे दुरासदे ॥ ८४ ।
एतत्क्षेत्रप्रभावेण सकामापि नृपात्मजा ।
जातास्मि त्वत्प्रिया चापि स्मरन्ती पूर्व्वजन्म तत् ॥ ८५ ।
एतानि पश्य चास्थीनि शेषाणि बहुकालतः ।
गलितान्यल्पशेषाणि प्राणनाथ समीपतः ॥ ८६ ।
एवं सा दर्शयित्वा तु भर्त्तारं पुनरब्रवीत् ।
आनीतोऽसि मया भद्र स्थानं कोकामुखम्प्रति ॥ ८७ ।
एतत्क्षेत्रप्रभावेण तिर्य्यग्योनिगता अपि ।

---

* लक्षितास्मि च व्याधेन क्रुद्धेनामिषकाङ्क्षिणीति (ग) ।

† बाणं गृह्य ममान्तिके इति (ग) ।

‡ ततोऽहं पातिता तेन चरन्ती मांसपिण्डिकामिति (ग) ।

§ गतमानसेति (ग) ।

¶ पतितास्मि अहमिति (क) ।

‖ (ग) पुस्तकेऽत्र पाठभेदो यथा—

अस्य क्षेत्रप्रभावेण सकामा सा यशस्विनी ।
अस्थीनि पश्य मे तानि ततः शेषाणि ये च मे ॥
जीर्णानि दीर्घकालेन ये केचित् परितिष्ठति ।

अत्रार्षप्रयोगस्य बाहुल्यमस्ति ।

उत्तमे तु कुले जाता मानुषीं जातिमाश्रिताः* ॥ ८८ ।
यं यं प्रवक्ष्यसे† धर्म्मं विष्णुप्रोक्तं यशोधन ।
तं तमेव करिष्यामि विष्णुलोके सुखावहम्‡ ॥ ८९ ।
ततस्तस्या वचः श्रुत्वा लब्धपूर्व्वस्मृतिर्नृपः§ ।
विस्मयं परमं गत्वा साधु साध्वित्यपूजयत्¶ ॥ ९० ।
तस्मिन्क्षेत्रे च यत्कर्म्म कर्त्तव्यं धर्म्मसंहितम् ।
तच्छ्रुत्वा कानिचिद्देवी स्वयं चक्रे पतिव्रता ॥ ९१ ।
अन्येऽपि सर्व्वे तच्छ्रुत्वा यस्य यद्रोचते प्रियम् ।
तत्तत्सर्व्वेऽपि कुर्व्वन्ति विधिदृष्टेन कर्म्मणा‖ ॥ ९२ ।
तत्र तौ दम्पती द्रव्यमन्नं रत्नं द्विजेषु च ।
ददतुः परमप्रीतौ पात्रेभ्यश्च यथार्हतः ॥ ९३ ।
येऽन्ये तत्सार्थमासाद्य यातास्तेऽपि वसुन्धरे ।
ब्राह्मणेभ्योददुः स्वानि विष्णुभक्त्या यतव्रताः ॥ ९४ ।
तत्र स्थित्वा वरारोहे मम कर्म्मव्यवस्थिताः ।

---

* यस्य क्षेत्रप्रभावेण तिर्य्यग्योनिगता वयम् ।
जाता वै मानुषीं संज्ञामुत्तमेषु कुलेषु चेति (ग) ।

† प्रवक्ष्यसीति माधव ।

‡ तान्येव कारयिष्यामि, सुखावहे इति च (ग) ।

§ आगतोऽयं पुरागतिमिति (ग) ।

¶ सोऽब्रवीदिति (ग) ।

‖ श्रुत्वा वै क्षेत्रकर्म्माणि स तस्या वचनं महत् ।
तेऽपि कुर्व्वन्ति कर्म्माणि यस्य यच्चात्र रोचते इति (ग) ।

तत्तेनस्य प्रभावेण श्वेतद्वीपमुपागताः* ॥ ९५ ।
एवं स राजपुत्त्रोऽपि मम कर्म्मव्यवस्थितः ।
मुक्त्वा तु मानुषं भावं श्वेतद्वीपमुपागतः† ॥ ९६ ।
सर्व्वे च पुरुषास्तत्र आत्मनात्मानुदर्शनात् ।
शुक्लाम्बरधरा दिव्यभूषणैश्च विभूषिताः ।
दीप्तिमन्तो महाकायाः सर्व्वे च शुभदर्शनाः ॥ ९७ ।
स्त्रियोऽपि दिव्या यत्रत्या दिव्यभूषणभूषिताः ।
तेजसा दीप्तिमत्यश्च शुद्धसत्वविभूषिताः ।
मयि शुद्धं परं भावमारूढाः सत्यवर्च्चसः ॥ ९८ ।
एतत्ते कथितं देवि कोकामुखमनुत्तमम् ।
यत्र मत्स्यश्च चिल्ली च सकामा ये समागताः‡ ॥ ९९

---

* मम लोकमुपागत इति (ग) ।

† एवं मत्स्यश्च चिल्ली च सकामा ये समागताः ।
प्रसादान्मम सुश्रोणि श्वेतद्वीपमुपागत इति (ग) ।

‡ (ग) पुस्तके इत पूर्व्वं एव पाठभेदो विद्यते—
केचिच्चान्द्रायणं कुर्य्युः केचिच्चैव जलाशनम् ।
ते च विशुनयाश्चर्म्मांस्तांस्तान्द्विजः समाचरेत् ॥
बहुधान्यवरं एवं दंपत्योऽथ यशस्विनि ।
तेऽपि कुर्व्वन्ति कर्म्माणि मम भक्ता व्यवस्थिताः ॥
तेऽपि दीर्घेण कालेन अटमाना मतिः कृता ।
कुर्व्वन्तीमम कर्म्माणि भाव्यं पञ्चत्वमागताः ॥
ततः चैत्रप्रभावेण मम कर्म्मप्रभावतः ।
मम चैव प्रसादेन श्वेतद्वीपमुपागतः ॥

प्रसादान्मम सुश्रोणि श्वेतद्वीपमुपागताः ।
एष धर्म्मश्च कीर्त्तिश्च शक्तिश्चैव महद्यशः ।
कर्म्मणां परमं कर्म्म* तपसाञ्च महत्तपः ॥ १०० ।
आख्यानानाञ्च परमं कृतीनां परमा कृतिः† ।
धर्म्माणाञ्च परो धर्म्मस्तवार्थं कीर्त्तितो मया ॥ १०१ ।
क्रोधनाय न तं दद्यान्मूर्खाय पिशुनाय च ।
अभक्ताय न तं दद्यादश्रद्धाय शठाय च ॥ १०२ ।
दीक्षितायैव‡ दातव्यं सुप्रपन्नाय नित्यशः§ ।
पण्डिताय च दातव्यं यश्च शास्त्रविशारदः ॥ १०३ ।
एतन्मरणकालेऽपि धारयेद्यः समाहितः ।

एवं स राजपुत्रोऽथ सर्व्वभूतगुणान्वित ।
मुक्त्वा तु मानुषं भावमूर्द्ध्वशाखोपतिष्ठति ॥
योऽसौ परिजनस्तस्य मम कर्म्मव्यवस्थितः ।
मानुष भावमुत्सृज्य मम लोकमुपागतः ॥
सर्व्वश्रीद्युतिमांस्तत्र आत्मनात्मदर्शनात् ।
याश्च तत्र स्त्रियः काश्चित्सर्व्वाः श्रोत्पलगन्धिनी ॥
मायया मतिमान् मुक्ताः सर्व्वाश्चैव प्रिया हृताः ।
एवं भत्यश्चेति ।

* कर्म्मणां कर्म्मणः श्रेष्ठमिति (ग) ।

† आख्यानां महदाख्यानं द्युतीनाञ्च महाद्युतिरिति (ग) ।

‡ दीक्षिताय चेति (ग) ।

§ उपपन्नाय साधवे इति (ग) ।

सोऽपि मुच्येत पूतात्मा गर्भाद्योनिभवाद्भयात् ॥ १०४ ।
एतत्ते कथितं भद्रे महाख्यानं महौजसम् ।
य एतेन विधानेन गत्वा कोकामुखं महत् ।
तेऽपि यान्ति परां सिद्धिं चिल्लीमत्स्यौ यथा पुरा ॥ १०५ ।

इति वराहपुराणे कोकामुखमाहात्म्ये द्वाविंशत्यधिकशततमोऽध्यायः ।

## त्रयोविंशत्यधिकशततमोऽध्यायः ।

सूत उवाच ।

श्रुत्वा तु कोकामाहात्म्यं पृथिवी धर्म्मसंहितम्* ।
विस्मयं परमं याता श्रुत्वा धर्म्मं महौजसम् ॥ १ ।

धरण्युवाच† ।

अहो प्रभावः कोकाया माहात्म्यं क्रोड़रूपिणः ।
तिर्य्यग्योनिगतौ वापि प्राप्तौ यत्परमां गतिम् ॥ २ ।
तव देव प्रसादेन किञ्चिदिच्छामि वेदितुम् ।
यन्मया पूर्व्वंपृष्टोऽसि केन धर्म्मेण मानवाः ।

* धर्म्मसंहितेति (ग) ।

† एष पाठः (ग) पुस्तके नास्ति ।

तपसा कर्म्मणा वापि पश्यन्ति त्वां हि माधव।
प्रसादसुमुखोभूत्वा निखिलं वक्तुमर्हसि॥ ३।
एवं पृष्टस्तदा देव्या माधव्या स तु माधवः।
प्रहस्य पुनरेवेदं वक्तुं समुपचक्रमे॥ ४।

वराह उवाच*।

एवमेतन्महाभागे यथा त्वं भीरु भाषसे।
कथयिष्यामि ते धर्म्मं गुह्यं† संसारमोक्षणम्॥ ५।
गते मेघागमे काले प्रसन्नशरदाशये।
अम्बरे विमले जाते विमले शशिमण्डले॥ ६।
नातिशीते न चात्युष्णे काले हंसविराविणि।
कुमुदोत्पल‡कह्लारपद्मसौरभनिर्भरे॥ ७।
कुमुदस्य च मासस्य भवेद्या द्वादशी शुभा।
तस्यां मामर्च्चयेद्यस्तु तत्प्रभावं शृणुष्व मे§॥ ८।
यावल्लोकाश्च धार्य्यन्ते तावत्कालं वसुन्धरे।
मद्भक्तो जायते धन्यो नान्यभक्तः कदाचनः॥ ९।
कृत्वा ममैव कार्य्याणि द्वादश्यान्तत्र माधवि।
ममैवाराधनार्थाय इमं मन्त्रमुदीरयेत्॥ १०।
मन्त्रः—ब्रह्मणा च रुद्रेण यस्तूयमानो भवानृषिवन्दितो वन्द-

* एष पाठः (ग) पुस्तके नास्ति।

† सर्व्वं धर्म्ममिति (ग)।

‡ कमलोत्पलेति (ग)।

§ शृणु प्रिये इति (ग)।

नीयश्च प्राप्ता द्वादशीयन्ते प्रबुध्यस्व जाग्रस्व* मेघा गताः पूर्ण-चन्द्रः शारदानि पुष्पाणि लोकनाथ तुभ्यमहन्ददानीति धर्म्म-हेतोस्तव प्रीतये प्रबुद्ध जाग्रस्व लोकनाथ त्वां भजमाना यजेम यजन्ते यजेम सर्व्वतो वेदैः पठन्ति भगवन्तः शुद्धाः प्रबुद्धा जाग्रतां लोकनाथ

एवं कर्म्माणि कुर्व्वन्ते† द्वादश्यां वै यशस्विनि ।
मम भक्ता व्रतं येह ते यान्ति परमाङ्गतिम् ॥ ११ ।
एवं वै शारदं कर्म्म निखिलं कथितं मया ।
देवि संसारमोक्षार्थं मम भक्तसुखावहम् ॥ १२ ।
इति प्रबोधिनीकर्म्म‡ ।
अन्यच्च ते प्रवक्ष्यामि शैशिरं कर्म्म शोभनम् ।
यानि कर्म्माणि कुर्व्वन्ति पुंसा§ यान्ति परां गतिम्॥ १३ ।
शीतवाताभिसन्तप्ता मम भक्त्या व्यवस्थिताः ।
अनन्यमनसो भूत्वा योगाय कृतनिश्चयाः ।
शिशिरे यानि कर्म्माणि पुष्पिताश्च वनस्पतीः ॥ १४ ।
तैरेव चार्च्चनं कृत्वा जानुभ्यां पतितः क्षितौ ।
कराभ्यामञ्जलिं कृत्वा इमं मन्त्रमुदीरयेत्¶ ॥ १५ ।

---

* जाग्रहीति साधु । एवं परत्र जाग्रतमिति साधु ।

† कुर्व्वते इति साधु ।

‡ एष पाठः (ग) पुस्तके नास्ति ।

§ पुमांस इति साधु ।

¶ उदाहरेदिति (ग) ।

मन्त्रः—शिशिरो भवान् धातरिमं लोकनाथ हिमम् दुस्तरन्दुष्प्रवेशं कालं संसारान्मान्तारयेमन्धत्तां त्रिलोकनाथ।

यस्त्वथैतेन मन्त्रेण शिशिरे कर्म्म कारयेत्।
स गच्छेत्परमां सिद्धिं मम भक्त्या व्यवस्थितः॥ १६।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
मासं मार्गशिरश्चैव* वैशाखञ्च मम प्रियम्॥ १७।
अहं तत्र प्रवक्ष्यामि पुष्पादीनाञ्च† यत्फलम्।
नववर्षसहस्राणि नववर्षशतानि च।
तिष्ठतः‡ विष्णुलोकेऽस्मिन्योददाति स्म निश्चलम्॥ १८।
एकैकं गन्धपत्रञ्च वानमेतन्महत्फलम्।
मतिमान् धृतिमान् भूत्वा गन्धपुष्पाणि§ दापयेत्॥ १९।
पुनरन्यत्प्रवक्ष्यामि गन्धपत्रस्य यत्फलम्।
द्वादश्याञ्चैव यो दद्यात्त्रीन्मासांश्च समाहितः॥ २०।
कौमुदस्य तु मासस्य मार्गशीर्षस्य वै तथा।
वैशाखस्य तु मासस्य वनमालां सुपुष्पिताम्॥ २१।
एकचित्तं समाधाय गन्धपुष्पाणि यो न्यसेत्।
वर्षाणि द्वादशैवेह तेन पूजा कृता भवेत्¶॥ २२।

---

* मार्गशिरसश्चैवेति साधु।

† गन्धपत्रस्येति (ग)।

‡ तिष्ठतीति साधु।

§ गन्धपत्रं चेति (ग)।

¶ कृता गन्धेन पूजितेति (ग)।

शालपुष्पेण मिश्रेण कौमुद्याङ्गन्धकेन च ।
मासि मार्गशिरे* भद्रे दद्यादुत्पलमिश्रितम् ।
एवं महत्फलं भद्रे गन्धपत्रस्य च स्मृतम्† ॥ २३ ।
श्रुत्वेति वचनं तस्य प्रश्रयेण तु माधवी ।
प्रहस्य प्रणयाद्वाक्यमित्युवाच वसुन्धरा ॥ २४ ।
प्रभो द्वादश मासाश्च षड्युत्तरशतत्रयम् ।
तत्र द्वावेव किं मह्यं भगवन् किं प्रशंससि ।
द्वादशीश्चापि देवेश प्रशंससि सदा मम ॥ २५ ।
इति पृष्टस्तदा देव्या धरण्या स तु माधवः ।
प्रहस्य तामुवाचेदं वचनं धर्म्मसंश्रितम् ॥ २६ ।
शृणु तत्त्वेन मे देवि येनेमौ मम च प्रियौ ।
तिथीनां द्वादशी चापि सर्व्वयज्ञफलाधिका ॥ २७ ।
त्वया द्विजसहस्रेभ्यो यत्फलं प्राप्नुयान्नरः ।
तदेकं संप्रदायैव द्वादश्यामभिविन्दति ॥ २८ ।
कौमुद्याञ्च प्रबुद्धोऽस्मि वैशाख्यां च समुद्धृतः ।
महानाधिहरो योगस्तेनैतत्प्रभवो धरे ॥ २९ ।
अतः कौमुदिकायान्तु वैशाख्यां यतमानसः ।
गन्धपत्रं करे गृह्य इमं मन्त्रमुदीरयेत् ॥ ३० ।

मन्त्रः—भगवन्नाज्ञापय ।

इमं बहुतरं नित्यं वैशाखञ्चैव कार्त्तिकम् ।

---

* मार्गशिरसीति माधु ।

† कारयेदिति (ग) ।

गृहाण गन्धपत्राणि धर्म्ममेवं प्रवर्द्धय।
नमो नारायणेत्युक्त्वा गन्धपत्रं प्रदापयेत्* ॥ ३१ ।
पुष्पाणाञ्च प्रवक्ष्यामि यो गुणो यच्च वै फलम्।
दत्त्वा वै गन्धपत्राणि पुष्पहस्तः शुचिर्नरः† ।
ओँ नमो वासुदेवायेत्युक्त्वा मन्त्रमुदीरयेत्‡ ॥ ३२ ।
मन्त्रः—भगवन्नाज्ञापय सुमनांसीमानि अर्च्चयितुं मां सुमनसङ्कुरु गृह्णीष्व सुमनस्कं देव सुगन्धेन ते नमः§ ।
प्राप्नोति ददमानस्तु¶ मम कर्म्मपरायणः।
न जन्म मरणञ्चैव न ग्लानिं न च वै क्षुधाम्।
दिव्यं वर्षसहस्रं वै मम लोकेषु तिष्ठति ॥ ३३ ।
एकैकस्य तु पुष्पस्य पुण्यमेतन्महाफलम्।
सुमनोगन्धसम्भूतं यत्त्वया पूर्व्वपृच्छितम्‖ ॥ ३४ ।

इति वराहपुराणे सुमनोगन्धादिमाहात्म्यं नाम
त्रयोविंशत्यधिकशततमोऽध्यायः।

* (ग) पुस्तके २४—३१ श्लोका न सन्ति।

† मम भक्तेषु सुन्दरीति (ग)।

‡ किमिकं सुमनो गृह्य इमं मन्त्रमुदीरयेदिति (ग)।

§ भगवन्नाज्ञापय यतिसुमनो भगवन्नस्त्रोविशुद्धात्मा विनिश्चिताः गृह्णीष्व सुमनस्केन वदेवमुगन्धकाः इति (ग)।

¶ ददान इति साधु।

‖ परिपृच्छितमिति (ग)। पृष्टमिति साधु।

# चतुर्विंशत्यधिकशततमोऽध्यायः।

वराह उवाच।

फाल्गुनस्य तु मासस्य शुक्लपक्षस्य द्वादशीम्।
गृह्य वासन्तिकान्पुष्पान् सुगन्धा ये क्रमागताः॥ १।
श्वेतं पाण्डुरकञ्चैव सुगन्धं शोभनम्बहु।
विधिना मन्त्रयुक्तेन सुप्रीतेनान्तरात्मना॥ २।
तत एवं विधिं कृत्वा सर्व्वं भागवतः शुचिः।
यस्तु जानाति कर्म्माणि सर्व्वमन्त्रविनिश्चितः।
तदाहरति कर्म्माणि विधिदृष्टेन कर्म्मणा॥ ३।
विधिना मन्त्रपूतेन कुर्य्याच्छान्तमनोमलः।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत्॥ ४।
मन्त्रः—ओं नमोऽस्तु देवदेवेश शङ्खचक्रगदाधर।
नमोऽस्तु ते लोकनाथ प्रवीराय नमोऽस्तु ते॥ ५।
संपुष्पितस्येह वसन्तकाले
वनस्पतेर्गन्धरसप्रयुक्ताः।
पश्यंश्च मां पुष्पितपादपेन्द्रं*
वसन्तकाले समुपागतं च॥ ६।
यश्चैतेन विधानेन कुर्य्यान्मासे तु फाल्गुने।
न स गच्छति संसारं मम लोकाय गच्छति॥ ७।

---

* पश्यद्दिदं पुष्पितपादपेन्द्रमिति (ग)।

यत्तु पृच्छसि सुश्रोणि मासे वैशाख उत्तमे ।
शुक्लपक्षे तु द्वादश्यां यत्फलं तच्छृणुष्व मे ॥ ८ ।
पुष्पितेषु च शालेषु तथान्येषु* द्रुमेषु च ।
गृहीत्वा शालपुष्पाणि† मम कर्म्मणि संस्थिताः ॥ ९ ।
कृत्वा तु मम कर्म्माणि शुभानि तरुणानि च ।
पूज्य‡ भागवतान्सर्व्वान् स्थापयित्वा ततोऽग्रतः ॥ १० ।
ऋषयस्तुवन्ति§ मन्त्रेण वेदोक्तेन च माधवि ।
गन्धर्व्वाप्सरसश्चैव गीतनृत्यैः सवादितैः ॥ ११ ।
स्तुवन्ति देवलोकाश्च पुराणं पुरुषोत्तमम् ।
सिद्धविद्याधरा यक्षाः पिशाचोरगराक्षसाः ॥ १२ ।
स्तुवन्ति देवं भूतानां सर्व्वलोकस्य चेश्वरम् ।
आदित्यवसवो रुद्रा अश्विनौ च मरुद्गणाः ॥ १३ ।
स्तुवन्ति देवदेवेशं युगानां संक्षयेऽक्षयम् ।
ततो वायुश्च विश्वे च अश्विनौ च समन्विताः ॥ १४ ।
स्तुवन्ति केशवं देवमादिकालमयं प्रभुम् ।
ततो ब्रह्मा च सोमश्च शक्रश्चाग्निसमन्वितः ।
स्तुवन्ति नाथं भूतानां सर्व्वलोकमहेश्वरम् ॥ १५ ।
नारदः पर्व्वतश्चैव असितो देवलस्तथा ।

* कालेष्विति (ग) ।

† बाणपुष्पाणीति (ग) ।

‡ पूजयित्वेति साधु ।

§ ऋषिः स्तुवन्तीति तत्रैकवचनमार्षं, ऋषय इत्यत्र चैकाक्षरमधिकम् ।

पुलहश्च पुलस्त्यश्च भृगुश्चाङ्गिर एवच ॥ १६ ।
एते चान्ये च बहवो मित्रावसुपरावसू ।
स्तुवन्ति नाथं भूतानां योगिनां योगमुत्तमम् ॥ १७ ।
श्रुत्वा तु प्रतिनिर्घोषं देवानान्तु महौजसाम् ।
ततोनारायणोदेवः प्रत्युवाच वसुन्धराम् ॥ १८ ।
किमयं श्रूयते शब्दो ब्रह्मघोषेण संयुतः* ।
देवानाञ्च† महाभागे महाशब्दोऽत्र श्रूयते ॥ १९ ।
ततः कमलपत्राक्षी सर्व्वरूपगुणान्विता ।
वराहरूपिणं देवं प्रत्युवाच वसुन्धरा ॥ २० ।
देवा काङ्क्षन्ति ते देव वाराहीं रूपसंस्थितिम् ।
त्वन्नियोगनियुक्ताश्च तदर्थं लोकभावन ॥ २१ ।
ततोनारायणोदेवः पृथिवीं प्रत्युवाच ह ।
अहं जानामि तान्देवि मार्गमाणानुपस्थितान् ॥ २२ ।
दिव्यं वर्षसहस्रं वै धारितासि वसुन्धरे ।
मया लीलायमानेन एकदंष्ट्राग्रकेण‡ वै ॥ २३ ।
इहागच्छामि भद्रन्ते द्रष्टुकामा दिवौकसः ।
आदित्या वसवो रुद्राः स्कन्देन्द्रः सपितामहाः ॥ २४ ।
एवं तस्य वचः श्रुत्वा माधवस्य वसुन्धरा ।

* घोषित इति (ग) ।

† देवतानामिति (ग) ।

‡ क्रमेणेति (ग) ।

शिरस्यञ्जलिमाधाय ततस्तु चरणेऽपतत्* ।
वाराहं पुरुषं देवं विज्ञाप्यति† वसुन्धरा ॥ २५ ।
उद्धृतास्मि त्वया देव रसातलगता ह्यहम् ।
शरणन्त्वां प्रपन्नाहं त्वद्भक्ता त्वं गतिः प्रभुः‡ ॥ २६ ।
किङ्कर्म्म कार्म्मणा केन किं वा जन्मपरायणम् ।
कथं वा तुष्यसे देव पूज्यसे केन कर्म्मणा§ ॥ २७ ।
तवाहं कर्त्तुमिच्छामि यच्च मुख्यं¶ सुखावहम् ।
न च मेऽस्ति व्यथा काचित्तव कर्म्मणि नित्यशः ॥ २८ ।
न ग्लानिर्न जरा काचिन्न जन्ममरणे तथा ।
सर्व्वे सुरासुरा लोकाः सरुद्रेन्द्रपितामहाः ।
क्वेष्टं‖ निवासं कुर्व्वन्ति एकैकस्य यशोधर** ॥ २९ ।
कानि कर्म्माणि कुर्व्वन्ति ये त्वां पश्यन्ति माधव ।
किमाहाराः किमाचारास्त्वां पश्यन्तीह माधव ॥ ३० ।
ब्राह्मणस्य च किं कर्म्म क्षत्त्रियस्य च किं भवेत् ।
वैश्यः किं कुरुते कर्म्म शूद्रः किं कर्म्म कारयेत् ॥ ३१ ।

---

* शिरसा चाञ्जलिं कृत्वा ततस्तच्चरणेऽपतदिति (ग) ।

† विज्ञापयतीति (क), (ख), साधुत्वेऽप्यस्य छन्दोदोषः ।

‡ शरणं त्वामवाप्ता वै तद्भक्ता स्याङ्गतिः प्रभुरिति (ग) ।

§ पूज्यः केनापि कर्म्मणेति (ग) ।

¶ तदहं कारयिष्यामि कर्म्म कार्त्तमिति (ग) ।

‖ क्व ते इति (ख) ।

** ते वा कस्य किमात्मका इति (क), (ख) ।

योगोवै प्राप्यते केन तपो वा केन निश्चितम् ।
किञ्चात्र फलमाप्नोति तव कर्म्मपरायणः ॥ ३२ ।
किञ्च दुःखनिवासं वा भोजनं पानकं तथा ।
किञ्च कर्म्म प्रयोक्तव्यं तव भक्तैश्च* माधव ।
प्रापणं कीदृशञ्चापि कासु दिक्षु तथा प्रभो† ॥ ३३ ।
कथं योनिं न गच्छेत‡ वियोनिं न च गच्छति ।
तिर्य्यग्योनिं न गच्छेत कर्मणा केन केशव ।
तन्ममाचक्ष्व सकलं येन चैव सुखं भवेत् ॥ ३४ ।
जरा वा केन गच्छेत जन्म वा केन‡ गच्छति ।
गर्भवासं न गच्छेत कर्म्मणा केन वाऽच्युत ।
संसारस्य न गच्छेत केन§ कर्म्मप्रभावतः ॥ ३५ ।
इत्युक्तो भगवांस्तत्र प्रत्युवाच वसुन्धराम् ।
शृण्वन्तु मे भागवता ये च मोक्षे व्यवस्थिताः ।
तान्मन्त्रान् कीर्त्तयिष्यामि यैस्तोषयामि नित्यशः ॥ ३६

मन्त्रः—मासेषु सर्व्वेषु च मुख्यभूत ¶
त्वं माधवो माधवमास एव ।

* भक्तेष्विति (ग) ।

† दिशासु विदिशासु चेति (ग) ।

‡ गच्छेदिति साधु । एवं परत्रापि ।

§ जन्म केन चेति (ग) ।

¶ कस्य कर्म्मप्रभावतः इति (ग) । उभयत्राप्यार्षम् ।

‖ मास इति (ग) ।

पश्येद्देवन्तन्तु वसन्तकाले
उपागतङ्गन्धरसप्रयुक्त्या ।
नित्यञ्च यज्ञेषु तथेज्यते यो
नारायणः समलोकेषु वीरः ॥ ३७ ।

एवं ग्रीष्मे विधिश्चैव कुर्य्यात्सर्व्वं ममाश्रितः* ।
इममुच्चारयेन्मन्त्रं सर्व्वभागवतप्रियम् ॥ ३८ ।

मासेषु सर्व्वेष्वपि मुख्यभूतो
मासोभवान् ग्रीष्म एकः प्रपन्नः ।
पश्येत† भवन्तं वर्त्तमानं ग्रीष्मे‡
तेनैव सर्व्वं दुःखमेतु प्रशान्तिम्§ ॥ ३९ ।

एवं ग्रीष्मे वरारोहे¶ मम चैवार्च्चनं कुरु ।
न जन्म मरणं येन‖ मम लोके गतिर्भवेत् ॥ ४० ।
यावन्तः पुष्पिताः शालाः पृथ्व्यां यावत्सुगन्धकाः ।
अर्च्चितः स भवेत्सर्व्वैः कृतो येन ह्ययं विधिः ॥ ४१ ।

* विधानत इति (ग) ।

† पश्येदिति साधु ।

‡ त्वनुग्रीष्मकाले इति (ग) ।

§ उपागतं गन्धरसप्रयुक्त्येति (ग) । तत्रातः परं—
नित्यञ्च यज्ञेषु तथेज्यमानोनारायण. सर्व्वलोकेषु वीरः ।
इति चरणद्वयमधिकं वर्त्तते ।

¶ एतेनैव विधानेनेति (ग) ।

‖ तत्रेति (ग) ।

एवं वर्षास्वपि धरे* मम कर्म्म च कारयेत् ।
निष्कला भवते† बुद्धिः संसारे च न जायते ॥ ४२
अन्यच्च ते प्रवक्ष्यामि कर्म्म संसारमोक्षणम् ।
कदम्बमुकुलाश्चैव‡ सरलार्ज्जुनपादपाः§ ।
एतेषां सुमनोभिश्च पूजनीयो महादरात्¶ ॥ ४३ ।
मम संस्थापनङ्कृत्वा विधिदृष्टेन कर्म्मणा|| ।
नमो नारायणायेति इमं मन्त्रमुदाहरेत् ॥ ४४ ।

पश्यन्ति ये ध्यानपरा घनाभं
त्वामाश्रिताः** पूज्यमानं महिम्ना ।
निद्रां भवान् भजतां†† लोकनाथ
वर्षास्विमं पश्यतु मेघवर्णम्‡‡ ॥ ४५ ।

आषाढ़मासे द्वादश्यां सर्व्वशान्तिकरं शुभम् ।
य एतेन विधानेन मम कर्म्म तु कारयेत् ।

* एवं माधवमासे चेति (ग) ।
† भवतीति साधु ।
‡ कुटजाश्चेति (ग) :
§ शल्लकार्ज्जुनकास्तथेति (ग) ।
¶ एभिर्वार्च्चनं कुर्य्याद्विधिदृष्टेन कर्म्मणेति (ग) ।
|| ततः संस्थापनं कुर्य्यान्मम मन्त्रपरायण इति (ग) ।
** पश्यन्ति मेध्या अपि मेघवर्णं त्वामागतेति (ग) ।
†† गच्छ नु इति (ग) ।
‡‡ मेघवर्चानिति (ग) ।

स मर्त्यो न प्रणश्येत* संसारेऽस्मिन्युगे युगे ॥ ४६ ।
एतत्ते कथितं देवि ऋतूनां कर्म्म चोत्तमम् ।
तरन्ति येन संसारं नराः कर्म्मपरायणाः ॥ ४७ ।
एतद्गुह्यं महाभागे देवाः केऽपि न जानते ।
मुक्त्वा नारायणन्देवं वराहं रूपमास्थितम् ॥ ४८ ।
नादीक्षिताय दातव्यं मूर्खाय पिशुनाय च ।
कुशिष्याय न दातव्यं ये च शास्त्रार्थदूषकाः ॥ ४९ ।
न पठेद्ग्राम्यमध्ये वै न पठेच्छठमध्यतः† ।
धनधर्म्मचयस्तेषां पठनादाशु जायते ।
पठेद्भागवतां‡ मध्ये ये च धर्म्मेण दीक्षिताः ॥ ५० ।
एतत्ते कथितं भद्रे पूर्व्वं यत्पृष्टवानसि§ ।
कार्त्स्न्येन कथितं ह्येतत्किमन्यत्परिपृच्छसि ॥ ५१ ।

इति वराहपुराणे भगवच्छास्त्रे ऋतूपकरणं नाम
चतुर्विंशत्यधिकशततमोऽध्यायः।

* प्रणश्येदिति साधु ।

† मध्यग इति (ग) ।

‡ भागवतानामिति साधु ।

§ एतेन कर्म्मणा भद्रे यत्त्वया परिपृष्छितमिति (ग) ।

# पञ्चविंशत्यधिकशततमोऽध्यायः ।

सूत उवाच ।*

श्रुत्वा षड़्तुकर्म्माणि पृथिवी शंसितव्रता ।
ततो नारायणं भूयः प्रत्युवाच वसुन्धरा ॥ १ ।
मङ्गल्याश्च पवित्राश्च ये त्वया समुदाहृताः ।
मम लोकेषु विख्याता मनः प्रह्लादयन्ति ते ॥ २ ।
श्रुत्वा त्वेतानि कर्म्माणि त्वन्मुखोक्तानि माधव ।
जातास्मि निर्म्मला देव शशाङ्क इव शारदः ॥ ३ ।
एतन्मे परमं गुह्यं परं कौतूहलं तथा ।
मम चैव हितार्थाय त्वं विष्णो वक्तुमर्हसि ॥ ४ ।
यामेनां भाषसे देव मम मायेति नित्यशः ।
का माया कीदृशी विष्णो किं वा मायेति चोच्यते ।
ज्ञातुमिच्छामि मायार्थं रहस्यं परमुत्तमम् ॥ ५ ।
ततस्तस्या वचः श्रुत्वा विष्णुर्मायाकरण्डकः ।
प्रत्युवाच तदा वाक्यं प्रहस्य तु वसुन्धराम्* ॥ ६ ।
भूमि मा पृच्छ मायां मे यन्मां पृच्छसि सादरम्† ।
वृथा क्लेशं किमर्थं त्वं प्राप्स्यसे यद्विलोकनात्‡ ॥ ७ ।

* प्रहस्य मधुरं वाचं प्रत्युवाच वसुन्धरामिति (ग) ।

† इयं का भूमि ते माया यन्मां त्वं परिपृच्छसीति (ग) ।

‡ किञ्च मां क्लिश्यसे भूमिर्न मायां ज्ञातुमर्हसीति (ग) ।

अद्यापि मां न जानन्ति रुद्रेन्द्राः सपितामहाः।
मम मायां विशालाक्षि किं पुनस्त्वं वसुन्धरे॥ ८।
पर्ज्जन्यो वर्षते* यत्र तज्जलेन प्रपूर्य्यते†।
देशोनिर्जलतां याति एषा माया मम प्रिये॥ ९।
सोमो यत्क्षीयते पक्षे पक्षे वापि च वर्द्धते।
अमायां न स दृश्येत मायेयं मम तत्त्वतः‡॥ १०।
हेमन्ते सलिलं कूपे उष्णं भवति सुन्दरि§।
भवेच्च शीतलं ग्रीष्मे मायेयं मम तत्त्वतः॥ ११।
पश्चिमां दिशमास्थाय यदस्तं याति भास्करः।
उदेति पूर्व्वतः प्रातर्मायेयं मम सुन्दरि॥ १२।
शोणितञ्चैव शुक्रञ्च उभे ते प्राणिसंस्थिते।
गर्भे च जायते जन्तुर्मायेयं मम सुन्दरि¶॥ १३।
जीवं प्रविश्य गर्भन्तु सुखदुःखे च विन्दति।
जातश्च विस्मरेत्सर्व्वमेषा माया ममोत्तमा॥ १४।
आत्मकर्म्माश्रितो जीवो नष्टसंज्ञो गतस्पृहः।
कर्म्मणा नीयतेऽन्यत्र मायेषा मम चोत्तमा॥ १५।

* वर्षतीति साधु।

† प्रपूरयेदिति (ग)।

‡ सुन्दरीति (ग)।

§ तत्त्वत इति (ग)।

¶ मम मायेत्यनुत्तमा इति (ग)।

शुक्रशोणितसंयोगाज्जायते मम जन्तव: ।
अङ्गुल्यश्चरणौ चैव भुजौ शीर्षं कटिस्तथा ॥ १६ ।
पृष्ठं तथोदरञ्चैव दन्तोष्ठपुटनासिका:* ।
कर्णौ नेत्रे कपालौ च ललाटं जिह्वया सह ॥ १७ ।
एतया मायया युक्ता जायन्ते यदि जन्तव: ।
तस्यैव जीर्य्यते भुक्तमग्निना पीतमेव च ।
अधश्च स्रवते जन्तुरेषा माया ममोत्तमा ॥ १८ ।
शब्द: स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चम: ।
अत्रात्प्रवर्त्तते जन्तुरेषा माया मम प्रिया ॥ १९ ।
सर्व्वर्तुषु निजाकार: स्थावरे जङ्गमे तथा ।
तत्त्वं न ज्ञायते तस्य मायैषा मम सुन्दरि ॥ २० ।
आपो दिव्यास्तथा भौमा आपो येषु प्रतिष्ठिता: ।
नद्यो वृद्धिं† प्रयान्त्यत्र मायैषा मम सुन्दरि‡ ॥ २१ ।
वृष्टौ वह्नुदका: सर्व्वे§ पल्वलानि सरांसि च ।
ग्रीष्मे सर्व्वाणि शुष्यन्ति एतन्मायाबलं मम ॥ २२ ।
हिमवच्छिखरान्मुक्ता नाम्ना मन्दाकिनी नदी ।
गां गता सा भवेद्गङ्गा मायैषा मम कीर्त्तिता ॥ २३ ।

* नासिकमिति क्लीवैकत्वे साधु ।

† न च वृद्धिमिति (ग) ।

‡ मायैषा परमा ममेति (ग) ।

§ अत्र पुंस्त्वमार्षम् ।

मेघा वहन्ति* सलिलमुद्धृत्य लवणार्णवात्† ।
वर्षन्ति मधुरं लोके एतन्मायाबलं मम ॥ २४ ।
रोगार्त्ता जन्तवः केचिद्भक्षयन्ति महौषधम् ।
तस्य वीर्य्यं समाश्रित्य मायान्तु विसृजाम्यहम् ॥ २५ ।
औषधे दीयमानेऽपि जन्तुः पञ्चत्वमेति यत् ।
निर्वीर्य्यमौषधङ्कृत्वा कालो भूत्वा हराम्यहम् ॥ २६ ।
प्रथमं जायते गर्भः पश्चादुज्जायते पुमान् ।
जायते मध्यमं रूपं ततोऽपि जरया युतः‡ ।
तत इन्द्रियनाशश्च एतन्मायाबलं मम ॥ २७ ।
यद्भूमौ निहितं वीजं तस्मात्तज्जायतेऽङ्कुरम् ।
पुनश्च पत्रादियुतमेतन्मायाबलं मम ॥ २८ ।
एकवीजात्प्रकीर्णाद्वै जायन्ते तानि भूरिशः ।
तत्रामृतं विसृजामि§ मायायोगेन भूरिशः¶ ॥ २९ ।
लोक एवं विजानाति गरुड़ो वहतेऽच्युतम् ।
भूत्वा वेगेन गरुड़ो वहाम्यात्मानमात्मना ॥ ३० ।
या एता देवताः सर्व्वा यज्ञभागेन तोषिताः ।

* वर्षन्तीति (ग) ।

† लवणं सलिलार्णवे इति (ग) ।

‡ मध्यमस्तत्र ततोऽपि जरसा पुनरिति (ग) ।

§ वै सृजामीति (ग) ।

¶ माधवीति (ग) ।

मायामेतामहं कृत्वा तोषयामि दिवौकसः* ॥ ३१ ।
लोकाः सर्व्वे विजानन्ति देवा नित्यं मखाशिनः ।
मायामेतामहङ्कृत्वा यक्ष्यामि त्रिदिवौकसः ॥ ३२ ।
सर्व्वोऽपि भजते लोको यष्टारञ्च बृहस्पतिम् ।
मायामाङ्गिरसीङ्कृत्वा याजयामि दिवौकसः† ॥ ३३ ।
सर्व्वे लोका विजानन्ति वरुणः पाति सागरम् ।
मायान्तु वारुणीङ्कृत्वा रक्षामि च महार्णवम्‡ ॥ ३४ ।
सर्व्वे लोका विजानन्ति कुवेरोऽयं धनेश्वरः ।
कुवेरमायामादाय अहं रक्षामि तद्धनम् ॥ ३५ ।
एवं लोका विजानन्ति वृत्रः शक्रेण सूदितः ।
शाक्रीमायां समास्थाय मया वृत्रो निषूदितः ॥ ३६ ।
एवं लोका विजानन्ति आदित्यश्च ध्रुवो महान् ।
मेरुं मायामयङ्कृत्वा वहाम्यादित्यमेव च ॥ ३७ ।
एवमाभाषते लोको जलं वा§ नश्यतेऽखिलम् ।
बड़वामुखमास्थाय पिवामि तदहं जलम् ॥ ३८ ।
वायुं मायामयङ्कृत्वा मेघेषु विसृजाम्यहम् ।
यदीदृग्भाषते लोकः कुत्रैतत्तिष्ठते जलम् ॥ ३९ ।
देवा अपि न जानन्ति अमृतं कुत्र तिष्ठति ।

---

* पृच्छामि विद्यावान् सदेति (ग) ।

† दिवौकसामिति (ग) ।

‡ मोहयामि महोदधिमिति (ग) ।

§ जले किमिति (ग) ।

मम मायानियोगेन तिष्ठति ह्यौषधं वने ॥ ४० ।
लोको ह्येवं विजानाति राजा पालयते प्रजाः ।
राजमायामहङ्कृत्वा पालयामि वसुन्धराम् ॥ ४१ ।
ये तु वै द्वादशादित्या उदेष्यन्ति युगक्षये ।
प्रविश्य तानहं भूमे मायां लोके सृजाम्यहम् ॥ ४२ ।
सूर्य्यस्य चांशुना भूमे* लोकेषु पत्यते सदा ।
मायामंशुमयीङ्कृत्वा पूरयाम्यखिलं जगत् ॥ ४३ ।
वर्षन्ते यत्र संवर्त्ता धारैर्मुशलसन्निभैः ।
मायां सांवर्त्तकीं गृह्य पूरयाम्यखिलं जगत् ॥ ४४ ।
यत्स्वपामि वरारोहे शेषस्योपरि धारिणि ।
अनन्तमायया चाहं धारयामि† स्वपामि च ॥ ४५ ।
वराहमायामादाय भूमे जानासि किं न वै ।
देवा यत्र निलीयन्ते सा माया मम कीर्त्तिता ॥ ४६ ।
त्वञ्चापि वैष्णवीं मायां कृत्वा जानासि किं न तत्‡ ।
धारितासि च सुश्रोणि वारान् सप्तदशैव तु ॥ ४७ ।
माया तु मम देवीयं कृत्वा ह्येकार्णवां महीम् ।
मम मायाबलं ह्येतद्येन तिष्ठाम्यहं जले§ ॥ ४८ ।

* भूमि इति (ग) । एवं परत्रापि ।

† तां वहामि स्वपामि चेति (ग) ।

‡ कस्माज्जानासि नैव चेति (ग) ।

§ जलमिति (ग) ।

प्रजापतिश्च रुद्रश्च सृजामि च वहामि च* ।
तेऽपि मायां न जानन्ति मम मायाविमोहिताः ॥ ४९ ।
अथो पितृगणाश्चापि य एते सूर्य्यवर्च्चसः† ।
मायां पितृमयीं ह्येतां गृह्णामीति च तत्त्वतः ॥ ५० ।
किन्तु त्वयैव सुश्रोणि अन्यच्च शृणु सुन्दरि ।
ऋषिर्मायानुसारेण स्त्रिया योनिं प्रवेशितः ॥ ५१ ।
ततो विष्णोर्वचः श्रुत्वा श्रोतुकामा वसुन्धरा ।
कराभ्यामञ्जलिङ्कृत्वा वाक्यमेतत्तदब्रवीत् ॥ ५२ ।
किं तेन ऋषिमुख्येन कृतं कर्म्म सुदुष्करम् ।
स्त्रीत्वञ्चैव पुनः प्राप्तं स्त्रीयोनिञ्चैव प्रापितः‡ ॥ ५३ ।
एतन्मे सर्व्वमाख्याहि परं कौतूहलं मम ।
तस्य ब्राह्मणमुख्यस्य स्त्रीत्वे यत्कर्म्म पापकम् ॥ ५४ ।
ततो मह्या वचः श्रुत्वा हृष्टतुष्टमना§ हरिः ।
मधुरं वाक्यमादाय प्रत्युवाच वसुन्धराम् ॥ ५५ ।
शृणु तत्त्वेन मे देवि धर्म्माख्याने च सुन्दरि¶ ।
माया मम विशालाक्षि रोहिणी लोमहर्षिणी ॥ ५६ ।

* हरामि चेति (ग) ।

† सूर्य्यतेजस इति (ग) ।

‡ प्रजापतिरिति (ग) ।

§ हृष्टपुष्टमना इति (ग) ।

¶ महामते इति (ग) ।

मायाया मम योगेन सोमशर्म्मा च कश्चितः* ।
गतो गतीरनेकाश्च उत्तमाधममध्यमाः ।
ब्राह्मणत्वं पुनः प्राप्तो मम मायाप्रणोदितः ॥ ५७ ।
यथा ब्राह्मणमुख्येन प्राप्ता स्त्रीयोनिरेव च† ।
न तस्य विकृतं कर्म्म अपराधो न विद्यते ॥ ५८ ।
ममैवाराधनपरो मम कर्म्मपरायणः ।
नित्यं चिन्तयते भूमे मम मूर्त्तिं मनोरमाम् ॥ ५९ ।
अथ दीर्घेन कालेन तस्य तुष्टोऽस्मि सुन्दरि ।
तपसा कर्म्मणा भक्त्या अनन्यमनसा स्तुतः ॥ ६० ।
ततस्तस्य मया देवि दत्त्वा दर्शनमुत्तमम् ।
वरेण छन्दितो विप्रस्तपस्तुष्टोऽस्मि‡ ते द्विज ॥ ६१ ।
वरं वरय भद्रन्ते तव यद्हृदि वर्त्तते ।
रत्नानि काञ्चनं गावस्तथा राज्यमकण्टकम् ॥ ६२ ।
अथवेच्छसि तं स्वर्गं यत्र सौख्यं वराङ्गनाः§ ।
धनरत्नं समृद्धं हि हेमभाण्डविभूषितम् ॥ ६३ ।
यत्र सर्व्वा दिव्यरूपा भवन्त्यप्सरसः पराः ।

* क्रंशित इति (ग) ।

† स्त्रियायोनिश्च प्रापिता इति (ग)।

‡ साधुतुष्टोऽस्मीति (ग) ।

§ स्वर्गं वा यत्र ते चाप्सरोगणाः इति (ग)।

ददामि ते वरं विप्र यावत्ते चित्तचिन्तितम्* ॥ ६४ ।
ततो मम वचः श्रुत्वा स च ब्राह्मणपुङ्गवः ।
शिरसा पतितो भूमौ मामुवाच प्रियं वचः† ॥ ६५ ।
अथ नो कुप्यसे देव वरं समनुयाचते ।
यत्त्वया भाषितन्देव मम देयं यदृच्छया ॥ ६६ ।
न चाहं काञ्चनं गावो न च स्त्रीराज्यमेव च ।
स्वर्गं वाप्सरसो वापि‡ ऐश्वर्य्यं न मनोहरम् ॥ ६७ ।
तथा स्वर्गसुहस्राणामिकञ्चापि न रोचते ।
ज्ञातुमिच्छामि ते मायां यया क्रीड़सि माधव ॥ ६८ ।
ततस्तस्य वचः श्रुत्वा स मया तत्र भाषितः ।
किं मायया ते विप्रेन्द्र अकार्य्यं पृच्छसे द्विज ।
देवा अपि न जानन्ति विष्णुमायाविमोहिताः ॥ ६९ ।
ततो मम वचः श्रुत्वा स च ब्राह्मणपुङ्गवः ।
उवाच मधुरं वाक्यं मायया च प्रणोदितः ॥ ७० ।

* अत्र चेच्छसि विप्रेन्द्र ऋषीणां चोत्तम ऋषिः ।
भविता भारतस्यैव मम कर्म्मपरायणः ।
अथ चेच्छसि कन्यानां सहस्रं दिव्यमत्तमम् ॥
धनरत्नसमृद्धानां हेमभाण्डविभूषितम् ।
सर्व्वासां दिव्यरूपाणां भवन्त्यप्सरसोगणाः ।
ददामि ते वरञ्चैव विप्र यत्ते विचिन्तितमिति (ग)

† भूम्यामुवाच मधुरां गिरमिति (ग) ।

‡ नाप्सरोनैव च स्वर्गमिति (ग) ।

यदि तुष्टोऽसि मे देव कर्म्मणा तपसाऽथवा ।
तव देव प्रसादेन ममैवं दीयतां वरम् ॥ ७१ ।
ततस्तु स मया प्रोक्तस्तपस्वी ब्राह्मणस्तथा ।
गच्छ कुब्जाम्रके गङ्गास्नातो मायान्तु गच्छसि ॥ ७२ ।
ममैवं वचनं श्रुत्वा कृत्वा चैव प्रदक्षिणम् ।
कुब्जाम्रके देवि विप्रो मम मायाभिलाषुकः* ॥ ७३ ।
ततः कुण्डी त्रिदण्डी च मात्राभाण्डञ्च यत्नतः ।
स्थापयित्वा यथान्यायं तीर्थमाराधयद्यथा† ॥ ७४ ।
ततो ह्यवतरद्गङ्गां विधिदृष्टेन‡ कर्म्मणा ।
अवगाह्य ततो गङ्गां सर्व्वगात्रे च क्लेदिते§ ।
तावन्निषादसदने तत्स्त्रीगर्भे गतोऽभवत्¶ ॥ ७५ ।
हृदयेऽचिन्तयत्तत्र गर्भक्लेशेन पीड़ितः ।
अहो कष्टं मया किंस्वित्कर्म्म‖ वा दुष्कृतं कृतम् ।
योऽहं निषादगर्भेऽस्मिन्वसामि नरकेषु च ॥ ७६ ।
धिक्तपो धिक् च मे कर्म्म धिक् फलं धिक् च जीवितम् ।

* मायाभिकाङ्क्षयेति (ग) ।

† तीर्थान्याराधयद्यथेति (ग) ।

‡ विधिश्रेष्ठेनेति (क), (ख) ।

§ सर्व्वगात्राणि क्लेदिता इति (ग) ।

¶ निषादस्य गृहे गर्भस्तिष्ठते स च ब्राह्मण इति (ग) ।

‖ किञ्चिदिति (ग) ।

योऽहं निषादगर्भेऽस्मिन्पीड़ामि मलसङ्कुले* ॥ ७७ ।
अस्थां विग्नतसङ्कीर्णे† नवद्वाराभिसंद्वते ।
पुरीषमूत्रसङ्कीर्णे मांसशोणितकर्द्दमे ॥ ७८ ।
दुर्गन्धे दुःसहे चैव वातिकश्लेषपैत्तिके ।
बहुरोगसमाकीर्णे बहुदुःखसमाकुले ।
अलं किं तेन चोक्तेन दुःखान्यनुभवामि च ॥ ७९ ।
कुतो विष्णुः कुतो वाहं कुतो गङ्गाजलानि च ।
गर्भसंसारनिष्क्रान्तः पश्चादाप्स्यामि तां क्रियाम् ॥ ८० ।
एवं चिन्तयमानस्तु शीघ्रं गर्भाद्विनिःसृतः ।
भूम्यान्तु पततस्तस्य नष्टं यत्पूर्व्वचिन्तितम्‡ ॥ ८१ ।
अजायत§ ततः कन्या निषादस्य गृहे तदा ।
धनधान्यसमृद्धस्य वर्त्तते स च ब्राह्मणः ॥ ८२ ।
न च संज्ञायते किंचिद्विष्णु¶मायाप्रमोहिता ।
अथ दीर्घस्य कालस्य कृतोद्वाहा यशस्विनी ।
पुत्रान् दुहितरश्चैव जनयामास मायया ॥ ८३ ।
भक्ष्याभक्ष्यञ्च खादेत पेयापेयञ्च तत्पिवेत् ।

* घनसङ्कुले इति (ग) ।
† विभिन्नाद्विग्नतैः पूर्णे इति (ग), तथाऽतः परं षट् पादा न सन्ति ।
‡ नष्टं तद्धि विचिन्तितमिति (ग) ।
§ प्रजाता चेति (ग) ।
¶ विष्णोरिति (ग) ।

जीवानि* चैव सततं घातितानि ततस्ततः ॥ ८४ ।
कार्य्याकार्य्यं न जानीते वाच्यावाच्यन्तथेति च ।
गम्यागम्यं न जानाति मायाजालेन मोहितः† ॥ ८५ ।
पञ्चाशद्वर्षके काले मयाख्यातः स ब्राह्मणः ।
घटं गृहीत्वा विड्लिप्तवस्त्रचालनकारणात् ॥ ८६ ।
तीरे निक्षिप्य वस्त्रं स घटञ्च विनिधाय हि ।
स्नातुं गङ्गाजले स्थित्वा विगाहयति जाह्नवीम् ॥ ८७ ।
प्रस्वेदघर्म्मसन्तप्तः स शिरःस्नानमीहते‡ ।
जातस्तपोधनस्तत्र दण्डी कुण्डीधरः पुनः ॥ ८८ ।
यत्र§ पश्यति विप्रोऽसौ मात्रां कुण्डीन्त्रिदण्डकम् ।
वस्त्रादि दर्शितञ्चैव यत्र संस्थापितं पुरा ॥ ८९ ।
तत्तेन सर्व्वं सन्दृष्टं जाते स्नाने तु पूर्व्ववत्¶ ।
विप्रेण ज्ञातुकामेन विष्णुमायां यथा पुरा‖ ॥ ९० ।
तत उत्तरतस्तत्र गङ्गायान्तु तपोधनः ।
सव्रीड़ो गृह्णते** वासो योगञ्च परिचिन्तयन् ॥ ९१ ।

* क्लीवत्वमार्षम् ।

† मायया मम मोहित इति (ख) । आत्मविक्रयमेव चेति क्वचित् ।

‡ सशिरश्चायमीहते इति (ग) ।

§ तत इति (ग) ।

¶ एतदर्द्धं (ग) पुस्तके नास्ति ।

‖ ज्ञातज्ञानेन विष्णुमायाभिकाङ्क्षिणेति (ग) ।

** गृह्णातीति साधु ।

उपविश्य च* गङ्गायाः पुलिने समवालुके ।
ततो विन्दति चात्मानं तपसा यत्तदा कृतम्† ॥ ८२ ॥
मया किं कर्म्म पापेन कृतं निन्द्यं सुदुष्करम् ।
एवं निन्दति चात्मानं धिक्कुर्व्वन् साधुदूषितम्‡ ।
आचारो वा परिभ्रष्टो येनाहं प्रापितस्त्विमाम् ॥ ८३ ॥
निषादस्य कुले जातो भक्ष्याभक्ष्याश्च भक्षिताः§ ।
जीवाश्च घातिताः सर्व्वे जलस्थलदिवौकसः¶ ॥ ८४ ॥
पेयापेयञ्च मे पीतं विक्रीताश्चाप्यविक्रयाः ।
अगम्यागमनञ्चैव वाच्यावाच्यं न रक्षितम् ॥ ८५ ॥
वेश्मन्यभोज्यभोज्यञ्च भुक्तञ्चैव न संशयः ।
पुत्रा दुहितरश्चैव निषादाज्जनिता मया ॥ ८६ ॥
ततः किञ्चापराधं वा केन वा तद्विचिन्तये ।
येनाहं प्रापितो ह्येनां नैषादीमीदृशीं दशाम् ॥ ८७ ॥
एतस्मिन्नन्तरे भूमे निषादः क्रोधमूर्च्छितः ।
पुत्रैः परिवृतस्तत्र मायातीर्थमुपागतः ॥ ८८ ॥
ततो मृगयते भार्य्यां भक्तियुक्तां शुभेक्षणाम्|| ।

---

* उपविश्याथेति (ग)।

† तदिदन्दितमिति (ग)।

‡ एतदर्द्धं ग पुस्तके नास्ति।

§ भक्ष्याभक्ष्यञ्च भक्षितमिति (ग)।

¶ अनन्ताः स्थलजाश्च ये इति (ग)।

|| भक्तिमान् शुभलक्षणामिति (ग)।

परिपृच्छति चैकैकं तप्यमानं तपोधनम्* ॥ ९९ ।
किं नु पश्यथ भार्य्या मे गङ्गातीरमुपागता ।
घटमादाय हस्तेन आगता जलकारणात् ॥ १०० ।
तत्रैव च नराः सर्व्वे मायातीर्थमुपागताः ।
पश्यन्ति च परिव्राजं कुम्भञ्चैव यथास्थितम् ॥ १०१ ।
ततो दुःखेन सन्तप्तः अपश्यंश्च स्वकां प्रियाम् ।
दृष्ट्वा पटञ्च कुम्भञ्च करुणं पर्य्यदेवयत् ॥ १०२ ।
इदं वासश्च कुम्भञ्च नदीकूले च तिष्ठति ।
न चापि दृश्यते भार्य्या मम गङ्गामुपागता ॥ १०३ ।
अथ केनापि ग्राहेण खाद्यमाना तपस्विनी ।
गृहीता तोयमध्यन्तु जिह्वालोडिन चाबला ॥ १०४ ।
न चाप्रियं मयाऽप्युक्ता कदाचिदपि वाचकम् ।
स्वप्नेऽपि नोक्तपूर्व्वासि कदाचिदपि चाप्रियम् ॥ १०५ ।
अथवापि पिशाचेन भक्षिता भूतराक्षसैः ।
आक्रुष्टा किं नु रोगेण गङ्गातीरं समाश्रिता ॥ १०६ ।
किन्नु तं दुष्कृतं पूर्व्वं मया कर्म्म सुसङ्कटम् ।
येन मत्पुरतो भार्य्याप्यदृष्टा विगतिं गता ॥ १०७ ।
एहि मे सुभगे कान्ते मम चित्तानुवर्त्तिनि ।
पश्यैतान्बालकान् भीतान् क्लिश्यमानानितस्ततः ॥ १०८ ।

---

* अतः परं (ग) पुस्तके

क्व गतासि प्रियेऽस्माकं त्यक्त्वा पुत्रान् गृहे च माम् ।

बाला दुहिता रोदिति क्षुधार्त्ता स्तनपायिनी न श्वश्रूकोऽन्तिको वर्त्तते ।

मां पश्यस्व* वरारोहे भोग्पुत्रानतिबालकान् ।
दुहितृः पश्य चत्वारि सर्व्वेभ्यु मम मानदे ॥ १०९ ।
मम पुत्रा रुदन्त्येते बालकास्तव लालसाः ।
निश्चव दारिका एव मम दुष्कृतकारिणः ॥ ११० ।
कानं मां क्षुधितञ्चैव त्याक्ष्यसे त्वं पिपासितम् ।
एवमुक्ता च कन्यापि मम भक्त्या व्यवस्थिता ॥ १११ ।
एव विलपमानस्य निषादस्य द्रुतस्ततः† ।
सव्रीडं‡ भाषते विप्रो निषादं गच्छ नास्ति सा ।
सुखं योगस्तु तं नीत्वा सा गता शान्तिरक्षये§ ॥ ११२ ।
तं रुदन्तं तथा दृष्ट्वा कारुण्येन परिप्लुतः ।
निषादं भाषते तत्र गच्छ किं परिक्लिश्यसि¶ ॥ ११३ ।
बालान्स्वान्परिरक्षस्व आहारैर्विविधैरपि ।
एते न त्यजनीयास्ते कदाचिदपि पुत्रकाः ॥ ११४ ।
परिव्राजवचः श्रुत्वा निषादस्तस्य सन्निधौ ।
उवाच मधुरं वाक्यं दुःखशोकपरिप्लुतः‖ ॥ ११५ ।
अहो मुनिवरश्रेष्ठ अहो धर्म्मभृतां वर** ।

* दर्शयेति साधु । किं मा धर्ष्यसि ग, ।
† यतस्ततः इति (ग) ।
‡ सव्रीड इति (ग) ।
§ सुखं योग समाश्रित्य पुत्रमाप्यायितौ स्त्रि य इति (ग) ।
¶ परिक्लिश्यसि इति साधु ।
‖ परिप्लुतमिति (ग) ।
** धर्म्मविदां वरेति ग. ।

माञ्चितोऽस्मि त्वया विप्र वचनैर्मधुराक्षरैः ॥ ११६ ।
निषादस्य वचः श्रुत्वा स मुनिः संशितव्रतः ।
उवाच मधुरं वाक्यं दुःखशोकपरिप्लुतः* ॥ ११७ ।
मारोदीर्वच्मि† भद्रन्ते तवाहं सा प्रियाऽभवम्‡ ।
गङ्गातीरं समासाद्य मुनिर्जातोऽस्म्यहं तथा§ ॥ ११८ ।
परिव्राजवचः श्रुत्वा निषादो विगतज्वरः ।
श्लक्ष्णं वचनमादाय प्रत्युवाच द्विजोत्तमम् ॥ ११९ ।
किमिदं भाषसे विप्र अव्यक्तं यत्कदाचन ।
न भाव वा यद्घटितं स्त्रियः पुंस्त्वं सदैव हि ॥ १२० ।
निषादस्य वचः श्रुत्वा ब्राह्मणो दुःखमूर्च्छितः ।
उवाच मधुरं वाक्यं गङ्गातीरे च धीवरम् ॥ १२१ ।
शीघ्रं गच्छ स्वकन्देशमेतान् गृह्य स्वबालकान् ।
सर्व्वेषाञ्च यथासंख्यं स्नेहः कर्त्तव्य एव च ॥ १२२ ।
स तेन चोदितो ह्येवं निषादो नावगच्छति ।
मधुरं स्वरमादाय प्रत्युवाच द्विजोत्तमम्¶ ॥ १२३ ।
किं त्वया दुष्कृतं कर्म्म कृतं पूर्व्वं पुरातनम् ।

* एतदर्द्धं (ग) पुस्तके नास्ति ।

† वक्ष्मीति (ग) ।

‡ प्रवरस्त्रिय इति (ग) ।

§ जातोऽस्मि च तत्र स्त्रियेति (ग) ।

¶ स ब्राह्मणमिति (ग) ।

मम यद्वाघवे चैव स्त्रीत्वं प्राप्तोऽसि तत्कथम्* ॥ १२४ ।
केन दोषेण प्राप्तस्त्वं स्त्रीत्त्वं भूत्वा पुमान्पुनः ।
पुंस्त्वं चैव कथं प्राप्त एतदाचक्ष्व पृच्छतः† ॥ १२५ ।
एवं तस्य वचः श्रुत्वा स ऋषिः संशितव्रतः ।
उवाच मधुरं वाक्यं मायातीर्थजलेचरम् ॥ १२६ ।
निषाद शृणु तत्त्वेन मत्कथाञ्च प्रजल्पतः‡ ।
न मया दुष्कृतं किञ्चित्कृतं कुत्रापि तत्त्वतः§ ॥ १२७ ।
एकभक्तं समाचारे अभक्ष्यञ्चैव वर्ज्जितम् ।
स मयाराधितो देवो लोकनाथो जनार्द्दनः ।
कर्म्मभिर्बहुभिश्चैव मयादर्शनकाङ्क्षिणा ॥ १२८ ।
अथ दीर्घेण कालेन मया दृष्टो जनार्द्दनः ।
वरेण छन्दयामास बहुधा मायया ततः¶ ॥ १२९ ।
मया नाभीप्सितस्तस्माद्दीयमानो वरस्ततः‖ ।
मायां मे दर्शय विभो विष्णो प्रणतवत्सल** ॥ १३० ।

* अहं नेच्छ वरमिच्छ इति (ग) ।

† केन दोषेण प्राप्तस्त्वं स्त्रियत्वं ऋषिपुङ्गव ।
मुनित्वञ्च कथं प्राप्तं एतदाचक्ष्व पृच्छत ॥ इति (ग) ।

‡ यां कथां मम तत्त्वत इति (ग) ।

§ कृतमेव हि कीर्त्तितश्चेदिति (ग) ।

¶ तदनन्तरमिति (ग) ।

‖ न मया वीप्सितस्तत्र दीयमानो वरस्तदेति (ग) ।

** ईप्सिता च मया तत्र विष्णुमाया महात्मनेति (ग) ।

ततो मां भाषते विष्णुर्मायां द्रष्टुं त्वलं द्विज* ।
मया पुनः पुनर्योक्ता मम प्रीत्या प्रदर्शय† ॥ १३१ ।
ततोऽहमस्मिन चाप्युक्तस्तर्हि द्रक्ष्यस्यलं भवान् ।
गच्छ कुब्जाम्रके गङ्गां स्नात्वेत्यन्तर्हितोऽभवत्‡ ॥ १३२ ।
अहं मायाप्रलोभेन गङ्गातीरमुपागतः ।
दण्डं कुण्डीञ्च वस्त्रञ्च तीरं संस्थाप्य यत्नतः ।
ततः स्नानविधानेन निमग्नस्तज्जलेऽमले§ ॥ १३३ ।
न तत्र किञ्चिज्जानामि किमिदं किं प्रवर्त्तते ।
निषादीगर्भसम्भूतिस्तत्र पत्राभवन्ततः¶ ॥ १३४ ।
केनचित्कारणेनात्र प्रविष्टा जाह्नवीजले ।
स्नात्वाऽपश्यं पूर्व्ववच्च तावज्जातो ऋषिस्त्वहम्‖ ॥ १३५ ।

* किन्तु मायेन ब्राह्मण इति (ग) ।

† (ग) पुस्तके एतदर्द्धं, परश्लोकपूर्व्वार्द्धञ्च न स्तः ।

‡ गच्छ कुब्जाम्रकं गत्वा स्नानं कुरु च जाह्नवी ।
एवं ततोऽहं चोक्त्वा विष्णुश्चान्तरधीयत इति ग ।

§ अत्र (ग) पुस्तके पाठभेदो यथा —
स्थापितं दण्डकुण्डं च पार्श्वं वस्त्रञ्च निःक्षिपेत् ।
उचितेनोपचारेण निमज्ज्य सलिलाम्भसीति ॥

¶ सर्व्वमेव विजानामि योनिषादगर्भेऽवसमिति (ग) ।

‖ लोभमोहार्थकामार्थक्रोधेन च परिप्लुतः ।
ततः केनापि कर्म्मणा जलकृत्यमुपागतः ।
निमज्य सलिले चात्र जातोऽस्मि ब्राह्मणोत्तममिति (ग)

निषाद पश्य कुण्डीञ्च मात्रां वस्त्रं यथा पुरा* ।
पश्चाद्वर्षद्वैधीयो जातोऽस्मि त्वद्गृहे वसन्† ।
दण्डवस्त्रादि यत्किञ्चिन्न जीर्णं गङ्गया हृतम्‡ ॥ १३६ ।
एवं तेन ततश्चोक्तो निषादोऽदृश्यतां गतः ।
ये च ते बालकास्तत्र तेषां कश्चिन्न दृश्यते ॥ १३७ ।
स ततो ब्राह्मणो देवि तपस्तपति निश्चितः ।
ऊर्द्ध्वश्वासोर्द्ध्वबाहुश्च वायुभक्षपरायणः ॥ १३८ ।
तस्य वै तिष्ठमानस्य अपराह्णन्तु§ जायते ।
ततः प्रमुच्यते तोयं देवि कृत्वा यथोचितम् ॥ १३९ ।
कर्म्मण्यानि च पुष्पाणि आहृत्य श्रद्धयान्वितः¶ ।
अर्च्चयित्वा यथान्यायं वीरासनमुपागतः ॥ १४० ।
हृतम्तु ब्राह्मणैर्मुख्यैर्गङ्गास्नानेषु वै द्विजः ।
ऊचुस्ततो द्विजास्तत्र तपस्विनमनिन्दितम् ॥ १४१ ।
पूर्व्वाह्णे स्थापयित्वाच मात्रां कुण्डीं त्रिदण्डकम् ।
इतो गतोऽसि ब्रह्मेन्द्र स्थापयित्वा तु धीवरान् ।
विस्मृतं किं त्वया स्थानं कथं शीघ्रं न चागतः ॥ १४२ ।
ततो विप्रवचः श्रुत्वा तूर्ष्णीमासीन्मुनिस्तदा ।

---

* सर्व्वोपवर्षमिति ग ।

† पश्चाद्वर्षशतीयोऽपि नगरस्य न गच्छतीति ग ।

‡ न जीर्णोऽस्त्यम्बरं, यत्ते आहृत्या नैव ते हृता इति (ग) ।

§ अपराह्णमिति ग ।

¶ अकर्म्मण्यानि पुण्यानि समाश्रितनरतः सर्व्वमिति (ग) ।

ब्राह्मणानुगतं स्थानमात्मनात्मानुसंस्थितः ॥ १४३ ।
एतस्मिन्नन्तरे देवि स च ब्राह्मणपुङ्गवः ।
अद्य पञ्चाशद्वर्षाणि अमावस्याद्य चैव हि ।* १४४ ।
कथमेतावतत्कालं मामूचुर्ब्राह्मणाय किम् ।
पूर्व्वाह्णे स्थापयित्वा त्वं स्वां मातावापराह्णिके ।
कथं कालेऽनुसम्प्राप्तः किमेतदिति भाषते ॥ १४५ ।
एतस्मिन्नन्तरे देवि ब्राह्मणाय तदा मया ।
दर्शयित्वा निजं रूपं तमवोचमिदन्वरे† ॥ १४६ ।
किमिदं भ्रान्तरूपोऽसि किं वा त्वं दृष्टवानसि ।
पश्यामि त्वां व्यग्रमिव सावधानोऽभवं स्वयम् ॥ १४७ ।
एवमुक्तः स तु मया भूमौ कृत्वा शिरः स्वकम् ।
उवाच दुःखितो दीनो निःश्वस्य च मुहुर्मुहुः ॥ १४८ ।
अहो देव द्विजा एते मां वन्दन्ति‡ जगद्गुरो ।
पूर्व्वाह्णे स्थापयित्वा त्वं वस्त्रं दण्डकमण्डलुम् ।
आगतोऽस्यपराह्णे किं स्थलं विस्मृतवानसि ॥ १४९ ।
अहं व्याधस्य वै भूत्वा भार्य्या च व्याधयोनिजा ।
पञ्चाशद्वर्षपर्य्यन्तं तत्र स्थित्वा ततः किल ॥ १५० ।
तस्यास्त्वेव त्रयः पुत्रास्तिस्रश्चापि च कन्यकाः ।

---

* अमावस्या नु एष वै इति (ग) ।

† दर्शितं तस्य चात्मानं दिव्यरूपेण सर्वमेति (ग) ।

(ग) पुस्तकेऽत्र कति श्लोकाः परित्यक्ताः ।

‡ वन्दन्ते इति साधु ।

जातान्येवमपत्यानि दुष्टकर्म्मकृतस्तथा ॥ १५१ ।
स्नातुं कदाचिद्गङ्गायां गतोऽहं तीरभूमिगः ।
स्थापयित्वाथ स्वं वस्त्रं मग्नः स्वास्यजलेऽमले ।
उन्मज्य स्वयं पुनश्चैव प्राप्तो रूपं मुनिसुतम् ॥ १५२ ।
किं मया विकृतं कर्म्म सेवमानेन माधव ।
तपश्च तप्यमानेन किं मया विकृताकृतम् ॥ १५३ ।
भक्षितं किमकर्म्मण्यं सेवमानेन चाच्युत ।
व्यभिचारश्च मे तत्र को जातम् तवार्च्चने ॥ १५४ ।
एतदाचक्ष्व तत्त्वेन येनाहं नरकं गतः ।
एतच्चिन्ताव्याकुलोऽहं निर्बोध भगवन्मम ॥ १५५ ।
मायालुब्धेन हि मया पूर्व्वं विज्ञापितो ह्यसि ।
नान्यत्स्मरामि पापस्य नरके येन पातितः ॥ १५६ ।
ततस्तस्य वचः श्रुत्वा कारुण्यं परिदेवितम् ।
उक्तवानस्मि तं विप्रं दुःखमत्यन्तमानसम् ॥ १५७ ।
मा दुःखं कुरु विप्रेन्द्र आत्मदोषसमुद्भवम् ।
विकर्म्म न कृतं किञ्चिदपि मे विप्र पूजने ।
येन दुःखमनुप्राप्तं तिर्य्यग्योनिश्च वै गतः ॥ १५८ ।
उक्तमेव मया पूर्व्वं शृणु ब्राह्मणपुङ्गव ।
वरान्वरय मां ब्रह्मन् त्वं मायां वृतवानसि ॥ १५९ ।
ददामि दिव्यभोगान्वै भौमांश्चापि तवेप्सितम् ।
तांस्तु नेच्छसि मायाया दर्शनं वृतवानसि ॥ १६० ।
दृष्टा तु वैष्णवी माया या त्वया ब्राह्मणेप्सिता ।

न गतो द्विवसश्चेह नापराह्णोऽपि कुत्रचित् ।
वर्षाणि चैव पञ्चाशन्निषादस्य गृहेऽपि न ॥ १६१ ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व द्विजोत्तम ।
या एषा वैष्णवी माया त्वया ब्राह्मण ईप्सिता ॥ १६२ ।
त्वया न तत्कृतं किञ्चिच्छुभं वाशुभमेव वा ।
सर्व्वं मायामयं तत्र विस्मयात्परितप्यसे ॥ १६३ ।
यत्त्वया दुष्कृतं कर्म्म व्यभिचारश्च तत्र वै ।
अर्ज्जनञ्च न ते भ्रष्टं तपश्चैव न नाशितम् ॥ १६४ ।
भवान्तरे कृतं यच्च येनेदं प्राप्तवान्महत् ।
दुःखन्तच्च तवाख्यास्ये शृणु ब्राह्मणसत्तम* ॥ १६५ ।
मम भक्ता द्विजाः शुद्धा यत्त्वया नाभिवादिताः ।
तत्पापाद्दीर्घो भोगस्तव जातो हि दुःखदः ॥ १६६ ।
ये च भागवताः शुद्धास्ते नूनं मम मूर्त्तयः ।

* अत्र ग· पुस्तकस्य पाठो यथा —
पुनश्चान्यत् प्रवक्ष्यामि तच्छृणुष्व द्विजोत्तम ।
यस्य नैवापराधेन स्वयं कृत्वा भवान्तरे
शुद्धा भागवता विप्र मद्भक्ता नाभिवादिताः ।
तस्य दोषापराधस्य कार्यं प्राप्तं त्वया द्विजः
सर्व्वथा वन्दनीया वै भक्ता भागवताः शुचि ।
ये मां वन्दन्ति विप्रेन्द्र भक्ता भागवता मम ।
वन्दितोऽस्मि हि विप्रेन्द्र सत्यमेतन्न संशयः ।
येषां पूजन्ति चैवेह यस्य पाप्मं न विद्यते इति ।

तान्विप्रान्ये नमस्यन्ति ते मामेव नमस्यते* ।
विदितोऽस्मीह विप्रेन्द्र तैरहं नात्र संशयः ॥ १६७ ।
मम दर्शनकामा ये ते मे भक्ता द्विजास्तथा ।
शुद्धा भागवताः पूज्या द्रष्टव्याः सर्व्वदा नृभिः ॥ १६८ ।
विशेषेण कलौ ब्रह्मन्द्विजरूपो ह्यवस्थितः ।
तस्माद्ब्राह्मणभक्ता ये ते मद्भक्ता न संशयः ॥ १६९ ।
यो मां प्राप्तुमिहेच्छेत यस्यावाच्यं न विद्यते ।
अनन्यमानसो भूत्वा मद्भक्तेषु नियोजयेत् ॥ १७० ।
गच्छ ब्राह्मणसिद्धोऽसि यदा प्राणान्विमोच्यसि† ।
तदा गतोऽसि मत्स्थानं श्वेतद्वीपं न संशयः‡ ॥ १७१ ।
एवमुक्त्वा वरारोहे तत्रैवान्तर्हितोऽभवम् ।
सोऽपि द्विजस्तनुन्त्यक्त्वा मायातीर्थे यशस्विनि ।
कृत्वा सुदुष्करं कर्म्म श्वेतद्वीपमुपागतः§ ॥ १७२ ।
धन्वी तूणी शरी खड्गी मायाबलपराक्रमः ।
माञ्च पश्यति वै नित्यं मायाबलसुसंस्थितम् ॥ १७३ ।

* नमस्यतीति माधृ ।

† प्राणांश्चात्रैव मन्यस इति (ग) ।

‡ गच्छ मे परमं स्थानं श्वेतद्वीपं मया सहेति (ग) ।

§ अत्र (ग) पुस्तके पाठभेदो यथा—

एवमुक्तो मया भूमि स च ब्राह्मणपुङ्गवः ।
दत्त्वा वरं महाभागे तत्रैवान्तरधीयत ॥
ब्राह्मं देहं स संन्यस्य मायातीर्थे यशस्विनि । इति ।

मायया किन्तव धरे न मायां ज्ञातुमर्हसि।
मम मायां न जानन्ति देवदानवराक्षसाः॥ १७४।
एतत्ते कथितं भूमि मायाख्यानं महोजसम्* ।
मायाचक्रमिति ख्यातं सर्व्वपुण्यसुखावहम्† ॥ १७५।
आख्यानानां महाख्यानं तपसाञ्च परन्तपः।
पुण्यानां परमं पुण्यं गतीनाञ्च परा गतिः॥ १७६।
पठेद्यो नित्यं भक्तेषु अभक्तेषु न कीर्त्तयेत्।
मा पठेन्नीचमध्येषु मा पटेच्छास्त्रदूषके॥ १७७।
अग्रतः पृच्छताशूद्रैर्मद्भक्तेषु तथाग्रतः।
पठते शोभते विप्रो न तु ये शास्त्रदूषकाः॥ १७८।
कल्यमुत्थाय यो भूमि पठते च दृढव्रतः।
तेन द्वादश वर्षाणि ममाग्रे पठितं भवेत्॥ १७९।
अथ पूर्णेन कालेन पुमान्पञ्चत्वमागतः।
मद्भक्तो जायते देवि वियोनिं न च गच्छति॥ १८०।
य एवं शृणुयान्नित्यं महाख्यानं वसुन्धरे।
न स जायेत मन्दात्मा वियोनिं नैव गच्छति॥ १८१।

* महौज इति साधु।
† सर्व्वस्य स्वसुखावहमिति (ग)।

एतत्ते कथितं भद्रे त्वया यत्पूर्व्वमीप्सितम् ।
मुच्यमाना वरारोहे किमन्यत्परिपृच्छसि* ॥ १८२ ।

इति वराहपुराणे भगवच्छास्त्रे मायाचक्रं नाम
पञ्चविंशत्यधिकशततमोऽध्यायः ।

## षड्विंशत्यधिकशततमोऽध्यायः ।

श्रुत्वा मायाबलं ह्येतद्धरणी शंसितव्रता ।
वराहरूपिणं देवं प्रत्युवाच वसुन्धरा ॥ १ ।

धरण्युवाच ।

यत्तत्कुब्जाम्रके देव भाषसे तदनन्तकम ।
न तत्राहं विजानामि पूर्व्वमुक्तञ्च यत्त्वया* ॥ २ ।
यच्च कुब्जाम्रके पुण्यं पुष्टिस्तस्य सनातनी† ।
एतन्मे परमं गुह्यं भगवन्वक्तुमर्हसि ॥ ३ ।

---

* एतत्ते कथितं देवि त्वया वचनमीरितम् ।
अधुना च वरारोहे किमन्यत्परिपृच्छसि ॥ इति (ग) ।

---

* त्वमिह त्वविजानामि यत्त्वया पूर्व्वपृच्छितमिति (ग) ।
† यच्च कुब्जाम्रके देव पुण्यपुष्टिः सनातनीति (ग) ।

वराह उवाच ।

सर्व्वं तत्कथयिष्यामि सर्व्वलोकसुखावहम् ।
यच्च कुब्जाम्रके पुण्यं यच्च तीर्थमनिन्दिते ।
तच्च कार्त्स्न्येन मे देवि शृणु तत्त्वेन सुन्दरि ॥ ४ ।
यथा कुब्जाम्रको जातस्ततस्तीर्थं यथाक्रमम् ।
यच्च कर्म्म यतोभूमे स्नातो याति मृतोऽपि च ॥ ५ ।
युगे सप्तदशे भूमे कृत्वा चैकां वसुन्धराम् ।
मधुकैटभौ तथा हत्वा ब्रह्मणो वचनात्तदा ।
जलसंहरणं कृत्वा ममाधारमुपागतः ॥ ६ ।
पश्यामि तं नतं भूमे रैभ्यं नाम महामुनिम् ।
ममैवाराधने युक्तं सर्व्वकर्म्मसु निष्ठितम् ।
युक्तिमन्तङ्गुणज्ञञ्च शुचिं दक्षं जितेन्द्रियम् ॥ ७ ।
दशवर्षसहस्राणि ऊर्द्धबाहुः स तिष्ठति ।
सहस्रञ्चाम्बुभक्षेण तथा शैवालभक्षणम् ।
वर्षाणाञ्च शतं पञ्च तिष्ठते स महामुनिः ॥ ८ ।
ततः प्रीतोऽस्म्यहं देवि रैभ्यस्य च महात्मनः ।
भक्त्या च परया चैव तेन चाराधितो ह्यहम्* ॥ ९ ।

---

(ग) पुस्तकेऽत्र पाठभेदो यथा ·
ममैवाराधने युक्तो धर्म्मकर्म्मसु निष्ठित. ।
मधुञ्च कैटभं हत्वा प्रसन्नेन च चोदितः ॥
संहारन्तु ततः कृत्वा गङ्गाद्वारमुपागतः ।
पश्यामि तत्र तं भूमे मुनिमुक्तिमतां[illegible]

ततो वै तप्यमानन्तं* गङ्गाद्वारमुपागतम् ।
आम्रवृक्षं समासाद्य दृष्टः स मुनिपुङ्गवः ॥ १० ॥
दर्शितोऽयं मया चात्मा हेतुमात्रेण केनचित् ।
मया यदाश्रितश्चाम्रस्तेन कुब्जत्वमागतः† ॥ ११ ॥
एवं कुब्जाम्रकं ख्यातं स्थानमेतद्यशस्विनि‡ ।
मृतापि§ तत्र गच्छन्ति मम लोकाय केवलम् ॥ १२
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
दृष्ट्वा स मामृषिश्चैव यानि वाक्यानि भाषते ॥ १३ ॥
एवं तत्र मया दृष्टः कुब्जरूपं समाश्रितः ।
जानुभ्यामवनिङ्गत्वा किञ्चिदेव प्रभाषते ॥ १४ ॥
नमस्कृत्य स्थितं तन्तु मुनिं वै संशितव्रतम् ।
वरेण छन्दयामास अहम्प्रीतमना धरे¶ ॥ १५ ॥

---

गणज्ञञ्च शुचिं दक्षं जितात्मानं जितेन्द्रियम् ।
दशवर्षसहस्राणि ऊर्द्ध्वबाहुः सहस्रकम् ॥
सहस्रं वायुभक्ष्यश्च पुनःशैवालभक्षणम् ।
वर्षाणाञ्च शतं यत्र तिष्ठते स महामुनिः ॥ इति ।

* तप्यमानन्तु इति (ग) ।

† एतदर्द्धं (ग) पुस्तके नास्ति ।

‡ यशस्विनीति (ग) ।

§ मृता अपीति साधु ।

¶ श्लोक एष (ग) पुस्तके एवं पठितः -
जानुभ्यां पतितं दृष्ट्वा तं मुनिं शंसितव्रतम् ।
वरेण छन्दितस्तस्य यत्तस्यैव च रोचते ॥ इति ।

ममैव वचनं श्रुत्वा स मुनिस्तपसान्वितः।
उवाच मधुरं वाक्यं प्रसादार्थी* महायशाः॥ १६॥
यदि प्रसन्नो भगवाँल्लोकनाथो जनार्द्दनः।
तव चात्र† निवासं वै देव इच्छामि नित्यशः॥ १७॥
यावल्लोका धरिष्यन्ति तावच्चैव‡ महाप्रभो।
स्थानन्तव हृषीकेश इच्छामि मधुसूदन§॥ १८॥
त्वयि भक्तिः सदा भूयाद्यावस्थानं जनार्द्दन¶।
अन्यभक्तिर्मम विभो‖ रोचते न कदाचन॥ १९॥
एतदेव परं चित्ते मया चैव विधास्यते**।
उपेन्द्र यदि तुष्टोऽसि ममायं दीयतां वरः॥ २०॥
ततस्तस्य वचः श्रुत्वा रैभ्यस्यर्षेरहम्मुनः।
बाढमित्येव ब्रह्मर्षे†† एवमेतद्भविष्यति॥ २१॥
ममैवं वचनं श्रुत्वा ब्राह्मणः स वसुन्धरे।

* प्रसादार्थमिति (ग)।
† तवैवात्रेति (ग)।
‡ तावत्तवेति (ग)।
§ स्थानं तव प्रसादाद्धि वाञ्छेयं तव संस्थितिमिति (ग)।
¶ सा मे भक्तिर्भवेद्देव्ये तव चर्च्चा जनार्द्दनेति (ग)।
‖ अन्यभक्तिर्भवेद्विष्णो इति (ग)।
** एतच्च परमं वृत्तं यन्मया हृदि वर्त्तते इति (ग)।
†† ब्रह्मेन्द्रेति (ग)।

मुहूर्त्तं ध्यानमास्थाय मामुवाच मुदान्वितः* ॥ २२ ।
एतस्य तीर्थवर्य्यस्य महिमानं त्वया प्रभो ।
शृणुवै† कथ्यमानन्तु वद लोकोपकारक ॥ २३ ।
अन्यानि यानि तीर्थानि एतत्क्षेत्राश्रितानि तु ।
तान्यपि श्रोतुमिच्छामि कथ्यमानानि च त्वया‡ ॥ २४
शृणु तत्त्वेन मे ब्रह्मन् यन्मान्त्वं परिपृच्छसि ।
तीर्थे कुब्जाम्रके पुण्ये मम लोके सुखावहे ॥ २५ ।
तीर्थन्तु कुमुदाकारं तस्मिन्कुब्जाम्रके स्थितम् ।
स्नानमात्रेण सुश्रोणि स्वर्गं प्राप्नोति मानवः ॥ २६ ।
कौमुदस्य तु मासस्य तथा मार्गशिरस्य§ च ।
वैशाखस्यैव मासस्य कृत्वा कर्म्म सुदुष्करम् ॥ २७ ।
यो वै परित्यजेत्प्राणान्स्त्री पुमान्वा नपुंसकः ।
निष्कलां लभते सिद्धिं मम लोकं स गच्छति ॥ २८ ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तीर्थं मानसमित्येव विख्यातं मम सुन्दरि ॥ २९ ।
यस्मिन् स्नात्वा विशालाक्षि गच्छते‖ नन्दनं वनम् ।

* प्रत्युवाच द्विजोत्तम इति (ग) ।

† शृणवानीति साधु ।

‡ (ग) पुस्तके २३।२४ श्लोकौ न स्तः ।

§ मार्गशिरस इति साधु ।

¶ यत्र तत्र विमोचन इति (ग) ।

‖ गच्छतीति साधु ।

दिव्यं वर्षसहस्रं वै मोदते चाप्सरैः* सह ॥ ३० ।
पूर्णे वर्षसहस्रे तु जायते विपुले कुले ।
द्रव्यमान्गुणवांश्चैव जायते तत्र मानवः ॥ ३१ ।
तत्राथ मुञ्चते† प्राणान् कौमुदस्य तु द्वादशी ।
पुष्कलां लभते सिद्धिं मम लोकञ्च गच्छति ॥ ३२ ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
मायातीर्थमिदं ख्यातं येन मायां विजानते‡ ॥ ३३ ।
तस्मिन् कृतोदको ब्रह्मन्मायातीर्थे महायशाः ।
दशवर्षसहस्राणि मद्भक्तो जायते नरः ॥ ३४ ।
लभते परमां पुष्टिं कुवेरभवनं यथा§ ।
एकं सहस्रं वर्षाणां स्वच्छन्दगमनात्त्वयम् ॥ ३५ ।
अथवा म्रियते तत्र मायातीर्थे यशस्विनी ।
मायायोगी ततो भूत्वा मम लोकाय गच्छति ॥ ३६ ।
अन्यच्च ते¶ प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तीर्थं सर्व्वात्मकं नाम सर्व्वतीर्थगुणान्वितम्॥ ॥ ३७ ।
यस्तत्र स्नायते कश्चिद्वैशाखस्य तु द्वादशीम् ।

* अप्सरोभिरिति साधु ।

† मुञ्चतीति साधु ।

‡ विजानीते इति साधु ।

§ तथेति (क), (ख) ।

¶ पुनरन्यदिति (ग) ।

॥ सर्व्वधर्म्मगुणान्वितमिति (ग) ।

निष्कलं लभते स्वर्गं सहस्रं दश पञ्च च ॥ ३८ ।
अथात्र मुञ्चते प्राणांस्तीर्थे सार्षपके तथा ।
सर्व्वसङ्गं परित्यज्य मम लोकञ्च* गच्छति ॥ ३९ ।
पुनरन्यत्प्रवक्ष्यामि शृणुष्व† शुभलोचने ।
तीर्थं पूर्णमुखं नाम तत्र जानाति कश्चन‡ ॥ ४० ।
तत्र सर्व्वा भवेद्गङ्गा शीतलं जायते जलम् ।
यत्र चोष्णं भवत्यम्बु§ ज्ञेयं पूर्णमुखं तथा ॥ ४१ ।
स्नातोऽ¶ गच्छति सुश्रोणि सोमलोके महीयते ।
पश्यते तु तदा सोमं सहस्रं दश पञ्च च ॥ ४२ ।
ततः स्वर्गात्परिभ्रष्टो ब्राह्मणश्चैव जायते ।
मद्भक्तः शुचिमान्दक्षः सर्व्वकर्म्मगुणान्वितः ॥ ४३ ।
अथवा म्रियते तत्र मासि मार्गशिरे‖ तथा ।
शुक्लपक्षे च द्वादश्यां मम लोकञ्च गच्छति ॥ ४४ ।
तत्र मां पश्यते नित्यं दीप्तिमन्तं चतुर्भुजम् ।
न जन्म विद्यते तस्य मरणञ्च कदाचन ॥ ४५ ।

* लोकायेति (ग) ।
† शृणु मे इति (ग) ।
‡ तत्तु कश्च न जानत इति (ग)
§ तपत्यम्बु इति (ग) ।
¶ स्नात्वेति (ग) ।
‖ मार्गशिरसीति साधु ।

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
अनन्यमानसोभूत्वा भक्तोभागवतो मम ॥ ४६ ।
तस्मिंस्तीर्थे तु यः स्नाति* कदाचिदपि मानवः।
दशवर्षसहस्राणि मोदते ह्यमरालये ॥ ४७ ।
ततः स्वर्गात्परिभ्रष्टस्तत्तीर्थस्य प्रभावतः† ।
द्रव्यवान् गुणवांश्चैव मद्भक्तश्चैव जायते ॥ ४८ ।
वैशाखस्य तु मासस्य शुक्लपक्षस्य द्वादशी।
यदि मुञ्चेत्स्वकं देहं कृत्वा कर्म्म सुदुष्करम् ॥ ४९ ।
न जन्म मरणं तस्य न ग्लानिर्न च वै भयम्।
सर्व्वसङ्गविनिर्मुक्तो मम लोकाय गच्छति ॥ ५० ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
तीर्थं करवीरकं नाम सर्व्वलोक‡सुखावहम् ॥ ५१ ।
तस्य चिह्नं प्रवक्ष्यामि येन ज्ञापयते§ शुभे।
पुरुषो ज्ञानवांस्तावन्मम भक्तिविनिश्चितः¶ ॥ ५२ ।
माघमासे तु सुश्रोणि शुक्लपक्षे तु द्वादशी।
पुष्पिते करवीरे वै मध्याह्ने तु न संशयः ॥ ५३ ।
तस्मिन् कृतोदकस्तीर्थे स्वच्छन्दगमनालयः।

---

* यस्तु स्नाति तत्र तीर्थे इति (ग)।

† तस्य तीर्थस्य यत्फलमिति (ग)।

‡ मम लोकेति (ग)।

§ ज्ञापयतीति साधु।

¶ एष श्लोकः (ग) पुस्तके नास्ति।

भ्रमेद्विमानमारूढ़ो सहस्रावरीनर्त्तितः ॥ ५४ ।
तत्राथ म्रियते भूमे माघमासस्य* द्वादशीम् ।
ब्रह्माणं माञ्च पश्येत पश्यति† च वृषध्वजम् ॥ ५५ ।
पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तस्य ब्राह्मणमुख्यस्य पूर्व्वं यत्कथितं मया ।
तस्मिन् कुब्जाम्रके भद्रे स्थानन्तु मम रोचते ॥ ५६ ।
पुण्डरीक इति ख्यातं तीर्थञ्चैव महत्फलम् ।
तस्य चिह्नं प्रवक्ष्यामि तच्छृणुष्व शुचिस्मिते‡ ॥ ५७ ।
तस्य तीर्थस्य सुश्रोणि मध्याह्ने द्वादशीदिने ।
रथचक्रप्रमाणो वै चरति तत्र कच्छपः§ ॥ ५८ ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
स्नात्वा प्राप्नोति सुश्रोणि फलं तत्र महागुणम् ॥ ५९ ।
पुण्डरीकस्य यज्ञस्य यजमानस्य यत्फलम् ।
प्राप्नोति वसुधे तत्र एवमेव न संशयः¶ ॥ ६० ।
अथवा म्रियते तत्र लब्धसंज्ञो महायशाः ।
दशानां पुण्डरीकाणां फलं प्राप्नोति मानवः ॥ ६१ ।

---

* माघमासे तु इति (ग) ।

† पश्येत् पश्यतीति साधु ।

‡ वसुन्धरे इति (ग) ।

§ एष श्लोकः (ग) पुस्तके नास्ति । तत्र केवलं तस्य तीर्थस्य सुश्रोणि फलं महागुण-मिति पाठो वर्त्तते ।

¶ एवमेतन्न संशय इति (ग) ।

भुक्त्वा यज्ञफलं तत्र जातिशूद्रो महातपाः ।
सिद्धश्च लभते नित्यं मम लोकाय गच्छति ॥ ६२ ॥
अन्यच्च ते प्रवक्ष्यामि प्रिये तद्वै शृणुष्व* मे ।
अग्नितीर्थमिति ख्यातं सिद्धं कुब्जाम्रके स्थितम् ।
यद्वै प्रज्ञायते† देवि द्वादश्यां पापवर्ज्जितैः ॥ ६३ ॥
कौमुदस्य तु मासस्य मासो मार्गशिरस्य च‡ ।
आषाढस्य च मासस्य शुक्लपक्षस्य द्वादशीम्§ ॥ ६४ ॥
यश्चैव माधवे मासि समये हृदि वर्त्तते ।
तस्मान्तु शुक्लद्वादश्यां तीर्थे तिष्ठति यत्नतः ॥ ६५ ॥
तस्य चिह्नं प्रवक्ष्यामि शृणुष्व हि वसुन्धरे¶ ।
येन चिह्नेन विज्ञेयं तीर्थं तच्चैव मामकम् ।
एकाग्रन्तु मनः कृत्वा तच्छृणुष्व वसुन्धरे‖ ॥ ६६ ॥
मुक्त्वा भागवताञ्छूद्रान्मम संहितापाठकान्** ।
न हि कश्चिद्विजानाति शास्त्रं मम न यश्च वै†† ॥ ६७ ॥
फलं तस्य प्रवक्ष्यामि मृतोऽपि स्नातकोऽपि वा ।

* शृणोह मे इति (ग) ।

† पुनः प्रजायते चैव द्वादशीः पश्य माधवि इति (ग) ।

‡ मार्गशिरस इति साधु ।

§ एष श्लोकः (ग) पुस्तके नास्ति ।

¶ देवि तत्त्वेन ज्ञायतामिति (क), (ग) ।

‖ एतदर्द्धं (ग) पुस्तके नास्ति ।

** मम मद्विजयाजकानिति (ग) ।

†† यस्तु शास्त्रं न जानातीति (ग) । [illegible]

एकचित्तं समाधाय तच्छृणुष्व वसुन्धरे* ॥ ६८ ।
अग्नितीर्थेषु स्नातो वै तस्मिन् कुब्जाम्रकेषु च ।
अग्नितीर्थं महाभागे दीप्तिमन्तं सवैष्णवम् ॥ ६९ ।
सप्त कृत्वाग्निमेधानां यत्फलं भवति प्रिये ।
प्राप्नोति तन्महाभागे स्नानमात्रान्न संशयः ॥ ७० ।
अथवा म्रियते तत्र एकैकान्द्वादशीकृतान् ।
स्थित्वा विंशत्यहोरात्रान् मम लोकाय गच्छति ॥ ७१ ।
तीर्थस्य तस्य वक्ष्यामि चिह्नानि शृणु सुन्दरि ।
येन विज्ञायते प्राज्ञै†र्मम भक्तं सुखावहम् ॥ ७२ ।
उष्णं भवति हेमन्ते वसुधे तज्जलन्तथा ।
उष्णकाले भवेच्छीतमेवं चिह्नन्तु तद्भवेत् ॥ ७३ ।
एष वह्निर्महाभागे‡ तीर्थमाग्नेयमुत्तरे ।
तरन्ति मानवा येन घोरं संसारसागरम् ॥ ७४ ।
अन्यच्च ते प्रवक्ष्यामि देवि कुब्जाम्रके महत्§ ।
वायव्यमिति विख्यातं तीर्थं धर्म्मादिभिः स्मृतम् ॥ ७५ ।
तस्मिंस्तीर्थे तु यः स्नातः कृतनित्योदकक्रियः¶ ।
वाजपेयस्य यज्ञस्य फलं प्राप्नोति निष्कलम् ॥ ७६ ।

* तच्छृणोहि वसुन्धरे इति (ग) ।

† विज्ञानिति (ग) ।

‡ एवं चिह्नं महाभागे इति (ग) ।

§ ह्यहमिति (ग) ।

¶ कृतोदककृताह्निक इति (ग) ।

अथवा म्रियते तत्र वायुतीर्थे महाह्रदे।
दिनानि दश पञ्चैतत्कृतमेव हि मामकम्॥ ७७।
जन्म वा मरणं वापि भूमौ नैव पुनर्भवेत्*।
जायते च चतुर्बाहुर्मम लोकप्रतिष्ठितः॥ ७८।
तस्य चिह्नं प्रवक्ष्यामि वायुतीर्थस्य सुन्दरि।
येन चिह्नेन विज्ञेयं तीर्थं तच्च महत्तरम्†॥ ७९।
अश्वत्थवृक्षपत्राणि चलन्ति नित्यशो वने।
चतुर्विंशतिर्द्वादश्यां येन विज्ञायते खलु‡॥ ८०।
पुनरन्यत्प्रवक्ष्यामि तीर्थं कुब्जाम्रके धरे§।
शक्रतीर्थमिति ख्यातं सर्व्वसंसारमोक्षणम्¶॥ ८१।
तस्मिंस्तीर्थे वरारोहे शक्रतीर्थे वसुन्धरे‖।
शक्रस्य वसते लोके वज्रहस्तो न संशयः॥ ८२।
अथवा म्रियते तत्र** शक्रतीर्थे महातपे।
उपोष्य दशरात्राणि†† मम लोकाय गच्छति॥ ८३।

---

* न तस्य मरणं भूमौ जन्म तस्य न विद्यते इति (ग)।

† शुभैर्भागवतैस्तथेति (ग)।

‡ विभो इति (ग)।

§ भुवीति (ग)।

¶ मोचनमिति (ग)।

‖ महायशा इति (ग)।

** देवीति (ग)।

†† दशरात्रानिति साधु।

तस्य चिह्नं प्रवक्ष्यामि येन विज्ञायते ततः* ।
एकचित्तं समाधाय शृणु सुन्दरि तत्त्वतः ॥ ८४ ॥
पञ्च वृक्षास्तु तिष्ठन्ति तद्दक्षिणदिशि क्षिते ।
शक्रतीर्थस्य चिह्नन्ते वसुन्धे परिकीर्त्तितम्† ॥ ८५ ॥
अन्यच्च तीर्थं वक्ष्यामि तस्मिन् कुब्जाम्रके परम्‡ ।
वरुणेन तपस्तप्तं सहस्रं पञ्च सप्त च ॥ ८६ ॥
तत्र स्नातस्य वक्ष्यामि जायते तत्र यत्फलम् ।
यत्प्राप्नोति मृतो वापि पुरुषः संशितव्रतः ॥ ८७ ॥
अष्ट वर्षसहस्राणि गत्वा वै वरुणालयम् ।
स्वच्छन्दगमनो भूत्वा एवमेव न संशयः ॥ ८८ ॥
अथ वै म्रियते तत्र विंशवर्षोषितो नरः§ ।
सर्व्वसङ्गं परित्यज्य मम लोकाय गच्छति ॥ ८९ ॥
तस्य चिह्नं प्रवक्ष्यामि तच्छृणुष्व¶ वसुन्धरे ।
तत्र धारा पतत्येका एकरूपा सदा भवेत् ।
न वर्द्धते च वर्षासु घर्म्मे न ह्रसते|| पुनः ॥ ९० ॥

* नर इति (ग) ।

† पञ्चवृक्षास्तत्रस्य तीर्थस्य दक्षिणे स्थिताः ।
भूमे येन सविज्ञेयं शक्रतीर्थमिति स्मृतम् ॥ इति (ग)

‡ पुनरन्यत् प्रवक्ष्यामि तीर्थमेव वसुन्धरे इति (ग) ।

§ चिररात्रोषितोनरः इति (ग) ।

¶ तच्छृणोहीति (ग) ।

|| ह्रसतीति साधु ।

सप्तसामुद्रकं नाम तस्मिन् कुब्जाम्रके परम्*।
तस्मिन् कृतोदको भूमि नरो धर्म्मपरायणः।
त्रयाणामश्वमेधानां फलं प्राप्नोति मानवः॥ ९१।
शीघ्रं गच्छति वै स्वर्गं सहस्रं दश पञ्च च।
ततः स्वर्गात्परिभ्रष्टः कुलवाञ्जायते द्विजः।
वेदवेदाङ्गकुशलः सोमपश्चैव जायते॥ ९२।
अथात्र मुञ्चते प्राणान्मुक्तसङ्गो जितेन्द्रियः।
उषित्वा सप्तरात्रं वै मम लोकाय गच्छति॥ ९३।
तस्य चिह्नं प्रवक्ष्यामि तीर्थस्य शृणु सुन्दरि।
वैशाखशुक्लद्वादश्यां विभूतिस्तत्र या भवेत्।
विमला गाङ्गता यत्र गङ्गाजलविमिश्रितम्॥ ९४।
तस्मिन्तीर्थे तदेवैतत्क्षीरवर्णं पुनर्भवेत्।
पुनश्च पीतवर्णाभा पुनारक्तः कदा भवेत्॥ ९५।
पुनर्मरकताभासं पुनर्मुक्तासमप्रभम्†।
एतैश्चिह्नैस्तु विज्ञेयन्तत्तीर्थं विदितात्मभिः॥ ९६।
अन्यच्च ते प्रवक्ष्यामि तीर्थं कुब्जाम्रके महत्‡।
तीर्थं मानसरो नाम सर्व्वभागवतप्रियम्§॥ ९७।

* स्थितमिति (ग)।

† वर्णोमरकतीभाति पुनारक्तसमप्रभ इति (ग)।

‡ तस्मिन् कुब्जामके भुवीति (ग)।

§ सर्व्ववैष्णवकं शुभमिति (ग)।

तस्मिन् स्नातो वरारोहे गच्छते* मानसं सरः† ।
देवान् पश्यति वै सर्व्वान् देवमस्मकरणान् ॥ ९८ ॥
अथ तत्र मृतो भूमि त्रिंशद्वर्षोषितो नरः ।
सर्व्वसङ्गविनिर्मुक्तो मम लोकाय गच्छति ॥ ९९ ॥
तस्य चिह्नं प्रवक्ष्यामि येन तज्ज्ञायते‡ नरैः ।
पञ्चाशत्क्रोशविततं मानुषाणां दुरासदम् ॥ १०० ॥
एतत्तु भूमि विज्ञेयं यथैतन्मानसं सरः ।
शुद्धैर्भागवतैर्वीथं मम कर्म्मसु निष्ठितैः§ ॥ १०१ ॥
एतत्तीर्थं महाभागे तस्मिन् कुब्जाम्रके स्मृतम् ।
सिद्धिकामस्य विप्रस्य रैभ्यस्य¶ परिकीर्त्तितम् ॥ १०२ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तत्र कुब्जाम्रके वृत्तं पुराश्चर्य्यं महाद्भुतम्|| ॥ १०३ ॥
मम निर्माल्यपार्श्वे वै व्याली तिष्ठति निर्भया** ।
गन्धमाल्योपहार्य्याणि भक्षयन्ती यदृच्छया ॥ १०४ ॥
कस्यचित्त्वथ कालस्य नकुलस्तत्र चागतः ।

* गच्छतीति साधु ।
† तस्मिंस्तीर्थे वरारोहे गच्छेन्मानसमन्दरे इति (ग) ।
‡ विज्ञायते इति (ग) ।
§ शुभैरिति (ग) ।
¶ भक्तस्येति (ग) ।
|| महीजममिति (ग) ।
** वसति निर्भयेति (ग) ।

पश्यते च ततस्तत्र रममाणां यदृच्छया ॥ १०५ ।
नकुलेन सह व्याल्या तदा युद्धमभूच्च तत्* ।
सम्पूर्णे ते तु मध्याह्ने माघमासे तु द्वादशीम् ॥ १०६ ।
तया स दृष्टो नकुलो नागाय मम मन्दिरे ।
तेनापि विषदिग्धेन व्याली शीघ्रं निपातिता ॥ १०७ ।
उभौ चान्योऽन्ययुद्धेन तदा पञ्चत्वमागतौ ।
व्याली प्राग्ज्योतिषे जाता राजपुत्री यशस्विनी ॥ १०८ ।
नकुलोऽजायत तदा कोशलेषु जनाधिपः ।
रूपवान् गुणवान्देवि सर्व्वशास्त्रकलान्वितः ॥ १०९ ।
तौ तु दीर्घेण कालेन सौख्येन परिरञ्जितौ ।
अवर्द्धतां यथाकालं शुक्लपक्षे यथा शशी ॥ ११० ।
स कन्या नकुलं दृष्ट्वा सद्यो हन्तुं तथेच्छति ।
व्यालीं दृष्ट्वा राजपुत्रः सहसा हन्तुमिच्छति ॥ १११ ।
अथ तस्यास्तु कालेन कोशलाधिपतिस्तथा ।
पाणिं जग्राह विधिवन्मत्प्रसादाद्वसुन्धरे† ॥ ११२ ।
कोशलाधिपतेश्चापि राज्ञः प्राग्ज्योतिषस्य च ।
महोत्सवेन संवृत्तः सम्बन्धो मत्प्रसादतः ॥ ११३ ।
दृढ़प्रीतिस्तयोर्जाता यथा च जतुकाष्ठयोः ।
रमतो‡ धूमकेतोश्च वह्नेश्चैव यथा तथा ॥ ११४ ।

* प्रावर्त्ततेति (ग) ।

† मत्प्रसादेन वै देवि सम्बन्धश्चैव जायते इति इति (ग) । तत्र परश्लोको नास्ति ।

‡ रममाणस्येति साधु ।

यथा शची च शक्रस्य रमन्तौ* नन्दने वने ।
एवञ्च दीर्घकालं हि तयोः प्रीतिर्न हीयते ॥ ११५ ।
एवन्तौ विहरन्तौ तु तस्मिन्नुपवने ततः ।
वर्त्तेते च यथान्यायं वेलामिव महोदधिः ॥ ११६ ।
एवं तयोर्गतः कालो वर्षाणां सप्तसप्ततिः ।
न बुध्यतोस्तथात्मानं मम मायाविमोहितौ ॥ ११७ ।
एवन्तौ विहरन्तौ तु तस्मिन्नुपवने ततः ।
दृष्ट्वा व्यालीं राजपुत्रस्ततो हन्तुं व्यवस्थितः ॥ ११८ ।
स तया वार्य्यमाणोऽपि व्यालीं हन्तुं महोद्यतः ।
गरुड़ो हन्ति नागान्वै दृष्ट्वैव विनतात्मजः ॥ ११९ ।
एवं स वार्य्यमाणोऽपि व्यालीं हन्ति स्म दारुणम् ।
तदा सा रुषिता देवी न किञ्चिदपि भाषते।† ॥ १२० ।
ततस्तस्यान्तु वेलायां राजपुत्रग्रतो बिलात्‡ ।
नकुलस्तु विनिर्गत्य§ आहारार्थं समुद्यतः ॥ १२१ ।
दृष्ट्वा तु राजपुत्री सा नकुलं सर्पकाङ्क्षिणम् ।
हृष्टं चङ्क्रममाणं सा नकुलं शुभदर्शनम् ॥ १२२ ।

* रममाणाविति साधु ।

† सा तथा क्षुभ्यमाणा च शीघ्रमेव निपातिता ।
रुषिता राजपुत्री सा न किञ्चिदपि भाषते ॥ इति (ग) ।

‡ राजपुत्र्याः समग्रत इति (ग) ।

§ बिलान्निष्क्रम्य नकुल इति (ग) ।

क्रोधात्तं नकुलश्चापि विनिहन्तुं प्रचक्रमे*।
वारिता राजपुत्रेण सुता प्राग्ज्योतिषस्य वै॥ १२३॥
नकुलं घातितं दृष्ट्वा मङ्गल्यं शुभदर्शनम्।
कुपितो राजपुत्रो वै राजपुत्रीमभाषत॥ १२४॥
स्त्रीणां भर्त्ता सदा मान्यस्तं मामुल्लङ्घ्य निष्ठुरम्†।
दर्शनीयः प्रियो राज्ञां मङ्गल्यः शुभदर्शनः।
घातितो नकुलः कस्मान्मया वै वार्य्यमाणया॥ १२५॥
इति भर्त्तृवचः श्रुत्वा प्राग्ज्योतिषसुता तदा।
प्रत्युवाच ततः क्रोधात्कोशलाधिपतेः सुतम्‡॥ १२६॥
असकृद्वार्य्यमाणोऽपि व्यालीं घातितवान् यतः।
तस्मान्मयापि नकुलो घातितः सर्पघातकः§॥ १२७॥
राजपुत्र्या वचः श्रुत्वा राजपुत्रस्ततोऽब्रवीत्।
वाग्भिः स कटुकाभिश्च तर्ज्जयन्निव¶ तां धरे॥ १२८॥
सर्पस्तीव्रविषो भद्रे तीक्ष्णदंष्ट्रो दुरासदः‖।

* क्रोधो वै जायते तस्या नकुलं हन्तुमुद्यतेति (ग)।

† स्त्रीणां भर्त्ता चैव मान्यः सदैव तु विधीयत इति (ग)।

‡ एष श्लोकः (ग) पुस्तके नास्ति।

§ मया वै धार्य्यमाणेन त्वया व्यालिर्निपातिता।
किन्तेऽपराधं राजेन्द्र अहिना विलवासिना।
यत्त्वया वार्य्यमाणेन शीघ्रमेव निपातिता॥ इति (ग)।

¶ स कटुकं प्रोक्तं मम पूर्व्वं कदाचनेति (ग)।

‖ महावन इति (ग)।

दृश्यते मानुषं दुष्टो येनाऽसौ म्रियते जनैः* ।
तस्मान्मया हतो भद्रेऽहितकारी विषोद्धतः ॥ १२९ ।
प्रजापाला वयं भद्रे येऽपि चैवापथे† स्थिताः ।
सर्व्वांस्तान्दण्डयामो हि तीव्रदण्डैर्यथोचितम्‡ ॥ १३० ।
साधून्ये चापि हिंसन्ति ह्यपराधविवर्ज्जितान् ।
स्त्रियश्चैवापि हिंसन्ति कामकाराश्च ये नराः ॥ १३१ ।
ते दण्ड्याश्चैव वध्याश्च राजधर्म्मोयथार्हतः§ ।
मयापि राजधर्म्मो वै कर्त्तव्यो राजकर्म्मणि ॥ १३२ ।
नकुलेनापराद्धं किं तद्वद त्वं ममापि हि¶ ।
दर्शनीयः सुरूपश्च राज्ञां योग्यो गृहेषु च ।
मङ्गल्यश्च पवित्रश्च नकुलः किं हतस्त्वया‖ ॥ १३३ ।
वार्य्यमाणोऽपि हि मया घातितो नकुलस्ततः** ।
ततो मम न भार्य्यासि न चाहन्ते पतिः स्थितः ।
किञ्च तेन न हन्मि त्वां स्त्रियोऽवध्याः सदैव यत् ॥ १३४ ।

* दृश्यते मानुषं शीघ्रं तेन सर्पो मया हत इति (ग) ।

† ये केचिदपथे इति (ग) ।

‡ सर्व्वास्ते रक्षितव्या वै राजशास्त्रे यथा श्रुतिरिति (ग) ।

§ श्वापदं ये तु हिंसन्ति मानुषांस्तेऽपि कामतः ।
सर्पश्च येऽपि हिंसन्ति तेऽपि वध्या न संशयः ॥ इति (ग) ।

¶ ते आख्याहि यदि किं कृतमिति (ग) ।

‖ न कुत्रापि पातितः इति (ग) ।

** मम चापि न भार्य्यासि अहञ्चास्मि पतिर्न चेति (ग) ।

इत्युक्ता राजपुत्रस्तां निवृत्त्य नगरं प्रति ।
एवं क्रोधं समादाय नष्टस्नेहौ परस्परम् ॥ १३५ ।
एवं गच्छति काले वै कौशलायां जनाधिपः ।
शृणोति तां कथां सर्व्वां वधं नकुलसर्पयोः ॥ १३६ ।
एवं श्रुत्वा यथान्यायं सक्रोधौ तावुभावपि ।
ततः कञ्चुकिनश्चैव स्वामात्यानग्रतः स्थितान् ।
पुत्रं मम वधूञ्चैव समानयत सत्वरम् ॥ १३७ ।
ततो वै राजभृत्यास्तु राज्ञो वै प्रियकारिणः ।
राजाज्ञां तां पुरस्कृत्य वधूं पुत्रञ्च सादरम् ।
आनीय दर्शयामासुर्यत्र राजा स्वयं स्थितः ॥ १३८ ।
वधूपुत्रौ ततो दृष्ट्वा राजा वचनमब्रवीत्* ।
पुत्र कुत्र गतं प्रेम युवयोस्तत्समाहितम् ।
स्नेहश्च क्व गतः पूर्व्वो विरुद्धाचरणौ कथम् ॥ १३९ ।
आसीद्या युवयोः प्रीतिरन्योऽन्यं जतुकाष्ठवत् ।
दर्पणे प्रतिविम्बञ्च दृश्यते यद्वदात्मनः ।
सम्मुखत्वेन च सदा तद्वद्वां याऽभवत्पुरा† ॥ १४० ।

---

* वधूपत्नी समानीय राजा वचनमब्रवीदिति (ग) ।

† अत्र (ग) पुस्तके पाठभेदो यथा –

कुतः पुत्र गतं प्रेम वध्वर्थे क्व गतं तव ।
वधु नु मे कष्टं पुत्रप्रीतिस्तव कुतोगता ॥
दर्पणेष्विव पश्यामि प्रतिविम्बं यथात्मनि ।
निष्कषा वै सापराधेन कदाचिदपि पुत्रक ॥ इति ।

दत्ता सुशीला धर्म्मिष्ठा नैनां त्यक्तुन्त्वमर्हसि* ।
अप्रियं नोक्तपूर्व्वन्तु यया परिजनेऽपि च† ।
मिष्टान्नसाधने दत्ता त्वया त्यक्तुं न युज्यते ॥ १४१ ।
धनसर्व्वस्तु ते धर्म्मः स च योषित्कृतः खलु‡ ।
अहो सत्यं जनानाञ्च स तु स्त्रीभ्यः सुतः कुलम् ॥ १४२ ।
ततः पितुर्वचः श्रुत्वा राजपुत्रो यशस्विनी ।
उभौ तच्चरणौ गृह्य पितरं प्रत्यभाषत ॥ १४३ ।
दोषो न विद्यते तात स्नुषायां कोऽपि कुत्रचित् ।
किं मे तु वार्य्यमाणापि नकुलं मेऽग्रतोऽहनत्§ ॥ १४४ ।
ततोऽभवन्मम क्रोधो दृष्ट्वा पातितमग्रतः¶ ।
क्रोधासक्तेन तु मया यथेयं परिभाषिता ॥ १४५ ।
मम भार्य्या न भवती न चाहन्तव वै पतिः ।
एतच्च कारणं नान्यत्किञ्चिद्राजन्न संशयः‖ ॥ १४६ ।
ततः पतिवचः श्रुत्वा प्राग्ज्योतिषकुलोद्भवा ।
शिरसा प्रणतिङ्कृत्वा इदं वचनमब्रवीत्** ॥ १४७ ।

---

* न च वै त्यक्तुमर्हसीति (ग) ।

† परिजने जने इति (ग) ।

‡ धर्म्मो यो भिन्नसंशय इति (ग) ।

§ वार्य्यमाणा मया राजन्नकुलश्चाग्रतोहत इति (ग) ।

¶ ततोमे जायते मन्युर्दृष्ट्वा न कुलपातनमिति (ग) ।

‖ एष श्लोको (ग) पुस्तके नास्ति ।

** वाक्यञ्चेदमुवाच हेति (ग) ।

अपराधविहीनस्य भीतस्य* भुजगस्तथा।
शतशो वार्य्यमाणेन शीघ्रमेव निपातितः॥ १४८।
ततः सर्पवधं दृष्ट्वा क्रोधसन्तप्तमानसा† ।
नाभाषितः किमपि नो मयैतद्‌वधेहि वै‡॥ १४९।
वधूपुत्रवचः श्रुत्वा कोशलानां जनेश्वरः।
उवाच मधुरं वाक्यमुभयोर्जनसंसदि§॥ १५०।
अनेन निहतः सर्पस्त्वया च नकुलो हतः।
कथं वा क्रियते क्रोधस्तन्मे वक्तुमिहार्हथ¶॥ १५१।
हते तु नकुले पुत्र किन्ते क्रोधस्य कारणम्‖।
राजपुत्रि हते सर्पे किं वा ते मन्युकारणम्**॥ १५२।
ततः पितुर्वचः श्रुत्वा कोशलेश्वरनन्दनः।
उवाच मधुरं वाक्यं राजपुत्रो महायशाः॥ १५३।
एतेन किं वा प्रश्नेन नैतत्प्रष्टुं त्वमर्हसि।
एनां पृच्छ महाराज ज्ञास्यते कायचेष्टितम्॥ १५४।

* अनपराधीभीतस्य व्रजश्चेति (ग)।

† क्रोधसन्तप्तदर्शनेति (ग)।

‡ अनेन चाहं संवादं किञ्चिदेव प्रभाषितमिति (ग)।

§ यद्धितं शुभमिति (ग)।

¶ नकुलं हतमित्याह यदि सर्पो निपातितः।
किमिदं क्रियते क्रोधमेतन्मे वक्तुमर्हसीति (ग)।

‖ कस्ते मन्युर्भवेत्तत इति (ग)।

** कस्ते मन्युर्भवेदिहेति (ग)।

पुत्रस्य वचनं श्रुत्वा कोशलानां जनेश्वरः ।
उवाच मधुरं वाक्यं धर्म्मसंयोग्यसाधनम् ॥ १५५ ॥
ब्रूहि पुत्र यथान्यायं यत्ते मनसि वर्त्तते ।
प्रीतिविच्छेदकारणमुभयोरिह कथ्यताम् ॥ १५६ ॥
जाताः सम्बन्धिताः पुत्राः सर्व्वकामेषु निष्ठिताः ।
पितृपृष्टन्तु यद्गुह्यं गोपयन्ति सुताधमाः* ॥ १५७ ॥
सत्यं वा यदि वाऽसत्यं† न ब्रुवन्ति कदाचन ।
पतन्ति नरके घोरे रौरवे तप्तबालुके ॥ १५८ ॥
पित्रा पृष्टन्तु ये ब्रूयुः शुभं वाशुभमेव वा‡ ।
दिव्याञ्च ते गतिं यान्ति या गतिः सत्यवादिनाम् ॥ १५९ ॥
अवश्यमेव तद्वाक्यं वक्तव्यं मम सान्नधौ ।
यस्य दोषेण ते पुत्र नष्टा प्रीतिर्गुणाकरा ॥ १६० ॥
ततः पितुर्वचः श्रुत्वा कोशलानन्दिवर्द्धनः ।
उवाच श्लक्ष्णया वाचा तत्रैव जनसंसदि ॥ १६१ ॥
गच्छत्वेष§ जनः सर्व्वो यथान्यायं गृहाणि वै ।
प्रातस्त्वां कथयिष्यामि यद्वक्तव्यमवश्यकम्¶ ॥ १६२ ॥

* गोपयन्ति नराधमा इति (ग) ।
† सत्यञ्च यदसत्यञ्चेति (ग) ।
‡ पित्रा पृष्टन्तु ये सत्यं वदन्ते वा शुभाशुभमिति (ग) ।
§ गच्छत्वेवेति (ग) ।
¶ कल्यं ते कथयिष्यामि एवं यदि च रोचते इति (ग) ।

प्रभातायान्तु शर्व्वर्य्यां दुन्दुभीनां निनादनैः।
विबुद्धः कोशलश्रेष्ठः सूतमागधवन्दिभिः॥ १६३।
तदा* कमलपत्राक्षो राजपुत्रो महायशाः।
स्नात्वा च मङ्गलैर्युक्तो राजद्वारमुपागतः† ॥ १६४।
ततस्तु कञ्चुकी गत्वा राज्ञे चैव न्यवेदयत्।
द्वारि तिष्ठति पुत्रस्ते तव दर्शनलालसः॥ १६५।
कञ्चुकेस्तु‡ वचः श्रुत्वा कोशलानां जनेश्वरः§।
शीघ्रं प्रवेशय सुतं कञ्चुकेण¶ साधुवाहिनम्।
इत्युक्तो राजपुत्रन्तु प्रावेशयदनुज्ञया॥ १६६।
राजपुत्रः पितुर्वेश्म प्रविश्य नियतः शुचिः।
ववन्दे चरणौ मूर्द्ध्ना निषीदेति सुतन्ततः।
तमब्रवीत्पिता जीव जयेत्युक्त्वा मुदान्वितः॥ १६७।
पितृपुत्रौ तु विज्ञेयौ जनैस्त्वेकत्र संस्थितौ।
हर्षितस्त्वान्तरो वाह्यः कृतकौतुकमङ्गलः॥ १६८।
ततः पुत्रं प्रहस्याह कुमारं स जनाधिपः।
वद पुत्र महाभाग पूर्व्वं पृष्टं मया हि यत्।
युवयोः प्रीतिविच्छेदे कारणं गोपितं हि यत्॥ १६९।

* तत इति पाठान्तरं (ग) पुस्तके दृश्यते।

† राजधानीमुपागत इति (ग)।

‡ कञ्चुकिन इति साधु।

§ नरेश्वर इति (ग) पुस्तकपाठः।

¶ कञ्चुकिनेति साधु।

ततो राजकुमारस्तं पितरं प्रत्यभाषत ।
अवश्यमेव वक्तव्यं त्वया पृष्टेन निष्फलम् ।
तद्गुह्यं हि महाराज प्रीतिविच्छेदकारकम् ॥ १७० ॥
यदीच्छसि महाराज श्रोतुं गुह्यमिदं महत् ।
आगच्छ तात कुब्जाम्रे मया सह महीपते* ॥ १७१ ॥
तत्र ते कथयिष्यामि कोशलाधिपते त्वरन्† ।
यत्त्वया पृच्छितं ह्येतद्गुह्यं पूर्व्वमनिन्दितम् ॥ १७२ ॥
ततस्तस्य वचः श्रुत्वा राजपुत्रस्य वै नृपः ।
बाढमित्येव तत्राह पुत्रप्रेम्णा समन्वितः ॥ १७३ ॥
राजपुत्रे गते सुभ्रु अमात्यानाञ्च सन्निधौ ।
उवाच मधुरं वाक्यं ये वै तत्र समागताः‡ ॥ १७४ ॥
अमात्याः शृणुतेमं मे वचनङ्कृतनिश्चयम् ।
कुब्जाम्रकं प्रति वयं गच्छामस्तस्य साधनम् ॥ १७५ ॥
शीघ्रं सम्पाद्यताञ्चैव युज्यन्तां गजवाजिनः ।
राज्ञो वचस्ते संश्रुत्य तमूचुः कृतमेव तत् ॥ १७६ ॥
इत्युक्त्वा समरात्रेण सर्व्वं सम्पाद्य साधनम् ।
गजाश्वपशुयानादिकार्षापणकधेनुकम् ॥ १७७ ॥
सुवर्णरत्नवस्त्राणि अन्नञ्चान्यदपेक्षितम् ।

* गच्छ कुब्जाम्रकं शीघ्रं तात एवं मया सहेति (ग) पाठः ।

† नृपति (ग) पुस्तके पाठः ।

‡ ये वै तत्र गताः स्थिता इति (ग) पुस्तकपाठः ।

राजानस्ते समागत्य सिद्धिमत्यूचुरीश्वरम्* ॥ १७८ ।
ततः स राजशार्दूलः पुत्रमाह वसुन्धरे ।
राज्यं शून्यं कथन्त्यक्त्वा गमिष्यामो वयं सुत ॥ १७९ ।
ततः पितुर्वचः श्रुत्वा राजपुत्रो महायशाः ।
उवाच मधुरं वाक्यं गृहीत्वा† चरणौ पितुः ॥ १८० ।
कनीयानेष मे भ्राता एकोदरसमुद्भवः‡ ।
एतस्य दीयतां राज्यं यथान्यायेन चागतम् ॥ १८१ ।
पुत्रस्य वचनं श्रुत्वा कोशलानां कुलोद्वहः§ ।
वर्त्तमानेऽपि च ज्येष्ठे कनीयान् कथमर्हति ॥ १८२ ।
ततः पितुर्वचः श्रुत्वा कोशलायाः कुलोद्भवः ।
उवाच मधुरं वाक्यं पितरन्धर्म्मकारणात् ॥ १८३ ।
अनुजानामि ते तात दीयमानां वसुन्धराम् ।
नास्य धर्म्मविलोपस्तु भुञ्जमानस्य¶ मेदिनीम् ॥ १८४ ।

* अत्र (ग) पुस्तके पाठभेदो यथा
अथ ते सप्तरात्रेण राजानं तमुवाच ह ।
सज्जानि सर्व्वद्रव्याणि किमाज्ञापयते भवान् ।
अमात्यानां वचः श्रुत्वा कोशलानामथाधिपः ।
साधु साध्विति चोक्त्वा वै अमात्यजनसंसदि ॥ इति

† निपत्य चरणाविति (ग) पुस्तकस्य पाठः ।

‡ एकोदरविनिःसृत इति (ग) पुस्तकपाठः ।

§ स राजा धर्म्मनिश्चित इति (ग) पाठः ।

¶ भुञ्जमानस्येति आर्षम्, भुञ्जत इति साधु ।

नाहङ्कुब्जाम्रकङ्गत्वा निवर्त्तिष्ये कदाचन ।
एतत्सत्यञ्च धर्म्मञ्च तात ते कथितं मया* ॥ १८५ ॥
पुत्रेण चाभ्यनुज्ञातः कनीयानभिषेचितः ।
स मुख्येनाभ्यनुज्ञातो भूमे भूपतिसत्तमः† ॥ १८६ ॥
ततो दीर्घेण कालेन स्थानं कुब्जाम्रकं गतः ।
अन्तःपुरेण सहितः‡ सर्व्वद्रव्यसमन्वितः ॥ १८७ ॥
ततस्तीर्थविधिङ्कृत्वा दत्त्वा दानानि भूरिशः ।
अन्नवस्त्रसुवर्णानि गोहस्त्यश्वभुवस्तथा ॥ १८८ ॥
ततो बहुतिथे काले व्यतीते सति धामताम् ।
ततः कदाचिद्भूपालो राजपुत्रमुपस्थितम् ।
दम्पत्योः प्रीतिविच्छेदं गुह्यन्तत्समपृच्छत ॥ १८९ ॥
स्थानं पावनकं वत्स विष्णोः पादसमाश्रयम् ।
दत्तानि धनरत्नानि जातस्तस्य विधिः परः ॥ १९० ॥
इदानीं ब्रूहि सत्यं तद्यत्कृते सुन्दरी स्नुषा ।
अदुष्टकारिणी युक्ता कुलशीलगुणान्विता ।
त्वया मिथ्यैव किन्त्यक्ता तद्गुह्यं वद पुत्रक ॥ १९१ ॥
ततः स पितरम्प्राह रात्रिर्गच्छतु सुप्यताम् ।
श्वः प्रभाते ततः सर्व्वं कथयिष्यामि तत्पुनः ॥ १९२ ॥

* तत इति (ग) पुस्तके पाठान्तरं दृश्यते ।

† भूमिपसत्तम इति (ग) पुस्तकपाठः ।

‡ अन्तःपुरसमायुक्त इति (ग) पाठः ।

ततो रात्र्यां व्यतीतायामुदिते* च दिवाकरे।
कृतोदकस्तु गङ्गायां चौमवस्त्रविभूषितः॥ १८३॥
अर्चयित्वा यथान्यायं माञ्चैव गुरुवत्सलः।
पितुः प्रदक्षिणङ्कृत्वा वाक्यमेतदुदाहरत्†॥ १८४॥
एह्येहि तात गच्छामः यस्त्वं गुह्यानि पृच्छसि‡।
शृणु तत्त्वेन मे राजन् यत्त्वया पूर्व्वंपृच्छितम्॥ १८५॥
राजपुत्रश्च वै राजा सा च पङ्कजलोचना।
गत्वा निर्म्माल्यकूटन्ते यत्तद्वृत्तं पुरातनम्॥ १८६॥
निर्म्माल्यन्तु समासाद्य राजपुत्रो महातपाः।
उभौ तौ चरणौ गृह्य पितरं प्रत्यभाषत॥ १८७॥
नकुलोऽहं महाराज वसामि कदलीतले।
ततोऽहं कालसंयुक्तः प्राप्तो निर्म्माल्यकूटकम्॥ १८८॥
ततस्त्वाशीविषा सर्पी सर्पतेऽत्र जनाधिप।
भक्षयन्ति सुगन्धानि पुष्पाणि विविधानि च॥ १८९॥
दृष्ट्वा तु तां महाव्यालीं क्रोधसंरक्तलोचनः।
अचिरेणैव कालेन तस्याङ्कं सहसा गतः॥ २००॥§
तया सह महाराज घोरं युद्धमवर्त्तत।

* ततो रजन्यां व्युष्टायामिति (ग) पुस्तकपाठः।

† वाक्यमेतदुवाच हेति (ग) पाठः।

‡ त्वं गुह्यानि यदीच्छसीति (ग) पाठः।

§ (ग) पुस्तके (१९९—२००) श्लोकौ न स्तः।

माघमासस्य द्वादश्यां तत्र कश्चिन्न पश्यति ॥ २०१ ।
युध्यमानस्य मे तत्र गातश्चैव निगूहतः ।
नासावंशे तया दष्टो भुजङ्ग्या च तदन्तरे ॥ २०२ ।
मयापि विषदिग्धेन निहता च भुजङ्गमा* ।
उभौ प्राणान्परित्यज्य उभौ पञ्चत्वमागतौ ॥ २०३ ।
मृतौ स्वकाले राजेन्द्र क्रोधमोहपरिप्लुतौ† ।
जातोऽहं तव पुत्रस्तु कोशलाधिपतेः प्रियः ॥ २०४ ।
एवं मे घातितः सर्पस्तत्क्रोधवशनिश्चयात् ।
एतद्गुह्यं मया राजन् यत्त्वया पूर्व्वपृच्छितम् ॥ २०५ ।
राजपुत्रवचः श्रुत्वा वधूर्वचनमब्रवीत् ।
अहं सर्पी महाराज पुरा निर्माल्यकूटके ॥ २०६ ।
युध्यमाना तु तेनैव नकुलेन निपातिता‡ ।
प्राग्ज्योतिषकुले जाता जाता तव वधूस्ततः§ ॥ २०७
तेन क्रोधेन नृपते मूर्च्छिता मरणस्मृति ।
घातितो नकुलश्चैतद्गुह्यं प्रोक्तं तव प्रभो ॥ २०८ ।
वधूपुत्रवचः श्रुत्वा स राजा संशितव्रतः ।
मायातीर्थं समासाद्य ततः पञ्चत्वमागतः ॥ २०९ ।

* भुजङ्गमीति पाठः (ग) पुस्तके दृश्यते ।
† क्रोधदोषपरिप्लुताविति (ग) पाठः ।
‡ अहं सर्पी महाराज नकुलेन निपातितेति (ग) पुस्तकपाठः ।
§ वधूस्तव उपागतेति (ग) पाठः ।

राजपुत्रो विशालाक्षी राजपुत्री यशस्विनी।
पौण्डरीके ततस्तीर्थे तेऽपि पञ्चत्वमागताः।
गतास्ते परमं स्थानं यत्र देवो जनार्द्दनः॥ २१०।
राजा वा राजपुत्रश्च राजपुत्री यशस्विनी।
मम चैव प्रसादेन तपसश्च बलेन च।
कृत्वा सुदुष्करं कर्म्म श्वेतद्वीपमुपागताः॥ २११।
योऽसौ परिजनो देवि कृत्वा तु सुकृतं महत्*।
सोऽपि सिद्धिं परां प्राप्तः श्वेतद्वीपमुपागतः† ॥ २१२।
एष ते कथिता देवि पुष्टिः कुब्जाम्रकस्य च।
तस्य ब्राह्मणमुख्यस्य रैभ्यस्य कथिता मया॥ २१३।
एतत्पुण्यं परञ्जप्यं चातुर्वर्ण्येन सर्व्वदा‡।
सर्व्वकर्म्मसु मुख्यञ्च एतदेव विशिष्यते§।
तेजसाञ्च महत्तेजस्तपसाञ्च महत्तपः॥ २१४।
एतन्न मूर्खमध्यन्तु पठेच्चापि कदाचन।
न पठेद्दाम्भमध्ये तु वेदवेदाङ्गनिन्दके॥ २१५।
न पठेद्गुरुविद्विष्टे न पठेच्छास्त्रदूषके।
पठेद्भागवतानाञ्च मध्ये दीक्षावतान्तथा॥ २१६।

* तवेति पाठान्तरं (ग) पुस्तके लभ्यते।

† तेऽपि सिद्धिं परां प्राप्ताः श्वेतद्वीपमुपागताः इति (ग) पाठः।

‡ एष जप्यश्च मुख्यश्च चातुर्व्वर्ण्यव्यवस्थितैरिति (ग) पाठः।

§ कार्य्याणाञ्च महाकार्य्यं क्रियाणाञ्च महाक्रियेति (ग) पाठः।

य एतत्पठते भूमे कल्यमुत्थाय मानवः ।
तारयेच्च स्वकुलजान्* दशपूर्व्वान्दशापरान् ॥ २१७

एतत्तु पठमानो वै यस्तु प्राणान्विमुञ्चति ।
चतुर्भुजश्च जायेत मल्लोकेषु प्रतिष्ठितः ॥ २१८ ।

एतत्ते कथितं भूमे स्थानं कुब्जाम्रके तथा ।
मम भक्तसुखार्थाय किमन्यत्परिपृच्छसि ॥ २१९ ।

इति वराहपुराणे भगवच्छास्त्रे कुब्जाम्रकमाहात्म्ये रैभ्यानुग्रहणं
नाम षड्विंशत्यधिकशततमोऽध्यायः ।

## सप्तविंशत्यधिकशततमोऽध्यायः ।

सूत उवाच ।

एवं धर्म्मांस्ततः श्रुत्वा बहुमोक्षार्थकारणात् ।
प्रत्युवाच ततो भूमिर्लोकनाथं जनार्द्दनम् ॥ १ ।

अहो प्रभावः क्षेत्रस्य* कथ्यमानोऽतिपुष्कलम् ।

* पठंस्तारयते देवीति (ग) पुस्तकस्य पाठः ।



* धर्म्मस्येति (ग) पुस्तकपाठः ।

अहं भारभराक्रान्ता लघुर्जातास्मि धावती* ॥ २ ।
विमोहा च विशुद्धा च शृणुमाणा† त्विमां प्रभो ।
अहं लोकेषु विख्याता मुखात्तव विनिःसृता ॥ ३ ।
पुनः पृच्छामि ते देव संशयं धर्म्मसंहितम् ।
येन धर्म्मविधानेन दीक्षा प्राप्येत पुष्कला ॥ ४ ।
एतन्मे परमं गुह्यं परं कौतूहलञ्च मे ।
धर्म्मसङ्ग्रहणार्थाय तद्भवान्वक्तुमर्हसि‡ ॥ ५ ।
ततो मह्यीवचः श्रुत्वा मेघदुन्दुभिनिःस्वनः ।
वराहरूपी भगवान् प्रत्युवाच वसुन्धराम् ॥ ६ ।

वराह उवाच ।

शृणु तत्त्वेन मे देवि मम धर्म्मं सनातनम् ।
देवा एतन्न जानन्ति§ ये च योगव्रते स्थिताः ॥ ७ ।
एतं¶ धर्म्मं वरारोहे माङ्गल्यमुखनिःसृतम्‖ ।
अहमेको विजानामि मद्भक्ता ये जना भुवि ॥ ८ ।
यच्च पृच्छसि मे भद्रे दीक्षां भागवतीं कथाम् ।
तच्छृणुष्व वरारोहे कर्म्मसंसारमोक्षणम्** ॥ ९ ।

* माधवीति (ग) पुस्तकस्य पाठान्तरम् ।

† शृणुमाणेति आर्षं, शृण्वतीति साधु ।

‡ (ग) पुस्तके श्लोकद्वयं नास्ति ।

§ मम देवा न जानन्तीति (ग) पुस्तकपाठः ।

¶ इममिति (ग) पुस्तकस्य पाठः ।

‖ ममाङ्गविधिनिःसृतमिति (ग) पाठः ।

** कर्म्मसंसारसागरादिति (ग) पाठः ।

मयोक्तां लभते कश्चिद्दीक्षाञ्चैव सुखावहाम् * ।
चातुर्वर्ण्यविधानेन तान्दीक्षां शृणु सुन्दरि † ॥ १० ॥
मयि शान्तं मनः कृत्वा तद्गुरुश्च सुन्दरि ।
अभिगच्छेद्गुरुन्देवि शाधि शिष्योऽस्मि मां गुरो ‡ ॥ ११ ॥
तदाज्ञान्तु पुरस्कृत्य दीक्षाद्रव्यानयाहरेत् ।
लाजा मधु कुशाश्चैव घृतञ्चामृतसन्निभम् ॥ १२ ॥
गन्धं सुमनसो धूपं दीपं शापणकादिकम् § ।
कृष्णाजिनञ्च पालाशं दण्डञ्चैव कमण्डलुम् ¶ ॥ १३ ॥
घटं वासः पादुकाञ्च शुक्लयज्ञोपवीतिकम् ।
यन्त्रिकामर्घपात्रीञ्च चरुस्थालीं सदर्विकाम् ।
तिलव्रीहियवांश्चैव विविधांश्च फलोदकम् ** ॥ १४ ॥
भक्ष्यं भोज्यान्नपानञ्च कर्म्मण्यांश्चैव सञ्चयान् ।
दीक्षिता यदि भुञ्जन्ति मम कर्म्मपरायणाः ॥ १५ ॥
यानि कानि च †† वीजानि रत्नानि विविधानि च ।

---

* मर्य्यादां तु वरारोहे सर्व्ववर्णसुखावहामिति (ग) ।

† चातुर्वर्ण्यं प्रवक्ष्यामि दीक्षामेव तु शाश्वतीमिति (ग) ।

अत हरन्ति मनुजा येन गर्भसंसारसागरादित्यधिकः पाठो वर्त्तते ।

‡ शिष्य, अहं तवेति (ग) पुस्तकस्य पाठः ।

§ धूपगन्धाश्च माल्याश्च पालाशी दण्डयष्टिकामिति (ग) पाठः ।

¶ चर्म्मकृष्णाजिनञ्चैव दण्डञ्चैव कमण्डलुमिति (ग) पाठः ।

|| वासांसि पादुके चैवेति (ग) पाठः ।

** फलांस्तथेति (ग), फलानीति साध ।

†† तानि कानि चेति (ग) पुस्तकपाठः ।

काचकादीनि* सुर्प्पाणि तानि शीघ्रमुपाहरेत् ॥ १६ ।
एतान्येवोपहार्य्याणि गुरुमूले ततः परम् ।
स्नात्वा मङ्गलसंयुक्तो दीक्षाकामश्च ब्राह्मणः ।
गुरोश्चरणौ संगृह्य ब्रूहि किङ्करवाणि ते ॥ १७ ।
ततस्तु गुर्वनुज्ञातो वेदीं कुर्य्याच्च पुष्कलाम् ।
ब्राह्मणो दीक्षमाणस्तु चतुरस्रान्तु षोड़श ।
हस्तान् कृत्वा तत्र च† कलशोपरि युञ्जयेत् ॥ १८ ।
प्रतिष्ठाप्य विधानेन धान्योपरि दृढ़ं नवम् ।
जलेन पूरितं मन्त्रैः पुष्पपल्लवशोभितम् ॥ १९ ।
तस्योपरि तिलैः पूर्णपात्रं स्थाप्य विधानतः ।
पूजयेन्मां गुरुं द्रव्यैः शिष्यैर्गणैर्वोपकल्पितैः ॥ २० ।
तत्रार्च्चनविधिङ्कृत्वा गुरुर्द्धर्म्मविनिश्चयः ।
पूर्व्वोक्तानि च‡ द्रव्याणि वेदीमध्यमुपाहरेत् ॥ २१ ।
चतुरः कलशान्दद्याच्चतुष्पार्श्वेषु सुन्दरि ।
वारिपूर्णान्द्विजान् शुद्धान् सहकारविभूषितान् ॥ २२ ।
सर्व्वतः शुक्लसूत्रेण वेष्टयेत तथानघे ।
पूर्णपात्राणि चत्वारि चतुष्पार्श्वेषु स्थापयेत् ॥ २३ ।
एवं मन्त्रं ततः कृत्वा दद्याद्दीक्षाप्रयोजकः ।
सा च मन्त्रा यथान्यायं येन वा तुष्यते गुरुः ॥ २४ ।

* कनकादीनीति (ग) पुस्तकस्य पाठः ।

† अत्र छन्दोभङ्गः सप्ताक्षरात्मकपादत्वात्

‡ यानि कानि चेति (ग) पाठः ।

यथान्यायेन संगृह्य गुरुकर्म्मविनिश्चितः ।
प्रपद्यावसथं विष्णोर्दीक्षाणां परिकाङ्क्षिणः ॥ २५ ।
उपस्पृश्य यथान्यायं भूत्वा पूर्व्वमुखस्ततः ।
सर्व्वांस्तु श्रावयेच्छिष्यान्दीक्षणार्थं न संशयः॥ ॥ २६ ।
यस्तु भागवतान्दृष्ट्वा स्वयं भागवतः शुचिः† ।
अभ्युत्थानं न कुर्व्वीत तेनाहन्तु विहिंसितः‡ ॥ २७ ।
कन्यान्दत्त्वा पुनस्तान्तु कर्म्मणा नोपपादयेत् ।
अष्टौ पितृगणास्तेन हिंसिता नात्र संशयः ॥ २८ ।
भार्य्यां प्रियसखीं यस्तु साध्वीं हिंसति निर्घृणः ।
न तेन तां प्राप्नुवन्ति हिंसका दुष्टयोनिजाः§ ॥ २९ ।
ब्रह्मघ्नश्च कृतघ्नश्च गोघ्नश्च कृतपातकाः ।
एतांश्छिष्यान् विवर्ज्जेत¶ उक्ता ये चान्यपातकाः ॥ ३० ।
विल्ववृक्षोदुम्बरस्य तथा चान्ये कदाचन ।
कर्म्मण्याश्चैव ये वृक्षा न छेत्तव्याः कदाचन ॥ ३१ ।
यदिच्छेत्परमां सिद्धिं मोक्षधर्म्मं सनातनम् ।
भक्ष्याभक्ष्यञ्च तं शिष्यं वेदितव्यं तदन्तरे ॥ ३२ ।
करीरस्य वधः शस्तः फलान्योदुम्बरस्य च ।

॥ सर्व्वेषां श्रावयेच्छियां रक्षणार्थं न संशय इति (ग) पाठः ।

† भूत्वा भागवत इति (ग) पुस्तकपाठः ।

‡ अहं तेनापि हिंसित इति (ग) पाठः ।

§ न तेषां पुनरावृत्तिः हिंसितस्याथ मन्दगीति (ग) पाठः ।

¶ विवर्ज्जयेति साधु ।

सद्योभक्षी भवेत्तेन अभक्ष्या पूतिवासिका ॥ ३३ ।
न भक्षणीयं वाराहं मांसं मत्स्याश्च सर्व्वशः* ।
अभक्ष्या ब्राह्मणैरेते दीक्षितैश्च† न संशयः ॥ ३४ ।
परीवादं न कुर्व्वीत न हिंसां वा कदाचन ।
पैशुन्यन्न च कर्त्तव्यं स्तैन्यं वापि कदाचन‡ ॥ ३५ ।
अतिथिञ्चागतन्दृष्ट्वा दूराध्वानं गतं क्वचित्§ ।
संविभागस्तु कर्त्तव्यो येन केनापि पुत्त्रक ॥ ३६ ।
गुरुपत्नी राजपत्नी ब्राह्मणस्त्रीश्¶ कदाचन ।
मनसापि न गन्तव्या एवं विष्णुः प्रभाषते ॥ ३७ ।
कनकादीनि रत्नानि यौवनस्था च कामिनी ।
तत्र चित्तं न कर्त्तव्यमेवं विष्णुः प्रभाषते ॥ ३८ ।
दृष्ट्वा परस्य भाग्यानि आत्मनो व्यसनन्तथा ।
तत्र मन्युर्न कर्त्तव्य एवं धर्म्मः सनातनः ॥ ३९ ।
एवं ततः श्रावयीत‖ दीक्षाकामं वसुन्धरे ।
छत्त्रञ्चोपानहञ्चैव मनसा चोपकल्पयेत् ॥ ४० ।
द्वे द्वे औदुम्बरस्य पत्त्रे वेदीमध्ये तु स्थापयेत् ।

* भुक्त्वा मांसं वराहस्य मत्स्यस्य सकलेश्वरीति (ग) पाठः

† दीक्षितैर्वेति (ग) पुस्तकपाठः ।

‡ पिशुनस्तैनो वा क्वचिदिति (ग) पाठः ।

§ दूरस्थानागतं क्वचिदिति (ग) पुस्तकपाठः ।

¶ ब्राह्मणी वेति (ग) पुस्तकस्य पाठः ।

‖ श्रावयित्वेति (ग) पाठः ।

तरश्चैव वरारोहे : अन्नपूर्णञ्च भाजनम् ।
ममावाहनपूर्व्वन्तु मन्त्रेण विधिनार्च्चयेत् ॥ ४१ ।

ओं मन्त्रः—सप्त द्वीपानि सप्त सागराश्च सप्त पर्व्वताश्च दश स्वर्गसहस्राश्च+ सप्तमन्ताश्च नमोऽस्तु सर्व्वाण्ते हृदये वसन्ति । यद्येतदर्पयति पुनरुत्तमति । ओं, भगवन्वासुदेव ममैतत्सारञ्च युक्तं वराहरूपहृष्टेन‡ पृथिव्यान्तु मन्त्रानुस्मरणञ्च आज्ञापयानुभावनास्माकमाज्ञप्तमनुचिन्तयित्वा भगवन्नागच्छ दीक्षाकामविप्रस्त्वत्प्रसादात्तु दीक्षति । एतन्मन्त्रमुदाहरित्वा§ शिरसा जानुभ्यामवनिं गतेन भवितव्यम् । ओं स्वागतं स्वागतवानिति ।

तत एतेन मन्त्रेण आनयित्वा वसुन्धरे ।
अर्घ्यं पाद्यञ्च दातव्यं मन्त्रेण विधिनिश्चयात् ॥ ४२ ।

मन्त्रः—अक्षतघ्ने देवानसुराक्षतघ्नरुद्रेण ब्राह्मणाय च लब्धं सर्व्वनिमां भगवतेऽस्तु दत्तं प्रतिगृह्णीष्व च लोकनाथ ।

एवं भूमि ततो दत्त्वा अर्घ्यम्पाद्यञ्च कर्म्मणा ।
क्षुरं गृहीत्वा¶ यथान्यायमिमं मन्त्रमुदीरयेत् ॥ ४३ ।

मन्त्रः—एवं वरुणः पातु शिष्य ते वपतः शिरः ।

* उदुम्बरं वरारोहे इति (ग) पुस्तकस्य पाठः ।

+ सप्त स्वर्गसहस्रार्थेति (ग) पुस्तकधृतपाठः ।

‡ वराहरूपतुष्टेनेति (ग) पुस्तकस्य पाठान्तरम् ।

§ उदाहृत्येति साधु ।

¶ क्षौरं गृह्येति (ग) पुस्तकपाठो न समीचीनः ।

जलेन विष्णुयुक्तेन दीक्षा संसारमोक्षणम् ॥ ४४ ।
एकस्य कलशन्द्याल्कर्म्मकारस्य सुन्दरि ।
निष्कलन्तु शिरः कृत्वा शोणितेन विवर्ज्जितम् ।
पुनः स्नानं ततः कृत्वा शीघ्रमेव न संशयः ॥ ४५ ।
एतस्य विधिवत्कृत्वा दीक्षाकामस्य सुन्दरि ।
दत्त्वा संसारमोक्षाय सर्व्वकामविनिश्चितः ।
जानुभ्यामवनीं गत्वा इमं मन्त्रमुदीरयेत् ॥ ४६ ।
ओं मन्त्रः—वेदाम्यहं* भागवतांश्च सर्व्वान्†
सुदीक्षिता ये गुरवश्च सर्व्वे ।
विष्णुप्रसादेन च लब्धदीक्षा
मम प्रसीदन्तु नमामि सर्व्वान् ॥ ४७ ।
नत्वा तु‡ भगवद्भक्तान् प्रज्वाल्य च हुताशनम् ।
घृतेन मधुमिश्रेण लाजाकृष्णतिलैस्तथा§ ॥ ४८ ।
सप्तवारांस्ततो दत्त्वा विंशतिञ्च तिलोदनम्¶ ।
जानुभ्यामवनिं गत्वा इमं मन्त्रमुदाहरेत् ॥ ४९ ।
मन्त्रः—अश्विनौ दिशः सोमसूर्य्यौ साक्षिमात्रं‖ वयं प्रसन्नाः शृण्वन्तु मे सत्यवाक्यं वदामि ।

* वेदामीति आर्षप्रयोगः, वेद्मीति साधु ।

† वन्दामि भो भागवतांश्च सर्व्वानिति (ग) पाठः ।

‡ नमित्वेति (ग) पाठस्तु न साधुः ।

§ कृष्णतिलेन चेति (ग) पुस्तकपाठः ।

¶ विंशत्येवं प्रमोदनमिति (ग) पाठः प्रामादिकः ।

‖ साक्षिपात्रमिति (ग) पाठः ।

सत्येन धार्य्यते भूमिः सत्येन तिष्ठति भूमिः ।
सत्येन गच्छति* सूर्य्यो वायुः सत्येन वाति† च ॥ ५० ॥
एवं सत्यं ततः कृत्वा ब्राह्मणोच्चारणं पुनः ।
गुरुम्प्रसादयेत्तत्र मन्त्रेण विधिनार्च्चयन् ॥ ५१ ॥
तिस्रः प्रदक्षिणाः कृत्वा देवं भागवतं गुरुम् ।
गुरुपादौ तु संगृह्य‡ इमं मन्त्रमुदीरयेत् ॥ ५२ ॥
मन्त्रः—गुरुदेवप्रसादेन लब्धा दीक्षा यदृच्छया ।
यद्वापकृतं§ किञ्चिद्गुरुर्मर्षयतां मम ॥ ५३
एवं प्रसादयित्वा तु शिष्यो मन्त्रेण सुन्दरि ।
वेदीमध्ये स्थापयित्वा भूत्वा पूर्व्वमुखस्ततः ।
शिष्यमेव ततो दृष्ट्वा गृहीत्वा च कमण्डलुम् ।
शुक्लयज्ञोपवीतञ्च इमं मन्त्रमुदाहरेत् ॥ ५४ ॥
मन्त्रः—विष्णुप्रसादेन गतोऽस्मि सिद्धिं
प्राप्ता च दीक्षा सकमण्डलुश्च ।
गृहीत्वा तु कराभ्यां युक्तोऽस्मि
कर्म्मणा क्रियायाश्चैव ॥ ५५ ॥ ¶

* गच्छतीति साधु ।
† भूमिं सत्येन वातीति इति ग पुस्तकस्थ पाठः
‡ गुरवे चरणौ गृहीत्वेति ग, पाठो न साधुः ।
§ यत्र पापं कृतमिति ग पुस्तकपाठः ।
¶ आदाय चाञ्जकराभ्यां युक्तोऽस्मि कर्म्मणा क्रियायोगेनेति ग पाठः ।

मुखपट्टं ततः कृत्वा दीक्षितो गुरुणा तथा।
सर्व्वप्रदक्षिणङ्कृत्वा इमं मन्त्रमुदाहरेत्॥ ५६।

अर्थाऽर्था भूत्वा यद्यहम्भ्यास्य-
न्नर्थ्या गुरुर्विष्णुर्दीक्षा च लब्धा।
तव प्रसादाच्च गुरो यथा च॥ ५७।

एतेन मन्त्रेण मुखं पट्टं कारयेत। शौचसेके वै कुर्य्याद्देवान्
न्तुवासमम्।

एवं वै वाम आद्द्ते गृह्ण वस्त्र कमण्डलुम्।
इमं लोकेषु विख्यातं शोधनं सर्व्वकर्म्मसु॥ ५८।

न्त्रः—गृह्णीष्व* गन्धपात्राणि सर्व्वगन्धं सुखोचितम्।
सर्व्वेषां पावकं शुद्धं सर्व्वसंसारमोक्षणम्।
मधुपर्कं गृहीत्वा तु इमं मन्त्रमुदीरयेत्† ॥ ५९।

न्त्रः—गृहाण‡ मधुपर्कञ्च प्रार्थकाय विशोधनम्।
ततो गृहीत्वा चरणौ गुरोर्यत्नात्सुतोषयेत्§ ॥ ६०।
शिरसा¶ चाञ्जलिङ्कृत्वा मनसैव सुसंयतम्।
गुरूपदिष्टं सन्धार्य्य|| इमं मन्त्रमुदीरयेत्** ॥ ६१।

* गृह्ण त्वं गन्धपात्राणीति (ग) पुस्तकपाठः।

† एतदर्द्धं (ग) पुस्तके नास्ति।

‡ गृह्ण त्वमिति (ग) पुस्तकधृतपाठः।

§ उभौ तु चरणौ गृह्य उपाध्यायोपकल्पयेदिति (ग) पाठः।

¶ मनसेति (ग) पुस्तकस्य पाठान्तरम्।

|| अथ गृह्य यथान्यायमिति (ग) पाठः।

** उदाहरेदिति (ग) पुस्तकपाठः।

मन्त्रः—शृण्वन्तु मे भागवताम् सर्व्वे
गुरुश्च मे सर्व्वकामञ्चयश्चकार ।
अहं शिष्यो दासभूतस्तथैव*
देवसमो गुरुश्च मे तथोपपन्नम् ।'॥ ६२ ।
एषागमे ब्राह्मणस्य दीक्षा भूमे ह्युदाहृताः‡ ।
त्रयाणामथ वर्णानां मम दीक्षाविधीञ्छृणु ॥ ६३ ।
एतेनैव विधानेन दीक्षयेत वसुन्धरे ।
उभौ च प्राप्नुतां सिद्धिमाचार्य्यः शिष्य एव च ॥ ६४

इति वराहपुराणे ब्राह्मणदीक्षासूत्रं नाम
सप्तविंशत्यधिकशततमोऽध्यायः ।

# अष्टाविंशत्यधिकशततमोऽध्यायः ।

वराह उवाच ।
क्षत्रियस्य प्रवक्ष्यामि तच्छृणुष्व* वसुन्धरे ।
त्यक्त्वा प्रहरणान्सर्व्वान्यत्किञ्चित्पूर्व्वशिक्षितम् ।

---

तद्वेति (ग) पुस्तकधृतः पाठः ।
दासभूतस्तव देव ममगुरुश्च मे यथोपपन्न इति (ग) पाठः ।
एषागमेषु वर्णेषु दीक्षां भूमि विजानतेति (ग) पाठः ।

---

* वर्णाद्दीति (ग) पाठः ।

पूर्व्वमन्त्रेण* मे भूमे तस्य दीक्षाञ्च कारयेत् ॥ १ ।
मया च पूर्व्वमुक्तानि यानि संसारकानि च ।
तानि सर्व्वाणि चानीय एकं वर्ज्यं यशस्विनि ॥ २ ।
न दद्यात्कृष्णसारस्य चर्म्म तत्र कदाचन ।
पालाशं दण्डकाष्ठञ्च दीक्षायान्न तु कारयेत् ॥ ३ ।
छागस्य चैव कृष्णस्य चर्म्म तत्र प्रदापयेत् ।
आश्वत्थं दण्डकाष्ठन्तु दीक्षायान्तदनन्तरम् ॥ ४ ।
कृत्वा द्वादशहस्तान्तु वेदीन्तत्रोपलेपयेत् ।
सर्व्वं ममोक्तं कर्त्तव्यं यच्च मे† पूर्व्वभाषितम् ॥ ५ ।
एवं क्षत्रियदीक्षायां सर्व्वं सम्पाद्य यत्नतः‡ ।
चरणौ मम सङ्गृह्य§ इमं मन्त्रमुदाहरेत् ॥ ६ ।
मन्त्रः—त्यक्तानि विष्णो शस्त्राणि त्यक्तं सर्व्वं क्षत्रियकर्म्म सर्व्वं त्यक्त्वा देवं विष्णुं प्रपन्नोऽथ संसाराद्वै जन्मनान्तारयस्व ।
एवं ततो वचश्चोक्त्वा क्षत्रियो मम पार्श्वतः ।
उभौ च चरणौ गृह्य इमं मन्त्रमुदीरयेत्¶ ॥ ७ ।

* पूर्व्वकर्म्मणेति (ग) पुस्तके पाठो दृश्यते ।

† यन्मयेति (ग) पुस्तकपाठः ।

‡ एवं कृत्वा ततः सर्व्वं क्षत्रियं दीक्षाकारिणेति (ग) पाठः

§ ममैव चरणं गत्वेति (ग) पुस्तकपाठः ।

¶ मन्त्रमुदाहरेदिति (ग) पाठः.

मन्त्रः—नाहं शस्तं देवदेव स्पृशामि
परापवादं न च देव ब्रवीमि ।
कर्म्म करोमि संसारमोक्षण-
त्वया चोक्तमेव वराहसंस्थान* ॥ ८ ॥

तत एवं वचो ब्रूते सर्व्वश्चैवात्र पूजयेत्† ।
विविधैर्गन्धपत्रैश्च धूपैश्चैव यथोदितम् ॥ ९ ॥
यथोक्तेनैव तान्भूमि भोजयेत्तदनन्तरम्‡ ।
शुद्धान्भागवतांश्चैव§ एवमतन्त्र समयः ॥ १० ॥
एषा वै क्षत्रिये दीक्षा देवि संसारमोक्षणम् ।
मत्प्रसादेन कर्त्तव्यं यदीच्छेत्सिद्धिमुत्तमाम् ॥ ११ ॥
वैश्यस्य चैव वक्ष्यामि¶ शृणु तत्त्वेन सुन्दरि ।
दीक्षा च यादृशी तस्य‖ यथा भवति सुन्दरि ॥ १२ ॥
त्यक्त्वा तु वैश्यकर्म्माणि मम कर्म्मपरायणः ।
यथा च लभते सिद्धिं तृतीया वर्णसंस्थितिः ॥ १३ ॥
सर्व्वं तत्र समानीय यन्मया पूर्व्वभाषितम् ।
दशहस्तां ततः कृत्वा वेदीं वेदविचेतितः** ॥ १४ ॥

* संस्थितमिति (ग) पुस्तकपाठो न समीचीनः ।

† योजयेदिति (ग) पुस्तकस्य पाठः ।

‡ गोपयेत्तदनन्तरमिति (ग) पुस्तकपाठः ।

§ गर्भभागवतैश्चेति (ग) पुस्तकस्य पाठः ।

¶ वैश्यस्यैव प्रवक्ष्यामीति (ग) पाठान्तरम् ।

‖ तत्त्वेति (ग) पुस्तकपाठो न सुसङ्गतः ।

** विंशद्धस्तां समानिय पूर्व्वन्यायेन कारयेदिति (ग), तत्र परश्लोकस्य पूर्व्वार्द्धं नास्ति ।

लेपयेद्गोमयेनार्द्रो पूर्व्वन्यायेन तत्र वै।
चर्म्मणापि तु छागस्य स्वगात्रं परिवेष्टयेत् ॥ १५ ॥
उदुम्बरं दन्तकाष्ठं गृहीत्वा दक्षिणे करे*।
शुद्धभागवतानाञ्च कृत्वा त्रिः परिवर्त्तनम्†।
जानुभ्यामवनीङ्गत्वा इमं मन्त्रमुदीरयेत्‡ ॥ १६ ॥
मन्त्रः—अहं वैश्यो भवन्तमुपागतः
प्रमुच्य कर्म्माणि च वैश्ययोगम्।
दीक्षा च लब्धा भगवत्प्रसादा-
त्प्रसीदतां§ मे भवबन्धमोक्षणम् ॥ १७ ॥
मामेवं सोऽपि चोक्ता वै मम कर्म्मप्रसादवान्¶।
गुरोश्च चरणौ गृह्य इमं मन्त्रमुदाहरेत् ॥ १८ ॥
त्यक्ता वै कृषिगोरक्षावाणिज्यक्रयविक्रयम्।
लब्धा च त्वत्प्रसादेन विष्णुदीक्षा मयाऽधुना‖ ॥ १९ ॥
देवाभिवादनङ्कृत्वा पुरो भागवतेषु च।
पश्चात्तु भोजनं दद्यादपराधवहिष्कृतम् ॥ २० ॥
एवं दीक्षा तु वैश्यानां मम मार्गानुसारिणाम्।

---

* गृह्य हस्ते च दक्षिणे इति (ग) पाठः।

† कुर्य्याद्भागवतान् शुद्धान् त्रीणि वारान् प्रदक्षिणमिति (ग) पाठः।

‡ मन्त्रमुदाहरेदिति (ग) पुस्तकपाठः।

§ प्रसीदेति साधु।

¶ मम त्वं ततश्चोक्ता मम कर्म्मप्रसादनादिति (ग) पाठः।

‖ विष्णुदीक्षाऽहं कामये इति (ग) पाठः।

येन मुच्यन्ति* सुश्रोणि घोरसंसारसागरात् ॥ २१ ।
शूद्रस्यापि प्रवक्ष्यामि मद्भक्तस्य वराङ्गने† ।
यस्तु दीक्षां समासाद्य मुच्यते सर्व्वकिल्बिषैः ॥ २२ ।
सर्व्वसंस्कारद्रव्याणि मया पूर्व्वोदितानि च ।
दीक्षाकामस्य शूद्रस्य शीघ्रं तानि प्रकल्पयेत् ॥ २३ ।
अष्टहस्तां ततो देवि संलिप्य नीयतां ततः ।
चर्म्म नीलस्य छागस्य कल्पयेच्छूद्रयोनये ।
दण्डञ्च वैणवं दद्यान्नीलं वस्त्रञ्च तस्य वै‡ ॥ २४ ।
एवं गृहीत्वा शूद्रोऽपि दीक्षायाः कारणं परम्§ ।
ममैव शरणं गत्वा इमं मन्त्रमुदाहरेत् ॥ २५ ।
मन्त्रः—शूद्रोऽहं शूद्रकर्म्माणि मुक्त्वा भक्ष्यञ्च सर्व्वशः ।
भक्ष्याभक्ष्यं ततस्त्यक्त्वा त्यक्त्वा च शूद्रकर्म्म च ॥ २६ ।
एवं वदेत्ततो देवि¶ शूद्रो दीक्षाभिकाङ्क्षिणम् ।
विमुक्तः सर्व्वपापेभ्यो लब्धसंज्ञो गतस्पृहः ॥ २७ ।
उभौ तौ चरणौ गृह्य गुरोर्वै तदनन्तरम् ।
गुरोः प्रसादनार्थाय इमं मन्त्रमुदाहरेत् ॥ २८ ।

* मुच्यन्ते इति साधु । मुच्यन्त इति (ग) पुस्तकपाठः ।

† वरमर्थे इति (ग) पुस्तकस्य पाठः ।

‡ उपलिप्य समन्ततः स्थण्डिलं तदनन्तरम् ।
चर्म्मणा कृष्णछागस्य तस्य गात्राणि वेष्टते ॥ इति (ग) पाठः ।

§ एवं गृह्य यथान्यायं शूद्रो दीक्षाय कारणमिति (ग) पाठः ।

¶ देवीति (ग) पाठः ।

मन्त्रः—विष्णुप्रसादे गुह्यं प्रसन्नात्पूर्व्वञ्च लब्धा चैव संसारमोक्षणाय करोमि कर्म्म प्रसीद।

एतन्मन्त्रं समुच्चार्य्य कुर्य्यात्तत्र प्रदक्षिणम्।
चतुरश्च यथान्यायं पुनश्चैवाभिवादयेत्॥ २९।
अनन्तरन्ततः कुर्य्याद्गन्धमाल्येन चार्च्चनम्।
भोजयेच्च* यथान्यायमपराधविवर्ज्जितः॥ ३०।
दीक्षा एषा च शूद्राणामुपचारश्च ईदृशः।
चतुर्णामपि वर्णानां दुःखसंसारमोक्षणम्॥ ३१।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व† वसुन्धरे।
चतुर्णामपि वर्णानां यथा छत्रं‡ प्रदीयते॥ ३२।
ब्राह्मणे पाण्डुरञ्छत्रं क्षत्रिये रक्तमेव च।
वैश्याय पीतं वै दद्यान्नीलं शूद्राय दापयेत्॥ ३३।

सूत उवाच।

चातुर्वर्ण्यस्य श्रुत्वा वै सा मही संशितव्रता।
वराहं पुनरप्याह नत्वा सा धरणी तदा§॥ ३४।

धरोवाच¶।

श्रुता दीक्षा यथान्यायं चातुर्वर्ण्यस्य केशव।

* भोजयेदिति (ग) पुस्तकस्य पाठः।
† शृणोहीति (ग) पुस्तकपाठः।
‡ शस्त्रमिति (क), (ख) पुस्तकयोः पाठः।
§ वराहरूपिणं वन्द्यं प्रत्युवाच वसुन्धरेति (ग) पाठः।
¶ धरण्युवाचेति (ग) पाठः।

द्दीक्षितैः किन्नु कर्त्तव्यं तव कर्म्मपरायणैः ॥ ३५ ।
ततो महीवचः श्रुत्वा मेघदुन्दुभिनिःस्वनः ।
वराहरूपी भगवान्नुवाच स महाद्युतिः ॥ ३६ ।
वराह उवाच ।
शृणु तत्त्वेन कल्याणि यन्मान्त्वं परिपृच्छसि ।
सर्व्वत्र चिन्तनीयोऽहं गुह्यमेव गणात्मकम् ॥ ३७ ।
नारायणवचः श्रुत्वा धरणी संसितव्रता ।
हृष्टतुष्टमनास्तत्र श्रुत्वा तत्र महौजसम् ।
शुचिर्भागवतां श्रेष्ठा तव कर्म्मणि नित्यशः ॥ ३८ ।
ततः कमलपत्राक्षी भक्ताभक्तेषु वत्सला ।
कराभ्यामञ्जलिङ्कृत्वा नारायणमथाब्रवीत् ॥ ३९ ।
धरण्युवाच ।
त्वद्भक्तेन महाभाग विधिना दीक्षितेन च ।
तव चिन्तापरेणात्र किङ्कर्त्तव्यञ्च माधव ॥ ४० ।
केन चिन्तयितव्यस्त्वमचिन्त्योऽ मानुषैः परः ।
किञ्च भागवतैः कार्य्यं यथावित्तं न शक्यते ॥ ४१ ।
ततो भूम्या वचः श्रुत्वा आदिरव्यक्तसम्भवः ।
मधुरं स्वरमादाय प्रत्युवाच वसुन्धराम् ॥ ४२ ।
वराह उवाच ।
देवि तत्त्वेन वक्ष्यामि यन्मान्त्वं परिपृच्छसि ।

---

चिन्तयसे देवेति (ग) पाठः ।

येन चिन्तयसे चिन्तां मम कर्म्मपरायणा* ॥ ४३ ।
एषा गणान्तिका नाम दीक्षाङ्गबीजनिःसृता ।
एतद्गृह्यां महाभागे मम चिन्तां विचिन्तयेत् ॥ ४४ ।
दीक्षितेन तु शुद्धेन मम निश्चितकर्म्मणा† ।
ग्रहीतव्यं‡ विशालाक्षि मन्त्रेण विधिनात्र वै ॥ ४५ ।
यस्तु भागवतो भूत्वा तद्गृह्णाति गणान्तिकाम् ।
जनस्य दर्शनस्पर्शसंयुक्तां वामसंयुताम् ।
तस्य धर्म्मो न विद्येत दीक्षा तस्य महाफला§ ॥ ४६ ।
यस्तु गृह्णाति सुश्रोणि मन्त्रपूतां गणान्तिकाम् ।
आसुरी नाम सा दीक्षा यथाधर्मः प्रवर्त्तते ॥ ४७ ।
यस्माद्गणान्तिकां गुह्यां चिन्तयेच्छुद्धमानसः ।
गुह्यां गणान्तिकां यो मां चिन्तयेत्स बुधोत्तमः¶ ।
जन्मान्तरसहस्राणि चिन्तिता तेन तेन सः ॥ ४८ ।
ग्रहणस्य प्रवक्ष्यामि यथा शिष्याय दीयते ।
मन्त्रं लोकसुखार्थाय तच्छृणुष्व वसुन्धरे‖ ॥ ४९ ।

* चिन्ता चिन्तयते मम कर्म्मपरायणः इति (ग) पाठ. ।

† दीक्षितेन विशुद्धेन विधिदृष्टेन कर्म्मणेति (ग) पाठः ।

‡ मद्गितार्थमिति (ग) पुस्तकस्य पाठान्तरम् ।

§ न स दीक्षित उच्यत इति (ग) पाठः ।

¶ गुह्यां गणान्तिकां देवी यो मां चिन्तयते बुध इति (ग) पाठः ।

‖ मन्त्रं लोकसुखार्थञ्च तच्छृणोहि वसुन्धरे इति (ग) पाठः ।

कौमुदस्य तु मासस्य मार्गशीर्षस्य वाप्यथः* ।
वैशाखस्यापि मासस्य शुक्लपक्षे तु द्वादशी ॥ ५० ॥
कुर्य्यान्निरामिषं तत्र दिनानि त्रीणि निश्चितः ।
तस्मिन् गणान्तिकं ग्राह्यं मम धर्म्मविनिश्चयात्† ॥ ५१ ॥
ममाग्रतो वरारोहे प्रज्वाल्य च हुताशनम् ।
कुशैरास्तरणं कृत्वा‡ स्थापयित्वा गणान्तिकम् ॥ ५२ ॥
ततः शिष्यो गुरुश्चैव दीक्षितः शुचिरुत्तमः ।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ॥ ५३ ॥

मन्त्रः—या धारिता पूर्व्वपितामहेन§
ब्रह्मण्यदेवेन भवोद्भवेन ।
नारायणाद्दक्षिणगात्रजातां
हे शिष्य गृह्णीष्व स वै त्वमेव ॥ ५४ ॥

तत एतेन मन्त्रेण गुरुर्गृह्य¶ गणान्तिकम् ।
शिष्याय दत्त्वा स्निग्धाय इमं मन्त्रमुदीरयेत्‖ ॥ ५५ ॥

मन्त्रः—नारायणस्य दक्षिणगात्रजातां
स्वशिष्य गृह्णीष्व समयेन देवीम् ।

---

* मार्गशीर्षस्य वा तथेति (ग) पाठः ।

† तस्मिन् गणान्तिकां प्राप्य मम धर्म्मविनिश्चयादिति (ग) पाठः ।

‡ संस्तरणं कृत्वेति (ग) पुस्तकस्य पाठः ।

§ पाद्यादिना पूजिता पितामहेनेति (ग) पाठः ।

¶ पुनर्गृह्य गणान्तिकामिति (ग) पाठः ।

‖ शिष्याय प्रदद्यात् तत्र पुनर्मन्त्रमुदाहरेदिति (ग) पाठः ।

एतद्विचिन्त्यापरएव भूत्वा
भवे पुनर्भावनमेति नैव ॥ ५६ ।

धरण्युवाच ।

स्नानोपकल्पनान्तेषु किङ्कर्त्तव्यन्तु माधव ।
प्रसाधनविधिञ्चैव केन मन्त्रेण कल्पयेत् * ।
अकर्म्मण्येन मुच्येत तव कर्म्मपरायणः ॥ ५७ ।
ततो भूम्या वचः श्रुत्वा लोकनाथो जनार्द्दनः ।
धर्म्मसंयुक्तवाक्येन प्रत्युवाच वसुन्धराम् ॥ ५८ ।

वराह उवाच ।

देवि तत्त्वेन वक्ष्यामि यन्मान्त्वं परिपृच्छसि ।
स्नानस्यैवोपचाराणि यानि कुर्व्वन्ति कर्म्मिणः ॥ ५९ ।
वृत्तेष्वेवोपचारेषु जलप्रधानाणिकेषु च ।
कङ्कतीञ्चाञ्जनञ्चैव दर्पणञ्चैव सुन्दरि ।
यथा मन्त्रेण दातव्यं तच्छृणुष्व वसुन्धरे † ॥ ६० ।
स्पृष्ट्वा तु मम गात्राणि क्षौमवस्त्रेण संवृतः ।
अञ्जनं कङ्कतीञ्चैव शीघ्रमेव प्रसादयेत् ‡ ॥ ६१ ।
ततो जानुस्थितो भूत्वा मम कर्म्मपरायणः ।

* कार्य्यदिति (ग) पुस्तकस्य पाठः ।

† कङ्कतीञ्चाञ्जनञ्चैव शीघ्रमेव प्रकल्पयेत् ।
दर्पणञ्च वरारोहे येन मन्त्रेण दीयते । इति (ग) ।

‡ प्रकल्पयेदिति (ग) पाठः

अञ्जलौ कङ्कतीं* गृह्य इमं मन्त्रमुदाहरेत् ॥ ६२ ।

मन्त्रः—एतां कङ्कतीमञ्जलिस्थां प्रगृह्य†

प्रसीद नारायण शिरः प्रसाधि हि ।
महानुभाव विश्वनेत्रे स्वनेत्रे
याभ्यां पश्यसि त्वं त्रिलोकीम् ।
लोकप्रभो सर्व्वलोकप्रधान
एषो जनमञ्जनं लोकनाथ ॥ ६३ ।

ततः संस्नापयेद्देवं मन्त्रेणानेन सुव्रतम् ॥ ६४ ।

मन्त्रः—देवदेव स्नानीयमिदं मम कल्पितं सुवर्णकलसं गृहाण प्रसीद एषोऽञ्जलिर्मया परिकल्पितः स्नाहि स्नाहीति‡।

नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ॥ ६५ ।

मन्त्रः—एषा मया माधव त्वत्प्रसादा-

द्गुरुप्रसादाच्च हि मन्त्रपूजा ।
प्राप्ता ममैषा च गणान्तिका वै
भवेद्धर्म्मो न च मे कदाचित् ॥ ६६ ।

य एतेन विधानेन मम कर्म्मणि दीक्षितः ।
गुरोर्गृहीत्वा महतो मम लोकाय गच्छति ।
कुशिष्याय न दातव्या पिशुनाय शठाय च ॥ ६७ ।

* अञ्जलिकणकामिति (ग) पुस्तकपाठः ।

† एषोऽञ्जलिं कणकं देव इति (ग) पाठः ।

‡ एष पाठः (ग) पुस्तके नास्ति ।

एषा चैव वरारोहे गृहीत्वा गणनान्तिका।
सुशिष्याय च दातव्या हस्ते चैव गणान्तिका॥ ६८।
उत्तमाष्टाधिकशतं पञ्चाशत्तुर्य्यमध्यमा।
तदर्द्धं कन्यसी चापि परिमाणेन सुन्दरि* ॥ ६९।
रुद्राक्षैरुत्तमा सा तु मध्यमा पुत्रजीवकैः† ।
पद्माक्षैः कन्यसी ज्ञेया देवि ते कथिता मया॥ ७०।
एतत्कश्चिन्न जानाति‡ जन्मान्तरशतैरपि।
सर्व्वलोकहितां शुद्धां मोक्षकामां गणान्तिकाम्॥ ७१।
नोच्छिष्टः संस्पृशेत्तान्तु§ स्त्रीणां हस्ते न कारयेत्।
आकाशे स्थापनं कुर्य्यान्न च वामेन संस्पृशेत्॥ ७२।
न दर्शयेच्च कस्यापि चिन्तयित्वा तु पूजयेत्¶।
एतत्ते परमं गुह्यमाख्यातं मोक्षदायकम्॥ ७३।
एवं हि विधिपूर्व्वेण पालयेत गणान्तिकाम्‖।
विशुद्धो मम भक्तश्च मम लोकाय गच्छति॥ ७४।

* परिमाणं विधीयत इति (ग) पुस्तकपाठः।

† रुद्राक्षा उत्तमा चैव पुत्रजीवकमध्यमा इति (ग) पाठः।

‡ एतन्न जानते कश्चिदिति (ग) पाठः।

§ नोच्छिष्टेन तु स्प्रष्टव्या इति (ग) पाठः।

¶ यदीच्छेत् परमां गतिमिति (ग) पाठः।

‖ गुह्यात्तु परमं गुह्यं सन्ध्योपासनमेव च।
एष मन्त्रश्च जपश्च पूज्या वै गणनान्तिकेति (ग) पाठः।

एवं विष्णोर्वचः श्रुत्वा धरणी संसितव्रता* ।
प्रत्युवाच परं श्रेष्ठं लोकनाथं महौजसम् ॥ ७५ ।
दर्पणन्ते कथं देया† तन्ममाख्याहि माधव ।
येन तुष्टो निजं रूपं पश्यसे चिन्तितः प्रभो: ॥ ७६ ।
धरण्यास्तद्वचः श्रुत्वा वराहः पुनरब्रवीत् ।
शृणु मे दर्पणविधिं यथावद्देवि सुव्रते ।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ॥ ७७ ।

मन्त्रः—श्रुतिर्भागवती श्रेष्ठा श्रुती अग्निर्द्विजश्च तव मुखं नासेऽश्विनौ नयने चन्द्रसूर्य्यौ मुखञ्च चन्द्र इव गात्राणि जगत्प्रधानानीमञ्च दर्पणं पश्य पश्य रूपम्‡ ।

य एतेन विधानेन मम कर्म्मपरायणः ।
करोति मम कर्म्माणि तारितं कुलमतकम्§ ॥ ७८ ।
एतेन मन्त्रेण वै भूमि उपचारमृण¶ ईदृशः ।
हृष्टतुष्टेन कर्त्तव्यो यदीच्छेत्परमां गतिम् ॥ ७९ ।

इति वराहपुराणे कृष्णाश्रमदर्पणं नाम

---

* दत्वार्हेति ग पुस्तकपाठः ।

† शुचिभागवता: श्रेष्ठा: तव कर्म विनिश्चिता गात्राणि सम्प्रयतानि मुखं चन्द्रो यमतानि च दर्पणं च मे दर्पणं लोकनाथस्य स्वरूपजगत्प्रतीन: इति (ग) पाठः ।

§ मम कर्म्माणि कुर्वीत तारितान मम वै कुलानीति (ग) पाठः ।

¶ भूमि उपचारयेति ग पाठः ।

# ऊनत्रिंशदधिकशततमोऽध्यायः।

वराह उवाच।

भूषितालङ्कृतं कृत्वा मम कर्मपरायणः।
शुक्लं यज्ञोपवीतञ्च देयन्नवगुणन्तथा*।
गन्धेन तिलकं दद्याल्ललाटे मम सुन्दरि॥ १।

* दद्यान्नवगुणन्त्वथेति (ग) पाठः। अस्मात् श्लोकादनन्तरं (ग) पुस्तके कश्चिदधिकः पाठो वर्त्तते यथा -

शिरसा चाञ्जलिं कृत्वा वसुधा पुनरब्रवीत्

धरण्युवाच।

एतस्मात् परमं गुह्यं तदुक्तो वक्तुमर्हसि।
सन्ध्या येन मन्त्रेण तव कर्मपरायणाम्।
वद भागवतां शुद्धां तव कर्मविनिश्चिताम्।
ततो भूमिवचः श्रुत्वा भक्तानां प्रभवोऽव्ययः।
वराहरूपी भगवान् प्रत्युवाच वसुन्धराम्

वराह उवाच।

शृणु माधवि तत्त्वेन यन्मां त्वं परिपृच्छसि।
कथयिष्यामि ते भद्रे प्रवरं गुह्यमुत्तमम्।
यथा वन्दितमुभूपे, पुण्याः भागवता, शुभाः।
कृत्वा तु मम कर्माणि शुचिः संसारमोक्षणीम्।
कुर्वीतैव परां सन्ध्यां यथावदिति निश्चितम्।
जलाञ्जलिं ततो गृह्य मम भक्त्या व्यवस्थितः।
मुहूर्तं ध्यानमास्थाय इमं मन्त्रमुदाहरेत्॥

मन्त्रः - सर्वोऽव्ययमादिव्यक्तरूपमात्रं सर्वे देवा ब्रह्मा रुद्रस्त्वादिकसमभासीत् ज्ञानगीत

मम चैव कुरु संसारमोचनम्* ।
एतेन मन्त्रेण चित्रकं मे
दद्याल्ललाटे तिलकं धरित्रि† ॥ ३ ।
ततः सुमनसो गृह्य इमं मन्त्रमुदाहरेत् ॥ ४ ।
मन्त्रः—इमाः सुमनसः सौमनस्याय भगवन् ! सर्व्वं सुमनसं कुरु त्वय्येते सौमनस्याय निर्म्मिता गृहीता स्वाहा ।
एवं सुमनसो दत्त्वा धूपञ्चैव निवेदयेत् ।
ततो गृहीत्वा धूपन्तु सुगन्धं सुमनोहरम् ।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ॥ ५ ।
मन्त्रः—सुगन्धानि तवाङ्गानि स्वभावेनैव केशव ।
अमुना चैव धूपेन धूपितानि तवाऽनघ ॥ ६ ।
तवाङ्गानां सुगन्धेन सर्व्वं सौगन्धिकं कुरु ।
गृहाणेमञ्च मे धूपं सर्व्वसंसारमोचनम् ॥ ७ ।
पुनरन्यत्प्रवक्ष्यामि यथा दीपं निवेदयेत् ।
यथा दत्तन्तु गृह्णामि मम भक्तैः सुखावहम्‡ ॥ ८ ।
कृत्वा तु मम कर्म्माणि गृह्य दीपमनुत्तमम् ।
जानुसंस्थं ततः कृत्वा इमं मन्त्रमुदीरयेत् ॥ ९ ।
मन्त्रः—नमो भगवते तेजसे विष्णो
सर्व्वे देवास्त्वग्निसंस्थाः प्रतिष्ठाः ।
एवञ्चाग्निस्तव तेजसा प्रतिष्ठितो

* एतेन चित्रं ते देवगृहं ममैव संसारकारामोक्षमिति (ग) । † एतेन मन्त्रेण चित्रकं दातव्यमिति (ग) । ‡ (ग) पुस्तके (४—७) श्लोका न सन्ति ।

तेजश्चात्मा स्वयमेव मन्त्रश्च ॥ १० ।
तेजः संसारान्मोचयितुं देव
गृह्णीष्व दीपं द्युतिमन्तञ्च
मूर्त्तिश्च भूत्वा दृढं कर्म्म निष्कलम् ॥ ११ ।
मां करोति यथान्यायं दीपकं ददते नरः ।
तारिताः पितरस्तेन निष्कलाश्च पितामहाः ॥ १२ ।
नारायणवचः श्रुत्वा विस्मिता च* वसुन्धरा ।
वराहरूपिणन्देवं प्रत्युवाच वसुन्धरा† ॥ १३ ।
श्रुता मया भागवतास्तव कर्म्मपरायणाः ।
शेषसंश्रवणार्थाय मनो धावति सत्पथे‡ ॥ १४ ।
तव प्रापणकं कृत्यं केषु पात्रेषु कारयेत् ।
एतदाचक्ष्व तत्त्वेन येन तुष्यसि माधव ॥ १५ ।
*ततोभूमेर्वचः§ श्रुत्वा लोकनाथोऽब्रवीदिदम् ।*
शृणु तत्त्वेन मे देवि पात्राणि यानि रोचते¶ ।
तानि ते कथयिष्यामि त्वया मे पूर्व्वपृच्छितम् ॥ १६ ।
सौवर्णं रजतङ्कांस्यं येषु दद्यात्प्रपाणकम् ।
सर्व्वाणि तानि त्यक्त्वेह ताम्रञ्च मम रोचते ॥ १७ ।
एतन्नारायणाच्छ्रुत्वा धर्म्मकामा‖ वसुन्धरा ।

* प्रत्युवाचेति (ग) । † प्रत्युवाच पुनर्वच इति (ग) । ‡ कृत्वा च तव कर्म्माणि शेषे च तपसे वने इति (ग) । § भूम्या वच इति (ख) । ¶ ये च पात्रा मम प्रिया इति (ग), अत्र पात्रस्य पुंस्त्वमार्षम् । ‖ धर्म्मकामेति (क), (ख) ।

उवाच मधुरं वाक्यं लोकनाथं जनार्द्दनम् ।
एतन्मे परमं गुह्यं ताम्रन्ते रोचते कथम् ॥ १८ ।
ततो भूमेर्वचः* श्रुत्वा अनादिरपराजितः ।
लोकानां प्रवरः श्रेष्ठः प्रत्युवाच वसुन्धराम् ॥ १९ ।
शृणु तत्त्वेन मे भूमे† कथ्यमानं मयाऽनघे ।
एकाग्रं चित्तमाधाय येन ताम्रं मम प्रियम् ॥ २० ।
सप्तयुगसहस्राणि आदिकालेऽथ माधवि ।
यथा ताम्रं समुत्पन्नं यथैव प्रियदर्शनम्‡ ॥ २१ ।
पूर्व्वं कमलपत्राक्षि गुडाकेशो महासुरः ।
ताम्ररूपं समादाय ममैवाराधने रतः§ ॥ २२ ।
तत आराधितस्तेन वर्षाणान्तु चतुर्द्दश¶ ।
सहस्राणि विशालाक्षि धर्म्मकामेन निश्चलम्|| ॥ २३ ।
अहन्तु तपसा तुष्टस्तीव्रेण कृतनिश्चयात्** ।
ततस्ताम्रमये रम्ये यत्र ताम्रसमुद्भवः ॥ २४ ।
दृष्ट्वाश्रमं महादेवि किञ्चिदेव सुभाषितम् ।
ततो जानुस्थितो भूत्वा†† मम एष विचिन्तयत्‡‡ ॥ २५ ।
चतुर्बाहुश्च मां दृष्ट्वा मम कर्म्मपरायणः§§

* भूमिवच इति (ग)। † भूमि इति (ग)। ‡ ममैव प्रियदर्शनमिति (ग)। § स्थित इति (ग)। ¶ सहस्राणि च षोडशेति (ग)। || मम भक्तो विशालाक्षि धर्म्मकामी तु निश्चयं इति (ग)। ** ततः प्रीतोऽस्मि सुश्रोणि तस्य संतपनिश्चयादिति (ग)। †† जानुस्थितो भूत्वेति (ग)। ‡‡ विचिन्त्य तदिति (ग)। §§ ऊर्द्धबाहुस्ततोदृष्ट्वा मम चिन्तापरायण इति (ग)।

प्रणतः प्राञ्जलिः प्राह शिरो भूमौ निधाय सः ।
तञ्च दृष्ट्वा मया प्रोक्तं प्रसन्नेनान्तरात्मना* ॥ २६ ।
गुडाकेश महाभाग ब्रूहि किङ्करवाणि ते ।
तोषितोऽस्म्यनया भक्त्या दुराराध्योऽपि सुव्रत† ॥ २७ ।
यत्त्वया चिन्तितं सौम्य कर्म्मणा मनसा गिरा‡ ।
वरं ब्रूहि महाभाग तव यद्रोचतेऽनघ§ ॥ २८ ।
एवं मम वचः श्रुत्वा गुडकेशोऽब्रवीदिदम्¶ ।
कराभ्यामञ्जलिङ्कृत्वा विशुद्धेनान्तरात्मना ॥ २९ ।
यदि तुष्टोऽसि मे देव समस्तेनान्तरात्मना ।
जन्मानान्तु सहस्राणि त्वयि भक्तिर्दृढाऽस्तु मे ।
चक्रेण वधमिच्छामि त्वया मुक्तेन केशव‖ ॥ ३० ।
चक्रेण पातितस्येतद्दसामांसानि किञ्चन** ।
ताम्रं नाम भवेद्देव पवित्रीकरणं शुभम ॥ ३१ ।
तेन पात्रं ततः कृत्वा शुद्धधर्म्मविनिश्चितः ।
तस्मिन् प्रापणकं कृत्वा शुद्धे वै ताम्रभाजने ।
निवेदिते परा प्रीतिर्भवत्वेतन्मनोगतम् ॥ ३२ ।
प्रसन्नो यदि मे देव ह्येष मे दीयतां वरः ।

* गुडाकेशो महाभाग मम कर्म्मविधौ स्थितः । एवं तत्तु मया प्रोक्तं प्रसन्नेनान्तरात्मनेति (ग) । † तोषितोऽहं महाभाग्य त्वया भक्तेन केवलमिति (ग) । ‡ च वै इति (ग) । § ह्वदीति (ग) । ¶ वचोऽब्रवीदिति (ग) । ‖ सर्व्वश इति (ग) ।
** य एष मम मांसौघस्त्वया चक्रेण पातित इति (ग) ।

यच्चिन्तितोऽसि देवेश उग्रे तपसि तिष्ठता* ॥ ३३ ।
वाढ़मित्येव सोऽप्युक्तो यावल्लोकस्थितिर्मया ।
तावत्ताम्रास्थितो भूत्वा मम संस्थो भविष्यसि† ॥ ३४ ।
ततःप्रभृति ताम्रात्मा गुड़ाकेशो व्यवस्थितः ।
तत्ताम्रभाजने मह्यं दीयते यत्सुपुष्कलम् ।
अतुला तेन मे प्रीतिर्भूमे‡ जानीहि सुव्रते ॥ ३५ ।
मङ्गल्यञ्च पवित्रञ्च ताम्रन्तेन प्रियं मम ॥ ३६ ।
त्वञ्च द्रक्ष्यसि तच्चक्रं मध्यसंस्थे दिवाकरे ।
वैशाखस्य तु मासस्य शुक्लपक्षे तु द्वादशी ।
मम तेजोमयं चक्रं त्वां वधिष्यत्यसंशयम् ।
एष्यसे मम लोकाय एवमेतन्न संशयः ॥ ३७।३८ ।
एवमुक्त्वा गुड़ाकेशं तत्रैवान्तर्हितोऽभवम् ।
चक्राद्वधमभीप्सन्वै सोऽपि मत्कर्मणि स्थितः ॥ ३९ ।
दिने दिने विशिष्टन्तु शुभं कुर्व्वंस्तपस्यति ।
विष्णुसंस्थो भविष्यामि कदाहमिति चिन्तयन् ॥ ४० ।
एवं स्थितस्य तस्याथ वैशाखस्य तु द्वादशी ।
शुक्लपक्षस्य सम्प्राप्ता तस्यां धर्म्मविनिश्चितः ।
विष्णुपूजां ततः कृत्वा प्रार्थयामास मां प्रति ॥ ४१ ।
मुञ्च मुञ्च प्रभो चक्रमपि वह्निसमप्रभम् ।

* यत्त्वया चिन्तितं देव उग्रं तप इदं महदिति (ग)। † वाढ़मित्येव सोऽप्युक्तवमेतन्नविष्यति। यावल्लोका धरिष्यन्ति यावच्चैव महीसुराः। तावत्ताम्रस्थित इति (ग)। ‡ भूमि इति (ग)।

आत्मा मे नीयतां शीघ्रं निकृत्याङ्गानि सर्वशः ॥ ४२ ।
तदेव चक्रेण विपाटितांऽसौ
प्राप्तोऽपि मां भागवतप्रधानः ।
ताम्रन्तु तन्मांसमसृक् सुवर्ण-
मस्थीनि रूप्यं बहुधातवश्च ।
रङ्गञ्च सीसं त्रपुधातुसंस्थं
कांस्यञ्च रीतिश्च मलम् तेषाम् ॥ ४३ ।
ताम्रपात्रेण वै भूमि प्रापणं यत्प्रदीयते ।
सिक्थेऽसिक्थे* फलं तस्य शृणुष्व गदतो मम ॥ ४४ ।
एतद्भागवतैः कार्य्यं मम प्रियकरैः सदा
एवं ताम्रं समुत्पन्नमिति मे रोचते हि तत् ।
दीक्षितैर्वै भागवतैः पाद्यार्घादौ च दीयते ॥ ४५ ।
एवं दीक्षाविधिः प्रोक्त एवं ताम्रसमुद्भवः ।
देवि तत्त्वेन कथितः किमन्यत्परिपृच्छसि ॥ ४६ ।

भूमिरुवाच ।

देवदेव कथं सन्ध्यां दीक्षितः कुरुते वद ।
केन मन्त्रेण वा भक्तस्तव कर्म्मपरायणः ॥ ४७ ।

वराह उवाच ।

शृणु माधवि तत्त्वेन सन्ध्यामन्त्रमनुत्तमम् ।
यथा वन्दन्ति वै सूर्य्यं सन्ध्यां पूर्व्वापरान्तथा ॥ ४८ ।
जलाञ्जलिं गृहीत्वा तु मम भक्त्या व्यवस्थितः ।

* सिद्धे ऽसिद्धे इति (क), (ख)

मुहूर्त्तंध्यानमास्थाय इमं मन्त्रमुदीरयेत्॥ ४९।
सिक्थानि* तत्र यावन्ति ताम्रपात्रार्के धरे।
तावद्वर्षसहस्राणि मम लोके स मोदते॥ ५०।
मन्त्रः—भवोद्भवमादिव्यक्तरूपमादित्यं
सर्व्वे देवा ब्रह्मरुद्रेन्द्रास्त्वाञ्च।
कृष्णे यथासीद्ज्ञानयोगस्थितास्ते
सन्ध्यासंस्था वासुदेवं नमन्ति॥ ५१।
वयं देवमादिमव्यक्तरूपं
कृत्वा चात्मनि देव संस्थास्तथापि।
संसारार्थं कर्म्म तत्कारणमेव
सन्ध्यासंस्था वासुदेव नमो नमः॥ ५२।
अनेनैव हि† मन्त्रेण सन्ध्यां कुर्य्यात्तु दीक्षितः॥ ५३।

इति वराहपुराणे चतुर्वर्णदीक्षा नाम ऊनत्रिंशदधिकशततमोऽध्यायः।

# त्रिंशदधिकशततमोऽध्यायः।

सूत उवाच।

एवं दीक्षां ततः श्रुत्वा नारायणमुखान्मही।
विशुद्धमानसा देवी नारायणमथाब्रवीत्॥ १।

* सिद्धानीति (ग)। † अनेनैव त्विति (ग)।

धरण्युवाच ।

अहो ते दीक्षामाहात्म्यं यस्य वै व्युष्टिरुत्तमा ।
श्रुत्वाहन्तु महाभाग जातास्मि विमला विभो ॥ २ ।
अहो देवस्य माहात्म्यं लोकनाथस्य तत्त्वतः ।
येन सा कारिता दीक्षा चातुर्वर्ण्यसुखावहा ॥ ३ ।
एकं मे परमं गुह्यं यदीश हृदि वर्त्तते ।
भव भक्तसुखार्थाय तत्त्वं मे वक्तुमर्हसि ॥ ४ ।
देव पूर्व्वापराधास्ते द्वात्रिंशदपि कीर्त्तिताः* ।
एवङ्कृत्वापराधानि† मनुजा अल्पचेतसः ॥ ५ ।
कर्म्मणा केन शुद्ध्यन्ति अपराधस्य कारिणः ।
तन्ममाचक्ष्व तत्त्वेन मम प्रीत्या च माधव ॥ ६ ।
तद्वै भूम्या वचः श्रुत्वा हृषीकेशो महामनाः ।
दिव्यन्ध्यानं समादाय प्रत्युवाच वसुन्धराम् ॥ ७ ।

वराह उवाच ।

शुद्धा भागवता भूत्वा मम कर्म्मपरायणाः ।
ये तु भुञ्जन्ति राजान्नं लोभेन च भयेन वा ॥ ८ ।
आपद्गता हि भुञ्जन्ति राजान्नन्तु वसुन्धरे ।
दशवर्षसहस्राणि पच्यन्ते‡ नरके नराः ॥ ९ ।
भगवद्वचनं श्रुत्वा कम्पिता च वसुन्धरा ।
दिनानि सप्त दश च भयन्तीव्रमजायत ॥ १० ।

* द्वात्रिंशत्परिकीर्त्तितेति (ग) । † अपराधानिति साधु । ‡ पचन्ते इति (क), (ख) ।

ततो दीनमना भूत्वा सा मही शंसितव्रता ।
उवाच मधुरं वाक्यं सर्व्वलोकसुखावहम् ॥ ११ ।

धरण्युवाच ।

शृणु तत्त्वेन मे देव हृदये हि व्यवस्थितम् ।
को नु दोषोऽस्ति राज्ञां हि तन्मे त्वं वक्तुमर्हसि ॥ १२ ।
ततो भूम्या वचः श्रुत्वा सर्व्वधर्म्मविदां वरः ।
प्राह नारायणो वाक्यं धर्म्मकामां वसुन्धराम् ॥ १३ ।

वराह उवाच ।

शृणु सुन्दरि तत्त्वेन गुह्यमेतदनिन्दिते ।
राजान्नन्तु न भोक्तव्यं शुभैर्भागवतैः सदा ॥ १४ ।
यद्यप्येष समत्वेन राजा लोके प्रवर्त्तते ।
राजसन्तामसं वापि कुर्व्वन् कर्म्म सुदारुणम् ॥ १५ ।
अपि वा गर्हितं तेन राजान्नन्तु वसुन्धरे ।
धर्म्मसन्धारणार्थाय न तु मे रोचते भुवि ॥ १६ ।
ततो यद्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
यथा राजान्नु भोज्यं वै शुद्धैर्भागवतैर्नरैः ॥ १७ ।
स्थापयित्वा तु मां देवि विधिदृष्टेन कर्म्मणा ।
धनधान्यसमृद्धानि दत्त्वा भागवतैरपि ॥ १८ ।
सिद्धं भागवतैश्चान्नं मम प्रापणशेषकम् ।
भुञ्जानस्तु वरारोहे न स पापेन लिप्यते ॥ १९ ।
एवं विष्णुवचः श्रुत्वा धरणी शंसितव्रता ।
वराहरूपिणं देवं प्रत्युवाच वरानना ॥ २० ।

धरण्युवाच ।

राजान्नन्तु नरो भुक्त्वा शुद्धो भागवतः शुचिः ।
कर्म्मणा केन शुद्धेत तन्मे ब्रूहि जनार्द्दन ॥ २१ ।

वराह उवाच ।

शृणु तत्त्वेन मे देवि यन्मात्त्वं भीरु भाषसे ।
तरन्ति पुरुषा येन राजान्नस्योपभुञ्जकाः ॥ २२ ।
एकं चान्द्रायणं कृत्वा तप्तकृच्छ्रञ्च पुष्कलम् ।
कुर्य्यात्सान्तपनञ्चैकं शीघ्रं मुच्यन्ति* किल्विषात् ।
न तस्य चापराधोऽस्ति वसुधे वै वचो मम ॥ २३ ।
एवमेव न भोक्तव्यं राजान्नं वै कदाचन ।
ममात्र पूजाकामेन यदीच्छेत्परमां गतिम् ॥ २४ ।

इति वराहपुराणे भगवच्छास्त्रे राजान्नप्रायश्चित्तं नाम
त्रिंशदधिकशततमोऽध्यायः ।

## एकत्रिंशदधिकशततमोऽध्यायः ।

वराह उवाच ।

दन्तकाष्ठमखादित्वा यो हि मामुपसर्पति* ।
पूर्व्वकालकृतं कर्म्म तेन चैकेन नश्यति ॥ १ ।

* मुच्यन्ते इति साधु ।

अतःपरं (ग) पुस्तके श्लोक एको नास्ति ।

नारायणवचः श्रुत्वा पृथिवी धर्म्मसंश्रिता ।
विष्णुभक्तसुखार्थाय हृषीकेशमुवाच ह ॥ २ ।

धरण्युवाच ।

सर्व्वकालकृतं कर्म्म क्लेशेन महताऽनघ ।
कथमेकापराधेन सर्व्वमेव प्रणश्यति ॥ ३ ।

वराह उवाच ।

शृणु सुन्दरि तत्त्वेन कथ्यमानं मयाऽनघे ।
येन चैकापराधेन पूर्व्वकर्म्म प्रणश्यति ॥ ४ ।
मनुष्यः किल्बिषी भद्रे कफपित्तसमन्वितः ।
पूयशोणितसम्पूर्णं दुर्गन्धि मुखमस्य तत् ॥ ५ ।
तत्सर्व्वबीजं नश्येत* दन्तकाष्ठस्य भक्षणात् ।
शुद्धिर्भागवती चैव आचारेण विवर्ज्जिता ॥ ६ ।

धरण्युवाच ।

दन्तकाष्ठमखादित्वा यः कर्म्माणि करोति ते ।
प्रायश्चित्तञ्च मे ब्रूहि येन धर्म्मो न नश्यति ॥ ७ ।

वराह उवाच ।

एवमेतन्महाभागे यन्मात्त्वं परिपृच्छसि ।
कथयिष्यामि हीदं ते यथा शुध्यन्ति मानवाः ॥ ८ ।
आकाशशयनङ्कृत्वा दिनानि द्वे च पञ्च च ।
अभुक्तदन्तकाष्ठाश्च एवं शुध्यन्ति मानवाः ॥ ९ ।
एवं ते कथितं भद्रे दन्तकाष्ठस्य भक्षणम् ।

* न सहेदुचितं देवीति (ग) ।

य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
कुतस्तस्यापराधोऽस्ति एवमेव न संशयः ॥ १० ।

इति वराहपुराणे दन्तकाष्ठाभक्षणप्रायश्चित्तं
नामैकत्रिंशदधिकशततमोऽध्यायः ।

## द्वात्रिंशदधिकशततमोऽध्यायः ।

वराह उवाच ।

गत्वा तु मैथुनं भद्रे अस्नातो यः समस्पृशेत् ।
रेतः पिबति दुर्बुद्धिः सहस्रं नव पञ्च च ॥ १ ।
एतन्नारायणाच्छ्रुत्वा सा मही शंसितव्रता ।
ततो दीनमना भूत्वा प्रोवाच मधुसूदनम् ॥ २

धरण्युवाच ।

किमिदं भाषसे देव धर्म्मं भीषणसङ्कटम् ।
कथमेवं पुमान्वै स रेतःपानपरो भवेत् ।
एतन्मे परमं दुःखं तद्भवान्वक्तुमर्हसि ॥ ३ ।

वराह उवाच ।

शृणु तत्त्वेन मे देवि इदं गुह्यमनुत्तमम् ।
चिह्नमेतद्वरारोहे आधिचारविनिश्चयः ॥ ४ ।

पुरुषः स्त्रीषु कर्म्माणि यो विकुर्व्वीत निर्घृणः ।
दृष्टं तस्यापराधस्य फलं प्राप्नोति मानवः ॥ ५ ।
एवमेतद्वरारोहे यन्मान्त्वं परिपृच्छसि ।
अपराधस्य दोषेण विशुद्धिश्च न जायते ॥ ६ ।
प्रायश्चित्तं प्रवक्ष्यामि रागदोषेण दोषितम् ।
गृहस्थाः पुरुषा भद्रे मम कर्म्मपरायणाः ॥ ७ ।
यावकेन त्र्यं क्षिप्त्वा पिन्याकेन दिनत्रयम् ।
वायुभक्षं दिनं त्वेकं ततो मुच्येत किल्विषात् ॥ ८ ।
य एवं कुरुते भूमे विधिदृष्टेन कर्म्मणा ।
ज्ञात्वा कर्म्मापराधन्तु न स पापेन लिप्यते ॥ ९ ।
एतत्ते कथितं भद्रे मिथुनं योऽभिगच्छति ।
प्रायश्चित्तं महाभागे मम लोकसुखावहम् ॥ १० ।
स्पृष्ट्वा तु मृतकं भद्रे नरं पञ्चत्वमागतम् ।
मम शास्त्रं वहिष्कृत्वा यः श्मशानं प्रपद्यते ॥ ११ ।
पितरस्तस्य सुश्रोणि आत्मनश्च पितामहाः ।
श्मशाने जम्बुका भूत्वा भक्षयन्ति शवांस्तथा ॥ १२ ।
ततो हरेर्वचः श्रुत्वा धर्म्मकामा वसुन्धरा ।
उवाच मधुरं वाक्यं सर्व्वलोकहिताय वै ॥ १३ ।

धरण्युवाच ।

तव नाथ प्रपन्नानां क्व पापं विद्यते प्रभो ।
प्रायश्चित्तञ्च मे ब्रूहि येन मुच्यन्ति* किल्विषात् ॥ १४ ।

---

* मुच्यन्ते इति साधु ।

वराह उवाच ।

शृणु सुन्दरि तत्त्वेन यस्मात्त्वं परिपृच्छसि ।
कथयिष्यामि ते ह्येदं शोभनं पापनाशनम् ॥ १५ ।
एकाहारो दिनान्सप्त त्रिरात्रं चाप्युपोषित: ।
पञ्चगव्यं तत: पीत्वा ततो मुच्यति* किल्बिषात् ॥ १६ ।
शवे स्पृष्टेऽपराधस्य एष ते कथितो विधि: ।
सर्व्वथा वर्ज्जनीयं वै सर्व्वभागवतेन तु ॥ १७ ।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
विमुक्त: सर्व्वपापेभ्यो नापराधोऽस्ति तस्य वै ।† ॥ १८ ।
नारीं रजस्वलां स्पृष्ट्वा यो मां स्पृशति निर्भय: ।
रागमोहेन संयुक्त: कामेन च वशीकृत: ॥ १९ ।
वर्षाणान्तु सहस्रैकं रज: पिबति निर्घृण: ।
अन्धश्च जायते देवि दरिद्रो ज्ञानमूर्खवान् ॥ २० ।
न च विन्दति चात्मानं पतितो नरके यथा ।
अपराधमिमङ्कृत्वा तत्रैवं नास्ति संशय: ॥ २१ ।

धरण्युवाच ।

तव देव प्रपन्नानां मोक्षं संसारसागरात् ।
अपराधसमायुक्तास्तव कर्म्मपरायणा: ।
कर्म्मणा येन शुध्येत तन्मे ब्रूहि जनार्द्दन ॥ २२ ।

वराह उवाच ।

स्पृष्ट्वा रजस्वलां नारीं नरो मद्भक्तितत्पर: ।

---

* मुच्यते इति साधु । † अपराधो न विद्यते इति (ग) ।

तपः कृत्वा त्रिरात्रन्तु आकाशशयने वसेत्॥ २३।
शुद्धो भागवतो भूत्वा मम कर्म्मपरायणः।
एवङ्कृत्वा महाभागे प्रायश्चित्तं मम प्रियम्॥ २४।
मुच्यते किल्बिषाद्देवि आचारेण वहिष्कृतः।
एतत्ते कथितं भद्रे यत्स्पृष्ट्वा तु रजस्वलाम्॥ २५।
स्पृष्ट्वा तु मृतकं देवि यो मत्क्षेत्रेषु तिष्ठति।
शतं वर्षसहस्राणि गर्भेषु परिवर्त्तते॥ २६।
दशवर्षसहस्राणि चण्डालश्चैव जायते।
अन्धः सप्तसहस्राणि मण्डूकश्च* शतं समाः॥ २७।
मक्षिका त्रीणि वर्षाणि टिट्टिभेकादश†‡ समाः।
दंशो वै सप्त चान्यानि कृकलासो भवेत्समाः॥ २८।
हस्ती वर्षशतञ्चैव खरो द्वात्रिंशकं भवेत्।
मार्ज्जारो नव वर्षाणि वानरो दश पञ्च च॥ २९।
एवं स चात्मदोषेण मम कर्म्मपरायणः।
प्राप्नोति सुमहद्दुःखं देवि चैवं न संशयः॥ ३०।
ततो हरेर्वचः श्रुत्वा दुःखेन परिपृच्छती।
सर्व्वसंसारमोक्षाय प्रत्युवाच वसुन्धरा॥ ३१।

धरण्युवाच।‡

किमिदं भाषसे देव मानुषाणां दुरासदम्।
वाक्यम्भीषणमत्यन्तं§ मम मर्म्मप्रभेदकम्॥ ३२।

* कन्दूकश्चेति (ग)। † डिण्डिभेकादशमिति (ग)। ‡ (ग) पुस्तके एष पाठोनास्ति। § भीषणकश्चेवेति (ग)।

आचाराच्च परिभ्रष्टस्तव कर्म्मपरायणः ।
यथा तरति* दुर्गाणि प्रायश्चित्तं तथा वद ॥ ३३ ।
श्रुत्वा पृथ्व्यास्तथा वाक्यं† लोकनाथो जनार्द्दनः ।
धर्म्मसंरक्षणार्थाय प्रत्युवाच वसुन्धराम् ॥ ३४ ।

वराह उवाच ।

स्पृष्ट्वा तु मृतकं भूमि मम कर्म्मपरायणः ।
एकाहारं ततस्तिष्ठेद्दिनानि दश पञ्च च ॥ ३५ ।
तत एवं विधिं कृत्वा पञ्चगव्यन्तु प्राशयेत् ।
शुद्धभावं विशुद्धात्मा कर्म्मणा च न लिप्यते ॥ ३६ ।
एतत्ते कथितन्देवि स्पृष्ट्वा मृतकमेव च ।
दोषश्चैवं विशुद्ध्यर्थं यत्त्वया पूर्व्वमिच्छितम्‡ ॥ ३७ ।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
अपराधविमुक्तो वै मम लोकं स गच्छति ॥ ३८ ।

इति वराहपुराणे मृतकस्य स्पर्शनप्रायश्चित्तं नाम
द्वात्रिंशदधिकशततमोऽध्यायः ।

* तरन्ति येनेति (ग) । † ततीवाक्यमिति (ग) । ‡ पूर्व्वपृच्छितमिति (ग) ।

# त्रयस्त्रिंशदधिकशततमोऽध्यायः।

वराह उवाच।

स्पृश्यमानेन मां भूमे वातकर्म्म प्रमुच्यते*।
एतच्च पुरुषो युक्तो वायुपीड़ितमानसः॥ १॥
मक्षिका पञ्च वर्षाणि त्रीणि वर्षाणि मूषकः।
श्वा चैव त्रीणि वर्षाणि कूर्म्मो वै जायते नव॥ २॥
एष वै तापनं देवि मोहनं मम साम्प्रतम्†।
यो वै शास्त्रं विजानाति मम कर्म्मपरायणः।
श्रुत्वा वाक्यं हृषीकेशं प्रत्युवाच वसुन्धरा॥ ३॥

धरण्युवाच।

अतुलं लभते पापं तव कर्म्मपरायणः।
तस्य देव सुखार्थाय विशुद्धिं वक्तुमर्हसि॥ ४॥

वराह उवाच।

शृणु कार्त्स्न्येन मे देवि‡ कथ्यमानं मयाऽनघे।
अपराधमिमङ्कृत्वा सन्तरेद्येन कर्म्मणा॥ ५॥
पावकेन दिनं त्रीणि नक्तानि च पुनस्त्रयः§।
कर्म्म चैवं ततः कृत्वा स च मे नापराध्यति।
सर्व्वसङ्गं परित्यज्य मम लोकाय गच्छति॥ ६॥

* स्पृश्यमानोऽथ मां देवि वातकर्म्म प्रमुञ्चतीति (ग)। स्पृशता, स्पृशन् वा साधु। † शंसतीति (क), (ख)। ‡ शृणु क्रमेण मे देवि इति (ग)। § नक्तेन च पुनस्त्रयते (ग)। उभयत्रापि त्रय इति पुंस्त्वमार्षं त्रीणीति साधु।

एतत्ते कथितं भद्रे मद्दत्कर्म्मापराधिनः ।
दोषश्चैव गुणश्चैव यत्त्वया परिपृच्छितम्* ॥ ७ ॥

शृणु तत्त्वेन मे भूमि कथ्यमानं मयाऽनघे ।
पुरीषं मुच्यते यस्तु मम कर्म्म समाचरन् ॥ ८ ॥
दिव्यवर्षसहस्रन्तु रौरवे नरके वसेत् ।
पुरीषं भक्षयेत्तत्र मम कर्म्मपरायणः ॥ ९ ॥
प्रायश्चित्तं वदाम्यत्र येन मुच्येत किल्बिषात् ।
मम कर्म्मपरिभ्रष्टो विह्वलेनान्तरात्मना ॥ १० ॥
एकं जलमयीं शय्यामेकमाकाशशायिनीम् ।
एवङ्कृत्वा विधानन्तु सोऽपराधात्प्रमुच्यते ॥ ११ ॥
एतत्ते कथितं भद्रे पुरीषं यः समुत्सृजेत् ।
मद्भक्तेषु विशालाक्षि अपराधविनिश्चयः ॥ १२ ॥

इति वराहपुराणे मत्कर्म्म पुरीषोत्सर्ग प्रायश्चित्तं नाम त्रयस्त्रिंशदधिकशततमोऽध्यायः ।

## चतुस्त्रिंशदधिकशततमोऽध्यायः ।

वराह उवाच ।

भुक्त्वा तु मम कर्म्माणि मम कर्म्मपरायणः ।
प्रायश्चित्तविधिन्देवि यस्तु वाक्यं प्रभाषते ।

---

* परिपृष्टमिति साधु ।

मूर्खो भवति सुश्रोणि मम कर्म्मपरायणः ॥ १ ।
प्रायश्चित्तविधिन्देवि येन मुच्येत किल्विषात् ।
आकाशशयनं कृत्वा दिनानि दश पञ्च च ।
मुच्यते किल्विषात्तत्र देवि चैवं न संशयः ॥ २ ।

इति मौनत्यागप्रायश्चित्तम् ।

वराह उवाच ।

भूषितो नीलवस्त्रेण यो हि मामुपपद्यते ।
वर्षाणां हि शतं पञ्च कृमिर्भूत्वा स तिष्ठति ॥ ३ ।
तस्य वक्ष्यामि सुश्रोणि अपराधविशोधनम् ।
प्रायश्चित्तं विशालाक्षि येन मुच्येत किल्विषात् ॥ ४ ।
व्रतं चान्द्रायणङ्कृत्वा विधिदृष्टेन कर्म्मणा ।
मुच्यते किल्विषाद्भूमे एवमेतन्न संशयः* ॥ ५ ।
अविधानेन संस्पृश्य यो हि मामुपसर्पति ।
स मूर्खः पापकर्म्मा च मम विप्रियकारकः ॥ ६ ।
तेन दत्तं वरारोहे गन्धमाल्यसुगन्धितम् ।
प्रापणञ्च न गृह्णामि स्पृष्टञ्चापि कदाचन ॥ ७ ।
ततो नारायणवचः श्रुत्वा सा संशितव्रता ।
उवाच मधुरं वाक्यं धर्म्मकामा वसुन्धरा ॥ ८ ।

धरण्युवाच ।

यस्मात्त्वं भाषसे नाथ आचारस्य व्यतिक्रमम् ।

---

* अतःपरं (ग) पुस्तके इति नीलवस्त्रप्रायश्चित्तमित्यधिकः पाठो वर्त्तते ।

उपस्पृश्य समाचारं रहस्यं वक्तुमर्हसि ॥ ९ ।
केन कर्म्मविधानेन भूत्वा भागवता भुवि ।
उपस्पृश्योपसर्पन्ति तव कर्म्मपरायणाः ॥ १० ।
एतन्मे संशयं* देव परं कौतूहलं हि मे ।
तव भक्तसुखार्थाय निष्कलं वक्तुमर्हसि ॥ ११ ।

वराह उवाच ।

शृणु तत्त्वेन मे देवि यन्मां त्वं भीरु भाषसे ।
कथितं मम तत्त्वेन गुह्यमेतत्परं महत् ॥ १२ ।
विमुच्य सर्व्वकर्म्माणि यो हि मामुपसर्पति ।
तस्य वै शृणु सुश्रोणि उपस्पृश्य च या क्रिया ॥ १३ ।
भूत्वा पूर्व्वमुखस्तत्र पादौ प्रक्षाल्य चाम्बुभिः ।
उपस्पृश्य यथान्यायं तिस्रो वै गृह्य मृत्तिकाः ॥ १४ ।
ततः प्रक्षालितं हस्तं जलेन तदनन्तरम् ।
सप्तकोशं ततो गृह्य जलेन क्षालयेत्ततः† ॥ १५ ।
पादमेकैकशस्तद्वत्पञ्च पञ्च ददेत्ततः ।
कोशौ सम्मृज्यतां‡ तत्र यदीच्छेत§ मम प्रियम् ॥ १६ ।
त्रीणि कोशान्पिबेत्तत्र सर्व्वपापविशोधनम्¶ ।
कराभ्यां मुखं मार्ज्येत‖ सर्व्वमिन्द्रियनिग्रहम् ॥ १७ ।

---

* अत्र कौवत्वमार्षम्, एष मे संशय इति साधु । † मुखं प्रक्षालयेत्तथेति (ग) ।
‡ संमृज्यतां तत्रेति (ग) । § यदीच्छेत मम प्रियमिति (ग) ; तत्र इच्छेदिति साधु ।
¶ सर्व्वकर्म्मविशोधनमिति (ग) । ‖ मुखमित्यत्र छन्दोभङ्ग आर्षः, मार्ज्येतेति आर्षम् ।

प्राणायामन्ततः कृत्वा मम चिन्तापरायणः ।
कर्म्मणा विधिदृष्टेन कुर्य्यात्संसारमोक्षणम् ॥ १८ ।
त्रीणि* वारान् स्पृशेत्तत्र शिरो ब्रह्मणि संस्थितः ।
त्रीणि वारान् पुनस्तत्र उभे ते कर्णनासिके ॥ १९ ।
स्पृशेत् † निष्कलस्तत्र योऽहि यत्र प्रतिष्ठितः ।
विक्षिपेत्त्रीणि वाराणि ‡ सलिलं प्रवरं त्रयम् ॥ २० ।
एवमुक्तस्य कर्त्तव्यं ममाभिगमनेषु च ।
उपस्पृश्य ततं वामे§ यदीच्छेत प्रियं मम ॥ २१ ।
एवञ्च कुर्व्वतस्तस्य मम कर्म्मस्ववस्थितः ।
अपराधं न विन्देत एवं देवि न संशयः ॥ २२ ।
ततो नारायणवचः श्रुत्वा देवी वसुन्धरा ।
उवाच मधुरं वाक्यं सर्व्वभागवतां प्रियम् ॥ २३ ।

धरण्युवाच ।

उपस्पृश्य विधानेन यस्तु कर्म्माणि चाप्नुयात् ।
तापनं शोधनञ्चैव तद्भवान्वक्तुमर्हसि ॥ २४ ।

वराह उवाच ।

शृणु तत्त्वेन मे भूमे इमं गुह्यमनिन्दिते ।
यां गतिञ्च प्रपद्यन्ते मम कर्म्मबहिष्कृताः ॥ २५ ।
व्यभिचारञ्च मे कृत्वा यश्च मामुपसर्पति ।
दशवर्षसहस्राणि दशवर्षशतानि च ।

---

* त्रीनिति साधु । एवं परत्रापि । † स्पृशेदिति साधु । स्पृशेत्तदिति (ग) ।
‡ त्रीन् वारानिति साधु । § चान्ते इति (ग) ।

क्रमिर्भूत्वा यथान्यायं तिष्ठते* नात्र संशयः ॥ २६ ॥
प्रायश्चित्तं प्रवक्ष्यामि तस्य मूर्खस्य माधवि ।
यच्च कृत्वा महाभागे कृतकृत्यः पुनर्भवेत् ॥ २७ ।
महासान्तपनं कृत्वा तप्तकृच्छ्रञ्च निष्कलम् ।
ब्राह्मणः क्षत्रियो वैश्यो मम ये च मते स्थिताः ॥२८।
अनेन विधिना कृत्वा प्रायश्चित्तं यशस्विनि ।
किल्विषात्तु प्रमुक्तास्ते गच्छन्ति† परमां गतिम् ॥२९।
यस्तु क्रोधसमाविष्टो मम भक्तिपरायणः‡ ।
स्पृशेत मम गात्राणि चित्तङ्कृत्वा चलाचलम् ॥ ३० ।
न चाहं रागमिच्छामि क्रुद्धमेव यशस्विनि ।
इच्छामि च सदा दान्तं शुभं भागवतं शुचिम् ।
पञ्चेन्द्रियसमायुक्तं लाभालाभविवर्ज्जितम् ।
अहङ्कारविनिर्म्मुक्तं कर्म्मण्यभिरतं मम ॥ ३१।३२ ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वरानने ।
मां यदा लभते क्रुद्धः शुद्धो भागवतः शुचिः ॥ ३३ ।
चिल्ली जातो वर्षशतं श्येनो वर्षशतं पुनः ।
भेकस्त्रिशतवर्षाणि§ यातुधानः पुनर्दश ॥ ३४ ।
अपुमान् षट् च वर्षाणि¶ रेतोभक्षस्तु जायते ।
अन्धो जायेत सुश्रोणि पञ्च सप्त तथा नव ॥ ३५ ।

* तिष्ठतीति माधः । † विप्रमुक्तास्तु गच्छन्तेति (क), (ख) । ‡ मम कर्म्मपरायण इति (ग) । § मण्डूको विंशवर्षाणीति (ग) । ¶ षष्टिवर्षाणीति (ग) ।

षष्टिं द्वात्रिंशवर्षाणि चक्रवाको दृशव* ।
शैवालभक्षिता चैव ह्याकाशगमनन्तथा ॥ ३६ ।
ब्राह्मणो जायते भूमे क्रोधस्य च पथे स्थितः† ।
आत्मकर्म्मापराधेन प्राप्तः संसारसागरे ॥ ३७ ।

धरण्युवाच ।

अहो वै परमं गुह्यं यत्त्वया पूर्व्वभाषितम् ।
जातं मे विह्वलं चित्तं न स्थिरं जायते क्वचित् ॥ ३८ ।
यत्त्वया भाषितं हीदं भक्तानाञ्च दुरासदम् ।
श्रुत्वा सुदुस्तरं सर्व्वं भीतास्मि परिदेविता ॥ ३९ ।
नाहमाज्ञापयामि त्वां देवदेव जगत्पते ।
मम चैव प्रियार्थाय सर्व्वलोकसुखावहम् ॥ ४० ।
येन मुच्यन्ति‡ संशुद्धा बुधाः कर्म्मपरायणाः ।
अल्पसत्त्वा गतभया लोभमोहसमन्विताः ।
तरन्ति येन दुर्गाणि प्रायश्चित्तञ्च मे वद ॥ ४१ ।
ततः कमलपत्राक्षो वराहः सम्मुखे स्थितः§ ।
सनत्कुमारो मे भक्तो पुनर्नारायणोऽब्रवीत् ॥ ४२ ।
ततो भूम्या वचः श्रुत्वा ब्रह्मणश्च सुतो मुनिः ।
सनत्कुमारो योगज्ञः प्रत्युवाच वसुन्धराम् ॥ ४३ ।
धन्या चैव सुभाग्या च यत्त्वया परिपृच्छितम् ।
वराहरूपी भगवान् सर्व्वमायाकरण्डकः ॥ ४४ ।

* दशैव चेति (ग) । † मण्डूकस्य पथि स्थित इति (ग) । ‡ मुच्यन्ते इति साधु ।
§ अत संस्थित इति (ग) ।

किं त्वया भाषितो देवि सर्व्वयोगाङ्गयोगवित् ।
देवो नारायणस्तत्र सर्व्वधर्म्मविदां वरः ॥ ४५ ॥
कुमारवचनं श्रुत्वा स महीं प्रत्यभाषत ।
शृणु तत्त्वेन मे ब्रह्मन्यन्मया परिपृच्छितम् ।
कार्य्यं क्रियाश्च योगश्च आध्यात्मं पार्थिवस्थितम् ॥ ४६ ॥
एतन्मे पृच्छति ब्रह्मन्देवो नारायणः प्रभुः ।
ततो मां भाषते ब्रह्मन्विष्णुर्मायाकरण्डकः ॥ ४७ ॥
क्रुद्धा भागवता ब्रह्मन्येन शुद्ध्यन्ति किल्बिषात् ।
कृत्वा तेन व्रतञ्चैव मम कर्म्मपरायणः ॥ ४८ ॥
षष्ठे काले तु भुञ्जीत गृहभिक्षामनिन्दिताम् ।
अष्टौ भिक्षा यथान्यायं शुद्धभागवतां* गृहे ॥ ४९ ॥
य एतेन विधानेन ब्रह्मकर्म्माणि कारयेत् ।
मुच्यते किल्बिषात्तस्मादेवमाह जनार्द्दनः ॥ ५० ॥
यदीच्छसि परां सिद्धिं विष्णुलोकं जनार्द्दनात्† ।
शीघ्रमाराधयेद्विष्णुं द्विजमुख्यो न संशयः ॥ ५१ ॥
ततो भूमेर्वचः श्रुत्वा ब्रह्मणश्च सुतो मुनिः ।
प्रत्युवाच विशालाक्षीं धर्म्मकामो वसुन्धराम् ॥ ५२ ॥
अहो गुह्यं रहस्यञ्च यत्त्वया देवि भाषितम् ।
तस्य ये मुखनिष्क्रान्ता धर्म्मास्तान्वक्तुमर्हसि ॥ ५३ ॥

धरण्युवाच ।

ततः स पुण्डरीकाक्षः शङ्खचक्रगदाधरः ।

---

* भागवतामिति आर्षं, भागवतानामिति साधु । † द्विजोत्तम इति (क) ।

वराहरूपी भगवान् लोकनाथोजनार्द्दनः ।
उवाच मधुरं वाक्यं मेघदुन्दुभिनिःस्वनः ॥ ५४ ।
भक्तकर्म्मसुखार्थाय गुणवित्तसमन्विताम् ।
अनेनैव विधानेन आचारेण समन्वितः ।
देवि कारयेत* कर्म्म मम लोकाय गच्छति ॥ ५५ ।
क्रुद्धेन न च कर्त्तव्यं लोभेन त्वरया न च ।
मत्पूजनं विधानेन यदीच्छेत्परमां गतिम् ॥ ५६ ।
ये मां देवि यजिष्यन्ति क्रोधन्त्यक्त्वा जितेन्द्रियाः ।
संसारन्ते न गच्छन्ति अपराधविवर्ज्जिताः† ॥ ५७ ।

वराह उवाच

अकर्म्मण्येन पुष्पेण यो मामर्च्चयते भुवि ।
पातनन्तस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे ॥ ५८ ।
नाहं तत्प्रतिगृह्णामि न च ते वै मम प्रियाः ।
मूर्खा भागवता देवि मम विप्रियकारिणः ॥ ५९ ।
पतन्ति नरके घोरे रौरवे तदनन्तरम् ।
अज्ञानस्य च दोषेण दुःखान्यनुभवन्ति च ॥ ६० ।
वानरो दश वर्षाणि मार्ज्जारस्त्र त्रयोदश ।
मूकः पञ्च च वर्षाणि बलीवर्द्दश्च द्वादश ॥ ६१ ।
छागश्चैवाष्टवर्षाणि मासं वै‡ ग्रामकुक्कुटः ।
त्रीणि वर्षाणि महिषो भवत्येव न संशयः ॥ ६२ ।

* कारयेदिति साधु । † अतः परं (ग) पुस्तके इति क्रुद्धप्रायश्चित्तमित्यधिकः पाठो वर्त्तते । ‡ मासौ वार्विति (ग) ।

एतत्ते कथितं भद्रे पुष्पं यन्मे न रोचते ।
अकर्म्मण्यं विशालाक्षि पुष्पं ये च ददन्ति वै ॥ ६३ ।

धरण्युवाच ।

भगवन्यदि तुष्टोऽसि विशुद्धेनान्तरात्मना ।
येन शुध्यन्ति ते भक्तास्तव कर्म्मपरायणाः ॥ ६४ ।

वराह उवाच ।

शृणु तत्त्वेन मे देवि यन्मात्त्वं परिपृच्छसि ।
प्रायश्चित्तं महाभागे येन शुध्यन्ति मानवाः ॥ ६५ ।
एकाहारं ततः कृत्वा मासमेकं वरानन* ।
वीरासनविधींश्चैव कारयेत्सप्त सप्त च ॥ ६६ ।
चतुर्थंभक्ष्यमेकेन मासेन घृतपायसम् ।
यावकान्नं† दिनत्रीणि वायुभक्षो दिनत्रयम् ॥ ६७ ।
य एतेन विधानेन देवि कर्म्माणि कारयेत् ।
सर्व्वपापप्रमुक्तश्च मम लोकं स गच्छति ॥ ६८ ।

इति वराहपुराणे अकर्म्मण्यप्रायश्चित्तं नाम
चतुस्त्रिंशदधिकशततमोऽध्यायः ।

* वसुन्धरे इति (ग) । † श्यामाकान्नमिति (ग) ।

# पञ्चत्रिंशदधिकशततमोऽध्यायः।

वराह उवाच।

रक्तवस्त्रेण संयुक्तो यो हि मामुपसर्पति।
तस्यापि शृणु सुश्रोणि कर्म्म संसारमोक्षणम्॥ १।
रजस्वलासु नारीषु रजो यत्तत्प्रवर्त्तते।
तेनासौ रजसा पुष्टो कर्म्मदोषेण जानतः* ॥ २।
वर्षाणि दश पञ्चैव वसते तत्र निश्चयः।
रजो भूत्वा महाभागे रक्तवस्त्रपरायणः॥ ३।
प्रायश्चित्तं प्रवक्ष्यामि तस्य कायविशोधनम्।
येन शुध्यन्ति ते भूमे पुरुषाः शास्त्रनिश्चिताः॥ ४।
एकाहारन्ततः कृत्वा दिनानि दश सप्त च।
वायुभक्षो दिनत्रीणि दिनमेकं जलाशनः॥ ५।
एवं स मुच्यते भूमे मम विप्रियकारकः।
प्रायश्चित्तं ततः कृत्वा ममासौ रोचते सह॥ ६।
एतत्ते कथितं भूमे रक्तवस्त्रविभूषिते।
प्रायश्चित्तं महाभागे सर्व्वसंसारमोक्षणम्† ॥ ७।
यस्तु मामन्धकारेषु विना दीपेन सुन्दरि।
स्पृशते‡ च विना शास्त्रं त्वरमाणो विमोहितः।

* जानन्निति साधु। † अत्र (ग) पुस्तके रक्तवस्त्रपरिधानप्रायश्चित्तमित्यधिकः पाठो वर्त्तते। ततः परं वराह उवाच इत्यपि च। ‡ स्पृशतीति साधु।

पतनं तस्य वक्ष्यामि शृणुष्व त्वं वसुन्धरे ।
तेन क्लेशं समासाद्य क्लिश्यते च नराधमः ॥ ८।९ ।
अन्धो भूत्वा महाभागे एकं जन्म तमोमय ।
सर्व्वाशी सर्व्वभक्षश्च मानवः सोऽभिजायते ।
अनन्यमानसो भूत्वा भूमि ह्येतत्प्रसाधयेत् ॥ १० ।
प्रायश्चित्तम्प्रवक्ष्यामि अन्धकारे तु यः पुरा ।
संसृष्टात्मोऽपि धर्म्मात्मा येन लोकं मम व्रजेत् ॥ ११ ।
अर्णाः*राच्छादनङ्कृत्वा दिनानि दश पञ्च च ।
एकाहारं ततः कृत्वा दिनविंशसमाहितः ॥ १२ ।
यस्य कस्यापि मासस्य एकामेव च द्वादशीम् ।
एकाहारस्ततो भूत्वा निर्गीर्ष जलाशनः ॥ १३ ।
ततो यवान्नम्भुञ्जीत गोमूत्रेण तु पाचितम् ।
प्रायश्चित्तेन चैतेन मुच्यते पातकात्ततः† ॥ १४ ।
यः पुनः कृष्णवस्त्रेण मम कर्म्मपरायणः ।
देवि कर्म्माणि कुर्व्वीत तस्य वै पातनं शृणु ॥ १५ ।
घुणो वै पञ्चवर्षाणि लाजवास्तुसमाश्रयः ।
पञ्च वर्षाणि नकुलो दश वर्षाणि कच्छपः ॥ १६ ।
एवं भ्रमति संसारे मम कर्म्मपरायणः ।
पारावतेषु जायेत नव वर्षाणि पञ्च च ॥ १७ ।

* अर्णामिति (क), (ख) । † अत (ग) पुस्तके अन्धकारप्रायश्चित्तं ततः वराह उवाच इत्यधिकः पाठो वर्त्तते ।

जातो ममापराधेन स्थितः पारावतो भुवि।
तिष्ठते मम पार्श्वेषु यत्रैवाहं प्रतिष्ठितः॥ १८॥
प्रायश्चित्तं प्रवक्ष्यामि तस्य संसारमोक्षणि।
येनासौ लभते सिद्धिं कृष्णवस्त्रापराधतः॥ १९॥
सप्ताहं यावकं भुक्त्वा त्रिरात्रं सक्तुपिण्डिकाम्।
त्रीणि पिण्डांस्त्रिरात्रन्तु एवं मुच्येत किल्विषात्॥२०॥
य एतेन विधानेन देवि कर्म्माणि कारयेत्।
शुचिर्भागवतो भूत्वा मम मार्गानुसारतः*।
न स गच्छति संसारं मम लोकाय गच्छति†॥ २१॥
वाससा चाविधौतेन यो मे कर्म्माणि कारयेत्।
शुचिर्भागवतो भूत्वा मम मार्गानुसारकः॥ २२॥
तस्य दोषं प्रवक्ष्यामि अपराधं वसुन्धरे।
पतन्ति येन संसारं वाससोच्छिष्टकारिणः॥ २३॥
देवि भूत्वा गजो मत्तस्तिष्ठत्येकं नरो भुवि।
उष्ट्रश्चैकं भवेज्जन्म जन्म चैकं वृकस्तथा॥ २४॥
गोमायुरेकं जन्मापि जन्म चैकं हयस्तथा।
सारङ्गस्त्वेकजन्मा वै मृगो भवति वै ततः॥ २५॥
सप्तजन्मान्तरं पश्चात्ततो भवति मानुषः।
मद्भक्तश्च गुणज्ञश्च मम कर्म्मपरायणः।

* सारग इति (ग)। † अतः परं (ग) पुस्तके इति कृष्णवस्त्रापराधप्रायश्चित्तम्। वराह उवाच इत्यधिकः पाठो वर्त्तते।

निरपराधो दन्तश्च अहङ्कारविवर्ज्जितः ॥ २६ ॥

धरण्युवाच ।

श्रुतमेतन्मया देव यत्त्वया समुदाहृतम् ।
संसारं वामसोच्छिष्टा येन गच्छन्ति मानुषाः ॥ २७ ॥
प्रायश्चित्तञ्च मे ब्रूहि सर्व्वकर्म्मसुखावहम् ।
किल्बिषाद्येन मुच्यन्ते तव कर्म्मपरायणाः ॥ २८ ॥

वराह उवाच ।

शृणु तत्त्वेन मे देवि कथ्यमानं मयाऽनघे ।
प्रायश्चित्तम्प्रवक्ष्यामि मम कर्म्मपरायणः ॥ २९ ॥
यावकेन दिनं त्रीणि पिण्याकेन दिनत्रयम् ।
पर्णभक्षो दिनत्रीणि पयोभक्षो दिनत्रयम् ॥ ३० ॥
पायसेन त्रिरात्रन्तु वायुभक्षो दिनत्रयम् ।
एवङ्कृत्वा महाभागे वामसोच्छिष्टकारिणः ।
अपराधन्न विन्देरन् संसारं न प्रयान्ति च* ॥ ३१ ॥
श्वानोच्छिष्टन्तु† यो दद्यान्मम कर्म्मपरायणः ।
पापन्तस्य प्रवक्ष्यामि संसारे च महद्भयम् ॥ ३२ ॥
श्वानो वै सप्त जन्मानि गोमायुः सप्त वै तथा ।
उलूकः सप्त वर्षाणि‡ पश्चाज्जायेत मानुषः ॥ ३३ ॥
विशुद्धात्मा शुचिश्चैव मद्भक्तश्चैव जायते ।

* (ग) पुस्तके अतः परमधीतवासःप्रायश्चितम् । वराह उवाच इत्यधिकः पाठो वर्त्तते ।
† श्वानोच्छिष्टमिति आर्षं, शुनोच्छिष्टमिति साधु । ‡ सप्त जन्मानीति (ग) ।

गृहे भागवतोत्कृष्टे अपराधविवर्ज्जितः ॥ ३४ ।
शृणु तत्त्वेन वसुधे प्रायश्चित्तं महौजसम्* ।
तरन्ति मानुषा येन त्यक्त्वा संसारसागरम् ॥ ३५ ।
मूलभक्षो दिनत्रीणि फलाहारो दिनत्रयम् ।
शाकभक्षो दिनत्रीणि पर्णभक्षो दिनत्रयम् ॥ ३६ ।
दध्याहारो दिनत्रीणि पायसेन दिनत्रयम् ।
वाय्वाहारो दिनत्रीणि स्नानङ्कृत्वा दृढ़व्रतः ॥ ३७ ।
एवं दिनान्येकविंशत्कृत्वा वै शुभलक्षणम् ।
अपराधं न विन्देत मम लोकाय गच्छति ॥ ३८ ।
भुक्त्वा वराहमांसन्तु यश्च मामिह सर्पति ।
पातनं तस्य वक्ष्यामि यथा भवति सुन्दरि ॥ ३९ ।
वराहो दश वर्षाणि कृत्वानुचरते वने ।
व्याधो भूत्वा महाभागे समाः पञ्च च सप्त च† ॥ ४० ।
ततश्च मूषको भूत्वा वर्षाणि च चतुर्द्दश ।
एकोनविंशतिवर्षाणि‡ यातुधानश्च जायते ॥ ४१ ।
शल्लको चाष्टवर्षाणि जायते भवने बहु
व्याघ्रस्त्रिंशच्च वर्षाणि जायते पिशिताशनः ॥ ४२ ।
एवं संसारिताङ्कृत्वा वराहामिषभक्षकः ।
जायते विपुले सिद्धे कुले भागवते तथा ॥ ४३ ।

* महौजसमिति (ग) । † अतः परं (ग) पुस्तके भूत्वा समाः सप्त सप्त तिष्ठते तत्र काले इत्यधिकः पाठो वर्त्तते । ‡ अत्रैकाक्षराधिक्याच्छन्दोदोषः ।

हृषीकेशवचः श्रुत्वा सर्व्वं सम्पूर्णलक्षणम् ।
शिरसा चाञ्जलिं कृत्वावाक्यञ्चेदमुवाच ह ॥ ४४ ।
एतन्मे परमं गुह्यं तव भक्तसुखावहम् ।
वराहमांसभक्षम्नु येन मुच्येत किल्बिषात् ॥ ४५ ।
तरन्ति मानुषा येन तिर्य्यक्संसारसागरात् ।
गोमयेन दिनं पञ्च कणाहारेण सप्त वै ॥ ४६ ।
पानीयन्तु ततो भुक्ता तिष्ठेत्सप्तदिनं ततः ।
अक्षारलवणं सप्त सक्तुभिश्च तथा त्रयः ॥ ४७ ।
तिलभक्षो दिनान् सप्त पाषाणस्य च भक्षकः ।
पयो भुक्ता दिनं सप्त कारयेद्बुद्धिमान्नरः ॥ ४८ ।
क्षान्तं दान्तं तथा कृत्वा अहङ्कारविवर्ज्जितः ।
दिनान्येकोनपञ्चाशच्चरेत्कृतविनिश्चयः ॥ ४९ ।
विमुक्तः सर्व्वपापेभ्यः ससंज्ञो विगतज्वरः ।
कृत्वा मम च कर्म्माणि मम लोकाय गच्छति* ॥ ५०

जालपादं भक्षयित्वा यस्तु मामुपसर्पति ।
जालपादस्ततो भूत्वा वर्षाणि दश पञ्च च ॥ ५१ ।
कुम्भीरो दश वर्षाणि पञ्चवर्षाणि शूकरः ।
तावद्भ्रमति संसारे मम चैवापराधतः ॥ ५२ ।
कृत्वा तु दुष्करं कर्म्म जायते विपुले कुले ।

* (ग) पुस्तके इति वराहमांसभक्षणप्रायश्चित्तम् । वराह उवाच इत्यधिकः पाठो वर्त्तते ।

शुद्धो भागवतश्रेष्ठो ह्यपराधविवर्ज्जितः ।
सर्व्वकर्म्माण्यतिक्रम्य मम लोकाय गच्छति ॥ ५३ ।
प्रायश्चित्तं प्रवक्ष्यामि जालपादस्य भक्षणे ।
तरन्ति मनुजा येन घोरसंसारसागरात् ॥ ५४ ।
यावकान्नं दिनत्रीणि वायुभक्षो दिनत्रयम् ।
फलभक्षो दिनत्रीणि तिलभक्षो दिनत्रयम् ॥ ५५ ।
अक्षारलवणाम्नाशी पुनस्तत्र दिनत्रयम् ।
पञ्चदश दिनान्येवं प्रायश्चित्तं समाचरेत् ॥ ५६ ।
जालपादापराधस्य एवं कुर्व्वीत शोधनम् ।
विनीतात्मा शुचिर्भूत्वा य इच्छेत्सुन्दरां गतिम् ॥ ५७ ।

इति वराहपुराणे जालपादभक्षणापराधप्रायश्चित्तं नाम
पञ्चत्रिंशदधिकशततमोऽध्यायः ।

## षट्त्रिंशदधिकशततमोऽध्यायः ।

वराह उवाच ।

दीपं स्पृष्ट्वा तु यो देवि मम कर्म्माणि कारयेत् ।
तस्यापराधाद्वै भूमि* पातं प्राप्नोति मानवः ।
तच्छृणुष्व महाभागे कथ्यमानं मयाऽनघे ॥ १ ।
जायते षष्टिवर्षाणि कुष्ठी गात्रपरिप्लुतः ।

* तस्यापराधेन भूमी इति (क), (ख) ।

चाण्डालस्य गृहे तत्र एवमेतन्न संशयः ॥ २ ।
एवं भुक्त्वा तु तत्कर्म्म मम तेत्रे मृता यदि ।
मद्भक्तश्चैव जायेत शुद्धे भागवते गृहे ॥ ३ ।
प्रायश्चित्तं प्रवक्ष्यामि दीपस्य स्पर्शनाद्भुवि ।
तरन्ति मनुजा येन कष्टं चाण्डालयोनिषु ॥ ४ ।
यस्य कस्यापि मासस्य शुक्लपक्षे च द्वादशी ।
चतुर्थभक्तमाहारमाकाशशयने स्वपेत् ॥ ५ ।
दीपं दत्त्वापराधार्हं तरन्ति मनुजा भुवि ।
शुचिर्भूत्वा यथान्यायं मम कर्म्मपथे स्थितः ॥ ६ ।
एतत्ते कथितं भद्रे स्पर्शने दीपकस्य तु ।
संसारशोधनश्चैव यत्कृत्वा लभते शुभम्* ॥ ७ ।
श्मशानं यो नरो गत्वा अस्नात्वैव तु मां स्पृशेत् ।
मम दोषापराधस्य शृणु तत्त्वेन यत्फलम् ॥ ८ ।
जम्बूको जायते भूमौ वर्षाणां नव पञ्च च ।
गृध्रस्तु सप्त वर्षाणि जायते खचरेश्वरः ॥ ९ ।
चरन्तौ मानुषं मांसमुभौ† तौ गृध्रजम्बुकौ ।
पिशाचो जायते तत्र वर्षाणि नव पञ्च च ।
ततस्तु कुणपोच्छिष्टं त्रिंशद्वर्षाणि खादति ॥ १० ।
ततो नारायणाच्छ्रुत्वा धरणी वाक्यमब्रवीत् ।

* अतः परं (ख) पुस्तके दीपस्पर्शापराधप्रायश्चित्तम् । वराह उवाच इत्यधिकः पाठोऽस्ति । † मांसं भूमौ इति (ग) ।

एतन्मे परमं गुह्यं लोकनाथ जनार्द्दन ।
परं कौतूहलन्देव निखिलं वक्तुमर्हसि ॥ ११ ।
श्मशानं पुण्डरीकाक्ष ईश्वरेण प्रशंसितम् ।
किन्त्वत्र त्रिगुणन्देव पवित्रे शिवभाषिते ॥ १२ ।
स तत्र रमते नित्यं भगवांस्तु महामतिः* ।
कपालं गृह्य† देवोऽत्र दीप्तिमन्तं महौजसम् ॥ १३ ।
प्रशंसितञ्च रुद्रेण भवता किं विनिन्दितम् ।
श्मशानं पद्मपत्राक्ष रुद्रस्य च निशि प्रियम् ॥ १४ ।

वराह उवाच ।

शृणु तत्त्वेन मे देवि इदमाख्यानमुत्तमम् ।
अद्यापि ते न जानन्ति अनघे शंसितव्रताः ॥ १५ ।
कृत्वा सुदुष्करं कर्म्म सर्व्वभूतपतिं हरिम् ।
हत्वा च बालान् वृद्धांश्च त्रिपुरे रूपिणीः स्त्रियः ॥
तेन पापेन सम्बद्धो न शक्नोति विचेष्टितुम् ।
प्रनष्टमानसैश्वर्य्यो नष्टा माया च योगिनः ॥ १६।१७ ।
विवर्णवदनो भूत्वा तिष्ठते स महेश्वरः ।
तत्र स्थाने शिवो भूमे गणैः सर्वैः समावृतः ॥ १८ ।
नष्टमायं ततो देवि चिन्तयामि वसुन्धरे ।
ततो ध्यातो मया देवि शङ्करः पुनरेष्यति ॥ १९ ।
यावत्पश्यामि तन्देवं देवि दिव्येन चक्षुषा ।

* महाद्युतिरिति (ग) । † गृहीत्वेति साधु ।

नष्टं मायाबलं* रुद्रं सर्व्वभूतमहेश्वरम् ॥ २० ।
ततोऽहं तत्र गत्वा तु यष्टुकामन्त्रियम्बकम् ।
नष्टसंज्ञो हतज्ञानो नष्टयोगबलोऽबलः ॥ २१ ।
तत ईशो मया चोक्तो वाक्यमेवं सुखावहम् ।
किमिदन्तिष्ठसि रुद्र कश्मलेन समावृतः । २२ ।
त्वं कर्त्ता च विकर्त्ता च विकाराकार एव च ।
त्वं वैराग्यं+ नियोगश्च त्वं योनिस्त्वम्परायणम् ॥ २३ ।
त्वमदेशदेशादिस्त्वं नाम त्वं तथा दिशः
किमर्थं बुध्यसि चात्मानं गतः परिक्लान्तो भवान् ॥ २४ ।
किमिदं देवदेवेश विवर्णः पृथुलोचनः ।
तन्ममाचक्ष्व तत्त्वेन यत्पृष्टोऽसि मया भवान् ॥ २५ ।
स्मर योगञ्च मायाञ्च पश्य विष्णोर्महात्मनः ।
तव चैव प्रियार्थाय येनाहमिह चागतः ॥ २६ ।
ततो मम वचः श्रुत्वा लब्धसंज्ञो महेश्वरः ।
उवाच मधुरं वाक्यं पापसन्तमलोचनः ॥ २७ ।
शृणु तत्त्वेन मे देव कोऽन्योऽप्येवं करिष्यति ।
देवं नारायणञ्चैकं सर्व्वलोकमहेश्वरम् ॥ २८ ।
हे विष्णो त्वत्प्रसादेन देवत्वञ्चैव माधव ।
लब्धो योगश्च साङ्ख्यञ्च जातोऽस्मि विगतज्वरः ॥ २९ ।
त्वत्प्रसादेन जातोऽस्मि पूर्णाम्बुरिव सागरः ।

---

* नष्टमायावनमिति (ग)। + त्वं वै सांख्यश्च योगश्चेति (ग)।

अहन्त्वान्तु विजानामि मान्त्वं जानासि माधव ॥ ३० ।
आवयोरन्तरं कोऽपि न पश्यति जनार्द्दन ।
ब्रह्माणन्तु विजानाति नावयोरन्तरेण हि ।
साधु विष्णो महाभाग सर्व्वमायाकरण्डक ॥ ३१ ।
एवं मह्यं हरो वाक्यमुक्त्वा भूतमहेश्वरः ।
मुहूर्त्तं ध्यानमास्थाय पुनः प्रोवाच माधवि ॥ ३२ ।
तत्र विष्णोः प्रसादेन मया तत्त्रिपुरं हतम् ।
निहता दानवास्तत्र शरैश्चैश्च निपातिताः ॥ ३३ ।
बालवृद्धा हतास्तत्र विस्फुरन्तो दिशो दश ।
तस्य पापस्य दोषेण* न शक्नोमि विचेष्टितुम् ॥ ३४ ।
प्रनष्टयोगमायश्च नष्टैश्वर्य्यश्च माधव ।
किङ्कर्त्तव्यं मया विष्णो पापावस्थेन सम्प्रति ॥ ३५ ।
विष्णो तत्त्वेन मे ब्रूहि शोधनं पापनाशनम् ।
येन वै कृतमात्रेण शुद्धो मुच्येय किल्विषात् ॥ ३६ ।
एवं चिन्तात्मनस्तस्य मया रुद्रस्य भाषितम् ।
कपालमालां गृहीत्वा समलं† गच्छ शङ्कर ॥ ३७ ।
ममैवं वचनं श्रुत्वा भगवान्परमेश्वरः ।
उवाच मां पुनर्व्यक्तं मां बोधय जगत्पते ।
कीदृशः समलो विष्णो यत्र गच्छामहे वयम् ॥ ३८ ।
ततस्तस्य वचः श्रुत्वा शङ्करस्य महेश्वरि ।

* तस्य पापेन दोषस्येति (ग)।　† तं शमनमिति (ग)।

तत्पापशोधनार्थाय मया वाक्यं प्रभाषितम् ॥ ३८ ॥
श्मशानं मङ्गलं कृत्वा पूतिकाः* व्रणगन्धिकः ।
स्वयं तिष्ठन्ति† ये तत्र मनुजा विगतस्पृहाः ॥ ४० ॥
तत्र गृह्णाति कपालानि रम तत्रैव शङ्कर ।
तत्र वर्षसहस्राणि दिव्यान्येव हरव्रत ॥ ४१ ॥
ततो भक्षय मांसानि पापक्षयचिकीर्षुकः ।
हतानां चैव मांसानि ये च भोज्यास्तव प्रियाः‡ ॥ ४२ ॥
एवं सर्व्वैर्गणैः सार्द्धं वस तत्र सुनिश्चितः ।
पूर्णे वर्षसहस्रे तु स्थित्वा त्वं समन्तः§ पुनः ।
गच्छाश्रमपदं पश्चाद्गौतमस्य महात्मनः ॥ ४३ ॥
तत्र ज्ञास्यसि चात्मानं गौतमाश्रमसंस्थितः ।
प्रसादाद्गौतमस्यैव भविता॥ गतकिल्बिषः ॥ ४४ ॥
सततं पापसम्पन्नं कपालं शिरसि स्थितम् ।
ऋषिः पातयिता शक्रस्त्वत्प्रसादान्न संशयः ॥ ४५ ॥
एवं रुद्रं वरं दत्त्वा तत्रैवान्तर्हितोऽभवम् ।
रुद्रोऽपि भ्रमते॥ तत्र श्मशाने पापसंवृते ॥ ४६ ॥
अतो न रोचते भूमे श्मशानं मे कदाचन ।
यत्र रुद्रकृतस्पापं स्थितश्चिह्न भयावहम् ॥ ४७ ॥
एतत्ते कथितम्भद्रे श्मशानं मे जुगुप्सितम् ।

---

* शमनमिति ग. । † गृह्णन्तीति साधु । ‡ अत पुस्तकमार्गं यानि भोज्यानीति साधु । § शमनं इति ग । ¶ भवितेति ग. । ॥ भाम्यति, भ्रमति वा साधु ।

विना तु कृतसंस्कारो मम कर्म्मपरायणः।
प्रायश्चित्तम्प्रवक्ष्यामि येन शुध्यति किल्बिषात्॥ ४८।
कृत्वा चतुर्थभक्तन्तु दिनानि दश पञ्च च।
आकाशशयनं कुर्य्यादेकवस्त्रः कुशासने॥ ४९।
प्रभाते पञ्चगव्यञ्च पातव्यं कर्म्मशोधनम्।
विमुक्तः सर्व्वपापेभ्यो मम लोकाय गच्छति*॥ ५०।
पिण्याकं भक्षयित्वा तु यो देवमुपसर्पति।
तस्य वै शृणु सुश्रोणि प्रायश्चित्तं सुशोधनम्॥ ५१।
उलूको दश वर्षाणि कच्छपस्तु समास्त्रयः।
जायते मानवस्तत्र मम कर्म्मपरायणः॥ ५२।
यांस्तु दोषान्प्रपश्यन्ति† संसारेऽस्मिन्वसुन्धरे।
तस्य वक्ष्यामि सुश्रोणि प्रायश्चित्तं महौजसम्॥ ५३।
किल्बिषाद्येन मुच्येत संसारान्तञ्च गच्छति।
यावकेन दिनैकन्तु गोमूत्रेण च कारयेत्॥ ५४।
रात्रौ वीरासनं कुर्य्यादाकाशशयने‡ वसेत्।
स न गच्छति संसारं मम लोकाय गच्छति§॥ ५५।
वराहमांसेन तु यो मम कुर्व्वीत प्रापणम्।
मूर्खः स पापकर्म्मा च मम कर्म्मपरायणः।
यांस्तु दोषान्प्रपद्येत संसारञ्च वसुन्धरे॥ ५६।

---

* अतः परं (ग) पुस्तके श्मशानप्रवेशापराधप्रायश्चित्तम्। वराह उवाचेत्यधिकः पाठो वर्त्तते। † प्रपश्यन्तीति साधु। ‡ कुर्य्यादाकाशशयने इति (ग)। § अतः परं (ग) पुस्तके पिण्याकभक्षणप्रायश्चित्तम्। वराह उवाचेत्यधिकः पाठो वर्त्तते।

यावद्रोम वराहस्य मम गात्रेषु संस्थितम् ।
तावद्वर्षसहस्राणि नरके पच्यते भुवि ॥ ५७ ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
वराहेण तु मांसेन यस्तु कुर्व्वीत प्रापणम् ॥ ५८ ।
यावत्तत्तनुसंस्थन्तु भाजने तु प्रतिष्ठितम् ।
तावत्स पतते* देवि सौकरीं योनिमाश्रितः ॥ ५९ ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
यां गतिं सम्प्रपद्येत मम कर्म्मपरायणः ॥ ६० ।
अन्धो भूत्वा ततो देवि जन्म चैवं प्रतिष्ठितम् ।
एवं गत्वा तु संसारं वराहमांसप्रापणात् ।
जायते विपुले सिद्धे कुले भागवत शुचिः ॥ ६१ ।
विनीतः कृतसंस्कारो मम कर्म्मपरायणः ।
द्रव्यवान् गुणवांश्चैव रूपवान् शीलवान् शुचिः ॥ ६२ ।
प्रायश्चित्तम्प्रवक्ष्यामि तस्य कायविशोधनम् ।
किल्विषाद्येन मुच्येत मम कर्म्मपरायणः ॥ ६३ ।
फलाहारो दिनान्सप्त सप्त मूलाशनस्तथा ।
दिनानि सप्त तिष्ठेत सप्त वै पायसेन च ॥ ६४ ।
तक्रेण सप्त दिवसान् सप्त पावकभोजनः ।
प्रायश्चित्तान्महाभागे मम लोकाय गच्छति+ ॥ ६५ ।

* पततीति साधु । + (ग) पुस्तके,तः परं वराहमांसप्रापणापराधप्रायश्चित्तम् ।
तह उवाच इत्यधिकः पाठो दृश्यते ।

मद्यम्पीत्वा वरारोहे यस्तु मामुपसर्पति।
तत्र दोषम्प्रवक्ष्यामि शृणु सुन्दरि तत्त्वतः॥ ६६।
दशवर्षसहस्राणि दरिद्रो जायते पुनः।
ततो भवेत्सुपूतात्मा मद्भक्तः स न संशयः॥ ६७।
यस्तु भागवतोभूत्वा कामरागेण मोहितः।
दीक्षितः पिबते मद्यम्प्रायश्चित्तं न विद्यते॥ ६८।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
अग्निवर्णां सुरां पीत्वा तेन मुच्येत किल्विषात्॥ ६९।
य एतेन विधानेन प्रायश्चित्तं समाचरेत्।
न स लिप्यति पापेन संसारञ्च न गच्छति*॥ ७०।
कौसुम्भञ्चैव यः शाकं भक्षयेन्मम पूजकः।
नरके पच्यते घोरे दश पञ्च च सूकरः†॥ ७१।
ततोगच्छेच्छ्वयोनौ च त्रीणि वर्षाणि जम्बुकः।
वर्षमेकं ततः शुध्येन्मत्कर्म्मणि रतः शुचिः‡।
मम लोकमवाप्नोति शुद्धोभूत्वा वसुन्धरे॥ ७२,७३।
ततो भूमिर्वचः श्रुत्वा प्रत्युवाच पुनर्हरिम्।
कुसुम्भशाकनैवेद्यप्रापणेन च किल्विषात्।
कथं मुच्येत देवेश प्रायश्चित्तं वद प्रभो॥ ७४।

वराह उवाच।

यो मे कुसुम्भशाकेन प्रापणं कुरुते नरः।

---

* (ग) पुस्तकेऽतः परं मद्यपानप्रायश्चित्तम्। वराह उवाचेत्यधिकः पाठो दृश्यते।
† शूकर इति (ग)। ‡ मत्कर्म्मनिरतः शुचिर्व्रतोति (ग)।

दशवर्षसहस्राणि नरके परिपच्यते ॥ ७५ ।
प्रायश्चित्तम्प्रवक्ष्यामि तच्च मे वदतः शृणु ।
भक्षणे तु कृते कुर्य्याच्चान्द्रायणमतन्द्रितः ।
प्रापणे तु कृते कुर्य्याद्द्वादशाहं पयोव्रतम् ॥ ७६ ।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
न स लिप्येत पापेन मम लोकञ्च गच्छति* ॥ ७७
यः पारक्येण वस्त्रेण न धूतेन च माधवि ।
प्रायश्चित्तीभवेन्मूर्खो† मम कर्म्मपरायणः ॥ ७८ ।
करोति मम कर्म्माणि स्पृशते‡ मां तदा स्थितः ।
मृगो वै जायते देवि वर्षाणि त्रीणि सप्त च ॥ ७९ ।
हीनपादेन जायेत चैकञ्जन्म वसुन्धरे ।
मूर्खश्च क्रोधनश्चैव मङ्कश्चैव जायते ॥ ८० ।
तस्य वक्ष्यामि सुश्रोणि प्रायश्चित्तं महौजसम् ।
येन गच्छति संसारं मम भक्तो व्यवस्थितः ॥ ८१ ।
अष्टभक्तं ततः कृत्वा मम भक्तिपरायणः ।
माघस्यैव तु मासस्य शुक्लपक्षस्य द्वादशीम् ॥ ८२ ।
तिष्ठेज्जलाशये गत्वा शान्तो दान्तो यतव्रतः ।
अनन्यमानसो भूत्वा मम चिन्तापरायणः ॥ ८३ ।
प्रभातायान्तु शर्व्वर्य्यामुदिते तु दिवाकरे ।

* (ग) पुस्तकेऽतः परं कुसुम्भशाकभक्षणप्रापणकयोः प्रायश्चित्तम् । वराह उवाचेत्यधिकः पाठः । † प्रायश्चित्ताद्भवेन्मूर्ख इति (ग) । ‡ स्पृशतीति साधु ।

पञ्चगव्यं ततः पीत्वा मम कर्म्माणि कारयेत् । ८४ ।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
सर्व्वपापविनिर्मुक्तो मम लोकाय गच्छति* ॥ ८५ ।
अकृत्वा यो नवान्नानि मम कर्म्मपरायणः ।
ततो भागवतो भूत्वा नवान्नं यो न कारयेत् ।
पितरस्तस्य नाश्नन्ति वर्षाणि दश पञ्च च ॥ ८६ ।
अदत्त्वा यस्तु भुञ्जीत नवान्नानि कदाचन ।
न तस्य धर्म्मो विद्येत एवमेतन्न संशयः ॥ ८७ ।
अन्यच्च ते प्रवक्ष्यामि येन तस्मात्प्रमुच्यते ।
प्रायश्चित्तं महाभागे मम भक्तसुखावहम् ॥ ८८ ।
उपवासं त्रिरात्रन्तु तत एकेन वा पुनः ।
आकाशशयनङ्कृत्वा चतुर्थेऽहनि शुध्यति ॥ ८९ ।
एवं तत्र विधिङ्कृत्वा उदिते च दिवाकरे ।
पञ्चगव्यं ततः पीत्वा शीघ्रं मुच्येत किल्बिषात् ॥ ९० ।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
सर्व्वसङ्गं परित्यज्य मम लोकाय गच्छति† ॥ ९१ ।
अदत्त्वा गन्धमाल्यानि यो मे धूपं प्रयच्छति ।
कुणपो जायते भूमौ यातुधानो न संशयः ॥ ९२ ।
वर्षाणि चैकविंशानि अयस्कारनिवासकः ।

* (ग) पुस्तकेऽतः परं परकीयवस्त्रापराधप्रायश्चित्तम् । वराह उवाचेत्यधिकः पाठः ।

† (ग) पुस्तकेऽतः परं नवान्नभक्षणप्रायश्चित्तम् । वराह उवाचेत्यधिकः पाठः ।

तिष्ठते*ऽत्र महाभागे एवमेतन्न संशयः ॥ ८३ ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
प्रायश्चित्तम्प्रवक्ष्यामि येन मुच्येत किल्बिषात् ॥ ८४ ।
यस्य कस्यचिन्मासस्य शुक्लपक्षस्य द्वादशीम् ।
उपोष्य चाष्टभक्तन्तु दशैकादशमेव च ॥
प्रभातायान्तु शर्व्वर्य्यामुदिते रविमण्डले ।
पञ्चगव्यं ततः पीत्वा शीघ्रं मुच्यति† किल्बिषात्॥८५।८६।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
तानि तानि तरल्येनं‡ सर्व्व एव पितामहाः§ ॥ ८७ ।
वहन्नुपानहौ पद्भ्यां यस्तु मामुपचङ्क्रमेत् ।
चर्म्मकारस्तु जायेत वर्षाणान्तु त्रयोदश ॥ ८८ ।
तज्जन्मनः परिभ्रष्टः सूकरो जायते पुनः ।
सूकरत्वात्परिभ्रष्टः श्वा भवेच्च जुगुप्सितः ॥ ८९ ।
ततः श्वत्वात्परिभ्रष्टो मानुषेषूपजायते ।
मद्भक्तश्च विनीतश्च अपराधविवर्ज्जितः ।
मुक्तस्तु सर्व्वसंसारान्मम लोकाय गच्छति ॥ १०० ।
य एतेन विधानेन वसुधे कर्म्म कारयेत् ।
न स लिप्येत पापेन एवमेतन्न संशयः|| ॥ १०१ ।

---

* तिष्ठतीति साधु । † मुच्यत इति साधु । ‡ तरल्येवेति (ग) । § अतः परं (ग) पुस्तके गन्धमाल्यदानं विना धूपदाने प्रायश्चित्तम् । वराह उवाच इत्यधिकः पाठः । ¶ शकरत्वादिति (ग) । || उपानहापराधप्रायश्चित्तम् । वराह उवाच इति (ग) पुस्तके अधिकः पाठः ।

भेरीशब्दमकृत्वा तु यस्तु मां प्रतिबोधयेत्।
वधिरोजायते भूमे एकं जन्म न संशय:॥ १०२।
तस्य वक्ष्यामि सुश्रोणि प्रायश्चित्तं मम प्रियम्।
किल्विषाद्येन मुच्येत भेरीताड़नमोहित:॥ १०३।
यस्य कस्यचिन्मासस्य शुक्लपक्षे तु द्वादशी।
आकाशशयनङ्कृत्वा शीघ्रं मुच्येत किल्विषात्॥ १०४।
य एतेन विधानेन वसुधे कर्म्म कारयेत्।
अपराधन्न गच्छेत मम लोकाय गच्छति*॥ १०५।
अन्नम्भुक्त्वा बहुतरमजीर्णेन परिप्लुत:।
उद्गारेण समायुक्त: अस्नात उपसर्पति॥ १०६।
एकजन्मनि श्वा चैव वानरश्चैव जायते।
एकस्मिञ्जन्मनि च्छाग: शृगालश्चैकजन्मनि॥ १०७।
एकजन्म भवेदन्धो मूषिको जायते पुन:।
तारितो ह्येष संसाराज्जायते विपुले कुले॥ १०८।
शुद्धोभागवत: श्रेष्ठस्त्वपराधविवर्ज्जित:।
प्रायश्चित्तम्प्रवक्ष्यामि मम भक्तसुखावहम्॥ १०९।
किल्विषाद्येन मुच्येत मम भक्तिपरायण:।
त्रिदिनं पावकाहारो मूलाहारो दिनत्रयम्॥ ११०।
पायसेन दिनत्रीणि त्रिदिनं शक्तुना तथा।

* (ग) पुस्तकेऽत: परं भेरीताड़नापराधप्रायश्चित्तम्। वराह उवाचेत्यधिक: पाठ.।

त्रिदिनं वायुभक्षोऽपि आकाशशयनस्त्रिकम् ॥ १११ ।
उत्थायापररात्रे तु कृत्वा वै दन्तधावनम् ।
पञ्चगव्यं पिबेच्चैव शरीरपरिशोधनम् ॥ ११२ ।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
न स लिप्येत पापेन मम लोकाय गच्छति ॥ ११३ ।
आख्यानानां महाख्यानं तपसाञ्च परन्तप: ।
अत्राहङ्कीर्त्तयिष्यामि ब्राह्मणेभ्यो महेश्वरि ॥ ११४ ।
एष धर्म्मश्च कीर्त्तिश्च आचाराणां महौजसाम् ।
गुणानाञ्च परं श्रेष्ठ ऋतीनाञ्च महाकृति:* ॥ ११५ ।
य एतत्पठते नित्यं कल्यमुत्थाय मानव: ।
स पितॄंस्तारयेज्जन्तुर्द्दश पूर्व्वान्दशापरान् ॥ ११६ ।
आरोग्याणां महारोग्यं मङ्गलानान्तु मङ्गलम् ।
रत्नानां परमं रत्नं सर्व्वपापप्रणाशनम् ॥ ११७ ।
यस्तु भागवतो नित्यं पठते च दृढ़व्रत: ।
कृत्वा सर्व्वापराधानि न स पापेन लिप्यते ॥ ११८ ।
एष जप्य: प्रमाणञ्च सन्ध्योपासनमेव च ।
कल्यमुत्थाय पठते मम लोकाय गच्छति ॥ ११९ ।
न पठेन्मूर्खमध्ये तु कुशिष्याणां तथैव च ।
दद्याद्भागवते श्रेष्ठे मम कर्म्मपरायणे ॥ १२० ।

* द्युतीनाञ्च महाद्युतिरिति (ग) ।

एतत्ते कथितो देवि आचारस्य विनिश्चयः ।
पूर्व्वन्त्वया यत्पृष्टन्तु किमन्यच्छ्रोतुमिच्छसि ॥ १२१ ।

इति वराहपुराणे भगवच्छास्त्रे प्रायश्चित्तकर्म्मसूत्रं नाम
षट्त्रिंशदधिकशततमोऽध्यायः ।

## सप्तत्रिंशदधिकशततमोऽध्यायः ।

सूत उवाच ।

श्रुत्वा तु विपुलं ह्येतदपराधविशोधनम् ।
कर्म्म भागवतं श्रेष्ठं सर्व्वभागवतप्रियम् ॥ १ ।
अहो कर्म्म महाश्रेष्ठं भगवंस्तव भाषितम् ।
मम चैव प्रियार्थाय तव भक्तसुखावहम् ॥ २ ।*
श्रुतं ह्येव महाबाहो सर्व्वधर्म्मार्थसाधकम् ।
तव भक्तसुखार्थाय तद्भवान्वक्तुमर्हति ॥ ३ ।
किमुच्यते व्रतञ्चैव शुभं कुब्जाम्रकं† महत् ।
कतरच्चापि तच्छ्रेष्ठं चैत्रभक्तसुखावहम् ॥ ४ ।

वराह उवाच ।

शृणु मे परमं गुह्यं यत्त्वया पृच्छितं‡ मम ।

* एष श्लोकः क खयोः पुस्तकयोर्नास्ति । † कुब्जाम्रकं महदिति (ग) । ‡ पृष्टमिति साधु ।

मम क्षेत्रं परञ्चैव शुद्धं भागवतप्रियम् ॥ ५ ॥
परं कोकामुखं स्थानं तथा कुब्जाम्रकं परम् ।
परं सौकरवं स्थानं सर्व्वसंसारमोक्षणम् ॥ ६ ॥
यत्र संस्था च मे देवि उद्धृतासि रसातलात् ।
यत्र भागीरथी गङ्गा मम सौकरवे स्थिता ॥ ७ ॥

धरोवाच ।

केषु लोकेषु यान्तीश सौकरे ये मृताः प्रभो ।
किं वा पुण्यं भवेत्तत्र स्नातस्य पिबतस्तथा ॥ ८ ॥
कति तीर्थानि पश्चात्त क्षेत्रे सौकरवे तव* ।
धर्म्मसंस्थापनार्थाय तद्दिशा वक्तुमर्हसि ॥ ९ ॥

वराह उवाच ।

शृणु तत्त्वेन मे देवि यत्त्वं माम्परिपृच्छसि ।
यां गतिन्ते प्रपद्यन्ते नराः सौकरवे मृताः ॥ १० ॥
यत्र स्नातस्य यत्पुण्यं गतस्य च मृतस्य च ।
यत्र यानि च तीर्थानि मम संस्थानसंस्थिताः ॥ ११ ॥
शृणु पुण्यं महाभागे मम क्षेत्रेषु सुन्दरि ।
प्राप्नुवन्ति महाभागे गत्वा सौकरवम्प्रति ॥ १२ ॥
दश पूर्व्वापराश्चापि अपरे सप्त पञ्च च ।
स्वर्गं गच्छन्ति पुरुषास्तेषां ये तत्र वै मृताः† ॥ १३ ॥
गमनादेव सुश्रोणि मुखस्य मम दर्शनात् ।

* तर्थेति (ग) । † मृता इति (ग) ।

सप्तजन्मान्तरे भद्रे जायते विपुले कुले ॥ १४ ।
धनधान्यसमृद्धेषु रूपवान् गुणवान् शुचिः ।
मद्भक्तश्चैव जायेत मम कर्म्मपरायणः ॥ १५ ।
एवं वै मानुषो भूत्वा अपराधविवर्ज्जितः ।
गमनन्तस्य चैत्रस्य मरणं तत्र कारणम् ॥ १६ ।
ये मृतास्तस्य चैत्रस्य सौकरस्य प्रभावतः ।
शङ्खचक्रगदापद्मधनुर्हस्ताश्चतुर्भुजाः ।
त्यक्त्वा कलेवरन्तूर्णं श्वेतद्वीपाय यान्ति ते ॥ १७ ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तीर्थेषु तेषु स्नातश्च यां* प्राप्नोति परां गतिम् ॥ १८ ।
चक्रतीर्थं महाभागे यत्र चक्रं प्रतिष्ठति† ।
शृणु पुण्यं तत्र भद्रे प्राप्नोति परमं नरः ॥ १९ ।
चक्रतीर्थे नरो गत्वा नियतो नियताशनः ।
वैशाखद्वादशीम्प्राप्य स्नायाद्यो विधिपूर्व्वकम् ॥ २० ।
दश वर्षसहस्राणि दश वर्षशतानि च ।
धनधान्यसमृद्धो हि जायते विपुले कुले ॥ २१ ।
मद्भक्तश्चापि जायेत मम कर्म्मपरायणः ।
अपराधं वर्ज्जयति दीक्षितश्चैव जायते ॥ २२ ।
भूत्वा वै मानुषस्तत्र तीर्थे संसारसागरम् ।
तीर्त्वा चक्रगदाशङ्खपद्मपाणिश्चतुर्भुजः ॥ २३ ।

* तीर्थेषु स्नातश्च यां प्राप्नोति परमां गतिमिति (क), (ख) पुस्तकयोः पाठस्तत्र च छन्दोदोषः । † प्रतिष्ठितमिति (ग) ।

मम रूपधरः श्रीमान्मम लोके महीयते ।
चक्रतीर्थे विशालाक्षि मरणे कृतकृत्यतः ॥ २४ ।
एतच्छ्रुत्वा वचस्तस्य श्रोतुकामा वसुन्धरा ।
शिरस्यञ्जलिमाधाय सुत्तमेतदुवाच ह ॥ २५ ।
तत्र सौकरवे तीर्थे चन्द्रमास्त्वामतोषयत् ।
एतदाचक्ष्व तत्त्वेन परं कौतूहलं हि मे ॥ २६ ।
वसुधाया वचः श्रुत्वा विष्णुर्मायाकरण्डकः ।
उवाच वाक्यं मेदिन्याः मेघदुन्दुभिनिःस्वनः ॥ २७ ।
शृणु भूमि प्रयत्नेन कथ्यमानं मयानघे ।
तस्य वै कारणं येन तेन चाराधितोऽस्म्यहम् ॥ २८ ।
तस्य प्रीतोऽस्म्यहं देवि विशुद्धेनान्तरात्मना ।
दर्शितश्च मया ह्यात्मा यो हि देवेषु दुर्लभः ॥ २९ ।
रूपं सोमेन तद्दृष्ट्वा विसंज्ञस्तदनन्तरम् ।
मह्यं* द्रष्टुं न शक्नोति मम तेजःप्रमोहितः ॥ ३० ।
ततो निमीलिताक्षेण कृत्वा शिरसि चाञ्जलिम् ।
न शक्नोति तथा वक्तुं भीरुः सन्त्रस्तलोचनः ॥ ३१ ।
एवमेतद्विचेष्टन्तं† ब्राह्मणानामपीश्वरम् ।
वाणीं सूक्ष्मां समादाय स सोमो नादितो मया ॥ ३२ ।
किंवा फलं समुद्दिश्य तप्यसे सुमहत्तपः ।
ब्रूहि तत्त्वेन मे सोम यत्ते मनसि वर्त्तते ।

* मह्यमित्यत्र मामिति साधु । † विचेष्टन्तमित्यत्र विचेष्टमानमिति साधु ।

सर्व्वं सम्पादयिष्यामि त्वत्प्रसादान्न संशयः॥ ३३।
मम वाक्यं ततः श्रुत्वा ग्रहाणां प्रवरेश्वरः।
उवाच मधुरं वाक्यं सोमतीर्थमवस्थितः॥ ३४।
भगवन्यदि तुष्टोऽसि मम चात्र ततः प्रभो।
योगनाथोजगच्छ्रेष्ठः सर्व्वयोगीश्वरेश्वरः॥ ३५।
यावल्लोका धरिष्यन्ति तावत्त्वयि जनार्द्दन।
अतुला त्वयि मे भक्तिर्भवेन्नित्यं सुनिश्चला॥ ३६।
यच्चापि मम तद्रूपं त्वया संस्थापितं प्रभो।
सप्तद्वीपेषु दृश्येत तत्र तत्रैव संस्थितम्॥ ३७।
सोम इत्येव यज्ञेषु पिबन्तु मम ब्राह्मणाः।
गतिः परमिका तेषां दिव्या विष्णो भवेद्यथा॥ ३८।
क्षीणस्तत्र त्वमावस्यां तत्र पिण्डपितृक्रिया।
प्रवर्त्तन्ते यथान्यायं भवेयं सौम्यदर्शनः॥ ३९।
अधर्म्मे च न मे बुद्धिर्भवेद्विष्णो कदाचन।
पतित्वञ्चाथ गच्छेयमोषधीनां तथा कुरु॥ ४०।
यदि तुष्टो महादेव आदिमध्यान्तवर्ज्जितः।
मम चैव प्रियार्थाय एतन्मे* दीयतां वरः॥ ४१।
ततः सोमवचः श्रुत्वा तत्रैवान्तर्हितोऽभवम्॥ ४२।
एवं तप्तं महाभागे तप. सोमेन निश्चयात्।
प्राप्ता च परमा सिद्धिः सोमतीर्थेऽन्यदुर्लभा॥ ४३।

---

* एतदित्यत्र एष इति साधु।

स्नायाद्यः सोमतीर्थे तु मम कर्म्मपरायणः ।
अष्टमेन तु भक्तेन मम कर्म्मविधौ स्थितः ।
फलन्तस्य प्रवक्ष्यामि सोमतीर्थे नरस्य यत् ॥ ४४ ।
यत्र तप्तन्तपस्तेन सोमेन सुमहात्मना ।
पञ्चवर्षसहस्राणि एकपादेन तिष्ठता ।
पञ्चवर्षसहस्राणि तथैवोर्द्धमुखः स्थितः ॥ ४५ ।
एवमुग्रन्तपः कृत्वा कान्तिमानभवच्च सः ।
ममापराधान्मुक्तश्च ब्राह्मणानां पतिस्तथा ॥ ४६ ।
एवमेव महाभागे सोमतीर्थे कृतोदकः ।
त्रिंशद्वर्षसहस्राणि त्रिंशद्वर्षशतानि च ।
जायते ब्राह्मणः सुभ्रु* वेदवेदाङ्गपारगः ॥ ४७ ।
द्रव्यवान् गुणवांश्चैव संविभागी यशस्विनि ।
मद्भक्तश्चैव जायेत अपराधविवर्ज्जितः ॥ ४८ ।
स एष ब्राह्मणोभूत्वा संसाराद्विप्रमुच्यते ।
तस्य चिह्नं प्रवक्ष्यामि सोमतीर्थस्य सुन्दरि ।
तत्तीर्थं येन विज्ञेयं मम मार्गानुसारिणा ॥ ४९ ।
वैशाखस्य तु मासस्य शुक्लपक्षस्य द्वादशी ।
प्रवृत्ते चान्धकारे तु यत्र कश्चिन्न दृश्यते ॥ ५० ।
सोमेन च विना भूमिर्दृश्यते चन्द्रसप्रभा ।
आलोकश्चैव दृश्येत सोमस्तत्र न दृश्यते ॥ ५१ ।

---

* शुभे इति (ग) ।

एवन्त्वां वच्मि हे भद्रे एष वै विस्मयः परः ।
एतच्चिह्नं महाभागे पुण्ये सौकरवे मम ।
सौमतीर्थे विशालाक्षि येन मुच्यन्ति* जन्तवः ॥ ५२ ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
प्रभावमस्य क्षेत्रस्य विस्मयम्परमं महत्† ॥ ५३ ।
अकामा तु मृता तीर्थे आत्मनः कर्म्मनिश्चयात् ।
मम क्षेत्रप्रभावेण शृगाली मानुषी भवेत् ॥ ५४ ।
राजपुत्री विशालाक्षी श्यामा सर्व्वाङ्गसुन्दरी ।
गुणवद्रूपसम्पन्ना चतुःषष्टिकलान्विता ॥ ५५ ।
तस्य पूर्व्वेण पार्श्वेन तीर्थं गृध्रवटं‡ स्मृतम् ।
यत्राकामो मृतो गृध्रो मानुषत्वमुपागतः ॥ ५६ ।
वाक्यं नारायणाच्छ्रुत्वा धरणी शुभलक्षणा ।
उवाच मधुरं वाक्यं विष्णुभक्तसुखावहम् ॥ ५७ ।
अहो तीर्थप्रभावो वै त्वया प्रोक्तो महान्मम ।
यस्य देव प्रभावेण तिर्य्यग्योनित्वमागतौ ।
गृध्रश्चैव शृगाली च प्राप्तौ वै मानुषीन्तनुम् ॥ ५८ ।
स्नानेन तत्र तीर्थे च मरणाद्वा जनार्द्दन ।
काङ्गतिं वै प्रपद्यन्ते तन्ममाचक्ष्व केशव ॥ ५९ ।
चिह्नञ्च कीदृशन्तेषां ज्ञायन्ते येन ते तथा ।

* मुच्यन्ते इति साधु । † महदिति आर्षं महान्तमिति साधु । ‡ गृध्रघटमिति (ग) ।

अकामावपि तौ चैव प्राप्तौ तु परमां गतिम् ॥ ६० ।
ततो मही वचः श्रुत्वा विष्णुर्धर्मविदां वरः ।
उवाच मधुरं वाक्यं धर्मकामां वसुन्धराम् ॥ ६१ ।
शृणु तत्त्वेन मे भूमि यस्मात्त्वं परिपृच्छसि ।
उभौ तौ* कारणाद्यस्मात्प्राप्तौ वै मानुषीं गतिम् ॥ ६२ ।
तस्मिन् काले ह्यतिक्रान्ते मम कर्मविनिश्चयात् ।
त्रेतायुगे ह्युपक्रान्ते जाते च युगसंस्थितौ ॥ ६३ ।
तत्र राजा महाभागः स्वधर्मकृतनिश्चयः ।
ब्रह्मदत्तेति† विख्यातः पुरं काम्पिल्लमास्थितः ॥ ६४ ।
तस्य पुत्रो महाभागः सर्वधर्मेषु निष्ठितः ।
सोमदत्तेति विख्यातः कुमारः शुभलक्षणः ।
पित्रर्थे मृगयां यातो मृगलिप्सुर्वने तदा ॥ ६५ ।
अरण्ये स तदा गत्वा व्याघ्रसिंहनिषेविते ।
न तत्र लभते किञ्चित्पितृकार्य्यं नराधिपः ॥ ६६ ।
एवं हि भ्रमतस्तस्य‡ शृगाली दक्षिणे तथा ।
अङ्गमध्ये तु विद्धा सा स्फुरन्ती सर्वमङ्गला ॥ ६७ ।
तथा सा बाणसन्तप्ता व्यथया च परिप्लुता ।
पीत्वा सा सलिलं तत्र वृक्षं आस्फोटकङ्गता ॥ ६८ ।
आतपेन परिक्लान्ता बाणविद्धातुरा भृशम् ।

---

* उभौ तु इति (ग)। † ब्रह्मदत्त इतीति साधु। एवं परत्र सोमदत्त इतीति।
‡ एवं सम्भ्रमतस्तस्येति (ग)।

अकामा मुञ्चती प्राणांस्तीर्थं सोमात्मकम्मति ॥ ६९ ।
एतस्मिन्नन्तरे भद्रे राजपुत्रः क्षुधार्द्दितः ।
प्राप्तो गृध्रवटं तीर्थं विश्राममत्र चाकरोत् ॥ ७० ।
अथ पश्यति गृध्रं स वटशाखां समाश्रितम् ।
एकेन स तु वाणेन तथा गृध्रो निपातितः ॥ ७१ ।
स तत्र पतितो गृध्रो वटमूले यशस्विनि ।
गतासुर्नष्टसंज्ञो वै वाणभिन्नस्तथा हृदि ॥ ७२ ।
तं दृष्ट्वा पतितं गृध्रं राजपुत्रस्तुतोष ह ।
तस्य च्छित्वा ततः पक्षौ गृहीत्वा राजनन्दनः* ।
वाणपक्षान्विधातुञ्च सोमदत्तो गृहान्ययौ ॥ ७३ ।
सोऽपि दीर्घेण कालेन अकामोऽपि मृतः खगः ।
जातः कलिङ्गराजस्य सुतो गुणविभूषितः ।
रूपवान् पण्डितश्चैव प्रजानन्दकरः सदा ॥ ७४ ।
तस्मिन्राजनि नायासं कोऽपि कुत्रापि विन्दति ॥ ७५ ।
या सा शृगाली सञ्जज्ञे काञ्चीराज्ञो† गृहे सुता ।
रूपयुक्ता गुणवती दक्षा‡ सर्व्वाङ्गसुन्दरी ॥ ७६ ।
चतुःषष्टिकलायुक्ता कोकिलेव सुखस्वरा ॥ ७७ ।
एवं प्रवर्त्तिते तत्र काञ्चीराज्ये कलिङ्गके ।
हार्द्दिक्यात्सौहृदात्प्रीतिरन्योऽन्यकुलनिश्चयात् ।

* राजसत्तम इति (क), (ख)। † कान्तीराज्ञ इति (ग)। एव परत्रापि। ‡ दृष्टेति (ग)।

भूमे मम प्रसादेन सम्बन्धो जायते ततः ॥ ७८ ।
अथ दीर्घेण कालेन काञ्चीराजसुता तथा ।
कलिङ्गराजपुत्त्रेण विधिना तु विवाहिता ॥ ७९ ।
काञ्चीराजस्तयोः प्रीत्या नानारत्नानि चाददत् ।
भूषणानि च दिव्यानि गजाश्वमहिषीः स्त्रियः ॥ ८०
ततः कलिङ्गराजोऽपि सबधूकं निज सुतम् ।
आदाय* स्वगृहं यातस्तेन राज्ञातिमानितः ॥ ८१ ।
एवं गच्छति काले वै दम्पत्योस्तुष्यमानयोः† ।
अच्छिन्नाऽभवत्प्रीतौ रोहिणीचन्द्रयोरिव ॥ ८२ ।
रेमतुस्तौ‡ विहारेषु देवतायतनेषु च ।
वने चोपवने चैव ये केचिन्नन्दनोपमाः§ ॥ ८३ ।
भर्त्तारं सा न पश्येच्चेत्कदाचिदपि पार्श्वतः ।
नष्टं मन्येत चात्मानं राजपुत्त्री यशस्विनी ॥ ८४ ।
न चेत्पश्यति भार्य्यां स्वां सोऽपि राजन्यनन्दनः ।
आत्मानं मन्यते प्रीत्या नष्टप्रायं वसुन्धरे ॥ ८५ ।
दिने दिने तयोरेवं वर्द्धते प्रीतिरुत्तमा ।
नान्तरं पश्यते¶ कश्चित्पुरुषः पुण्यकर्म्मणोः ॥ ८६ ।
सोऽपि वृद्धा सुशीलेन कृतेन च वसुन्धरे ।
कलिङ्गस्तोषयामास पौराञ्जानपदांस्तथा ॥ ८७ ।

* आदयेति (ग)। † तुष्यतोरिति साधु। ‡ रेमतुरिति आर्षं रेमाते इति साधु। § यत्किञ्चिन्नन्दनोपममिति साधु। ¶ पश्यतीति साधु।

अन्तःपुरे तु या नार्य्यः कलिङ्गेषु धरे तयोः।
ताभ्यां सन्तोषिताः सर्व्वाः शीलेन स्वगुणैस्तथा॥ ८८।
एवम्संवर्द्धिता ताभ्यां प्रीतिः पूर्व्वं यशस्विनि।
रमते तत्र चान्योऽन्यं शचीवासवयोरिव॥ ८९।
अथ प्रणयपूर्व्वं सा कान्तं सर्व्वाङ्गसुन्दरी।
व्यजिज्ञपद्राजसुतं सौहृदेन यशस्विनी॥ ९०।
किञ्चिदिच्छामि ते वक्तुं राजपुत्र यशोधन।
मम स्नेहात्प्रियञ्चैव तद्भवान्वक्तुमर्हति॥ ९१।
ततो भार्य्यावचः श्रुत्वा कलिङ्गस्य सुतः प्रभुः।
उवाच मधुरं वाक्यं पद्मपत्रनिभेक्षणः॥ ९२।
यद्वदिष्यसि भद्रे त्वं यच्च तेऽस्ति मनीषितम्।
सर्व्वन्ते कथयिष्यामि शपे सत्येन सुन्दरि॥ ९३।
सत्यं मूलं ब्राह्मणानां विष्णुः सत्ये प्रतिष्ठितः।
तस्य मूलं तपो राज्ञि राज्यं सत्ये प्रतिष्ठितम्॥ ९४।
नाहं मिथ्या प्रवक्ष्यामि कदाचिदपि सुन्दरि।
न मिथ्या पूर्व्वमुक्तं मे ब्रूहि किङ्करवाणि ते॥ ९५।
हस्त्यश्वरथरत्नानि यानानि च धनानि च।
अथवा परमशत्रु पट्टबन्धङ्करोमि ते॥ ९६।
सा भर्त्तृवचनं श्रुत्वा काञ्चीराजस्य चात्मजा।
उभौ चरणौ संगृह्य भर्त्तारमिदमब्रवीत्॥ ९७।
न चैव रत्नानीच्छामि हस्त्यश्वरथमेव च।
पट्टबन्धेन कार्य्यञ्च यावद्ध्रियति मे गुरुः॥ ९८।

एका स्वपितुमिच्छामि मध्याह्ने तु तथाविधे ।
न चिरं त्वल्पकालन्तु यथा कश्चिन्न पश्यति ॥ ९९ ।
श्वशुरो यदि वा श्वश्रूर्यश्चैवान्यो नराधिप ।
सुप्ता नैव च द्रष्टव्या व्रतमेतन्मइर्त्तकम् ॥ १०० ।
आत्मनो वै गृहजना ये केचित्स्वजनं जनाः ।
ते मां प्रसुप्तां पश्येयुः कदाचिदपि संस्थिताम् ॥ १०१ ।
ततो भार्य्यावचः श्रुत्वा कलिङ्गेश्वर्य्यवर्द्धनः ।
वाढ़मित्येव तां वाक्यं प्रत्युवाच वसुन्धरे ॥ १०२ ।
विस्रब्धा भव सुश्रोणि कल्याणि यशस्विनि ।
न त्वां वै द्रक्ष्यते कश्चिच्छयनीये महाव्रताम्* ॥ १०३ ।
एवं गच्छति काले तु तयोस्तु तदनन्तरे ।
कलिङ्गो जरया युक्तो पुत्रं राज्येऽभ्यषेचयत् ॥ १०४ ।
राज्यं दत्त्वा वरारोहे यथान्यायं कुलोद्भवम् ।
कृत्वा निष्कण्टकं राज्यं दत्त्वा पञ्चत्वमागतः ॥ १०५ ।
एतत्प्रभृत्ततोराज्यं पितुर्द्दत्तं यथोचितम्† ।
एकाकी स्वपते तत्र यत्र कश्चिन्न पश्यति ॥ १०६ ।
स तु दीर्घेण कालेन कलिङ्गवंशवर्द्धनः ।
सुतानजनयत्पञ्च आदित्यसमतेजसः ॥ १०७ ।
एवन्तु मानुषं लोकं मम मायाप्रमोहितम् ।
आत्मकर्म्मसु संयुक्तं चक्रवत्परिवर्त्तते ॥ १०८ ।

* शयनीयमहाव्रतामिति (क), ख) । † यशोऽर्च्चितमिति (ग) ।

जातो जन्तुर्भवेद्बालो बालोस्तु तरुणो भवेत्।
तरुणो मध्यमं याति पश्चाद्याति जरान्ततः॥ १०९।
बालो वै यानि कर्म्माणि करोत्यज्ञानतः स्वयम्।
न स लिप्यति* पापेन एवमेतन्न संशयः॥ ११०।
ततः करिष्यतीराज्यन्निष्कण्टकमनामयम्।
सप्तसप्ततिवर्षाणि ह्यतीतानि यशस्विनि॥ १११।
अष्टसप्ततिमे वर्षे एकान्ते तु नराधिपः।
तमेव चिन्तयन्नर्थं मध्यसंस्थे दिवाकरे॥ ११२।
माधवस्य तु मासस्य शुक्लपक्षे तु द्वादशी।
बुद्धिः सम्पद्यते तस्य प्रियादर्शनलालसा॥ ११३।
कोऽर्थस्तत्किं† व्रतञ्चास्या एषा स्वपिति निर्जने।
न सुप्ताया‡ व्रतं किञ्चिद्दृश्यते धर्म्मसञ्चयः॥ ११४।
न च विष्णुकृतं कर्म्म न चैवेश्वरचोदितम्।
मनुना वै कृतोधर्म्म एष चैव न दृश्यते॥ ११५।
न क्वाप्यपकृतो§ धर्म्मो महानपि न योगिनाम्।
न तत्र एष विद्येत यश्चरेद्व्रतमीदृशम्॥ ११६।
वार्हस्पत्येषु धर्म्मेषु याम्येषु च न विद्यते।
न एष विद्यते तत्र सुप्ता चरति यद्व्रतम्॥ ११७।
भुक्त्वा तु कामभोगानि भुक्त्वा तु पिशितोदनम्¶।

* लिप्यते इति साधु। † कोऽर्थस्तच्चिन्तितञ्चास्या इति (क), (ख)। ‡ सुप्ताया-मेति (ग)। § न क्वाप्यपकृत इति बहुषु पाठः। ¶ आशितोदनमिति (क), (ख)।

ताम्बूलं रक्तवस्त्रन्तु सुसूक्ष्मे पट्टवाससी ॥ ११८ ।
सुगन्धैर्भूषिता गात्रे सर्व्वरत्नसमायुता ।
मम कान्ता विशालाक्षी किमत्र चरते व्रतम् ॥ ११९ ॥
क्रुध्येताऽपि तु सन्दृष्टा प्रिया मे कमलेक्षणा ।
अवश्यमेव द्रष्टव्या चरति कीदृशं व्रतम् ॥ १२० ।
किन्नरैः सुप्रलब्धेत वशीकरणमुत्तमम् ।
अथ योगीश्वरो भूत्वा गच्छति यत्र रोचते ।
अथवा चान्यसंसृष्टा कामरोगेण चावृता* ॥ १२१ ।
एवञ्चिन्तयतस्तस्य अस्तं प्राप्तो दिवाकरः ।
सवृत्ता रजनी सुभ्रूः सर्व्वसार्थसुखावहा ॥ १२२ ।
ततो रात्र्यां व्यतीतायां प्रभातसमये शुभे ।
पठन्ति मागधा वन्दिसूता वैतालिकास्तथा ॥ १२३ ।
शङ्खदुन्दुभिनादैश्च बोधितो वसुधाधिपः ।
सर्व्वलोकहितार्थाय उदिते च दिवाकरे ॥ १२४ ।
यत्तदा चिन्तितं पूर्व्वं द्रष्टुकामेन तां प्रियाम् ।
सर्व्वचिन्तां परित्यज्य सा चिन्ता हृदि वर्त्तते ॥ १२५ ।
स्नातस्तु विधिना सोऽथ क्षौमाभ्यामुपसंवृतः ।
भूत्वा घोषयामास आज्ञां दत्त्वा यथोचितम् ॥ १२६ ।
व्रतस्थं मान्तु यः स्पृशेन्नारी पुरुष एव च ।
धर्म्मयुक्तेन दण्डेन मम वध्यो भवेत्तु सः ॥ १२७ ।

---

* एष श्लोकः (ग) पुस्तके नास्ति ।

एवमाज्ञापयित्वा तु कालिङ्गी नृपतिः किल।
गतश्च त्वरया धीमान्प्रविष्टस्तत्र सुव्रते ॥ १२८।
पर्य्यङ्कस्य तले तत्र राजा दर्शनलालसः।
विलोक्य तां वरारोहान्ततश्चिन्तापरायणाम् ॥ १२९।
ततः कमलपत्राक्षी वेदनायासपीड़िता।
रुजार्त्ता रुरुदे तत्र शिरोवेदनताड़िता ॥ १३०।
किम्मया तु कृतं कर्म्म पूर्व्वमेव सुदुष्करम्।
येनाहमीदृशीं प्राप्ता दशां पुण्यपरिक्षयात्।
भर्त्ता च मां न जानाति क्लिश्यमानामनाथवत् ॥ १३१।
अथ माङ्कि कथं भर्त्ता मन्यते स्वजनोऽपि वा।
कथये किं शयाना तु सखीनां शयने स्थिता ॥ १३२।
एवमत्र न युज्येत यन्मया परिचिन्तितम्।
किञ्च वात्मनि दुःखस्य सर्व्वमेतच्च* युज्यते ॥ १३३।
किञ्च मां वक्ष्यते भर्त्ता किञ्च मामितरे जनाः।
अन्यायेन व्रतञ्चीर्णं सर्व्वतो विकृतं भवेत् ॥ १३४।
कदाचिदपि काले तु गच्छेत्सौकरवम्प्रति।
ततो ब्रूयामिदं वाक्यं यन्मे हृद्यवतिष्ठते ॥ १३५।
ततः प्रियावचः श्रुत्वा समुत्थाय ततो नृपः।
दोर्भ्यामालिङ्ग्य वै भार्य्यां वाक्यमेतदुवाच ह ॥ १३६।
किमिदं भाषसे† भद्रे आत्मानं न प्रशंससि।

---

* सर्व्वमेतन्न युज्यते इति (क), (ख)। † किमिदं निन्दसे इति (ग)।

अशोच्या शोचती या तु यच्च निन्दसि चात्मनि ॥ १३७ ।
भिषजः किं न विद्यन्ते अष्टकर्म्मसमाहिताः ।
ये तु संस्थापयेयुस्ते शिरसोवेदनां पराम् ॥ १३८ ।
त्वया पूर्व्वं व्रतमिषाद्वेदना यदि गोपिता* ।
येन वै क्लिश्यसे† भद्रे शिरस्यसुखपीड़िता ॥ १३९ ।
वायुना कफपित्तेन शोणितेन कफेन वा ।
सन्निपातस्य दोषेण येनेदम्पीड्यते शिरः ॥ १४० ।
काले विकाले कृत्वा वै पित्तादिकं यशस्विनि ।
अश्नासि पिशितं चात्यन्तेनेदं दूष्यते शिरः ॥ १४१ ।
क्रियतेऽत्र शिरावेधो रुधिरस्राव एव च ।
दीयते चेच्छिरोऽभ्यङ्गः कथं तिष्ठति वेदना ॥ १४२ ।
किमेतद्गोपितं भद्रे मयि तन्न निवेदितम् ।
त्वया व्रतमिषेणायमात्मा संक्लिश्यते वृथा ॥ १४३ ।
या त्वं वै भाषसे वाक्यं सौकरे गमनं प्रति ।
तत्र गोप्यं किमस्तीति येन ते परिवेदना ॥ १४४ ।
ततः कमलपत्राक्षी सव्रीड़ा दुःखपीड़िता ।
भर्त्तुर्गृहीत्वा चरणौ सा पतिं प्रत्यभाषत ॥ १४५ ।
प्रसीद मे महाराज नेदं प्रष्टुन्त्वमर्हसि ।
मम पूर्व्वकथां वीर दुष्टकर्मानुसारिणीम् ॥ १४६ ।
ततो भार्य्यावचः श्रुत्वा कलिङ्गानां जनाधिपः ।

---

* परिगोपितेति (ग) । † क्लिश्यसीति साधु ।

उवाच मधुरं वाक्यं वहितेनान्तरात्मना* ॥ १४७ ।
किमिदं गोप्यते देवि ममाग्रे वरवर्णिनि ।
तथ्यमेव महाभागे पृच्छमाना यशस्विनि ॥ १४८ ।
ततो भर्तृवचः श्रुत्वा विस्मयोत्फुल्ललोचना ।
उवाच मधुरं वाक्यं कलिङ्गानां महाधिपम् ॥ १४९ ।
भर्त्ता धर्म्मो यशो भर्त्ता भर्त्तैव प्रियमात्मनः ।
अवश्यमेव तद्वाच्यं यन्मां त्वं परिपृच्छसि ॥ १५० ।
तथापि नोत्सहे वक्तुं हृदि यत्परिवर्त्तते ।
तव पीड़ाकरमिति तस्मान्न प्रष्टुमर्हसि ॥ १५१ ।
एतद्दुःखं महाभाग हृदि मे परिवर्त्तते ।
सुखे हि वर्त्तसे नित्यं महाराजोऽसि सुन्दरः ॥ १५२ ।
बह्व्यो मत्सदृशा भार्य्यास्तिष्ठन्त्यन्तःपुरे तव ।
अश्नासि पिशितानञ्च प्रावारान् भूषणानि च ॥ १५३ ।
आच्छादयसि यानैश्च हस्त्यश्वरथपृष्ठगः ।
गच्छस्यनारतं राजन् किं स्थितञ्च मया विना ॥ १५४ ।
आज्ञा च तेऽप्रतिहता गन्धान् भोगांश्च सर्व्वशः ।
बिभर्षि स्वेच्छया राजन्न मां संप्रष्टुमर्हसि ॥ १५५ ।
त्वं मे देवो गुरुः साक्षाद्भर्त्ता यज्ञः सनातनः ।
धर्म्मश्चार्थश्च कामश्च यशः स्वर्गश्च† मानद ॥ १५६ ।

* वहितेन अवहितेन। विहितेनान्तरात्मना इति (ग)। † यशैश्वर्य्यञ्च मानसमिति (ग), यश ऐश्वर्य्यमिति साधु।

पृष्टया मे सदा वाच्यं सर्व्वं सत्यं प्रियं तव ।
पतिव्रतानां सर्व्वासामेष धर्म्मः सनातनः ॥ १५७ ।
न संशये नियोक्तव्यः सुखस्थोहि पतिः स्त्रिया ।
एतन्निश्चित्य मे पीड़ां न प्रष्टुन्त्वमिहार्हसि ॥ १५८ ।
ततो भार्य्यावचः श्रुत्वा कलिङ्गानां जनाधिपः ।
उवाच मधुरं वाक्यं भार्य्यापीड़ाभिपीड़ितः ॥ १५९ ।
शृणु तत्त्वेन मे भद्रे शुभं वा यदि वाशुभम् ।
अवश्यमेव वक्तव्यं पृष्टया पतिना ध्रुवम् ॥ १६० ।
यानि गुह्यान्यगुह्यानि स्त्रियो धर्म्मपथे स्थिताः ।
भर्त्तारञ्च समासाद्य रहस्तां गोपयन्ति न ॥ १६१ ।
कृत्वा सुदुष्करं कर्म्म रागलोभप्रमोहिता ।
या सुगोपायते गुह्यं सती सा नोच्यते बुधैः ॥ १६२ ।
एवं चिन्त्य* महाभागे ब्रूहि सत्यं यशस्विनि ।
अधर्म्मस्ते न भविता गुह्यार्थकथने मम ॥ १६३ ।
ततो भर्त्तृवचः श्रुत्वा सा देवी परमप्रिया ।
प्रत्युवाच प्रियं वाक्यं राजानं धर्म्मवादिनम् ॥ १६४ ।
देवोराजा गुरूराजा सोमोराजेति पठ्यते† ।
अवश्यमेव वक्तव्यमेष धर्म्मः सनातनः ॥ १६५ ।
यदि गुह्यं न मे कार्य्यं‡ श्रूयतां राजसत्तम ।
अभिषिञ्चस्व§ राज्ये स्वे ज्येष्ठं पुत्रं कुलोचितम् ।

* चिन्त्येति आर्षं चिन्तयित्वेति साधु । † मन्यते इति (ग) । ‡ वाक्यमिति (ग) ।
§ अभिषिञ्चेति साधु ।

एहि नाथ मया साई चैवं सौकरवम्पति ॥ १६६ ।
ततोभार्य्यावचः श्रुत्वा कलिङ्गानां जनाधिपः ।
वाढ़मित्येव वाक्येन छन्दयामास तां प्रियाम् ॥ १६७ ।
दास्यामि राज्यं पुत्राय वचनात्तव सुन्दरि ।
यथा पूर्व्वं मया लब्धं स्वपितुर्य्यद्यथाक्रमम् ॥ १६८ ।
इत्युक्ता तौ महाभागौ युक्तश्चैव परस्परम् ।
राजा च राजपुत्री च निष्क्रान्तौ तद्गृहात्ततः ॥ १६९ ।
ततः कञ्चुकिनं दृष्ट्वा प्रोवाचोच्चस्वरेण च ।
अपसारय सर्व्वं वै जनमात्रत्य तिष्ठति ।
ज्ञानकौतूहलोयोऽत्र शीघ्रं गच्छत्वितो वहिः ॥ १७० ।
ततोहलहलाशब्दः प्रवृत्तोऽन्तःपुरे महान् ।
किमिदं कारणं वृत्तं येन चोत्सारिता वयम्* ॥ १७१ ।
नात्रास्ति चिन्तालोलानामागतानां स्वकार्य्यतः ।
अश्रोतव्यं भवेन्नूनं येन चोत्सारिता वयम् ॥ १७२ ।
ततोभोज्यान्नपानानि भुक्त्वा कृत्वा नृपः प्रियान् ।
समं महिष्या चाचम्य क्षणं विश्रम्य पार्थिवः ।
अमात्यानानयामास ह्यभिषेक्तुं निजं सुतम् ॥ १७३ ।
सम्प्राप्तान् सचिवांस्तत्र राजा वचनमब्रवीत् ।
संक्रियतां राजधानी मङ्गलाचारपूर्व्वकम् ॥ १७४ ।
वृद्धामात्यमुपास्याथ कलिङ्गो धर्म्मसंहितम् ।

* एष श्लोकः (ग) पुस्तके अत्र नास्ति, १७२ श्लोकादनन्तरमस्ति ।

नीतिशास्त्रार्थतत्त्वज्ञमुवाचाविक्लवं वचः ॥ १७५ ।
कल्यमिच्छाम्यहं तात पुत्रं राज्येऽभिषेचितुम्* ।
शीघ्रं सज्जं प्रकुर्व्वन्तु आभिषेचनिकं विधिम् ॥ १७६ ।
भूतमित्येव तम्प्राहुः सचिवास्तं नराधिपम्† ।
अस्माकमपि तच्चैव रोचते यत्प्रभाषसे ॥ १७७ ।
पुत्रस्ते राजशार्दूल सर्व्वलोकहिते रतः ।
प्रजानुरागवाञ्शूरो नीतिज्ञश्च विचारकः ।
मनीषितं तव विभो सम्यङ्नोमनसः प्रियम् ॥ १७८ ।
एवमुक्त्वा गतामात्याः‡ सूर्य्यश्चास्तमुपागतः ।
सुखेन सा गता रात्रिर्गीतगान्धर्व्ववादितैः ॥ १७९ ।
बोधितः स च राजा तु सूतमागधवन्दिभिः ।
वैतालिकैश्च सुर्य्याणि सर्व्वमङ्गलपाठकैः ॥ १८० ।
प्रभातायान्तु शर्व्वर्य्यामुदिते च दिवाकरे ।
मुहूर्त्तं शुभमासाद्य ह्यभिषिक्तः सुतः शुचिः ॥ १८१ ।
एवन्दत्त्वा तदा राज्यं मूर्द्ध्नि चाघ्राय धर्म्मवित् ।
उवाच मधुरं वाक्यं पुत्रं पुत्रवतां वरः ॥ १८२ ।
राज्यस्थेनापि ते पुत्र कर्त्तव्यं शृणु तन्मम ।
यदीच्छेः परमं§ धर्म्मं पितॄणां तारणं तथा ॥ १८३ ।
दातव्यं न च हन्तव्यं हन्तव्याः पारदारिकाः ।

* अभिषेक्तुमिति साधु । † अत्र तमित्यस्य पुनरुक्तिरस्ति, सचिवास्ते इति कृते न कोऽपि दोषः स्यात् । ‡ गता अमात्या इति साधु । § यदिच्छेत्परममिति बहुषु पाठः । तत्र प्रथमपुरुषप्रयोग आर्षः ।

बालघाताश्च हन्तव्याः हन्तव्याः स्त्रीविघातकाः॥ १८४।
न लोभः परभार्य्यासु ब्राह्मणीषु विशेषतः।
सुरूपां परनारीन्तु दृष्ट्वा चक्षुर्निमीलयेः* ॥ १८५।
मा लोभः परद्रव्येषु अन्यायोपार्ज्जितेषु च† ।
न चिरं तिष्ठसि क्वापि कथञ्चन न पश्यसि‡ ॥ १८६।
रक्षणीयश्च ते देशः कुशलन्यायसज्जितः।
नित्योद्युक्तेन स्थातव्यममात्यवचनङ्कुरु॥ १८७।
अमात्यो यद्वचो ब्रूयात्तस्य कार्य्यं विमर्शनम्।
अवश्यमेव कर्त्तव्यं शरीरपरिरक्षणम्॥ १८८।
प्रजा येन प्रमोदन्ति येन तुष्यन्ति ब्राह्मणाः।
एवं ते पुत्र कर्त्तव्यं मम प्रियहितैषुणा॥ १८९।
सप्तव्यसनवर्गोऽत्र§ दोषो राज्ञां महान् भवेत्।
अर्थदूषणकञ्चैव न कर्त्तव्यं कदाचन।
अमात्यं नाप्रियं ब्रूया यमिच्छेराजकर्म्मणि¶ ॥ १९०।
नाहं निवारणीयस्ते गमनाय पथे स्थितः।
एतन्मे क्रियतां शीघ्रं यदीच्छसि मम प्रियम्॥ १९१।
ततः पितुर्वचः श्रुत्वा राजपुत्रो यशस्विनि।
पितुः पादौ तु संगृह्य करुणम्प्रत्युवाच तम्॥ १९२।

* एष श्लोकः (ग)पुस्तके नास्ति। † न लोभः परद्रव्येषु नोऽन्यायोपार्ज्जितेषु चेति (ग)। ‡ सर्व्वे वानाः कथञ्चनेति (ग)। § सप्तव्यसनगोचरस्येति (ग)। ¶ अमात्येनाप्रियं ब्रूयाद्यमिच्छेद्राजकर्म्मणीति (ग), अत्रापि प्रथमपुरुषक्रियाप्रयोग आर्षः।

मम किं तात राज्येन कोशेन च बलेन च ।
यस्त्वया रहितस्तात न शक्नोमि विचेष्टितुम् ॥ १९३ ।
अभिषेकं राजशब्दं मम संज्ञापितन्त्वया ।
एतन्न बहुमन्येऽहं विना तात त्वया ह्यहम् ॥ १९४ ।
क्रीडामेवाऽत्र जानामि येन क्रीडन्ति बालकाः
राज्यचिन्तां न जानामि राजानो यान्तु कुर्व्वते* ॥१९५।
ततः पुत्रवचः† श्रुत्वा कलिङ्गानां महीपतिः ।
उवाच मधुरं वाक्यं सामपूर्व्वं यशस्विनि ॥ १९६ ।
यच्चेदं भाषसे पुत्र नाहं जानामि तद्वचः ।
पुत्र शिक्षापयिष्यन्ति पौरजानपदास्तव ॥ १९७ ।
एवं सन्दिश्य तं तत्र स राजा धर्म्मशास्त्रतः ।
गमनाय मतिञ्चक्रे तीर्थं सौकरवम्प्रति ॥ १९८ ।
तम्प्रयान्तं ततो दृष्ट्वा पौरजानपदास्तदा ।
सकलत्रसुताः सर्व्वेऽप्यनुयान्ति नराधिपम् ॥ १९९ ।
हस्त्यश्वरथयानानि स्त्रियश्चान्तःपुरस्थिताः ।
संहृष्टमनसः सर्व्वे अनुयान्ति नराधिपम्‡ ॥ २०० ।
अथ दीर्घेण कालेन प्राप्ता सौकरवम्प्रति ।
धनधान्यसमृद्ध्यादि प्रददौ तत्र माधवि ॥ २०१ ।
एवं गच्छति काले तु तयोस्तत्र वसुन्धरे ।

* येन कुर्व्वते इति (ग) । † तत्तु पुत्रवच इति (ग) । ‡ (ग) पुस्तके एष श्लोकः परश्लोकस्य च पूर्व्वार्द्धं न स्तः ।

प्रवर्त्तमानयोर्नित्यं धर्म्ये कर्मणि शुद्धयोः ॥ २०२ ॥
ततः स पद्मपत्राक्षः कलिङ्गानां जनाधिपः ।
उवाच मधुरं वाक्यं काञ्चीराजसुतां तदा ॥ २०३ ॥
पूर्णं वर्षसहस्रं वै जीवितं मम सुन्दरि ।
ब्रूहि तत्परमं गुह्यं यन्मया पूर्व्वपृच्छितम्* ॥ २०४ ॥
ततो भर्त्तुर्वचः श्रुत्वा प्रहस्य रुचिरेक्षणा ।
उभौ तौ चरणौ गृह्य† राजानं वाक्यमब्रवीत् ॥ २०५ ॥
एवमेतन्महाभाग यस्मात्त्वं परिपृच्छसि ।
उपोष्य तु त्रिरात्रं त्वं पश्चाच्छ्रोष्यसि मानद ॥ २०६ ॥
बाढमित्येव तां राजा प्रत्युवाच यशस्विनि ।
पद्मपत्रविशालाक्षि पूर्णचन्द्रनिभानने ।
यथा वदसि सुश्रोणि तथैव मम रोचते ॥ २०७ ॥
दन्तकाष्ठं समादाय द्वादशाङ्गुलमायतम् ।
स्नात्वा सङ्कल्पयामास त्रिरात्रं नियमान्वितः ॥ २०८ ॥
उपोष्य तौ‡ त्रिरात्रन्तु विधिना नियमान्वितौ ।
ततः स्नातौ शुची क्षौमे परिधाय तु वाससी ।
प्रणम्य भूषितौ विष्णुं दम्पती तदनन्तरम् ॥ २०९ ॥
ततः सा सुन्दरी भूषां समुत्तार्य्य शुभेक्षणा ।
मह्यं निवेदयामास प्रोवाच च जनेश्वरम्§ ।

* पृष्टमिति साधु । † गृहीत्वेति साधु, एवं परत्र । ‡ उपोष्य तु इति (ग) ।
§ जनेश्वरीति (ग) ।

एह्येहि नाथ गच्छावः पश्य गोप्यं मनीषितम्* ॥ २१० ॥
ततो हस्ते पतिं गृह्य उद्याने इव सुन्दरी ।
उवाच मधुरं वाक्यं कलिङ्गाधिपतिं तथा ॥ २११ ॥
शृगाली पूर्व्वमेवाहं तिर्य्यग्योनिव्यवस्थिता ।
विद्धास्मि सोमदत्तेन बाणेन मृगलिप्सुना ॥ २१२ ॥
एतं शिरसि मे राजन् पश्य बाणं सुसंस्कृतम् ।
यस्य दोषेण मेऽप्येष रुजा शिरसि संस्थिता ॥ २१३ ॥
काशीराजकुले जन्म पित्रा दत्ता तव प्रिया ।
तीर्थप्रभावान्मे चैषा† जाता सिद्धिर्नमोऽस्तु ते ॥ २१४ ॥
स ततः पद्मपत्राक्षः कलिङ्गानां जनाधिपः ।
श्रुत्वा राज्ञ्याः प्रियं वाक्यं प्रत्युवाच स्मितेङ्गितः ॥ २१५ ॥
अहं गृध्रो महाभागे तत्रैव वनचारिणा ।
सोमदत्तेन बाणेन एकेनैव निपातितः ॥ २१६ ॥
ततो जातोऽस्म्यहं भद्रे कलिङ्गानां जनाधिपः ।
जातोऽस्मि परमा व्युष्टिः प्राप्तं राज्यं मया महत् ॥ २१७ ॥
सिद्धिर्लब्धा‡ वरारोहे मया सर्व्वाङ्गसुन्दरि ।
अकामपतितेनापि पश्य तीर्थस्य वै फलम् ॥ २१८ ॥
ये च भागवतश्रेष्ठा ये च नारायणप्रियाः ।
पौरजानपदाः सर्व्वं श्रुत्वा तु तदनन्तरम् ।
लाभालाभौ परित्यज्य सर्व्वकर्म्माण्यकारयन् ॥

* मनीषिभिरिति (ग) । † तीर्थप्रभावान्मय्येषेति (ग) । ‡ सिद्धिर्वृद्धेति (ग) ।

तत्रैव मरणम्प्रापुः* सर्व्वसङ्गविवर्ज्जिताः

श्वेतद्वीपं ततः प्राप्ताः सर्व्वे एव चतुर्भुजाः ।
सर्व्वे शङ्खधराश्चैव सर्व्वे चायुधसंयुताः ॥ २१९।२२० ।

ताः स्त्रियश्च वरारोहे स्मृतिमान्या महौजसः ।
श्वेतद्वीपे प्रमोदन्ते सर्व्वभोगसमन्विताः ॥ २२१ ।

एवं ते कथितं भूमि व्युष्टिः सौकरवे महत् ।
अकामपतिताश्चैव श्वेतद्वीपमुपागताः ॥ २२२ ।

य एतेन विधानेन वामन्तीर्थे तु कारयेत् ।
मरणञ्च विशालाक्षि श्वेतद्वीपं स गच्छति ॥ २२३ ।

अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
स्नानाद्गार्खोटके तीर्थे यत्फलं समुपाश्नुते ॥ २२४ ।

दशवर्षसहस्राणि दशवर्षशतानि च ।
नन्दनं समवाप्येह मोदन्ते चैव सर्व्वदा ॥ २२५ ।

ततः स्वर्गात्परिभ्रष्टो जायते विपुले कुले ।
मद्भक्तश्चैव जायेत एवमेतन्न संशयः ॥ २२६ ।

पुनरन्यत्प्रवक्ष्यामि स्नातो गृध्रवटे नरः ।
यत्फलं समवाप्नोति स्नानमात्रकृतोदकः ॥ २२७ ।

नववर्षसहस्राणि नववर्षशतानि च ।
इन्द्रलोकं समासाद्य मोदते दैवतैः सह ॥ २२८ ।

इन्द्रलोकात्परिभ्रष्टो मम तीर्थप्रभावतः ।

---

* एष श्लोकः (ग) पुस्तके नास्ति ।

सर्व्वसङ्गं परित्यज्य सङ्गकश्चैव जायते ॥ २२८ ।
एतत्ते कथितम्भद्रे स्नानमात्रस्य यत्फलम् ।
यत्त्वया पृच्छितं पूर्व्वं सर्व्वसंसारमोक्षणम् ॥ २३० ।
ततो नारायणाच्छ्रुत्वा पृथिवी संशितव्रता ।
उवाच मधुरं वाक्यं लोकनाथं जनार्द्दनम् ॥ २३१ ।
केन कर्म्मविपाकेन तीर्थं पुनरवाप्यते ।
स्नानं वा मरणं देव यथावत्कथयस्व मे ॥ २३२ ।

वराह उवाच ।

शृणु देवि महाभागे पर्व्वधर्म्मकृतो नराः ।
केनचित्कर्म्मदोषेण तिर्य्यग्योनिमवाप्य हि ॥ २३३ ।
जन्मान्तरार्जितैः पुण्यैस्तीर्थस्नानजपादिभिः ।
महादानैश्च लभ्यन्ते तीर्थं परत्वसञ्ज्ञकः ॥ २३४ ।
जन्मान्तरकृतं कर्म्म यत्स्वल्पमपि वा बहु ।
तत्तदाविःफलञ्चैव न तस्य परिसङ्क्षयः ॥ २३५ ।
कदाचिद्दासहायो वै पुण्यतीर्थादिदर्शनात् ।
दुर्ब्बलं प्रबलम्भूत्वा प्रबलं दुर्ब्बलम्भवेत् ॥ २३६ ।
पापान्तरं समासाद्य गहना कर्म्मणोगतिः ।
यदल्पमिव दृश्येत तन्महत्त्वाय कल्पते ॥ २३७ ।
अतएव मनुष्यत्वं प्राप्तो राजत्वमेव च ।
शृगाली चैव गृध्रश्च तीर्थस्यैव प्रभावतः ॥ २३८ ।

मरणादेव सम्प्राप्य क्षीणपापौ स्मृतिं पुनः।
श्वेतद्वीपं ततः प्राप्तौ जानीहि त्वं वसुन्धरे॥ २३९।

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
तीर्थं वैवस्वतं नाम यत्रार्कस्तप्तवांस्तपः॥ २४०।
कदाचित्पुत्रकामेन मार्त्तण्डेन महत्तपः।
कृतं चान्द्रायणं तत्र दशवर्षसहस्रकम्॥ २४१।
ततः सप्तसहस्राणि वायुभक्षस्तु संस्थितः।
ततस्तुष्टोऽस्म्यहं भद्रे सूर्य्यस्य सुमहौजसः॥ २४२।
वरेण छन्दयामास आदित्यं तदनन्तरम्।
विवस्वन्तं महाभागं मम कर्म्मपरायणम्।
वरं वरय भद्रन्ते यस्ते मनसि वर्त्तते॥ २४३।
ततो मम वचः श्रुत्वा काश्यपस्य सुतो बली।
मधुरं स्वरमादाय प्रत्युवाच महद्वचः॥ २४४।
यदि देव प्रसन्नोऽसि अयं मे दीयतां वरः।
पुत्रमिच्छाम्यहं देव प्रसादात्ते सुरेश्वर॥ २४५।
विवस्वद्वचनं श्रुत्वा तुष्टोऽहन्तस्य सुन्दरि।
तस्य शुद्धेन मनसा प्रोक्तवानस्मि सुन्दरि।
यमश्च यमुना चैव मिथुनं जनयिष्यसि॥ २४६।
एवं तस्य वरं दत्त्वा आदित्यस्य वसुन्धरे।
आत्मयोगप्रभावेण तत्रैवान्तर्हितोऽभवम्॥ २४७।
आदित्योऽपि गतो भद्रे वेश्म स्वस्य महाधनम्।
पुण्यं सौकरवे कृत्वा सुदुष्करतरं महत्॥ २४८।

अष्टमेन तु भक्तेन यस्तु स्नाति वसुन्धरे ।
दशवर्षसहस्राणि सूर्य्यलोके महीयते ॥ २४९ ॥
अथवा तत्र सुर्य्याणि म्रियन्ते पुण्यमानवः ।
यमलोकं न गच्छन्ति* तीर्थस्यास्य प्रभावतः ॥ २५० ॥
एतत्ते कथितं भद्रे स्नानस्य मरणस्य च ।
फलञ्चैव यथावृत्तं तीर्थे सौकरवे मम ॥ २५१ ॥
आख्यानानां महाख्यानं क्रियाणाञ्च महाक्रिया ।
एष जप्यः प्रमाणश्च† सन्ध्योपासनमेव च ॥ २५२ ॥
एष तेजयः‡ मन्त्रश्च सर्व्वभागवतप्रियम्§ ।
पिशुनाय न दातव्यं सर्व्वे भागवते न तु ।
न च वैश्याय शूद्राय ये न जानन्ति मां परम् ॥ २५३ ॥
पण्डितानां सभामध्ये ये च भागवता भुवि ।
मठे ब्राह्मणमध्ये तु ये च वेदविदां वराः ।
दीक्षिताय च दातव्यं ये च शास्त्राणि जानते ॥ २५४ ॥
एतत्ते कथितम्भद्रे पुण्यं सौकरवे महत् ।
य एतत्पठते सुभ्रु कल्य उत्थाय मानवः ।
तेन द्वादश वर्षाणि चिन्तितोऽहं न संशयः ॥ २५५ ॥

* गच्छेदिति साधु । † प्रमाणश्चेति सार्व्वत्रिकः पाठ इति अस्माभिरपि तथा उद्धृतः, वस्तुतः प्रमाणमिति सम्यक्, यथा वेदाः प्रमाणमित्यादि । ‡ एष वेदाश्च मन्त्राश्चेति (ग) । § सर्व्वभागवतप्रियमिति सार्व्वत्रिकः पाठः, वस्तुतः सर्व्वभागवतप्रिय इति भवेत् न तु स्यात्, एष इत्यस्य पुंस्त्वेन निर्द्देशात् ।

न स जायेत गर्भेषु मुक्तिमाप्नोति शाश्वतीम्।
यः पठेद्देकमध्यायं तारयेत्स कुलान्दश। २५६।

इति वराहपुराणे भगवच्छास्त्रे तीर्थमाहात्म्ये सौकरवे
गृध्रजम्बुकाख्यानादिकथाप्रदानादिर्नाम
सप्तत्रिंशदधिकशततमोऽध्यायः।

# अष्टात्रिंशदधिकशततमोऽध्यायः।

सूत उवाच।

एतत्पुण्यतमं श्रुत्वा* रम्ये सौकरवे तदा।
गुणस्तवञ्च माहात्म्यं जात्यानां परिवर्त्तनम्॥
ततः कमलपत्राक्षी सर्व्वधर्म्मविदां वरा।
विस्मयं परमङ्गत्वा निर्वृतेनान्तरात्मना।
पुनः पप्रच्छ तन्देवं विस्मयाविष्टमानसा॥ १।२।
अहो तीर्थस्य माहात्म्यं क्षेत्रे सौकरवे तव।
अकामान्म्रियमाणस्य मानुषत्वमजायत।
किं वान्यद्वृत्तमाख्याहि क्षेत्रे सौकरवे प्रति॥ ३।
शृण्वन्त्या मे महाजातं चित्ते कौतूहलं परम्।
गायमानस्य किं पुण्यं वाद्यमानस्य किं फलम्।

* एतत्पुण्यमतीं श्रुत्वेति (क) (ख)। । तं सौकरवं प्रतीति साधु।

नृत्यतः किम्भवेत्पुण्यं जाग्रतो वा फलं नु किम् ॥ ४ ।
गीतादातुरत्नदातुर्वा जलदातुश्च किम्फलम् ।
सम्मार्ज्जने लेपने वा गन्धपुष्पादिदानतः ॥ ५ ।
धूपदीपादिनैवेद्यैः किम्फलं समुदीरितम् ।
अन्येन कर्म्मणा चैव जपयज्ञादिनाऽथवा ॥ ६ ।
कां गतिम्प्रतिपद्यन्ते ये शुद्धमनसो जनाः ।
तव भक्तसुखार्थाय तद्भवान्वक्तुमर्हसि ॥ ७ ।
ततो मह्या वचः श्रुत्वा सर्व्वदेवमयो हरिः ।
उवाच मधुरं वाक्यं धर्म्मकामां वसुन्धराम् ॥ ८ ।

वराह उवाच ।

शृणु सुन्दरि तत्त्वेन यन्मात्त्वं परिपृच्छसि ।
सर्व्वन्ते कथयिष्यामि पुण्यकर्म्म सुखावहम् ॥ ९ ।
तस्मिन् सौकरवे पक्षी खञ्जरीटस्तु कीटकान् ।
बहून् भुक्का हि वसुधे अजीर्णभृशपीड़ितः ।
मरणं समनुप्राप्तः पतितः स्वेन कर्म्मणा ॥ १० ।
सम्प्राप्तास्तत्र वै बालाः क्रीड़न्तस्तं मृतङ्खगम् ।
ग्रहीष्याम इति प्रोच्य धावन्तस्तत्र तत्र ह ॥ ११ ।
ममायं वै ममायं वै जिघृक्षन्तः परस्परम् ।
सङ्घर्षात्कलहं* चक्रुर्भृशं क्रीड़नकामुकाः ॥ १२ ।
तत एको गृहीत्वैनं गङ्गाम्भसि समाक्षिपत् ।

* मध्य. किन्न हनामिति (क), (ख)

युष्माकमेव भवतु नानेनाम्मत्प्रयोजनम् ॥ १३ ।
एवं स खञ्जरीटोऽपि गङ्गातोयाप्लुतस्तदा ।
आदित्यतीर्थसंक्लिन्नशरीरः स वसुन्धरे ॥ १४ ।
वैश्यस्य तु गृहे जातो ह्यनेकक्रतुयाजिनः* ।
धनरत्नसमृद्धे तु रूपवान् गुणवान् शुचिः ।
विबुद्धश्च पवित्रश्च मद्भक्तश्च वसुन्धरे ॥ १५ ।
जातस्य तस्य वर्षाणि जग्मुर्द्वादश सुव्रते ॥ १६ ।
कदाचिदुपविष्टौ तौ दृष्ट्वा बालो गुणान्वितः ।
मातरं पितरं चोभौ हर्षेण महतान्वितौ ।
प्रणम्य शिरसा भूमौ बद्धाञ्जलिरयाचत ॥ १७ ।
मत्प्रियं यदि कर्त्तव्यमेको मे दीयतां वरः ।
न चाहं वारणीयो वै पित्रा मात्रा कथञ्चन ।
सत्यं शपामि गुरुणा यथा ननु कृतम्भवेत् ॥ १८ ।
पुत्त्रस्य वचनं श्रुत्वा दम्पती तौ मुदान्वितौ ।
ऊचतुस्तत्प्रियं वाक्यं बालं कमललोचनम् ॥ १९ ।
यद्यत्त्वं वक्ष्यसे वत्स यद्यत्ते हृदि वर्त्तते ।
सर्व्वं तत्तत्करिष्यावो विश्रब्धं वद साम्प्रतम् ॥ २० ।
त्रिंशत्सहस्रङ्गावो हि सर्व्वाश्च शुभदोहनाः ।
यद्यत्र रोचते पुत्त्र देहि त्वमविचारितम् ॥ २१ ।
पुनरन्यत्प्रवक्ष्यामि† आवयोः पुत्त्र कारणात् ।

---

* अनेकक्रतुयाजिन इति (क), (ख)। † (ग) पुस्तके १८ श्लोकस्य चतुर्थः पादः, १९ श्लोकः, २० श्लोकस्य प्रथमपादश्च न सन्ति।

वाणिज्यं नः स्मृतङ्कर्म्म तत्ते पुत्र यदीप्सितम् ॥ २२ ।
तत्कुरुष्व यथान्यायं निर्विर्भ्यादीयतां धनम् ।
धनधान्यानि रत्नानि देहि पुत्र यथारितः ॥ २३ ।
कन्या वै रमणीयाश्च सजातीयाः कुलोद्भवाः ।
आनयिष्याव भद्रन्ते उद्वाहेन क्रमेण ते ॥ २४ ।
यदीच्छसि पुनर्धान्यद्यज्ञैर्यष्टुं सुपुत्रक ।
विधिना पुष्कलेष्टेन वैश्या येन यजन्ति च ॥ २५ ।
अष्टौ सम्यग्भूयसीनां हलानां तावतां शतम् ।
वैश्यकर्म्म समादाय किं पुनः प्राप्तुमिच्छसि ॥ २६ ।
यावद्धि जनकमान्वा ः दिजानिच्छमि तर्पितुम् ।
सर्व्वं निजेच्छया पुत्र कर्त्तुमर्हसि साम्प्रतम् ॥ २७ ।
पितृमातृवचः श्रुत्वा स बालो धर्म्मसंयुतः ।
चरणावुपसंगृह्य पितरौ पुनरब्रवीत् ॥ २८ ।
गोप्रदाने न मे कार्य्यं भित्तं वापि न चिन्तितम् ।
कन्यालाभे न चेच्छास्ति न च यज्ञफले तथा ॥ २९ ।
नाहं वाणिज्यमिच्छामि कृषिगोरक्ष्यमेव च ।
न च सर्व्वातिथित्वं वा मम चित्ते प्रसज्जति ॥ ३० ।
एकं मे परमं चिन्त्यं यन्मनिच्छा तपोधृतौ ।
चिन्ता नारायणत्वं गार्हं सौकरवस्पति ॥ ३१ ।
ततः पुत्रवचः श्रुत्वा मम कर्म्मपरायणौ ।

१ कृमान ह्रति ग ।

करुणम्परिदेवन्तौ रुदन्तौ तावुभौ तथा ॥ ३२ ।
अद्य द्वादशवर्षाणि तव जातस्य पुत्रक ।
किमिदं चिन्तितं वत्स त्वया नारायणाश्रयम् ।
चिन्तयिष्यसि भद्रन्ते यदा तत्प्राप्नुया वयः ॥ ३३ ।
अद्यापि भोजनं गृह्य धावमानास्मि पृष्ठतः ।
किमिदं चिन्तितं वत्स गमने सौकरम्प्रति ॥ ३४ ।
अद्यापि मत्स्तनौ धन्यौ प्रस्नुतौ हि दिवानिशम् ।
पुत्र त्वत्स्पर्शनाशायाः किमेतच्चिन्तितं त्वया ॥ ३५ ।
रात्रौ सुप्तोऽसि वत्स त्वं शय्यासु परिवर्त्तितः ।
अम्बेति भाषसेऽद्यापि कथमेतद्विचिन्तितम् ॥ ३६ ।
स्मरन्ति तव नार्य्योऽपि क्रीड़मानस्य पुत्रक ।
अपराधो न विद्येत पुत्र तेषु गृहेष्वपि ॥ ३७ ।
न वा स्वजनभृत्याद्यैः परुषन्ते प्रभाषितम्
रुष्टेन वापि भीषायै गृह्यते चैव यष्टिका ।
पुत्र हेतुं न पश्येऽहं तव निर्व्वेदकारणम् ॥ ३८ ।
इति मातुर्वचः श्रुत्वा स वैश्यकुलनन्दनः ।
उवाच मधुरं वाक्यं जननीं संशितव्रतः ॥ ३९ ।
उषितोऽस्मि त्वदङ्गेषु गर्भस्थः कुक्षिसम्भवः ।

गृहीत्वेति साधु. एवं सर्वत्र । गमने सौकरवं प्रतीति क. ख. तत्र छन्दो दोषः । सौकरं प्रतीति पाठे च सौकरमित्यस्य वकारलोप आर्षः । यानि सौकरवं प्रतीत्यत्र छन्दो तु न दोषः । तदिदं कारणं प्रतीति (क. (ख ।

क्रीडितोऽस्मि यथान्यायं तवाङ्के यशस्विनि ॥ ४० ॥
स्तनौ ह्येतौ मया पीतौ ललितेन विजृम्भितौ ।
अङ्कस्तव समारूढः पांशुभिर्गुण्ठिता तनुः ॥ ४१ ॥
अम्ब त्वं मयि कारुण्यं कुरुष्व खलु चोचितम् ।
मुञ्च पुत्रकृतं शोकं त्यज मातरनिन्दिते ॥ ४२ ॥
आयान्ति च पुनर्यान्ति गता गच्छन्ति चापरे* ।
दृश्यन्ते च पुनर्नष्टा न दृश्यन्ते पुनः क्वचित्† ॥ ४३ ॥
कुतो जातः क्व सम्बद्धः कस्य माता पिताथवा ।
इमां योनिमनुप्राप्तो घोरे संसारसागरे ॥ ४४ ॥
मातापितृसहस्राणि पुत्रदारशतानि च ।
जन्मजन्मनि वर्त्तन्ते कस्य ते कस्य वा वयम् ।
एवं चिन्तां समाधाय मा शुचो जननि क्वचित् ॥ ४५ ॥
एवं तौ पितरौ श्रुत्वा विस्मयात्पुनरूचतुः ।
अहो वत महद्दुःखं किमेतत्तात कथ्यताम् ॥ ४६ ॥
एतद्वचनमाकर्ण्य स वैश्यकुलबालकः ।
उवाच मधुरं वाक्यं जननीं पितरं तथा ॥ ४७ ॥
यदि श्रुतेन वः कार्यं गुह्यस्य परिनिश्चयात् ।
तत्पृच्छतां‡ भवद्भ्यां हि गुह्यं सोऽकरवम्मति ॥ ४८ ॥
तत्राहं कथयिष्यामि स्वस्य गुह्यं महोजसम् ।

* सागरे इति क, ख । † दृश्यन्ते न पुनर्नष्टा दृश्यन्ते च पुनः क्वचिदिति (ग) । ‡ पृच्छतामिति (ग), स चार्षप्रयोगः ।

सूर्य्यतीर्थं समासाद्य यत्तान परिपृच्छसि ॥ ४८ ।
वाढ़मित्येव पुत्रं तौ दम्पती प्रोचतुश्च तम्* ।
गमने कृतसङ्कल्पा ततः सौकरवं प्रति ॥ ४९ ।
सर्व्वद्रव्यसमायुक्ता गमने सौकरवम्प्रति।† ।
ततः स पद्मपत्राक्ष आभीराणां जनेश्वरः ।
गावोविंशसहस्राणि प्रेषयत्यग्रतोद्रुतम् ॥ ५१ ।
अग्रे प्रययुस्ताः सर्व्वा द्रव्येण च समायुताः ।
यच्च किञ्चिद्गृहे वास्ति‡ कृतं नारायणम्प्रति ॥ ५२ ।
ततः पूर्व्वाईयामेन माघमासे त्रयोदशी ।
सर्व्वं स्वजनमामन्त्र्य सम्बद्ध्य यथाविधि ॥ ५३ ।
मुहूर्त्तेन च तेनैव गमनं कुरुते ततः ।
स्नात्वा च कृतशौचास्ते नारायणमुदावहाः । ५४ ।
अथ§ दीर्घेण कालेन नारायणमुदावहाः ।
वैशाखस्य तु द्वादश्यां मम चैत्रमुपागताः ॥ ५५ ।
स्नाताः सन्तर्प्य च पितॄन्मम वस्त्रविभूषिताः ।
गावोविंशतिसाहस्रा याः पूर्व्वमुपकल्पिताः ॥ ५६ ।
तत्र भङ्गुरसोम¶ नाम मम कर्म्मपरायणः ।
तेनैव ता गृहीता वै विधिदृष्टेन कर्म्मणा ॥ ५७ ।
ततः स प्रददौ तस्य विंशा गावो महाधनाः ।

---

* वाढ़मित्येव तं पुत्रं दम्पती प्रत्युवाच तमिति (ग)। तत्र कर्त्तृद्वयस्य एकवचनान्तक्रिया तमित्यस्य पुनरुक्तत्वञ्च। † अत्रापि पूर्ब्बवत् छन्दोदोषः, यानि सौकरवं प्रतीति कृते तु न दोषः। ‡ चास्तीति (ग)। § तेऽर्थ्येति (ग)। ¶ भागुरसो नामेति (ग)।

मङ्गल्याश्च पवित्राश्च सर्व्वाश्च वरदोहना: ॥ ५८ ।
प्रददौ धनरत्नानि नित्यमेव दिने दिने ।
मोदते सह पुत्रेण भार्य्यया स्वजनेन च ॥ ५९ ।
एवन्तु वसतस्तस्य वर्षाकाल उपागत: ।
प्रावृड़्पस्थिता तत्र सर्व्वगस्यप्रवर्द्धिनी ॥ ६० ।
पुष्पितानि कदम्बानि कुटजार्ज्जुनकानि च ।
एवं दु:खमनुप्राप्ता. स्त्रियो या रहिता: प्रियै: ॥ ६१ ।
गर्ज्जिताङ्कुराश्चैव धारापातनिपातिता ।
मेघा: सविद्युतश्चैव बलाकाङ्गदभूषिता: ॥ ६२ ।
नदीनाञ्चैव निर्घोषो मयूराणाञ्च निस्वन: ।
कुटजार्ज्जुनगन्धाश्च कदम्बार्ज्जुनपादपा: ॥ ६३ ।
वाता: प्रवान्ति ते तत्र गिरिखनाञ्च सुखावहा: ।
शोकेन कामिनीनाञ्च भर्त्रा च रहिताश्च या: ॥ ६४ ।
एवं स गच्छते* कालो मेघदुन्दुभिनादित: ।
तत: शरदनुप्राप्ता अगस्तिकदितो महान् ॥ ६५ ।
तड़ागानि प्रसन्नानि कुमुदोत्पलवन्ति च ।
पद्मषण्डै: सुरम्याणि पुष्पितानि समन्तत: ॥ ६६ ।
प्रवान्ति तु सुखा वाता: सुगन्धाश्च सुशीतला: ।
सप्तपर्णसुगन्धाश्च शीतला: कामिवल्लभा: ॥ ६७ ।
एवं शरदि निर्वृत्ते कौमुदे समुपागते ।

* गच्छतीति साधु ।

सा तस्मिन्मासे सुश्रोणि शुक्लपक्षान्तरे तदा ॥ ६८ ।
एकादश्यां ततः सुभ्रु स्नातौ क्षौमविभूषितौ ।
उभौ तौ दम्पती तत्र पुत्रमूचतुरात्मनः ॥ ६९ ।
उषितास्त्वत्र षण्मासान् सुखांश्च द्वादशी भवेत् ।
किन्नो न वक्ष्यसे* गुह्यं येन वै वारिता वयम् ॥ ७० ।
पित्रोस्तु वचनं श्रुत्वा स पुत्त्रो धर्म्मनिश्चितः ।
उवाच मधुरं वाक्यं तयोस्तु कृतनिश्चयः ॥ ७१ ।
एवमेतन्महाभाग यत्त्वया परिभाषितम् ।
कल्यन्ते† कथयिष्यामि इदं गुह्यं महौजसम् ॥ ७२ ।
एषा वै द्वादशी तात प्रभुनारायणप्रिया ।
मङ्गला च विचित्रा च विष्णुभक्तसुखावहा ॥ ७३ ।
ददतेऽस्यां प्रहृष्टा च द्वादश्याङ्कौमुदे सिते ।
दीक्षितास्ते योगिकुले विष्णुभक्तिपरायणाः ॥ ७४ ।
तेन दानप्रभावेण विष्णुतोषकरेण च ।
तरन्ति दुस्तरन्तात घोरं संसारसागरम् ॥ ७५ ।
एवं कथयतान्तेषां प्रभाता रजनी शुभा ।
ततः सन्ध्यामुपास्याथ उदिते सूर्य्यमण्डले ।
शुचिर्भूत्वा यथान्यायं क्षौमवस्त्रविभूषितः ॥ ७६ ।
प्रणम्य शिरसा देवं शङ्खचक्रगदाधरम् ।
उभौ तच्चरणौ गृह्य पितरौ समभाषत ॥ ७७ ।

* वक्ष्यसीति साधु । † कल्ये ते इति (ख) ।

शृणु तात महाभाग यदर्थं समुपागतः ।
यद्वान्पृच्छति* तात गुह्यं मोक्षरवम्मति ॥ ७८ ।
खञ्जरीटोऽहमहं तात पक्षियोनिसमुद्भवः ।
भक्षिताश्च पतङ्गा मे अजीर्णेनातिपीड़ितः ॥ ७९ ।
अहन्त्वेनेव दोषेण न शक्नोमि विचेष्टितुम् ।
दृष्ट्वा मां विह्वलं बाला गृहीत्वा क्रीड़ितुं गताः ॥ ८० ।
हस्ताद्धस्तेन क्रोड़न्तयान्योऽन्यपरिहासया ।
त्वया दृष्टोमया दृष्टो न्यायेति कलिः कृतः ॥ ८१ ।
तत एकेन बालेन भ्रामयित्वान्तयेऽम्भसि ।
न मरति तवेत्युक्त्वा क्षिप्तोऽयं तीर्थमुत्तमम् ।
कोकिनाद्वाय तीव्रेण क्षिप्तो गङ्गाम्भसि त्वरा ॥ ८२ ।
तत्र मुक्ता मया प्राणाः सूर्य्यतीर्थे महौजसि ।
अकामेन विशालाक्षि तत्प्रभावादहं ततः† ।
जातस्तव सुतो मातस्त्वेतद्दिनमुत्तमम् ॥ ८३ ।
अकामान्म्रियमाणस्य वर्षाण्यस्य चयोदश ।
व्यतीतानि च गुह्यन्ते कथनं मम चैव यत् ॥ ८४ ।
एतत्ते कथितन्तात गुह्यमागमनम्मति ।
अहङ्कर्म्म करिष्यामि गच्छ तात नमोऽस्तु ते ॥ ८५ ।
ततो माता पिता चैव पुत्त्रम्पुनरुवाच ह ।
विष्णुप्रोक्तानि कर्म्माणि यं यङ्कारयिताऽ‡ भवान् ॥

---

* पृच्छतीति साधु । † तत्र इति (ग) । ‡ यद्यत्कारयितेति साधु ।

तान्वयञ्च करिष्यामो विधिदृष्टेन कर्म्मणा।
घटमाना* यथान्यायङ्कर्म्म संसारमोक्षणम्॥ ८६|८७।
तेऽपि दीर्घेण कालेन मम कर्म्मपरायणाः।
कृत्वा तु विपुलं कर्म्म ततः पञ्चत्वमागताः॥ ८८।
मम तेजप्रभावेण चात्मनः कर्म्मनिश्चयात्।
विमुक्ताः सर्व्वसंसाराच्छ्वेतद्वीपमुपागताः†॥ ८९।
योऽसौ परिजनः कश्चिद्गृहेभ्यश्च समागतः‡।
सर्व्वः स्त्रिया युतः§स्तत्र रोगव्याधिविवर्ज्जितः॥ ९०।
सर्व्वे च योगिनस्तत्र सर्व्वे चोत्पलगन्धयः।
मोदन्ते तु यथान्यायं प्रमादात्तेजजान्मम॥ ९१।
एतत्ते कथितन्देवि महाख्यानं महौजसम्।
पुनरन्यत्प्रवक्ष्यामि यद्वृत्तं सौकरे¶ मम॥ ९२।
एषा व्युष्टिर्महाभागे क्षेत्रे यत्क्रियते महत्।
तिर्य्यग्योनिविनिर्मुक्ताः श्वेतद्वीपमुपागताः॥ ९३।
य एतत्पठते नित्यं कल्यमुत्थाय मानवः।
स कुलांस्तारयेत्तूर्णं दश पूर्व्वान्दशावरान्॥ ९४।
न पठेन्मूर्खमध्ये तु पापिष्ठे शास्त्रदूषके।
न पठेत्पिशुनानाञ्च एकाकी तु पठेद्गृहे॥ ९५।

---

* पठमाना इति (क), (ख)। † प्रमुक्ताः सर्व्वसंसारान्मम कर्म्मपरायणाः। देवि तेजप्रभावेण श्वेतद्वीपमुपागताः इति (ग)। ‡ एतदर्द्धं (ग) पुस्तके नास्ति। § स्त्रियाद्युत इति (ग)। ¶ सौकरवे मर्मेति (क), (ख)। पाठोऽत्र एकाक्षराधिकम्। अन्यत्र वकारलोप आर्षः। ‖ दशापरानिति (ग)।

पठेद्ब्राह्मणमध्ये च ये च वेदविदां वराः ।
वैष्णवानाञ्च पुरतो* ये च शास्त्रगुणान्विताः ।
विशुद्धानां विनीतानां सर्व्वसंसारमोक्षणम् ॥ ८६ ॥

[illegible]

[illegible]

## ऊनचत्वारिंशदधिकशततमोऽध्यायः ।

वराह उवाच

शृणु तत्त्वेन मे देवि लिप्यमानस्य यत्फलम् ।
सर्व्वन्ते कथयिष्यामि यथा प्राप्नोति मानवः ॥ १ ॥
गृहीत्वा गोमयम्भूमिं मम वेश्मोपलेपयेत् ।
न्यस्तानि तत्र यावन्ति पदानि च विनिस्सृतः ।
तावद्वर्षसहस्राणि दिव्यानि दिवि मोदते ॥ २ ॥
यदि द्वादशवर्षाणि लिप्यते मम कर्म्मसु ।
जायते विपुले शुद्धे धनधान्यसमाकुले ॥ ३ ॥
दिव्यैर्नमस्कृतो देवि कुशद्वीपञ्च गच्छति ।
कुशद्वीपमनुप्राप्य सहस्राणि च जीवति ।
दश चैव तु वर्षाणां मम भक्तो महान् शुचिः ॥ ४ ॥

* वैष्णवानाञ्च पुरतो ये इति (क), (ख) ।

कुशद्वीपात्परिभ्रष्टो मम कर्म्मपरायणः।
राजा वै जायते सुभ्रु सर्व्वधर्म्मेषु निश्चितः॥ ५॥
लेपनस्य प्रभावेण मम कर्म्मपरायणः।
भक्तो व्यवस्थितश्चापि सर्व्वशास्त्राणि पृच्छति॥ ६॥
देवि कारयते सर्व्वं मम चायतनानि च।
कारयित्वा यथान्यायं मम लोकाय गच्छति॥ ७॥
गोमयस्य तु वक्ष्यामि तच्छृणुष्व वसुन्धरे।
गोमयन्तु समासाद्य यावल्लोकोऽनुगच्छति
समीपे यदि वा दूरे गत्वा नयति गोमयम्॥ ८॥
यावन्ति तत्पदान्यस्य तावद्वर्षसहस्रकम्।
गोमयानयिता चैव स्वर्गलोके महीयते॥ ९॥
ततः स शाल्मले द्वीपे रमते च मुदा युतः।
एकादशसहस्राणि एकादशशतानि च॥ १०॥
शाल्मलात्तु परिभ्रष्टोराजा भवति धार्म्मिकः।
मद्भक्तश्चैव जायेत सर्व्वधर्म्मविदां वरः॥ ११॥
अथ द्वादशवर्षाणि मच्छितः सुदृढ़व्रतः।
वहते गोमयं सुभ्रु मम लोकाय गच्छति॥ १२॥
स्नानोपलेपने भूमे सलिलं यो ददाति च।
तस्य पुण्यं महाभागे शृणु तत्त्वेन निष्कलम्॥ १३
यावन्तो विन्दवस्तत्र पानीयस्य वसुन्धरे।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥ १४॥
स्वर्गलोकात्परिभ्रष्टः क्रौञ्चद्वीपञ्च गच्छति।

क्रौञ्चद्वीपात्परिभ्रष्टो राजा भवति धार्म्मिकः ।
तेनैव गुणयोगेन श्वेतद्वीपञ्च गच्छति ॥ १५ ।
सम्मार्ज्जनस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे ।
यां गतिम्प्रपा यान्ति स्त्रियो वा कर्मसु स्थिताः ॥ १६ ।
शुचिर्भागवतः शुद्धो अपराधविवर्ज्जितः ।
यावन्तः पांशवो भूमिरुद्धीयन्ते तु चालिताः ।
तावद्वर्षगतान्यायु स्वर्गलोके महीयते ॥ १७ ।
स्वर्गलोकात्परिभ्रष्टः शाकद्वीपाय गच्छति ।
तत्र स्थित्वा चिरङ्कालं राजा भवति धार्म्मिकः ॥ १८ ।
ततोभुक्ता सर्व्वभोगान् स्थित्वा संसारसागरे ।
श्वेतद्वीपं ततो गच्छेत्स्वकर्म्मनिरतः शुचिः ॥ १९ ।
अन्यत्ते प्रवक्ष्यामि शृणुष्व गदतोमम ।
गायनं ये प्रकुर्व्वन्ति मम कर्म्मपरायणाः ।
तेषां यद्यत्फलम्भूमे शृणुष्व गदतोमम* ॥ २० ।
गायमानस्य गीतस्य यावदक्षरपङ्क्तयः ।
तावद्वर्षसहस्राणि इन्द्रलोके महीयते ॥ २१ ।
रूपवान् गुणवान् सिद्धः सर्व्ववेदविदां वरः ।
निःस्पृश्यति तत्रस्थो देवराजं न संशयः ॥ २२ ।
सहस्रश्चैव जायेत इन्द्रलोकपथे स्थितः ।
सर्व्वकर्म्मगुणश्रेष्ठस्तत्रापि मम पूजकः ॥ २३ ।

---

* (ग) पुस्तके एतदर्द्धं पर्य्यन्तश्लोकश्च न स्तः ।

इन्द्रलोकात्परिभ्रष्टो मम गीतपरायणः ।
नन्दनोपवने रम्ये रमन्* देवगणैः सह ॥ २४ ।
ततः स भूमौ जायेत वैष्णवैः सह संस्थितः ।
गायन्मम यशो नित्यं भक्त्या परमया युतः ।
मत्प्रसादात्स शुद्धात्मा मम लोकाय गच्छति ॥ २५ ।

सूत उवाच ।

तस्य तद्वचनं श्रुत्वा माधवस्य यशस्विनी ।
कृताञ्जलिपुटा भूयः प्रत्युवाच वसुन्धरा ॥ २६ ।

धरण्युवाच ।

अहो गीतप्रभावो वै यस्त्वया कीर्त्तितो महान् ।
के च गीतप्रभावेण सिद्धिं प्राप्ता महौजसः ॥ २७ ।

वराह उवाच ।

तत्रैव चाश्रमे भद्रे चाण्डालः कृतनिश्चयः† ।
दूराज्जागरणे याति मम भक्तौ व्यवस्थितः ॥ २८ ।
गायमानश्च गीतानि संवत्सरगणान् बहून् ।
श्वपाकः स गुणज्ञश्च मद्भक्तश्चैव सुन्दरि ॥ २९ ।
कौमुदस्य तु मासस्य शुक्लपक्षे तु द्वादशी ।
सुप्ते गते जने जाते वीणामादाय चङ्क्रमत् ।
जाग्रंस्तत्र स चाण्डालोऽगृहीतोब्रह्मरक्षसा ॥ ३० ।
अल्पप्राणः श्वपाको वै बलवान् ब्रह्मराक्षसः ।

* रमन् इति आर्षं रममाण इति साधु । † कृत्यनिश्चय इति (क), (ख) ।

दुःखशोकेन सन्तप्तो न शक्नोति विचेष्टितुम् ॥ ३१ ।
तेन प्रोक्तः श्वपाकेन बलवान् ब्रह्मराक्षसः ।
किन्त्वया चेष्टितं मह्यं यस्त्वेवं परिधावसि ॥ ३२ ।
श्वपाकवचनं श्रुत्वा तेन वै ब्रह्मरक्षसा ।
ततः प्रोवाच तं खादं मानुषाहारलोलुपः ॥ ३३ ।
अथेह दशरात्रं मे निराहारस्य तिष्ठतः ।
विधात्रा विहितस्त्वञ्च आहारः पारणाविधौ ॥ ३४ ।
अद्य त्वां भक्षयिष्यामि सवसामांसशोणितम् ।
तृप्तिं यास्यामि परमां विधात्रा विहितां मम ॥ ३५ ।
ब्रह्मरक्षोवचः श्रुत्वा श्वपाको गीतलालसः ।
राक्षसं छन्दयामास मम भक्त्या व्यवस्थितः ॥ ३६ ।
एवमेतन्महाभाग भक्ष्योऽहं समुपागतः ।
अवश्यमेतत्कर्त्तव्यं धात्रा दत्तं यथा तव ॥ ३७ ।
किन्त्वहं देवदेवस्य भक्त्या गातुञ्च जागरे ।
उद्यतस्तत्र गत्वाहमुपास्य विधिना हरिम् ।
पश्चात्खादस्व* मां रक्षो जागराद्विनिवर्त्तितम्† ॥ ३८ ।
विष्णोः सन्तोषणार्थाय यतामि व्रतमास्थितम् ।
जागरे विनिवृत्ते मां भक्षय त्वं यदीच्छसि‡ ॥ ३९ ।
श्वपाकस्य वचः श्रुत्वा ब्रह्मरक्षः क्षुधार्दितः ।

---

* खाद खादयेति वा साधु । † विनिवर्त्तितमित्यत्र स्वार्थे णिच् । ‡ भक्षयस्व यदीच्छसीति (ग) ।

उवाच परुषं वाक्यं श्वपाकस्तदनन्तरम् ॥ ४० ॥
मिथ्या किं भाषसे मूढ़ पुनरेष्यामि तेऽन्तिकम्।
मृत्योर्मुखमनुप्राप्य पुनर्ज्जीवति मानवः।
रक्षसोमुखविभ्रष्टः पुनरागन्तुमिच्छसि ॥ ४१ ॥
राक्षसस्य वचः श्रुत्वा चाण्डालस्तमथाब्रवीत्।
यद्यप्यहं हि चाण्डालः पूर्व्वकर्म्मविदूषितः।
सम्प्राप्तो मानुषम्भावं निहितेनान्तरात्मना ॥ ४२ ॥
शृणु मत्समयं रक्षो येनाहं पुनरागमम्।
दूराज्जागरणङ्कृत्वा लोकस्य द्विजराक्षस।
सत्येन पुनरेष्यामि मन्यसे यदि मुञ्च माम् ॥ ४३ ॥
सत्यमूलञ्जगत्सर्व्वं लोकाः सत्ये प्रतिष्ठिताः।
सत्येन सिद्धिम्प्राप्ता हि ऋषयो ब्रह्मवादिनः ॥ ४४ ॥
सत्येन दीयते कन्या सत्यं जल्पन्ति ब्राह्मणाः।
सत्यं जयन्ति राजानस्त्रीण्येतान्यब्रुवन्नृतम् ॥ ४५ ॥
सत्येन गम्यते स्वर्गो मोक्षः सत्येन चाप्यते।
सत्येन तपते सूर्य्यः सोमः सत्येन रज्यते ॥ ४६ ॥
षष्ट्यष्टमीममावास्यामुभे पक्षे चतुर्द्दशी।
अस्नातानाङ्गतिङ्गच्छे यद्यहं नागमे* पुनः ॥ ४७ ॥
गुरुपत्नीं राजपत्नीं योऽभिगच्छति मोहितः।
ताङ्गतिं सम्प्रपद्येऽहं यद्यहं नागमे पुनः ॥ ४८ ॥

* गच्छे इत्यार्षं गच्छेयमिति साधु। नागमे इत्यार्षं नागच्छेयमिति साधु। एवं परत्र।

याजकानाञ्च ये लोका ये च मिथ्याभिभाषिणाम् ।
ताङ्गतिं सम्प्रपद्येऽहं यद्यहं नागमे पुनः ॥ ४९ ।
ब्रह्मघ्ने च सुरापे वा स्तेने भग्नव्रते तथा ।
तेषां गतिम्प्रपद्येऽहं यद्यहं नागमे पुनः ॥ ५० ।
श्वपाकवचनं श्रुत्वा तुष्टो ब्राह्मणराक्षसः ।
उवाच मधुरं वाक्यं गच्छ शीघ्रं नमोऽस्तु ते ॥ ५१ ।
ब्रह्मराक्षसमुक्ता तु श्वपाकः कृतनिश्चयः ।
पुनर्गायति मन्त्रं वै मम भक्तो व्यवस्थितः ॥ ५२ ।
अथ प्रभाते विमले गीते नृत्ये च जागरे ।
नमो नारायणायेति श्वपाकः परिवर्त्तते ॥ ५३ ।
ततस्त्वरितमागत्य पुमांस्तस्याग्रतः स्थितः ।
उवाच मधुरं वाक्यं चाण्डालकृतनिश्चयम् ॥ ५४ ।
क्व यासि त्वरितः साधो न च त्वं गन्तुमर्हसि ।
जानन् कौणपपतिन्तत्र न त्वं मर्त्तुमिहार्हसि ॥ ५५ ।
पुरुषस्य वचः श्रुत्वा चाण्डालः पुनरब्रवीत् ।
समयोऽसि कृतः पूर्व्वं राक्षसेन हि भक्षता ।
तेन तत्र गमिष्यामि सत्यं च परिपालयन् ॥ ५६ ।
ततः स पद्मपत्राक्षः श्वपाकम्प्रत्युवाच ह ।
मधुराङ्गिरमादाय विहितेनान्तरात्मना ॥ ५७ ।
मा गच्छ तत्र चाण्डाल यत्रासौ पापराक्षसः ।
जीवितार्थाय सत्यस्य न दोषः परिहापनात् ॥ ५८ ।
ततस्तस्य वचः श्रुत्वा श्वपाकः शंसितव्रतः ।

उवाच मधुरं वाक्यं मरणे कृतनिश्चयः ॥ ५९ ॥
नाहमेवं करिष्यामि यस्मात्त्वं परिभाषसे ।
न चाहं नाशये सत्यमेतन्मे निश्चितं व्रतम् ॥ ६० ॥
सत्यमूलं जगत्सर्व्वं कुलं सत्ये प्रतिष्ठितम् ।
सत्यमेव परो धर्म्म आत्मा सत्ये प्रतिष्ठितः ॥ ६१ ॥
न चैवाहं तदुत्सृज्य असत्यः स्यां कदाचन ।
नाहं मिथ्या चरिष्यामि गच्छ तात नमोऽस्तु ते ॥ ६२ ॥
एवमुक्त्वा श्वपाकोऽपि नित्यं सत्यव्रते स्थितः ।
राक्षसं समनुप्राप्तस्तमुवाचाथ पूजयन् ॥ ६३ ॥
आगतोऽस्मि महाभाग मा विलम्बय भक्षय ।
त्वत्प्रसादादहं गन्ता वैष्णवं स्थानमुत्तमम् ॥ ६४ ॥
एतानि मम गात्राणि भक्षयस्व यथेष्टतः* ।
पिबोष्णं रुधिरं मह्यं† पीड़ितोऽसि क्षुधा भृशम् ।
तर्पयस्व स्वमात्मानं कुरुष्व मम वै हितम् ॥ ६५ ॥
श्वपाकस्य वचः श्रुत्वा ततः स ब्रह्मराक्षसः ।
उवाच मधुरं वाक्यं श्वपाकन्तदनन्तरम् ॥ ६६ ॥
साधु तुष्टोऽस्म्यहं वत्स सत्यं धर्म्मञ्च पालितम् ।
चण्डालस्याविधिज्ञस्य यस्य ते मतिरीदृशी ॥ ६७ ॥
ब्रह्मरक्षोवचः श्रुत्वा श्वपाकः सत्यसङ्गरः ।
उवाच मधुरं वाक्यं ब्रह्मराक्षसमेव तु ॥ ६८ ॥

* यथाभिलषितमिति (ग) । † ममात्यन्त मह्यमिति आर्षम्

यद्यप्यहं वै चाण्डालः सर्व्वकर्म्मविवर्ज्जितः* ।
तथापि सत्यं वक्तव्यं ब्रह्मराक्षस निश्चयः ॥ ६८ ।
श्वपाकवचनं श्रुत्वा ब्रह्मरक्षो भयानकम् ।
उवाच मधुरं वाक्यं श्वपाकं संशितव्रतम् ॥ ७० ।
यत्त्वया गीयते रात्रौ विष्णोर्जागरणम्प्रति ।
फलङ्गीतस्य मे देहि यदीच्छेर्जीवितं स्वकम् ।
ततो मोक्ष्यामि कल्याण भक्षयामि न भीषण:† ॥ ७१ ।
ब्रह्मरक्षोवचः श्रुत्वा श्वपाकः प्रत्युवाच ह ।
मनोऽज्ञातमिदं वाक्यं ब्रह्मरक्षो निशामये ।
भक्षयामीति चोक्ता मां गीतपुण्यं किमिच्छसि ॥ ७२ ।
श्वपाकवचनं श्रुत्वा ब्रह्मरक्षोऽब्रवीत्पुनः ।
एकयामीयं मे देहि पुण्यङ्गीतस्य वै परम् ।
ततोमोक्ष्यमि भक्ष्येण सङ्गतः पुत्रदारकैः ॥ ७३ ।
श्रुत्वा राक्षसवाक्यानि चाण्डालोगीतलोभितः ।
उवाच मधुरं वाक्यं राक्षसङ्कृतनिश्चयः ॥ ७४ ।
न गायनफलन्दद्मि ब्रह्मरक्षस्तवेप्सितम् ।
भक्षयस्व यथान्यायं रुधिरं पिव चेप्सितम् ॥ ७५ ।
श्वपाकवचनं श्रुत्वा राक्षसः पुनरब्रवीत् ।
एकगीतस्य मे देहि यत्त्वया विष्णुसंसदि ।
एतेन तारितोऽस्मीति तव गीतफलेन वै ॥ ७६ ।

---

* पाककर्म्मबहिष्कृत इति (ग) । † सर्गोपण इति (क), (ख) ।

श्रुत्वा वाक्यानि चाण्डालो राक्षसस्य निवारयन्।
उवाच मधुरं वाक्यं चाण्डालो विस्मयान्वितः॥ ७७॥
किन्त्वया विकृतं कर्म्म तद्ब्रूहि मम राक्षस।
कर्म्मणो यस्य दोषेण राक्षसत्वं समागतः॥ ७८॥
श्वपाकवचनं श्रुत्वा ब्रह्मरक्षोमहाशयः।
उवाच मधुरं वाक्यं दुःखसन्तप्तमानसः॥ ७९॥
नाम्ना वै सोमशर्म्माहं चरको ब्रह्मयोनिजः।
सूत्रमन्त्रपरिभ्रष्टो यज्ञकर्म्मसु निश्चितः॥ ८०॥
ततोऽहं याजयाम्यज्ञान् लोभमोहप्रपीड़ितः।
प्रवर्त्तमाने यज्ञे तु कदाचिद्दै वशोगतः।
उदरे जातशूलोऽहं तेन पञ्चत्वमागतः॥ ८१॥
अथ पञ्चमहारात्रे ह्यसमाप्ते क्रतौ तथा।
अस्य यज्ञस्य दोषेण मातङ्ग* शृणु मे वचः।
राक्षसत्वमनुप्राप्तस्तेन दुष्टेन कर्म्मणा॥ ८२॥
मन्त्रहीनं मया तत्र स्वरहीनञ्च तत्कृतम्।
सूत्रहीनं तथा तत्र प्रायश्चित्तादि कृतं मया॥ ८३॥
परिमाणञ्च रूपञ्च मया तत्रोपलक्षितम्।
कृतस्य तस्य दोषेण योनिम्प्राप्तोऽस्मि राक्षसीम्॥ ८४॥
स्वगीतफलदानेन निस्तारयितुमर्हसि।
मोचयस्वाधमं पापाद्विष्णुगीतेन सत्वरम्॥ ८५॥

---

* मतङ्ग इति (ग)।

ब्रह्मरक्षोवचः श्रुत्वा श्वपाकः संशितव्रतः ।
बाढमित्येव तं वाक्यं राक्षसम्प्राब्रवीत्तदा ॥ ८६ ।
एतस्य मम गीतस्य सुस्वरस्य फलन्तु यत् ।
ददामि राक्षस त्वञ्चेन्मुच्यसे शुद्धमानसः ॥ ८७ ।
यस्तु गायति संयुक्तं गीतकं विष्णुसन्निधौ ।
स तारयति दुर्गाणि गोत्यक्ता तद्वत्तवान्फलम् ॥ ८८ ।
एवं तस्मात्फलम्प्राप्य श्वपाकाद्राक्षसस्तदा ।
जातः सुविमलो भद्रे शरदीव यथा शशी ॥ ८९ ।
श्वपाकश्चापि सुश्रोणि मम चैवोपगायकः ।
कृत्वा सुविपुलं कर्म स ब्रह्मत्वमुपागतः ॥ ९० ।
एतद्गीतफलन्देवि प्राप्नोति मनुजो भुवि ।
मच्च जागरतो भद्रे गीयमानं मनस्विनि ॥ ९१ ।
यस्तु गायति सुश्रोणि कौमुदीं द्वादशीं प्रति ।
सर्व्वसङ्गं परित्यज्य मम लोकाय गच्छति ॥ ९२ ।
यस्तु गायति गीतानि मम जागरणे सदा ।
सर्व्वसङ्गात्प्रमुक्तो वै मम लोकाय गच्छति ॥ ९३ ।
एतत्ते कथितन्देवि गायनस्य फलं महत् ।
यस्य गीतस्य शब्देन तरेत्संसारसागरम् ॥ ९४ ।
वादित्रस्य प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
प्राप्तवान्मानुषो येन देवेभ्यः सबलां* स्वयम् ॥ ९५ ।

---

* ममतामिति (ग)।

शम्यातालप्रयोगेण सन्निपातेन वा पुनः।
नववर्षसहस्राणि नववर्षशतानि च।
कुवेरभवनङ्गत्वा मोदते वै यदृच्छया॥ ९६।
कुवेरभवनाद्भ्रष्टः स्वच्छन्दगमनालयः।
शम्यादितालसम्पातैर्मम लोकाय गच्छति॥ ९७।
नृत्यमानस्य* वच्म्यानि तच्छृणुष्व वसुन्धरे।
मानवो येन गच्छेत† छित्त्वा संसारबन्धनम्॥ ९८।
त्रिंशद्वर्षसहस्राणि त्रिंशद्वर्षशतानि च।
पुष्करद्वीपमासाद्य स्वच्छन्दगमनालयः।
फलम्प्राप्नोति सुश्रोणि मम कर्म्मपरायणः॥ ९९।
रूपवान्गुणवान् शूरः शीलवान् सत्पथे स्थितः।
मद्भक्तश्चैव जायेत संसारपरिमोचितः॥ १००।
यस्तु जागरते नित्यं गीतवाद्येन नर्त्तकः।
जम्बुद्वीपं समासाद्य राजराजस्तु जायते॥ १०१।
सर्व्वकर्म्मसमायुक्तो रचिता वै महीपतिः।
मद्भक्तश्चैव जायेत मम कर्म्मपरायणः॥ १०२।
उपहार्य्याणि पुष्पाणि मम कर्म्मपरायणः।
यो मामुपानयेद्भूमे मम कर्म्मपथे स्थितः॥ १०३।
पुष्पाणि तत्र यावन्ति मम मूर्द्धनि धारयेत्।
स कृत्वा पुष्कलङ्कर्म्म मम लोकाय गच्छति॥ १०४।

* नृत्यत इति साधु। † गच्छेदिति साधु।

एतत्ते कथितन्देवि भक्तानान्तु महौजसाम् ।
मम भक्तसुखार्थाय सर्व्वसंसारमोक्षणम् ॥ १०५ ।
य एतत्पठते* भूमि कल्यमुत्थाय मानवः ।
स तु तारयते† जन्तुर्दश पूर्व्वान्दशापरान् ॥ १०६ ।
न पठेन्मूर्खमध्ये तु पिशुनानां पुरो न च ।
पठेद्भागवतानाञ्च मध्ये भक्तिरतात्मनाम् ॥ १०७ ।
अग्न्याद्धाने क्वचि वा न पठेद्देवले तथा ।
यदीच्छेत्सिद्धिकल्याणं मङ्गलञ्च मम प्रियम् ॥ १०८ ।
धर्म्माणां परमं धर्म्मं क्रियाणाम्परमा क्रिया ।
मा पठेच्छास्त्रदूषाय अध्यायं वा कदाचन ।
यदीच्छेत्परमां सिद्धिं मम लोके महीयते ॥ १०९ ।

इति वराहपुराणे भगवच्छास्त्रे सौकरे धरणीवराहसंवादे
सौकरमाहात्म्यं नाम ऊनचत्वारिंशदधिकशततमोऽध्यायः ।

## चत्वारिंशदधिकशततमोऽध्यायः ।

धरण्युवाच ।

श्रुतानि देवस्थानानि त्वया प्रोक्तानि यान्युत ।
कस्मिंस्तिष्ठसि नित्यन्त्वं तद्भवान्वक्तुमर्हसि ॥ १ ।
किञ्च ते परमं स्थानं यत्र मूर्त्याकृतिर्भवान् ।

* पठतीति साधु । † तारयतीति साधु ।

कस्मिन्स्थाने कृतङ्कर्म्म येन यात्युत्तमां गतिम् ॥ २ ।
वराह उवाच ।
शृणु तत्त्वेन मे देवि भक्तानां भक्तवत्सले ।
येषु स्थानेषु तिष्ठामि कथ्यमानानिमान्* शृणु ॥ ३ ।
तत्र कोकामुखं नाम यन्मया पूर्व्वभाषितम् ।
वदरीति च विख्यातं गिरिराजशिलातलम् ॥ ४ ।
स्थानं लोहार्गलं नाम म्लेच्छराजसमाश्रितम् ।
क्षणमपि न मुञ्चामि एवमेतन्न संशयः ॥ ५ ।
सचैत्यं पश्य मे स्थानं जगदेतच्चराचरम् ।
सर्व्वत्राहं वरारोहे न मन्यूनं हि जानते ॥ ६ ।
ये तु जानन्ति मां देवि गुह्यां कामगतिं मम ।
शीघ्रङ्कोकामुखं यान्तु मम कर्म्मपरायणाः ॥ ७ ।
ततो देववचः श्रुत्वा पृथिवी वाक्यमब्रवीत् ।
शिरस्यञ्जलिमाधाय निर्वृतेनान्तरात्मना† ॥ ८ ।
धरण्युवाच ।
सर्व्वतो लोकनाथेश परङ्कौतूहलं हि मे ।
कथङ्कोकामुखं श्रेष्ठं तद्भवान्वक्तुमर्हसि ॥ ९ ।
वराह उवाच ।
नास्ति कोकामुखात्क्षेत्रं श्रेष्ठङ्कोकामुखाच्छुचिः‡ ।
नास्ति कोकामुखात्स्थानं नास्ति कोकामुखात्प्रियम् ॥ १० ।

* स्थानस्य क्लीवत्वात्कथ्यमानानीमानीति युक्तम् । † निर्भृतनान्तरात्मनेति (क) ।
‡ क्वचिदिति (ग) ।

यस्तु कोकामुखङ्गत्वा न भूयो विनिवर्त्तते ।
कर्म्माणि तत्र कुर्व्वीत यष्टम्भवति चात्मनि ॥ ११ ।
यानि यानि च क्षेत्राणि त्वया पृष्टं वसुन्धरे* ।
कोकामुखसमं स्थानं न भूतं न भविष्यति ॥ १२ ।
मम सा परमा मूर्त्तिर्यां न जानन्ति गोपिताम् ।
स्थितङ्कोकामुखं नाम एतत्ते कथितं मया ॥ १३ ।

धरण्युवाच ।

देव देव महादेव भक्तानामभयप्रद ।
यानि गुह्यानि सन्त्यत्र कोकायां वक्तुमर्हसि ॥ १४ ।

वराह उवाच ।

शृणु तत्त्वेन मे देवि यन्मात्त्वम्परिपृच्छसि ।
तस्मिन् कोकामुखं रम्यं कथ्यमानं मयाऽनघे ॥ १५ ।
जलविन्दुरिति ख्याता† पर्व्वतात्पतनाद्भुवि ।
तत्र गुह्यमति देवि कृत्वा कर्म्म महौजसम् ।
सर्व्वसङ्गान्परित्यज्य मम लोकाय गच्छति ॥ १६ ।
विष्णुधारेति विख्याता कोकायां मम मण्डले ।
पर्व्वतात्पतिता भूमौ धारा मुसलसन्निभा ॥ १७ ।
अहोरात्रोषितो भूत्वा स्नायात्तत्र प्रयत्नतः ।
अग्निष्टोमसहस्राणां फलम्प्राप्नोति मानवः ॥ १८ ।
न मुह्यति स कर्त्तव्ये फलम्प्राप्नोति चोत्तमम् ।

* त्वया पृष्टानि सुन्दरीति मा० ।　† जलबिन्दुरिति विख्यातार्गलेति (क, ख) ।

जायते विपुले शुद्धे मम मार्गानुसारिणि। १९।
तत्राथ मुञ्चते प्राणान्विष्णुधारां समाश्रितः।
पश्यते परमां मूर्त्तिमेतां मम न संशयः॥ २०।
तत्र विष्णुपदं नाम स्थानङ्कोकामुखाश्रितम्।
एतत्कश्चिन्न जानाति धरे वाराहसंश्रितम्॥ २१।
तस्मिन् कृतोदका देवि रात्रावुपोषितो नरः।
क्रौञ्चद्वीपे प्रजायेत मम भक्तिपरायणः॥ २२।
तत्राथ मुञ्चते प्राणान् गुह्यस्थाने परे मम।
सर्व्वसङ्गान् परित्यज्य मम लोकाय गच्छति॥ २३।
अस्ति विष्णुसरोनाम यत्त्वया सह क्रीड़ितम्*।
यत्र दंष्ट्राप्रहारेण चाहृतासि वसुन्धरे। २४।
तत्र स्नानन्तु कुर्व्वीत प्रातःकाले वसुन्धरे।
सर्व्वपापविशुद्धात्मा मम लोकाय गच्छति॥ २५।
सोमतीर्थमिति ख्यातङ्कोकायां मम मण्डले।
यत्र पञ्चशिलाभूमिर्विष्णुनाम्ना तथाङ्किता॥ २६।
यस्तत्र कुरुते स्नानं पञ्चरात्रोषितो नरः।
गोमेदे जायते द्वीपे मम मार्गानुसारकः॥ २७।
तत्राथ मुञ्चते प्राणान् गुह्यक्षेत्रे परे मम।
सर्व्वपापविनिर्मुक्तः शुद्धात्मा मां स पश्यति॥ २८।
तुङ्गकूटेति विख्यातं कोकायां मम मण्डले।

* यत्र त्वया सह क्रीड़ितमिति (क), (ख) पुस्तकयोः पाठः, तत्र तु छन्दोदोषः।

धाराः पतन्ति चत्वारः पर्व्वतादुच्चसंश्रिताः ॥ २९ ।
यस्तत्र कुरुते स्नानं पञ्चरात्रोषितो नरः ।
कुशद्वीपं समासाद्य मम लोकेषु तिष्ठति ॥ ३० ।
अनित्यमाश्रमं नाम नैत्रकर्म्मसुखावहम् ।
देवापि* यं न जानन्ति किम्पनर्म्मनुजादयः ॥ ३१ ।
तत्र स्नात्वा वरारोहे अहोरात्रोषितः नरः ।
जायते पुष्करद्वीपे मम कर्म्मपरायणः ॥ ३२ ।
अथ तत्र मृतोभूमे पुण्यक्षेत्रे महाशुचिः ।
सर्व्वपापविनिर्मुक्तोमम लोकाय गच्छति ॥ ३३ ।
अस्त्यत्राग्निसरो नाम परङ्गुह्यं मम स्थितम् ।
पञ्च धाराः पतन्त्यत्र गिरिकुञ्जसमाश्रिताः ॥ ३४ ।
तत्र चापि कृतस्नानः पञ्चरात्रोषितोनरः ।
कुशद्वीपे च जायेत मम कर्म्मपरायणः ॥ ३५ ।
तत्राऽथ मुञ्चते† प्राणान्कृत्वा कर्म्म महोजसम् ।
कुशद्वीपात्परिभ्रष्टो ब्रह्मलोकञ्च गच्छति ॥ ३६ ।
अस्ति ब्रह्मसरोनाम गुह्यक्षेत्रं परं मम ।
यत्र धारा पतत्येका पुण्या भूमि शिलातले ॥ ३७ ।
तत्र स्नानम्प्रकुर्व्वीत पञ्चरात्रोषितो नरः ।
वसते सर्व्वलोकेषु मम मार्गानुसारकः ॥ ३८ ।
अथाऽत्र मुञ्चते प्राणान् सूर्य्यधारां समाश्रितः ।

* देवा अपीति साधु । † मुञ्चतीति साधु, एवं परत्रापि ।

मूर्य्यलोकमतिक्रम्य मम लोकन्तु गच्छति ॥ ३८ ।
अस्ति धेनुवटं नाम गुह्यं क्षेत्रं परं मम ।
एका धारा पतत्यत्र देवि पूर्णा गिरेर्श्चयात्* ॥ ४० ।
तत्र स्नानम्प्रकुर्व्वीत एकमेकं दिनन्तथा ।
सप्तरात्रोपितोभूत्वा मम कर्म्मसमाश्रितः ॥ ४१ ।
स्नात्वा सप्तसमुद्रेषु लब्धसंज्ञः समाहितः ।
विहरेत्सप्तद्वीपेषु मम कर्म्मपरायणः ॥ ४२ ।
तत्राथ मुञ्चते प्राणान्मम भक्तिसमन्वितः ।
सप्तद्वीपमतिक्रम्य मम लोकन्तु गच्छति ॥ ४३ ।
अस्ति धर्म्मोद्भवं नाम तस्मिन क्षेत्रे परे मम ।
गिरिकुञ्जात्पतत्येका धारा भूमितले शुभा ॥ ४४ ।
तत्र स्नानम्प्रकुर्व्वीत एकरात्रोपितो नरः ।
स वैश्योजायते शूद्रो मम कर्म्मपरायणः ॥ ४५ ।
तत्राऽथ मुञ्चते प्राणान् गुह्ये देवि गिरेर्श्चये ।
साङ्ख्यत्वं सदृत्तिरेण्यं भुक्त्वा मां† प्रतिपद्यते ॥ ४६ ।
अस्ति कोटिवटं नाम क्षेत्रं गुह्यम्परं मम ।
एका धारा पतत्यत्र वटमूलमुपाश्रिता ॥ ४७ ।
तत्र स्नानन्तु कुरुते रात्रावुपोषितो नरः ।
यावन्ति वटपत्राणि तस्मिन् शृङ्गे परे मम ।
तावद्वर्षसहस्राणि रूपसम्पत्समन्वितः ।

---

* पूर्णाशर्मोशयाद्विति (ग)। † भक्तोमामिति (क), (ख)।

तिष्ठति* तु वरारोहे मम मार्गानुसारिणि ॥ ४८।४९

तत्राऽथ मुञ्चते प्राणान् कृत्वा कर्म्म सुदुष्करम् ।
अग्निवर्णस्ततोभूत्वा मम लोकाय गच्छति ॥ ५० ।

पापप्रमोचनं नाम गुह्यमस्मिन् परं मम ।
पतितैकतमा धारा स्थूला कुम्भसमा ततः ॥ ५१ ।

यस्तत्र कुरुते स्नानमहोरात्रोषितो नरः ।
जायते च चतुर्वेदी मम कर्म्मपरायणः ॥ ५२ ।

तत्राऽथ मुञ्चते प्राणान् कौशिकीमाश्रितो नदीम् ।
यस्तत्र कुरुते स्नानं पञ्चरात्रोषितो नरः ।
मोदते वासवे लोके मम मार्गानुसारिणि ॥ ५३ ।

तत्राथ मुञ्चते प्राणान्मम कर्म्मपरायणः ।
वासवं लोकमुत्सृज्य मम लोकाय गच्छति ॥ ५४ ।

यमव्यसनकं नाम गुह्यमस्मिन् परं मम ।
स्रोतोवहति तत्रैकाकौशिकीमाश्रितं नदीम् ॥

स्नानङ्कुर्व्वन्ति ये तत्र एकरात्रोषिता नराः ।
भेदङ्किम्पुरुषम्प्राप्य जायते नाऽत्र संशयः ।
विद्वान् शुचिश्च जायेत मम कर्म्मानुसारकः* ॥ ५८ ।
तत्राऽथ मुञ्चते प्राणान् गुह्ये देवि परे मम ।
मुक्त्वा किम्पुरुषम्भेदं मम लोकञ्च गच्छति ॥ ६० ।
अस्ति वज्रभवं नाम गुह्ये तस्मिन् परं मम ।
स्रोतोवहति तत्रैकमाश्चितङ्गाशिरों नदीम् ॥ ६१ ।
स्नानङ्करोति यस्तत्र एकरात्रोषितो नरः ।
जायते शक्रलोके तु मम कर्म्मानुसारकः ॥ ६२ ।
शरीरचक्रसङ्घाते वज्रहस्तः स्वरूपकः ।
तत्र स्नानप्रभावेण जायते नात्र संशयः ॥ ६३ ।
अथाऽत्र मुच्यते प्राणान्मम चिन्तनतत्परः ।
शक्रलोकमतिक्रम्य मम लोकम्प्रपद्यते ॥ ६४ ।
तत्र त्रिक्रोशमात्रेण गुह्यं चैवम्परं मम ।
शक्ररुद्रेति† विख्यातं तस्मिन् कोकाशिलातले ॥ ६५ ।
स्नानङ्करोति यस्तत्र त्रिरात्रोपोषितो नरः ।
जम्बूद्वीपे प्रजायेत जम्बूर्यत्र प्रतिष्ठिता ।
जम्बूद्वीपं परित्यज्य जायते मम पार्श्वगः ॥ ६६ ।
अस्ति चान्यम्महद्गुह्ये चैवं गुह्यो विशेषितम् ।
मनुजा येन गच्छन्ति मुक्ता संसारसागरम् ॥ ६७ ।

* ति (क) (ख) । † शक्रवद्र इति साधु ।

दंष्ट्राङ्कुरेति* विख्यातं यत्र कोका विनिःसृता ।
एतद्गुह्यं न जानन्ति यतोमुह्यन्ति जन्तवः ॥ ६८ ॥
कर्तोदकस्तत्र भद्रे अहोरात्रोषितो नरः ।
जायते शाल्मलिद्वीपे मम कर्मानुसारिणः ॥ ६९ ॥
तत्राथ मुञ्चते प्राणान्मम कर्मसु निश्चितः ।
शाल्मलिद्वीपमुत्सृज्य मम पार्श्वे स तिष्ठति ॥ ७० ॥
तस्मिन्क्षेत्रे महाभागे परमस्ति फलोदकम् ।
विष्णुतीर्थमिति ख्यातं मम भक्तसुखावहम् ॥ ७१ ॥
ततः पर्वतमध्यात् कोकायाम्पतते जलम् ।
विस्तारतो महाभागे सर्वसंसारमोक्षणम् ॥ ७२ ॥
तस्मिन् कर्तोदकाभ्यासे कृत्वा समारम्भनम्
वायौ स भवनस्याथ वायुभूतस्तु तिष्ठति ॥ ७३ ॥
तत्राथ मुञ्चते प्राणान्मम कर्मसु निश्चितः ।
वायुलोकमतिक्रम्य मम लोकं स गच्छति ॥ ७४ ॥
अस्ति तत्र वरं स्थानं सङ्गमद्रोणिकोकयोः ।
सर्वकामिकेति विख्याता* शिला तिष्ठति चोत्तरे ॥ ७५ ॥
तत्र यः कुरुते स्नानमहोरात्रोषितो नरः ।
विस्मोणि जायते वंशे जातिं स्मरति चात्मनः ॥ ७६ ॥
स्वर्गं वा यदि वा भूमौ यं यं कामयते नरः ।
तं तं प्राप्नोति वै कामं स्नानमात्रः शिलातले ॥ ७७ ॥

[illegible]

तत्राऽथ मुञ्चते प्राणान्मम कर्म्मण्यवस्थितः।
सर्व्वसङ्गं परित्यज्य मम लोकं स गच्छति॥ ७८।
अस्ति मत्स्यशिला नाम गुह्यङ्कोकामुखे वरम्।
धाराः पतन्ति तस्मा वै कौशिकीमाश्रिता नदीम्॥ ७९।
तत्र च स्नायमानस्तु यदि मत्स्यं प्रपश्यति।
ततोजानास्यहं देवि शार्ङ्गनारायणः स्वयम्॥ ८०।
तत्र मत्स्यं पुनर्दृष्ट्वा यजमानस्तु सुन्दरि।
दद्यादर्घ्यं ततो भद्रे मधुलाजसमन्वितम्॥ ८१।
यस्तत्र कुरुते स्नानं देवि गुह्ये ततः परे।
तिष्ठते पद्मपत्रे तु सोत्तरे मेरुसंश्रिते॥ ८२।
अथ संप्राप्य मुच्येत मत्स्यं गुह्यम्परं मम।
सेरुशृङ्गं समासाद्य मम लोकाय गच्छति॥ ८३।
पञ्चयोजनविस्तारं क्षेत्रङ्कोकामुखं मम।
यस्त्वेतत्तु विजानाति न स पापेन लिप्यते॥ ८४।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
तस्मिन् कोकामुखे रम्ये तिष्ठामि दक्षिणामुखः॥ ८५।
शिलाचन्दनसङ्काशं देवानामपि दुर्लभम्।
वराहरूपमादाय तिष्ठामि पुरुषाकृतिः॥ ८६।
वामोन्नतमुखङ्कृत्वा वामदंष्ट्रासमुन्नतम्।
पश्यामि च जगत्सर्व्वं ये च भक्ता मम प्रियाः॥ ८७।

* स्नास्यु इति साधु। † स्नायमानस्तु इति ग। ‡ तिष्ठतीति साधु।

ये च मां स्मरते* भूमे पुरुषा मुक्तकिल्बिषाः ।
तत्र कुर्व्वन्ति कर्म्माणि शुद्धाः संसारमोक्षणे ॥ ८८ ।
यदि कोकामुखङ्गच्छेत्कदाचित्कालपर्य्यये ।
मा ततो विनिवर्त्तेत यदीच्छेन्मम साम्यताम् ॥ ८९ ।
गुह्यानां परमङ्गुह्यमेतत्स्थानं परं महत् ।
सिद्धानाम्परमा सिद्धिर्गुह्यङ्कोकामुखम्परम् ॥ ९० ।
न च सांख्येन योगेन सिद्धिं यान्ति महत्परामपि† ।
यान्ति कोकामुखङ्गत्वा रहस्यं कथितं मया ॥ ९१ ।
एवं ह्येतं महाभागे यत्त्वया परिपृच्छितम्‡ ।
कथनङ्कथितं सर्व्वङ्किमन्यच्छ्रोतुमिच्छसि ॥ ९२ ।
य एतत्कथितन्धर्म्मं कोकामुखमनुत्तमम् ।
तारिताः पितरस्तेन दश पूर्व्वास्तथा पराः ॥ ९३ ।
मृतो वा तत्र जायेत शुद्धे भागवते कुले ।
अनन्यमानसो भूत्वा मम मार्गप्रदर्शकः ॥ ९४ ।
यश्चेदं शृणुयान्नित्यङ्कल्य उत्थाय मानवः ।
सप्तपञ्चगतं जन्म मम भक्तश्च जायते ॥ ९५ ।
य एतत्पठते नित्यङ्कोकाख्यानन्तथापरमि ।
गच्छते परमं स्थानमेवमेतन्न संशयः ॥ ९६ ।

इति वराहपुराणे भगवच्छास्त्रे कोकामुखमाहात्म्यवर्णनं नाम
चत्वारिंशदधिकशततमोऽध्यायः ।

---

* स्मरन्तीति साधु । † महापरामिति साधु । ‡ परिपृष्टमिति साधु ।

अथ प्राणान् परित्यज्य कृत्वा कर्म्म सुदुष्करम् ।
———[illegible] मम लोकं प्रपद्यते ॥ १९ ।

[illegible]

न तत्प्राप्नोति मनुजः कृत्वा कर्म्म सुदुष्करम् ।
प्राप्नुवन्ति च भक्ता ये वदरीं विष्णुतारिणीम् ॥ २ ।
दुर्लभं तन्मम क्षेत्रं हिमकूटशिलातले ।
यस्मात्प्राप्नोति हि क्षेत्रकृतकर्म्मा भवेन्नरः ॥ ३ ।
ब्रह्मकुण्डमिति ख्यातमास्ते तत्र शिलोच्चये ।
हिमसंस्थं तथात्मानङ्कृत्वा तिष्ठामि माधवि ॥ ४ ।
स्नानङ्करोति यस्तत्र त्रिरात्रोपोषितो नरः ।
अग्निष्टोमस्य यज्ञस्य फलम्प्राप्नोति मानवः ॥ ५ ।
मुञ्चेत्प्राणांस्तत्र यदि व्रतनिष्ठो जितेन्द्रियः ।
सत्यलोकमतिक्रम्य मम लोकञ्च गच्छति ॥ ६ ।
अग्निसत्यपदं नाम तस्मिन् क्षेत्रे परं मम ।
शृङ्गत्रयात्पतन्त्यत्र धारा मुसलसन्निभाः ॥ ७ ।
यस्तत्र कुरुते स्नानं त्रिरात्रोपोषितो नरः ।
सत्यवादी भवेद्दक्षो मम कर्म्मपरायणः ॥ ८ ।
यस्तत्र मुञ्चते प्राणान्यदि कृत्वा जलाशयम् ।

———

: गुह्यतमं शृणु [illegible] (ग) । । शृणु तर्पति (ग) ।

सत्यलोकमतिक्रम्य मम लोके स मोदते ॥ ९ ॥
इन्द्रलोकमिति ख्यातं वदर्य्याञ्च ममाश्रमम् ।
तत्राहन्देवि शक्रेण निष्कलम्परितोषितः ॥ १० ॥
तत्र चैव तु शृङ्गेभ्यः स्थलधारा पतत्पुनः ।
स्थले शिलातले तत्र मम धर्म्मो व्यवस्थितः ॥
स्नानङ्करोति यस्तत्र एकरात्रोषितो नरः ।
सत्यवादी शुचिर्भूत्वा सत्यलोके महीयते ॥ ११।१२ ॥
अथात्र मुञ्चति प्राणान् कृत्वा चानाशक व्रतम् ।
सत्यलोकमतिक्रम्य मम लोकेषु तिष्ठति ॥ १३ ॥
अस्ति पञ्चशिखं* नाम वदर्य्याश्रममस्मति ।
यत्र धाराः पतन्त्यत्र पञ्चशृङ्गसमाश्रिताः ॥ १४ ॥
यस्तत्र कुरुते स्नानं पञ्चस्रोतसि मानवः ।
अश्वमेधफलम्प्राप्य दैवतैः सह मोदते ॥ १५ ॥
यद्यत्र मुञ्चति† प्राणान् कृत्वा कर्म्म सुदुष्करम् ।
स्वर्गलोकमतिक्रम्य मम लोके महीयते ॥ १६ ॥
चतुःस्रोतमिति ख्यातं तस्मिन् क्षेत्रे परं मम ।
धाराः पतन्ति चत्वारि चतुरो‡ दिशमाश्रिताः ॥ १७ ॥
यस्तत्र कुरुते स्नानमेकरात्रोषितो नरः ।
मोदते नाकपृष्ठे तु मम भक्तश्च§ जायते ॥ १८ ॥

* पञ्चशिखा नामेति (क) । † मुञ्चतीति साधु, एवमन्यत्र । ‡ धाराविशेषणत्वेऽपि स्रोतोलिङ्गत्वात् चत्वारि चतुर इति आर्षं, चतस्र इति साधु । § ?ितिश्चेति (ग) ।

अथ प्राणान् परित्यज्य कृत्वा कर्म्म मदुष्करम्।
नाकपृष्ठमतिक्रम्य मम लोकं प्रपद्यते॥ १९॥
वेदधारमिति[*] ख्यातं तस्मिन् क्षेत्रे परं मम।
यत्र ब्रह्ममुखाद्भ्रष्टा वेदाश्चत्वार एव च॥ २०॥
तत्रैव हिमवत्पृष्ठे चतुःशृङ्गाद्विनिःसृताः।
धाराः पतन्ति चत्वारि विषमाश्च शिलोच्चये॥ २१॥
यस्तत्र कुरुते स्नानं चतुरात्रोषितो नरः।
चतुर्णामपि वेदानाद्भवेणं कारणम्भवेत्॥ २२॥
अथात्र मुञ्चते प्राणान्मम कर्म्मपथे स्थितः।
देवलोकमतिक्रम्य मम लोके प्रतिष्ठते॥ २३॥
द्वादशादित्यकुण्डेति[†] तस्मिन् क्षेत्रे परे मम।
यत्र ते द्वादशादित्या देवि संस्थापिता मया॥ २४॥
तत्र पर्व्वतशृङ्गे तु स्थूलमूले शिलातले।
द्वादश पतते[‡]धारा मम कर्म्म सुखावहाः॥ २५॥
यस्तत्र कुरुते स्नानं यां काञ्चिद्द्वादशीं प्रति।
यत्र ते द्वादशादित्यास्तत्र गच्छेन्न संशयः॥ २६॥
अथात्र मुञ्चते प्राणान्मम कर्म्मणि संस्थितः।
समतिक्रम्य चादित्यान्मम लोके महीयते॥ २७॥
लोकपालमिति ख्यातं तस्मिन् क्षेत्रे परे मम।
तत्र ते लोकपालास्तु मया संस्थापिताः पुरा॥ २८॥

[*] वेदधारा इतीति (ग)। [†] कुण्डमिति साधु। [‡] पतन्तीति साधु।

तत पर्व्वतमध्ये तु स्थलकुण्ड ब्रहन्मम ।
भित्त्वा पर्व्वतमङ्गीर्णं* यत्र सोमसमुद्भवः ॥ २८ ।
तत्र स्नानन्तु कुर्व्वीत ज्यैष्ठमासस्य द्वादशीम् ।
मोदते लोकपालेषु मम भक्तश्च जायते ॥ ३० ।
अथात्र मुञ्चति प्राणान्मम कर्म्मसु तत्परः ।
लोकपालानतिक्रम्य मम लोकम्प्रपद्यते ॥ ३१ ।
अस्ति मेरोर्वरं नाम तस्मिन् गुह्यम्परं मम ।
तत्र स्थितेन भूमे तु मेरुः संस्थापितः स्वयम् ॥ ३२ ।
धारास्तिस्रः पतन्त्यत्र सुवर्णसदृशप्रभाः ।
पतत्तु तज्जलम्भर्मो† व्यक्तिं नैवोपलभ्यते‡ ॥ ३३ ।
यस्तत्र कुरुते स्नानन्त्रिरात्रोपोषितो नरः ।
मोदते मेरुशृङ्गेषु मम भक्तश्च§ जायते ॥ ३४ ।
अथ तत्र मृतो देवि तस्मिन् गुह्ये परे मम ।
मेरुपृष्ठमतिक्रम्य मम लोकाय गच्छति ॥ ३५ ।
मानसोद्भेदमिति च तत्रान्यत्तीर्थमुत्तमम् ।
पृथ्वीमुद्भिद्य मध्ये तु जलङ्गच्छति सत्वरम् ॥ ३६ ।
देवाप्येतं¶ न जानन्ति तं देशं तत्र संस्थितम् ।
मानुषा हि विजानन्ति भूम्यां पतति तज्जलम् ॥ ३७ ।
यस्तत्र कुरुते स्नानमहोरात्रोपोषितो नरः ।

---

* भित्त्वा पर्व्वतमुद्गाढ इति ग ।   † पतितं तज्जलमित्येवं क्रमे साधु स्यात् ।
‡ व्यक्तिर्नैवोपलभ्यते इति बहुषु पाठः ।   § मम भक्तिर्भवेत (ग) ।   ¶ देवा अपीति साधु ।

मोदते मानसे दिव्ये मम भक्तश्च जायते॥ ३८।
अस्ति पञ्चशिरं नाम तस्मिन्गुह्यं परं मम।
ब्रह्मणा छिद्यते यत्र शिरश्चैव महाद्युति॥ ३९।
तत्र वै पञ्च कुण्डानि स्थूलशीर्षशिलोच्चये।
पञ्चात्र शिरसः* स्थाने बहुधारासमन्विताः॥ ४०।
यत्र तन्मध्यमं कुण्डं छिन्नमेव स्वयम्भुवा।
तत्र रक्तजला भूमिर्दृश्यते धारसङ्कुला ४१।
यस्तत्र कुरुते स्नानं पञ्चरात्रोषितो नरः।
मोदते ब्रह्मलोकस्थो मम भक्तश्च जायते॥ ४२।
तथात्र मुञ्चते प्राणान्गुह्ये पञ्चशिरे मम।
जलचान्द्रायणङ्कृत्वा|' मम कर्म्मसु निष्ठितः॥ ४३।
बुद्धिमान्मतिमांश्चैव रागमोहविवर्ज्जितः।
ब्रह्मलोकमतिक्रम्य मम लोकाय गच्छति॥ ४४।
अस्ति सोमाभिषेकेति‡ तीर्थमन्यत्परं मम।
राजत्वे ब्राह्मणानान्तु मया सोमोऽभिषेचितः§॥ ४५।
तत्राहं तोषितस्तेन अत्रिपुत्रेण माधवि।
नवपञ्चककोट्यस्तु¶ कृत्वा कर्म्म सुदुष्करम्।
प्राप्तश्च परमां सिद्धिं मत्प्रसादाद्वसुन्धरे॥ ४६।
तदायत्तं जगत्सर्व्वं व्रीहयः परमौषधीः||।

‡ सोमाभिषेकमिति साध

§ अभिषेचित इति स्वार्थे णिच्। ¶ नवपञ्चककोटीस्तु, नवपञ्चककोटि तु वा साध।

|| औषध्यः औषधय इति वा साध।

अहम्पश्यामि सर्व्वं वै तपःसंस्था वसुन्धरे।
न मां सर्व्वे प्रपश्यन्ति योगमायासमावृताः॥ ५७॥
ततस्ता देवताः सर्व्वाः प्रत्युच्य पितामहम्।
विष्णुना च विना लोके शान्तिर्नैव लभामहे॥ ५८॥
देवानान्तु वचः श्रुत्वा ब्रह्मा लोकपितामहः।
योगमायापटच्छन्नं दर्शयामास मां तदा॥ ५९॥
ततो देवाः सगन्धर्व्वाः सिद्धाश्च परमर्षयः।
तत्र जग्मुर्महाभागे तुष्यन्तः परमं मुदा।
विभावयन्ति मां तत्र देवा इन्द्रपुरोगमाः॥ ६०॥
त्वया नाथ परित्यक्ता दुःखिताः शर्म्मवर्ज्जिताः।
त्रायस्व नो हृषीकेश परमानुग्रहेण वै॥ ६१॥
एतत्कृत्वा विशालाक्षि देवान् प्रणतिपूर्व्वकम्।
मया विलोकिताः सर्व्वे परां निर्वृतिमागताः॥ ६२॥
एतस्मिन्नुर्व्वशीकुण्डे एकरात्रोषितो नरः।
यः स्नाति सर्व्वपापेभ्यो मुच्यते नात्र संशयः।
उर्व्वशीलोकमासाद्य क्रीडते कालमक्षयम्॥ ६३॥
यस्तत्रोत्सृजते* प्राणान्मम कर्म्मपरायणः।
पुण्यपापविनिर्म्मुक्तो याति मल्लयताम्प्रिये॥ ६४॥
वदरीमाश्रमं पुण्यं यत्र यत्र स्थितः स्मरेत्।
स याति वैष्णवं स्थानं पुनरावृत्तिवर्ज्जितः॥ ६५॥
य इदं शृणुयान्नित्यं मद्भक्तः सततम्पठेत्।

* उत्सृजतेति आर्षम्।

ब्रह्मचारी जितक्रोधः सत्यवादी जितेन्द्रियः ।
ध्यानयोगरतो नित्यं स मुक्तिफलभाग्भवेत् ॥ ६६ ।
यस्यैतद्विदितं सर्व्वं ध्यानयोगं वसुन्धरे
योऽवगच्छति चात्मानं स गच्छेत्परमाङ्गतिम् ॥ ६७

इति वराहपुराणे भगवच्छास्त्रे बदरिकाश्रममाहात्म्यवर्णनं नाम
एकचत्वारिंशदधिकशततमोऽध्यायः ।

## द्वाचत्वारिंशदधिकशततमोऽध्यायः ।

सूत उवाच ।
ततो देववचः श्रुत्वा धर्म्मकामा वसुन्धरा ।
कृताञ्जलिपुटा भूत्वा प्रसादयति माधवम् ॥ १ ।
धरण्युवाच ।
दास्यां मे प्रणयङ्कृत्वा विज्ञाप्यं शृणु माधव ।
मृदुना च स्वभावेन वक्ष्यामि त्वां जनार्द्दन ॥ २ ।
अल्पप्राणबला नार्य्यो यत्त्वया परिभाषितम् ।
अशक्ताः सहितुं* शीताः क्षुधामरणनिर्बलाः ॥ ३ ।
भुञ्जमाना नरा ह्यत्र रजसा यान्ति गं परम् ।
अतं ह्यनुग्रहन्देव येन ते कर्म्मसंस्थिताः ॥ ४ ।
तस्यास्तद्वचनं श्रुत्वा माधव्याः स तु माधवः ।

* सोढुमिति साधु ।

प्रहृष्य भावशुद्धात्मा तत एवम्प्रभाषति* ॥ ५ ।

वराह उवाच ।

साधु देवि वरारोहे मम कर्म्मव्यवस्थिते ।
पृष्टोऽहं परमं गुह्यं मम भक्तसुखावहम् ॥ ६ ।
स्पृष्टा या रजसा देवि मम कर्म्मपरायणा ।
मां संस्पृशन्तु तत्रस्थं यत्र तिष्ठामि सुन्दरि ॥ ७ ।
यदि भावस्तदा कश्चिद्भोजने कायसाधने ।
चित्तश्चस्य† मयि सर्वाणि भक्तिश्चाद्य न संशयः ॥ ८ ।
न सा लिप्यति दोषेण भुञ्जमाना रजस्वला ।
अञ्जलिं शिरसा कृत्वा मन्त्रोऽयं मन्त्रमुत्तमम् ॥ ९ ।

अनादिमध्यान्तमजं पुराणं
रजस्वला देववरं नमामि ।

तत एतेन मन्त्रेण भक्त्या देवि रजस्वला ।
करोति यानि कर्म्माणि न सा दुःखेन कर्हिचित् ॥ १० ।
स्नात्वा सा तु महाभागे पञ्चमात्तु दिनात्पुनः ।
यथाहं कुरुते कर्म्म मच्चित्ता मत्परायणाः ।
प्राप्नुयात्पुरुषत्वञ्च त्यक्तसंसारचिन्तनात् ॥ ११ ।

धरण्युवाच ।

पुरुषा वा स्त्रियो वापि न पुमांसो न वा‡ स्त्रियः ।
कथन्दोषेण मुच्यन्ते जन्मसंसारबन्धनात् ॥ १२ ।

* प्रभाषते इति साधु । † चित्तश्चैवेति (क), (ख) । ‡ न चेति (ग) ।

वराह उवाच ।

इन्द्रियाणि निगृह्याथ* चित्तमप्यनुवेश्य च ।
मयि सन्न्यासयोगेन मम कर्म्मपरायणः ।
मम योगेषु सन्न्यासमिकर्चित्तो दृढ़व्रतः† ॥ १३ ॥
एवं कुर्व्वन्महाभागे स्त्रियो वा पुरुषोत्तमम् ।
ज्ञानसन्न्यासयोगं वा यदीच्छेत्परमाङ्गतिम् ॥ १४ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
मनो बुद्धिश्च चित्तञ्च ते ज्ञानोग्राः शरीरिणाम् ।
एकचित्तं मनः कृत्वा ज्ञानेन पृथुलोचने ।
समचित्तं प्रपद्यन्ते न ते निर्यान्ति मानवाः ॥ १५।१६ ॥
सर्व्वभक्ष्याणि भक्षन्तः पेयापेयांस्तथैव च
समं चित्तं‡ मयि यदि तदा तस्य न च क्रिया ॥ १७ ॥
चित्तं मनश्च बुद्धिश्च मत्संस्थञ्च समं यदि ।
यत्किञ्चित्कुर्व्वतः कर्म्म पद्मपत्रमिवाम्भसि ।
संयोगान्न च लिप्येत समत्वादेव नान्यथा ॥ १८ ॥
रात्रिन्दिवं मुहूर्त्तं वा क्षणं वा यदि वा कला ।
निमिषं वा त्रुटिं वाथ§ देवि चित्तं समङ्कुरु ॥ १९ ॥
सदा दिवानिशोयैव कुर्व्वन्तः कर्म्मसङ्करम् ।
तेऽपि यान्ति परां सिद्धिं यदि चित्तं व्यवस्थितम् ॥ २० ॥
जाग्रतः स्वपतो वापि शृण्वतः पश्यतोऽपि वा ।

* निगृह्यायेति ग० । † च्छ निर्दंक्कमध्यचहा क्रियापदमध्याम् । ‡ मम
मिति (ग) । § वापीति ग० ।

यो मां चित्ते चिन्तयति मच्चित्तस्य च किल्बिषम्* ॥ २१ ॥
दुर्वृत्तमपि चाण्डालं ब्राह्मणं वाऽपथि स्थितम् ।
तन्तु देवि प्रशंसामि नान्यचित्तं कदाचन ॥ २२ ॥
यजन्तः सर्व्वधर्म्मज्ञा ज्ञानसंस्कारसंस्कृताः ।
मयि चित्तं समाधाय मम कर्म्मपरायणाः ॥ २३ ॥
ये मत्कर्म्माणि कुर्व्वन्ति मया हृदि समाश्रिताः ।
सुखनिद्रां समादाय स्वपन्तः कर्म्मसंस्थिताः ॥ २४ ॥
येषां प्रसङ्गतश्चित्तं तेऽपि देवि मम प्रियाः ।
सर्व्वमात्मनि कर्म्म स्वं शुभं वा यदि वाऽशुभम् ॥ २५ ॥
प्राप्नुवन्ति च दुःखानि भ्रमचित्ता नराधमाः ।
चित्तं नाशाद्धि लोकस्य चित्तं मोक्षस्य कारणम्† ॥ २६ ॥
तस्माच्चित्तं समादाय मामुपास्स्व मेदिनि ।
त्यक्त्वा ज्ञानञ्च योगञ्च एकचित्ता भजस्व माम् ॥ २७ ॥
मच्चित्तः सततं यो मां भजेत नियतव्रतः ।
मत्पार्श्वमाप्य परमं महावार्योपपद्यते ॥ २८ ॥
मया चैव पुरा सृष्टं प्रजार्थेन वसुन्धरे ।
मासे मासे तु गन्तव्यमृतुकाले व्यवस्थितम् ।
एकचित्तं समादाय यदीच्छेत मम प्रियम् ॥ २९ ॥
न गच्छेद्यदि मासे तु ऋतुकालव्यवस्थितम् ।

* (ग) पुस्तके मम चित्तस्य च किल्बिषमिति पाठोऽत्र एकाक्षराधिकं वर्त्तते ।
† मोक्षस्य कर्म्मणः इति (ग) ।

पितरस्तस्य हृष्यन्ति दश पूर्व्वा दशापराः ॥ ३० ॥
न तत्र कामलोभेन मोहेन च वसुन्धरे ।
त्यक्त्वानङ्गञ्च मोहञ्च पित्रर्थाय स्त्रियं व्रजेत् ॥ ३१ ॥
द्वितीयात्र स्मृतिर्वार्त्ता लोभमोहात्मकश्च न ।
न संस्पृशेत्तृतीयान्तु चतुर्थीं न कदाचन ॥ ३२ ॥
कृते सम्भोगधर्म्मे तु कृतकौतुकसंस्थितः ।
शयने न स्त्रियं पश्येद्यदीच्छेच्छुद्धिमुत्तमाम् ॥ ३३ ॥
कौतुके कृतकृत्ये तु मम कर्म्मपरायणाः ।
जलस्नानं ततः कुर्य्यादन्यवस्त्रपरिग्रहम् ॥ ३४ ॥
अयुग्मे ऋतुकाले तु योऽभिगच्छेद्रजस्वलाम् ।
रेतःपाः पितरस्तस्य एवमेतन्न संशयः ॥ ३५ ॥
एकान्तु पुरुषो याति द्वितीयाङ्काममोहितः ।
तृतीयां वा चतुर्थीं वा तदा स पुरुषाधमः ॥ ३६ ॥
सर्व्वस्यैव तु लोकस्य समयोऽयं हि मत्कृतः ।
ऋतुकाले तु सर्व्वासां पित्रर्थो भोग इष्यते ।
ऋतुकालाभिगामी यो ब्रह्मचार्य्येव सम्मतः ॥ ३७ ॥
न गच्छति च यः क्रोधान्मोहाद्वा पुरुषाधमः ।
असौ ऋतौ भ्रूणहत्यां प्राप्नोति पुरुषर्षभ ॥ ३८ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
स्नानन्तु चित्तयोगस्य कर्म्मयोगस्य यत्क्रिया* ॥ ३९ ॥

---

* एवं हि समाप्तक्रियान्तरमपेक्षते, यत क्रियाभिरिति कृते तस्य च प्रकृतसङ्गतार्थं न दोषः ।

कर्म्मणा यान्ति मत्स्थानं यान्ति सद्दानिष्ठिताः।
यान्ति योगविदः स्थानं नास्ति चान्या परा गतिः॥ ४०॥
स्थानं योगस्य सांख्यस्य नास्ति चित्तव्यपाश्रितम्।
लभन्ते पुष्कलां सिद्धिं मम मार्गानुसारिणः॥ ४१॥
यस्तु भागवतो भूत्वा ऋतुकाले व्यवस्थितः।
वायुभक्षस्ततस्तिष्ठेद्भूमि त्रीणि दिनानि च॥ ४२॥
अथ तत्र चतुर्थे तु दिने प्राप्ते वसुन्धरे।
कृत्वा वै सिद्धकर्म्माणि न गच्छत्वपराणि च॥ ४३॥
ततः स्नानेन कुर्व्वीत शिरःसामलशोधनम्।
शुक्लाम्बरधरोभूत्वा चित्तङ्कृत्वा समाहितम्॥ ४४॥
ततोबुद्धिं मनश्चैव समङ्कृत्वा वसुन्धरे।
पश्चात्कुर्व्वन्ति कर्म्माणि सदा ते मे हृदि स्थिताः॥ ४५॥
मम प्रापणकङ्कृत्वा ततः कुर्व्वन्ति भोजनम्।
अञ्जलिं शिरसा कृत्वा मयोक्तं कर्म्म सम्मितम्*॥ ४६॥
तत्र मन्त्रः—आदिर्भवाग्गुप्तमनन्तमध्यो
रजस्वला देव वयं नमामः।
उपोषितास्त्रीणि दिनानि चैवं
भक्त्या रतं† वासुदेवं नमामः॥ ४७॥
तत एतेन मन्त्रेण शुद्धा भूमि रजस्वलाः।
ये तु कुर्व्वन्ति कर्म्माणि स्नातास्नातानि भागशः॥ ४८॥

* कर्म्म संक्षितमिति ग। † भक्त्या रतमिति ग।

एवं न दुष्यते देवि नारी वा पुरुषोऽपि वा ।
कुर्व्वन्ति मम कर्म्माणि ते यथावन्मम प्रियाः ॥ ४९ ॥
सर्व्वाण्यनुदिनम्भद्रे मम चित्तानुसारिणः ।
प्राप्नुयात्पुरुषः स्त्री वा रजसा दूषिता अपि ॥ ५० ॥
एकचित्तस्ततो भूत्वा भूमि चेन्द्रियनिग्रहात् ।
मम योगेष्टसंस्थानं यदीच्छेत्परमाकृतिम् ॥ ५१ ॥
एवङ्कुर्व्वन्ति ये नित्यं स्त्रियः पुंसोनपुंसकाः ।
स्थाने मत्यग्योगानां मम कर्म्मसु कर्म्मिणाम् ॥ ५२ ॥
अद्यापि मां न जानन्ति नराः संसारसंश्रिताः ।
ते वै भूमि विजानन्ति* ये मद्भक्त्या व्यवस्थिताः ॥ ५३
मातापितृसहस्राणि पुत्रदारशतानि च ।
चक्रवत्परिवर्त्तन्ते यन्मोहान्मां न जानते ॥ ५४ ॥
अज्ञानेनावृतो लोको मोहेन च वशीकृतः ।
सङ्गैश्च बहुभिर्बद्धस्तेन चित्तं न संश्रयेत् ॥ ५५
अन्यत्र गच्छते† माता पिता चान्यत्र गच्छति ।
पुत्राश्चान्यत्र गच्छन्ति दासश्चान्यत्र गच्छति ॥ ५६ ॥
जायन्ते चात्मनः स्थाने स्वस्वकर्म्मसमुद्भवे ।
ज्ञानमूढा वरारोहे नराः संसारमोहिताः ॥ ५७ ॥
अल्पकालं परश्चैव मासमंवत्सरेति च ।
भविष्यन्ति पुनः ज्ञात्वा न मे मूर्खा सहासते ॥ ५८ ॥

---

* विजानन्त इति (क, (ख) । † गच्छतीति साधु ।

यस्यैतद्विदितं सर्व्वं न्यासयोगं वसुन्धरे।
योगं न्यस्य सदात्मानं मुच्यते न च संशयः॥ ५८॥
य एतच्छृणुयान्नित्यं काल्यमुत्थाय मानवः।
पुष्कलां लभते सिद्धिं मम लोकञ्च गच्छति॥ ६०॥
एतत्ते कथितम्भद्रे रहस्यम्परमं महत्।
त्वया पृष्टञ्च यद्देवि मम भक्तसुखावहम्॥ ६१॥

इति वराहपुराणे भगवच्छास्त्रे गन्धकर्णमाहात्म्यवर्णनं नाम द्विचत्वारिंशदधिकशततमोऽध्यायः

## त्रयश्चत्वारिंशदधिकशततमोऽध्यायः।

वराह उवाच।

पुनरन्यत्प्रवक्ष्यामि एकान्तं शृणु सुन्दरि।
स्थानं मे परमं गुह्यं मद्भक्तानां सुखावहम्॥ १॥
जाह्नव्या दक्षिणे कूले विन्ध्यपृष्ठसमाश्रितम्।
मन्दारेति* च विख्यातं सर्व्वभागवतप्रियम्॥ २॥
तत्र त्रेतायुगे भूमे रामो नाम महाद्युतिः†।
भविष्यति न सन्देहः स च मां स्थापयिष्यति॥ ३॥

* मन्दारमितीति साधु. एवं परत्र। † महाद्युतिरिति (क. (ख।

नारायणमुखाच्छ्रुत्वा धर्म्मकामा वसुन्धरा ।
उवाच मधुरं वाक्यं लोकनाथं जनार्द्दनम् ॥ ४ ॥

धरण्युवाच ।

देव देव महादेव हरे नारायण प्रभो ।
मन्दारेति त्वया प्रोक्तं देव धर्म्मार्थसंयुतम् ॥ ५ ॥
मन्दारे कानि कर्म्माणि कुर्व्वन्ति च ततो नराः ।
कांश्च लोकान् प्रपद्यन्ते तत्र कर्म्मकृतो नराः ॥ ६ ॥
मन्दारे कानि गुह्यानि वहन्ते(?)ऽत्र तत्र वै ।
वक्तुमर्हस्यशेषेण परं कौतूहलं मम ॥ ७ ॥

वराह उवाच ।

शृणु सुन्दरि यत्नेन यन्मात्वम्परिपृच्छसि ।
कथयिष्यामि ते गुह्यं मन्दारस्य महाक्रियाम् ॥ ८ ॥
क्रीड़मानोऽस्म्यहं तत्र मन्दारं पुष्पितं तदा ।
मन्दारपुष्पमादाय मनोज्ञं अस्य वै हृदि ॥ ९ ॥
ततो ममाभवच्चिन्ता मन्दारे पर्व्वतस्थिते ।
तत्रैकादशकुण्डानि निःसृतानि गिरौ धरे ॥ १० ॥
विन्ध्ये च मत्प्रभावेण मन्दारश्च महाद्रुमः ।
स्थितोऽहं तत्र सुभगे भक्तानुग्रहकामया ॥ ११ ॥
दर्शनीयतमं स्थानं मनोज्ञञ्च शिलातलम् ।
यत्र तिष्ठाम्यहं देवि मन्दारद्रुममाश्रितः ॥ १२ ॥
विस्मयं शृणु सुश्रोणि मन्दारेऽस्मिन्महाद्रुमे ।
द्वादश्याञ्च चतुर्द्दश्यां स पुष्पति महाद्रुमः ॥ १३ ॥

तत्र मध्याह्नवेलायां वीक्ष्यमाणो जनैस्ततः।
ततोऽन्यदिनमासाद्य दृश्यते न कदाचन ॥ १४ ।
तस्मिन्मन्दारकुण्डे तु एकभक्तोषितो नरः।
स्नानङ्करोति शुद्धात्मा स गच्छेत्परमाङ्गतिम् ॥ १५ ।
अथ प्राणान्प्रमुञ्चेत कुण्डे मन्दारसंस्थिते।
तपः कृत्वा वरारोहे मम लोकाय गच्छति ॥ १६ ।
तस्य चोत्तरपार्श्वे च प्रापणं नाम तद्गिरिम्।
तिस्रो धाराः पतन्त्यत्र दक्षिणां दिशमाश्रिताः ॥ १७ ।
स्नानकुण्डमिति ख्यातं तस्मिन् क्षेत्रे परं मम।
दक्षिणे पतते* धारा स्रवते चोत्तरामुखम् ॥ १८ ।
तत्र स्नातो वरारोहे एकरात्रोषितो नरः।
मोदते दक्षिणे शृङ्गे तस्मिन्मेरोः शिलोच्चये ॥ १९ ।
तत्राथ मुञ्चेत्प्राणान्समत्र‡ कर्मपरायणः।
सर्वसङ्गम्परित्यज्य मम लोकाय गच्छति ॥ २० ।
तस्य पूर्वोत्तरे पार्श्वे गुह्यं वैकुण्ठकारणम्।
यत्र धारा पतत्येका हरिद्रावर्णसन्निभा। २१ ।
यस्तत्र कुरुते स्नानमेकरात्रोषितो नरः।
नाकपृष्ठं समासाद्य मोदते सह दैवतैः ॥ २२ ।
तथाऽत्र‡ मुञ्चते प्राणान् कृतकृत्यः सुनिश्चितः।

* पततीति साधु, एवं परत्र। † मोदयेदिति साधु। ‡ मुञ्चते प्राणान्समेति (ग)। तत्राथेति (ग)।

तारयित्वा कुलं सर्व्वं मम लोकम्प्रपद्यते ॥ २३ ।
तस्य दक्षिणपूर्व्वेण समन्तात् वराङ्गणे ।
पतते विन्ध्यशृङ्गेषु अगाधश्च महाह्रदः ॥ २४ ।
तत्र स्नानन्तु कुर्व्वीत एकभक्तोषितो नरः ।
मोदते पूर्व्वपार्श्वे तु तस्मिन्मेरौ शिलोच्चये ॥ २५ ।
अथात्र मुञ्चते प्राणान्मम चित्तव्यवस्थितः ।
छित्त्वा वै सर्व्वसंसारं मम लोकाय गच्छति ॥ २६
मन्दारस्य तु पूर्व्वेण गुह्यकूटरसंस्थितम् ।
यत्र धारा पतत्येका मुसलेन समन्विता ॥ २७ ।
तत्र स्नानम्प्रकुर्व्वीत पञ्चभक्तोषितो नरः ।
मोदते पूर्व्वपार्श्वे च मेरौ तस्मिञ्छिलोच्चये ॥ २८ ।
अथात्र मुञ्चते प्राणान् कृत्वा कर्म्म सुदुष्करम् ।
मेरुशृङ्गं समुत्सृज्य मम लोकञ्च गच्छति ॥ २९ ।
तस्य दक्षिणपार्श्वे तु गुह्यं विन्ध्यविनिःसृतम् ।
पञ्च धाराः पतन्त्यत्र मुसलेन समन्विताः ॥ ३० ।
तत्र स्नानम्प्रकुर्व्वीत षष्ठाहारोषितो नरः ।
मोदते दक्षिणे शृङ्गे महामेरौ शिलोच्चये ॥ ३१ ।
अथात्र मुञ्चते प्राणान् कृत्वा कर्म्म सुदुष्करम् ।
मेरुशृङ्गं परित्यज्य मम लोकम्प्रपद्यते* ॥ ३२ ।
दक्षिणं पश्चिमे भागे मन्दारस्य यशस्विनि ।

* मेरुशृङ्गं परित्यज्य मम लोकञ्च गच्छतीति क ।

अत्र धारा पतत्येका आदित्यसमतेजसा ॥ ३३ ।
तत्र स्नानं प्रकुर्व्वीत अष्टारात्रोषितो नरः ।
मोदते पश्चिमे भागे ध्रुवो यत्र प्रवर्त्तते ॥ ३४ ।
अथात्र मुञ्चते प्राणान्मम कर्म्मव्यवस्थितः ।
सर्व्वपापविनिर्मुक्तो मम लोके च मोदते ॥ ३५ ।
तस्य पश्चिमपार्श्वे तु गुह्यं देवसमन्वितम् ।
चक्रावर्त्तमिति ख्यातमगाधश्च महाह्रदः ॥ ३६ ।
स्नानङ्करोति यस्तत्र पञ्चभक्तोषितो नरः ।
मोदते मेरुशृङ्गेषु स्वच्छन्दगमनालयः ॥ ३७ ।
अथ वै मुञ्चते प्राणांश्चक्रावर्त्ते महायशाः ।
शृङ्गान्सर्व्वान् परित्यज्य मोदते मम सन्निधौ ॥ ३८ ।
दिशं वायव्यमाश्रित्य तस्मिन्विन्ध्यशिलोच्चये ।
तिस्रो धाराः पतन्त्यत्र ममलोकनयः शुभाः ॥ ३९ ।
तत्र स्नानम्प्रकुर्व्वीत मम चित्तव्यवस्थितः ।
मोदते सर्व्वशृङ्गेषु एकचित्तं समाश्रितः ॥ ४० ।
अथात्र मुञ्चते प्राणांस्तस्मिन् गुह्ये यशस्विनि ।
सर्व्वसङ्गम्परित्यज्य मम लोकाय गच्छति ॥ ४१ ।
तस्य विन्ध्याश्रमाचैव दक्षिणां दिशमाश्रितः ।
गुह्यो गभीरको नाम अगाधश्च महाह्रदः ॥ ४२ ।
तत्र स्नानम्प्रकुर्व्वीत अष्टभक्तोषितो नरः ।
मोदते सर्व्वद्वीपेषु स्वच्छन्दगमनालयः ॥ ४३ ।
अथ वै मुञ्चते प्राणान्मम कर्म्मव्यवस्थितः ।

सर्व्वद्वीपान् परित्यज्य मम लोकम्प्रपद्यते ॥ ४४ ॥
तस्य पश्चिमपार्श्वे तु गुह्यं वै परमं महत् ।
सप्त धाराः पतन्त्यत्र अगाधश्च महाह्रदः ॥ ४५ ॥
तत्र स्नानम्प्रकुर्व्वीत अहोरात्रोषितो नरः ।
मोदते शक्रलोके तु स्वच्छन्दगमनालयः ॥ ४६ ॥
अथ वै मुञ्चते प्राणान् स्वकर्म्मपरिनिष्ठितः ।
सर्व्वसङ्गम्परित्यज्य मम लोकम्प्रपद्यते ॥ ४७ ॥
मण्डलं तस्य क्षेत्रस्य कथ्यमानं मया शृणु ।
समन्तपञ्चक्रोशैव मन्दारस्य गिरौ मम ।
तत्र तिष्ठामि सुश्रोणि विन्ध्यस्य गिरिमूर्द्धनि ॥ ४८ ॥
मन्दारं परमं गुह्यं तस्मिन् गुह्यगिरोश्रये ।
दक्षिणे संस्थितश्चक्रं वामे स्थाने च वै गदा ॥ ४९ ॥
य एतच्छृणुयान्नित्यं गुह्यं मन्दारसंस्थितम् ।
लाङ्गले मुसलश्चैव शङ्खस्तिष्ठति चाग्रतः ।
तत्र चैव प्रियार्थाय मम भक्तसुखावहम ॥ ५० ॥
एतन्न जानते केचिन्मम मायाविमोहिताः ।
मुक्त्वा * भागवताञ्छुद्धान्ये च वाराहसंश्रिताः ॥ ५१ ॥

इति वराहपुराणे भगवच्छास्त्रे मन्दारमाहात्म्यवर्णनो नाम
त्रयश्चत्वारिंशदधिकशततमोऽध्यायः ।

* मुक्तेति पा०।

# चतुश्चत्वारिंशदधिकशततमोऽध्यायः ।

सूत उवाच ।

श्रुत्वा मन्दारमाहात्म्यं धर्म्मकामा वसुन्धरा ।
विस्मयम्परमङ्गत्वा पुनः पप्रच्छ माधवम् ॥ १ ।

धरण्युवाच ।

मया देवप्रसादेन श्रुतं मन्दारवर्णनम् ।
मन्दारात्परमं स्थानं विष्णो तद्वक्तुमर्हसि ॥ २ ।

वराह उवाच ।

शृणु तत्त्वेन मे देवि यन्मान्त्वं परिपृच्छसि ।
कथयिष्यामि मे गुह्यं शालग्राममिति स्मृतम् ॥ ३ ।
द्वापरे तु युगे भूमि यदूनाङ्कुलसङ्कुले ।
तत्र शूर इति ख्यातो यदूनां वंशवर्द्धनः ॥ ४ ।
तस्य पुत्रो महाभागे सर्व्वकर्म्मपरायणः ।
वसुदेवो गृहे जातो यादवानां कुलोद्वहः ॥ ५ ।
तस्य भार्य्या च वसुधे सर्व्वावयवसुन्दरी ।
देवकी नाम नाम्ना च मनोज्ञा शुभदर्शना ॥ ६ ।
तस्या गर्भे महाभागे भविष्यामि न संशयः ।
वासुदेव इति ख्यातो देवानामरिमर्द्दनः ॥ ७ ।
ततोऽपि संस्थिते तत्र यादवानां कुलोद्वहे ।
तत्र ब्रह्मर्षिपरमः सालङ्कायन एव च ॥ ८ ।
ममैवाराधनार्थाय भ्रमते स दिशो दश ।

पुत्त्रार्थं स तपस्तेपे मेरुशृङ्गे समाहितः ॥ ९ ॥
ततः पिण्डारके गत्वा मम क्षेत्रे वसुन्धरे ।
लोहार्गले ततो गत्वा सहस्रञ्चैव तिष्ठति ॥ १० ॥
ईश्वरेण समं पूर्व्वं* सर्व्वयोगेश्वरं स्थितम् ।
न च मां पश्यसे† देवि मार्गमाण इतस्ततः ॥ ११ ॥
ईश्वरेण समम्पूर्व्वमहमासं वसुन्धरे ।
तस्यैव तप्यमानस्य सालङ्कायनकस्य ह ॥ १२ ॥
तस्मिन् क्षेत्रे हरो देवो मत्स्वरूपेण संयुतः ।
शालग्रामे गिरौ तस्मिञ्छिलारूपेण तिष्ठति ॥ १३ ॥
अहन्तिष्ठामि तत्रैव गिरिरूपेण नित्यदा ।
तस्मिञ्छिलाः समग्रास्तु मत्स्वरूपा न संशयः ।
पूजनीयाः प्रयत्नेन किं पुनश्चक्रलाञ्छिताः ॥ १४ ॥
लिङ्गरूपेण च हरस्तत्र देवालये गिरौ ।
शिवनाभाः शिलास्तत्र चक्रनाभास्तथा शिलाः ॥ १५ ॥
सोमेश्वराधिष्ठितस्तु शिवरूपो गिरिः स्मृतः ।
सोमेन तत्र संस्थाप्य स्वनाम्ना लिङ्गमुत्तमम् ।
वर्षाणान्तु सहस्रं वै स्वशापस्य निवृत्तये ॥ १६ ॥
ततः शापात्‡ हि निर्मुक्तः तेजसा च परिप्लुतः ।
स्वकं तेजो बलम्प्राप्य तुष्टाव गिरिजापतिम् ।
सोमेश्वराच्च वरदमाविर्भूतन्त्र्यम्बकम् ॥ १७ ॥

---

* पूर्वमिति (ग)। † पश्यसीति साधु। ‡ ततः शापादिति (क), (ख)।

सोम उवाच ।

शिवं सौम्यमुमाकान्तं भक्तानुग्रहकातरम् ।
नतोऽस्मि पञ्चवदनं नीलकण्ठं त्रिलोचनम् ॥ १८ ।
शशाङ्कशेखरन्दिव्यं सर्व्वदेवनमस्कृतम् ।
पिनाकपाणिं देवेशं भक्तानामभयप्रदम् ॥ १९ ।
त्रिशूलिनं डमरुणा लसद्धस्तं वृषध्वजम् ।
नानामुखैर्गणैर्जुष्टं नानारूपैर्भयानकैः ॥ २० ।
त्रिपुरघ्नं महाकालमन्धकारिनिषूदनम् ।
गजाजिनावृतं स्थाणुं व्याघ्रचर्म्मविभूषितम् ॥ २१ ।
नागभोगोपवीतञ्च रुद्रमालधरम्प्रभुम् ।
अरूपमपि सर्व्वेशं भक्तैर्व्योपात्तविग्रहम् ॥ २२ ।
वह्निसोमार्कनयनं मनोवाचामगोचरम् ।
जटाजूटप्रकटितं गङ्गासम्मार्ज्जितांहसम् ।
कैलासनिलयं शम्भुं हिमाचलकृताश्रमम् ॥ २३ ।
एवं स्तुतस्तदा शम्भुरिन्दुं वचनमब्रवीत् ।
वरं वरय भद्रन्ते यत्ते मनसि वर्त्तते ।
दुर्लभं दर्शनं यस्मात्प्राप्तवानसि गोपते ॥ २४ ।

सोम उवाच ।

वरन्ददासि चेद्देव मम लिङ्गे सदा वस ।
एतल्लिङ्गस्य भक्तानां पूरयस्व मनोरथम् ॥ २५ ।

देवदेव उवाच ।

विष्णुसान्निध्यमप्यत्र सदैव निवसाम्यहम् ।

विशेषतस्त्वदीयेऽस्मिन्नद्यप्रभृति गोपते ।
ममैवान्या परा मूर्त्तिस्त्वं शशाङ्क न संशयः ॥ २६ ।
एतल्लिङ्गार्च्चकानाञ्च भक्तानां मम सर्व्वदा ।
वरान्दास्यामि भद्रन्ते देवानामपि दुर्लभान् ॥ २७ ।
सालङ्कायनकाख्यस्य मुनेस्तु तपसो बलात् ।
विष्णुना सह संमन्त्र्य स्थितावावां कलानिधे ॥ २८ ।
शालग्रामगिरिर्विष्णुरहं सोमेश्वराभिधः ।
तयोः पर्व्वतयोर्या वै शिला विष्णुशिवाभिधाः ॥ २९ ।
देवया च कृतं पूर्व्वन्तपः शिवमनुत्तमम् ।
मम त्वत्सदृशः पुत्त्रो भूयादिति विभूतये ॥ ३० ।
अहङ्कस्यापि न सुतः किङ्करिष्यामि चिन्तयन् ।
देवायास्तु वरो देयस्त्ववश्यं मृगलाञ्छन ।
निश्चित्यैवं तदा प्रोक्तः प्रसन्नेनान्तरात्मना ॥ ३१ ।
लिङ्गरूपेण ते देवि गजाननपुरस्कृतः ।
गर्भे तव वसिष्यामि पुत्त्रो भूत्वा शिवप्रिये ॥ ३२ ।
मम त्वमपरा मूर्त्तिः ख्याता जलमयी शिवा ।
शिवशक्तिविभेदेन आवामिकत्र संस्थितौ ॥ ३३ ।
एवं दत्तवरा देवा मत्सान्निध्यमिहागता ।
देवाख्यगण्डमिति ख्याता ततःप्रभृति गोपते ॥ ३४ ।
गण्डक्यापि पुरा तप्तं वर्षाणामयुतं विभो ।

* विभो तया इति क, (ख) ।

शीर्णपर्णाशनं कृत्वा वायुभक्षाऽप्यनन्तरम्।
दिव्यवर्षशतं तेपे* विष्णुं चिन्तयती तदा॥ ३५।
ततः साक्षाज्जगन्नाथो हरिर्भक्तजनप्रियः।
उवाच मधुरं वाक्यं प्रीतः प्रणतवत्सलः॥ ३६।
गण्डकि त्वां प्रसन्नोऽस्मि तपसा विस्मितोऽनघे।
अनविच्छिन्नया भक्त्या वरं वरय सुव्रते।
किं देयस्तद्ददस्वाशु प्रीतोऽस्मि वरवर्णिनि॥ ३७।
गण्डक्यापि पुरा दृष्टा शङ्खचक्रगदाधरम्।
दण्डवत्प्रणता भूत्वा ततः स्तोतुं प्रचक्रमे॥ ३८।
अहो देव मया दृष्टो दुर्दर्शो योगिनामपि।
त्वया सर्व्वमिदं सृष्टं जगत्स्थावरजङ्गमम्॥ ३९।
तदनु त्वं प्रविष्टोऽसि पुरुषस्तेन चोच्यसे।
त्वन्नीलोन्मीलिते विश्वे कः स्वतन्त्रोऽस्ति वै पुमान्॥ ४०।
अनाद्यन्तमपर्य्यन्तं यद्ब्रह्म श्रुतिबोधितम्।
तदेव त्वं महाविष्णो यस्त्वां वेद स वेदवित्॥ ४१।
तवैवाद्या जगन्माता या शक्तिः परमा स्मृता।
तां योगमायाप्रकृतिं प्रधानमिति चक्षते॥ ४२।
निर्गुणः पुरुषोऽव्यक्तश्चित्स्वरूपो निरञ्जनः।
आनन्दरूपः शुद्धात्मा ह्यकर्त्ता निर्विकारकः॥ ४३।
स्वां योगमायामाविश्य कर्त्तृत्वं प्राप्तवानसि।

* तपेति (क), (ख)।

प्रकृत्या सृज्यमानेऽस्मिन्द्रष्टा साक्षी निगद्यसे ॥ ४४ ।
प्रकृतेस्त्रिगुणैरस्मिन् सृज्यमानेऽपि नान्यथा ।
सान्निध्यमात्रतो देव त्वयि स्फुरति कारणे ॥ ४५ ।
स्फटिके हि यथा स्वच्छे जवाकुसुमरागतः ।
प्रकाश्यते त्वप्रकाशाज्ज्योतीरूपं नताऽस्मि तत् ॥ ४६ ।
ब्रह्मादयोऽपि कवयो न विदन्ति यथार्थतः ।
तद्रूपं वेद्म्यहं मूढा तव रूपं निरञ्जनम् ॥ ४७ ।
मृदस्य जगतो मध्ये स्थिता किञ्चिदजानती ।
त्वया धृता कृता चास्मि योग्यायोग्यमविन्दती ॥ ४८ ।
तेन लोके महत्त्वञ्च त्वत्प्रसादेन चेच्छतां ।
ययाचेऽन्नतयोदार तन्मे दातुं त्वमर्हसि ।
दयालुरसि दीनेषु नेति मां न वद प्रभो ॥ ४९ ।
ततः प्रोवाच भगवान्देवि यद्यत्त्वमिच्छसि ।
तद्याचय वरारोहे अदेयमपि सर्व्वथा ॥ ५० ।
यद्दुर्लभं मनुष्याणां शीघ्रं याचय मां प्रति ।
मद्दर्शनमनुप्राप्य को वाऽपूर्णो मनोरथः ॥ ५१ ।
ततो हिमांशो सा देवी गङ्गा लोकतारिणी ।
प्राञ्जलिः प्रणता भूत्वा मधुरं वाक्यमब्रवीत् ॥ ५२ ।
यदि देव प्रसन्नोऽसि देयो मे वाञ्छितो वरः ।
मम गर्भगतो भूत्वा विष्णो मत्पुत्रतां व्रज ॥ ५३ ।

ततः प्रसन्नो भगवांश्चिन्तयामास शौनके।
किं याचितं शिलरूपया नित्यं मत्सङ्गलुब्धया।
दास्यामि याचितं येन लोकानां भवमोचनम्।
इत्येवं कृपया देवो निश्चित्य मनसा स्वयम्।
शशाङ्कोमवदत्प्रीतः शृणु देवि वचो मम॥ ५४।
शालग्रामशिलाकर्षो तव गर्भगतः सदा।
स्थास्यामि तत्र पुष्कले भक्तानुग्रहकारणात्॥ ५५।
मत्सान्निध्याद्दर्शनात्त्वमतिश्रेष्ठा भविष्यसि।
दर्शनात्स्पर्शनात्स्नानात्पानाच्चैवावगाहनात्।
हरिष्यसि महापापं वाङ्मनःकायसम्भवम्॥ ५६।
यः स्नास्यति विधानेन देवर्षिपितृतर्पकः।
तर्पयेत्स्वपितॄंश्चापि तारयित्वा दिवं नयेत्।
स्वयं मम प्रियो भूत्वा ब्रह्मलोकङ्गमिष्यति॥ ५७।
यदि त्वय्युत्सृजेत्प्राणान्मम कर्मपरायणः।
सोऽपि याति मम स्थानं यत्र गत्वा न शोचति॥ ५८।
एवं दत्त्वा वरान्देव्यै तत्रैवान्तरधीयत॥ ५९।
ततः प्रभृति तिष्ठामः तत्रेऽस्मिन्शङ्खलाञ्छन।
अहञ्च भगवान्विष्णुर्भक्तिश्चोदापास्तविग्रहः॥ ६०।
एवमुक्त्वा द्विजपतिमन्वगच्छात्* हरः प्रभुः।
प्रभासयन्नुडुपतेरङ्गानि प्रममार्ज ह॥ ६१।

* चमगद्यति (ग)।

अङ्गुरेण करेणापि नीरजानि विधाय च ।
पश्यतस्तस्य तु विधोस्तत्रैवान्तरधीयत ॥ ६२ ।
सोमेश्वराद्दक्षिणे भागे बाणेनाद्रिं विभिद्य वै ।
रावणेन प्रकटिता जलधाराऽतिपुण्यदा ।
बाणगङ्गेति विख्याता या स्नाता अघहारिणी ॥ ६३
सोमेश्वरात्पूर्व्वदिग्भागे रावणस्य तपोवनम् ।
यत्र स्थित्वा त्रिरात्रेण तपसः फलमश्नुते ॥ ६४ ।
यत्र [illegible]न देवेशस्तुष्टस्तस्मै वरं ददौ ।
तेन रावणनृत्येन प्रख्याती नर्त्तनाचलः ॥ ६५ ।
स्नात्वा तु बाणगङ्गायां दृष्ट्वा बाणेश्वरं प्रभुम् ।
गङ्गास्नानफलम्प्राप्य मोदते देववद्दिवि ॥ ६६ ।
सालङ्कायनकोऽप्यास्ते क्षेत्रे तस्मिन्परं मम ।
आलयामि महातीव्रमास्थितम्परमन्तपः ॥ ६७ ।
अन्यच्च ते प्रवक्ष्यामि परङ्गुह्यं वसुन्धरे ।
तप्यतस्तस्य तु मुनेरीश्वरेण समं सुतम् ।
प्राप्स्यामीति परं भावं ज्ञात्वा देवो महेश्वरः ।
सुन्दरन्त्वपरं रूपं धृत्वा दृष्टिसुखावहम् ।
सालङ्कायनपुत्रत्वं योगमायामुपाश्रितः ॥ ६८।६९ ।
प्रामोऽपि तं न जानाति दक्षिणस्याश्चमाश्रितः* ।
मायायोगबलोपितश्च्यतो वै शूलपाणिधृक् ।

* आश्रित इति [illegible]

रूपवान् गुणवांश्चैव वपुषादित्यसन्निभः ।
स तं न ज्ञायते* जातं ममैवाराधने स्थितः ॥ ७०।७१ ।
अथ नन्दी प्रहस्याह महादेवाज्ञया मुनिम् ।
उत्तिष्ठ मुनिशार्दूल सफलस्ते मनोरथः ।
त्वद्दक्षिणाङ्गाज्जातोऽस्मि पुत्रस्ते शाधि माम्प्रभो ॥ ७२ ।
त्वया तपः समारब्धमीश्वरेण समं सुतम् ।
प्राप्स्यामीति ततो मह्यं† सदृशोऽन्यो न कश्चन ।
विचार्य्येति तवाहं वै जातोऽस्मि स्वयमेव च ॥ ७३ ।
तपसाराधयन्देवं शङ्खचक्रगदाधरम् ।
प्राप्तोऽसि परमां सिद्धिं त्वत्पुत्रोऽहं यतः स्थितः ॥ ७४ ।
श्रुत्वा तन्नन्दिनो वाक्यं प्रहृष्टवदनो मुनिः ।
विस्मितश्च तदोवाच कथं नाद्यापि मे हरिः ।
दृग्गोचरत्वमायाति जातश्चेत्तपसः फलम् ॥ ७५ ।
यावत्तं न समीक्षिष्ये तावन्न विरतस्तपः ।
अहमत्रैव वत्स्यामि यावदच्युतदर्शनम् । ७६ ।
पुत्र त्वमपि योगेन मथुरां व्रज सत्वरम् ।
मदाश्रमे तत्र पुण्ये धनं गोव्रजसङ्कुलम् ।
आमुष्यायणमादाय शीघ्रमत्र समानय ॥ ७७ ।
ततस्त्वाज्ञां समादाय नन्दी सत्वरमाव्रजत् ।
गत्वा च मथुरान्तस्य ऋषेराश्रममीक्ष्य‡ च ।
दृष्ट्वामुष्यायणन्तत्र पृष्ट्वा नाम तमच्युत ।

* न जानातीति पाठः । † मम स्थाने मह्यमिति पाठः । ‡ ईक्षितेति पाठः ।

गृहे वित्ते च कुशलमपृच्छद्गोधनेषु च ॥ ७८ ।
सालङ्कायनशिष्योऽपि पामुख्यायनसंज्ञितः ।
सर्व्वत्र कुशलं सार्धा प्रभावात्तु गुरोर्मम ।
गुरोश्च कुशलं ब्रूहि कुत्रास्ते स तपोधनः ॥ ७९ ।
भवान् कुतः समायातः किमत्रागमकारणम् ।
तन्मे विस्तरतो ब्रूहि सर्व्वथैवापशङ्कितताम् ॥ ८० ।
इत्युक्तः सोऽर्घ्यमादाय विश्रम्य च ततो गुरोः ।
वृत्तान्तं कथयामास स्वागमस्य च कारणम् ॥ ८१ ।
ततस्तेनैव सहितो गोधनं तत्प्रशस्य च ।
दिनैः कतिपयैश्चैव गण्डकीतीरमाश्रितः ॥ ८२ ।
अनेकत्तीर्थ्यं च ततस्त्रिवेणीं प्राप्य हर्षितः* ।
देविका नाम देवानामभावाच्च तपस्यताम् ।
नियमार्थं समुद्भूता गण्डक्या मिलिता शुभा ॥ ८३ ।
आश्रमादपरा चासीत्पुलस्त्यपुलहाश्रमात् ।
गण्डक्या मिलिता सापि त्रिवेणी गण्डकीत्यभूत् ॥ ८४
कामिकं तन्महातीर्थं पितॄणामतिवल्लभम् ।
तत्र स्थितं महालिङ्गं त्रिजलेश्वरसंज्ञितम् ।
मुक्तिभुक्तिप्रदं देवि दर्शनादघनाशनम् ॥ ८५ ।

धरण्युवाच ।

प्रयागे या त्रिवेणीति यत्र देवो महेश्वरः ।
शूलटङ्क इति ख्यातः सोमेश इति चापरः ॥ ८६ ।

* हृष्टो, हर्षितो वति नाप ।

वेणिमाधवनाम्नाऽपि यत्र विष्णुः स्वयं स्थितः ।
गङ्गा च यमुना चैव सरस्वत्यपरा नदी ॥ ८७ ।
सर्व्वेषाञ्चैव देवानामृषीणां सरसामपि ।
सर्व्वेषाञ्चैव तीर्थानां समाजस्तत्र मे श्रुतः ॥ ८८ ।
यत्राप्लुता दिवं यान्ति मृता मुक्तिं प्रयान्ति च ।
तीर्थराज इति ख्यातं तत्तीर्थं केशवप्रियम् ।
सैव त्रिवेणी विख्याता किमपूर्व्वाम्प्रशंससि ॥ ८९ ।
एतद्युतमर्म्मोक्तं त्वया विष्णो न संशयः ।
तत्कथ्यतां महाभाग लोकानां हितकाम्यया ।
मय्यनुक्रोशबुद्ध्या च कृपां कुरु दयानिधे ॥ ९० ।

वराह उवाच ।

शृणुष्व देवि भद्रं ते यद्यन्मां परिपृच्छसि ।
अत्र ते कीर्त्तयिष्यामि सेतिहासाङ्कथां शुभाम् ॥ ९१ ।
पुरा विष्णुस्तपस्तेपे लोकानां हितकाम्यया ।
हिमालये गिरौ रम्ये देवतागणसेविते ॥ ९२ ।
ततो बहुतिथे काले याते* सति तपस्यतः ।
तीव्रस्तेजः प्रादुरासीद्येन लोकाश्चराचराः ॥ ९३ ।
तस्योष्मणा समुद्भूतः स्वेदपूरस्तु गण्डयोः ।
तेन जाता धुनी दिव्या लोकानामघहारिणी ॥ ९४ ।
महर्लोकादयः सर्व्वे विस्मिताः सर्व्वतो दिशम् ।

* गते सतीति (ग) ।

तस्य प्रभवमिच्छन्तो ज्ञातुं नेशुः कथञ्चन ॥ ९५ ।
देवाः सर्व्वे ततो जग्मुर्ब्रह्माणम्प्रति चोत्सुकाः ।
पप्रच्छुः प्रभवन्तस्य प्रणम्य च पुनः पुनः ॥ ९६ ।
ब्रह्मापि हि न जानाति मोहितस्तस्य मायया ।
ततो देवैः समं ब्रह्मा शङ्करम्प्रत्युपस्थितः ॥ ९७ ।
तं दृष्ट्वा सहसा देवैः समेतं प्रत्युपस्थितम् ।
पप्रच्छ तं महादेवस्तदागमनकारणम् ॥ ९८ ।
ब्रह्मा तत्र महादेवम्पप्रच्छ प्रणतः स्थितः ।
अत्यद्भुतं महत्तेजः किमद्भुतं महेश्वर ॥ ९९ ।
येन प्रत्याहृता ह्यस्माऽसौ जगदातिकरावहत् ।
किन्नु स्यात्कथमेतत्स्यात्कथयास्य प्रभवो विभो ॥ १०० ।
शिवः क्षणं ततो ध्यात्वा ब्रह्माद्यान् प्रत्युवाच ह ।
महसोऽस्य समुत्पत्तिं महतो दर्शयामि वः ॥ १०१ ।
जगाम देवसहितः सोमः सहगणः प्रभुः ।
यत्रास्ते भगवान्विष्णुर्महता तपसान्वितः ॥ १०२ ।
उवाच परमप्रीतस्तदा शम्भुः स्मयन्निव* ।
तपस्यसि किमिच्छंस्त्वं† त्वं कर्त्ता जगताम्प्रभुः ।
सर्व्वाधारोऽखिलाध्यक्षस्तत्किं यत्तव दुर्ल्लभम् ॥ १०३ ।
एवमुक्तः प्रत्युवाच प्रणम्य जगताम्प्रभुः ।
अहं लोकहितार्थाय तपस्तप्तुं समुद्यतः ॥ १०४ ।

---

* स्मयमान इवेति साधु । † इच्छन्निति साधु ।

त्वत्तो वरानभीप्सन्वै त्वद्दर्शनसमुत्सुकः।
त्वद्दर्शनमनुप्राप्य कृतार्थोऽस्मि जगत्पते॥ १०५।

शिव उवाच।

मुक्तिक्षेत्रमिदं देव दर्शनादेव मुक्तिदम्।
गण्डस्वेदोद्भवा यत्र गण्डकी सरितां वरा।
भविष्यति न सन्देहो यस्या गर्भे भविष्यसि॥ १०६।
त्वयि स्थिते जगन्नाथे तव सान्निध्यकारणात्।
अहं ब्रह्मा च देवाश्च ऋषिभिः सह केशव।
सर्व्वे वेदाश्च यज्ञाश्च सर्व्वतीर्थानि चाच्युत।
वसिष्यामः सदेवात्र गण्डक्यां जगताम्पते॥ १०७।१०८।
कार्त्तिकं सकलं मासं यः स्नास्यति नरः प्रभो।
सर्व्वपापविनिर्म्मुक्तो मुक्तिभागी न संशयः॥ १०८।
तीर्थानां परमं तीर्थं मङ्गलानाञ्च मङ्गलम्।
यत्र स्नानेन लभ्येत गङ्गास्नानफलं नरैः॥ ११०।
स्मरणाद्दर्शनात्स्पर्शाद्विष्पापो जायते नरः।
यस्यास्तत्समताङ्गान्या लभेद्गङ्गां विना नदीम्॥ १११।
यत्र सा परमा पुण्या गण्डकी भुक्तिमुक्तिदा।
अपरा देविका नाम्ना* गण्डक्या सह सङ्गता॥ ११२।
पुलस्त्यपुलहौ पूर्व्वं तेपाते परमन्तपः।
यत्र सृष्टिविधानार्थङ्कृत्वाश्रमपदं पृथक्।

* नाम्नीति (ग)।

सृष्टेर्विधानसामर्थ्यं यत्र लब्धं ततः परम् ॥ ११३ ।
ततोऽभूद्ब्रह्मतनया पुण्या सा सरितां वरा* ।
गण्डक्या यत्र मिलिता ब्रह्मपुत्री यशस्विनी† ॥ ११४ ।
त्रिवेणी सा महापुण्या देवानामपि दुर्लभा ।
धरे जानीहि तत्क्षेत्रं योजनम्परमार्च्चितम् ॥ ११५ ।
पुरा वेदनिधेः पुत्रौ जयो विजय एव च ।
यजनाय गतौ राज्ञा हूतौ तौ कर्द्दमात्मजौ ।
तृणबिन्दोः सुतौ पापौ जातौ दृष्ट्वैव सुव्रतौ ॥ ११६ ।
यज्ञविद्यासुनिपुणौ वेदवेदाङ्गपारगौ ।
पूजयन्तौ हरिम्भक्त्या तन्निष्ठेन्द्रियमानसौ ॥ ११७ ।
ययोः पूजयतोर्नित्यं सान्निध्यं किल केशवः ।
ददाति पूजाऽवसरे भक्त्या किल वशीकृतः ॥ ११८ ।
मरुत्तेन कदाचित्तावाहूतौ कुशलौ द्विजौ ।
राज्ञा समाप्तयज्ञेन पूजयित्वा पुरस्कृतौ ॥ ११९ ।
दक्षिणाभिस्तोषयित्वा विसृष्टौ गृहमागतौ ।
विभागङ्कर्त्तुमारब्धौ पस्पर्द्धाते परस्परम् ॥ १२० ।
समो विभागः कर्त्तव्य इति ज्येष्ठोऽभ्यभाषत ।
विजयश्चाब्रवीच्चैनं येन लब्धं हि तस्य तत् ॥ १२१ ।
जयोऽब्रवीदसामर्थ्यं मन्वानो मां ब्रवीषि किम् ।
*न ददासि गृहीत्वा यत्तस्माद्ग्राहत्वमाप्नुहि* ॥ १२२ ।

* पग पुण्या सरिद्वरेति (ग) । † सर्वदेवसमन्विता इति (ह) ।

विजयोऽप्यब्रवीन्नूनमन्धीभूतोऽसि किन्धनैः ।
गजो भव मदान्धस्त्वं यो मामेवम्प्रभाषसे ॥ १२३ ।
एवन्तौ शाद्दमातङ्गावभूतां शापतः पृथक् ।
गण्डक्यामेव सञ्जातो ग्राहः पूर्व्वस्मृतिर्द्विजः ॥ १२४ ।
त्रिवेणीक्षेत्रमध्ये तु जयोऽभूद्वै महान् गजः ।
करिशावैर्गजाभिश्च क्रीड़मानो वने वसन् ॥ १२५ ।
बह्वन्यब्दसहस्राणि व्यतीतानि तयोस्तदा ।
वने विहरतोर्भूमि शापमोहितयोः सतोः ॥ १२६ ।
कदाचित्स गजः स्नातुं करेणुगणसंवृतः ।
त्रिवेणीमभितो यातोऽवगाहनपरायणः ॥ १२७ ।
सिञ्चन् करेणूस्ताभिश्च सिच्यमानो जलम्पिवन् ।
स्वयञ्च पाययंस्ताश्च चिक्रीड़ प्रीतमानसः ॥ १२८ ।
एवं संक्रीड़तस्तत्र दैवयोगेन तस्य हि ।
ग्राहः सम्प्रेरितः पूर्व्वं वैरयोगमनुस्मरन् ।
जग्राह सुदृढ़म्पादं गजोऽपि च विषाणतः ।
ग्राहं विव्याध सोऽप्येनमाकर्षयत तज्जले ॥ १२९।१३०।
तयोर्युद्धं समभवदनेकाब्दं विकर्षणैः ।
आकर्षणैश्च बहुभिर्दन्तभेदैः परस्परम् ॥ १३१ ।
प्रयुद्धयोस्तयोरेवं मत्सरग्रस्तयोः सतोः ।
सत्त्वानि पीड़ितान्यासन्ननेकानि क्षयं ययुः ॥ १३२ ।
ततो जलेश्वरो राजा भगवन्तं व्यजिज्ञपत् ।
तेन विज्ञापितो देवो भगवान् भक्तवत्सलः ।

सुदर्शनेन चक्रेण ग्राहास्यं समपाटयत् ॥ १३३ ।
क्षिप्तं पुनः पुनस्तत्तु शिलाः सङ्घट्टयन्थरे ।
सङ्घट्टनात्तु चक्रस्य शिलाश्चक्रेण लाञ्छिताः ॥ १३४ ।
बाहुल्येन बभूवुर्हि तस्मिन् क्षेत्रे परे मम ।
वज्रकीटैश्च जातानि सन्ततानि विलोकय ॥ १३५ ।
न सन्देहस्त्वया कार्य्यस्त्रिवेणीं प्रति सुन्दरि ।
त्रिवेणीक्षेत्रमहिमा एवन्ते परिकीर्त्तितः ॥ १३६ ।
यदा च भरतो राजा पुलस्त्यस्याश्रमान्तिके ।
स्थित्वा पर्य्यचरद्विष्णुं त्रिजलेशमपूजयत् ॥ १३७ ।
ततःप्रभृति तस्यासीद्भरतेनारतिस्फुटम् ।
पुनश्च मृगदेहान्ते जड़ः स भरतोऽभवत् ॥ १३८ ।
तेनैव पूजितो यस्माज्जलेश्वर इति स्मृतः ।
यस्य सम्पूजनाद्भक्त्या योगसिद्धिः प्रजायते ॥ १३९ ।
शालग्रामे परे क्षेत्रे यदाहं सुभगे स्थितः ।
तत्र ज्ञात्वा जलेशेन मृतोऽहं वसुधे मही ॥ १४० ।
ततो भक्तकृपावेशात् क्षिप्तवांस्तत्सुदर्शनम् ।
प्रथमं पतितं यत्र तत्र तीर्थं ततोऽभवत् ॥ १४१ ।
तत्र स्नानेन तेजस्वी सूर्य्यलोके महीयते ।
यदि प्राणैर्वियुज्येत मम लोके महीयते ॥ १४२ ।
भक्तसंरक्षणार्थाय मयाक्षिप्तं सुदर्शनम् ।
यत्र यत्र भ्रमति तत्तत्र तत्र शिलाङ्किताः ।
एवं तद्वै भ्रमात्क्षिप्तं सर्व्वं चक्रमयन्त्वभूत् ॥ १४३ ।

ततः स पञ्चरात्राणि स्थित्वा वै विधिपूर्व्वकम् ।
गोधनान्यग्रतः कृत्वा हरिक्षेत्रं जगाम ह ॥ १४४ ।
हरिणाधिष्ठितक्षेत्रं पूजनीयं ततः स्मृतम् ।
यदा नन्दी शूलपाणिर्गोधनेन पुरस्कृतः ।
स्थितवांस्तद्दिनादेतत् ख्यातं हरिहरप्रभम्* ।
देवानामटनाच्चैव देवाट इति संज्ञितम् ॥ १४५ ।
तस्य देवस्य महिमा केन वक्तुं हि शक्यते ।
स शूलपाणिर्देवेशो भक्ताभयविधायकः ।
मुनिभिर्देवगन्धर्व्वैः सेव्यतेऽचिन्त्यशक्तिमान् ॥ १४६ ।
तस्मिन् स्थाने महादेवः सालङ्कायनकस्य हि ।
पुत्त्रत्वं नन्दिरूपेण प्राप्तः साक्षाच्छिवः प्रभुः ॥ १४७ ।
स्वयञ्चैव महायोगी योगसिद्धिविधायकः ।
आस्थितः परमम्पीठं तीर्थं चैव त्रिधारकं ॥ १४८ ।
त्रिजटाभ्योऽभवन्धारास्तिस्रो वै परमाद्भुताः ।
गङ्गा च यमुना चैव पुण्या चैव सरस्वती ।
एतच्चैधारिकन्तीर्थन्त्रिजटाभ्यः समुत्थितम् ॥ १४९ ।
यत्र शम्भुः स्थितः साक्षान्महायोगी महेश्वरः ।
शालग्रामाभिधे क्षेत्रे हरिशीलनतत्परः ।
दिशन् स्थानं स्वभक्तानां संसाराद्येन मुच्यते ॥ १५० ।
तीर्थं त्रिधारे यः स्नात्वा सन्तर्प्य पितृदेवताः ।

* हरिहरात्मकमिति (ग) ।

महायोगिनमभ्यर्च्य न भूयोजन्मभाग्भवेत् ॥ १५१ ।
तस्यैव पूर्व्वदिग्भागे हंसतीर्थमिति स्मृतम् ।
तत्रैकङ्कौतुकं वृत्तन्तच्छृणुष्व महत्तरम् ॥ १५२ ।
कदाचिच्छिवरात्र्यान्तु भक्तैः पूजामहोत्सवे ।
नैवेद्यैर्विविधैः सृष्टैः पूजयित्वा तु योगिनम् ।
तत्र काकाः समुत्पेतुरन्ने तस्मिन् बुभुक्षिताः ।
गृहीत्वान्नन्तु तत्काकस्तेन उड्डीय निर्गतः ।
तद्गृहीतुम्परः काकस्तेनायुध्यत चाम्बरे ॥ १५३ ।
तावुभौ युध्यमानौ तु कुण्डे तस्मिन्निपेततुः ।
तत्र हंसौ ततोभूत्वा निर्गतौ चन्द्रवर्चसौ ॥ १५४ ।
तद्दृष्ट्वा महदाश्चर्य्यं तत्र ये मिलिता जनाः ।
हंसतीर्थमिति प्रोचुस्ततः प्रभृति सत्तमे* ।
ततः प्रभृति तत्तीर्थं हंसतीर्थमिति स्मृतम्† ॥ १५५ ।
पूर्व्वं यत्तक्षतन्तत्तु यत्ततीर्थमिति स्मृतम् ।
तत्र स्नातानरः शुद्धायत्तलोके महीयते ॥ १५६ ।
तत्राऽथ मुञ्चते प्राणान् शिवभक्तिपरायणः ।
यत्तलोकमतिक्रम्य मम लोकं प्रपद्यते ॥ १५७ ।
एवम्प्रभावन्तत्तीर्थं महायोगिप्रभावतः ।
अहं शिवश्च लोकानामनुग्रहपरायणौ ॥ १५८ ।
एतत्ते सर्व्वमाख्यातङ्कौतुकं गुह्यं वसुन्धरे ।

---

* स्वच्छं देवि तथाऽनघमिति (क), (ख) । † एतदर्द्धं (ग) पुस्तके नास्ति ।

आरभ्य मुक्तिक्षेत्रं* तत्क्षेत्रं द्वादशयोजनम् ।
शालग्रामस्वरूपेण मया यत्र स्थितं स्वयम् ।
स्वभक्तानां विशेषेण परमानन्ददायकम् ।
गुह्यानां परमङ्गुह्यङ्किमन्यच्छ्रोतुमिच्छसि ॥ ॥ १५८।१६० ।

इति वराहपुराणे भगवच्छास्त्रे सोमेश्वरादिलिङ्गमहिम मुक्तिक्षेत्रविवरणादि-
माहिमकथनं नाम चतुश्चत्वारिंशदधिकशततमोऽध्यायः ।

# पञ्चचत्वारिंशदधिकशततमोऽध्यायः ।

धरण्युवाच ।

भगवन्देवदेवेश सालङ्कायनको मुनिः ।
किञ्चकार तपः कुर्व्वंस्तव क्षेत्रे विमुक्तिदे ॥ १ ।

वराह उवाच ।

अथ दीर्घेण कालेन स ऋषिः संशितव्रतः ।
तप्यमानोयथान्यायं पश्यते* शालमुत्तमम् ॥ २ ।
अभिन्नमतुलच्छायं विशालं पुष्पितन्तथा ।
मनोज्ञञ्च सुगन्धञ्च देवानामपि दुर्ल्लभम् ॥ ३ ।

* आरामसुक्तिक्षेत्रमिति क्वचित्पाठ. ।

पश्यतीति साधु । एवं परत्रापि

ऋषिर्ध्यानपरिश्रान्तः सालङ्कायनकोऽद्भुतम् ।
पश्यते च पुनः शालं शुभानां शुभदर्शनम् ॥ ४ ।
ततो दृष्ट्वा महाशालं परिश्रान्तो महामुनिः ।
विश्रामं कुरुते तत्र द्रष्टुकामोऽथ मां मुनिः ॥ ५ ।
शालस्य तस्य पूर्व्वेण स्थितः पश्चान्मुखो मुनिः ।
मायया मम मूढ़ात्मा शक्तोद्रष्टुं न मामभूत् ॥ ६ ।
ततः पूर्व्वेण पार्श्वेन तस्य शालस्य सुन्दरि ।
वैशाखमासद्वादश्यां मद्दर्शनमुपागतः ॥ ७ ।
दृष्ट्वा मां तत्र स मुनिस्तपस्वी शंसितव्रतः ।
तुष्टाव वैदिकैः सूक्तैः प्रणम्य च पुनः पुनः ॥ ८ ।
मत्तेजसा ताड़िताक्षः शनैरुन्मील्य लोचने ।
यावत्पश्यति मां तत्र स्तुवन् स तपसान्वितः ।
वृक्षस्य दक्षिणे पार्श्वे गतस्तावदहन्त्वरे* ॥ ९ ।
पूर्व्वस्थानं परित्यज्य स ऋषिः शंसितव्रतः ।
स्थित्वा मत्प्रमुखे चैव स्तुवन्नेवं मम प्रियम् ॥ १० ।
ततोऽहं स्तूयमानो वै ऋग्वेदस्यैव ऋग्गतैः ।
स्तोत्रैः सम्पूज्यमानो हि गतोऽस्मि पश्चिमान्दिशम् ॥ ११ ।
ततः पश्चिमपार्श्वे तु स्थितस्तत्रैव माधवि ।
यजुर्वेदोक्तमन्त्रेण संस्तुतः पश्चिमाङ्गतः ॥ १२ ।
स्तुवतीत्थं मुनौ देवि गतोऽहमुत्तरान्दिशम् ।

* गतस्तावदहमुत्सरे इति (क), (ख) ।

तत्रापि* सामवेदोक्तैर्मन्त्रैस्तुष्टाव मां मुनिः ॥ १३ ।
ततोऽहं स्तूयमानो वै ऋषिमुख्येन सुन्दरि ।
प्राप्तश्च परमां प्रीतिं तमवोचमृषिं तदा ॥ १४ ।
साधु ब्रह्मन्महाभाग सालङ्कायन सत्तम ।
तपसानेन सन्तुष्टः स्तुत्या चैवानया तव ।
वरं वरय भद्रं ते संसिद्धस्तपसा भवान् ॥ १५ ।
एवमुक्तः स तु मया सालङ्कायनको मुनिः ।
शालवृक्षं समाश्रित्य निर्भृतेनान्तरात्मना ॥ १६ ।
ततो मां भाषते देवि स ऋषिः संशितव्रतः ।
तवैवाराधनार्थाय तपस्तप्तं मया हरे ॥ १७ ।
पर्य्यटामि महीं सर्व्वां सशैलवनकाननाम् ।
इदानीं खलु दृष्टोऽसि चक्रपाणे महाप्रभो ॥ १८ ।
यदि तुष्टोऽसि मे देव सर्व्वशान्तिकरः परः ।
यदि देयोवरोमह्यं तपसाराधितेन च ।
तदा देहि जगन्नाथ ममेश्वरसमं सुतम् ।
एष एव वरोमह्यं दीयतां मधुसूदन ॥ १९।२० ।
एवं वरं याचितोऽस्मि मुनिना भीमकर्म्मणा ।
पुत्रकामेन विप्रेण दीर्घकालन्तपस्यता ॥ २१ ।
एवं तस्य वचः श्रुत्वा ब्राह्मणस्य तपस्विनः ।
मधुराङ्गिरमादाय प्रत्यवोचमृषिम्प्रति । २२ ।

* ततोऽसाविति (ग) ।

चिरकालं व्रतस्थेन यत्त्वया चिन्तितं मुने ।
स कामस्तव सञ्जातः सिद्धोऽसि तपसा भवान् ॥ २३
ईश्वरस्य परा*मूर्त्तिर्नाम्ना वै नन्दिकेश्वरः ।
त्वद्दक्षिणाङ्गादुद्भूतः पुत्त्रस्तव मुनीश्वर ।
संहरस्व तपो ब्रह्मन् शान्तिङ्गच्छ महामुने ॥ २४ ।
अथ चैतस्य जातस्य कल्पा वै सप्त सप्त च ।
त्वं न जानासि विप्रर्षे स जातो नन्दिकेश्वरः ।
मायायोगबलोपेतो गोव्रजं स मया स्थितः ॥ २५ ।
मथुरायाः समानीय आमुष्यायणसंज्ञितम् ।
तव शिष्यं पुरस्कृत्य शूलपाणिरवस्थितः ॥ २६ ।
तत्राश्रमे महाभाग स्थित्वा त्वं तपसान्निधे ।
पुत्त्रेण परमप्रीतो मत्त्नेनेऽस्मत्समो भव ॥ २७ ।
अन्यच्च † गुह्यं वक्ष्यामि मालङ्कायन तच्छृणु ।
तव प्रीत्या प्रवक्ष्यामि येनैतत्त्क्षेत्रमुत्तमम् ।
शालग्राममिति ख्यातं तन्निबोध मुने शुभम् ॥ २८ ।
योऽयं वृक्षस्त्वया दृष्टः सोऽहमेव न संशयः ।
एतत्कोऽपि न जानाति विना देवं महेश्वरम् ।
माययाऽहं निगूढोऽस्मि त्वत्प्रसादात्प्रकाशित ॥ २९ ।
एवं तस्मै वरन्दत्त्वा मालङ्कायनकाय वै ।
पश्यतस्तस्य वसुधे तत्रैवान्तर्हितोऽभवम् ॥ ३० ।

* ईश्वरस्य परमा मूर्त्तिरिति (क), (ख) । † चान्यत्ते इति (क), (ख) ।

एवं दक्षिणतः कृत्वा जगाम स्वाश्रमं मुनिः ॥ ३१ ।
मम तद्रोचते स्थानं गिरिकूटशिलोच्चये ।
शालग्राम इति ख्यातं भक्तसंसारमोक्षणम् ॥ ३२ ।
तत्र गुह्यानि मे भूमे वक्ष्यमाणानि मे शृणु ।
तरन्ति मनुजा यैर्ध्या घोरं संसारसागरम् ॥ ३३ ।
गुह्यानि तत्र वसुधे तीर्थानि दश पञ्च च ।
नाद्यापि किञ्चिज्जानन्ति मुच्यन्ते यैरिह स्थिताः ॥ ३४ ।
तत्र विल्वप्रभं नाम गुह्यक्षेत्रं मम प्रियम् ।
कुण्डानि तत्र चत्वारि क्रोशमात्रे यशस्विनि ।
दृश्यन्तत्परमङ्गुह्यं भक्तकर्म्मसुखावहम् ॥ ३५ ।
तत्र स्नानन्तु कुर्व्वीत अहोरात्रोषितो नरः ।
चतुर्णामश्वमेधानाम्फलम्प्राप्नोति मानवः ॥ ३६ ।
अथात्र मुञ्चते प्राणान्मम कर्म्मसु निष्ठितः ।
अश्वमेधफलम्भुक्त्वा मम लोके स मोदते ॥ ३७ ।
चक्रस्वामीति विख्यातं तस्मिन् क्षेत्रे परं मम ।
चक्राङ्कितशिलास्तत्र दृश्यन्ते च इतस्ततः ॥ ३८ ।
चक्राङ्कितशिला यत्र तिष्ठते* वरवर्णिनि ।
तदेतद्विद्धि वसुधे समन्ताद्योजनत्रयम् ॥ ३९ ।
तत्र स्नानन्तु कुर्व्वीत त्रिरात्रोपोषितो नरः ।
त्रयाणामपि तन्त्राणां फलम्प्राप्नोति निश्चितम् ॥ ४० ।

---

* तिष्ठतीति साधु ।

अथात्र मुञ्चते प्राणान्मम कर्म्मपरायणः।
वाजपेयफलं भुक्त्वा मम लोकञ्च गच्छति ॥ ४१ ॥
तत्र* विष्णुपदं नाम तीर्थं गुह्यम्परं मम।
तिस्रो धाराः पतन्त्यत्र हिमकूटसमाश्रिताः ॥ ४२ ॥
तत्र स्नानन्तु कुर्व्वीत त्रिरात्रोपोषितो नरः।
त्रयाणामपि रात्रीणां फलम्प्राप्नोति निष्कलम् ॥ ४३ ॥
तथैव मुञ्चते प्राणान्मुक्तसङ्गो गतक्लमः।
अतिरात्रफलम्भुक्त्वा मम लोके महीयते ॥ ४४ ॥
तत्र कालीह्रदं नाम गुह्यक्षेत्रम्परं मम।
अत्र चैव ह्रदस्रोतो बदरीवृक्षनिःसृतः ॥ ४५ ॥
तत्र स्नानन्तु कुर्व्वीत षष्टिकालोपितो नरः।
नरमेधस्य यज्ञस्य फलम्प्राप्नोति मानवः ॥ ४६ ॥
अथात्र मुञ्चते प्राणान्मुक्तरागो गतक्लमः।
नरमेधफलम्भुक्त्वा मम लोके च मोदते ॥ ४७ ॥
अन्यच्च ते प्रवक्ष्यामि महाश्चर्य्यं वसुन्धरे।
तत्र गङ्गप्रभं नाम गुह्यक्षेत्रम्परं मम।
श्रूयते गङ्गगन्धश्च द्वादश्यामर्द्धरात्रके ॥ ४८ ॥
गदाकुण्डमिति ख्यातं तस्मिन्क्षेत्रे परं मम।
यत्र वै कम्पते स्रोतो दक्षिणान्दिशमाश्रितम् ॥ ४९ ॥
तत्र स्नानन्तु कुर्व्वीत† त्रिरात्रोपोषितो नरः।

---

* यत्रेति (ग)। † स्नानं प्रकुर्व्वीतेति (ग)।

वेदान्तगानां विप्राणां फलम्प्राप्नोति मानवः ॥ ५० ।
अथ वै मुञ्चते प्राणान्कृतकृत्योगुणान्वितः ।
गदापाणिर्महाकायो मम लोकम्प्रपद्यते ॥ ५१ ।
पुनश्चाग्निप्रभं नाम गुह्यक्षेत्रं परं मम ।
धारा पतति तत्रैका पूर्व्वोत्तरसमाश्रिता ॥ ५२ ।
यस्तत्र कुरुते स्नानं चतुर्भक्तोपितोनरः ।
अग्निष्टोमात्पञ्चगुणं फलम्प्राप्नोति मानवः ॥ ५३ ।
अथात्र मुञ्चते प्राणान्मम कर्म्मसु निष्ठितः ।
अग्निष्टोमफलम्भुक्त्वा मम लोकम्प्रपद्यते ॥ ५४ ।
तत्राश्चर्य्यं महाभागे कथ्यमानं मया शृणु ।
हेमन्ते चोदकमुष्णं ग्रीष्मे भवति शीतलम् ॥ ५५ ।
गुह्यं सर्व्वायुधं नाम तत्र क्षेत्रे परं मम ।
पतन्ति सप्त स्रोतांसि हिमवन्निःसृतानि वै ॥ ५६ ।
तत्र स्नानम्प्रकुर्व्वीत सप्तरात्रोषितो नरः ।
राजा भवति सुश्रोणि सर्व्वायुधकलान्वितः ॥ ५७ ।
अथ वै मुञ्चते प्राणान्मम कर्म्मविनिश्चितः ।
स भुक्त्वा राज्यभोज्यानि मम लोकञ्च गच्छति ॥ ५८ ।
तत्र देवप्रभं नाम गुह्यक्षेत्रं परं मम ।
धाराः पञ्चमुखास्तत्र पतन्ति गिरिसंश्रिताः ॥ ५९ ।
तत्र स्नानन्तु कुर्व्वीत अष्टकालोषितोनरः ।
चतुर्णामपि देहिनां याति पारं न संशयः ॥ ६० ।
अथात्र मुञ्चते प्राणाँल्लोभमोहविवर्ज्जितः ।

वेदकर्म्म समुत्सृज्य मम लोके महीयते ॥ ६१ ।
गुह्यं विद्याधरं नाम तत्र क्षेत्रे परं मम ।
पञ्च धाराः पतन्त्यत्र हिमकूटविनिःसृताः ॥ ६२ ।
यस्तत्र कुरुते स्नानमेकरात्रोषितो नरः ।
याति वैद्याधरं लोकङ्कृतकृत्यो न संशयः ॥ ६३ ।
अथात्र मुञ्चते प्राणान्वीतरागो गतक्लमः ।
भुक्त्वा वैद्याधरान्भोगान्मम लोकाय गच्छति ॥ ६४ ।
तत्र पुण्यनदी नाम गुह्यक्षेत्रे परे मम ।
शिला कुञ्जलताकीर्णा गन्धर्व्वाप्सरसेविता* ॥ ६५ ।
तत्र स्नानन्तु कुर्व्वीत अष्टभक्तोषितो नरः ।
भ्रमते† सप्तद्वीपेषु स्वच्छन्दगमनालयः ॥ ६६ ।
अथात्र मुञ्चते प्राणान्मम कर्म्मानुसारकः‡ ।
सप्तद्वीपान्समुत्सृज्य मम लोकं स गच्छति ॥ ६७ ।
गन्धर्व्वेति च विख्यातं तस्मिन्क्षेत्रं परं मम ।
एकधारा पतन्त्यत्र पश्चिमां दिशमाश्रिता ॥ ६८ ।
तत्र स्नानन्तु कुर्व्वीत चतूरात्रोषितोनरः ।
मोदते लोकपालेषु स्वच्छन्दगमनालयः ॥ ६९ ।
अथात्र मुञ्चते प्राणान्मम कर्म्मपरायणः§ ।

* अप्सरःभिरितिति साधु । तथा कृते छन्दोदोषः स्यात् । † भ्राम्यति, भ्रमति वा साधु ।
‡ मम कर्म्मविनिश्चित इति ग. । § मम भक्त्या व्यवस्थित इति (ग) ।

लोकपालान् परित्यज्य* मम लोकाय गच्छति ॥ ७० ।
तत्र देवह्रदं नाम मम क्षेत्रं वसुन्धरे।
यत्र कान्तासि मे भूमि बलेर्यज्ञविनाशनात् ॥ ७१ ।
स ह्रदो वरदः श्रेष्ठो मनोज्ञः सुखशीतलः।
अगाधः सौख्यदश्चापि देवानामपि दुर्लभः ॥ ७२ ।
तस्मिन् ह्रदे महाभागे मम वै नियमोदके।
मत्स्याश्चक्राङ्किताश्चैव पर्य्यटन्ते† इतस्ततः ॥ ७३ ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
महाश्चर्य्यं विशालाक्षि यत्र तत्परिवर्त्तते।
श्रद्दधानस्तु पश्येत‡ न पश्येत्पापपूरुषः ॥ ७४ ।
तस्मिन्देवह्रदे पुण्ये चतुर्विंशतिद्वादश।
सौवर्णानि च पद्मानि दृश्यते भास्करोदये ॥ ७५ ।
तावत्पश्यन्ति भूतानि यावन्मध्यन्दिनम्भवेत्।
यत्र स्नाता दिवं यान्ति शुद्धा वाक्कायजैर्म्मलैः ॥ ७६ ।
तत्र स्नानम्प्रकुर्व्वीत दशभक्तोषितोनरः।
दशानामश्वमेधानां प्राप्नोत्यविकलम्फलम् ॥ ७७ ।
अथाऽत्र मुञ्चते प्राणान्मम चिन्ताव्यवस्थितः।
अश्वमेधफलम्भुक्त्वा भूमि मत्समतां व्रजेत् ॥ ७८ ।
अन्यच्च ते प्रवक्ष्यामि क्षेत्रं गुह्यं परं मम।
सम्भेदो देवनद्यास्तु समस्तसुखवल्लभः ॥ ७९ ।

---

* लोकपालान् समुत्सृज्येति क. । † पर्य्यटन्तीति साधु। ‡ पश्येदिति साधु।

दिवोऽवतीर्य्य तिष्ठन्ति देवा यत्र सहप्रियाः ।
गन्धर्व्वाप्सरसश्चैव नागकन्याः सहोरगैः ॥ ८० ।
देवर्षयश्च मुनयः समस्तसुरनायकाः ।
सिद्धाश्च किन्नराश्चैव स्वर्गादवतरन्ति हि ॥ ८१ ।
नेपाले यच्छिवस्थानं समस्तसुखवल्लभम् ।
तेभ्यस्तेभ्यश्च स्थानेभ्यस्तीर्थेभ्यश्च विशेषतः ॥ ८२ ।
महादेवजटाजूटान्नीलकण्ठाच्छिवालयः ।
श्वेतगङ्गेति या प्रोक्ता तया सम्भूय सादरम् ।
नानानद्यः समायाता दृश्याऽदृश्यतया स्थिताः ॥ ८३ ।
गण्डक्या कृष्णया चैव या कृष्णस्य तनूद्भवा ।
तया सम्भेदमापन्ना या सा शिवतनूद्भवा ।
त्रिशूलगङ्गेत्याख्याता सापि तत्र महानदी ॥ ८४ ।
एवं नदीसमुद्भेदः सर्व्वतीर्थकदम्बकम् ।
मम क्षेत्रे समाख्यातं पुण्यं परमपावनम् ।
वसुधे त्वं विजानीहि देवानामपि दुर्लभम् ॥ ८५ ।
यश्च सिद्धाश्रम इति विख्यातः पुण्यवर्द्धनः ।
शर्म्मास्तपोवनं* तत्र सर्व्वाश्रमवरम्मति ॥ ८६ ।
नानापुष्पफलोपेतङ्कदलीखण्डमण्डितम् ।
निचुलैश्चैव पुन्नागैः केसरैश्च विराजितम् ॥ ८७ ।
खर्ज्जूराम्राकवकुलैश्चूतैश्चैव प्रियालकैः ।

* भर्गास्तपोवनमिति (क) ।

नारिकेलैश्च पूगैश्च चम्पकैर्जम्बुभिर्धवैः॥ ८८।
नारङ्गैर्वदरीभिश्च जम्बीरैर्मातुलुङ्गकैः।
केतकीमल्लिकाजातीयूथिकाराजिराजितम्॥ ८९।
कुन्दैः कुरवकैर्नागैः कुटजैर्दाड़िमैरपि।
आगत्य यत्र क्रीड़न्ति देवानां मिथुनानि च॥ ९०।
तस्मिंश्छत्रे महापुण्ये पुण्यनद्योस्तु सङ्गमे।
स्नानाच्छताश्वमेधानां फलम्प्राप्नोति मानवः॥ ९१।
स्नात्वा तत्र तु वैशाखे गोसहस्रफलम्भवेत्।
माघमासे पुनः स्नात्वा प्रयागस्नानजम्फलम्॥ ९२।
कार्त्तिके मासि यः स्नाति तुलासंस्थे दिवाकरे।
विधिना नियतः सोऽपि मुक्तिभागी न संशयः॥ ९३।
यस्त्रिरात्रमुषित्वा तु निश्चतं नियताशनः।
राजसूयफलम्प्राप्य मोदते देववद्दिवि॥ ९४।
यज्ञस्तपोऽथवा दानं श्राद्धमिष्टस्य पूजनम्।
यत्किञ्चित्क्रियते कर्म्म तदनन्तफलम्भवेत्।
भूमि तस्यापराधांश्च सर्व्वानेव क्षमाम्यहम्॥ ९५।
गङ्गायमुनयोर्यद्वत्सङ्गमो मर्त्त्यदुर्लभः।
तथैवायं देवनद्योः सङ्गमः समुदाहृतः॥ ९६।
एतद्गुह्यं परन्देवि मम क्षेत्रे वसुन्धरे॥ ९७।
अहमस्मिन्महाक्षेत्रे धरे पूर्व्वमुखः स्थितः।
शालग्रामे महाक्षेत्रे भूमे भागवतप्रियः॥ ९८।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।

अन्तर्गुह्यं परं श्रेष्ठं* यत्र जानन्ति मोहिताः ॥ ९९ ।
शिवो मे दक्षिणस्थानं तिष्ठते† विगतज्वरः ।
लोकानाम्प्रवरः श्रेष्ठः सर्व्वलोकवरो हरः ॥ १०० ।
तं ये विन्दन्ति ते देवि नूनं मामेव विन्दति‡ ।
ये मां विदन्ति देवेशि ते विदन्ति शिवम्परम् ॥ १०१ ।
अहं यत्र शिवस्तत्र शिवो यत्र वसुन्धरे ।
तत्राहमपि तिष्ठामि आवयोर्नान्तरं क्वचित् ॥ १०२ ।
शिवं यो वन्दते भूमे स हि मामेव वन्दते ।
लभते पुष्कलां सिद्धिमेवं यो वेत्ति तत्त्वतः ॥ १०३ ।
एवमेतन्महाभागे क्षेत्रं हरिहरात्मकम् ।
मृता येऽत्र गतिं यान्ति मम कर्म्मानुसारिणः ॥ १०४ ।
मुक्तिक्षेत्रं प्रथमतो रुरुखण्डन्ततः परम् ।
सम्भेदो देवनद्याश्च त्रिवेणी च ततः परम् ।
क्षेत्रं प्रमाणं§ विज्ञेयं गण्डकीसङ्गतं परम् ॥ १०५ ।
एवं सा गण्डकी देवि नदीनामुत्तमा नदी ।
गङ्गया मिलिता यत्र भागीरथ्या महाफला ।
अपरन्तन्महत्क्षेत्रं हरिक्षेत्रमिति स्मृतम् ॥ १०६ ।
आदौ सा गण्डकी पुण्या भागीरथ्या च सङ्गता ।
तस्य तीर्थस्य महिमा ज्ञायते न सुरैरपि ॥ १०७ ।

* क्षेत्रमिति ग । † तिष्ठतीति माधु । ‡ विन्दतीति पाठं, विन्दन्ति विदन्तीति वा साधु । § प्रथममिति क., ख. ।

एतत्ते कथितम्भद्रे शालग्रामस्य सुन्दरि।
गण्डक्याश्चैव माहात्म्यं सर्व्वकल्मषनाशनम्।
पूर्व्वपृष्टन्त्वया यच्च पुण्यं भागवतप्रियम्॥ १०८।
आख्यानानां महाख्यानं द्युतीनां परमा द्युतिः।
पुण्यानां परमं पुण्यं तपसाञ्च महत्तपः॥ १०९।
गुह्यानां परमङ्गुह्यं गतीनाम्परमा गतिः।
महालाभम् लाभानां नास्त्यस्मादपरं महत्॥ ११०।
पिशुनाय न दातव्यं न शठाय गुरुद्रुहे।
ये च पापा कृतघ्नाश्च द्विजदेवापराधिनः।
कुशिष्याय न दातव्यं न दद्याच्छास्त्रदूषके।
नीचाय न च दातव्यं ये न जानन्ति सेवितुम्॥ १११।११२।
सुशिष्याय च दातव्यं धीराय शुभबुद्धये।
लोभमोहमदाद्यैर्य्ये वर्ज्जिताः पुण्यबुद्धयः॥ ११३।
य एतत्पठते नित्यङ्कल्यमुत्थाय मानवः।
कुलानि तारितान्येवं सप्त सप्त च सप्त च॥ ११४।
एवं मरणकाले तु न कदाचिद्विमुह्यते।
यदीच्छेत्परमां सिद्धिं मम लोकाय गच्छति॥ ११५।
शालग्रामस्य क्षेत्रस्य माहात्म्यं परमं मया।
कथितं ते महादेवि किमन्यच्छ्रोतुमिच्छसि॥ ११६।

इति वराहपुराणे भगवच्छास्त्रे शालग्रामक्षेत्रमाहात्म्यवर्णनं नाम
पञ्चचत्वारिंशदधिकशततमोऽध्यायः।

# षट्चत्वारिंशदधिकशततमोऽध्यायः ।

सूत उवाच ।

शालग्रामस्य माहात्म्यं श्रुत्वा गुह्यं महौजसम् ।
विस्मयं परमं गत्वा हृष्टा वचनमब्रवीत् ॥ १ ॥

धरण्युवाच ।

अहो तेनस्य माहात्म्यं यत्त्वया भाषितं हरे ।
एतच्छ्रुत्वा महाभाग जातास्मि विगतज्वरा ॥ २ ॥
रुरुखण्डमिति प्रोक्तं यत्त्वया परमार्च्चितम् ।
रुरुनाम कथं कौ वा आसीत्पूर्व्वं जनार्द्दन ॥ ३ ॥
यन्नाम्ना परमङ्क्षेत्रं हृषीकेश त्वयाश्रितम् ।
कथयस्व जगन्नाथ यद्यनुग्राह्यता मयि ॥ ४ ॥

वराह उवाच ।

आसीत्पुरा महाभागो देवदत्त इति द्विजः ।
भृगुवंशे समुत्पन्नो वेदवेदाङ्गपारगः ।
यज्ञविद्यासु कुशलो व्रतनिष्ठोऽतिथिप्रियः ॥ ५ ॥
तत्राश्रमपदं पुण्यं पुण्यद्रुमलतान्वितम् ।
शान्तैर्मृगगणैः कीर्णं कन्दमूलफलान्वितम् ॥ ६ ॥
तत्र तीव्रं तपोऽतप्यद्देवदत्तो मुनीश्वरः ।
वर्षाणामयुतं साग्रं तत इन्द्रो व्यचिन्तयत् ॥ ७ ॥
कामं वसन्तसहितं गन्धर्व्वान् ससखीन् पुनः* ।

---

* ससखान् पुर इति (क), (ख) ।

उवाच मधुरं वाक्यं सुश्वेन्द्रियमनाः प्रभुः ॥ ८ ।
अहो सखायः किञ्चिन्मे महत्कार्य्यमुपस्थितम् ।
तस्य मे चिन्तयानस्य यूयमेव परा गतिः ।
भवत्प्रसादात्सुस्थोऽहं निर्भयस्तद्विचिन्त्यताम् ॥ ९ ।
तदिन्द्रस्य वचः श्रुत्वा ते काममलयानिलाः ।
प्रत्यूचुर्देवराजान*माज्ञापय निजप्रियम् ॥ १० ।
जितेन्द्रियस्यापि मनः कस्य संक्षोभयामहे ।
कं वा सुतीव्रात्तपसो भ्रंशयामः सुपेशलम्† ।
आज्ञाप्रसादन्ते लब्ध्वा वद शीघ्रं सुखी भव ॥ ११ ।
इत्युक्तः शतमन्युर्वै प्रत्युवाचाऽथ मानयन् ।
तदैव मे गता चिन्ता भवतां दर्शनं यदा ।
जातमेवाऽखिलङ्कार्य्यं मे वै तत्‡च्छृणुताखिलाः ॥ १२ ।
हिमशैले महारम्ये हृषीकेशाश्रितो मुनिः ।
देवदत्त इति ख्यातस्तपस्यति महत्तपः ।
जिघृक्षुर्मे पदं नूनं तत्तपो विनिवर्त्त्यताम् ॥ १३ ।
इत्युक्तास्ते तदाज्ञां वै गृहीत्वा शिरसा द्रुतम् ।
प्रस्थानाय मतिञ्चक्रुः कामदेवपुरःसराः ।
प्रस्थाप्याग्रे वसन्तञ्च मलयानिलमेव च ॥ १४ ।
ततः सुरपतिः शक्रः प्रम्लोचान्नाम नामतः ।
प्रशस्य प्रणयात्पूर्व्वं मानयन्निदमब्रवीत् ॥ १५ ।

* देवराजानमिति आर्षं देवराजमिति साधु । † सुपेशसमिति (ग) । ‡ ममैतदिति (ग) ।

गच्छ स्वस्तिमती देवि विजयाय मुनेर्भुवि ।
यत्राश्रमपदन्तस्य देवदत्तस्य वै मुनेः ।
ललितैः स्वैर्विलासैस्तं मोहयित्वा वशङ्कुरु ॥ १६ ।
यथा मत्प्रीतिरतुला त्वं मे कार्य्यकरी सदा ।
तथा कुरुष्व भद्रन्ते हृषीकेशसमीपतः ॥ १७ ।
इन्द्रस्याज्ञां समादाय ययौ तस्याश्रमम्प्रति ।
समीपोपवने रम्ये नानाद्रुमलताकुले ।
मधुरालापबहुले कोकिलानां कुलाकुले ।
रसालमञ्जरीव्याप्तरसामोदालिसङ्कुले ।
गुञ्जन्मत्तालिसन्नादस्तुतिश्रुतिधारान्विते ।
गन्धर्व्वगीतसंमिश्रे मलयानिलशीतले ।
सम्फुल्लपङ्कजवने सुनिर्म्मलजलाशये ।
मुनिप्रभावसन्त्यक्तक्रौर्य्यस्थलजलालये ।
मधुरामोदमधुरे चित्तक्षोभविधायिनि ॥ १८।१९।२०।२१ ।
प्रविश्य सा वरारोहा गीतं सुमधुरं जगौ ।
यदा ध्यानादुपरतः समाधेर्विरतश्चिरात् ।
गान्धर्व्वम्प्रारम्भंस्ते* तु गन्धर्व्वाः सुरसम्मताः ॥ २२ ।
तस्मिन्नेव क्षणे लब्ध्वाऽवसरं पञ्चसायकः ।
विचकर्ष धनुः पौष्पं सायकान्समयूयुजत् ।
संलक्ष्य तं मुनिं शान्तं भाविदैवबलात्कृतम् ॥ २३ ।

* प्रारभन्त इति साधु ।

श्रुत्वा तन्मधुरं गीतं पञ्चमालापसुन्दरम्।
क्षुब्धचित्तः समभवत्स मुनिः संशितव्रतः॥ २४॥
चकर्ष च धनुः कामः पुनः पुनरतन्द्रितः।
देवव्रतोऽपि स मुनिः क्षुब्धात्मा नियतोऽपि सन्॥ २५॥
विचचाराश्रमपदं पश्यन् सन्तुष्टमानसः।
दूराद्ददर्श तन्वङ्गीं क्रीड़न्तीं कन्दुकेन ताम्॥ २६॥
दृष्ट्वैव तान्तु चार्व्वङ्गीं विद्धः कामेन पत्रिणा।
तस्याः समीपमगमत् स्मयमानो महामुनिः॥ २७॥
सापि दृष्ट्वा देवदत्तं सज्जन्ती हरिणेक्षणा।
कटाक्षयन्ती सहसा लज्जमाना विगूहति॥ २८॥
करेण कन्दुकं घ्नन्ती चञ्चलाक्षी सुपेशला।
स्रंसता केशपाशेन गलत्पुष्पेण राजता।
मनो हरन्ती तस्यर्षेर्ललितैर्विभ्रमोद्भवैः॥ २९॥
एतस्मिन्नन्तरे तस्या दक्षिणः पवनोऽहरत्।
वासः सूक्ष्मङ्गलन्नीवि काञ्चीदामगुणान्वितम्॥ ३०॥
पुष्पवाणोऽप्यविध्यत्तं दृष्ट्वाऽवसरमन्तिके।
सम्मोहितः स तु मुनिर्गत्वान्तिकमथाब्रवीत्॥ ३१॥
का त्वङ्कस्यासि सुभगे वनेऽस्मिन्किञ्चिकीर्षसि।
मादृशान् किं मृगयसे वाहुपाशेन वा मृगान्।
बद्धा गृहीत्वा वामोरु किं वाऽस्मान् कर्त्तुमिच्छसि॥ ३२॥
सर्व्वथाऽस्मांस्त्वाधीनान् यद्यद्वा कारयिष्यसि*।

* किञ्चिद्वा कारयिष्यसीति (क), (ख)।

तत्तत्कुर्म्मो वयं नित्यं त्वदधीनाः स्म सर्व्वथा ॥ ३३ ।
अथ तां हसमानाञ्च गृहीत्वा दक्षिणे करे ।
समालिङ्ग्य विषज्जन्तीं रमयामास मोहितः ॥ ३४ ।
रममाणस्तया सार्द्धं भुञ्जन्* भोगान्मनोरमान् ।
तपःप्रभावोपनतान्दिवारात्रमतन्द्रितः ॥ ३५ ।
बहूनहर्गणानेवं रममाणो यदृच्छया ।
सुप्तोत्थित इवाकस्माद्विवेकेन समन्वितः ।
निर्वेदमागतवान् सद्यस्तदोवाच भृगातुरः ॥ ३६ ।
अहो भागवती माया ययाहं भृशमोहितः ।
जानन्नपि तपोभ्रंशं प्राप्तो दैवबलात्कृतः ॥ ३७ ।
अग्निकुण्डसमा नारी घृतकुम्भसमः पुमान् ।
इति प्रवादो मूर्खाणां विचारान्महदन्तरम् ॥ ३८ ।
घृतकुम्भोऽग्निसंयोगेन द्रवते न तु दर्शनात् ।
पुमान्स्त्रीदर्शनादेव द्रवते यद्विमोहितः ॥ ३९ ।
नापराधस्ततो नार्य्याः स्वयं यदजितेन्द्रियः ।
इत्युक्त्वाऽसौ निवृत्तात्मा विससर्ज्ज सुराङ्गनाम् ।
प्रम्लोचान्देववगणो मनस्येतदचिन्तयत् ॥ ४०।४१ ।
उपसर्गो महानत्र तपसोभ्रंशकारकः ।
त्यक्त्वाश्रममिमं चान्यत्स्थानङ्गत्वा समाहितः ।
तपस्तीव्रं समास्थाय शोषयिष्ये कलेवरम् ॥ ४२ ।
इति निश्चित्य मनसा गत्वा भृग्वाश्रमस्यति ।

---

* भुञ्जान इति माधु ।

गण्डकीसङ्गमे स्नात्वा सन्तर्प्य पितृदेवताः।
विष्णुं शिवञ्च सम्पूज्य तपःस्थानं विचिन्तयन्।
पश्यन् भृग्वाश्रमं रम्यमुत्तरङ्गतवान् शनैः॥ ४३।४४।
गण्डक्याः पूर्व्वभागे तु विविक्तं विजनं शुभम्।
दृष्ट्वा तीरेषु विश्रान्तस्तपोभूमिमचिन्तयत्॥ ४५।
भृगुतुङ्गं समासाद्य शङ्कराराधने रतः।
अतप्यत तपोघोरं शिवदर्शनलालसः॥ ४६।
अथ दीर्घेण कालेन सन्तुष्टः स महेश्वरः।
लिङ्गरूपधरः साक्षादुपर्य्यपि तथा ह्यधः।
तिर्य्यक् च जलधाराभिर्युक्तस्तत्तापशान्तिकृत्।
उवाच च प्रसन्नात्मा मुने पश्यस्व* मां शिवम्।
मामेवावेहि विष्णुं त्वं मा पश्यस्वान्तरं मम॥४७।४८।
पूर्व्वमन्तरभावेन दृष्टवानसि यन्मम।
तेन विघ्नोऽभवद्येन गलितन्त्वत्तपो महत्।
आवामेकेन भावेन पश्यंस्त्वं सिद्धिमाप्स्यसि॥ ४९।
तपःप्रभावाल्लिङ्गानि प्रादुर्भूतानि यत्र वै†।
समङ्गमिति विख्यातमेतत् स्थानं भविष्यति॥ ५०।
स्नात्वाऽत्र‡ गण्डकीतीर्थे मम लिङ्गानि योऽर्च्चयेत्।
तस्य योगफलं सम्यग्भविष्यति न संशयः॥ ५१।
इति दत्त्वा वरं शम्भुस्तत्रैवान्तरधीयत॥ ५२।

---

* पश्यस्वेति आर्षं पश्येति साधु। एवं परत्रापि। † तत्र वै इति (ग)।
‡ स्थित्वेति (क), ख)।

देवदत्तोऽपि स मुनिः सम्प्राप्य ज्ञानमुत्तमम् ।
शिवोपदिष्टमार्गेण सायुज्यं परमं गतः ॥ ५३ ।
प्रम्लोचापि मुनेर्गर्भं सम्प्राप्याश्रममन्तिकात् ।
प्रसूता कन्यकां त्यक्त्वा स्वर्गमेव जगाम ह ।
पुनर्जातमिवात्मानं मन्यमाना शुचिस्मिता ॥ ५४ ।
सापि कन्या मृगैस्तत्र रुरुभिर्वर्द्धिता सती ।
रुरुरित्येव विख्याता पितुरेवाश्रमे स्थिता ।
युवभिः प्रार्थ्यमानापि चित्ते कञ्चन नाध्यगात् ॥ ५५ ।
ततः सुनिश्चयङ्कृत्वा तपसे धृतमानसा ।
चिन्तयन्ती जगन्नाथं भगवन्तं रमापतिम् ।
मासे सा प्रथमे बाला फलाहारपरायणा ।
एकान्तरं दिनम्प्राप्य द्वितीये त्रिदिनान्तरे ।
तृतीये पञ्चमदिने चतुर्थे सप्तमान्तरे ।
पञ्चमे नवरात्रेण षष्ठे पञ्चदशाहके ।
मासेन सप्तमे चैव शीर्णपर्णाशनाष्टमे ।
त्यक्त्वा तान्यपि सा बाला वाय्वाहारा बभूव ह ॥
५६।५७।५८।५९ ।
सैवं वर्षशतं स्थित्वा हरावेकाग्रमानसा ।
समाधिना समा भूत्वा स्थाणुवन्निश्चलाऽभवत् ॥ ६० ।
द्वन्द्वानि नाविदच्चापि* आत्मभूतान्तरं विना ।
पराङ्काष्ठां समापन्ना प्रकाशमयकान्तिधृक् ॥ ६१ ।

* नावेदिति साधु ।

तत्तेजसा हृतं सर्व्वं तदा दृष्ट्वा वसुन्धरे।
अहं विस्मयमापन्नस्तस्याः प्रत्यक्षतां गतः॥ ६२।
सन्निरुद्धेन्द्रियग्रामा नाचक्षत* वहिःस्थितम्।
तदा हृषीकाण्याविश्य संहृत्य स्वं हृदो वहिः।
स्थितोऽहं वसुधे देवि अक्ष्णोः प्रत्यक्षतां गतः॥ ६३।
हृषीकाणि नियम्याहं यतः प्रत्यक्षतां गतः।
हृषीकेश इति ख्यातो नाम्ना तत्रैव संस्थितः॥ ६४।
सा मां यदैव नापश्यदुन्मील्य नयने ततः।
वहिः स्थितञ्च मां दृष्ट्वा प्रणनाम कृताञ्जलिः॥ ६५।
गद्गदस्वरसंयुक्ता अश्रुक्लिन्नविलोचना।
रोमाञ्चिततनुश्चासीत्कदम्बमुकुलाकृतिः॥ ६६।
तथाभूतान्तु तां दृष्ट्वा प्रावोचमहमङ्गनाम्।
अयि बाले विशालाक्षि तुष्टोऽहं तपसस्तव॥ ६७।
वरं याचय मत्तस्त्वं यत्ते मनसि वर्त्तते।
अदेयमपि ते दद्मि यदन्येषां सुदुर्लभम्॥ ६८।
इति श्रुत्वा प्रभोर्वाक्यं प्रणम्य च पुनः पुनः।
स्तुत्वा तं देवदेवेशं† प्रबद्धकरसम्पुटा॥ ६९।
ददासि चेद्वरं मह्यं देवदेव जगत्पते।
अनेनैव स्वरूपेण भगवन् स्थातुमर्हसि॥ ७०।

* नाचष्टेति साधु। † पुनः स्तुत्वा तं देवेशमिति (क), ख)। एतत्पाठे तु छन्दोदोषः।

स्थितोऽस्म्यत्रैव भद्रन्ते अपरं वरयाशु मे ।
दुर्लभन्ते वरं दद्मि तपसाऽहं प्रतोषितः ॥ ७१ ।
इत्युक्ता मां प्रणम्याह रुरुः सा शंसितव्रता ।
यदि प्रसन्नो देवेश तदा मां कुरु पावनीम् ।
मन्नाम्ना क्षेत्रमेतच्च ख्यातं भवतु नान्यथा ॥ ७२ ।
तामहं देवि सुभगे प्रावोचं पुनरेव हि ।
तीर्थानां परमं तीर्थं तव देहोभवत्त्वयम् ।
तव नाम्ना च विख्यातमेतत् क्षेत्रं भविष्यति ॥ ७३ ।
तव तीर्थे कृतस्नानस्त्रिरात्रोपोषितो नरः ।
विलोक्य मां भवेत्पूतो मम वाक्यान्न संशयः ॥ ७४ ।
ब्रह्महत्यादिपापानि ज्ञात्वाऽज्ञात्वा कृतान्यपि ।
यास्यन्ति विलयं क्षिप्रमेवमेतन्न संशयः ॥ ७५ ।
इति दत्त्वा वरांस्तस्यै तत्रैवान्तर्हितः स्थितः ।
सापि कालेन महता तीर्थभूता तथाऽभवत् ॥ ७६ ।
एतत्ते कथितं देवि रुरुमाहात्म्यमुत्तमम् ।
रुरुक्षेत्रस्य प्रभवमेतद्गुह्यं परं मम ॥ ७७ ।

इति वराहपुराणे भगवच्छास्त्रे रुरुक्षेत्रपर्यटनमहिमवर्णनं नाम
षट्चत्वारिंशदधिकशततमोऽध्यायः ।

# सप्तचत्वारिंशदधिकशततमोऽध्यायः ।

धरण्युवाच ।

अत्याश्चर्य्यं श्रुतं ह्येतद्रुरुक्षेत्रसमुद्भवम् ।
हृषीकेशस्य महिमा त्वया य उपवर्णितः ॥ १ ॥

अन्यच्च यत्परं गुह्यं क्षेत्रं परमपावनम् ।
वक्तुमर्हसि देवेश परङ्कौतूहलं मम ॥ २ ॥

वराह उवाच ।

शृणु भूमि प्रयत्नेन कारणं परमं मम ।
गुह्यमस्त्यपरञ्चैव हिमशृङ्गशिलोच्चये ॥ ३ ॥

गोनिष्क्रमणकं नाम गावो यत्र प्रतारिताः* ।
यथा निष्क्रमणम्प्राप्य सुरभीणां वसुन्धरे ॥ ४ ॥

सप्ततिर्यत्र कल्पानि और्वो यत्र प्रजापतिः ।
तपश्चचार परमं मम मायाबलान्वितः ॥ ५ ॥

तस्यैवं वर्त्तमानस्य याति काले महत्तरे ।
एवं हि तप्यमानस्य सर्व्वलोकस्य संशयः ॥ ६ ॥

न वरं प्रार्थयत्येष लाभालाभसमन्वितः ।
सूचकोऽपि न विद्येत वलिकर्म्मसुसंयतः ॥ ७ ॥

अथ दीर्घस्य कालस्य कश्चिद्ब्रह्मयतिस्तदा ।
तपस्तपस्यति मुनौ तस्मिन् शैलोच्चये धरे ।

* प्रजापतेरिति (ग) ।

ईश्वरोऽपि महाभागे तत्पार्श्वं समुपागतः* ।
गोनिष्क्रमेति विख्याते तस्मिंस्तीर्थे महौजसि ॥ ८।९।
तत्र त्वौर्व्वो महाभागे तप्यते समदर्शनः ।
पश्चानाङ्गारणादौर्व्वो गङ्गाद्वारमुपागतः ॥ १० ।
तन्निर्गतं ततो ज्ञात्वा और्व्वं सर्व्वे तपस्विनः ।
महेश्वरोमहातेजाः सम्भ्रमं समुपागतः ॥ ११ ।
फलपुष्पसमाकीर्णा लक्ष्मीश्चैवोपजायते ।
आश्रमं रूपसम्पन्नं फलपुष्पोपशोभितम् ।
तच्च वै भस्मसाद्भूतं महारुद्रस्य तेजसा ॥ १२ ।
दग्ध्वा तच्चाश्रमं पुण्यमौर्व्वस्य सुमहत्प्रियम् ।
ईश्वरोऽपि ततः प्राप्तः शीघ्रमेव हिमालयम् ॥ १३ ।
एतस्मिन्नन्तरे देवि गृह्य† पुष्पकरण्डकम् ।
आश्रमं समनुप्राप्त और्व्वोऽपि मुनिपुङ्गवः ।
शान्तो दान्तः क्षमाशीलः सत्यव्रतपरायणः ॥ १४ ।
दृष्ट्वा स्वमाश्रमं दग्धं बहुपुष्पफलोदकम् ।
मन्युना परमाविष्टो दुःखेन च परिप्लुतः ।
उवाच क्रोधरक्ताक्षो वचनं निर्दहन्निव ॥ १५ ।
येनैष चाश्रमो दग्धो बहुपुष्पफलोदकः ।
सोऽपि दुःखेन सन्तप्तः सर्व्वलोकान् भ्रमिष्यति ॥ १६

* अन्याश्चर्य्यमुपागत इति (क), (ख) । † गृहीत्वेति साधु । अथवा सन्ध्यावधं गृह्य कर्णे गाढ़मितिवत् साधु ।

एवमौर्व्वेण दत्ते तु शापे तस्मिन्महौजसि ।
महाभयात्तु लोकानां न कश्चित्पर्य्यवीरयत् ॥ १७ ।
तत्क्षणादेव देवेशि ईशोऽपि जगतोविभुः ।
महादाहेन सन्तप्तः शम्भुर्द्देवीमुवाच ह ॥ १८ ।
और्व्वस्य तु तपो दृष्ट्वा भीतैर्द्देवैरुदाहृतम् ।
दह्यते स्म जगत्सर्व्वं स तु किञ्चिन्न चेच्छति ।
को वा प्रतिविधिस्तत्र यथा सर्व्वस्य सम्भवेत् ॥ १९ ।
एवमुक्ते मया क्रोधादीक्षितस्तस्य चाश्रमः ।
दग्धोऽभवत्क्षणेनैव वयं तस्माद्विनिर्गताः ॥ २० ।
एतद्दुःखेन सन्तप्तोमन्युना च परिप्लुतः ।
और्व्वः शशाप रोषेण तेन तप्ता वयं शिवे ॥ २१ ।
ततोऽश्नमहिरूपाक्षः शम प्राप्नोति कर्हिचित् ।
अहञ्च परितप्तोऽस्मि आत्मत्वादीश्वरस्य च ।
तेन दाहेन सन्तप्तो न शक्नोमि विचेष्टितुम् ॥ २२ ।
पार्व्वत्या च ततः प्रोक्तः आवां नारायणं प्रति ।
गच्छावस्तस्य वाक्येन सुखं यत्र भविष्यति ॥ २३ ।
ततोनारायणं गत्वा सह तेन तमौर्व्वकम् ।
विज्ञापयामो रुद्रस्य शापोऽयं विनिवर्त्तताम् ।
सन्तप्ताः स्म वयं सर्व्वे तस्माच्छापं निवर्त्तय ॥ २४ ।
और्व्वोऽप्युवाच नोक्तं मे अनृतन्तु कदाचन ।
सुरभीगणमानीय गत्वैतं स्नापयन्तु वै ।
रुद्रशापो निवृत्तः स्यात्तेनैव किल नान्यथा ॥ २५ ।

एतस्मिन्नन्तरे देवि मया गावोऽवतारिताः ।
सप्तसप्तति कल्याणि सौरभेया महौजसः ॥ २६ ।
तेनाप्लावितदेहाश्च परां निर्वृतिमागताः ।
तच्च गोनिष्क्रमं नाम तीर्थं परमपावनम् ॥ २७ ।
तत्र स्नानन्तु कुर्व्वीत एकरात्रोषितोनरः ।
गोलोकञ्च समासाद्य मोदते नात्र संशयः ॥ २८ ।
अथात्र मुञ्चते प्राणाङ्कृत्वा कर्म्म सुदुष्करम् ।
शङ्खचक्रगदायुक्तो मम लोके महीयते ॥ २९ ।
पञ्च धाराः पतन्त्यत्र मूले मूलवटस्य हि ।
तत्र स्नानं प्रकुर्व्वीत पञ्चरात्रोषितो नरः ।
पञ्चानामपि यज्ञानां फलमाप्नोति मानवः ॥ ३० ।
अथात्र मुञ्चते प्राणान् कृत्वा कर्म्म सुदुष्करम् ।
पञ्चयज्ञफलं भुक्त्वा मम लोकं प्रपद्यते ॥ ३१ ।
अस्ति पञ्चपदं नाम तस्मिन्क्षेत्रे परं मम ।
मम पूर्व्वेण पार्श्वेण दृढाः पञ्च महाशिलाः ।
मत्पूर्व्वां दिशमाश्रित्य तत्र ब्रह्मपदद्वयम् ॥ ३२ ।
मध्ये तु तस्य कुण्डस्य शिलाविस्तीर्णसंश्रिता ।
ऊर्द्ध्वं नालपरीणाहं तत्र विष्णुपदं मम ॥ ३३ ।
तत्र स्नानन्तु कुर्व्वीत पञ्चरात्रोषितोनरः ।
याति शुद्धानि लोकानि* ये च भागवतप्रियाः ॥ ३४ ।
अथात्र मुञ्चते प्राणान्युक्तः पञ्चपदे नरः ।

* लोकानीति क्लीवत्वमार्षम् ।

विमुक्तः सर्व्वसंसारान्मम लोकञ्च गच्छति ॥ ३५ ।
ततो ब्रह्मपदं नाम क्षेत्रङ्गुह्यं परं मम ।
यत्र धारा पतत्येका पश्चिमां दिशमाश्रिता ॥ ३६ ।
तत्र स्नानन्तु कुर्व्वीत एकरात्रोषितोनरः ।
ब्रह्मलोकमवाप्नोति ब्रह्मणा सह मोदते ॥ ३७ ।
कौमुदस्य तु मासस्य शुक्लपक्षस्य द्वादशी ।
यज्ञानां वाजपेयानां फलम्प्राप्नोति मानवः ॥ ३८ ।
अथात्र मुञ्चते प्राणान्मम कर्म्मसु निष्ठितः ।
वाजपेयफलं मुक्त्वा मम लोके प्रमोदते ॥ ३९ ।
अस्ति कोटिवटं नाम तस्मिन्क्षेत्रे परं मम ।
पञ्चक्रोशं ततो गत्वा वायव्यां दिशि संस्थितः ॥ ४० ।
तत्र स्नानन्तु कुर्व्वीत षष्ठकालोषितो नरः ।
बहुयज्ञस्य कोटीनां फलं प्राप्नोति निष्कलम् ॥ ४१ ।
अथात्र मुञ्चते प्राणान् भूमे कोटिवटे शुभे ।
यज्ञकोटिफलम्भुक्त्वा मम कोटिं* प्रपद्यते ॥ ४२ ।
अस्ति विष्णुसरोनाम तस्मिन् क्षेत्रे परं मम ।
पूर्व्वोत्तरेण पार्श्वेन पञ्चक्रोशं न संशयः ॥ ४३ ।
मत्सरः पद्मपत्राक्षि अगाधं परिसंस्थितम् ।
पञ्चक्रोशस्य विस्तारः पर्व्वतः परिमण्डलः ॥ ४४ ।
तत्र भ्रमति योभद्रे कुर्य्याच्चैव प्रदक्षिणम् ।
उपवासं त्रिरात्रन्तु कृत्वा कर्म्म सुदुष्करम् ॥ ४५ ।

* मम लोकं प्रपद्यते इति (ग) ।

यावन्ति भ्रममाणस्य पदानि ननु सुन्दरि ।
तावद्वर्षसहस्राणि ब्रह्मलोके महीयते ॥ ४६ ।
अथाऽत्र मुञ्चते प्राणान् स्वकर्म्मपरिनिष्ठितः ।
ब्रह्मलोकं समुत्सृज्य मम लोके महीयते ॥ ४७ ।
तस्मिन् क्षेत्रे महाभागे आश्चर्य्यं शृणु सुन्दरि ।
गवां वै श्रूयते शब्दो मम कर्म्मसुखावहः ॥ ४८ ।
अथात्र ज्यैष्ठमासस्य शुक्लपक्षस्य द्वादशी ।
श्रूयते सुमहाञ्छब्दः स्वयमेतन्न संशयः ॥ ४९ ।
एवङ्गोस्थलके पुण्ये महाभागवतः शुचिः ।
करोति शुभकर्म्माणि शीघ्रं मुच्येत किल्बिषात् ॥ ५०
एवं तेन महाभागे ईश्वरेण यशस्विनि ।
शापदाहो विनिर्मुक्तः सर्व्वैः सह मरुद्गणैः ॥ ५१ ।
एतद्गोस्थलकं नाम सर्व्वशान्तिकरं परम् ।
कथितं देवि कार्त्स्न्येन तवानुग्रहकाम्यया ॥ ५२ ।
एषोऽध्यायो महाभागे सर्व्वमङ्गलकारकः ।
मम मार्गानुसाराणां मम च प्रीतिवर्द्धनः ॥ ५३ ।
श्रेष्ठानां परमं श्रेष्ठं मङ्गलानाञ्च मङ्गलम् ।
लाभानां परमो लाभो धर्म्माणां धर्म्म उत्तमः ॥ ५४ ।
लभन्ते पठमाना वै मम मार्गानुसारिणः ।
तेजः श्रियञ्च लक्ष्मीञ्च सर्व्वकामान्यशस्विनि ॥ ५५ ।
यावन्ति चाक्षराणि स्युरत्राध्याये मनस्विनि ।
तावद्वर्षसहस्राणि मम लोके महीयते ॥ ५६ ।

पतनञ्च न विद्येत पठमाना दिने दिने।
तारितानि कुलान्येभिः सप्त सप्त च सप्त च ॥ ५७ ।
पिशुनाय न दातव्यं न मूर्खाय शठाय च।
देयं पुत्राय शिष्याय यश्च जानाति सेवितुम् ॥ ५८ ।
एतत्स्मरणकाले तु न कदाचित्तु विस्मरेत्।
श्लोकं वा यदि वा पादं यदीच्छेत्परमाङ्गतिम् ॥ ५९ ।
तत्क्षेत्रन्तु महाभागे पञ्चयोजनमण्डलम्।
तिष्ठामि परया प्रीत्या दिशं पूर्व्वामुपाश्रितः ॥ ६० ।
पश्चिमेन वहेद्गङ्गां निष्कामेण वसुन्धरे।
एवं रहस्यं गुह्यञ्च सर्व्वकर्म्मसुखावहम् ॥ ६१ ।
एतत्ते परमं भद्रे गुह्यं धर्म्मसमन्वितम्।
मम क्षेत्रं महाभागे यत्त्वया परिपृच्छितम् ॥ ६२ ।

इति वराहपुराणे भगवच्छास्त्रे गोनिष्क्रमणमाहात्म्यवर्णनं नाम
सप्तचत्वारिंशदधिकशततमोऽध्यायः।

## अष्टाचत्वारिंशदधिकशततमोऽध्यायः।

सूत उवाच।

गोनिष्क्रमणमाहात्म्यं श्रुत्वा गुह्यमनुत्तमम्।
विस्मयम्परमङ्गत्वा सर्व्वरत्नविभूषिता ॥ १ ।

धरण्युवाच ।

अहो गवां हि माहात्म्यं तव चैवं श्रुतं मया ।
यच्छ्रुत्वाऽहं जगन्नाथ जातास्मि परिनिर्वृता ॥ २ ।
एवमेव परङ्गुह्यं ब्रूहि नारायण प्रभो ।
अस्मात् चैवात्परं देव* यदि चेत्तं विशिष्यते ॥ ३ ।

वराह उवाच ।

अहं नारायणो देवः सर्व्वधर्म्मव्यपाश्रयः ।
मात्सर्य्यञ्चैव मे नास्ति तेनाहं परमः प्रभुः ॥ ४ ।
एतच्छास्त्रं महाभागे प्रयुक्तं लीलया मया ।
वराहरूपमादाय सर्व्वभागवतप्रियम् ॥ ५ ।

धरण्युवाच ।

यथा यथा भाषसे धर्म्मकारण-
मिदं वचो धर्म्मविनिश्चयं महत् ।
तथा तथा देववराऽप्रमेयं
हृद्यं मनो भावयसे जनार्द्दन ॥ ६ ।

ततो महीवचः श्रुत्वा धर्म्मश्रेष्ठोमहामनाः ।
वराहरूपी भगवान् प्रत्युवाच वसुन्धराम् ॥ ७ ।

वराह उवाच† ।

साधु भूमे महाभागे मम कर्म्मव्यवस्थिते ।
कथयिष्याम्यहं ह्येवं गुह्यं लोकसुखावहम् ॥ ८ ।

---

* देवीति (ग), तदसङ्गतमेव । † वाराह उवाचेति (ग) ।

द्वापरं युगमासाद्य तत्र स्थास्यामि सुन्दरि ॥
पुत्त्रोऽहं वसुदेवस्य देवक्यां गर्भसम्भवः ।
वासुदेव इति ख्यातः सर्व्वदानवसूदनः ॥ १० ॥
पञ्च तस्य सुशिष्याश्च भविष्यन्ति विचक्षणाः ।
ऋषयो धर्म्मसंयुक्ता मत्प्रसादाद्बलान्विताः ।
ते मां संस्थापयिष्यन्ति धर्म्ममूर्त्तिं महीङ्गतम् ॥ ११ ॥
शाण्डिल्यो जाजलिश्चैव कपिलश्चोपसायकः ।
भृगुश्चैव महाभागो मम मार्गानुसारिणः ॥ १२ ॥
ते च प्रसन्नमनस आत्मदृष्टान्तदर्शिनः ।
स्वयं ज्ञानप्रभावेण भासयिष्यन्ति मां सदा ॥ १३ ॥
सङ्कर्षणो वासुदेवः प्रद्युम्नो ह्यनिरुद्धकः ।
गच्छता बहुकालेन मम कर्म्मपरायणाः ॥ १४ ॥
ततो दीर्घेण कालेन इज्यापूर्व्वस्थितेन च ।
वरन्तेषां प्रदास्यामि यो यस्य हृदि संस्थितः ॥ १५ ॥
ते प्रवक्ष्यन्ति मां देवि आत्मशास्त्रव्यवस्थिताः ।
आत्मशास्त्रप्रतिष्ठेत यत्र धर्म्मः सुनिश्चितः ।
भवत्वेतन्निश्चयेन न तु मिथ्या कदाचन ।
तव देव प्रसादेन इह लोकः* प्रवर्त्तताम् ॥ १६।१७।
तानप्येवं वदिष्यामि शिष्याय भवतां प्रियम् ।

* लोके इति ग ।

भविष्यति न सन्देहो यतो यूयं मम प्रियाः ॥ १८ ।
सुशिष्या वाढ़मित्येवं भविष्यन्ति न संशयः ।
तदेते प्रवदिष्यन्ति सर्व्वभागवतप्रियम् ॥ १९ ।
यथा च मथ्यमानाद्वै दध्नस्सोद्ध्रियते घृतम् ।
एवं सर्व्वेषु शास्त्रेषु वाराहं घृतसम्मितम् ॥ २० ।
वाराहं ज्ञानमुत्सृज्य महाभागं महौजसम् ।
एवं समं मया चैव आत्मना परिभाषितम् ।
ते प्रमाणं करिष्यन्ति सिद्धिं प्राप्स्यन्ति वै पराम् ॥ २१ ।
महाज्ञानमिदं सूक्ष्मं भूमि भक्तेषु दृश्यते ।
शास्त्राणां परमं शास्त्रं सर्व्वसंसारमोक्षणम् ॥ २२ ।
किञ्चिदन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
शास्त्रमेतन्महाभागे स्थूलकर्म्म महौजसम् ॥ २३ ।
केचित्तरन्ति ज्ञानेन केचित्कर्म्मणि निष्ठिताः ।
केचिद्यथेष्टं सुर्य्याणि केचिद्दानेन कर्मणा ॥ २४ ।
केचिद्योगबलं भुक्त्वा* पश्यन्ति मम संस्थितिम् ।
विधिपूर्व्वन्तु मे किञ्चिन्नराः पश्यन्ति निष्ठिताः ॥ २५ ।
सर्व्वधर्म्मकराः केचित्सर्व्वाशाः सर्व्वविक्रयाः† ।
ते मां पश्यन्ति वै भूमि एकचित्तव्यवस्थिताः ॥ २६ ।
एवमेतन्महाशास्त्रं देवि संसारमोक्षणम् ।
मम भक्तव्यवस्थायै प्रयुक्तं परमं प्रियम्‡ ॥ २७ ।

* भक्ता इति (ग) । † (ग) पुस्तके सर्व्वाशी सर्व्वविक्रयीत्येकवचनान्तः पाठः ।
‡ मर्थेति (ग) ।

ते तथा च प्रवक्ष्यन्ति यच्च यस्याभिरोचते*।
अन्यथान्यस्य दृष्टानामृषिभिर्यत्प्रयोजितम्।
तद्युगस्य प्रभावेण भूमे कुर्व्वन्ति मानवाः॥ २८॥
तैः स्वशिष्यैः समं देवि ये शास्त्रविनियोजिताः।
मत्प्रसादेन ते सर्व्वे सिद्धिं यास्यन्ति मत्पराम्॥ २९॥
मम शिष्येषु येषाञ्च मात्सर्य्योपहतात्मनाम्।
मच्छास्त्रे च भवेद्दोषस्तेषामत्र पुनर्भवः॥ ३०॥
मात्सर्य्यं ये च कुर्व्वन्ति मद्धर्म्मपरमे जने।
तेषान्नायं परो लोको मात्सर्य्योपहतात्मनाम्॥ ३१॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
मम मार्गानुसारेण परङ्गुह्यं मम प्रिये॥ ३२॥
शास्त्रवन्तो विनीताश्च बहुदोषविवर्ज्जिताः।
ते तु मात्सर्य्यदोषेण नष्टाचाराः पतन्त्यधः॥ ३३॥
मात्सर्य्यं सर्व्वनाशाय मात्सर्य्यं धर्म्मनाशकम्।
यस्तु मात्सर्य्यसंयुक्तो न स पश्यति मां क्वचित्॥ ३४॥
बहुकर्म्मसमायुक्ता दानाध्ययननिष्ठिताः।
तपसा ध्यानयुक्ता वा नित्यकर्म्मसु चोद्यताः।
अनेन हि स्वभावेन मात्सर्य्यञ्चैव कुर्व्वते†।
न ते पश्यन्ति मां भूमे मायया परिदूषिताः॥ ३५।३६॥

* यस्याभिरोचते इत्यत्र यस्मै इति सम्बन्धविवक्षायां षष्ठी। यस्मै अभिरोचत इत्येव सम्यक्। † वर्त्तन्त इति क, ख।

न कर्त्तव्यं ततः सर्व्वैर्मात्सर्य्यं धर्म्मघातकम्।
मम शास्त्रपरैरिह यदीच्छेत्परमाङ्गतिम् ॥ ३७ ॥
एतद्गुह्यं महाभागे न जानन्ति मनीषिणः।
मात्सर्य्यस्य तु दोषेण बहवो निधनङ्गताः ॥ ३८ ॥
एतच्छास्त्रं महाभागे प्रयुक्तं विधिना* मया।
वराहरूपमादाय सर्व्वभागवतप्रियम् ॥ ३९ ॥
तत्राश्चर्य्यं महाभागे शृणु भूतगिरौ मम।
आयसी प्रतिमा तत्र अभेद्या चैव दृश्यते ॥ ४० ॥
ब्रुवन्ति केचित्कांस्येति आयसीत्यपरेऽब्रुवन्।
पाषाणीत्यपरे केचिदन्ये वज्रमयीति च ॥ ४१ ॥
ऊर्द्ध्वं वा यदि वाऽधोवा ये कुर्व्वन्ति ममार्च्चनम्।
तथापि संस्पृशन्ति मां शिरोमध्ये तु सुन्दरि ॥ ४२ ॥
ये तु पश्यन्ति मां भूमे मणिपूरगिरौ स्थितम्।
स्तुवन्त्याचार्य्यवन्तश्च मत्प्रसादात्सुसंयताः ॥ ४३ ॥
आचार्य्याणां गुणान् भक्त्या मम कर्म्मपथे स्थिताः।
सर्व्वकिल्विषमुक्ताश्च यान्ति ते परमाङ्गतिम् ॥ ४४ ॥
तस्मिन् क्षेत्रे महाभागे अस्ति गुह्यम्परं मम।
पञ्चाङ्कमिति विख्यातं उत्तरां दिशमाश्रितम् ॥ ४५ ॥
तत्र स्नानं प्रकुर्व्वीत पञ्चकालोषितो नरः।
मोदते नन्दने दिव्ये अप्सरोभिः समाकुले ॥ ४६ ॥

---

* विधया म,न, श्रा इति ग ।

अथात्र मुञ्चते प्राणान्कृतकृत्यो भवेन्नरः ।
नन्दनं वनमुत्सृज्य मम लोकञ्च गच्छति ॥ ४७ ।
भृगुकुण्डेति विख्यातमत्र गुह्यं परं मम ।
मम दक्षिणपार्श्वे तु अदूरादर्द्धयोजनात् ॥ ४८ ।
तत्र स्नानन्तु कुर्व्वीत मम मार्गानुसारकः ।
भूपृष्ठे न तु जायेत कालेन विजितेन्द्रियः ॥ ४९ ।
भुवो यत्र तु तिष्ठेत मेरुशृङ्गे शिलोच्चये ।
तत्र मोदति* सुश्रोणि अप्सरोभिर्यथासुखम् ॥ ५० ।
अथात्र मुञ्चते प्राणान्मम कर्म्मपथे स्थितः ।
भुवर्लोकं परित्यज्य मम लोके महीयते ॥ ५१ ।
मणिकुण्डेति विख्यातं तत्र गुह्यम्परं मम ।
मणयो यत्र दृश्यन्ते अनेकालयसंस्थिताः ॥ ५२ ।
अगाधं तं ह्रदम्भद्रे देवानामपि दुर्ल्लभम् ।
विस्मयं किं पुनस्तत्र मलयश्चलस्थिताः ॥ ५३ ।
तत्र स्नानं प्रकुर्व्वीत पञ्चकालोषितो नरः ।
रत्नभागी भवेद्वीरराजलक्षणसंयुतः† ॥ ५४ ।
अथात्र मुञ्चते प्राणान्मम कर्म्मपथे स्थितः ।
छित्त्वा वै सर्व्वसंसारं मम लोकम्प्रपद्यते ॥ ५५ ।
सुगुह्यम्पूर्व्वपार्श्वेण मम चैत्यस्य सुन्दरि ।
अदूरात्त्रीणि क्रोशानि‡ परिमाणं विधीयते ॥ ५६ ।

* मोदते इति साधु । † मम शास्त्रेण संयुत इति क॰ ख॰ । ‡ क्रोशानीति क्रोशत्वमार्षं, त्रीन् क्रोशानिति साधु ।

तत्र स्नानन्तु कुर्व्वीत मम लोकाय गच्छति ॥ ५७ ।
धूतपापेति विख्यातं तत्र गुह्यं परं मम ।
अदूरात्पश्च क्रोशा वै मम क्षेत्रस्य पश्चिमे ॥ ५८ ।
तत्र कुण्ड महाभागे मम तद्रोचते जलम् ।
मारकतं सुवर्णाभमगाधं निर्म्मितं मया ॥ ५९ ।
तत्र स्नानं प्रकुर्व्वीत पञ्चभक्तोषितो नरः ।
धुन्वानो दुष्करं कर्म्म पञ्चभूतात्मनिष्ठितम् ॥ ६० ।
तत्र कृतोदको भद्रे धूतपापो यशस्विनि ।
गत्वेन्द्रलोकं सुश्रोणि देवैः सह स मोदते* ॥ ६१ ।
अथात्र मुञ्चते प्राणान्मम कर्म्मपरायणः ।
इन्द्रलोकम्परित्यज्य मम लोकं प्रपद्यते† ॥ ६२ ।
तत्राश्चर्य्यं महाभागे धूतपापे शृणुष्व मे ।
वर्त्तते च विशालाक्षि मणिपूरं गिरौ मम ॥ ६३ ।
तावत्तु‡ पतते धारा यावत्पापं न धूयते ।
धूते पापे च सुश्रोणि धारा च पतते§ मही ॥ ६४ ।
एवं तत्र विशालाक्षि वृत्तमश्वत्थमिश्रितम् ।
धूतपापं न प्रविशेन्नरे शुद्धे प्राविशति¶ ॥ ६५ ।
तस्मिन् क्षेत्रे वरारोहे समन्तात्पञ्चयोजने‖ ।
यत्र तिष्ठाम्यहं देवि पश्चिमां दिशमाश्रितः ॥ ६६ ।

* समोदते इति (ग) । † मम लोके महीयते इति (ङ) । ‡ यावदिति (ग) ।
§ पततीति साधु । ¶ अत्र पञ्चमघत्वात् छन्दोदोषः । ‖ पञ्चयोजनमिति (ग) ।

तत्र चामलकभद्रे अदूरादर्द्धयोजनात्।
मम चैव प्रभावेण सर्व्वकामफलोदयम्॥ ६७॥
तत्र कश्चिन्न जानाति पापकर्म्मा नराधमः।
भक्तं भागवतं शुद्धं मम कर्म्मव्यवस्थितम्॥ ६८॥
उपोष्य च त्रिरात्राणि श्रद्दधानो जितेन्द्रियः।
तत्र गत्वा वरारोहे उदिते च दिवाकरे।
अथ मध्याह्नवेलायां यदि वास्तगतेऽपि वा।
एकचित्तेन गन्तव्यं धृतिङ्कृत्वा सुपुष्कलाम्॥ ६९।७०॥
यत्तत्र लभते भद्रे फलमामलकं शुभम्।
पञ्चरात्रेण लभते तस्मिन् भूतगिरौ मम॥ ७१॥
ततो हरिवचः श्रुत्वा सा मही संशितव्रता।
पुनर्नारायणन्तत्र प्रोवाच विनयान्विता॥ ७२॥
भूतस्वामी श्रुतोऽसि त्वं तत्र स्थानानि यानि च।
एतन्नामनिरुक्तिन्त्वं वक्तुमर्हसि साम्प्रतम्॥ ७३॥

वराह उवाच।

भूमि हत्वा तु संसारान्ये चान्ये देवकण्टकाः।
द्वापरं युगमासाद्य यत्र स्थास्यामि सुन्दरि॥ ७४॥
ततोऽमरैश्च ब्रह्माद्यैर्बहुभिर्मन्त्रवादिभिः।
स्तुतिः कर्त्तुं समारब्धा मणिपूराश्रितस्य मे॥ ७५॥
ततो मां नारदो देवि असितो देवलस्तथा।
पर्व्वतश्च महाभागे मम भक्त्या व्यवस्थितः।
नाम कुर्व्वन्ति मे तत्र मणिपूरगिरौ ततः॥ ७६॥

स्तुतस्वामीति विख्यातं मम कर्म्मव्यपाश्रितम् ॥ ७७ ।
एतत्ते कथितम्भद्रे निरुक्तिकरणं मया ।
त्वया पृष्टं हि यद्भद्रे सर्व्वभागवतप्रियम् ॥ ७८ ।
एतत्स्तुतगिरेर्द्देवि माहात्म्यङ्कथितं मया ।
द्वापरं युगमासाद्य यत्र स्थास्यामि सुन्दरि ॥ ७९ ।
एतानि भूमि गुह्यानि तत्र भूतगिरौ मम ।
श्रद्दधानेन मर्त्त्येन श्रोतव्यं नात्र संशयः ॥ ८० ।
एतत्ते कथितम्भद्रे सर्व्वधर्म्मव्यपाश्रयम् ।
श्रीस्तुतस्वामिनाहात्म्यङ्किमन्यत्परिपृच्छसि ॥ ८१ ।

इति वराहपुराणे भगवच्छास्त्रे स्तुतस्वामिमाहात्म्यं नाम
अष्टाचत्वारिंशदधिकशततमोऽध्यायः ।

## ऊनपञ्चाशदधिकशततमोऽध्यायः ।

सूत उवाच ।

श्रीस्तुतस्वामिमाहात्म्यं श्रुत्वा धर्म्मपरायणा ।
परितुष्टमना देवी वाक्यमेतदुवाच ह ॥ १ ।

धरण्युवाच ।

एतच्छ्रुत्वा तु माहात्म्यं देवदेवश प्रभो ।
मम चित्तस्य परमा जाता शान्तिरनुत्तमा ॥ २ ।

नाराचधारावरणासिधारी
सुररिपुवधकारी धरणीधरः ।
धृतशङ्खगदाब्जचक्रपाणिः
स्वयमिह शास्त्रमुदावहत्प्रधानम्* ॥ ३ ।
एवं हि गुणमाहात्म्यं श्रुतस्वामिनि मच्छ्रुतम् ।
यस्माच्चेदं परं श्रेष्ठं तन्मे वद कृपानिधे ॥ ४ ।

वराह उवाच ।

एवम्भूमे वरं श्रेष्ठे फुल्लपङ्कजमालिनि ।
कथयिष्यामि चान्यत्ते गुह्यम्पापभयापहम् ॥ ५ ।
द्वापरं युगमासाद्य यादवानां कुलोद्वहः ।
सौरीति तत्र विख्यातो भविष्यति पिता मम ॥ ६ ।
द्वारकेति च विख्याता पुरी तत्र स्थिताऽभवत् ।
या च देवपुरीरम्या विश्वकर्म्मविनिर्म्मिता ॥ ७ ।
पञ्चयोजनविस्तारा दशयोजनमायता ।
वसाम्यत्र वरारोहे शतपञ्चसमास्तथा† ॥ ८ ।
भारावतरणङ्कृत्वा देवानां सुमहत्प्रियम् ।
पुनरप्यागमिष्यामि स्वर्लोकम्प्रति सुन्दरि ॥ ९ ।
भविष्यति वरारोहे ईश्वरः सदृशो मम ।
दुर्व्वासा इति विख्यातः शपिष्यति कुलं मम ॥ १० ।
तस्य शापाभिसन्तापाद्द्वारकावासिनो धरे ।

* (ग) पुस्तके श्लोकस्यास्य पादविपर्य्यासो दृश्यते । † स्थिता इति (ग) ।

वृष्णग्न्धकाश्च भोजाश्च गमिष्यन्ति यमक्षयम् ॥ ११ ।
चन्द्रपाण्डुरसङ्काशो वनमाली हलायुधः ।
हलेनाकृष्य नगरं समुद्रङ्गमयिष्यति ॥ १२ ।
नारायणवचः श्रुत्वा धर्म्मकामा वसुन्धरा ।
उभौ तौ चरणौ गृह्य* पुनः पप्रच्छ माधवी ॥ १३ ।

धरण्युवाच ।

लोकनाथोऽसि सर्व्वेषां देव मायाकरण्डक ।
शपिष्यति कथं तत्र दुर्व्वासास्तद्वदस्व मे ॥ १४ ।

वराह उवाच ।

तत्र जाम्बवती नाम मम पत्नी भविष्यति ।
रूपयौवनसम्पन्ना मम भोगसमन्विता ॥ १५ ।
तस्याः पुत्त्रो महाभागे रूपयौवनदर्पितः ।
साम्ब इत्यभिविख्यातो ममैव सततम्प्रियः ॥ १६ ।
तेनैव क्रीड़मानेन† कृत्वा गर्भमतथ्यतः ।
स पृष्टः परमश्रेष्ठ ऋषिरेषा प्रसोष्यति ।
पुत्त्रकामा स्त्रियं बाला मुने तत्प्रब्रवीहि मे ॥ १७ ।
साम्बोऽयमिति च ज्ञात्वा स मुनिः कोपमूर्च्छितः ।
उवाच तर्हि ते गर्भान्मुसलं कुलनाशनम् ।
येन वृष्णग्न्धकाः सर्व्वे गमिष्यन्ति यमक्षयम् ॥ १८ ।
श्रुत्वा दुर्व्वाससः शापन्ते च सर्व्वे कुमारकाः ।
शापेन सन्तप्तधियो मामूचुर्भयसंयुताः ॥ १९ ।

---

* गृहीत्वेति साधु । † क्रीड़तेति साधु ।

ततस्तानागतान्दृष्ट्वा कुमारान् सृष्टवाहनम् ।
ते च मामब्रुवन् सर्व्वे यथावृत्तं समुत्सुकाः ॥ २० ।
तच्च तेषां वचः श्रुत्वा प्रोक्तवानस्मि तच्छृणु ।
भविष्यति न सन्देहो दुर्व्वासा यदुवाच ह ॥ २१ ।
एवन्ते कथितं भूमे वृष्ण्यादिशापकारणम् ।
तत्र स्थानानि मे भूमे कथ्यमानानि वै शृणु ॥ २२ ।
द्वारकायां महाभागे वैष्णवानां सुखावहे ।
अस्ति पञ्चसरो नाम गुह्यं क्षेत्रं परं मम ।
समुद्रतीरमुत्सृज्य मम कर्म्मसुखावहम् ॥ २३ ।
तत्र स्नानन्तु कुर्व्वीत षष्ठकालोषितो नरः ।
मोदते नाकपृष्ठे तु अप्सरोगणसङ्कुले ॥ २४ ।
अथात्र मुञ्चते प्राणान् क्षेत्रे पञ्चसरे मम ।
देवलोकं समुत्सृज्य मम लोके महीयते ॥ २५ ।
प्लक्षो वै तत्र सुश्रोणि शतशाखो महाद्रुमः ।
सुफलैः शोभनैः कुम्भाकृतिभिर्बहुभिः फलैः* ॥ २६ ।
बहवस्तत्र गच्छन्ति लाभलौल्येन† मानवाः ।
फलं न लभते कश्चिन्मुक्त्वा भागवतं नरम् ॥ २७ ।
लभन्ते ये फलं तत्र मुक्ताः पापेन कर्म्मणा ।
ते लभन्ते परां सिद्धिं मम कर्म्मणि संस्थिताः ॥ २८ ।

* चतुर्विंशतिद्वादशीसुव्रहफलितोभिः फलैरिति (ग) । † लाभालाभेन मानवा इति (ग) ।

प्रभासमिति विख्यातं तस्मिंस्तीर्थे* परे मम ।
मनुजा यं न पश्यन्ति रागलोभसमन्विताः ॥ २९ ।
तत्र स्नानम्प्रकुर्व्वीत पञ्चभक्तोषितो नरः ।
मोदते सप्तद्वीपेषु गुह्यानि च स गच्छति ॥ ३० ।
अथ चेन्मुञ्चते प्राणान् प्रभासे गतकिल्बिषः ।
सर्व्वसङ्गं परित्यज्य मम लोकाय गच्छति ॥ ३१ ।
तत्राश्चर्य्यं महाभागे कथ्यमानं मया शृणु ।
प्रभासे यत्र शृण्वन्ति सागरे न मरम्प्रति† ॥ ३२ ।
मकरास्तत्र दृश्यन्ते भ्रममाणास्ततस्ततः ।
न किञ्चिदपराध्यन्ति स्नायमाना जले ततः ॥ ३३ ।
अथात्र प्रक्षिपेत्पिण्डान् प्रसन्ने सलिले नरः‡ ।
असम्प्राप्ते च गृह्णन्ति एवमेतन्न संशयः ॥ ३४ ।
पापकर्म्मरतस्यापि न गृह्णन्ति जलम्प्रति ।
धर्म्मात्मनाञ्च गृह्णन्ति पिण्डमेव न संशयः ॥ ३५ ।
पञ्चपिण्डमिति ख्यातं तस्मिन् गुह्यं परं मम ।
अगाधस्याप्यपारस्य क्रोशविस्तार एव च ॥ ३६ ।
तत्राभिषेकङ्कुर्व्वीत पञ्चकालोषितोनरः ।
मोदते शक्रलोके स एवमेतन्न संशयः ॥ ३७ ।
अथात्र मुञ्चते प्राणान् पञ्चकुण्डे यशस्विनि ।

* तीर्थं इति (क), (ख) । † नगरं प्रतीति (क), (ख) । ‡ सलिलं न तु इति (क), (ख) ।

शक्रलोकम्परित्यज्य मम लोकं स गच्छति ॥ ३८ ।
तत्राश्चर्य्यं महाभागे कथ्यमानं मया शृणु ।
न पश्येत्पापकर्म्मा वै शुभकर्म्मैव पश्यति । ३९ ।
चतुर्विंशतिद्वादश्यां मध्याह्ने च दिवाकरे ।
रौप्यं सुवर्णकम्पद्मं दृश्यते नात्र संशयः ॥ ४० ।
क्षेत्रं सङ्गमनं नाम तस्मिंस्तीर्थं परं मम ।
धाराः पतन्ति चत्वारि* मणिपूरगिरौ श्रिताः ॥ ४१ ।
तत्राभिषेकं कुर्व्वीत चतुर्भक्तोषितोनरः ।
वैखानसेषु लोकेषु मोदते नाऽत्र संशयः ॥ ४२ ।
अथाऽत्र मुञ्चते प्राणान् मम भक्तिपरायणः ।
त्यक्त्वा वैखानसाँल्लोकान्मम लोकं स गच्छति ॥ ४३ ।
तत्रापि परमाश्चर्य्यं कथ्यमानं शृणुष्व मे ।
दृश्यन्ते यानि कुण्डेषु मणिपूरगिरौ तथा ॥ ४४ ।
प्रचीयमाणे पापे तु नयते तज्जलं भुवि ।
स्नायमानेषु पापेषु न पतेत्तद्यथा पुरा ॥ ४५ ।
हंसकुण्डेति विख्यातं तस्मिन् क्षेत्रे परे मम ।
धारा चैका पतत्यत्र मणिपूरगिरौ श्रिता ॥ ४६ ।
तत्राभिषेकं कुर्व्वीत षष्ठकालोषितोनरः ।
मुक्तसङ्गो महाभागे मोदते वरुणालये ॥ ४७ ।
अथाऽत्र मुञ्चते प्राणान् हंसकुण्डे वरानने ।

* चतस्र इति सुध ।

वारुणं लोकमुत्सृज्य मम लोके महीयते ॥ ४८ ॥
तत्राश्चर्य्यं प्रवक्ष्यामि हंसकुण्डे यशस्विनि ।
शुद्धाः पश्यन्ति मनुजाः पापकर्म्मा न पश्यति ॥ ४९ ॥
चतुर्विंशतिद्वादश्यां मध्याह्ने च दिवाकरे ।
हंसाश्चैवाऽत्र दृश्यन्ते चन्द्रकुन्दसमप्रभाः ॥ ५० ॥
यस्तत्र पश्यते* हंसान् भ्रममाणानितस्ततः ।
लभन्ते ते परां सिद्धिं धरे नास्त्यत्र संशयः ॥ ५१ ॥
कदम्बमिति विख्यातं तस्मिन् क्षेत्रे परं मम ।
तृष्णायो यत्र वै शुद्धाः संप्राप्ताश्च ममालयम् ॥ ५२ ॥
तत्राभिषेकं कुर्व्वीत चतुःकालोषितोनरः ।
मोदते ऋषिलोकेषु पुण्यात्मा वै न संशयः ॥ ५३ ॥
अथाऽत्र मुञ्चति प्राणान् कृत्वा कर्म्म सुदुष्करम् ।
ऋषिलोकं परित्यज्य मम लोकं प्रपद्यते ॥ ५४ ॥
तत्राश्चर्य्यं महाभागे कथ्यमानं शृणुष्व मे ।
कदम्बात्पतते† धारा तत्र पूर्व्वं विनिःसृता ॥ ५५ ॥
स कदम्बो महाभागे माघमासस्य द्वादशी ।
पुष्पाणि वै प्रकटयत्युदयस्थे दिवाकरे ॥ ५६ ॥
ये वा लभन्ते तत्पुष्पं मम मार्गानुसारिणः ।
ते लभन्ते परां सिद्धिमेवमेतन्न संशयः ॥ ५७ ॥
चक्रतीर्थमिति ख्यातं तस्मिन् क्षेत्रे परं मम ।

---

* पश्यतीति साधु । † पततीति साधु ।

पञ्च धाराः पतन्त्यत्र मणिपूरसमाश्रिताः ॥ ५८ ।
तत्राभिषेकं कुर्व्वीत पञ्चकालोषितो नरः ।
दशवर्षसहस्राणि स्वर्गलोके स मोदते ॥ ५९ ।
अथाऽत्र मुञ्चते प्राणाँल्लोभमोहविवर्ज्जितः ।
सर्व्वान् स्वर्गान् समुत्सृज्य मम लोकाय गच्छति ॥ ६० ।
तत्राश्चर्य्यं प्रवक्ष्यामि कथ्यमानं शृणुष्व मे ।
अन्यथैतन्न पश्यन्ति मम कर्म्मपरायणाः ॥ ६१ ।
चतुर्विंशतिद्वादश्यामर्द्धरात्रे यशस्विनि ।
श्रूयते तत्र निर्घोषो मनःकर्णसुखावहः ॥ ६२ ।
सुगन्धोवहते वायुर्बहुमाल्यसमन्वितः ।
दुर्लभः पापिनाञ्चैव सुलभः पुण्यकर्म्मिणाम् ॥ ६३ ।
तस्य चोत्तरपार्श्वेन अशोकश्च महाद्रुमः ।
पुष्पते सोऽथ तत्रापि सूर्य्ये चाभ्युदिते* सति ॥ ६४ ।
ये तत्र लभते पुष्पं मम मार्गानुसारिणः ।
ते लभन्ते परां सिद्धिं एवं भूमे न संशयः ॥ ६५ ।
अस्ति रैवतकं नाम तस्मिन् क्षेत्रे परं मम ।
सर्व्वलोकेषु विख्यातं यत्र विक्रीड़ितं मया ॥ ६६ ।
बहुगुल्मलताकीर्णं बहुपुष्पैश्च शोभितम् ।
बहुवर्णशिलापङ्क्ता गुहाश्चापि दिशो. दश ।
वाप्यश्च कन्दराश्चैव देवानामपि दुर्लभाः ॥ ६७ ।

---

* अभ्युदयते इति (ग) ।

तत्राभिषेकं कुर्व्वीत षष्ठकालोषितोनरः ।
गच्छति* सोमलोकाय कृतकृत्यो न संशयः ॥ ६८ ।
अथाऽत्र मुञ्चते प्राणान्मम कर्म्मसु निष्ठितः ।
सोमलोकं समुत्सृज्य मम लोकं प्रपद्यते ॥ ६९ ।
तत्राश्चर्य्यं महाभागे कथ्यमानं मया शृणु ।
पश्यन्ति मनुजाः सर्व्वे धर्म्मकामा न संशयः ॥ ७० ।
पतन्ति सर्व्ववृक्षाणां पत्राणि सुबहून्यपि ।
एकञ्चापि न दृश्येत प्रसन्नं याति तज्जलम् ।
स च पूर्व्वेण पार्श्वेण शोभते वै महाद्रुमः ॥ ७१ ।
अपरो मम पार्श्वेण देवानामपि दुर्लभः ।
पञ्चक्रोशसुविस्तारः शोभते वै महाद्रुमः ॥ ७२ ।
पद्मैश्चैवोत्पलैश्छन्नं सुगन्धिकुसुमैः सह ।
बहुमत्स्यजलाकीर्णं सर्व्वतस्तु फलान्वितम् ।
शिलातलगुहाच्छन्नं सुगन्धिकुसुमैः सह ॥ ७३ ।
तत्राभिषेकं कुर्व्वीत अष्टभक्तोषितो नरः ।
मोदते नन्दने दिव्ये अप्सरोभिः समन्विते ॥ ७४ ।
अत्राश्चर्य्यं महाभागे कथ्यमानं मया शृणु ।
पश्यन्ति मनुजाः सर्व्वे धर्म्मकामा न संशयः ॥ ७५ ।
मध्याह्ने च पुनः पूर्णश्चार्द्धरात्रे समोवहेत् ।
वर्द्धते क्षीयते चैव यथैव च महोदधिः ॥ ७६ ।

* गच्छतीति साधु ।

तस्य पश्चिमपार्श्वे तु विल्वश्चैव महाद्रुमः।
चतुर्विंशतिद्वादश्यां स पुष्यति च निष्फलम् ॥ ७७ ।
पश्यते शुभकर्म्मा च पापकर्म्मा न पश्यति ।
दृश्यते च महाभागे अस्तमिते दिवाकरे ॥ ७८ ।
यस्तत्र लभते पुष्पं मम मार्गानुसारकः ।
स लभेत परां सिद्धिमेवम्भूमि न संशयः ॥ ७९ ।
विष्णुसंक्रमणं नाम तस्मिन् क्षेत्रे परे मम ।
विद्धोऽस्मि यत्र व्याधेन स्वमूर्त्तिं चास्थितः पुनः ॥ ८० ।
तत्र कुण्डं महाभागे मणिपूरगिरौ श्रुतम् ।
धारा चैका पतत्यत्र लाभालाभविवर्जितः ।
सूर्य्यलोकं समुत्सृज्य मम लोके महीयते ॥ ८१ ।
तत्राश्चर्य्यं प्रवक्ष्यामि विष्णुं शनुगणेश्वरम् ।
पापिनां यस्तु दुर्द्दर्शः सुदृश्यः पुण्यचारिणाम् ॥ ८२ ।
तस्य दक्षिणपार्श्वेन अश्वत्थो वै महाद्रुमः ।
चतुर्विंशतिद्वादश्यां मध्याह्ने तु दिवाकरे ।
फलते स यथान्यायं सर्व्वभागवतप्रियम् ।
उच्चश्चैव विशालश्च मनोज्ञश्चैव शीतलः ॥ ८३।८४ ।
ये लभन्ते फलं तत्र मम मार्गानुसारिणः ।
ते लभन्ते परां सिद्धिमेवमेतन्न संशयः ॥ ८५ ।
तस्मिन् क्षेत्रे महाभागे तिष्ठामि चोत्तरामुखः ।
सर्व्वभागवतप्रीतिं समुद्रतटमाश्रितः ।
अहं रामेण सहितः सा च एकादशी शुभा ।

त्रीणि तत्रैव तिष्ठामो द्वारकायां यशस्विनि ॥ ८६।८७ ।
तस्मिन् क्षेत्रे महाभागे त्वया मोदामहे वयम् ।
त्रिंशद्योजनविस्तारः सर्व्वतस्तु दिशो दश ॥ ८८ ।
तत्र गत्वा वरारोहे ये मां द्रक्ष्यन्ति भक्तितः ।
अदीर्घेणैव कालेन प्राप्नुवन्ति पराङ्गतिम् ॥ ८९ ।
आख्यानानां महाख्यानं शान्तीनां शान्तिरुत्तमा ।
धर्म्माणां परमो धर्म्मो द्युतीनां परमा द्युतिः ॥ ९० ।
लाभानां परमो लाभः क्रियाणां परमा क्रिया ।
श्रुतीनां परमं श्रेष्ठं तपसाञ्च परं तपः ॥ ९१ ।
एतन्मरणकालेऽपि मा कदाचित्तु विस्मरेत् ।
यदीच्छेत्परमां सिद्धिं मम लोकाय गच्छति ॥ ९२ ।
य एतत्पठते भद्रे कल्यमुत्थाय मानवः ।
सकुल्यास्तारितास्तेन सप्त सप्त च सप्त च ॥ ९३ ।
एतत्ते कथितम्भद्रे द्वारकायाः सुनिश्चयम् ।
उचितेनोपचारेण किमन्यत्परिपृच्छसि ॥ ९४ ।

इति वराहपुराणे भगवच्छास्त्रे द्वारवतीमाहात्म्यवर्णनो नाम

ऊनपञ्चाशदधिकशततमोऽध्यायः ।

# पञ्चाशदधिकशततमोऽध्यायः ।

सूत उवाच ।

द्वारकायास्तु माहात्म्यं श्रुत्वा ह्येतत्सुभाषितम् ।
हृष्टोवाच तदा देवं धर्म्मकामा वसुन्धरा ॥ १ ॥

धरण्युवाच ।

अहो देव प्रसादश्च यत्त्वया परिकीर्त्तितम् ।
श्रुत्वैतत्परमं पुण्यं प्राप्तास्मि परमां श्रियम् ॥ २ ॥
एतस्मादपि चेद्गुह्यं लोकनाथ जनार्द्दन ।
यद्यस्ति प्रोच्यतां मह्यङ्कृपा चेत्परमाऽपि ते ॥ ३ ॥
ततो महीवचः श्रुत्वा विष्णुः कमललोचनः ।
वराहरूपी भगवान् प्रत्युवाच वसुन्धराम् ॥ ४ ॥

वराह उवाच ।

सानन्दूरेति विख्यातं भूमे गुह्यम्परं मम ।
उत्तरे तु समुद्रस्य मलयस्य तु दक्षिणे ॥ ५ ॥
तत्र तिष्ठामि वसुधे उदीचीं दिशमाश्रितः ।
प्रतिमा वै मदीयास्ति नात्युच्चा नातिनीचका ॥ ६ ॥
आयसीन्तां वदन्त्येके अन्ये ताम्रमयीन्तथा ।
कांस्यां रीतिमयीमन्ये केचित्सीसकनिर्म्मिताम् ।
शिलामयीमित्यपरे महदाश्चर्य्यरूपिणीम् ॥ ७ ॥
तत्र स्थानानि वै भूमे कथ्यमानानि वै शृणु ।
मनुजा यत्र मुच्यन्ते गताः संसारसागरम् ॥ ८ ॥

तत्राश्चर्य्यं प्रवक्ष्यामि सानन्दे यशस्विनि ।
सौवर्णं दृश्यते पद्मं मध्याह्ने तु दिवाकरे ॥ ९ ॥
यत्र रामगृहं नाम मम गुह्यं यशस्विनि ।
तत्रापि शृणु चाश्चर्यं यथापि परिवर्त्तने ॥ १० ॥
एका तत्र लता वृत्ते उच्चैस्थूलो महाद्रुमः ।
समुद्रमध्ये तिष्ठन्तं कोऽपि तत्र न पश्यति ॥ ११ ॥
अन्यच्च ते प्रवक्ष्यामि महाश्चर्य्यं वसुन्धरे ।
मम भक्ता हि पश्यन्ति तिष्ठमानाः स्वकर्म्मणा ।
बहुमत्स्यसहस्राणि कोट्याद्यर्व्वुदमेव च ॥ १२ ॥
चिप्तः पिण्डश्च तन्मध्ये येन केन विकर्म्मिणा ।
एकस्तत्र स्थूलमत्स्यो भूमे चक्रेण चाङ्कितः ।
तावत्कश्चिन्न गृह्णाति यावत्तेन न भक्षितः ॥ १३ ॥
तत्र रामसरो नाम गुह्यक्षेत्रं परं मम ।
अगाधश्चाप्यपारश्च रक्तपद्मविभूषितम् ॥ १४ ॥
तत्र स्नानन्तु कुर्व्वीत एकरात्रोषितो नरः ।
बुधस्य भवनङ्गत्वा मोदते नात्र संशयः ॥ १५ ॥
अथ प्राणान् प्रमुच्येत तस्मिन् सरसि सुन्दरि ।
बुधस्य भवनं त्यक्त्वा मम लोकम्प्रपद्यते ॥ १६ ॥
तस्मिन्रामसरस्युच्चैराश्चर्य्यं शृणु सुन्दरि ।
मनुजास्तत्र पश्यन्ति मम कर्म्मरता न ये ॥ १७ ॥
तत्सरः क्रोशविस्तारं बहुगुल्मलतावृतम् ।
मनोज्ञं रमणीयञ्च जलजैश्चापि संवृतम् ॥ १८ ॥

तत्र रूढ़ानि पद्मानि द्योतयन्ति दिशो दश।
एकन्तु दृश्यते श्वेतमब्जं रुक्ममयं तथा ॥ १९ ।
तत्र ब्रह्मसरस्युच्चैरुत्तरम्पार्श्वमाश्रिता।
धारा चैका प्रपतति स्थूला मुसलसन्निभा ॥ २० ।
तत्र स्नानं प्रकुर्व्वीत षष्ठकालोषितोनरः।
ब्रह्मलोकं समासाद्य मोदते नात्र संशयः ॥ २१ ।
अथात्र मुञ्चते प्राणैर्भूमे ब्रह्मसरस्यपि।
ब्रह्मणा समनुज्ञातो मम लोकञ्च गच्छति ॥ २२ ।
तत्राश्चर्य्यं महाभागे रम्ये ब्रह्मसरे* शृणु।
मद्भक्ता यत्र† पश्यन्ति घोरसंसारमोचणम् ॥ २३ ।
चतुर्विंशतिद्वादश्यां सा धारा पृथुलेचणे।
मध्याह्ने पतते‡ भूमि यावत्सूर्य्यस्तु तिष्ठति ॥ २४ ।
परिवृत्ते तु मध्याह्ने सा धारा न पतेद्भुवि।
एवं तत्र महाश्चर्य्यं पुण्यब्रह्मसरोवरे ॥ २५ ।
अस्ति सङ्गमनं नाम गुह्यक्षेत्रं परं मम।
समुद्रश्चैव रामश्च समेष्येते वराङ्गने ॥ २६ ।
तत्र कुण्डं महाभागे प्रसन्नविमलोदकम्।
बहुगुल्मलताकीर्णं शोभितञ्च विहङ्गमैः ॥ २७ ।
समुद्रस्य तु पार्श्वेण अदूरात्तत्र योजनात्।
मण्डितं कुमुदैः पद्मैः सुगन्धैश्चोत्तमैस्तथा ॥ २८ ।

---

* ब्रह्मसरसीति साधु। † यानि पश्यन्तीति (ग)। ‡ पततीति साधु, एवमन्यत्रापि।

तत्र स्नानन्तु कुर्व्वीत षष्ठकालोषितो नरः ।
समुद्रभवनङ्गत्वा मम लोकम्प्रपद्यते ॥ २९ ।
तत्राश्चर्य्यं प्रवक्ष्यामि कुण्डं रामस्य सङ्गमे ।
यद्दृष्ट्वा मनुजास्तत्र भ्रमन्ति विगतज्वराः ॥ ३० ।
यानि कानि च पर्णानि पतन्ति जलसंसदि ।
एकमप्यत्र पश्यन्ति न केऽपि वसुधे नराः ॥ ३१ ।
अच्छिद्राणि च पत्राणि तस्मिन्रामस्य सङ्गमे ।
प्रयत्नेनापि मार्गं तच्छिद्रं तत्र न पश्यति ॥ ३२ ।
अस्ति शक्रसरो नाम गुह्यक्षेत्रं परं मम ।
तत्र पूर्व्वेण पार्श्वेण अदूरादर्द्धयोजनात् ।
तस्य कुण्डस्य सुश्रोणि चतस्रो विषमाश्रिताः* ।
धाराः पतन्ति कल्याणि प्रसन्नसलिलास्तथा ॥ ३३।३४ ।
तत्र स्नानं प्रकुर्व्वीत चतुष्कालोषितो नरः ।
चतुर्णां लोकपालानां लोकानाप्नोति चोत्तमान् ॥ ३५ ।
अस्मिंश्च शक्रसरसि यदि प्राणान् प्रमुञ्चति ।
लोकपालान् समुत्सृज्य मम लोकेषु मोदते ॥ ३६ ।
तत्राश्चर्य्यं महाभागे दृश्यते तच्छृणुष्व मे ।
शुद्धैर्भागवतैर्भूमे सर्व्वसंसारमोक्षणम् ॥ ३७ ।
ता धाराश्चतुरो भद्रे पतन्ति चतुरो दिशः ।
न च तद्वर्द्धते चाम्भो न चैव परिहीयते ॥ ३८ ।

* दिग्पाश्रिता इति (ग)

मासे भाद्रपदे चैव शुक्लपक्षे तु द्वादशी ।
श्रूयते गीतनिर्घोषः श्रुतिकर्म्ममनोहरः ॥ ३९ ।
अस्ति सूर्पारकं नाम गुह्यं क्षेत्रं परं मम ।
जामदग्न्यस्य रामस्य आश्रमोऽथ भविष्यति ॥ ४० ।
तत्र तिष्ठाम्यहं देवि समुद्रतटमाश्रितः ।
शाल्मलीश्चाग्रतः कृत्वाधिष्ठितश्चोत्तरामुखः ॥ ४१ ।
तत्र स्नानम्प्रकुर्व्वीत पञ्चकालोषितो नरः ।
ऋषिलोकं ततो गत्वा पश्यते चाप्यरुन्धतीम् ॥ ४२ ।
अथ प्राणान्विमुञ्चेत कृत्वा कर्म्म सुदुष्करम् ।
ऋषिलोकं परित्यज्य मम लोकं प्रपद्यते ॥ ४३ ।
तत्राश्चर्य्यं महाभागे नमस्कारं च कुर्व्वते ।
वर्षाणि द्वादशैतेन नमस्कारः कृतोभवेत् ॥ ४४ ।
तस्मिन् क्षेत्रे महाभागे पश्यन्ति परिनिष्ठिताः ।
पापात्मानो न पश्यन्ति मम मायाविमोहिताः ॥ ४५ ।
चतुर्विंशतिद्वादश्यां समुपायान्ति शाल्मलीम् ।
तत्र पश्यन्ति सुश्रोणि शुद्धा भागवता नराः ॥ ४६ ।
तस्मिन् क्षेत्रे महाभागे अस्ति गुह्यम्परं मम ।
जटाकुण्डमिति ख्यातं वायव्यां दिशि संस्थितम् ॥ ४७ ।
तत्कुण्डस्य महाभागे समन्ताद्दशयोजनम् ।
मलयस्य दक्षिणेन समुद्रस्योत्तरे तथा ॥ ४८ ।
तत्र स्नानन्तु कुर्व्वीत पञ्चकालोषितो नरः ।
अगस्तिभवनं गत्वा मोदते नात्र संशयः ॥ ४९ ।

अथ प्राणान् प्रमुञ्चेत मम चिन्तापरायणः ।
अगस्तिभवनं त्यक्त्वा मम लोकन्तु गच्छति ॥ ५० ।
तस्य कुण्डस्य सुश्रोणि नव धारा न किञ्चन ।
विस्तारश्च महाभागे अगाधश्च महार्णवः ॥ ५१ ।
आश्चर्य्यं सुमहत्तत्र कथ्यमानं मया शृणु ।
यच्च पश्यति सुश्रोणि समन्तादितरो जनः ॥ ५२ ।
चतुर्विंशतिद्वादश्यां रवावभ्युदिते सति ।
न वर्द्धति* ततश्चाम्भो यावत्तिष्ठति तत्पुनः ॥ ५३ ।
एतत्ते कथितं भद्रे सानन्दूरेति तन्मया ।
आश्चर्य्यञ्च प्रमाणञ्च भक्तिकीर्त्तिविवर्द्धनम् ॥ ५४ ।
गुह्यानां परमङ्गुह्यं स्थानानां परमं महत् ।
यस्तु गच्छति सुश्रोणि अष्टभक्तपथे स्थितः ।
प्राप्नोति परमां सिद्धिं ममैव वचनं यथा ॥ ५५ ।
य एतत्पठते नित्यं यश्चैवं शृणुयान्मुदा ।
कुलानि तेन तीर्णानि षट् च षट् च पुनश्च षट् ॥ ५६
एतन्मरणकाले न विस्मर्त्तव्यङ्कदाचन ।
यदीच्छेद्विष्णुलोके हि निष्कलङ्कमनं नरः ॥ ५७ ।
एतत्ते कथितम्भद्रे त्वया पृष्टश्च मां प्रति ।
उक्तं भागवतार्थाय किमन्यत्परिपृच्छसि ॥ ५८ ।

इति वराहपुराणे भगवच्छास्त्रे सानन्दूरमाहात्म्यवर्णनो नाम
पञ्चाशदधिकशततमोऽध्यायः ।

---

* वर्द्धते इति साधु ।

## एकपञ्चाशदधिकशततमोऽध्यायः ।

सूत उवाच ।

सानन्दूरस्य माहात्म्यमेतच्छ्रुत्वा वसुन्धरा ।
कृताञ्जलिपुटा भूत्वा वराहं पुनरब्रवीत् ॥ १ ।

धरण्युवाच ।

श्रुतमेतज्जगन्नाथ विष्णो गुह्यमनुत्तमम् ।
यच्छ्रुत्वा सुमहाभाग जाताऽस्मि विगतज्वरा ॥ २ ।
अपरं वाऽस्ति चेत्किञ्चिद्गुह्यं चेत्रं शुभावहम् ।
सानन्दूरात्परङ्गुह्यक्षेत्रमस्ति न वा परम् ॥ ३ ।

सुरकरण नृसिंह लोकनाथ
युतससुरासुरधीरदैववीर ।
कमलदलसहस्रनेत्ररूपो
जयति कृतान्तसमानकालरूपः ॥ ४ ।

गद्गदं वचनं श्रुत्वा पृथिव्याः स जनार्द्दनः ।
उवाच मधुरं वाक्यं सर्व्वलोकार्त्तिहा हरिः ॥ ५ ।

वराह उवाच ।

शृणु देवि च तत्त्वेन यन्मात्त्वं परिपृच्छसि ।
गुह्यमन्यत्प्रवक्ष्यामि महतः कर्म्मणोजनिः ॥ ६ ।
ततः सिद्धवटे गत्वा त्रिंशद्योजनदूरतः ।
म्लेच्छमध्ये वरारोहे हिमवन्तं समाश्रितम् ॥ ७ ।
तत्र लोहार्गले क्षेत्रे निवासो विहितः शुभः ।

गुह्यं पञ्चदशायामं समन्तात्पञ्चयोजनम् ॥ ८ ।
दुर्गमं दुःसहञ्चैव पापैः सर्व्वत्र वेष्टितम् ।
सुलभं पुण्ययुक्तानां मम चिन्तानुसारिणाम् ॥ ९ ।
तत्र तिष्ठाम्यहं भद्रे उदीचीं दिशमाश्रितः ।
हिरण्मप्रतिमां कृत्वा जातरूपां न संशयः ॥ १० ।
ततो मे दानवाः सर्व्वे क्रमन्तो लोकमुत्तमम् ।
मया चैवान्तरङ्कृत्वा कृत्वा मायां च वैष्णवीम् ॥ ११ ।
तत्र ब्रह्मा च रुद्राश्च स्कन्देन्द्रसमरुद्गणाः ।
आदित्या वसवो वायुरश्विनौ च महौजसौ ॥ १२ ।
सोमो बृहस्पतिश्चैव ये चान्ये वै दिवौकसः ।
तेषाञ्चैवार्गलं दत्त्वा चक्रं गृह्य महौजसम् ।
शतकोटिसहस्राणि शीघ्रमेव निपातितम् ॥ १३ ।
ततश्च देवताः सर्व्वास्तुष्यमाणा* इतस्ततः ।
एवं लोहार्गलं नाम चेत्रं नाम मया कृतम् ॥ १४ ।
ततो देवासुरे युद्धे हत्वा त्रिदशकण्टकान् ।
तेषां संस्थापनं तत्र कृतञ्चैव महौजसाम् ॥ १५ ।
यो मां पश्यति तत्रस्थं प्रयत्नेन कदाचन ।
सोऽपि भागवतो भूमे भवत्येव सुनिश्चितः ॥ १६ ।
तस्मिन् कुण्डेति† सुश्रोणि यः स्नाति नियतो नरः ।
उपोष्य च त्रिरात्रन्तु विधिदृष्टेन कर्म्मणा ।
ततः स्वर्गसहस्रेषु मोदते नात्र संशयः ॥ १७ ।

---

* तुष्यन्त इति साधु । † कुण्डे इति सन्धिरार्षः ।

अथाऽत्र मुञ्चते प्राणान् स्वकर्म्मपरिनिष्ठितः।
सर्व्वान् स्वर्गान् परित्यज्य मम लोकं प्रपद्यते ॥ १८ ।
अन्यच्च ते प्रवक्ष्यामि यत्र तत्परमाद्भुतम्।
लोकविस्मापनार्थाय मया तत्र च यत्कृतम् ॥ १९ ।
चतुर्विंशतिद्वादश्यां मासेन विधिना मम।
बलिः प्रदीयते तत्र सर्व्वकामविशोधनः ॥ २० ।
अश्वो मे कल्पितस्तत्र सर्व्वरत्नविभूषितः।
श्वेतः कुमुदवर्णाभः शङ्खकुन्दसमप्रभः ॥ २१ ।
मार्गणा मे धनुस्तत्र अक्षसूत्रं कमण्डलुः।
आसनं विततं दिव्यं दीयतेऽश्वोपरि स्थिरम् ॥ २२ ।
श्वेतपर्व्वतमारुह्य पतमानः कुरून् बहून्।
पतितस्तत्र दृश्येत क्षतं तत्र न दृश्यते ॥ २३ ।
अनेकान्येव रूपाणि पातयित्वा नभस्तलात्।
शान्तो दान्तः परिक्लिष्टः स चाश्वोदिवि वर्त्तते ॥ २४ ।

सूत उवाच।

ततो भूम्या वचः श्रुत्वा ब्रह्मपुत्रो महामुनिः।
विस्मयं परमम्प्राप्तो विष्णुमायोपवृंहितः ॥ २५ ।
ततः स विस्मयाविष्टो ब्रह्मपुत्रो महामतिः।
सनत्कुमारो भगवान् पुनरेव प्रभाषत* ॥ २६ ।

सनत्कुमार उवाच।

धन्यासि देवि सुश्रोणि सुपुण्यासि वरानने।

* प्राभाषतेति साधु।

देवि यल्लोकनाथस्य साचाद्दर्शनमागता ॥ २७ ।
पद्मपत्रविशालाचो यत्त्वया परिभाषित: ।
तेनोक्तं शंस सकलं सर्व्वेषां सुखवर्द्धनम् ॥ २८ ।
यथा यथा वदसि च धर्म्मसंहितं
गुह्यं परं देववरप्रणीतम् ।
गुणोत्तमङ्कारणसम्प्रयुक्तं
तथा तथा भावयसे मनो मम ॥ २९ ।
तत: स पुण्डरीकाच: किमाचष्ट तत: परम् ।
कर्म्मणा विशिष्टेन सर्व्वभागवतप्रियं ॥ ३० ।

सूत उवाच ।

तस्य तद्वचनं श्रुत्वा कुमारस्य महौजस: ।
उवाच मधुरं वाक्यमाभाष्य ब्रह्मण: सुतम् ।
शृणु वत्स जगन्नाथो यथा मामाह नोदित: ॥ ३१ ।

वराह उवाच ।

एवं तत्रैव कर्म्माणि क्रियन्ते विधिपूर्व्वकम् ।
शोधकानि च पापानां मृदूनि च शुभानि च ॥ ३२ ।
अश्वानां तत्कुलीनानामावहन्ति सुमध्यमे ।
नान्यं वहन्ति ते चाश्वा मम वाहा दुरत्यया: ॥ ३३ ।
कुण्डं पञ्चसरो नाम गुह्यं चैत्रं परं मम ।
धारा: पतन्ति चत्वारि* शङ्खवर्णा मनोजवा: ॥ ३४ ।

* चतस्र इति साधु ।

तत्र स्नानन्तु कुर्व्वीत चतुर्भक्तोषितो नरः।
लोकञ्चैवाङ्गदङ्गत्वा गन्धर्व्वैः सह मोदते॥ ३५।
अथ चेन्मुञ्चति प्राणांस्तस्मिन् क्षेत्रे परे मम।
गन्धर्व्वलोकमुत्सृज्य मम लोकाय गच्छति॥ ३६।
ततो नारदकुण्डेति मम क्षेत्रे परे महत्।
पञ्च धाराः पतन्त्यत्र तालवृक्षसमोपमाः॥ ३७।
तत्र स्नानन्तु कुर्व्वीत एकभक्तोषितो नरः।
देवर्षिं नारदं पश्येन्मोदते तेन वै समम्॥ ३८।
अथात्र मुञ्चति प्राणान्मम गुह्यविनिश्चितः।
प्रमुच्य नारदं दिव्यं मम लोकञ्च गच्छति॥ ३९।
ततो वसिष्ठकुण्डेति तस्मिन् क्षेत्रं परं मम।
धाराः पतन्ति तिस्रस्तु न स्थूला नाति वै कृशाः॥ ४०।
तत्राभिषेकं कुर्व्वीत पञ्चकालोषितो नरः।
वासिष्ठं लोकमासाद्य मोदते नात्र संशयः॥ ४१।
अथात्र मुञ्चति प्राणान्मम कर्म्मसु निष्ठितः।
वासिष्ठं लोकमुत्सृज्य मम लोकं प्रपद्यते॥ ४२।
पञ्चकुण्डेति विख्यातं तस्मिन् क्षेत्रे परं मम।
पञ्च धाराः पतन्त्यत्र हिमकूटविनिःसृताः॥ ४३।
तत्राभिषेकं कुर्व्वीत पञ्चकालोषितो नरः।
स तत्र गच्छते* भूमे यत्र पञ्चशिखो मुनिः॥ ४४।

* गच्छतीति साधु।

अथात्र मुञ्चते प्राणान्मम भक्तो जितेन्द्रियः ।
पञ्चषडं समुत्सृज्य स याति परमाङ्गतिम् ॥ ४५ ।
सप्तर्षिकुण्डं विख्यातमस्मिन् क्षेत्रे परं मम ।
सप्त धाराः पतन्त्यत्र हिमवत्पर्व्वतस्थिताः ॥ ४६ ।
तत्राभिषेकं कुर्व्वीत सप्तभक्तोषितो नरः ।
मोदते ऋषिलोकेषु ऋषिकन्याभिसंवृतः ॥ ४७ ।
अथात्र मुञ्चते प्राणान्रागलोभविवर्ज्जितः ।
सप्तर्षीन् स समुत्सृज्य मोदते मम संस्थितः ॥ ४८ ।
शरभङ्गस्य कुण्डं वै क्षेत्रे गुह्यं परं मम ।
तत्र धारा पतत्येका शरभङ्गाश्रिता नदी ॥ ४९ ।
स्नानं यस्तत्र कुर्व्वीत षष्ठभक्तोषितो नरः ।
मोदते तस्य लोकेषु ऋषिकन्याप्रमोदितः ॥ ५० ।
अथात्र मुञ्चते प्राणान् सर्व्वसङ्गविवर्ज्जितः ।
शरभङ्गं समुत्सृज्य मम लोके महीयते ॥ ५१ ।
कुण्डमग्निसरो नाम सर्व्वमायाभिसंवृतम् ।
भूमिं नीत्वा जलं तत्र तिष्ठते* च वरानने ॥ ५२ ।
तत्र स्नानम्प्रकुर्व्वीत अष्टकालोषितो नरः ।
गच्छत्यङ्गिरसो लोकं सुखभागी न संशयः ॥ ५३ ।
अथात्र मुञ्चते प्राणान्मम कर्म्मपरायणः ।
अग्निलोकं समुत्सृज्य मम लोकं स गच्छति ॥ ५४ ।

* तिष्ठतीति साधु ।

कुण्डं बृहस्पतेर्भूमे सर्व्वतीर्थोदकाश्रितम्।
धारा चैका पतत्यत्र हिमकूटसमाश्रिता ॥ ५५।
तत्र स्नानन्तु कुर्व्वीत षष्ठकालोषितो नरः।
गत्वा बृहस्पतेर्लोकं मुनिकन्याभिर्मोदितः ॥ ५६।
अथात्र मुञ्चते प्राणान्मम लोकसमाश्रितः।
सोऽपि याति परां सिद्धिं समुत्सृज्य बृहस्पतिम् ॥ ५७।
वैश्वानरस्य कुण्डेति गुह्यक्षेत्रं परं मम।
धारा चैका पतत्यत्र दृश्यते हिमसङ्कुयात् ॥ ५८।
तत्राभिषेकं कुर्व्वीत षष्ठभक्तोषितो नरः।
गत्वा बृहस्पतेर्लोकं मुनिकन्याभिर्मोदितः।
वैश्वानरेषु लोकेषु मोदते नाऽत्र संशयः ॥ ५९।
अथाऽत्र मुञ्चते प्राणान्मम कर्मपरायणः।
वैश्वानरं समुत्सृज्य मम लोकं स गच्छति ॥ ६०।
कार्त्तिकेयस्य कुण्डेति गुह्यक्षेत्रं परं मम।
यत्र पञ्चदशा* धाराः पतन्ति हिमपर्व्वतात् ॥ ६१।
तत्र स्नानन्तु कुर्व्वीत षष्ठकालोषितोनरः।
कुमारन्पश्यते व्यक्तं षण्मुखं शुभदर्शनम् ॥ ६२।
अथाऽत्र मुञ्चते प्राणान् कृत्वा चान्द्रायणं शुचिः।
कार्त्तिकेयं समुत्सृज्य मोदते मम मण्डले ॥ ६३।
उमाकुण्डेति विख्यातं तस्मिन् क्षेत्रे परं मम।
सा गौरी यत्र चोत्पन्ना महादेववराङ्गना ॥ ६४।

* पञ्चदशा इत्यार्षम्, पञ्चदश इति साधु।

तत्र स्नानन्तु कुर्व्वीत दशरात्रोषितोनरः।
गौरीं स पश्यते देवीं तस्या लोके च मोदते॥ ६५।
अथ प्राणान् प्रमुञ्चेत दशरात्रोषितोनरः।
उमालोकं समुत्सृज्य मम लोकम्प्रपद्यते॥ ६६।
महेश्वरस्य वै कुण्डं यत्र चोद्वाहिता उमा।
कादम्बैश्चक्रवाकैश्च हंससारससेवितम्॥ ६७।
तिस्रो धाराः पतन्त्यत्र हिमवत्पर्व्वताश्रिताः।
स्थूलाश्च रमणीयाश्च न ह्रस्वाश्चातिनिर्म्मलाः॥ ६८।
तत्र स्नानन्तु कुर्व्वीत द्वादशाहोषितो नरः।
मोदते रुद्रलोकेषु रुद्रकन्याभिरावृतः॥ ६९।
अथात्र मुञ्चते प्राणान् कृत्वा कर्म्म सुदुष्करम्।
रुद्रलोकं समुत्सृज्य मम लोकञ्च गच्छति॥ ७०।
प्रख्यातं ब्रह्मकुण्डेति वेदा यत्र समुत्थिताः।
चतुरो* वेदधारास्तु पतन्ति च हिमालयात्॥ ७१।
ततः पूर्व्वेण पार्श्वेन समा धारा पतेच्छुभा।
उच्चा च रमणीया च पाण्डरोदकशोभिता॥ ७२।
पुनरस्योत्तरे पार्श्वे सुवर्णसदृशोपमा।
ऋग्वेदः पतते धारा प्रसन्ना विमलोदका॥ ७३।
अथ पश्चिमपार्श्वेन यजुर्वेदेन संयुता।
अथ दक्षिणपार्श्वेन आथर्व्वणसमन्विता॥ ७४।
एका धारा पतत्यत्र [illegible]गोपकसन्निभा॥ ७५।

---

* चतस्र इति साधु।

यस्तत्र कुरुते स्नानं समरात्रोषितो नरः।
ब्रह्मलोकं समासाद्य ब्रह्मणा सह मोदते ॥ ७६ ।
अथात्र मुञ्चते प्राणानहङ्कारविवर्ज्जितः।
ब्रह्मलोकं परित्यज्य मम लोकम्प्रपद्यते ॥ ७७ ।
गुह्याख्यानि महाभागे तेषे लोहार्गले मम।
सिद्धिकामेन मर्त्त्येन गन्तव्यं नात्र संशयः ॥ ७८ ।
समन्तात्पञ्चविंशन्तु योजनानि वरानने।
न तस्य कर्म्म विद्येत स एवमपि संस्थितः ॥ ७९ ।
आख्यानानां महाख्यानं धर्म्माणां धर्म्म उत्तमः।
पवित्राणां पवित्रन्तु न देयं यस्य कस्यचित् ॥ ८० ।
ये पठन्ति महाभागे शृण्वन्ति मत्पथे स्थिताः।
तारितानि कुलानि स्युरुभयत्र दशापि च ॥ ८१ ।
एतन्मरणकाले तु न कदाचित्तु विस्मरेत्।
यदिच्छेत्परमां सिद्धिं सर्व्वसंसारमोक्षणीम् ॥ ८२ ।
एतत्ते कथितं भद्रे लोहार्गलमनुत्तमम्।
माहात्म्यं पद्मपत्राक्षि गुह्यं यच्च महौजसम्।
मङ्गल्यञ्च पवित्रञ्च मम भक्तसुखावहम् ॥ ८३ ।

इति वराहपुराणे भगवच्छास्त्रे लोहार्गलमाहात्म्यवर्णनो
नाम एकपञ्चाशदधिकशततमोऽध्यायः।

# द्वापञ्चाशदधिकशततमोऽध्यायः ।

सूत उवाच ।

श्रुत्वा देवस्य माहात्म्यं लोहार्गलनिवासिनः ।
त्रैलोक्यनाथाधिपतेर्विस्मयं परमङ्गता ॥ १ ।

धरण्युवाच ।

पद्मपत्रविशालाक्ष लोकनाथ जगत्पते ।
त्वत्प्रसादाच्च देवेश श्रुतं शास्त्रं महौजसम् ॥ २ ।
तव शिष्या च दासी च त्वामहं शरणङ्गता ।
जगद्धाता जगज्ज्योतिर्जगत्प्रभुरतन्द्रितः ॥ ३ ।
तव सम्भावनादेव* जातास्मि कनकोज्ज्वला ।
अलङ्कृता च शस्ता च सर्व्वशास्त्रेण मानद ॥ ४ ।
जगद्धातुर्जगच्छास्त्रकृतेन हि परिश्रमः ।
त्वय्यायत्तं जगत्सर्व्वं यच्च किञ्चित्प्रवर्त्तते ॥ ५ ।
इति कृत्वा च मे देव साह्लादो हृदि वर्त्तसे ।
लोहार्गलात्परं श्रेष्ठं गुह्यं परमदुर्ल्लभम् ॥ ६ ।
तीर्थं तद्वद कल्याणं तीर्थानामुत्तमोत्तमम् ।
यदस्ति दुर्ल्लभं तीर्थं तत्त्वं कथय मे प्रभो ॥ ७ ।

वराह उवाच ।

न विद्यते च पाताले नान्तरीक्षे न मानुषे ।
समानं मथुराया हि प्रियं मम वसुन्धरे ॥ ८ ।

* तव सम्भावनादिति (ग) पुस्तके पाठः ।

सूत उवाच।

तच्छ्रुत्वा वचनं तस्य प्रियस्य वसुधा तदा।
प्रणम्य शिरसा देवी वराहं पुनरब्रवीत्॥ ८॥

पृथिव्युवाच।

पुष्करं नैमिषञ्चैव पुरीं वाराणसीं तथा।
एतान् हित्वा महाभाग मथुरां किं प्रशंससि॥ १०॥

वराह उवाच।

शृणु कार्त्स्न्येन वसुधे कथ्यमानं मयानघे।
मथुरेति च विख्यातं तस्मान्नास्ति परं मम।
सा रम्या च सुशस्ता च जन्मभूमिस्तथा मम॥ ११॥
शृणु देवि यथा स्तौमि मथुरां पापहारिणीम्।
तत्र वासी नरो याति मोक्षं नास्त्यत्र संशयः॥ १२॥
महामाघ्यां प्रयागे तु यत्फलं लभते नरः।
तत्फलं लभते देवि मथुरायां दिने दिने॥ १३॥
पूर्णं वर्षसहस्रन्तु वाराणस्यान्तु यत्फलम्।
तत्फलं लभते देवि मथुरायाङ्क्षणेन हि॥ १४॥
कार्त्तिक्याञ्चैव यत्पुण्यं पुष्करे तु वसुन्धरे।
तत्फलं लभते देवि मथुरायां जितेन्द्रियः॥ १५॥
मथुरान्तु परित्यज्य योऽन्यत्र कुरुते रतिम्।
मूढ़ो भ्रमति संसारे मोहितोमम मायया॥ १६॥
यः शृणोति वरारोहे माथुरं मम मण्डलम्।
अन्येनोच्चारितं शश्वत्सोऽपि पापैः प्रमुच्यते॥ १७॥

पृथिव्यां यानि तीर्थानि आसमुद्रं सरांसि च।
मथुरायां प्रयान्त्यत्र सुप्ते चैव जनार्द्दने ॥ १८ ।
मथुरामण्डलं प्राप्य श्राद्धङ्कृत्वा यथाविधि ।
तृप्तिं प्रयान्ति पितरो यावत्स्थित्यग्रजन्मनः ॥ १९ ।
ये वसन्ति महाभागे मथुरामितरे जनाः ।
तेऽपि यान्ति परां सिद्धिं मत्प्रसादान्न संशयः ॥ २० ।
कुब्जाम्रके सौकरवे मथुरायां विशेषतः ।
विना सांख्येन योगेन मत्प्रसादान्न संशयः ॥ २१ ।
मथुरायां महापुर्य्यां ये वसन्ति शुचिव्रताः ।
बलिभिक्षाप्रदातारो देवास्ते नरविग्रहाः ॥ २२ ।
भविष्यामि वरारोहे द्वापरे युगसंस्थिते ।
ययातिभूपवंशाच्च क्षत्रियः कुलवर्द्धनः ।
भविष्यामि वरारोहे मथुरायां न संशयः ॥ २३ ।
मूर्त्तिं चतुर्विधाङ्कृत्वा स्थास्यामि ऋषिभिः स्तुतः ।
वत्सराणां शतं तत्र युद्धेषु कृतनिश्चयः ॥ २४ ।
एका चन्दनसङ्काशा द्वितीया कनकप्रभा ।
अशोकसदृशा चान्या अन्याचोत्पलसन्निभा ॥ २५ ।
तत्र गुह्यानि नामानि भविष्यन्ति मम प्रिये ।
पुण्यानि च पवित्राणि संसारच्छेदनानि च ॥ २६ ।
यत्रार्त्तंह्वातयिष्यामि द्वात्रिंशतिर्वत्सरे ।
दैत्यान् घोरान्महाभागे कंसादीन्धर्मदूषकान् ॥ २७ ।
यमुना यत्र सुवहा नित्यसन्निहिता ध्रुवम्।

वैवस्वतसुता रम्या यमुना यत्र विश्रुता ।
गङ्गां प्राप्य प्रयागे या वेणीति प्रथिता भुवि ।
गङ्गाशतगुणा पुण्या माथुरे मम मण्डले ।
यमुना विश्रुता देवि नात्र कार्य्या विचारणा । २८।२९ ।
तत्र तीर्थानि गुह्यानि भविष्यन्ति ममानघे ।
येषु स्नाने नरो देवि मम लोके महीयते ॥ ३० ।
अथात्र मुञ्चते प्राणान्मम कर्म्मपरायणः ।
न जायते स मर्त्येषु जायते च चतुर्भुजः ॥ ३१ ।
अविमुक्ते नरः स्नातो मुक्तिम्प्राप्नोत्यसंशयम् ।
तथाऽत्र मुञ्चते प्राणान्मम लोकं स गच्छति ॥ ३२ ।
विश्रान्तिसंज्ञकं नाम तीर्थं त्रैलोक्यविश्रुतम् ।
यस्मिन् स्नातो नरो देवि मम लोकम्प्रपद्यते ॥ ३३ ।
सर्व्वतीर्थेषु यत्स्नानं सर्व्वतीर्थेषु यत्फलम् ।
तत्फलं लभते देवि दृष्ट्वा देवं गतश्रमम् ॥ ३४ ।
न च यज्ञैर्न तपसा न ध्यानैर्न च संयमैः ।
तत्फलं लभते स्नातो यथा विश्रान्तिसंज्ञके ॥ ३५ ।
कालत्रयन्तु वसुधे यः पश्यति गतश्रमम् ।
कृत्वा प्रदक्षिणे द्वे तु विष्णुलोकं स गच्छति ॥ ३६ ।
अस्ति चान्यत्परं गुह्यं सर्व्वसंसारमोक्षणम् ।
यस्मिन् स्नातो नरो देवि मम लोकम्प्रपद्यते ॥ ३७ ।
प्रयागं नाम तीर्थन्तु देवानामपि दुर्ल्लभम् ।
यस्मिन् स्नातो नरो देवि अग्निष्टोमफलं लभेत् ॥ ३८ ।

इन्द्रलोकं समासाद्य नरोऽसौ देवि मोदते ।
अथात्र मुञ्चते प्राणान्मम लोकं स गच्छति ॥ ३९ ।
तथा कनखलं नाम तीर्थं गुह्यम्परं मम ।
स्नानमात्रेण तत्रापि नाकपृष्ठे स मोदते ॥ ४० ।
अस्ति क्षेत्रं परं गुह्यं तिन्दुकं नाम नामतः ।
तस्मिन् स्नातो नरो देवि मम लोके महीयते ॥ ४१ ।
अस्मिंस्तीर्थे पुरा वृत्तं तच्छृणुष्व वसुन्धरे ॥ ४२ ।
पाञ्चालविषये देवि काम्पिल्यञ्च पुरोत्तमम् ।
धनधान्यसमायुक्तं ब्रह्मदत्तेन पालितम् ॥ ४३ ।
तस्मिंस्तु वसते देवि तिन्दुको नाम नापितः ॥ ४४ ।
तस्मिंस्तु वसतस्तस्य नापितस्य पुरोत्तमे ।
कालेन महता तस्य कुटुम्बञ्च क्षयङ्गतम् ॥ ४५ ।
क्षीणे कुटुम्बे तु तदा सुभृशं दुःखपीड़ितः ।
सर्व्वसङ्गं परित्यज्य सोऽगच्छन्मथुरां तदा ॥ ४६ ।
ब्रह्मणावसथे सोऽपि वसमानो* वसुन्धरे ।
तस्य कर्म्मगतङ्कृत्वा स्नात्वैव यमुनां नदीम् ।
नित्यं स यमुनां स्नाति चिरकालं दृढ़व्रतः ॥ ४७ ।
ततः कालेन महता पञ्चत्वं समुपागतः ।
स च तीर्थप्रभावेण जातोऽसौ ब्राह्मणोत्तमः ॥ ४८ ।
तस्मिन्वरगृहे देवि ब्राह्मणो योगिनां वरः ।

---

* वसन्निति साधु ।

जातिस्मरो महाप्राज्ञो विष्णुभक्तो वसुन्धरे।
तत्तीर्थस्य प्रभावेण जाता मुक्तिः सुदुर्लभा ॥ ४९ ।
ततः परं सूर्य्यतीर्थं सर्व्वपापप्रमोचनम्।
वैरोचनेन बलिना सूर्य्यस्त्वाराधितः पुरा।
भ्रष्टराज्येन हि तथा धनकामेन सुन्दरि ॥ ५० ।
ऊर्द्धबाहुर्निराहारस्तताप परमन्तपः* ।
साग्रं संवत्सरं देवि ततः काममवाप्तवान् ॥ ५१ ।
तस्य प्रसन्नो भगवान् द्युमणिः प्रत्यभाषत।
किङ्कारणं बले ब्रूहि तपस्यति† महत्तपः ॥ ५२ ।
बलिरुवाच।
भ्रष्टराज्योऽस्मि देवेश पाताले निवसाम्यहम्।
वित्तेनापि विहीनस्य कुटुम्बभरणङ्कुतः ॥ ५३ ।
मुकुटात्तस्य वै सूर्य्यो ददौ चिन्तामणिं ततः।
चिन्तामणिं समासाद्य पातालमगमद्बलिः ॥ ५४ ।
तस्मिंस्तीर्थे नरः स्नातः सर्व्वपापैः प्रमुच्यते।
तत्राऽथ मुञ्चते प्राणान्मम लोकञ्च गच्छति ॥ ५५ ।
आदित्याहनि संक्रान्तौ‡ ग्रहणे चन्द्रसूर्य्ययोः।
तस्मिन् स्नातो नरो देवि राजसूयफलं लभेत्§ ॥ ५६ ।
ध्रुवेण यत्र सन्तप्तं स्वेच्छया परमं तपः।

* स तेपे परमन्तप इति साधु। † भवानिति कर्त्तृपदस्य व्यवहारः कर्त्तव्यः अन्यथा तपस्यसीति कर्त्तव्यम्। ‡ संप्राप्ते इति (ग)। § लभेतेति साधु।

तत्र वै स्नानमात्रेण ध्रुवलोके महीयते ।
तत्राथ मुञ्चते प्राणान्मम लोके महीयते ॥ ५७ ।
ध्रुवतीर्थे तु वसुधे यः श्राद्धं कुरुते नरः ।
पितॄंस्तारयते सर्व्वं पितृपक्षे विशेषतः ॥ ५८ ।
दक्षिणे ध्रुवतीर्थस्य तीर्थराजं प्रकीर्त्तितम् ।
तस्मिन् स्नाते नरो देवि मम लोकम्प्रपद्यते ॥ ५९ ।
तद्दक्षिणे महादेवि ऋषितीर्थं परं मम ।
तत्र स्नातो नरो देवि ऋषिलोकम्प्रपद्यते ।
अथात्र मुञ्चते प्राणान्मम लोके महीयते ॥ ६० ।
दक्षिणे ऋषितीर्थस्य मोक्षतीर्थं परं मम ।
तत्र वै स्नानमात्रेण मोक्षमेव प्रपद्यते ॥ ६१ ।
तत्र वै कोटितीर्थं हि देवानामपि दुर्लभम् ।
तत्र स्नानेन दानेन मम लोके महीयते ॥ ६२ ।
कोटितीर्थे नरः स्नात्वा सन्तर्प्य पितृदेवताः ।
तारिताः पितरस्तेन तथैव प्रपितामहाः ॥ ६३ ।
कोटितीर्थे नरः स्नात्वा ब्रह्मलोके महीयते ॥ ६४ ।
तत्रैव वायुतीर्थन्तु पितॄणामपि दुर्लभम् ।
पिण्डदानात्तु तत्रैव पितृलोकं स गच्छति ॥ ६५ ।
गयापिण्डप्रदानेन यत्फलं लभते नरः ।
तत्फलं लभते देवि ज्येष्ठे दानान्न न संशयः ॥ ६६
द्वादशैतानि तीर्थानि देवानां दुर्लभानि च ।
स्नानं दानं जपं होमं सहस्रगुणितम्भवेत् ॥ ६७ ।

एषां स्मरणमात्रेण सर्व्वपापै: प्रमुच्यते ।
तीर्थानाञ्चैव माहात्म्यं श्रुत्वा कामानवाप्नुयात् ॥ ६८ ।

इति वराहपुराणे मथुरातीर्थप्रशंसा नाम
द्वापञ्चाशदधिकशततमोऽध्याय: ।

## अथ:पञ्चाशदधिकशततमोऽध्याय: ।

वराह उवाच ।

उत्तरे शिवकुण्डाच्च तीर्थानां नवकं स्मृतम् ।
नवतीर्थात्परं तीर्थं न भूतं न भविष्यति ॥ १ ।
तत्रैव स्नानमात्रेण सौभाग्यं जायते परम् ।
रूपवन्त: प्रजायन्ते स्वर्गलोके न संशय: ।
तस्मिन् स्नातो नरो देवि मम लोकम्प्रपद्यते ॥ २ ।
तत्र संयमनं नाम तीर्थं त्रैलोक्यविश्रुतम् ।
यत्र स्नातो मृतो वापि मम लोकं स गच्छति ॥ ३ ।
पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व* वसुन्धरे ।
तस्मिन्संयमने तीर्थे यद्वृत्तं पुरातनम् ॥ ४ ।
कश्चित्पापसमाचारो निषादो दुष्टमानस: ।

* शृणुष्वेति आर्षम्, शृणु इति साधु ।

वसते* नैमिषारण्ये सुप्रतीते सुपापकृत् ॥ ५ ।
केनचित्त्वथ कार्य्येण सोऽगच्छन्मथुरां प्रति ।
तत्र प्राप्य च कालिन्दीं कृष्णपक्षे चतुर्दशीम् ।
स निषादस्तर्त्तुकामस्तस्याश्चैव तिथौ ततः ।
ततार यमुनां सोऽथ प्राप्य संयमनं शुभे ।
ममज्जासौ ततः पापस्तस्मिंस्तीर्थे वरे शुभे ।
मग्नमात्रस्ततः पापः सद्यः प्राणैर्व्ययुज्यत ॥ ६।७।८ ।
तत्तीर्थस्य प्रभावेण जातोऽसौ पृथिवीपतिः ।
सौराष्ट्रविषये देवि क्षत्रियोऽभूद्धनुर्द्धरः ।
नाम्ना यज्ञधनुर्नाम सोऽभवत्प्रियदर्शनः ।
पालयामास वसुधां क्षत्रधर्म्मसमाश्रितः ॥ ९।१० ।
तेनोढ़ा काशीराजस्य पीवरी नामतः शुभा ।
पत्नी शीतानां मुख्यानां प्रवरा सा वसुन्धरे ॥ ११ ।
ताञ्चैव रमयामास उद्यानेषु वनेषु च ।
प्रासादेषु च रम्येषु नदीनां पुलिनेषु च ॥ १२ ।
प्रजाः पालयतस्तस्य दानानि ददतस्तथा ।
कालोगच्छति राजा तु भोगासक्तिञ्च विन्दति† ॥ १३ ।
भोगासक्तस्य वसुधे वर्षाणि‡ सप्तसप्ततिः ।
पुत्त्राः सप्त तथा जाताः कन्याः पञ्च सुशोभनाः ॥ १४ ।
राज्ञां पञ्चसु ता दत्ताः कन्याः कमललोचनाः ।

* वसतीति साधु । † राजस्तु भोगासक्तिञ्च विन्दतीति बहुषु पाठः । ‡ वर्षाण्या-मिति (ग) ।

पुत्रान् संस्थापयामास स्थानेषु वसुधाधिपान् ॥ १५ ।
पीवर्य्या सह सुप्तः स रात्रौ च वसुधाधिपः ।
तत्र प्रबुद्धो नृपतिर्हा हेति वदते मुहुः ।
स्मृत्वा तु मथुरां देवि स्मृत्वा संयमनं परम् ॥ १६ ।
ततः सा पीवरीत्याह किमेवं भाषसे नृप* ।
प्रियाया वचनं श्रुत्वा राजा वचनमब्रवीत् ।
मत्तः सुप्तः प्रमत्तश्च असम्बद्धं प्रभाषते ।
निद्रावशस्य वचनं न सम्प्रष्टुन्त्वमर्हसि ॥ १७।१८ ।

पीवर्य्युवाच ।

कथयस्व ममाद्य त्वं यद्यहं वल्लभा तव ।
प्राणांस्त्यक्ष्याम्यहं देव गोपयिष्यसि मे यदि ॥ १९ ।
प्रियाया वचनं श्रुत्वा प्रत्युवाच नराधिपः ।
अवश्यं यदि वक्तव्यं गच्छावो मथुरां पुरीम् ।
तत्र गत्वा यथातत्त्वं वदिष्यामि शुभानने ॥ २० ।
ददस्व विपुलं दानं ब्राह्मणेभ्यः सुलोचने ।
पुत्रान् संस्थाप्य दौहित्रान् स्वे स्वे स्थाने शुभान् प्रिये ।
कोशं रत्नानि ग्रामांश्च पुत्रान्वीक्ष्य पुनः पुनः ॥ २१ ।
ततः सम्मानयामास जनं पुरनिवासिनम् ।

* ततः सा पीवरी राज्ञी भर्त्तारं पर्य्यपृच्छत । किं त्वया भाषितं राजन् मथुरेति पुनः पुनः ॥ एवं सा पृच्छते देवी भर्त्तारं शुभलोचना । इति (ग) पुस्तकेऽत्र पाठभेदः ।
अत्र प्रच्छधातोरात्मनेपदमार्षम् ।

पितृपैतामहं राज्यं पालनीयं यथाक्रमम् ।
राज्ये पुत्रान्नियोक्ष्यामि यदि वो रोचतेऽनघाः ॥ २२ ।
राज्यपुत्रकलत्राणि बन्धुवर्गं तथैव च ।
नित्यमिच्छन्ति वै लोका यमस्येच्छा नि* चान्यथा ।
एवं ज्ञात्वा प्रयत्नेन कर्त्तव्यश्चात्मनो हितम् ।
तस्मात्सर्व्वप्रयत्नेन गच्छामो मथुरां पुरीम् ॥ २३।२४ ।
अहो कष्टं यदस्माभिः पुरा राज्यमनुष्ठितम् ।
इदानीन्तु मया ज्ञातं त्यागान्नास्ति परं सुखम् ॥ २५ ।
नास्ति विद्यासमञ्चक्षुर्नास्ति चक्षुःसमं बलम् ।
नास्ति रागसमं दुःखं नास्ति त्यागात्परं सुखम् ॥ २६ ।
यः कामान्कुरुते सर्व्वान्यश्चैतान् केवलांस्त्यजेत् ।
प्रायेण सर्व्वकामानां परित्यागो विशिष्यते ॥ २७ ।
अभिषिच्य सुतं ज्येष्ठमनुयोज्य परान्बहून् ।
ततः पौरजनं दृष्ट्वा चतुरङ्गबलान्वितः ।
ततः कालेन महता सम्प्राप्तो मथुरां पुरीम् ॥ २८ ।
तेन दृष्टा पुरी रम्या वासवस्य पुरी यथा ।
तीर्थैर्द्वादशभिर्युक्ता पुण्या पापहरा शुभा ॥ २९ ।
रम्यं मधुवनं नाम विष्णुस्थानमनुत्तमम् ।
तं दृष्ट्वा मनुजो देवि कृतकृत्यो हि जायते ॥ ३० ।
एकादशी शुक्लपक्षे मासि भाद्रपदे तथा† ।
तस्यां‡ स्नातो नरो देवि कृत्यकृत्यो हि जायते ॥ ३१ ।

---

* इच्छानीति कौवत्समार्षम । † हि या इति (ग) । ‡ तस्मिन्निति (ग) ।

वनं कुन्दवनं नाम तृतीयञ्चैवमुत्तमम् ।
तत्र गत्वा नरोदेवि कृतकृत्यो हि जायते ॥ ३२ ।
एकादशी कृष्णपक्षे मासि भाद्रपदे हि या ।
तत्र स्नातो नरो देवि रुद्रलोके महीयते ॥ ३३ ।
चतुर्थङ्काम्यकवनं वनानां वनमुत्तमम्* ।
तत्र गत्वा नरो देवि मम लोके महीयते ॥ ३४ ।
विमलस्य च कुण्डे तु सर्व्वपापैः प्रमुच्यते ।
यस्तत्र मुञ्चते प्राणान्मम लोकं स गच्छति ॥ ३५ ।
पञ्चमम्बकुलवनं नाम वनानामुत्तमं वनम् ।
तत्र गत्वा नरो देवि अग्निस्थानं स गच्छति ॥ ३६ ।
यमुनायाः परे पारे देवानामपि दुर्ल्लभम् ।
अस्ति भद्रवनं नाम षष्ठं वनमनुत्तमम् ॥ ३७ ।
तत्र गत्वा तु वसुधे मद्भक्तो मत्परायणः ।
तद्वनस्य प्रभावेण नागलोकं स गच्छति ॥ ३८ ।
सप्तमन्तु वनं भूमि खादिरं लोकविश्रुतम् ।
तत्र गत्वा नरोभद्रे मम लोकं स गच्छति ॥ ३९ ।
महावनञ्चाष्टमन्तु सदैव तु मम प्रियम् ।
यत्र गत्वा तु मनुज इन्द्रलोके महीयते ॥ ४० ।
लोहजङ्घवनं नाम लोहजङ्घेन रक्षितम् ।
नवमन्तु वनं नाम सर्व्वपातकनाशनम् ॥ ४१ ।

---

* चतुर्थं बहुलवनं नाम वनानामुत्तमं वनमिति (ग) ।

वनं बिल्ववनं नाम दशमं देवपूजितम् ।
तत्र गत्वा तु मनुजो ब्रह्मलोके महीयते ॥ ४२ ॥
एकादशन्तु भाण्डीरं योगिनां प्रियमुत्तमम् ।
तस्य दर्शनमात्रेण नरो गर्भं न गच्छति ॥ ४३ ॥
भाण्डीरं समनुप्राप्य वनानां वनमुत्तमम् ।
वासुदेवं ततो दृष्ट्वा पुनर्जन्म न विद्यते ॥ ४४ ॥
वृन्दावनं द्वादशमं वृन्दया परिरक्षितम् ।
मम चैव प्रियं भूमे महापातकनाशनम् ॥ ४५ ॥
वृन्दावनञ्च गोविन्दं ये पश्यन्ति वसुन्धरे ।
न ते यमपुरं यान्ति यान्ति पुण्यकृताङ्गतिम् ॥ ४६ ॥

इति वराहपुराणे भगवच्छास्त्रे मथुरातीर्थमाहात्म्यवर्णनं नाम
त्रय:पञ्चाशदधिकशततमोऽध्याय: ।

## चतु:पञ्चाशदधिकशततमोऽध्याय: ।

वराह उवाच ।

एवंविधाञ्च मथुरां दृष्ट्वा तौ मुदमापतु: ।
एवन्तु वसतस्तस्य राज्ञस्तत्र वसुन्धरे ।
पप्रच्छ च तदा भार्य्या यद्दृष्टं पूर्व्वभाषितम् ॥ १ ॥
पुरस्थेन तदा राज्ञा वक्ष्यामि मथुराम्प्रति ।

तन्मे वद महाराज यन्नोक्तं पूर्व्वभाषितम्॥ २।
राजाप्युवाच तां राज्ञीं त्वयाप्युक्तं पुरा मम।
तद्वदस्व स्वकं गुह्यं पश्चाद्वक्ष्याम्यहन्तव ३।
इत्युक्ता पीवरी स्नात्वा प्रहस्य तु गुणालया।
प्रोवाच चैव राजानं मनसः प्रीतिकारणम्॥ ४।
अहन्तु पीवरी नाम गङ्गातीरनिवासिनी।
आगतेमां पुरीं द्रष्टुं कुमुदस्य तु द्वादशीम्॥ ५।
नावमारुह्य यान्तीह पतिता यमुनाजले।
सद्यः प्राणैर्वियुक्ता च तत्तीर्थस्य प्रभावतः॥ ६।
काशीराजपतेः कन्या जाताऽस्मि वसुधाधिप।
त्वया विवाहिता राजन्न च मां विजहात् स्मृतिः॥ ७।
एतत्तीर्थप्रभावेण धर्म्मयुक्ता तथाऽनघ।
धारापतनके तीर्थे त्यक्ता जीवितमात्मनः॥ ८।
एतच्छ्रुत्वा ततो राजा कथां प्राग्जन्मसम्भवान्।
स्वाश्चाप्यकथयत्तस्यै यथा संयमने मृतः॥ ९।
एवं तौ मथुराम्प्राप्य स्नात्वा यामुनतीर्थयोः।
मां पश्यन्तौ नियमतस्तत्रैव निधनं गतौ।
मतौ सर्व्वपरित्यक्तौ गतौ मम सलोकताम्॥ १०।
एतत्ते कथितं देवि आश्चर्य्यं यदभून्महत्।
त्यक्ता चात्मतनुं तीर्थे धारापतनसंज्ञके।
नाकलोकमवाप्नोति त्यक्तपापो न संशयः॥ ११।
यमुनेश्वरमासाद्य त्यक्ता जीवितमात्मनः।

विष्णुलोकमवाप्नोति दिव्यमूर्त्तिश्चतुर्भुजः ॥ १२ ।
धारापतनके स्नात्वा वैनाकलोके समोदते ।
अथात्र मुञ्चते प्राणान्मम लोकं स गच्छति ॥ १३ ।
अतः परं नागतीर्थं तीर्थानामुत्तमोत्तमम् ।
यत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ १४ ।
घण्टाभरणकं तीर्थं सर्व्वपापप्रमोचनम् ।
यस्मिन्स्नातो नरो याति सूर्य्यलोकं न संशयः ।
अथाऽत्र मुञ्चते प्राणान्मम लोकं स गच्छति ॥ १५ ।
पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तीर्थानामुत्तमं तीर्थं ब्रह्मलोकेषु विश्रुतम् ॥ १६ ।
तत्र स्नात्वा च पीत्वा च नियतो नियताशनः ।
ब्रह्मणा समनुज्ञातो मम लोकं स गच्छति ॥ १७ ।
सोमतीर्थे तु वसुधे पवित्रे यमुनाम्भसि ।
यत्र मां पश्यते सोमो द्वापरे युगसंस्थिते ॥ १८ ।
तत्राभिषेकं कुर्व्वीत स्वकर्म्मपरिनिष्ठितः ।
मोदते सोमलोके तु एवमेव न संशयः ।
अथात्र मुञ्चते प्राणान्मम लोकं स गच्छति ॥ १९ ।
सरस्वत्याश्च पतनं सर्व्वपापहरं शुभम् ।
तत्र स्नातो नरो देवि अवर्णोऽपि यतिर्भवेत् ॥ २० ।
पुनरन्यत्प्रवक्ष्यामि माथुरे मम मण्डले ।
यस्तत्र कुरुते स्नानं त्रिरात्रोपोषितो नरः ।
स्नानमात्रेण मनुजो मुच्यते ब्रह्महत्यया ।

अथाऽत्र मुञ्चते प्राणान्मम लोकं स गच्छति ॥ २१।२२ ।
दशाश्वमेधमृषिभिः पूजितं सर्व्वदा मुदा ।
तत्र ये स्नान्ति नियतास्तेषां स्वर्गो न दुर्लभः ॥ २३ ।
मथुरापश्चिमे पार्श्वे सततमृषिपूजितम् ।
ब्रह्मणा सृष्टिकाले तु मनसा निर्म्मितं पुरा ।
मानसं नाम तीर्थन्तु ऋषिभिः पूजितं पुरा ।
तत्र स्नाता दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ २४।२५ ।
तीर्थन्तु विघ्नराजस्य पुण्यं पापहरं शुभम् ।
तत्र स्नातान्मनुष्यांश्च विघ्नराजो न पीड़येत् ॥ २६ ।
अष्टम्याञ्च चतुर्द्दश्यां चतुर्थ्यान्तु विशेषतः ।
तस्मिंस्तीर्थवरे स्नातं न पीड़यति विघ्नराट् ॥ २७ ।
विद्यारम्भेषु सर्व्वेषु यज्ञदानक्रियासु च ।
अविघ्नं कुरुते तस्य सततं पार्व्वतीसुतः ।
तत्राथ मुञ्चते प्राणान्मम लोकं स गच्छति ॥ २८ ।
ततः परे कोटितीर्थं पवित्रं परमं स्मृतम् ।
तत्र वै स्नानमात्रेण गवां कोटिफलं लभेत् ॥ २९ ।
तथात्र* मुञ्चते प्राणांल्लोभमोहविवर्ज्जितः ।
सोमलोकमतिक्रम्य मम लोकञ्च गच्छति ॥ ३० ।
अतःपरं शिवक्षेत्रमर्द्धक्रोशन्तु दुष्करम् ।
तत्र स्थितो हरो देवो मथुरां रक्षते† सदा ॥ ३१ ।

* तत्राथेति (ग)। † रक्षतीति साधु।

तत्र स्नात्वा च पीत्वा च माथुरं लभते फलम्।
अथाऽत्र मुञ्चते प्राणान्मम लोकं स गच्छति॥ ३२

इति वराहपुराणे यमुनातीर्थप्रभाववर्णनो नाम

चतुःपञ्चाशदधिकशततमोऽध्यायः।

## पञ्चपञ्चाशदधिकशततमोऽध्यायः।

वराह उवाच।

पुनरन्यत्प्रवक्ष्यामि मर्त्यलोके सुदुर्लभम्*।
अनन्तं विदितं तीर्थमचलं ध्रुवमव्ययम्॥ १।
तत्र नित्यं स्थितो देवि लोकानां हितकाम्यया।
मां दृष्ट्वा मनुजा देवि मुक्तिभाजो भवन्ति ते॥ २।
अयने विषुवे चैव तथा विष्णुपदीषु च।
अनन्तं तं समासाद्य मुच्यते सर्व्वपातकैः॥ ३।
अक्रूरेति च विख्यातं मम क्षेत्रं वसुन्धरे।
तत्र स्नात्वा महाभागे राहुग्रस्ते दिवाकरे।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः॥ ४।
तीर्थराजं हि चाक्रूरं गुह्यानां गुह्यमुत्तमम्।
तत्स्नानात्फलमाप्नोति प्रयागस्नानजं फलम्॥ ५।

* मर्त्यलोकेषु दुर्लभमिति (ग)।

यस्मिंस्तीर्थे पुरावृत्तं तच्छृणुष्व वसुन्धरे ।
नाम्ना तु सुधनो नाम मम भक्तः सदैव हि ।
धनधान्यसमायुक्तः सुतयुक्तः* सदैव हि ॥ ६ ॥
बन्धुपुत्रकलत्रैश्च गृहे प्रीतिरनुत्तमा ।
पुत्रदारसमेतस्य मयि भक्तिर्वसुन्धरे ॥ ७ ॥
गच्छन्ति दिवसास्तस्य मासाः संवत्सरास्तथा ।
करोति गृहकृत्यानि धर्मोपायेन नित्यशः ।
मानकूटं तुलाकूटं न करोति स कर्हिचित्† ॥ ८ ॥
एवञ्च वसतस्तस्य बहवो वत्सरा गताः ।
नित्यकालञ्च कुरुते हरिपूजनमुत्तमम् ।
पुष्पदीपप्रदानेन चन्दनेन सुगन्धिना ।
उपहारेण दिव्येन धूपेन च सुगन्धिना ॥ ९ ॥
एकादश्यान्तु कुरुते पक्षयोरुभयोरपि ।
उपवासं तु कुरुते रात्रौ जागरणं तथा ॥ १० ॥
स गच्छति यथाकालमक्रूरं तीर्थमुत्तमम् ।
तत्रागत्य ममाग्रेऽसौ नृत्यते‡ शुभदर्शनः ॥ ११ ॥
सुधनस्तु वणिक्श्रेष्ठः कदाचिद्रात्रिजागरे ।
गच्छमानो§ गृहीतस्तु चरणे ब्रह्मरक्षसा ॥ १२ ॥
कृष्णवर्णो महाकाय ऊर्द्ध्वकेशो भयङ्करः ।

* बन्धुयुक्तः सदैव हीति (ग) । † स कदाचिदिति (क), (ख) । ‡ नृत्यतीति साधु । § गच्छन्निति साधु ।

पादे गृहीत्वा वसुधे इदं वचनमब्रवीत् ॥ १३ ।
राक्षसोऽहं वणिकश्रेष्ठ वसामि वनमाश्रितः ।
त्वामद्य भक्षयिष्यामि तृप्तिं यास्यामि शाश्वतीम् ॥ १४

सुधन उवाच ।

प्रतीक्षस्व क्षणं मेऽद्य* दास्यामि तव पुष्कलम् ।
भक्षयिष्यसि मे गात्रं मिष्टान्नपरिपोषितम् ॥ १५ ।
जागरं देवदेवस्य कर्त्तुमिच्छामि राक्षस ।
मम व्रतं सार्व्वकालं यज्जागर्मि हरेः पुरः ॥ १६ ।
तत्र जागरणङ्कृत्वा प्रभाते तव सन्निधौ ।
आगमिष्याम्यहं शीघ्रमादित्योदयनम्प्रति ॥ १७ ।
ततः खादिष्यसे‡ गात्रं विनिवृत्तस्य जागरात् ।
विष्णुतुष्ट्यै व्रतमिदमारब्धं सर्व्वकामदम् ॥ १८ ।
मा कुरु व्रतभङ्गं मे रक्षो नारायणस्य हि ।
जागरे विनिवृत्ते तु मां भक्षय यथेप्सितम् ॥ १९ ।
सुधनस्य वचः श्रुत्वा ब्रह्मरक्षः क्षुधार्द्दितः ।
उवाच मधुरं वाक्यं वणिजं प्रति सादरम् ॥ २० ।
मिथ्या प्रभाषसे साधो त्वं पुनः कथमेष्यसि ।
को हि रक्षोमुखाद्भ्रष्टो मानुषो यो निवर्त्तते ॥ २१ ।
राक्षसस्य वचः श्रुत्वा स वणिग्वाक्यमब्रवीत् ।
सत्यमूलं जगत्सर्व्वं सर्व्वं सत्ये प्रतिष्ठितम् ।

---

* दिनं मेऽद्येति (ग) । † खादिष्यसीति साधु ।

सिद्धिं लभन्ते सत्येन ऋषयो वेदपारगाः॥ २२।
यद्यहञ्च वणिक् पूर्व्वं कर्म्मणा न हि दूषितः।
प्राप्तश्च मानुषो भावो विहितेनान्तरात्मना।
शृणु मत्समयं रक्षो येनाहं पुनरागमम्* ॥ २३।
कृत्वा जागरणं तत्र नृत्यङ्कृत्वा यथासुखम्।
पुनरेष्याम्यहं रक्षो नासत्यं विद्यते मयि॥ २४।
सत्येन दीयते कन्या सत्यं जल्पन्ति† ब्राह्मणाः।
सत्योत्तीर्णा हि राजानः सत्येन वसुधा धृता॥ २५।
स्वर्गमिच्छन्ति सत्येन मोक्षः सत्येन लभ्यते।
सत्येन सूर्य्यस्तपति सोमः सत्येन राजते॥ २६।
यमः सत्येन हरति सत्यादिन्द्रो विराजते।
तत्सत्यं मम नश्येत‡ यद्यहं नागमे§ पुनः॥ २७।
परदारांस्तु यो गच्छेत्काममोहप्रपीड़ितः।
तस्य पापेन लिप्येऽहं यदि नायामि ते पुनः॥ २८।
यो वै रजस्वलाङ्गच्छेत्काममोहप्रपीड़ितः।
तेन पापेन लिप्येऽहं¶ यदि नायामि ते पुरः॥ २९।
दत्त्वा च भूमिदानं यो ह्यपकारङ्करोति च।
तेन पापेन लिप्येऽहं‖ यद्यहं नागमे पुनः॥ ३०।

* पुनरागमिष्यामीति साधु। † (ग) पुस्तकेऽतः परं सार्द्धं चरणपञ्चकं नास्ति। ‡ नश्येदिति साधु। § नागच्छेयमिति साधु, एवं परत्रापि। ¶ लिप्येयमिति (ग)। ‖ लिप्येयमिति (ग)।

पूर्व्वं भुक्त्वा स्त्रियं यस्तु सुखमाप्य विहाय च ।
देशान्तां यदि चेन्नयामि तत्पापं मे भवत्वलम् ॥ ३१ ।
पङ्क्तिभेदन्तु यः कुर्य्यादेकपङ्क्त्यागिनां ध्रुवम् ।
तस्य पापेन लिप्येऽहं नागत्वा* यदि ते पुरः ॥ ३२ ।
अमावस्यां महारक्षः श्राद्धङ्कृत्वा स्त्रियं व्रजेत् ।
तेन पापेन लिप्येऽहं† यद्यहं नागमे पुनः ॥ ३३ ।
षष्ठ्यष्टमी त्वमावस्या उभे पक्षे चतुर्द्दशी ।
अस्नातानां गतिं गच्छेम्‡ यद्यहं नागमे पुनः ॥ ३४ ।
गुरोर्भ्रातुः सुतस्यापि सख्युर्वै मातुलस्य च ।
व्यवस्यति च यन्नारीं यो मोहेन विमोहितः§ ।
अभिगच्छति मन्दात्मा तत्पापं मे भवेत्तदा ॥ ३५ ।
राजपत्नीं ब्रह्मपत्नीं विधवां योऽभिगच्छति ।
तस्य पापेन लिप्येऽहं यद्यहं नागमे पुनः¶ ॥ ३६ ।
यस्तु कन्यां सकृद्दत्त्वा अन्यस्मै चेत्पुनर्द्ददेत्‖ ।
तेन पापेन लिप्येऽहं** यद्यहं नागमे पुनः ॥ ३७ ।
राजयाजकयाज्याश्च ये च वै ग्रामयाजकाः ।
तेषां पापेन लिप्येऽहं†† यद्यहं नागमे पुनः ॥ ३८ ।
ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे ।

* नागत इति क, (ख)। † लिप्येयमिति (ग)। ‡ गच्छेयमिति साधु। § पितृव्यपत्नीं यो गच्छेन्मोहेन हि विमोहित इति (ग)। ¶ लिप्येयं यदि नायामि तेऽन्तिकमिति (ग)। ‖ दद्यादिति साधु। ** लिप्येयमिति (ग)। †† लिप्येयमिति (ग)।

या गतिस्तां प्रपद्येऽहं यद्यहं नागमे पुनः । ३९ ।

वराह उवाच ।

सुधनस्य वचः श्रुत्वा सन्तुष्टो ब्रह्मराक्षसः ।
उवाच मधुरं वाक्यं गच्छ शीघ्रं नमोऽस्तु ते ॥ ४० ।
ब्रह्मराक्षसमुक्तोऽसौ वणिक् तु दृढनिश्चयः ।
पुनर्नृत्यति चैवाग्रे मम भक्तो व्यवस्थितः ॥ ४१ ।
अथ प्रभातसमये नृत्यचित्तोऽतिकोविदः ।
पुनः पुनर्वै उच्चार्य्य नमो नारायणाय च ।
निवृत्ते जागरे सोऽथ कालिन्दीसलिलाप्लुतः ।
दृष्ट्वा मां दिव्यरूपन्तु गतोऽसौ मथुरां पुरीम् ॥ ४२।४३ ।
दृष्टश्चाग्रे त्वहं तेन पुरुषो दिव्यरूपवान् ।
स च पृष्टो मया देवि क्व भवान्प्रस्थितो द्रुतम् ॥ ४४ ।
पुरुषस्य वचः श्रुत्वा सुधनो वाक्यमब्रवीत् ।
अहङ्गच्छामि त्वरितो ब्रह्मराक्षससन्निधौ ॥ ४५ ।
निवारयामास तदा न गन्तव्यं त्वयानघ ।
जीवतो धर्म्ममाहात्म्यं मृते धर्म्मः कुतो यशः ॥ ४६ ।
पुरुषस्य वचः श्रुत्वा स वणिग्वाक्यमब्रवीत् ।
तत्र सत्यं वदिष्यामि यास्ये* राक्षससन्निधौ ॥ ४७ ।
आगतोऽहं महाभाग नर्त्तयित्वा यथासुखम् ।
विष्णवे लोकनाथाय आगतो† हरिजागरात् ॥ ४८ ।

* यास्यामीति ङा०। † आयात इति (ग०)।

इदं शरीरं मे रक्षो भक्षयस्व यथेप्सितम् ।
यथान्यायं विधानेन यथा वा तव रोचते ॥ ४८ ।
नोक्तपूर्व्वं मयाऽसत्यं कदाचिदपि राक्षसः ।
तेन सत्येन मां भुङ्क्ष्व ब्रह्मराक्षस दारुण ॥ ५० ।
वणिजस्तु वचः श्रुत्वा ततोऽसौ ब्रह्मराक्षसः ।
उवाच मधुरं वाक्यं सुधनं तदनन्तरम् ॥ ५१ ।
साधु तुष्टोऽस्मि भद्रन्ते सत्यं धर्म्मश्च पालितः ।
वणिक् त्वञ्चातिविश्रस्तु यस्य ते गतिरीदृशी ॥ ५२ ।
जागरस्य समस्तस्य मम पुण्यं प्रयच्छ वै ।
सत्य*पुण्यप्रभावेण यथाहं मुक्तिमाप्नुयाम् ॥ ५३ ।

सुधन उवाच ।

नाहं दास्यामि† ते पुण्यं नृत्यस्य नरभोजन ।
अर्द्धं वाथ समस्तं वा प्रहरं चार्द्धमेव वा ॥ ५४ ।
सुधनस्य वचः श्रुत्वा अब्रवीद्ब्रह्मराक्षसः ।
एकनृत्यस्य मे पुण्यं दद‡ त्वं वणिजोत्तम§ ॥ ५५ ।

सुधन उवाच ।

नाऽहं दास्यामि ते पुण्यं यथोक्तञ्च समाचर ।
केन त्वं कर्म्मदोषेण राक्षसत्वमुपागतः ।
यत्ते गुह्यं महाभाग सर्व्वं तत्कथयस्व मे ॥ ५६ ।
सुधनस्य वचः श्रुत्वा विहसित्वा॥ स राक्षसः ।

---

* तस्येति (ग) । † ददामीति (ग) । ‡ देहीति साधु । § वणिगुत्तमेति साधु ।
॥ विहस्येति साधु ।

किं त्वं माञ्च विजानासि प्रतिवासी ह्यहं तव।
अग्निदत्तस्तु वै नाम छान्दसो ब्राह्मणोत्तमः॥ ५७।
इष्टकांस्तु हरन्नित्यं परकीयांश्च सर्व्वदा।
मृतस्तु गृहकामेन राक्षसत्वमुपागतः॥ ५८।
मया त्वं हि यथाप्राप्त उपकारं कुरुष्व मे।
एकविश्रामपुण्यं मे देहि त्वं वणिजोत्तम॥ ५९।
कृपया तु समायुक्तो वणिग्वचनमब्रवीत्।
साधु राक्षस दत्तन्ते एकनृत्यं मया तव।
एकनृत्यप्रभावेण राक्षसो मुक्तिमागतः॥ ६०।

वराह उवाच।

सुधनस्तु ततो देवि विश्वरूपं जनार्द्दनम्।
अग्रतस्तु स्थितं देवं दृष्ट्वाऽसौ धरणीं गतः॥ ६१।
उवाच मधुरं वाक्यं देवदेवो जनार्द्दनः।
चतुर्भुजो दिव्यतनुः शङ्खचक्रगदाधरः॥ ६२।
विमानवरमारुह्य मम लोकं व्रजस्व च*।
इत्युक्त्वा माधवो देवस्तत्रैवान्तरधीयत॥ ६३।
सुधनः सशरीरोऽपि सकुटुम्बो दिवं ययौ।
विमानवरमारुह्य विष्णोर्लोकं जगाम ह॥ ६४।
एष तीर्थप्रभावो वै कथितस्ते वसुन्धरे।
अक्रूराच्च परं तीर्थं न भूतं न भविष्यति।
तस्य तीर्थप्रभावेण सुधनो मुक्तिमाप्तवान्॥ ६५।

* व्रज इति साधु।

द्वादशी शुक्लपक्षे तु कुमुदस्य च या भवेत् ।
तस्मिन् स्नातस्य वसुधे राजसूयफलं भवेत् ॥ ६६ ।
कार्त्तिकीं समनुप्राप्य तत्तीर्थे तु वसुन्धरे ।
वृषोत्सर्गं नरः कुर्व्वंस्तारयेत्स्वकुलोद्भवान् ॥ ६७ ।
श्राद्धं यः कुरुते सुभ्रु कार्त्तिक्यां प्रयतोनरः ।
पितरस्तारितास्तेन सदैव प्रपितामहाः ॥ ६८ ।

इति वराहपुराणे मथुरामाहात्म्ये चक्रतीर्थप्रभावो नाम
पञ्चपञ्चाशदधिकशततमोऽध्यायः ।

## षट्पञ्चाशदधिकशततमोऽध्यायः ।

वराह उवाच ।

वत्सक्रीडनकं नाम तीर्थं वक्ष्ये परं* मम ।
तत्र रक्तशिलाबद्धं रक्तचन्दनभूषितम् ।
स्नानमात्रेण तत्रैव वायुलोकं व्रजेन्नरः ।
तत्राऽथ मुञ्चते प्राणान्मम लोके महीयते ॥ १।२ ।
पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
अस्ति भाण्डीरकं नाम यत्तीर्थं परमुत्तमम् ।
शालैस्तालैश्च तरुभिस्तमालैरर्ज्जुनैस्तथा ।

---

* चैत्रे परमिति (ग) ।

इङ्गुदैः पीलुकैश्चैव करीरैरम्लपुष्पकैः॥ ३।४।
तस्मिन् भाण्डीरके स्नातो नियतो नियताशनः।
सर्व्वपापविनिर्मुक्त इन्द्रलोकं स गच्छति।
तत्राऽथ मुञ्चते प्राणान्मम लोकञ्च गच्छति॥ ५।
पुनरन्यत्प्रवक्ष्यामि क्षेत्रं वृन्दावनं मम।
तत्राहं क्रीड़यिष्यामि गोभिर्गोपालकैः सह।
रम्यञ्च* सुप्रतीतञ्च देवदानवदुर्लभम्॥ ६।
तत्र कुण्डे महाभागे बहुगुल्मलतावृते।
तत्र स्नानम्प्रकुर्व्वीत एकरात्रोषितोनरः।
गन्धर्व्वैरप्सरोभिश्च क्रीड़मानः स मोदते।
तत्राऽथ मुञ्चते प्राणान्मम लोकञ्च गच्छति॥ ७।८।
पुनरन्यत्प्रवक्ष्यामि महापातकनाशनम्।
तत्र वृन्दावने तीर्थे यत्र केशी निपातितः।
तीर्थं शतगुणं† पुण्यं यत्र केशी निपातितः।
केश्यः शतगुणं पुण्यं यत्र विश्रमते हरिः।
तस्माच्छतगुणम्पुण्यं नात्र कार्य्या विचारणा॥ ९।१०।
तत्रापि च विशेषोऽस्ति केशीतीर्थे वसुन्धरे।
तस्मिन्पिण्डप्रदानेन गयातुल्यफलं भवेत्।
स्नाने दाने तथा होमे अग्निष्टोमफलम्भवेत्‡॥ ११।
सूर्य्यतीर्थेषु वसुधे द्वादशादित्यसंज्ञके।

* सुरम्यमिति (ग)। † गङ्गाशतगुणमिति (ग)। ‡ शुभे इति (ग)।

कालियो रमते तत्र कालिन्द्याः सलिले शुभे ॥ १२ ।
कालियो दमित*स्तत्र आदित्याः स्थापिता मया ।
वरं वृणुध्वं भद्रं वो यद्वो मनसि वर्त्तते ॥ १३ ।

आदित्या ऊचुः ।

वरं ददासि नो देव वरार्हा यदि वा वयम् ।
अस्मिंस्तीर्थवरे स्नानमस्माकं सम्प्रदीयताम्† ॥ १४ ।
आदित्यानां वचः श्रुत्वा क्रीड़ां कृत्वा वसुन्धरे ।
स्नानमात्रेण तत्रैव मुच्यते सर्व्वकिल्बिषैः ।
अथाऽत्र मुञ्चते प्राणान्मम लोकं स गच्छति ॥ १५ ।
उत्तरे हरिदेवस्य दक्षिणे कालियस्य तु ।
अनयोर्द्देवयोर्मध्ये ये मृतास्तेऽपुनर्भवाः ॥ १६ ।

इति वराहपुराणे मथुरामाहात्म्ये मथुराप्रादुर्भावो नाम

षट्पञ्चाशदधिकशततमोऽध्यायः ।

## सप्तपञ्चाशदधिकशततमोऽध्यायः ।

### वराह उवाच

यमुनापारमुल्लङ्घ्य तत्रैव च महामुने ।
मलयार्ज्जुनकं तीर्थं कुण्डं तत्र च विद्यते ॥ १ ।

* आदित्योऽदमित इति (क), (ख) । † सम्प्रदायितमिति (क), (ख) ।

पर्यस्तं तत्र शकटं भिन्नभाण्डकुटीघटम् ।
तत्र स्नानोपवासाभ्यामनन्तं फलमश्नुते ॥ २ ।
द्वादश्यां शुक्लपक्षस्य ज्यैष्ठमासे वसुन्धरे ।
तत्र स्नानेन दानेन महापातकनाशनम् ॥ ३ ।
ज्यैष्ठस्य शुक्लद्वादश्यां स्नात्वा सुनियतेन्द्रियः ।
मथुरायां हरिं दृष्ट्वा प्राप्नोति परमाङ्गतिम् ॥ ४ ।
यमुनासलिले स्नातः शुचिर्भूत्वा जितेन्द्रियः ।
समभ्यर्च्याच्युतं सम्यक् प्राप्नोति परमाङ्गतिम् ॥ ५ ।
अपि चास्मत्कुले जातः कालिन्दीसलिले प्लुतः ।
अर्चयिष्यति गोविन्दं मथुरायामुपोषितः ।
इति गायन्ति पितरः परलोकगताः* सदा ॥ ६ ।
ज्यैष्ठमासे तु द्वादश्यां समभ्यर्च्य जनार्द्दनम् ।
धन्योऽसौ पिण्डनिर्वापं यमुनायां करिष्यति ॥ ७ ।
तत्रैव तु महातीर्थे वने बहुलसंज्ञके ।
तत्र स्नातो नरो देवि रुद्रलोके महीयते ॥ ८ ।
चैत्रमासे तु द्वादश्यां शुक्लपक्षे वसुन्धरे ।
तत्र स्नातो नरो याति मम लोकं न संशयः ॥ ९ ।
अस्ति भाण्डह्रदं नाम परपारेषु दुर्लभम् ।
दृश्यन्तेऽहरहस्तत्र आदित्याः शुभकारिणः ॥ १० ।
तत्र चार्कस्थले कुण्डे स्नानं यः कुरुते नरः ।

* परलोकं गताः इति (ग) ।

सर्व्वपापविनिर्मुक्तः सूर्य्यलोकं* प्रजेश्वरः ।
तत्राऽथ मुञ्चते प्राणान्मम लोकं स गच्छति ॥ ११
अर्कस्थलसमीपे तु कूपस्तु विमलोदकम् ।
सप्तसामुद्रकं नाम देवानामपि दुर्लभम् ॥ १२ ।
तत्र स्नानेन वसुधे स्वच्छन्दगमनालयः ।
अथात्र मुञ्चते प्राणान्मम लोकं स गच्छति ॥ १३ ।
तत्र वीरस्थलं नाम क्षेत्रं गुह्यं परं मम ।
आसन्नसलिलञ्चैव पद्मोत्पलविभूषितम् ॥ १४ ।
यस्तत्र कुरुते स्नानमेकरात्रोषितो नरः ।
स मत्प्रसादात्सुश्रोणि वीरलोके महीयते ।
अथाऽत्र मुञ्चते प्राणान्मम लोकं स गच्छति ॥ १५ ।
कुशस्थलञ्च तत्रैव पुण्यं पापहरं शुभम् ।
तत्र स्नातो नरो देवि ब्रह्मलोके महीयते ।
अथात्र मुञ्चते प्राणान्मम लोकं स गच्छति ॥ १६ ।
तत्र पुष्पस्थलं नाम शिवक्षेत्रमनुत्तमम् ।
तत्र स्नानेन मनुजः शिवलोके महीयते ॥ १७ ।
एते पञ्चस्थलाख्याता† महापापविनाशनाः ।
तेषु स्नानेषु वसुधे ब्रह्मणा सह मोदते ।
तत्र गोपीश्वरोनाम महापातकनाशनः ॥ १८ ।
कृष्णस्य रमणार्थं हि सहस्राणि च षोड़श ।

* सूर्य्यलोके इति (ग) । † एतत्पञ्चस्थलाख्यानमिति बहुषु पाठः ।

गोप्योरूपाणि चक्रे च तत्र क्रीड़नके हरिः॥
यदा बालेन कृष्णेन भग्नार्जुनयुगं तथा।
शकटञ्च तदा भिन्नं घटभाण्डकुटीरकम्॥ १९।२०।
ताभिस्तत्रैव गोविन्दं क्रीड़न्तञ्च यदृच्छया।
परिष्वज्य* हि धर्म्मेण व्याजेन च सुगोपितम्।
मातलिस्तत्र चागत्य देवैरुक्तं यथोदितम्।
गोपवेशधरं देवमभिषिक्तञ्चकार ह॥ २१।२२।
आनीय सप्त कलशानौषधिपरिप्लुतान्।
गोपीमण्डलपातेन स्नापितो हेमकुण्डलः।
गोप्यो गायन्ति नृत्यन्ति कृष्ण कृष्ण इति ब्रुवन्† ॥ २३।
तत्र गोपीश्वरं देवं मातलिः स्थाप्य‡ पूजितम्।
कूपञ्च स्थापयामास माङ्गल्यैः कलशैः§ शुभैः।
सप्तसामुद्रिकं नाम कूपन्तु विमलोदकम्॥ २४।
देवस्याग्रे तु वसुधे गोपा यस्य महात्मनः।
पितरश्चापि नन्दन्ति पानीयं पिण्डमेव च॥ २५।
सप्तसामुद्रिके कूपे यः श्राद्धं सम्प्रदास्यति।
पितरस्तारितास्तेन कुलानां सप्तसप्ततिः॥ २६।
सोमवारे त्वमायां वै पिण्डदानङ्करोति यः।
पितरस्तस्य तृप्यन्ति कोटिवर्षशतान्यलम्॥ २७।
गोविन्दस्य च देवस्य तथा गोपीश्वरस्य च।

---

* परिष्वक्तमिति (ग)। † ब्रुवत्य इति साधु। ‡ स्थापयित्वेति साधु। § कवचैरिति (ग)।

मध्ये तु मरणं यस्य गच्छन्ति मम कर्माम ।
तथा बहुलवनस्य गोविन्दस्यैव सन्ततः ।
तदद्वयाणमासास्य गोपीशस्यैव सन्ततः ॥ २८।२९ ।
एवं तु स्नानदानेन विष्णुपातेन भामिनि ।
नरस्तारयते पुंसां दश पूर्वान्दशापरान् ॥ ३० ।
एषु स्नातो नरो देवि देवैः सह मोदते ।
तत्राऽथ मुञ्चते प्राणान्मम लोकं स गच्छति ॥ ३१ ।
वसुपत्रं महातीर्थं पुण्यं परममुत्तमम् ।
मथुरादक्षिणे पार्श्वे क्षेत्रं फाल्गुनकं तथा ।
तत्र स्नात्वा च पीत्वा च परलोके महीयते ॥ ३२ ।
तत्र फाल्गुनके चैव तीर्थे परमदुर्लभे ।
वृषभाञ्जनकं नाम क्षेत्रं मे दुर्लभं महत् ॥ ३३ ।
तत्राभिषेकं यः कुर्य्यात्स देवैः सह मोदते ।
तत्र यो मुञ्चते प्राणान्मम लोकं स गच्छति ॥ ३४ ।
अस्ति तालवनं नाम धेनुकासुररक्षितम् ।
मथुरापश्चिमे भागे अदूरादर्द्धयोजनम् ॥ ३५ ।
तत्र कुण्डं स्वच्छजलं नीलोत्पलविभूषितम् ।
तत्र स्नानेन दानेन वाञ्छितं फलमाप्नुयात् ॥ ३६ ।
अस्ति सम्पीठकं नाम अस्मिन् क्षेत्रे परं मम* ।
तत्र कुण्डं विशालाक्षि प्रसन्नसलिलं शुभम् ॥ ३७ ।

---

* (क), (ख) पुस्तकयोरत्र तीर्थमृषिवर्णार्च्चितमिति पाठोऽस्ति, तत्र चातः परं चरण-चतुष्टयं नास्ति ।

तत्र स्नानं च ये कुर्य्युरेकरात्रोषिता नराः।
अग्निष्टोमफलञ्चैव लभन्ते नात्र संशयः।
अथाऽत्र मुञ्चते प्राणान्मम लोकं स गच्छति॥ ३८।
देवकीगर्भसम्भूतो* वसुदेवगृहे शुभे।
तत्र पुण्येन हि मया रविराराधितः शुभः।
लब्धः प्राप्तो मया पुत्रो रूपवांश्च गुणान्वितः॥ ३९।
तत्रैवं तु ततो दृष्टः पद्महस्तो दिवाकरः।
मासि भाद्रपदे देवि तिग्मतेजा विभावसुः।
सप्तम्यां कृष्णपक्षस्य रविस्तिष्ठति सर्व्वदा॥ ४०।
तस्मिन्नहनि यः स्नानं कुर्य्यात्कुण्डे समाहितः।
न तस्य दुर्लभं लोके सर्व्वदाता दिवाकरः॥ ४१।
आदित्येऽहनि सम्प्राप्ते सप्तम्यान्तु वसुन्धरे।
नरो वाप्यथवा नारी प्राप्नोत्यविकलम्फलम्॥ ४२।
तत्रैव तु तपस्तप्तं राज्ञा शान्तनुना पुरा।
आदित्यन्तु पुरः स्थाप्य† प्राप्तो भीष्मो महाबलः॥ ४३।
शान्तनुः प्राप्य तं पुत्रं गतोऽसौ हस्तिनापुरम्।
तत्र स्नानेन दानेन वाञ्छितं फलमाप्नुयात्॥ ४४।

इति वराहपुराणे मथुरामाहात्म्ये सप्तपञ्चाशदधिक-
शततमोऽध्यायः।

* देवकीगर्भसम्भूत इति पाठः सर्व्वत्र वर्त्तते, देवकीगर्भजातेन इति कृते तु सम्यक् भवति। † स्थापयित्वेति साधु।

# अष्टापञ्चाशदधिकशततमोऽध्यायः ।

वराह उवाच ।

विंशतिर्योजनानान्तु माथुरं मम मण्डलम् ।
यत्र तत्र नरः स्नातो मुच्यते सर्व्वकिल्बिषैः ॥ १ ।
वर्षाकाले तु स्नातव्यं यत्र स्नानन्तु हर्षदम् ।
पुण्यात्पुण्यतरञ्चैव माथुरे मम मण्डले ॥ २ ।
सप्तद्वीपेषु तीर्थानि पुण्यान्यायतनानि च ।
मथुरायां गमिष्यन्ति प्रसुप्ते तु सदा मयि ॥ ३ ।
सुप्तोत्थितं तु दृष्ट्वा मां मथुरायां वसुन्धरे ।
ते नरा मां प्रपश्यन्ति सर्व्वकालं न संशयः ॥ ४ ।
सुप्तोत्थितन्तु वसुधे दृष्ट्वा मे मुखपङ्कजम् ।
सप्तजन्मकृतं पापं तत्क्षणादेव मुच्यते ॥ ५ ।
मथुरावासिनो लोकाः सर्व्वे ते मुक्तिभाजनाः ॥ ६ ।
मथुरां समनुप्राप्य दृष्ट्वा देवन्तु केशवम् ।
स्नात्वा पुनस्तु कालिन्द्यां मम लोके महीयते ।
स तत्फलमवाप्नोति राजसूयाश्वमेधयोः ॥ ७ ।
प्रदक्षिणीकृतो येन मथुरायान्तु केशवः ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥ ८ ।
घृतपूर्णेन पात्रेण समग्रेण च वाससा ।
केशवस्याग्रतो दत्त्वा दीपकन्तु वसुन्धरे ।
पञ्चयोजनविस्तारमायामं पञ्चविस्तरम् ।

दीपमालासमाकीर्णं विमानं लभते नरः ॥ ८।१० ।
सर्व्वकामसमृद्धं तदप्सरोगणसेवितम् ।
रम्यमालासमाकीर्णं भोगाढ्यं सर्व्वकामिकम् ।
समारोहति वै नित्यं प्रभामण्डलमण्डितम् ॥ ११ ।
ये देवा ये च गन्धर्व्वाः सिद्धाश्चारणपन्नगाः ।
तं स्पृहन्ति सदा देवि पुण्यमस्ति कृतम्भुवि ॥ १२ ।
यदि कालान्तरे पुण्यं क्षीयतेऽस्य पुरा कृतम् ।
सतां पुण्यगृहे देवि जायते मानवो हि सः ॥ १३ ।

धरण्युवाच ।

क्षेत्रं हि रक्षते* देव कश्चिदं पापनाशनम् ।
पशुभूतपिशाचैश्च रक्षोभूतविनायकैः ।
एवमादिभिराक्रष्टन्तत्क्षेत्रं फलदं भवेत् ॥ १४ ।

वराह उवाच ।

मत्क्षेत्रं ते न पश्यन्ति मत्प्रभावात्कदाचन ।
न विकुर्व्वन्ति ते दृष्ट्वा मत्पराणां हि देहिनाम् ॥ १५ ।
रक्षार्थं हि मया दत्ता दिक्पालास्तु वरानने ।
लोकपालास्तु चत्वारस्तीर्थं रक्षन्ति ये सदा ॥ १६ ।
पूर्व्वां रक्षति इन्द्रस्तु यमो रक्षति दक्षिणाम् ।
पश्चिमां रक्षते नित्यं वरुणः पाशभृत्स्वयम् ॥ १७ ।
उत्तरान्तु कुवेरस्तु महाबलपराक्रमः ।

---

* रक्षतीति साधु, एवं परत्र ।

मध्यास्तु रक्षते नित्यं शिवो देव उमापतिः ॥ १८ ॥
मथुरायां गृहं यस्तु प्रासादङ्कुरुते नरः ।
चतुर्भुजस्तु विज्ञेयो जीवन्मुक्तो न संशयः ॥ १९ ॥
मथुराया महाभागे कुण्डे च विमलोदके ।
गम्भीरे सर्व्वदा देवि तिष्ठते* च चतुर्भुजः ॥ २० ॥
तत्र मुच्येत यः प्राणान्स्नानङ्कृत्वा वसुन्धरे ।
वैष्णवं लोकमासाद्य क्रीड़ते स सुखादिव ॥ २१ ॥
तत्रैव तु सदाश्चर्य्यं कथ्यमानं मया शृणु ।
यदुच्यते वै सुश्रोणि कुण्डे तु विमलोदके ॥ २२ ॥
हेमन्ते तु भवेत्तोयं शीतलङ्गीष्मके भवेत् ।
तेजसा मम सुश्रोणि तुषारसदृशोपमम् ॥ २३ ॥
न वर्द्धते च वर्षासु ग्रीष्मे चापि न हीयते ।
*एतच्च महदाश्चर्य्यं तस्मिन्कुण्डे परं मम* ॥ २४ ॥
पदे पदे तीर्थफलं मथुरायां वसुन्धरे ।
तत्र तत्र नरः स्नातो मुच्यते सर्व्वपातकैः ॥ २५ ॥
वर्षासु स्थूल†तीर्थेषु स्नातव्यन्तु प्रयत्नतः ।
कूपे ह्रदे देवखाते‡ गर्त्तेषु च नदीषु च ॥ २६ ॥
प्रवाहेषु च दिव्येषु नदीनां सङ्गमेषु च ।
वर्षासु सर्व्वतः स्नायाद्यदीच्छेत्परमाङ्गतिम् ॥ २७ ॥

* तिष्ठतीति साधु । † स्थलीतीर्थेष्विति (क), (ख) । ‡ ह्रदेषु देवखाते-ष्विति (ग) ।

अस्ति क्षेत्रं परं दिव्यं मुचुकुन्दन्तु नामतः।
मुचुकुन्दः स्वपित्यत्र दानवासुरपातनः॥ २८॥
तत्र कुण्डे नरः स्नात्वा प्राप्नोत्यभिमतं फलम्।
अथाऽत्र मुञ्चते प्राणान्मम लोकं स गच्छति॥ २९॥
इहजन्मकृतं पापमन्यजन्मकृतञ्च यत्।
तत्सर्व्वं नश्यते शीघ्रङ्कीर्त्तनात्केशवस्य तु॥ ३०॥
किं तस्य बहुभिर्मन्त्रैर्भक्तिर्यस्य जनार्द्दने।
नरके पाच्यमानस्य गतिर्द्देवि जनार्द्दनः॥ ३१॥
कृत्वा प्रदक्षिणं देवि विश्रामं कुरुते तु यः।
नारायणसमीपन्तु सोऽनन्तफलमश्नुते॥ ३२॥
सुप्तोत्थितं हरिं दृष्ट्वा मथुरायां वसुन्धरे।
न तस्य पुनरावृत्तिर्जायते स चतुर्भुजः॥ ३३॥
कुमुदस्य तु मासस्य नवम्यान्तु वसुन्धरे।
प्रदक्षिणीकृत्य वसुधां* सर्व्वपापैः प्रमुच्यते॥ ३४॥
ब्रह्मघ्नश्च सुरापश्च गोघ्नो भग्नव्रतस्तथा।
मथुरान्तु परिक्रम्य पूतो भवति मानवः॥ ३५॥
अष्टम्यां प्राप्य मथुरां दन्तधावनपूर्व्वकम्।
ब्रह्मचर्य्येण तां रात्रिङ्कृतसङ्कल्पमानसः॥
धौतवस्त्रस्तु सुस्नातो मौनव्रतपरायणः।

* सर्व्वत्रैव एषः पाठो दृश्यते, परमत्र छन्दोदोषः। प्रदक्षिणीकृत्य धरामिति पाठे न दोषः।

प्रदक्षिणन्तु कुर्व्वीत सर्व्वपातकनाशनम्* ॥ ३६।३७ ।
प्रदक्षिणां क्रियमाण†मन्योयः स्मृत‡ नरः ।
सर्व्वकामानवाप्नोति नाऽत्र कार्य्या विचारणा ॥ ३८ ।
मथुरायां नरो गत्वा दृष्टा देवं स्वयम्भुवम् ।
प्रदक्षिणायां यत्पुण्यं तत्पुण्यं लभते नरः ॥ ३९ ।
देवस्याग्रे तु वसुधे कूपन्तु विमलोदकम् ।
पितरश्चाभिनन्दन्ति पानीयं पिण्डमेव च ॥ ४० ।
चतुःसामुद्रिकं नाम त्रिलोकेषु च विश्रुतम्§ ।
तत्र स्नातो नरो भद्रे देवैश्च सह मोदते ।
तत्राऽथ मुञ्चते प्राणान्मम लोकं स गच्छति ॥ ४१ ।

इति वराहपुराणे मथुरातीर्थप्रादुर्भावो नाम
अष्टापञ्चाशदधिकशततमोऽध्यायः ।

## ऊनषष्ट्यधिकशततमोऽध्यायः ।

धरण्युवाच ।

श्रुतं सुबहुशो देव तीर्थानां गुणविस्तरम् ।
प्रोच्यमानन्तु पुण्याख्यं त्वत्प्रसादाज्जनार्द्दन* ॥ १ ।

---

* सर्व्वपातकशुद्धये इति (ग) । † प्रदक्षिणं हि कुर्व्वाणमिति साधु । ‡ स्मृश-तीति साधु । § कूपं लोकेषु विश्रुतमिति (ग) ।

* (ग) पुस्तके प्रथमः श्लोकः द्वितीयश्लोकस्य प्रथमपादश्च न स्तः ।

न दानैर्न तपोभिश्च न यज्ञैस्तादृशं फलम्।
भूमेः प्रदक्षिणायाश्च यादृशं तीर्थसेवया॥ २।
भुवश्च चतुरन्तायास्तीर्थप्रक्रमणं हरे।
सर्व्वतीर्थाभिगमनमस्ति दुर्गतरं नृणाम्॥ ३।
अस्ति कश्चिदुपायोऽत्र येन सम्यगवाप्यते।
प्रसादसुमुखो भूत्वा तत्सर्व्वं कथयस्व मे॥ ४।

वराह उवाच।

भद्रे शृणु महत्पुण्यं पृथिव्यां सर्व्वतोदिशम्।
परिक्रम्य यथाध्वानं प्रमाणगणितं शुभम्*॥ ५।
भूम्याः परिक्रमे सम्यक् प्रमाणयोजनानि च।
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च॥ ६।
तीर्थान्येतानि देवाश्च तारकाश्च नभस्तले।
गणितानि समस्तानि वायुना जगदायुषा॥ ७।
ब्रह्मणा लोमशेनैव नारदेन ध्रुवेण च।
जाम्बवतीसुपुत्रेण रावणेन हनूमता।
एतैरनेकधा देवैः ससागरवना मही।
क्रमिता बलिना चैव वाह्यमण्डलरेखया॥ ८।९।
अन्तरा भ्रमणेनैव सुग्रीवेण महात्मना।
तथा च पूर्व्वं देवेन्द्रैः पञ्चभिः पाण्डुनन्दनैः।
योगसिद्धैस्तथा कैश्चिन्मार्कण्डेयमुखैरपि।

* परिक्रम्य यथाध्वानं पृथिव्यां सर्व्वतोदिशमिति क्वचित्पाठः।

क्रमिता न क्रमिष्यन्ति न पूर्व्वे नापरे जनाः ॥ १०।११
अल्पसत्त्वबलोपेतैः प्राणिभिश्चाल्पबुद्धिभिः ।
मनसाऽपि न शक्यन्ते गमनस्य च का कथा ॥ १२ ।
सप्तद्वीपे च तीर्थानां भ्रमणाद्यत्फलं भवेत् ।
प्राप्यते चाधिकं तस्मान्मथुरायाः परिक्रमे ॥ १३ ।
मथुरां समनुप्राप्य यस्तु कुर्य्यात्प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥ १४ ।
तस्मात्सर्व्वप्रयत्नेन सर्व्वकामानभीप्सुभिः ।
कर्त्तव्या मथुराम्प्राप्य नरैः सम्यक् प्रदक्षिणा ॥ १५ ।

धरण्युवाच ।

यथाविधानक्रमणं मथुरायामवाप्यते ।
प्रदक्षिणाफलं सम्यगनुक्रमविधिं वद ॥ १६ ।

वराह उवाच ।

पुरा सप्तर्षिभिः पृष्टो ब्रह्मा लोकपितामहः ।
इदमेव पुरा प्रोक्तं यथा त्वं पृष्टवान्मम ॥ १७ ।
श्रुत्वा सर्व्वपुराणोक्तं तीर्थानुक्रमणं परम् ।
पृथिव्याश्चतुरन्तायास्तथा तद्वक्तुमुद्यतः ॥ १८ ।
सर्व्वदेवेषु यत्पुण्यं सर्व्वतीर्थेषु यत्फलम् ।
सर्व्वदानेषु यत्प्रोक्तमिष्टापूर्त्तेषु चैव हि ॥ १९ ।
यत्फलं लभ्यते विप्रास्तस्माच्छतगुणोत्तरम् ।
प्रक्रमान्मथुरायास्तु सत्यमेतद्ब्रवीमि वः ॥ २० ।
इत्युक्ता ऋषयो जग्मुरभिवाद्य स्वयम्भुवम् ।

आमन्त्य मथुरां देवीमाश्रमांश्चक्रतु*र्द्विजाः।
ध्रुवेण सहिता आसन्कामयानास्तु तद्दिनम्॥ २१।
कुमुदस्य तु मासस्य नवम्यां शुक्लपक्षके।
मथुरोपक्रमं कृत्वा सर्व्वपापैः प्रमुच्यते॥ २२।

इति वराहपुराणे मथुरामाहात्म्ये नाम
ऊनषष्ठ्यधिकशततमोऽध्यायः।

---

## षष्ठ्यधिकशततमोऽध्यायः।

वराह उवाच।

अष्टम्यां मथुरां प्राप्य कार्त्तिकस्यासिते नरः।
स्नात्वा विश्रान्तितीर्थे तु पितृदेवार्च्चने रतः॥ १।
विश्रान्तिदर्शनङ्कृत्वा दीर्घविष्णुञ्च केशवम्।
प्रदक्षिणायाः सम्यग्वै फलमाप्नोति मानवः॥ २।
उपवासरतः सम्यगल्पमेध्याशनोऽथवा।
दन्तकाष्ठञ्च सायाह्ने कृत्वा शुद्ध्यर्थमात्मनः॥ ३।
ब्रह्मचर्य्येण तां रात्रिं कृत्वा सङ्कल्पमानसः।
धौतवस्त्रेण सुस्नातो मौनव्रतपरायणः॥ ४।
तिलाक्षतकुशान् गृह्य* पितृदेवार्थमुद्यतः।

* चरतुरिति (क), (ख), अत्र द्वयमपि आर्षम्, चक्रुरेव वा साधु।

---

* गृहीत्वेति साधु।

दीपहस्तो वनङ्गत्वा श्रान्तो विश्रान्तिजागरे ॥ ५ ।
यथानुक्रमणञ्चैव ध्रुवाद्यैर्ऋषिभिः कृतम् ।
एवं परम्परायातं क्रमणीयं नरोत्तमैः ॥ ६ ।
प्रदक्षिणावर्त्तमानो नरो भक्तिसमन्वितः ।
सर्व्वान् कामानवाप्नोति हयमेधफलं लभेत्* ॥ ७ ।
एवं जागरणं कृत्वा नवम्यां नियतः शुचिः ।
ब्राह्मे मुहूर्त्ते सम्प्राप्ते ततो यात्रामुपक्रमेत्† ॥ ८ ।
तथा प्रारभयेद्यात्रां यावन्नोदयते‡ रविः ॥ ९ ।
प्रातःस्नानं तथा कुर्य्यात्तीर्थे दक्षिणकोटिके ।
प्रक्षाल्य पादावाचम्य हनुमन्तं प्रसादयेत् ॥ १० ।
सर्व्वमङ्गलमाङ्गल्यं कुमारं ब्रह्मचारिणम् ।
विज्ञाप्य सिद्धिकर्त्तारं यात्रासिद्धिप्रदायकम् ।
यस्य संस्मरणादेव सर्व्वे नश्यन्त्युपद्रवाः ॥ ११ ।
यथा रामस्य यात्रायां सिद्धिस्ते सुप्रतिष्ठिता ।
तथा परिभ्रमन्मेऽद्य भवान्सिद्धिप्रदो भव ॥ १२ ।
इति विज्ञाप्य विधिवद्धनुमन्तं गणेश्वरम् ।
दीपपुष्पोपहारैस्तु पूजयित्वा विसर्ज्जयेत् ॥ १३ ।
तथैव पद्मनाभन्तु दीर्घविष्णुं भयापहम् ।
विज्ञाप्य सिद्धिकर्त्तारं देव्यश्च§ तदनन्तरम् ।
दृष्ट्वा वसुमतीं देवीं तथैव ह्यपराजिताम् ।

---

* लभेतेति साधु । † उपक्रमेतेति साधु । ‡ उदयतीति साधु । § देवीरिति साधु, एवं दृष्ट्वा इत्यत्र देवीः, वासुदेवीरिति साधु ।

आयुधागारसंस्थाञ्च नृणां सर्व्वभयापहाम् ॥
कंसवासनिकां तद्वदौग्रसेनाञ्च* धर्षिकाम्।
वधूटीञ्च तथा देवि† दानवक्षयकारिणीम्।
जयदां देवतानाञ्च मातरो‡ देवपूजिताः।
गृहदेव्यौवास्तुदेव्यो दृष्ट्वानुज्ञाप्य निर्गमेत्§॥१४।१५।१६।१७।
मौनव्रतधरो गच्छेद्यावद्दक्षिणकोटिके।
प्राप्य स्नात्वा पितॄंस्तर्प्य¶ दृष्ट्वा देवं प्रणम्य च।
नत्वा गच्छेद्विश्रुवासां देवि|| कृष्णसुपूजिताम्॥ १८।
बालक्रीड़नरूपाणि कृतानि सह गोपकैः।
यानि तीर्थानि तान्येव स्थापितानि महर्षिभिः।
ख्यातिङ्गतानि सर्व्वाणि सर्व्वपापहराणि च॥ १९।
वत्सयुग्मं ततो गच्छेत्सर्व्वपापहरं परम्।
अर्कस्थलं** वीरस्थलं कुशस्थलमनन्तरम्॥ २०।
पुण्यस्थलं महास्थलं महापापविनाशनम्††।
पञ्चस्थलानि तत्रैव सर्व्वपापहराणि च॥
येषां तु दर्शनादेव ब्रह्मणा सह मोदते।
शिवं सिद्धमुखं दृष्ट्वा स्थलानां फलमाप्नुयात्॥ २१।२२।
हयमुक्तिं ततो गच्छेत्सिन्दूरं ससहायकम्।
श्रूयते चात्र ऋषिभिर्गाथा गीता पुरातना‡‡॥ २३।

---

* औग्रसेनीन्त्विति (ग)। † तथा देवीमिति (ग)। ‡ मातृरिति साधु। § निर्गच्छेदिति साधु। ¶ तर्पयित्वेति साधु। || देवीमिति (ग)। ** चक्रस्थलमिति (क), (ख)। †† महापातकनाशनमिति (ग)। ‡‡ पुरातनीति साधु।

अश्वारूढ़ेन तेनैव यत्रेयं समनुष्ठिता ।
अश्वोमुक्तिं गतस्तत्र सहायसहितः सुखम् ॥ २४ ।
राजपुत्रः स्थितस्तत्र यानयात्रा न मुक्तिदा ।
तस्माद्यानैश्च यात्रा च न कर्त्तव्या फलेच्छया ॥ २५ ।
तस्मिंस्तीर्थे तु तं दृष्ट्वा स्पृष्ट्वा पापैः प्रमुच्यते ।
कुण्डं शिवस्य विख्यातं तत्र स्नानफलं महत् ॥ २६ ।
मल्लिकादर्शनङ्कृत्वा कृष्णस्य जयदं शुभम् ।
ततः कदम्बखण्डस्य गमनात्सिद्धिमाप्नुयात् ॥ २७ ।
चर्च्चिका योगिनी तत्र योगिनीपरिवारिता ।
कृष्णस्य रक्षणार्थं हि स्थिता सा दक्षिणां दिशम् ॥ २८ ।
अस्पृश्या चास्पृशा चैव मातरौ लोकपूजितौ* ।
बालानां दर्शनं ताभ्यां महारक्षाङ्करिष्यति ॥ २९ ।
वर्षखातं ततोगत्वा कुण्डं पापहरम्परम् ।
गत्वा स्नात्वा पितॄंस्तर्प्य† सर्व्वपापैः प्रमुच्यते ॥ ३० ।
क्षेत्रपालं ततो गत्वा शिवं भूतेश्वरं हरम् ।
मथुराक्रमणं तस्य जायते सफलं तथा ॥ ३१ ।
कृष्णक्रीड़ासेतुबन्धं महापातकनाशनम् ।
बालानां क्रीड़नार्थञ्च कृत्वा देवोगदाधरः ।
गोपकैः सहितस्तत्र क्षणमेकं दिने दिने ।
तत्रैव रमणार्थं हि नित्यकालं स गच्छति ॥ ३२।३३ ।

* लोकपूजिते इति साधु । † तर्पयित्वेति साधु ।

बलिकुण्डञ्च* तत्रैव जलक्रीड़ाकृतं शुभम्।
यस्य सन्दर्शनादेव सर्व्वपापैः प्रमुच्यते ॥ ३४ ।
ततः परञ्च कृष्णेन कुक्कुटैः क्रीड़नङ्कृतम्।
यस्य दर्शनमात्रेण चण्डोऽपि गतिमाप्नुयात् ॥ ३५ ।
स्तम्भोच्चयं सुशिखरं सौरभैः ससुगन्धिभिः।
भूषितं पूजितं तत्र कृष्णेनाक्लिष्टकर्म्मणा ॥ ३६ ।
तस्य प्रदक्षिणङ्कृत्वा परिपूज्य प्रयत्नतः।
मुच्यते सर्व्वपापेभ्यो विष्णुलोकं व्रजेत्तु सः† ॥ ३७ ।
वसुदेवेन देवक्यां गर्भस्य रक्षणाय च‡।
कृतमेकान्तशयनं महापातकनाशनम् ॥ ३८ ।
ततोनारायणस्थानं प्रविशेन्मुक्तिहेतवे।
परिक्रम्य ततो देवान्नारायणपुरोगमान् ॥ ३९ ।
दृष्ट्वा ततः सुविज्ञाप्य गणं विधिविनायकम्।
कुब्जिकां वामनाञ्चैव ब्राह्मण्यौ कृष्णपालिते ॥ ४० ।
अनुज्ञाय ततः स्थानं द्रष्टुङ्कर्त्तेश्वरं शिवम्।
दृष्टमात्रेण तत्रैव यात्राफलमवाप्यते ॥ ४१ ।
महाविद्येश्वरी देवी आरक्षं पापकं हरेत्§।
रक्षणार्थं हि क्षेत्रस्य यात्रायाः सिद्धिदां नृणाम्।
प्रभामल्लीश्च¶ तत्रैव दृष्ट्वा कामानवाप्नुयात् ॥ ४२ ।

* बालकुन्दमिति (क), (ख)। † व्रजेन्नर इति (ग)। ‡ गर्भसंरक्षणाय चेति (ग)।
§ आरक्षं परमं हरेदिति (ग)। ¶ प्रभालक्ष्मिमिति (ग)।

महाविद्येश्वरी देवी कृष्णरक्षार्थमुद्यता ।
नित्यं सन्निहिता तत्र सिद्धिदा पापनाशिनी ॥ ४३ ।
कृष्णेन बलभद्रेण गोपैः कंसं जिघांसुभिः ।
सङ्केतकङ्कृतं तत्र मन्त्रनिश्चयकारकम् ॥ ४४ ।
तदा संकेतकैः सा च सिद्धा देवी प्रतिष्ठिता ।
सिद्धिप्रदा भोगदा च तेन सिद्धेश्वरी स्मृता ।
सङ्केतकेश्वरीञ्चैव दृष्ट्वा सिद्धिमवाप्नुयात् ॥ ४५ ।
तत्र कुण्डं स्वच्छजलं महापातकनाशनम् ॥ ४६ ।
ततो दृष्ट्वा महादेवं गोकर्णेश्वरनामतः ।
यस्य दर्शनमात्रेण सर्व्वपापैः प्रमुच्यते ॥ ४७ ।
सरस्वतीं नदीं दृष्ट्वा ततो भद्राणि पश्यति ।
विघ्नराजं ततो गच्छेद्गणेशं विघ्ननायकम् ।
सर्व्वसिद्धिप्रदं रम्यं दर्शनाच्च फलं लभेत् ॥ ४८ ।
गङ्गा साध्वी च तत्रैव महापातकनाशिनी ।
दृष्ट्वा स्पृष्ट्वा तथा ध्यात्वा सर्व्वकामान् समश्नुते ॥ ४९ ।
महादेवमुखाकारं नाम्ना रुद्रमहालयम् ।
चैत्रपन्तं परं दृष्ट्वा चैत्रवासफलं लभेत् ।
तस्मादुत्तरकोटिञ्च दृष्ट्वा देवङ्गणेश्वरम् ॥ ५० ।
द्यूतक्रीड़ा भगवता कृता गोपजनैः सह ।
नानावह्वासरूपेण जिता गोप्यो धनानि च ॥ ५१ ।
गोपैरानीय तात्रैव कृष्णाय च निवेदिताः ।
गोपालकृष्णगमनं महापातकनाशनम् ॥ ५२ ।

समस्तं बालचरितं भ्रमणं च यथासुखम्।
कृतं तत्र यथारूपं यद्रूपश्च यथा तथा।
ऋषिभिः सेवितं ध्यातं विष्णोर्माहात्म्यमुत्तमम्॥ ५३।
ततो गच्छेन्महातीर्थं विमलं यमुनाम्भसि।
स्नात्वा पीत्वा पितृंस्तर्प्य नाम्ना रुद्रमहालयम्।
गार्ग्यतीर्थे महापुण्ये नरस्तत्र तथा क्रमेत्* ॥ ५४।
भद्रेश्वरे महातीर्थे सोमतीर्थे तथैव च।
स्नात्वा सोमेश्वरं देवं दृष्ट्वा यात्राफलं लभेत्॥ ५५।
सरस्वत्याः सङ्गमे च देवर्षिपितृमानवान्।
सन्तर्प्य विधिवद्दत्त्वा विष्णुसायुज्यमाप्नुयात्॥ ५६।
घण्टाभरणके तद्वत्तथा गरुड़केशवे।
धारालोपनके तद्वद्वैकुण्ठे खण्डवेलके॥ ५७।
मन्दाकिन्याः संयमने असिकुण्डे तथैव च।
गोपानां तीर्थके चैव तथैव मुक्तिकेश्वरे॥ ५८।
वैलच्चगरुड़े चैव महापातकनाशने।
तीर्थान्येतानि पुण्यानि यथा विश्रान्तिसंज्ञकम्॥ ५९।
एषु तीर्थेषु क्रमितो भक्तिमांश्च जितेन्द्रियः।
देवान् पितॄन्समभ्यर्च्य ततो देवं प्रसादयेत्॥ ६०।
अविमुक्तेश देवेश सप्तर्षिभिरनुष्टुत।
मथुराक्रमणीयं मे सफलं स्यात्तवाज्ञया॥ ६१।
इत्येवं देवदेवेशं विज्ञाय चेत्यपं शिवम्।

* क्रामेदिति साधु।

विश्रान्तिसंज्ञके स्नानङ्कृत्वा च पितृतर्पणम् ॥ ६२ ।
गतश्रमम्परिक्रम्य स्तुत्वा दृष्ट्वा प्रणम्य च ।
सुमङ्गलां ततो गच्छेद्यात्रासिद्धिं प्रसादयेत् ॥ ६३ ।
सर्व्वमङ्गलमङ्गल्ये शिवे सर्व्वार्थसाधिके ।
यात्रेयं त्वत्प्रसादेन सफला मे भवत्विति ॥ ६४ ।
पिप्पलादेश्वरं देवं पिप्पलादेन पूजितम् ।
विश्रान्तस्तु परिक्रम्य जातस्तत्र महातपाः ॥ ६५ ।
उपलिप्य ततस्तस्य शीर्षोपरि महच्छिवम् ।
स्वनाम्ना चिह्नितं स्थाप्य* तदा यात्राफलं लभेत् ॥ ६६
कर्कोटकं तथा नागं महादुष्टनिवारणम् ।
दृष्ट्वा गच्छेत्ततो देवीं या कृष्णेन विनिर्म्मिता ॥ ६७ ।
कंसभेदं प्रथमतः श्रुतं यत्र कुमन्त्रितम् ।
सुखवासञ्च वरदङ्कृष्णस्याक्लिष्टकर्म्मणः ।
सुखासीनञ्च तत्रैव स्थापितं शकुनाय वै ॥ ६८ ।
स्वानुकूलो स्वरोयत्र प्रवेशे दक्षिणः स्वनः ।
ध्याता स्वभावे कृष्णेन स्वसा सातिसुखप्रदा ॥ ६९ ।
भयार्त्तेन च कृष्णेन ध्याता देवी च चण्डिका ।
स्थापिता सिद्धिदा तत्र नाम्ना चार्त्तिहरा ततः ।
दृष्ट्वा सर्व्वार्त्तिहरणं यस्या देव्या सुखी नरः ॥ ७० ।
अथोत्तरं शुभतरं शकुनार्थञ्च याचतः ।
कृष्णस्य कंसघातार्थं सम्भूता सा तथोत्तरे ॥ ७१ ।

* स्थापयित्वेति साधु ।

तां दृष्ट्वा मनुजः कामान्सर्व्वानिष्टानवाप्नुते ॥ ७२ ।
वज्रानन्नं ततो ध्यात्वा कृष्णोमल्लजिघांसया ।
निहत्य मल्लान् पश्चाद्धि वज्राननमकल्पयत् ।
वाञ्छितार्थफलञ्चक्रे कृष्णेनास्य मनोरथान् ॥ ७३ ।
यस्मै यस्मै देवतायै तस्मै तस्मै ददौ मखम् ।
उपयाचितन्तु माङ्गल्यं सर्व्वपापहरं शुभम् ॥ ७४ ।
कृष्णस्य बालचरितं महापातकनाशनम् ।
सूर्य्यं तं वरदं देवं माथुराणां कुलेश्वरम् ।
दृष्ट्वा तत्रैव दानञ्च दत्त्वा यात्रां समापयेत् ॥ ७५ ।
एवं प्रदक्षिणङ्कृत्वा नवम्यां शुक्लकौमुदे ।
सर्व्वं कुलं समादाय विष्णुलोके महीयते ॥ ७६ ।
क्रमतः पदविन्यासाद्यावन्तः सर्व्वतोदिशः ।
तावतः कुलसम्भूताः सूर्य्ये तिष्ठन्ति शाश्वते ॥ ७७ ।
ब्रह्मघ्नश्च सुरापश्च चौरा भग्नव्रताश्च ये ।
अगम्यागमने शीलाः क्षेत्रदारापहारकाः ।
मथुराक्रमणङ्कृत्वा विपाप्मानो भवन्ति ते ॥ ७८ ।
अन्यदेशागतो दूरात्परिभ्रमति यो नरः ।
तस्य सन्दर्शनादन्ये पूताः स्युर्विगतामयाः ॥ ७९ ।
स्मृतं यैश्च विदूरस्थैः कृतयात्रं नरं नरैः ।
सर्व्वपापविनिर्मुक्तास्ते यान्ति परमम्पदम् ॥ ८० ।

इति वराहपुराणे मथुरापरिक्रमप्रादुर्भावे
षष्ठ्यधिकशततमोऽध्यायः ।

# एकषष्ट्यधिकशततमोऽध्यायः ।

धरण्युवाच ।

ये धर्म्मविमुखा मूढ़ाः सर्व्वज्ञानविवर्ज्जिताः ।
का गतिः कृष्ण तेषां हि विहिता नरके सुरैः ॥ १ ।
अभुक्त्वा नारकं दुःखं सुकृतैः पुण्यदैर्नृणाम् ।
प्रयान्ति कर्म्मणा येन तमुपायं ब्रवीहि मे ॥ २ ।

वराह उवाच ।

सर्व्वधर्म्मविहीनानां पुरुषाणां दुरात्मनाम् ।
नरकार्त्तिहरा देवी मथुरा पापघातिनी ॥ ३ ।
मथुरावासिनो ये च तीर्थानाञ्चोपसेवकाः ।
वनानां दर्शको वाथ मथुराक्रमकोऽपि वा ॥
एषां मध्ये कृतं येश्च एकञ्च शतमोजसा ।
न ते नरकभोक्तारः स्वर्गभाजो भवन्ति ते ॥ ४।५ ।
प्रथमं मधुवनं नाम द्वितीयं तालमेव च ।
वनं कुन्दवनञ्चैव तृतीयं वनमुत्तमम् ॥ ६ ।
चतुर्थं काम्यकवनं वनानां वनमुत्तमम् ।
पञ्चमम्बहुवनं नाम षष्ठं भद्रवनं स्मृतम् ॥ ७ ।
सप्तमन्तु वनं भूमे खादिरं लोकविश्रुतम् ।
महावनं चाष्टमन्तु सदैव च मम प्रियम् ॥ ८ ।
लोहार्गलवनं नाम नवमं पातकापहम् ।
वनं विल्ववनं नाम दशमं देवपूजितम् ॥ ९ ।

एकादशन्तु भाण्डीरं द्वादशं वृन्दकावनम्* ।
एतानि ये प्रपश्यन्ति न ते नरकभोगिनः ॥ १० ॥
यथाक्रमेण ये यात्रां वनानाञ्च जितेन्द्रियाः ।
करिष्यन्ति वरारोहे इन्द्रलोकं व्रजन्ति ते ॥ ११ ॥

इति वराहपुराणे मथुरामाहात्म्ये द्वेववनप्रभावो नाम
एकषष्ठ्यधिकशततमोऽध्यायः ।

## द्विषष्ठ्यधिकशततमोऽध्यायः ।

वराह उवाच ।

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
चक्रतीर्थे पुरा वृत्तं मथुरायां तथोत्तरे ॥ १ ॥
महाराष्ट्रोदयं नाम जम्बूद्वीपस्य भूषणम् ।
तस्मिन् पुरवरे दिव्ये ब्राह्मणो वसते* शुभे ॥ २ ॥
कन्यां सपुत्त्रमादाय ब्राह्मणो वेदपारगः ।
शालिग्रामं महापुण्यमगच्छद्ब्राह्मणोत्तमः ॥ ३ ॥
तत्रासौ वासमकरोत्पुण्यसेवी जितेन्द्रियः ।
तीर्थसेवी च स्नायी च† देवतादर्शने रतः ॥ ४ ॥

---

* वृन्दावनमिति (क), (ख), तत्र छन्दोदोषः ।

* वसतीति साधु। † तीर्थसेवी स्नानपर इति (ग) ।

तत्र सिद्धेन संवासो ब्राह्मणस्याभवत्तदा ।
स सिद्धो वसते नित्यं कल्पग्रामे च सर्व्वदा ।
गच्छते* सर्व्वकालन्तु शालिग्रामे वसुन्धरे ॥ ५ ।
स तेन सह सङ्गत्य कान्यकुब्जनिवासिना ।
कल्पग्रामविभूतिञ्च नित्यकालमवर्णयत् ॥ ६ ।
कल्पग्रामविभूतिञ्च श्रुत्वा स मुनिसत्तमः ।
गमने बुद्धिरुत्पन्ना ततः सिद्धमयाचत ॥ ७ ।
मित्रत्वं वर्त्तते सिद्ध नयस्वात्मनिवेशने ।
ब्राह्मणस्य वचः श्रुत्वा सिद्धो वचनमब्रवीत् ॥ ८ ।
तत्र सिद्धा हि गच्छन्ति ते न तत्र गतिर्भवेत् ।
प्रार्थनाद्दुःखलाभन्तु शृणु वै ब्राह्मणोत्तम ॥ ९ ।
आत्मयोगबलेनैव चलिष्यामि सपुत्त्रकः ।
दक्षिणे तु करे गृह्य ब्राह्मणं वेदपारगम् ।
वामे च तु करे गृह्य तस्य पुत्त्रं महामतिम् ।
उत्पपात तदा सिद्धो गृहीत्वा ब्राह्मणोत्तमौ ॥ १० ।
कल्पग्रामे तु तौ मुक्त्वा पितापुत्त्रौ वसुन्धरे ।
तत्र तौ वसतोनित्यं कल्पग्रामे द्विजोत्तमौ ॥ ११ ।
तत्र कालेन महता रुग्देहे चाभवत्तदा ।
रुजा तु पीड्यमानः स दशमीञ्च दशाकृतः ॥ १२ ।
मर्त्तुकामो द्विजवरो निरीक्ष्य सुतमुत्तमम् ।
उवाच पुत्त्रं धर्म्मात्मा मरणे समुपस्थिते ।

* गच्छतीति साधु

गङ्गातीरे च मां पुत्त्र नय त्वं मा विलम्बय ॥ १३ ।
तेन पुत्त्रेण नीतोऽसौ गङ्गातीरे महामुनिः ।
करोद पुत्त्रस्तु तदा पितृस्नेहसमन्वितः ॥ १४ ।
वेदाध्ययनशीलः स पितृभक्त्या नियन्त्रितः ।
वसतस्तस्य वै तत्र कालोजातो महामतेः ॥ १५ ।
कल्पग्रामे तदा सिद्धस्तस्य कन्या सुमध्यमा ।
वरमन्वेषयन्ती सा न प्राप्तस्तु तया मतः ॥ १६ ।
कदाचिद्दैवयोगेन कान्यकुब्जनिवासिनः ।
गृहे प्रविष्टो विप्रः स भोजनार्थं महामतिः ॥ १७ ।
पृष्टोऽसौ ब्राह्मणी भद्रे क्व भवांस्त्वमिहागतः ।
स सर्व्वं कथयामास यथावृत्तं दृढ़व्रतः । १८ ।
दिव्यज्ञानेन तं ज्ञात्वा पूजयामास तं द्विजः ।
पूजयित्वा यथान्यायङ्कन्यां तस्मै ददौ तदा ॥ १९ ।
श्वशुरस्य गृहे नित्यं भोजनं कुरुते द्विजः ।
वसते पितृसान्निध्ये प्रतिचारी स पुत्त्रकः ॥ २० ।
काले भगवतस्तस्य अतिक्षीणः पिता तदा ।
तं दृष्ट्वा क्षीणतां प्राप्तं श्वशुरं पर्य्यपृच्छत ॥ २१ ।
स्वामिन्पितुर्मे मरणं भविष्यति वदस्व माम् ।
जामातृवचनं श्रुत्वा प्रहस्य श्वशुरोऽब्रवीत् ॥ २२ ।
शूद्रान्नं भक्षितं तेन नित्यकालं द्विजोत्तम ।
तस्य चाहारदोषेण मृत्युर्दूरङ्गतः पितुः ॥ २३ ।
पादयोर्विद्यते तत्र शूद्रान्नञ्च पितुस्तव ।

जान्वोरूर्द्धं न विद्येत शूद्रान्नञ्च द्विजोत्तम ।
शूद्रान्नेन विहीनस्य तस्य मृत्युर्भविष्यति ॥ २४ ।
श्वशुरस्य तु वचनं पितुरग्रे न्यवेदयत् ।
तस्य पुत्त्रस्य वचनं श्रुत्वात्मानं विगर्हयत्* ॥ २५ ।
ततः प्रभाते विमले उदिते च दिवाकरे ।
पितुः समीपात्स गतः श्वशुरस्य निवेशनम् ॥ २६ ।
गते पुत्रे पिता तस्य रुजा अत्यन्तपीड़ितः ।
दुःखेन पीड़ितः क्षीणो मर्त्तुकामो द्विजोत्तमः ।
गङ्गातीरात्समुत्तिष्ठन्दिशः सर्वा विलोकयन् ।
सन्निधावुपलं दृष्ट्वा गृहीतं तेन तत्पदा ॥ २७।२८ ।
चूर्णयामास तौ पादौ पीड़या मोहितोद्विजः ।
ततः प्राणान् परित्यज्य गतोऽसौ कालवर्त्तनम् ॥ २९ ।
स्नात्वा भुक्त्वा ततोगत्वा प्रेक्ष्य तं पितरं मृतम् ।
गतसंज्ञञ्च पितरं दृष्ट्वा स रुरुदे भृशम् ॥ ३० ।
रुदित्वा सुचिरङ्कालं शास्त्रं दृष्ट्वा व्यचिन्तयत् ।
संस्कारयोग्यता नास्ति इत्येव पुनरब्रवीत् ॥ ३१ ।
सर्पशृङ्गिहतानाञ्च दंष्ट्रिविप्रहतस्य च ।
आत्मनस्त्यागिनश्चैव आपस्तम्बोऽब्रवीदिदम् ॥ ३२ ।
आत्मघाती नरः पापो नरके पच्यते चिरम् ।
प्रायश्चित्तं विधीयीत न दद्यार्श्चोदकक्रियाम् ।
अहो दैवं सुबलवत्पौरुषन्तु निरर्थकम् ॥ ३३ ।

* व्यगर्हयदिति माध ।

तस्य पुत्रो महाभागे गतः श्वशुरमन्दिरम् ।
तं दृष्ट्वा श्वशुरादीनमिदं वचनमब्रवीत् ।
ब्रह्महत्या तु ते जाता गच्छ त्वञ्च यथेप्सितम् ॥ ३४ ।
श्वशुरस्य वचः श्रुत्वा जामाता वाक्यमब्रवीत् ।
न मया ब्राह्मणवधः कदाचिदपि कारितः ।
केन दोषेण मे सिद्धं ब्रह्महत्याफलं महत् ॥ ३५ ।
जामातुर्वचनं श्रुत्वा श्वशुरोवाक्यमब्रवीत् ।
पितुस्त्वया वधोपायोविनिर्द्दिष्टश्च पुत्रक ।
तेन दोषेण विप्रर्षे ब्रह्महत्याफलं तव ॥ ३६ ।
आसनशयनाच्चैनं भोजनात्कथनादिषु ।
संवत्सरेण पतति पतितेन सहाचरन् ।
तस्मान्मम गृहे नास्ति वासस्ते हि द्विजोत्तम ॥ ३७ ।
श्वशुरस्य वचः श्रुत्वा जामाता वाक्यमब्रवीत् ।
किं मया वद कर्त्तव्यं त्वया त्यक्तेन सुव्रत ॥ ३८ ।
तस्य तद्वचनं श्रुत्वा ब्राह्मणः शंसितव्रतः ।
कल्पग्रामम्परित्यज्य मथुरां याहि सुव्रत ।
नान्यत्र तव संशुद्धिः कदाचित्पितृघातिनः ॥ ३९ ।
कल्पग्रामं परित्यज्य तत्क्षणादेव निःसृतः ।
ततः कालेन महता सम्प्राप्तो मथुरां पुरीम् ।
ब्राह्मणेभ्यो वहिःस्थाने नित्यन्तु वसते द्विजः ॥ ४० ।
कन्यापुरनिवासी तु कुशिकोऽथ नराधिपः ।
तस्य सत्रं नित्यकालं मथुरायां प्रवर्त्तते ॥ ४१ ।

द्वे सहस्रे तु विप्राणां तस्य सत्रे च भुञ्जते ।
ब्राह्मणानां सदोच्छिष्टं ततश्चोद्धरते तु सः ॥ ४२ ।
चक्रतीर्थं समासाद्य स्नानं स कुरुते सदा ।
न भिक्षां कुरुते तत्र भोजनार्थं न गच्छति ॥ ४३ ।
ततः कालेन महता चिन्ताभूच्छ्वशुरस्य च ।
दिव्यज्ञानेन तत्सर्व्वं ज्ञात्वा जामातृचेष्टितम् ।
स्वां सुतां चोदयामास गच्छ तां मथुरां पुरीम् ।
भोजनं गृह्य तत्रैव गच्छ त्वं भर्त्तृसन्निधौ ॥ ४४ ।
दिव्यज्ञानेन च तदा नित्यं सा भर्त्तृसन्निधौ ।
दिने दिने गच्छति सा भर्त्तुर्भोजनकारणात् ।
दिवसस्यावमाने तु भोजनं गृह्य गच्छति ॥ ४५ ।
भोजनं कुरुते नित्यं प्रियादत्तं वसुन्धरे ।
पात्रं निःक्षिप्य कुण्डे तु सत्रे वसति सर्व्वदा ॥ ४६ ।
एवं निवसतस्तस्य वर्षार्द्धन्तु गतं तदा ।
ततः कालेन महता तैः पृष्टः स द्विजोत्तमः ।
कुत्र सन्तिष्ठसे नित्यं भोजनं कुरुषे कुतः ॥ ४७ ।
कथयामास वृत्तान्तं तं सर्व्वञ्चात्मनो हि सः ।
ते श्रुत्वा ब्राह्मणाः सर्व्वे एकीभूता वसुन्धरे ।
इदमूचुस्ततो विप्राः शुद्धोऽसीति द्विजम्प्रति ॥ ४८ ।
चक्रतीर्थप्रभावेण पापान्मुक्तः सनातनः ।
अस्माकं वचनाच्चैव पुनः सिद्धोऽसि वै द्विज ॥ ४९ ।
ब्राह्मणानां वचः श्रुत्वा स द्विजो हृष्टमानसः ।

स्नानार्थन्तु ततः स्थानाच्चक्रतीर्थं समागतः॥ ५०।
गते तस्मिंस्तस्य भार्य्या भिक्षामादाय चागता।
सा तु हृष्टेन मनसा भर्त्तारं वाक्यमब्रवीत्।
भोजनं कुरु मे दत्तं हत्या लब्धामि ते गता॥ ५१।
प्रियावचनमाकर्ण्य भर्त्ता वचनमब्रवीत्।
पुनराभाषितं भद्रे* यदिदम्भाषितं त्वया॥ ५२।
भर्त्तुर्वचनमाकर्ण्य पत्नी वचनमब्रवीत्।
न त्वं सम्भाषितः पूर्व्वं ब्रह्महत्यासमन्वितः।
चक्रतीर्थप्रभावेण मुक्तोऽसि द्विजसत्तम॥ ५३।
उत्तिष्ठ कान्त गच्छाव कल्पग्रामं सुशोभितम्।
तया सार्द्धं जगामाथ कल्पग्रामं द्विजोत्तमः॥ ५४।
भद्रेश्वरनिमित्तं हि द्रव्यञ्च कथितं शुभम्।
नित्यञ्च भुञ्जते यत्र पात्रं द्रव्यसमर्पितम्।
दृष्ट्वा भद्रेश्वरे देवं चक्रतीर्थे फलं लभेत्† ॥ ५५।
कल्पग्रामाच्छतगुणं चक्रतीर्थं वसुन्धरे।
अहोरात्रोपवासेन मुच्यते ब्रह्महत्यया॥ ५६।
कल्पग्रामेण किं तस्य वाराणस्याञ्च वा शुभे।
मथुरान्तु समासाद्य यः कश्चिन्म्रियते भुवि।
अपि कीटः पतङ्गो वा जायते स चतुर्भुजः॥ ५७।

इति वराहपुराणे चक्रतीर्थप्रभावो नाम
द्विषष्ट्यधिकशततमोऽध्यायः।

* पुनराभाष्यतां भद्रे इति कृते तु सम्यगर्थसङ्गतिर्भवति। † भवेदिति (क॰, (ख॰)।

# त्रयःषष्ट्यधिकशततमोऽध्यायः।

वराह उवाच।

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
वैकुण्ठतीर्थमासाद्य यद्वृत्तं हि पुरातनम्॥ १।
मिथिलायां* पुरी रम्या जनकेन च पालिता।
मिथिलावासिनो लोकास्तीर्थयात्रां समागताः॥ २।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चापि वसुन्धरे।
स्नात्वा सौकरवे तीर्थे आयाता मथुरां पुरीम्॥ ३।
तेषाञ्च भक्तिरुत्पन्ना मथुराम्प्रति सुन्दरि।
वैकुण्ठतीर्थमासाद्य सर्व्वे ते मनुजाः स्थिताः॥ ४।
तेषान्तु ब्राह्मणः कश्चिद्ब्रह्महत्यासु चिह्नितः।
रुधिरस्य हि धारा च स्रवन्ती तस्य हस्ततः॥ ५।
प्रत्यक्षा दृश्यते सर्व्वैर्ब्रह्महत्यास्वरूपिणी।
सर्व्वतीर्थप्लुतस्यापि ब्राह्मणस्य हि सा तदा॥ ६।
न गता पूर्व्वमेवासीद्वैकुण्ठे स्नानमाचरत्।
न सा वै दृश्यते धारा ततस्ते विस्मयङ्गताः॥ ७।
किमेतत्किमिति प्राहुर्धारां प्रति वसुन्धरे।
देवीब्राह्मणरूपेण लोकान्सर्व्वान्हि पृच्छति॥ ८।
केन कारणदोषेण धारा त्यक्त्वा गता द्विजम्।
तत्सर्व्वं कथयामासुर्ब्राह्मणस्य विचेष्टितम्॥ ९।

* मिथिला या पुरीति (ग)।

वैकुण्ठे तु* निमग्नोऽयं ब्रह्महत्या गता ततः ।
विस्मयो नात्र कर्त्तव्यस्तीर्थस्येदं महत्फलम् ॥ १० ॥
इत्युक्तास्तैर्द्देवदेवस्तत्रैवान्तरधीयत ।
एषः प्रभावस्तीर्थस्य वैकुण्ठस्य वसुन्धरे ॥ ११ ।
वैकुण्ठतीर्थे यः स्नाति मुच्यते सर्व्वपातकैः ।
सर्व्वपापविनिर्मुक्तो विष्णुर्लोकं स गच्छति ॥ १२ ॥

सूत उवाच† ।

पुनरन्यत्प्रवक्ष्यामि असिकुण्डेऽतिपुण्यदे ।
नाम्ना गन्धर्व्वकुण्डन्तु तीर्थानां तीर्थमुत्तमम् ॥ १३ ।
तत्र स्नातो नरो देवि गन्धर्व्वैः सह मोदते ।
तत्र यो मुञ्चते प्राणान्मम लोकं स गच्छति ॥ १४ ॥
विंशतिर्योजनानान्तु माथुरं मम मण्डलम् ।
इदं पद्मं महाभागे सर्व्वेषां मुक्तिदायि च ॥ १५ ।
कर्णिकायां स्थितोदेवि केशवः केशनाशनः ।
कर्णिकायां मृता ये तु तेऽमरा मुक्तिभागिनः ॥ १६ ।
तत्र मध्ये मृता ये तु तेषां मुक्तिर्वसुन्धरे ॥ १७ ।
पश्चिमेन हरिन्देवं गोवर्द्धननिवासिनम् ।
दृष्ट्वा तं देवदेवेशं किं मनः परितप्यते‡ ॥ १८ ।

* वैकुण्ठेऽतीति (ग)। † सूत उवाचेति सार्व्वत्रिकः पाठः परमेष न सङ्गच्छते पूर्व्वतोऽविच्छिन्ने वराहवाक्प्रसङ्गे स्थिते सूतवचनस्याप्रसङ्गतत्वात्, वक्ष्यमाणानां मम लोकं स गच्छतीत्यादि वचनानामसम्बद्धत्वाच्च। अतोऽत्र वराह उवाच इति सम्यक् सम्भाव्यते। ‡ परितप्यतीति चेत्साधु।

उत्तरेण तु गोविन्दं दृष्ट्वा देवं परं शुभम् ।
नासौ पतति संसारे यावदाभूतसंप्लवम् ॥ १९ ॥
विश्रान्तिसंज्ञके देवं पूर्व्वपक्षे व्यवस्थितम् ।
यं दृष्ट्वा तु नरो याति मुक्तिं नास्त्यत्र संशयः ॥ २० ॥
दक्षिणेन तु मां विद्धि प्रतिमां दिव्यरूपिणीम् ।
महाकायां सुरूपाञ्च केशवाकारसन्निभाम् ।
तां दृष्ट्वा मनुजो देवि ब्रह्मणा सह मोदते ॥ २१ ॥
कृते युगे तु राजासीन्मान्धाता नाम नामतः ।
तेनाहन्तोषितो देवि भक्तियुक्तेन चेतसा ॥ २२ ॥
तस्य तुष्टेन हि मया प्रतिमेयं समर्पिता ।
तेनेयं पूजिता नित्यमात्ममुक्तिमभीप्सता ॥ २३ ॥
यदा तु मथुराम्प्राप्य लवणोऽयं निपातितः ।
तदैव प्रतिमा दिव्या मथुरायां व्यवस्थिता ॥ २४ ॥
पुण्येयं प्रतिमा दिव्या तेजसा दिव्यरूपिणी ।
कपिलो नाम विप्रर्षिर्मम भक्तिपरायणः ॥ २५ ॥
मनसा निर्म्मिता तेन वाराही प्रतिमा शुभा ।
कपिलो ध्यायते* नित्यमर्च्चति स्म दिने दिने ॥ २६ ॥
इन्द्रेणाराधितो देवि कपिलो मुनिसत्तमः ।
तस्य प्रीतो ददौ देवं वराहं दिव्यरूपिणम् ॥ २७ ॥
देवे लब्धे तु वाराहे शक्रो हर्षसमन्वितः ।
ध्यायति† स्म सदा देवं पूजाङ्कृत्वा हि भक्तितः ।

* ध्यायतीति साधु । † ध्यायते स्मेति (क), (ख) ।

इन्द्रेण तु तदा प्राप्तं दिव्यं स्थानमनुत्तमम् ॥ २८ ।
ततः कालेन महता रावणो नाम राक्षसः ।
इन्द्रलोकङ्गतः सोऽथ स्वर्गं जेतुं महाबलः ॥ २९ ।
शक्रेण सह सङ्गम्य ततो युद्धं प्रवर्त्तितम् ।
रावणेन जिता देवाः शक्रश्चैव महाबलः* ।
बद्धा चेन्द्रं महाबाहुं शक्रस्य भवनङ्गतः ॥ ३० ।
प्रविश्य रावणस्तत्र गृहे रत्नविभूषिते ।
दृष्ट्वा कपिलवाराहं शिरसा धरणीं गतः ।
तेन सम्मोहितो देवि रावणो नाम राक्षसः ॥ ३१ ।
त्रातुमर्हसि मे देव धरणीधर माधव ।
दामोदर हृषीकेश हिरण्याक्षविदारण ॥ ३२ ।
वेदगर्भ नमस्तेऽस्तु वासुदेव नमोऽस्तु ते ।
कूर्म्मरूप नमस्तेऽस्तु नारायण नमोऽस्तु ते ॥ ३३ ।
मत्स्यरूपधरं देवं मधुकैटभनाशिनम् ।
निरीक्षितुं न शक्नोमि प्रष्टुञ्चैव गुणव्रत।† ॥ ३४ ।
देवदेव नमस्तुभ्यं भक्तानामभयप्रद ।
मम त्वं भक्तिनम्रस्य प्रसादं कुरु सर्व्वदा ॥ ३५ ।
इति स्तुतो रावणेन देवदेवो जगत्पतिः ।
सौम्यरूपोऽभवद्देवो लोकनाथो जनार्द्दनः ॥ ३६ ।

* शक्रश्चैव महाबलमिति बहुषु पाठः, तत्र तथाविधपराभवेण शक्रस्यापि क्लीवत्वं जातमिति च सूच्यते। † न सुव्रत इति (ग)।

सन्निधानमनुप्राप्य पुष्पकारोहणोत्सुकः ।
तदुद्धर्त्तुं न शक्नोति रावणो विस्मयङ्गतः ॥ ३७ ।
शङ्करेण पुरा सार्द्धं कैलासस्तु मयोद्धृतः ।
देव त्वं स्वल्पकायोऽसि नाहमुद्धरणक्षमः ॥ ३८ ।
प्रसीद देवदेवेश सुरनाथ नमोऽस्तु ते ।
अहं त्वां नेतुमिच्छामि पुरीं लङ्कामनुत्तमाम् ॥ ३९ ।

वराह उवाच ।

अवैष्णवोऽसि रक्षस्त्वं कुतो भक्तिस्तवेदृशी ।
कपिलस्य वचः श्रुत्वा रावणो वाक्यमब्रवीत् ।
त्वद्दर्शनात्समुत्पन्ना भक्तिरव्यभिचारिणी ।
महात्मंस्त्वां नयिष्यामि* देवदेव नमोऽस्तु ते ॥ ४०।४१
भक्तिमुद्वहतस्तस्य लघुर्वेषोऽभवत्तदा ।
पुष्पके तु समारोप्य देवं त्रैलोक्यविश्रुतम् ।
आनयामास लङ्कायां स्थापयित्वा स्वके गृहे ।
तदा स्थितोऽहं लङ्कायां रावणेन प्रपूजितः ॥ ४२।४३ ।
अयोध्याधिपतीरामो हन्तुं राक्षसपुङ्गवम् ।
गतोऽसौ विक्रमेणैव हत्वा राक्षसपुङ्गवम् ।
विभीषणश्च लङ्काया आधिपत्येऽभिषेचितः ।
विभीषणेन रामस्य सर्व्वस्वञ्च निवेदितम् ॥ ४४।४५ ।

राम उवाच ।

अनेन नास्ति मे कार्य्यं तव रक्षो विभीषण ।

---

* नेष्यामीति माधु ।

देवो मे दीयतां रक्षः शक्रलोकाद्य आगतः ।
अहन्यहनि पूजामि* देवं वाराहरूपिणम् ॥ ४६ ।
अयोध्यायाञ्च नेष्यामि त्वया दत्तं हि राक्षस ।
ततः समर्पयामास कपिलं दिव्यरूपिणन् ॥
पुष्पके तु समारोप्य नीतवान्नगरीं प्रति ।
अयोध्यायां स्थापयित्वा पूजयामास तं तदा ॥ ४७।४८ ।
गतं वर्षसहस्रन्तु दशोत्तरमतःपरम् ।
लवणस्य वधार्थं हि शत्रुघ्नं प्रेषयत्तदा† ।
कृतप्रणामः शत्रुघ्नो राघवाय महात्मने ।
चतुरङ्गबलोपेतो जगाम मथुराम्प्रति ॥ ४९ ।
गत्वा तु राक्षसश्रेष्ठं लवणं रौद्ररूपिणम्‡ ।
घातयित्वा तु शत्रुघ्नः प्रविश्य मथुरां पुरीम् ।
*ब्राह्मणान्स्थापयित्वा तु मया तुल्यान्महौजसः ।*
*षड्विंशतिसहस्राणि वेदवेदाङ्गपारगान् ॥ ५०।५१ ।*
अनृचो माथुरो यत्र चतुर्वेदस्तथापरः ।
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता: ॥ ५२ ।
लवणस्य यथा वृत्तं कथितं ते वसुन्धरे ।
लवणस्य वधं श्रुत्वा राघवो वाक्यमब्रवीत् ।
वरं वरय शत्रुघ्न यत्ते मनसि रोचते ॥ ५३ ।
राघवस्य वचः श्रुत्वा शत्रुघ्नो वाक्यमब्रवीत् ।

* पूजयामीति साधु । † अप्रेषयदिति साधु । ‡ रुद्ररूपिणमिति (क), (ख) ।

यदि तुष्टोऽसि मे देव वरार्हो यदि वाप्यहम् ।
दीयतां मम देवोऽयं यदि मे वरदो भवान् ॥ ५४ ।
शत्रुघ्नस्य वचः श्रुत्वा राघवोवाक्यमब्रवीत् ।
नय शत्रुघ्न देवं त्वं दिव्यं वाराहरूपिणम् ॥ ५५ ।
धन्याऽसौ मण्डली लोके धन्या सा मथुरा पुरी ।
धन्यास्ते माथुरा लोकाः कपिलं पश्यते* सदा ॥ ५६ ।
दृष्टः स्पृष्टः सदा ध्यातः स्नापितश्च दिने दिने ।
अनुलिप्तश्च शत्रुघ्न सर्व्वपापं व्यपोहति ॥ ५७ ।
पूजितः स्नापितो देवो दृष्टो येस्तु दिने दिने ।
सर्व्वं हरति वै पापं मोक्षञ्चैव प्रयच्छति ॥ ५८ ।
इत्युक्ता राघवस्तस्मै देवमादादसुन्धरे ।
देवमादाय शत्रुघ्नो जगाम मथुरां पुरीम् ॥ ५९ ।
ब्राह्मणं स्थापयित्वा तु आगच्छन्मम सन्निधौ ।
तत्र मध्ये तु संस्थाप्य पूजयामास राघवः ।
अनेन क्रमयोगेण मथुरायां स्थितः प्रभुः ॥ ६० ।
गयायां पिण्डदानेन यत्फलं ज्येष्ठपुष्करे ।
तत्फलं समवाप्नोति क्षेत्रं दृष्ट्वा सदा नरः ॥ ६१ ।
विश्रान्तिसंज्ञके तद्वद्गोविन्दे च तथा हरौ ।
केशवे दीर्घविष्णौ च तदेव फलमश्नुते ॥ ६२ ।
उदये मामकं तेजः सदा विश्रान्तिसंज्ञके ।

* पश्यन्तीति साधु ।

मध्याह्ने मामकं तेजो दीर्घविष्णौ व्यवस्थितम् ।
केशवे मामकं तेजो दिनभागे चतुर्थके ॥ ६३ ।
एषा विद्या पुरा देवि नित्यकालं सुगोपिता ।
भक्ता त्वं मम शिष्या च कथिता ते वसुन्धरे ॥ ६४ ।

इति वराहपुराणे कपिलवराहमाहात्म्यं नाम
त्रिषष्ठ्यधिकशततमोऽध्यायः ।

## चतुःषष्ठ्यधिकशततमोऽध्यायः ।

वराह उवाच ।

अस्ति गोवर्द्धनं नाम क्षेत्रम्परमदुर्लभम् ।
मथुरापश्चिमे भागे अदूराद्योजनद्वयम् ॥ १ ।
क्रदं तत्र महाभागे द्रुमगुल्मलतायुतम् ।
चत्वारि तत्र तीर्थानि पुण्यानि च शुभानि च ॥ २ ।
ऐन्द्रं पूर्व्वेण पार्श्वेन यमतीर्थन्तु दक्षिणे ।
पश्चिमे वारुणं तीर्थं कौवेरञ्चोत्तरेण तु ।
तेषां मध्ये स्थितो भद्रे क्रीड़यिष्ये यदृच्छया ॥ ३ ।
तत्र वै शक्रतीर्थे तु स्नानं कुर्य्याद्दृढ़व्रतः ।
मोदते शक्रलोके तु सर्व्वद्वन्द्वविवर्ज्जितः ॥ ४ ।
दक्षिणे यमतीर्थे तु स्नानं कुर्य्याद्यथाविधि ।

यमस्य भवनङ्गत्वा मोदते कृतनिश्चय: ५ ।
तत्राथ मुञ्चते प्राणान् लोभमोहविवर्जित: ।
यमलोकं परित्यज्य मम लोकं स गच्छति ॥ ६ ।
तत्रैव वारुणं तीर्थमासाद्य स्नानमाचरेत् ।
वारुणं भवनङ्गत्वा मुच्यते सर्व्वकिल्बिषात् ॥ ७ ।
तत्राथ मुञ्चते प्राणान्कामक्रोधविवर्ज्जित: ।
वारुणं लोकमुत्सृज्य मम लोकं स गच्छति* ॥ ८ ।
तत्र मध्ये च य: स्नाति क्रीड़ते स मया सह ।
अथाऽत्र मुञ्चते प्राणान्मम लोकं स गच्छति ॥ ९ ।
अन्नकूटं† तत: प्राप्य तस्य कुर्य्यात्प्रदक्षिणम् ।
न तस्य पुनरावृत्तिर्द्देवि सत्यं ब्रवीमि ते ॥ १० ।
स्नात्वा मानसगङ्गायां दृष्ट्वा गोवर्द्धने हरिम् ।
अन्नकूटं परिक्रम्य किं पुन: परिशोचति ॥ ११ ।
सोमवारे त्वमायां वै‡ प्राप्य गोवर्द्धनङ्गिरिम् ।
दत्त्वा पिण्डं पितृभ्यश्च राजसूयफलं भवेत् ॥ १२ ।
गयायां पिण्डदानेन यत्फलम्प्राप्यते नर: ।
तत्फलं प्राप्यते तत्र नात्र कार्य्या विचारणा ॥ १३ ।
गोवर्द्धनम्परिक्रम्य दृष्ट्वा देवं परं हरिम् ।
राजसूयाश्वमेधानां फलम्प्राप्नोत्यसंशयम् ॥ १४ ।

---

* मम लोकञ्च गच्छतीति (ग) । † अन्न कूटमिति (ग), एवं परत्रापि । ‡ अमावस्यामिति (क), (ख) ।

पृथिव्युवाच।

परिक्रमोऽन्नकूटस्य विधिना क्रियते कथम्।
प्रभावगुणमाहात्म्यं तद्भवान्वक्तुमर्हसि॥ १५॥

वराह उवाच।

मासि भाद्रपदे या तु शुक्ला चैकादशी शुभा।
गोवर्द्धने सोपवासः कुर्य्यात्तत्र प्रदक्षिणाम्॥ १६॥
स्नात्वा मानसगङ्गायां प्रभाते उदिते रवौ।
गोवर्द्धनं प्रसाद्यैवं हरिश्चाऽचलमूर्द्धनि।
पुण्डरीकं ततो गच्छेत्कुण्डे स्नात्वा विधानतः॥ १७॥
देवान् पितॄन् समभ्यर्च्य पुण्डरीकमथार्च्य* च।
सर्व्वपापविनिर्मुक्तः प्रयाति भवनं हरेः॥ १८॥
कुण्डञ्चाप्सरसं नाम प्रसन्नसलिलाशयम्।
तत्र स्नानं तर्पणञ्च कृत्वा फलमवाप्नुयात्।
राजसूयाश्वमेधानां धूतपाप्मा न संशयः॥ १९॥
तीर्थं सङ्कर्षणं नाम्ना बलभद्रेण रचितम्।
गोहत्या पूर्व्वसंलग्ना उत्तीर्णा तत्र दूरतः।
स्नानाद्गच्छति सा क्षिप्रं नाऽत्र कार्य्या विचारणा॥ २०॥
अन्नकूटस्य सान्निध्ये तीर्थं शक्रविनिर्म्मितम्।
तत्र कृष्णेन पूजार्थमिन्द्रस्य विहतो मखः॥ २१॥
महानिन्द्रस्य† चोत्थानं भक्ष्यभोज्यसमन्वितम्।

---

* अथार्च्चयित्वेति साधु। † महेन्द्रस्य अथवा महदिति उत्थानविशेषणं, ततः महदिन्द्रस्येति साधु।

कृत्वा तुष्टिकरा॑साया॑ऽदिन्द्रेण सह सङ्गथा ।
इन्द्रस्य वर्षतोऽत्यन्तं तासां पीड़ाकरञ्जलम् ।
तासाञ्चवां रक्षणाय धृतो गिरिवरस्तदा ॥ २२।२३ ।
सोऽन्नकूट इति ख्यातः सर्व्वतः शक्रपूजितः ।
देवा देव्यस्तथा गावो ऋषिभिश्च समन्विताः ।
पूजितास्तर्पिताः श्रेष्ठाः श्रमतो विष्णुना पुरा ।
तस्मिन् स्थाने तर्पणेन शतक्रतुफलं लभेत् । २४।२५ ।
ततः कदम्बखण्डाख्यं कुण्डन्तु विमलोदकम् ।
स्नात्वा पितॄन् समभ्यर्च्य ब्रह्मलोकमवाप्नुयात् ॥ २६ ।
ततो गच्छेद्देवगिरिं शतबाहुसमुच्छ्रितम् ।
यत्र स्नानाद्दर्शनाच्च वाजपेयफलं लभेत् ॥ २७ ।
महादेवं ततो दृष्ट्वा गत्वा ध्यात्वा फलं लभेत् ।
कुण्डे स्नात्वा पितॄंस्तर्प्य† कृतकृत्यो दिवं व्रजेत् ॥ २८ ।
गङ्गायाश्चोत्तरं यावद्देवदेवस्य चक्रिणः ।
अरिष्टेन समं यत्र महद्युद्धं प्रवर्त्तितम् ॥ २९ ।
घातयित्वा ततश्चेममरिष्टं वृषरूपिणम् ।
कोपेन पार्ष्णिघातेन मह्यां तीर्थं प्रवर्त्तितम् ॥ ३० ।
वृषभस्य वधाज्ज्ञेयं तीर्थं सुमहदद्भुतम् ।
स्नातस्तत्र तदा कृष्णो वृषं हत्वा महासुरम् ॥ ३१ ।
वृषहत्यासमायुक्तः कृष्णश्चिन्तान्वितोऽभवत् ।

---

* तुष्टिकरामासामादिति ग । † तर्पयित्वेति साधु ।

हर्षोद्धतोमया चायमरिष्टः पापपूरुषः ॥ ३२ ।
तत्र राधा समाश्लिष्य कृष्णमक्लिष्टकारणम् ।
स्वनाम्ना विदितं कुण्डं कृतं तीर्थमदूरतः ॥ ३३ ।
राधाकुण्डमिति ख्यातं सर्व्वपापहरं शुभम् ।
अरिष्टराधाकुण्डाभ्यां स्नानात्फलमवाप्नुयात् ।
राजसूयाश्वमेधानां नात्र कार्य्या विचारणा ।
गोहत्याब्रह्महत्याद्याः* पापं चिप्रं विनश्यति ॥ ३४।३५ ।
तीर्थं हि मोक्षराजाख्यं नृणां मुक्तिप्रदायकम् ।
यस्य दर्शनमात्रेण सर्व्वपापैः प्रमुच्यते ॥ ३५ ।
इन्द्रध्वजोच्छ्रयं यत्र पूर्व्वस्यां दिशि वै कृतम्† ।
इन्द्रध्वजमिति ख्यातं तीर्थञ्चैवातिमुक्तिदम्‡ ।
तत्र स्नाता दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ ३६ ।
ततो हरौ निवेश्याशु यात्राफलमनुत्तमम् ।
चक्रतीर्थे नरः स्नात्वा पञ्चतीर्थाख्यकुण्डके ।
समाप्य तीर्थयात्राञ्च रात्रौ जागरणं तथा ।
गोवर्द्धने च कर्त्तव्यं महापातकनाशनम् ॥ ॥ ३७।३८ ।
एकादश्यां तदा रात्रौ कृत्वा जागरणं शुभम् ।
द्वादश्यामुषसि स्नात्वा पिण्डं निर्वाप्य शक्तितः ।
पितृणां मुक्तिदं तेषां य एवं कुरुते नरः ।

* गोहत्याब्रह्महत्ययोरिति साधु । एवं कृते तु छन्दोदोषः । † इन्द्रध्वजोच्छ्रयः कृत इति साधु । इन्द्रध्वजोच्छ्रयमिति (क), (ख) । ‡ अथ मुक्तिदमिति (क), (ख) ।

सर्व्वपापविनिर्मुक्ताः परं ब्रह्माधिगच्छति ॥ ३९।४० ।
एतत्ते कथितं भद्रे अन्नकूटपरिक्रमम् ।
यथानुक्रमयोगेन तथाषाढ़ेऽपि चोच्यते ॥ ४१ ।
य एतच्छृणुयाद्भक्त्या तीर्थानुक्रमणं हरेः ।
गोवर्द्धनस्य माहात्म्यं गङ्गास्नानफलं भवेत् ॥ ४२ ।

इति वराहपुराणे गोवर्द्धनमाहात्म्ये अन्नकूटपरिक्रमप्रभावो नाम
चतुःषष्ट्यधिकशततमोऽध्यायः ।

## पञ्चषष्ट्यधिकशततमोऽध्यायः ।

वराह उवाच ।

अतः परं प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
यथा वृत्तं प्रतिष्ठाने दक्षिणापथमण्डले ॥ १ ।
सुशीलो नाम वैश्यस्तु तस्मिन्वसति पत्तने ।
धनधान्यसमृद्धस्तु बहुपुत्रः कुटुम्बवान् ॥ २ ।
कुटुम्बभरणासक्तो नित्यकालं हि तिष्ठति ।
स्नानं दानं जपं होमं देवार्च्चां न करोति सः ॥ ३
क्रयविक्रयसक्तस्य कालो दीर्घो गतस्तदा ।
कदाचिदपि पापोऽसौ न साधु गमनं गतः ॥ ४ ।
न तेन धर्म्मश्रमणं कदाचिदपि संश्रुतम् ।

देवानां ब्राह्मणानाञ्च भक्तिस्तस्य न विद्यते ॥ ५ ।
आत्मोदरनिमित्तं हि पापञ्च कुरुते सदा ।
गच्छन्तं बहुकालञ्च न तं बुध्यति पापकृत् ॥ ६ ।
न तस्य जायते बुद्धिर्दानं दातुं कदाचन ।
तस्यैवं वसतस्तत्र प्रतिष्ठाने पुरोत्तमे ॥ ७ ।
धनयुक्तोऽपि पापोऽसौ न ददाति कदाचन ।
नैवान्यमतिदातारं शक्नोति च निरीक्षितुम् ॥ ८ ।
स तु कालेन महता कुटुम्बासक्तमानसः ।
कदाचिद्दैवयोगेन साध्वीं भार्य्यां प्रियान् सुतान् ।
त्यक्त्वा जगाम निधनं प्रेतत्वं समुपागतः ॥ ९ ।
निरुदकेषु देशेषु विच्छायेषु वनेषु च ।
परिभ्रमन् क्षुधाविष्टो मरुदेशं गतोऽपि सः ॥ १० ।
तत्रैव च कृतावासो बहुकालं स वै वणिक् ।
कदाचिद्दैवयोगेन तत्र सार्थ उपागतः ॥ ११ ।
तस्य मध्ये तु वणिजो मथुरायां विःनिसृताः ।
गते सार्थे तु स वणिक्तं वृक्षं समुपाश्रितः ॥ १२ ।
तत्रैव वसति प्रेतो रौद्ररूपो भयानकः ।
दीर्घदंष्ट्रः सुविकटो ह्रस्वबाहुर्विभीषणः ।
महाहनुर्विशालाक्षो विडालसदृशाननः ॥ १३ ।
अथ कालेन बहुना दैवयोगेन भामिनि ।
तत्राजगाम कश्चित्तु क्रयविक्रयकारकः ॥ १४ ।
तं दृष्ट्वा दूरतः प्रेतः अतिहर्षेण संयुतः ।

तत्राजगाम नृत्यन्स इदं वचनमब्रवीत् ।
भक्ष्यभूतो ममाद्य त्वं क्व भवन् यातुमिच्छति ॥ १५ ।
प्रेतस्य वचनं श्रुत्वा सोऽतिभीतो द्रुतङ्गतः ।
गच्छन्तं तं गृहीत्वा सः प्रेतो वचनमब्रवीत्* ॥ १६ ।
मम त्वं विहितो भक्ष्यः स्वयम्प्राप्तोऽसि मानव ।
मांसन्ते भक्षयिष्यामि पिबामि तव शोणितम् ॥ १७ ।
इत्याकर्ण्य वचस्तस्य स वणिग्वाक्यमब्रवीत् ।
कुटुम्बभरणार्थाय सम्प्राप्तो दुर्गमाटवीम् ॥ १८ ।
वृद्धः पिता मम गृहे माता पत्नी पतिव्रता ।
मयि सम्भक्षिते रक्षः कुटुम्बं हि मरिष्यति ॥ १९ ।
ततो वचनमाकर्ण्य प्रेतो वचनमब्रवीत् ।
कस्मात्स्थानात्समायातः सत्यं ब्रूहि महामते ॥ २० ।

विभुरुवाच ।

गोवर्द्धनो गिरिवरो यमुना च महानदी ।
तयोर्मध्ये पुरी रम्या मथुरा लोकविश्रुता ।
तस्यां वसाम्यहं प्रेत पितृपैतामहे गृहे ॥ २१ ।
तत्र मे वसतो नित्यं यद्द्रव्यं पूर्व्वसञ्चितम् ।
तत्सर्व्वं तस्करैर्नीतं क्षीणवित्तोऽभवं तदा ॥ २२ ।
स्वल्पं वित्तं गृहीत्वाऽहं समायातो† मरुस्थलम् ।

---

* पञ्चदशश्लोकस्य परार्द्धं षोड़शश्लोकस्य (ग) पुस्तके न भ्रः । † सम्प्राप्त इति (क), (ख), तत्र छन्दोभङ्गः ।

तव दृष्टिपथं यातो यत्कार्य्यं तत्कुरुष्व मे* ॥ २३ ॥

प्रेत उवाच।

न त्वां खादितुमिच्छामि कृपा मे जायते त्वयि।
समयेन हि मोक्ष्यामि कुरुष्व वचनं मम ॥ ॥ २४ ॥
निवृत्य गच्छ मथुरां मम कार्य्यार्थसाधकः।
तत्र गत्वा त्वया कार्य्यं यत्कर्त्तव्यं वदामि तत् ॥ २५ ॥
स्नानङ्कृत्वा तु विधिवत्कूपे चान्तःसमुद्रिके।
पिण्डदानं कुरुष्व त्वं मम नाम्ना प्रयत्नतः।
स्नानस्य च फलं देहि ततो गच्छ यथासुखम् ॥ २६ ॥
प्रेतवाक्यं ततः श्रुत्वा विभुर्वचनमब्रवीत्।
नाहं यास्यामि मथुरां द्रव्याभावे कथञ्चन।
भक्षयस्व शरीरं मे ततस्तृप्तिमवाप्स्यसि ॥ २७ ॥

प्रेत उवाच।

गृहे बहुधनं तेऽस्ति त्वं गच्छ मम सत्कुरु† ।
आस्ते धनमपर्य्याप्तं गच्छ त्वं मा विलम्बय ॥ ॥ २८ ॥

विभुरुवाच।

गृहे मम धनं नास्ति यत्त्वया समुदीरितम्।
गृहशेषं मम धनं न चान्यत्तत्र विद्यते।
पितृपैतामही कीर्त्तिरविक्रेया हि सा मया ॥ २९ ॥

* कुरुष्व भो इति (ग)। † तत्त्वं गच्छ मम सत्कुरु इति (ग) पाठोऽक्षरैकाल्याधिक्यात् छन्दोदोषः।

प्रेतः प्रहस्य सानन्दमिदं वचनमब्रवीत् ।
अस्ति चैव धनम्भोक्तं यन्मया त्वद्गृहे विभो ।
सुवर्णभारो गर्त्तस्थो गृहे तिष्ठति सञ्चितः ॥ ३० ।
निवर्त्त* गच्छ सन्तुष्टः सुहृदां प्रीतिवर्द्धनः ।
एवं द्रक्ष्यामि† ते मार्गं मथुरा येन गम्यते ॥ ३१ ।

सूत उवाच‡ ।

वणिग्हृष्टमना भूत्वा पुनर्वचनमब्रवीत् ।
इमामवस्थां सम्प्राप्य कथं ज्ञानसमुद्भवः ।
ततः स कथयामास यद्वृत्तं हि पुरातनम् ॥ ३२ ।
प्रतिष्ठाने पुरवरे विष्णोरायतनं महत् ।
प्रभातसमये तत्र विष्णोरायतने शुभे ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रास्तत्र समागताः ॥ ३३ ।
वाचकः पठते तत्र कथां पौराणिकीं शुभाम् ।
मम मित्रञ्च तत्रैव नित्यकालञ्च गच्छति ॥ ३४ ।
तस्मिन् काले तु मित्रेण नीतोऽहं विष्णुमन्दिरम् ।
अत्यादरेण महता सन्तोष्य च पुनः पुनः ।
मित्रेण सह तत्रैव तस्य पार्श्वे व्यवस्थितः ॥ ३५ ।
श्रुतो मया ततः कूपः पुण्योऽयं पापनाशनः ।
समुद्राः किल तिष्ठन्ति चत्वारोऽत्र समागताः ॥ ३६ ।

---

* निवर्त्तस्व निवर्त्तयेति वा साधु । † दर्शयिष्यामि ते मार्गमिति चेत् साधु भवेत् ।
‡ अत्रापि वराह उवाच इति पाठः सम्यक् तथैव वाक्प्रसङ्गात् ।

तस्य कूपस्य माहात्म्यं श्रुतं तत्र महत्फलम्।
वाचकाय ततो दानं दत्तं सर्व्वैर्महाजनैः॥ ३७।
मित्रेण प्रेरितो दाने मया मौनं समाश्रितम्।
मित्रेण च पुनः प्रोक्तं यथाशक्त्या* प्रदीयताम्।
तदा मित्रप्रसङ्गेन दत्तो वै स्वर्णमाषकः॥ ३८।
ततः कालेन महता गतो वैवस्वतक्षयम्।
वैवस्वतनियोगेन ततोऽहं पूर्व्वकर्म्मभिः।
प्रेतत्वं समनुप्राप्तो दुस्तरं दुर्गमं महत्॥ ३९।
न दत्तं न हुतञ्चापि तीर्थं नैवावगाहितम्।
न तर्पितास्तु पितरः प्राप्तोऽहं प्रेततां ततः॥ ४०।
इत्येतत्कथितं सर्व्वं यस्मात्त्वं परिपृच्छसि।
गच्छ त्वं सम्मुखस्तत्र यत्र सा मथुरा पुरी॥ ४१।
प्रेतस्य वचनं श्रुत्वा विभुर्वचनमब्रवीत्।
कथं धारयसे प्राणान्वृक्षमूलं समाश्रितः॥ ४२।

प्रेत उवाच।

कथितं हि मया पूर्व्वं यद्वृत्तं हि पुरातनम्।
वाचकाय तु यद्दत्तं सुवर्णस्य च माषकम्।
तद्दानस्य प्रभावेण नित्यं तृप्तोऽस्मि वै विभो॥ ४३।
अकामेन मया दत्तन्तस्येदङ्कर्म्मणः फलम्।
प्रेतभावङ्गतस्यापि न मे ज्ञानस्य विभ्रमः॥ ४४।

* यथाशक्तीति साधु।

ततश्च स वणिक्श्रेष्ठ आगत्य मथुरां पुरीम् ।
कृतं तेन च तत्सर्व्वं यथा प्रेतेन भाषितम् ।
तेन कृत्येन प्रेतोऽसौ मुक्तिं प्राप्य दिवङ्गतः ॥ ४५ ।
एतत्ते कथितं भूमे माहात्म्यं मथुराभवम् ।
चतुःसामुद्रिके कूपे पिण्डदाने पराङ्गतिम् ॥ ४६ ।
तीर्थे चैव गृहे वापि देवस्थानेऽपि चत्वरे ।
यत्र तत्र मृता देवि मुक्तिं यान्ति न चान्यथा ॥ ४७ ।
अन्यत्र हि कृतं पापं तीर्थमासाद्य गच्छति ।
तीर्थे तु यत्कृतं पापं वज्रलेपो भविष्यति ॥ ४८ ।
मथुरायाङ्कृतं पापं तत्रैव च विनश्यति ।
एषा पुरी महापुण्या यस्यां पापं न विद्यते ॥ ४९ ।
कृतघ्नश्च सुरापश्च चौरो भग्नव्रतस्तथा ।
मथुरां प्राप्य मनुजो मुच्यते सर्व्वकिल्बिषैः ॥ ५० ।
तिष्ठेद्युगसहस्रन्तु पादेनैकेन यः पुमान् ।
तस्याधिकं भवेत्पुण्यं मथुराया निवासिनः ॥ ५१ ।
परदाररता ये च ये नरा अजितेन्द्रियाः ।
मथुरावासिनः सर्व्वे ते देवा नरविग्रहाः ॥ ५२ ।
बलिभिक्षाप्रदातारस्ते मृताः क्रोधवर्ज्जिताः* ।
तीर्थस्नानरता ये च देवास्ते नरमूर्त्तयः ॥ ५३ ।
यदन्येषां सहस्रेण ब्राह्मणानां महात्मनाम् ।

* क्रोधविवर्ज्जिता इति (क, ख), तत्रैकाक्षराधिक्याच्छन्दोदोषः ।

एकेन पूजितेन स्यान्माथुरेणाखिलं हि तत् ॥ ५४ ।
अनृग्वे माथुरो यत्र चतुर्वेदस्तथापरः ।
वेदैश्चतुर्भिर्न च स्यान्माथुरेण समः क्वचित् ॥ ५५ ।
भवन्ति सर्व्वतीर्थानि पुण्यान्यायतनानि च ।
मङ्गलानि च सर्व्वाणि यत्र तिष्ठन्ति माथुराः ॥ ५६ ।
चतुर्वेदं परित्यज्य माथुरं पूजयेत्सदा ।
सिद्धा भूतगणाः सर्व्वे ये च देवगणा भुवि ।
मथुरावासिनो लोकान् पश्यन्ति च* चतुर्भुजान् ।
मथुरायां ये वसन्ति विष्णुरूपा हि ते नराः ॥ ५७ ।
ज्ञानिनस्ता हि पश्यन्ति† अज्ञाः पश्यन्ति तान्न च ॥ ५८ ।

इति वराहपुराणे मथुरामाहात्म्ये कूपप्रभावे ब्राह्मणमाहात्म्यं नाम
पञ्चपञ्चाधिकशततमोऽध्यायः ।

## षट्पञ्चाधिकशततमोऽध्यायः ।

धरण्युवाच ।

श्रुतानि तु महादेव तीर्थानि विविधानि तु* ।
असिकुण्डेति संज्ञेयं तन्मे त्वं कथय प्रभो ॥ १ ।

* लोकांश्च पश्यन्तीति (ग)। † ताहि पश्यन्तीति सार्व्वत्रिकः पाठः, तान्हीति साधु

* विविधानीति (क), (ख)।

वराह उवाच ।

सुमतिर्नाम राजासीद्धार्म्मिको लोकविश्रुतः ।
तीर्थयात्रानिमित्तेन स्वर्गलोकङ्गतः पुरा ॥ २ ।
गते स्वर्गन्तु नृपतौ पुत्त्रो राज्यञ्चकार ह ।
विमतिर्नाम नाम्ना च राज्ये पैतामहे स्थितः ॥ ३ ।
राज्यञ्च कुर्व्वतस्तस्य आगतो नारदस्तदा ।
विष्टरं पाद्यमर्घ्यञ्च तस्मै दत्तं यथोचितम् ॥ ४ ।
प्रतिगृह्य च तत्सर्व्वं तमुवाच स नारदः ।
पितुर्य्यॄणतां गत्वा स पुत्त्रो धर्म्मभाग्भवेत् ॥ ५ ।
इत्युक्त्वा नारदस्तत्र तत्रैवान्तरधीयत ।
नारदे तु गते राजा पप्रच्छ स्वात्ममन्त्रिणः ॥ ६ ।
तदा किमुक्तमृषिणा नारदेन पितुः कृते ।
आनृण्यमिति यद्वाक्यं मया बुद्धं न किञ्चन ॥ ७ ।
मन्त्रिणश्च ततो ज्ञात्वा पितुर्मरणमेव च ।
तीर्थयात्रानिमित्तञ्च तस्मै राज्ञे न्यवेदयन् ॥ ८ ।
अतएवोक्तमानृण्यं नारदेन पितुस्तव ।
श्रुत्वा वाक्यं तदा राजा तीर्थयात्राञ्चकार* ह ॥ ९ ।
विमतिर्बुद्धिकृत्पश्चा गच्छामो मथुरां पुरीम् ।
चतुर्व्वार्षिकामासांमथुरायां वसामहे† ॥ १० ।
सर्व्वाणि तत्र तीर्थानि तिष्ठन्ति विविधानि च‡ ।

* पितृमर्थमिति क. (ख) [illegible] † वसाम इति माप् [illegible] ‡ विविधानि चेति क). (ख)

आगते तु नृपे तत्र तीर्थान्यूचुः परस्परम् ॥ ११ ।
युद्धं विमतिना सार्द्धं स्वयं कर्त्तुं न शक्नुमः ।
कल्पग्रामन्तु गच्छामो वराहो यत्र तिष्ठति ॥ १२ ।
गतानि तत्र तीर्थानि कल्पग्रामं वसुन्धरे ।
तत्र वाराहरूपेण स्थितोऽहञ्च यदृच्छया ।
यावन्निरीक्षयाम्ययं तावत्तिष्ठन्ति सन्निधौ ॥ १३ ।

तीर्थान्यूचुः ।

जय विष्णो जयाचिन्त्य जय देव जयाच्युत ।
जय विश्वेश कर्त्तेश* जय देव नमोऽस्तु ते ॥ १४ ।

वराह उवाच ।

तीर्थैः स्तुतोऽहं वसुधे वचनञ्चेदमब्रुवम् ।
वरं वृणुत भद्रं वो यद्वो मनसि वर्त्तते ॥ १५ ।

तीर्थान्यूचुः ।

वराह यदि देवेश अभयं दातुमर्हसि ।
विमतिना सुपापेन कृतस्त्रासः सुदारुणः ।
तन्नियच्छस्व† पापिष्ठं यदि पश्यसि नः सुखम् ॥ १६ ।

वराह उवाच ।

हिताय सर्व्वतीर्थानां हनिष्यामि महारिपुम् ।
तत्र तीर्थनियोगेन आगतो मथुरां पुरीम् ॥ १७ ।
तत्रागतं तु वसुधे युद्धङ्कृत्वा तु तेन वै ।

* कर्त्तेश इति पाठः, कर्त्तृश वा कर्त्तेशेति साधु । † नियच्छेति साधु ।

तदासिना तु दिव्येन स राजा बलदर्पितः ।
सूदितो हि मया देवि अस्थयं निहितं भुवि ॥ १८ ।
असेरग्रेण उद्धृत्य मृत्तिकां वरवर्णिनि ।
तत्र कुण्डं महद्दिव्यं देवर्षिविधिनिर्म्मितम् ।
असिकुण्डेति संज्ञा च प्राप्ता तेन वसुन्धरे ॥ १९ ।
तत्राश्चर्य्यं प्रवक्ष्यामि मनःकर्णसुखावहम् ।
पश्यन्ति मनुजाः सिद्धाः सर्व्वपापविवर्ज्जिताः ॥ २० ।
द्वादश्याञ्च चतुर्द्दश्यां श्रद्दधाना जितेन्द्रियाः ।
फलानि तस्य पश्यन्ति लभन्ते न सुनिश्चिताः* ॥ २१ ।
तस्मिन् काले ह्यहं देवि मथुरायां समागतः ।
तत्र तिष्ठाम्यहं भद्रे पश्चिमां दिशमाश्रितः ॥ २२ ।
तत्र कृत्वा च हैरण्या मूर्त्तयश्च† चतुर्विधाः ।
तीर्थे वाराहसंज्ञे तु मथुरायां व्यवस्थिताः ।
सुदृढाः सुस्पृश्य सुस्मूर्य्यः पश्यति स मुच्यते ॥ २३ ।
एका वराहसंज्ञा च तथा नारायणस्य च ।
वामनस्य तृतीया वै चतुर्थी राघवस्य च ॥ २४ ।
एतायतस्रो‡ यः पश्येत् स्नात्वा कुण्डेऽसिसंज्ञिते ।
चतुःसागरपर्य्यन्ता क्रान्ता तेन धरा ध्रुवम् ।
तीर्थानां माथुराणाञ्च सर्व्वेषां फलमश्नुते ॥ २५ ।

---

* लभन्ते तु सुनिश्चिता इति (क॰, ख॰) । † मूर्त्तिरिति साधु । ‡ एतायतसृरिति साधु ।

तत्र सर्व्वेषु तीर्थेषु असिकुण्डं महत्तरम्* ।
या संख्या कथिता पूर्व्वं तीर्थानां दक्षिणोत्तरे ।
असिकुण्डं समारभ्य तीर्थानुक्रमणिका वरा† ॥ २६ ।
सुप्तोत्थितोऽपि द्वादश्यामसिकुण्डाप्लुतो नरः ।
मूर्त्तीः पश्यति यस्तास्तु ब्रह्मभूयाय कल्पते ।
नास्तीह पुनरावृत्तिर्भवेत्कालविपर्य्यये ॥ २७ ।

इति वराहपुराणे असिकुण्डप्रभावो नाम

षट्षष्ट्यधिकशततमोऽध्यायः ।

## सप्तषष्ट्यधिकशततमोऽध्यायः ।

वराह उवाच ।

शृणु देवि यथा संज्ञा विश्रान्तेः कीर्त्तिता पुरा ।
राक्षसेन पुरा प्रोक्ता ब्राह्मणाय महात्मने ॥ १ ।

पृथिव्युवाच ।

किमर्थं राक्षसेनोक्ता संज्ञा विश्रान्तिसंज्ञिता ।
किमर्थं पृष्टवान्विप्रः सर्व्वं कथय मे प्रभो ॥ २ ।

* महत्तममिति मक्ष । † तीर्थानुक्रमणिका वरेत्यर्थेकाक्षराधिकम् ।

वराह उवाच ।

उज्जयिन्यामभूद्विप्रः सदाचारविवर्ज्जितः ।
न स पूजयते* देवान् स साधूनभ्यर्चति ॥ ३ ।
पुण्यतीर्थं समासाद्य न च स्नानङ्करोति सः ।
देववेदाग्निरहितः परदाररतः सदा ॥ ४ ।
सन्ध्ये द्वे शयनस्थश्च निलङ्कालं स तिष्ठति ।
न स देवमनुष्यांश्च पितॄन् पूजयते सदा ॥ ५ ।
पापाचाररतो नित्यं पापसङ्गः सुदुर्म्मतिः ।
गार्हस्थ्यधर्म्ममाश्रित्य मोहितोवर्त्तते सदा ॥ ६ ।
गार्हस्थ्यं सर्व्वधर्म्माणां श्रेष्ठमुक्तं स्वयम्भुवा ।
यावन्ति† जन्तवः सर्व्वे यथा गोः सर्व्वतः स्थिताः ॥ ७ ।
यथा मातरमाश्रित्य सर्व्वे जीवन्ति जन्तवः ।
एवं गार्हस्थ्यमाश्रित्य‡ सर्व्वे जीवन्ति जन्तवः ॥ ८ ।
ततः स चौर्य्यतां प्राप्तः पापैः सह नराधमः ।
स च रात्रौ द्रव्यलोभाल्लब्धोऽसौ राजरक्षिभिः ।
पलायमानः स परमन्धकूपेऽपतत्तदा ॥ ९ ।
मृतोऽसौ पतितस्तत्र§ राक्षसत्वमुपागतः ।
अन्धकूपे स पतितो घोररूपोऽवसत्तदा ॥ १० ।

* पूजयतीति साधु । एवं परत्र　+ जीवन्तीति (ग) । ‡ एवं गार्हस्थ्यमाश्रित्य सर्व्वे जीवन्ति चाश्रमा इति क्वचित्पाठः । § मृतः स पतितोऽसुत्र राक्षसत्वमुपागत- इति (ग) ।

कदाचिदथ कार्य्येषु महान् सार्थ उपागतः ।
तेषां मध्ये द्विजः कश्चिद्रक्षाङ्कृत्वा वसुन्धरे ।
रक्षोघ्नेन च मन्त्रेण सर्व्वं सार्थञ्च रक्षति ।
तत्रागत्य च रक्षस्तु ब्राह्मणं वाक्यमब्रवीत् ॥ ११ १२ ।

राक्षस उवाच ।

अहं दास्यामि ते विप्र यत्ते मनसि वर्त्तते ।
बहुकालेन सम्प्राप्तं भोजनञ्च यथेप्सितम् ॥ १३ ।
उत्तिष्ठ विप्र गच्छ त्वमन्यत्र शयनं कुरु ।
येनाहं भक्षये सार्थं यावत्तृप्तिर्भवेन्मम ॥ १४ ।
राक्षसस्य वचः श्रुत्वा विप्रो वचनमब्रवीत् ।
एकः सार्थं प्रयातोऽहं* नोत्सृजामि कथञ्चन ॥ १५ ।
तस्माद्राक्षस गच्छ त्वं सार्थं मम परिग्रहम् ।
निरीक्षितुं न शक्तोऽसि मम मन्त्रबलेन हि ॥ १६ ।

राक्षस उवाच ।

मम भक्ष्ये हृते विप्र दोषस्तव भविष्यति ।
दयां कुरु त्वं विप्रर्षे भोजनं मम दीयताम् ॥ १७ ।
ततोऽपृच्छदसौ विप्रो राक्षसं दारुणं प्रति ।
केन त्वं कर्म्मदोषेण राक्षसत्वमुपागतः ॥ १८ ।
ततश्च कथयामास यथा वृत्तं पुरातनम् ।
अनाचारादिहेतोश्च राक्षसत्वमुपागतम् ॥ १९ ।

* एकमार्गमुपातोऽहं (उपेतोऽहम् ?) इति (ग) ।

आत्मानङ्कथयामास विप्राग्रे स यथातथम् ।
तस्य दुःखेन संयुक्तो विप्रोऽसौ वाक्यमब्रवीत् ॥ २० ।

विप्र उवाच ।

मित्रत्वे वर्त्तसे रक्षस्तव दास्यामि किं वद ।
आत्मना चोपकारेण प्रियं किं करवाणि ते ॥ २१ ।

राक्षस उवाच ।

ददासि यदि तद्विप्र यन्मे मनसि वर्त्तते ।
मथुरायाञ्च यत्स्नातं कृतं विश्रान्तिसंज्ञके ।
तस्य स्नानफलं देहि येन मुक्तिं व्रजाम्यहम् ।
तस्य दुःखेन संयुक्तो विप्रो वाक्यमथाब्रवीत्* ॥ २२।२३ ।

विप्र उवाच ।

कथं जानासि रक्षस्त्वं तीर्थं विश्रान्तिसंज्ञकम् ।
कथञ्च संज्ञा तस्याभूत्तत्कथयस्व राक्षस ॥ २४ ।

राक्षस उवाच ।

पुरी उज्जयिनी नाम्ना तस्यां वासो हि मे सदा ।
कस्मिंश्चिदथ कालेन† गतोऽहं विष्णुमन्दिरम् ॥ २५ ।
तस्याग्रे तिष्ठते‡ विप्रो वाचको वेदपारगः ।
विश्रान्तितीर्थमाहात्म्यं श्रावयन् स दिने दिने ॥ २६ ।
तस्य श्रवणमात्रेण मम भक्तिर्हृदि स्थिता ।

---

* एतच्चरणं (ग) पुस्तके नास्ति । † कस्मिंश्चिदथ कालेन इति सार्व्वत्रिकः पाठः, काले तु इति कृते साधु स्यात । ‡ तिष्ठतीति साधु ।

सा संज्ञा च श्रुता तत्र विश्रान्तेव मयाऽनघ ॥ २७ ।
वासुदेवो महाबाहुर्जगत्स्वामी जनार्द्दनः ।
विश्रामं कुरुते तत्र तेन विश्रान्तिसंज्ञिता* ॥ २८ ।
राक्षसस्य† वचः श्रुत्वा विप्रो वचनमब्रवीत् ।
एकस्नानस्य हि फलं तव दत्तञ्च राक्षस ।
विप्रे इत्युक्तमात्रे च मोक्षवासमवाप सः‡ ॥ २९ ।

इति वराहपुराणे विश्रान्तिमाहात्म्यं नाम
सप्तषष्ठ्यधिकशततमोऽध्यायः ।

## अष्टषष्ठ्यधिकशततमोऽध्यायः ।

धरण्युवाच ।

मथुरां रक्षते* कोऽसौ क्षेत्रपालोव्यवस्थितः ।
तेन दृष्टेन यत्पुण्यं कथयस्वाखिलं प्रभो ॥ १ ।

वराह उवाच ।

दृष्ट्वा भूतपतिं देवं वरदं पापनाशनम् ।
तस्य दर्शनमात्रेण मथुरायां फलं भवेत्† ॥ २ ।

* संज्ञका इति (ग)। † एकं स्नानस्येति (ग)। ‡ इत्युक्तमात्रे च वने ततो मोक्षमवाप स इति (ग)।

---

* रक्षतीति साधु। † लभेदिति (ग), तत्र आर्षं लभेतेति साधु।

पुरा वर्षसहस्रन्तु तपस्तप्तं सुदारुणम् ।
पूर्णे वर्षसहस्रे तु मया सन्तोषितो हरः ।
वरं वरय भद्रन्ते यस्ते मनसि वर्त्तते ॥ ३ ।

ईश्वर उवाच ।

सर्व्वगस्त्वं हि देवेश मया ज्ञातं सुनिश्चितम् ।
मथुरायाञ्च मे स्थानं सदा देव प्रदीयताम् ॥ ४ ।
देवदेववचः श्रुत्वा हरिर्वचनमब्रवीत् ।
मथुरायाञ्च देव त्वं क्षेत्रपालो भविष्यसि ॥ ५ ।
त्वयि दृष्टे महादेव मम क्षेत्रफलं भवेत्* ।
अन्यथा नाप्नुयात्सिद्धिमेवमेतन्न संशयः ॥ ६ ।
येन यथादृशं पुण्यङ्कृतं तीर्थे प्रयत्नतः ।
भजते मनुजः सिद्धिमात्मभावेन तादृशीम् ॥ ७ ।
मम क्षेत्रप्रवेशे च भूमिः संसारनाशिनी ।
इन्द्रस्येव पुरी रम्या यथा नाकेऽमरावती ।
जम्बूद्वीपे तथोत्कृष्टा मथुरा मम वल्लभा ॥ ८ ।
विंशतिर्योजनानां हि माथुरं मम मण्डलम् ।
पदे पदेऽश्वमेधानां फलं नात्र विचारणा ॥ ९ ।
न मया कथितं देवि ब्रह्मणश्च महात्मनः ।
रुद्रस्य न मया पूर्व्वं कथितञ्च वसुन्धरे ।
मया सुगोपितं पूर्व्वं गुह्याद्गुह्यतरं परम् ॥ १० ।

---

* नभेदिति (ग) ।

अत्र क्षेत्रे पुरी रम्या सर्व्वरत्नविभूषिता ।
तस्यां तिष्ठन्ति तीर्थानि तानि वक्ष्यामि तच्छृणु ॥ ११ ।
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ।
तीर्थसंख्या च वसुधे मथुरायां मयोदिता ॥ १२ ।
गोवर्द्धनं तथाक्रूरं द्वे कोटी दक्षिणोत्तरे ।
प्रस्कन्दनञ्च भाण्डीरं कुरुक्षेत्रसमानि षट् ॥ १३ ।
पुण्यात्पुण्यतरं श्रेष्ठमेतद्धिश्रान्तिसंज्ञकम् ।
असिकुण्डं सवैकुण्ठं कोटितीर्थोत्तमं स्मृतम् ॥ १४ ।
अविमुक्तं सोमतीर्थं यमनन्तिन्दुकं ततः* ।
चक्रतीर्थं तथाक्रूरं द्वादशादित्यसंज्ञितम् ॥ १५ ।
एतत्पुण्यं पवित्रञ्च महापातकनाशनम् ।
कुरुक्षेत्राच्छतगुणं मथुरायां न संशयः ॥ १६ ।
ये पठन्ति महाभागाः शृण्वन्ति च समाहिताः ।
मथुरायास्तु माहात्म्यं ते यान्ति परमम्पदम् ।
कुलानि ते तारयन्ति द्वे शते विंशयोईयो. ॥ १७ ।
एतत्मरणकाले तु यः स्मरेत्प्रयतो नरः ।
स गच्छेत्परमां सिद्धिमिह संसारनाशिनीम् ॥ १८ ।
एतत्ते कथितं देवि सर्व्वपातकनाशनम् ।
तीर्थानाञ्चैव माहात्म्यं किमन्यच्छ्रोतुमिच्छसि ॥ १९ ।

इति वराहपुराणे भगवच्छास्त्रे मथुरामाहात्म्ये
अष्टषष्ट्यधिकशततमोऽध्यायः ।

* तेन्दुकं तत इति (ग) ।

# ऊनसप्तत्यधिकशततमोऽध्यायः ।

वराह उवाच

मथुरायाः परङ्क्षेत्रं त्रैलोक्ये न च विद्यते ।
तस्यां वसाम्यहं देवि मथुरायान्तु सर्व्वदा ॥ १ ।
सर्व्वेषामेव तीर्थानां मथुरा च परं महत् ।
कृष्णेन क्रीड़ितं तत्र तत्कुण्डं हि पदे पदे ॥ २ ।
चक्रस्थितं हि तत्सर्व्वं कृष्णस्यैव पदेन तु ।
तत्र मध्यन्तु तत्स्थानमर्द्धचन्द्रे प्रतिष्ठितम् ।
तत्रैव वासिनो लोका मुक्तिं यान्ति न संशयः ॥ ३ ।
कृष्णस्य दक्षिणा कोटिरुत्तरा कोटिमध्यतः* ।
तयोर्मध्ये स्थितो देव आकारात्† सोमचक्रतो ॥ ४ ।
तौ देवौ नैवफलदौ स्नानदानादिकर्म्मणि ।
तस्माद्धि मरणञ्चात्र द्वे कोटी सर्व्वकर्म्मसु ॥ ५ ।
अर्द्धचन्द्रे तु यः स्नानङ्करोति नियतात्मनः ।
तेन वै चाक्षया लोकाः प्राप्ताश्चैव न संशयः ॥ ६ ।
दक्षिणस्यां समारभ्य उत्तरस्यां समापयेत् ।
यज्ञोपवीतमात्रेण तारयन्ति च कुलम्बहु ॥ ७ ।

पृथिव्युवाच ।

यज्ञोपवीतमात्राया विधानं कीदृशम्प्रभो ।

---

* उत्तराकोटिमध्यत इत्येव साधु । † आकारः सोमचक्रतेति (ग) ।

यथा मानं हि कर्त्तव्यं तन्मर्व्वं वक्तुमर्हसि ॥ ८ ।

वराह उवाच ।

यज्ञोपवीतस्य विधिं शृणुष्व* वरवर्णिनि ।
दक्षिणस्यां समारभ्य उत्तरस्यां समापयेत् ॥ ९ ।
यज्ञोपवीतस्य विधिरेष एव प्रकीर्त्तितः ।
मनुजा येन विधिना मुक्तिं यान्ति न संशयः ॥ १० ।
अनेन विधिना चैव उत्तरस्यां समापयेत् ।
गृहान्निःसृत्य मौनेन यावत्स्नानं समाचरेत् ॥ ११ ।
पूजां कृष्णस्य कृत्वा वै ततो ब्रूयाद्वसुन्धरे ।
स्नाने समाप्ते विधिवद्देवदेवस्य चैव ह ॥ १२ ।
कृष्णस्य कृत्वा तु मखं स्नानादीनि यथाक्रमम् ।
गां वै पयस्विनीं दत्त्वा हिरण्यं वसुमेव च † ॥ १३ ।
ब्राह्मणान् भोजयेत्पश्चाद्विधिरेष उदाहृतः ।
तथा शयनमुद्दिश्य एवमेवन्तु कारयेत् ॥ १४ ।
न तस्य पुनरावृत्तिर्मम लोके महीयते ।
अर्द्धचन्द्रे मृता देवि मम लोकं व्रजन्ति ते ॥ १५ ।
अन्यत्र तु मृता ये च अर्द्धचन्द्रकृतक्रियाः‡ ।
तेऽपि स्वर्गङ्गमिष्यन्ति दाहादिकरणैर्युताः ॥ १६ ।
यावदस्थीन्यर्द्धचन्द्रं यस्य तिष्ठन्ति देहिनः ।
तावत्पुण्यकर्त्ता च स्वर्गलोके महीयते ॥ १७ ।

* शृणु इति साधु । † वसु एव चेति साधु । ‡ अर्द्धचन्द्राकृते क्रिया इति (ग)

अर्द्धचन्द्रे विशेषोऽस्ति तीर्थे विश्रान्तिसंज्ञके ।
दाहादिकरणे तत्र गर्दभोऽपि चतुर्भुजः ॥ १८ ।
गर्त्तेश्वरोऽथ भूतेशो द्वे कोटी तु वसुन्धरे ।
मध्ये सदैव तिष्ठामि न त्यजामि कदाचन ॥ १९
माथुराणाञ्च यद्रूपं तद्रूपं मे वसुन्धरे ।
माथुरेण तु रूपेन रूपोऽहं नात्र संशयः ॥ २० ।
शृणु देवि यथा वृत्तं गरुड़स्य महात्मनः ।
मथुरामागतो योऽसौ कृष्णदर्शनकाङ्क्षया ।
मथुरायां स्थितं देवं भिन्नरूपं न पश्यति ॥ २१ ।
तदा गतोऽसौ वसुधे देवस्याग्रे विहङ्गमः ।
कृष्णस्य दर्शनार्थाय दिव्यं स्तोत्रमुदीरयन् ॥ २२ ।

गरुड़ उवाच ।

विश्वरूप जयादित्य जय विष्णो जयाच्युत ।
जय केशव ईशान जय कृष्ण नमोऽस्तु ते ॥ २३ ।
जय मूर्त्त जयाचिन्त्य जय लोमविभूषण ।
इत्येवं संस्तुतो देवो गरुड़ेन महात्मना ॥ २४ ।
गरुड़स्य पुरस्तत्र स्थितो देवः शरीरवान् ।
सान्त्वयामास गरुड़ं प्रीतिपूर्व्वमुवाच ह ॥ २५ ।
किं कुर्य्यात्स्तोत्रमेतन्मे किं वा तव चिकीर्षितम् ।
मथुरागमकृत्ये ते सर्व्वं ब्रूहि ममाग्रतः ॥ २६ ।

गरुड़ उवाच ।

मथुरामागतश्चाहं तव दर्शनकाङ्क्षया ।

आगते तु मया देव न दृष्टं तव रूपकम् ॥ २७ ।
माथुरैरेव लोकैस्तु समं दृष्टं हि रूपकम् ।
एकीभूतमहं सर्व्वं दृष्ट्वा मां मोह आविशत् ।
तस्मात् स्तुतिस्तु देवेश कृतानुग्रहकाम्यया ॥ २८ ।
गरुड़स्य वचः श्रुत्वा प्रहस्य मधुसूदनः ।
उवाच श्लक्ष्णया वाचा गरुड़ं प्रति भाविनि* ॥ २९ ।

कृष्ण उवाच ।

माथुराणाञ्च यद्रूपं तद्रूपं मे विहङ्गम ।
ये पापास्ते न पश्यन्ति मद्रूपा माथुरा द्विजाः ॥ ३० ।
एवमुक्त्वा ततः कृष्णस्तत्रैवान्तरधीयत ।
गरुड़ोऽपि ततः स्थानाद्गतो देवि यथासुखम् ॥ ३१ ।
एतत्ते कथितं देवि माथुराणान्तु रूपकम् ।
येषां पूजितमात्रेण तुष्टोऽहञ्चैव सर्व्वदा ॥ ३२ ।
मथुरायां मृता ये च मुक्तिं यान्ति न चान्यथा ।
अपि कीटः पतङ्गो वा तिर्य्यग्योनिं गतोऽपि वा ।
चतुर्भुजास्तु ते सर्व्वे भवन्तीति विनिश्चितम् ॥ ३३ ।
यः पश्येत्पद्मनाभन्तु द्वादश्यामाश्विनस्य तु ।
एकदेहधरौ देवौ शिवकेशवरूपिणौ ।
एकादश्याञ्चोपवासी कृतशौचः समाहितः ।
कालिन्द्यान्तु नरः स्नातो मुच्यते योनिसङ्कटात् ॥ ३४।३५ ।

* भामिनीति ग॰ ।

चैत्रस्य शुक्लद्वादश्यामुपोष्य स्नानमाचरेत् ।
चिन्ताविष्णुं समभ्यर्च्य कृत्वा वै जागरं निशि ।
यः करोति स मुच्येत नात्र कार्य्या विचारणा ॥ ३६ ॥
एकां संशान्ततो* देवीं यशोदां देवकीं तथा ।
महाविद्येश्वरीं देवि† मुच्यते ब्रह्महत्यया ॥ ३७ ॥
या धारा धर्म्मराजस्य मथुरायाश्च पश्चिमे ।
स्नानङ्करोति तस्यान्तु ग्रहदोषैर्न लिप्यते ॥ ३८ ॥
यं यं देवमभिध्यायेद्भक्तियुक्तेन चेतसा ।
विश्रान्तिसंज्ञकं दृष्ट्वा दीर्घविष्णुश्च केशवम् ।
सर्व्वेषां दर्शनं पुण्यं पूजनात्तु फलं भवेत् ॥ ३९ ॥

इति जपविधिर्होमध्यानकाले स सम्यक्
सततमभिसमीक्ष्य‡ ब्रह्मणा यत्प्रयुक्तम् ।
सकलगुणगणानामास्पदं ब्रह्मसंज्ञं
जननमरणहीनं विष्णुमेवाभियाति§ ॥ ४० ॥

इति वराहपुराणे प्रागितिहासे मथुरामाहात्म्ये

ऊनसप्तत्यधिकशततमोऽध्यायः ।

* एकां संज्ञां ततो देवीमिति (ग)। अत्र एकां दशसप्ततो देवीमिति पाठः सम्यक् श्रुते तथा कृते एवार्थसङ्गतिर्भवति। † देवीमिति (ग)। ‡ अतिसमीक्ष्येति (ग)। § अभियान्तीति (ग)।

# सप्तत्यधिकशततमोऽध्यायः ।

वराह उवाच ।

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
मथुरायां पुरा वृत्तं गोकर्णस्य महात्मनः ।
वसुकर्णः पिता तस्य वैश्यो धनसमृद्धिमान् ॥ १ ।
तस्य भार्य्या सुशीला तु नाम्ना गुणसमन्विता ।
भर्त्तुः प्रियकरी साध्वी न प्रसूता वयोऽधिका ।
विललाप च सुश्रोणी एकान्ते दीनमानसा ।
सरस्वतीसङ्गमेऽथ स्त्रियो दृष्ट्वा प्रजावतीः ॥ २।३ ।
वृक्षमूले तु तत्रैव मुनिरेकः समास्थितः ।
तस्या विलपितं श्रुत्वा शनैः सकरुणं हृदि ।
जातहार्दः प्रियं दृष्ट* शनैः स्त्रियमथाब्रवीत् ।
का त्वं कस्यासि सुभगे किमर्थं रोदिषि स्वयम् ॥ ४।५
इति तस्य वचः श्रुत्वा सा स्त्री ऋषिमथाब्रवीत् ।
सापत्यास्तु स्त्रियो दृष्ट्वा क्रीड़न्त्यो बालकैः सह ।
मम तत्रास्ति हि मुने दुर्भगायाः प्रजासुखम् ॥ ६ ।
उवाच मुनिशार्दूलस्तां स्त्रियं पुत्रगर्द्धिनीम् ।
देवतायाः प्रसादेन तव पुत्रो भविष्यति ॥ ७ ।
शिवस्यायतनं पुण्यङ्गोकर्णेति‡ च विश्रुतम् ।

---

* प्रियं दृष्टमिति क॰, ख॰ ।  ‡ गोकर्णमिति साधु ।

तमाराधय देवेशं पत्या सह यशस्विनि ।
स्नानदीपोपहारेण स्तोत्रैर्नानाविधैर्जपैः ॥ ८ ॥
इत्युक्ता सा च सुश्रोणी प्रणिपत्य प्रसाद्य तम् ।
भर्त्रे सा कथयामास यदुक्तं मुनिना प्रियम् ॥ ९ ॥
स तद्वचनमाकर्ण्य प्रीतियुक्तं सुसंयतम् ।
जगादोच्चैः प्रियां देवि भद्रं जातो मनोरथः ।
ममाप्येतन्मतं देवि यदुक्तमृषिणा ततः ॥ १० ॥
इति प्रियां समाभाष्य प्रियया च तथाऽकरोत् ।
सरस्वत्याः सङ्गमे तौ स्नात्वा गोकर्णमर्चतुः* ।
पुष्पदीपोपहारन्तु चक्राते तौ दिने दिने ॥ ११ ॥
एवं तयोर्दशाब्दानि† गतानि सुतहेतवे ।
ततः प्रसन्नो भगवानुमापतिरुवाच ह ।
भविष्यति युवां‡ पुत्रो रूपवान् गुणसंयुतः ॥ १२ ॥
शश्वत्सन्ततिवर्द्धिष्णुः सन्तानो यस्य वै बहुः ।
देवतानां प्रसादेन खलु तस्य भविष्यति ॥ १३ ॥
इत्युक्तौ तौ तु देवेन स्नानङ्कृत्वा सरस्वतीम् ।
प्रभाते देवदेवाय ददौ द्रव्यमनन्तकम् ।
ब्राह्मणेभ्यो ददौ भोज्यं वस्त्राद्यं बहुदक्षिणम् ॥ १४ ॥
ततस्तस्यां सुशीलायाङ्गर्भाधानमविन्दत ।
ततः प्रववृधे गर्भः शुक्लपक्षे यथा शशी ।

---

* स्नानं कृत्वाऽर्चतुरिति साधु । † संवत्सरो वत्सरोऽब्दो हायनोऽस्त्रीति अनुशासनात् अब्दानीति क्लीवत्वमार्षम् । ‡ युवाभ्यामिति आर्षं, युवयोर्वा इति वा साधु ।

सुषुवे दशमे मासि पुत्रम्बालशशिप्रभम् ॥ १५ ।
गोसहस्रं तदा दत्त्वा ससुवर्णं सवस्त्रकम।
बहुशः सर्व्ववर्णेभ्यः पुत्रजन्ममहोत्सवे।
जातकर्म्म तथा चैव नामकर्म्म चकार च।
गोकर्णं नाम तस्यैव पिता चक्रे निरूप्य च ॥ १६।१७ ।
एवमन्नप्राशनञ्च चूडोपनयनं तथा।
अतः परञ्च गोदानं वैवाहिकमनुत्तमम् ॥ १८ ।
दानन्तु ददतस्तस्य देवतां पूजयिष्यतः।
कृतानि बहुमुख्यानि मङ्गलानि यथाविधि ॥ १९ ।
ततः प्रविष्टे तारुण्ये अप्रजं वीक्ष्य पुत्रकम्।
पुनर्विवाहयामास भार्यास्तस्य चतुष्टयम्* ॥ २० ।
वयोरूपगुणोपेतास्तस्य भार्य्याः† सुलोचनाः।
अप्रजा एव ताः सर्व्वा नाभवत्पुत्रिणी क्वचित् ॥ २१ ।
तेनैव धर्म्म आरब्धः प्रजार्थो‡ देवसेवनम्।
वापीकूपतड़ागानि देवतायतनानि च।
प्रपा मालाश्च§ नित्यान्नं भोजनं वर्त्तनानि च ॥ २२ ।
अनित्यतां ततो मत्वा चञ्चलाऽस्थिरजीवितम्।
विनियोगः कृतस्तेन सर्व्वदा सर्व्वकर्म्मसु ॥ २३ ।
गोकर्णस्य समीपे तु पश्चिमे चक्रपाणिनः।

---

* चतुष्टयीरिति साधु। † सर्वा भार्य्या इति (क, (ख)। ‡ प्रजार्थमिति (ग)।
§ प्रपा मतार्थेति (ग)।

प्रासादङ्कारयामास पञ्चायतनकं हरेः ॥ २४ ।
आरामस्तत्र विस्तीर्णः पुष्पजात्यस्तथैव च ।
आम्रजम्बीरनारङ्ग बीजपूरः सदाडिमः ॥ २५ ।
प्राकारङ्कारयामास परिखामण्डलीयकम्* ।
प्रावर्त्तनञ्च कूपेषु येन सिञ्चेत्प्रवाटिकाम् ॥ २६ ।
पुष्पाणि च विचिन्वन्ति सर्व्वास्ता वरयोषितः ।
स्नानं पूजादिकं तद्वन्मार्ज्जनं दीपकर्म्म च ।
कुर्व्वन्ति देवतागारे ताः सर्वाः शुभलोचनाः ॥ २७ ।
पतिव्रता महाभागाश्चतुरा भगिनीर्यथा ।
नित्यकालं पतेर्वाक्ये† स्थिताः कुर्व्वन्त्यहर्निशम् ॥ २८ ।
मालाकारस्तथा नित्यं विटपांश्च प्रसिञ्चति ।
पालयामास विधिवद्विधिदृष्टेन कर्म्मणा ॥ २९ ।
जाताः सुपुष्पवन्तश्च द्रुमाः फलसमन्विताः ।
नित्यकालमपर्यन्तः फलानां सुमहोत्सवम् ।
दीयते भुज्यते सर्व्वैर्यथा शक्रस्तथा सदा ॥ ३० ।
एवन्तु वसतस्तस्य मथुरायां स्थितस्य च‡ ।
धनस्य सङ्ख्या यातः प्रत्यहं ददतः सतः ॥ ३१ ।
शेषमात्रे धने तस्य चिन्ताभून्महती तदा ।
मातापित्रोः कुटुम्बस्य भरणीयस्य भोजनम् ।

* परिखाः मण्डलीयकमिति (ग) । † पत्युर्वाक्ये इति साधु । ‡ स्थितस्य तु इति (ग) ।

कथं ब्रूहि करिष्यामि महाकष्टमिति सोऽब्रवीत्* ॥ ३२ ।
इति निश्चित्य मनसा वणिग्भावं† हृदि स्थिरम् ।
कृत्वा सार्थमुपागम्य निर्गतः पूर्व्वमण्डलम् ॥ ३३ ।
तत्र क्रीत्वा‡ सुपण्यानि उत्तरापथगानि च ।
बहूनि बहुमौल्यानि परदेशगमानि च ।
यातायातं ततः कृत्वा लाभालाभविचक्षणः ।
क्रीत्वा क्रेयानि वस्तूनि लाभालाभं विचार्य्य च ।
उत्तरापथदेशात्तु सार्थं स बहुविस्तरम् ।
अश्वरत्नं मणिरत्नं पट्टरत्नं समर्थकम् ।
गृहीत्वा तु समागच्छन्मथुरायां गृहम्प्रति ॥ ३४।३५।३६ ।
एकदा सार्थसञ्चारो विश्रान्तुं समुपक्रमे§ ।
सानौ पर्व्वतसामीप्ये प्रभूतयवसोदके ।
नद्यास्तीरे सुप्रदेशे आवासांश्च प्रचक्रिरे ॥ ३७ ।
निवेश्य भाण्डं तत्रैव अश्वानां यवसादिकम् ।
समादिश्येतिकृत्यञ्च भृत्यैः कतिपयैर्वृतः ।
समारुरोह तं शैलम्बहुकन्दरशोभितम् ॥ ३८ ।
क्रीड़ार्थं विहरंस्तत्र सोऽपश्यत् स्थानमुत्तमम् ।
प्रसन्नसलिलोपेतं सारङ्गैस्तु विभूषितम् ॥ ३९ ।
फलवन्तश्च वृक्षाश्च पुष्पाणि सुरभीणि च ।

* महाकष्टमिति सोऽब्रवीदित्यत्राक्षराधिक्याच्छन्दोदोषः, महाकष्टमथोऽब्रवीदिति कृते तु न दोषः। † वणिग्मार्गमिति (म)। ‡ कृत्वेति (क, ख)। § विश्रान्तुमुपचक्रमे इति सम्यक्।

पाषाणसन्धौ तत्रस्थैर्मालाकारैस्तु रोपितम् ॥ ४० ।
तत्रारुह्य दरीद्वारं यावद्दृष्टिर्निपात्यते ।
तावदभ्यागतादीनि स्वागतादि शृणोति च ॥ ४१ ।
श्रुत्वाऽपि शब्दप्रभवं किमेतदिति निश्चयम् ।
करिष्यंस्तत्र चैकान्ते दृष्टः पञ्जरगः शुकः ॥ ४२ ।
तेनोक्तं भो इहागच्छ आतिथ्यं करवाणि ते ।
पाद्यं गृहाण भोः पान्थ आसनन्ते इदं शुभम ॥ ४३ ।
फलानीमानि स्वादूनि मधुमांसोदकानि च ।
यथेष्टं यावतीच्छा च तावद्भुङ्क्ष्विमे नराः ।
आगत्य पितरौ मह्यं* विशेषं तौ करिष्यतः ॥ ४४ ।
अतिथेरागतस्येह पूजायां विमुखो भवेत् ।
गृहस्थस्तस्य पितरो वसन्ति नरके† ध्रुवम् ।
पूजिते पूजिताः स्वर्गे मोदन्ते कालमक्षयम् ॥ ४५ ।
अतिथिर्यस्य भग्नाशो गृहात्प्रव्रजते यदि ।
आत्मनो दुष्कृतं तस्मै दत्त्वा तत्सुकृतं हरेत् ॥ ४६ ।
तस्मात्सर्व्वप्रयत्नेन पूज्यो वै गृहमेधिना ।
काले प्राप्तस्त्वकाले वा यथा विष्णुस्तथैव सः ॥ ४७ ।
एवंविधाः शुभा वाचो वैश्यो धर्म्मोपदेशकात् ।
श्रुत्वा शुकात्स सर्व्वाय‡ गोकर्णो मुदितोऽब्रवीत् ॥ ४८

* ममेत्यत्र मह्यमित्यार्षम् । † वसन्ते नरके इति (ग), तत्र वसन्ते इति चार्षम्
‡ सर्व्वार्थे इति साधु । श्रुत्वा शुकात् सर्व्वार्थं इति (ग) ।

कस्त्वमृषिः पुराणज्ञः किं वा देवोऽथ गुह्यकः।
तव प्रसन्नरूपस्य यस्येयं वागमानुषी।
कस्त्वं कथय मे सत्यमुक्ताहयातिथिप्रियः॥ ४९।
धन्यः स मानुषो यस्य नित्यं सन्निहितो भवान्॥ ५०।
इत्युक्तः स शुकः सर्वं शशंसात्मपुराकृतम्।
शृणु रौद्रं यथा पूर्व्वं मया कृतमबुद्धिना।
शुकस्य विप्रियं यादृक्छृणुष्व तपस्यतः॥ ५१।
सुमेरोरुत्तरे पार्श्वे महर्षिगणसेवितै।
तपश्चचार विप्रर्षे* शुको व्याससुतो महान्॥ ५२।
श्रोतुकामाः पुराणानि सेतिहासानि नैगमाः।
ऋषयस्तत्र आजग्मुरसितो देवलस्तदा॥ ५३।
मार्कण्डेयो भरद्वाजो यवक्रीतस्ततो भृगुः।
अङ्गिरास्तैत्तिरीयेभ्यः काण्वो मेधातिथिः कृतः॥ ५४।
तन्तुः सुतन्तुरादित्यो वसुमानेकतो द्वितः।
वामदेवश्चाश्वशिरास्त्रिशीर्षो गौतमोदरः॥ ५५।
अन्ये च सिद्धा देवाश्च पन्नगा गुह्यकास्तथा।
शुकं सम्मुखयामासुः पप्रच्छुर्धर्म्मसंहिताम्॥ ५६।
अहन्तु वामदेवस्य शिष्यो नाम्ना शुकोदरः।
भ्रष्टः श्रद्धान्वितो बाल्यात्सुनीत्यामप्रतस्वरन्।
ऊहापोहकरम्प्रश्नं वारंवारञ्च पृष्टवान्।

* विप्रोऽग्निमिति मातः सम्भाव्यते।

अन्यायवादिनं मास्म गुरुर्नित्यं निषेधति ॥ ५७।५८ ।
गुरूणामग्रतो वाक्यं कथायाङ्कथतां सह ।
पूर्व्वपक्षाश्च सिद्धान्ताः परस्परजिगीषवः ।
अन्तरे चान्तराक्षेपं पुनर्नैवमवोचथाः ॥ ५८ ।
एवं निषेधितश्चाहं गुरुणा मुनिसत्तमैः ।
न कृतं यन्मया वाक्यं तेनाहं शपितस्तदा ॥ ६० ।
शुकेन कोपाच्छापो मे दत्तोऽयं जल्पको वटुः ।
यथानामा त्वयं पक्षी शुको भवति नान्यथा ॥ ६१ ।
इत्युक्तमात्रे वचने तत्रैवाहं शुकोदरः ।
शुकत्वं तत्क्षणात्प्राप्तः क्षमस्वेत्यब्रुवौजसा ।
मुनयस्तं महात्मानं शुकं तत्त्वार्थवित्तमम् ॥ ६२ ।
नान्यथा नान्यथा चोक्तं कदाचिन्न भविष्यति ।
आगामिकाले दास्यामि वरमस्मै शुकाय भो । ६३ ।
युष्माकमुपरोधेन यथारूपो विहङ्गमः ।
अयं भविष्यति सदा सद्भावहितभावनः ॥ ६४ ।
पुराणतत्त्ववेत्ता च सर्व्वशास्त्रार्थपारगः ।
मथुरायां मृतः पश्चाद्ब्रह्मलोकङ्गमिष्यति ॥ ६५ ।
एवं शापं वरं लब्ध्वा* तस्मादीर्नो ह्यहं द्रुतम् ।
मथुरा मथुरां वारं कुर्य्यान्नित्यमतन्द्रितः ॥ ६६ ।
नित्योद्विग्नस्य मे गात्रं हिमाद्रौ तु गुहां वसन् ।

* गृहीत्वेति साधु । एवं परत्र

प्राप्तोऽहं शवरेणैव येनाहं पञ्जरे कृतः ॥ ६७ ।
शवरस्तु सभार्य्यो वै क्रीड़ते स मया सह ।
मुनेः प्रसादान्मे ज्ञानं न जहाति कदाचन ॥ ६८ ।
भुज्यते ह्यवशेनैव कृतं येन यथा च यत् ।
स्वस्थो भव महाभाग मा स्म शोके मनः कृथाः ॥ ६९ ।
इत्युक्तः स तु गोकर्णस्तदा तेन शुकेन च ।
तस्य च वचनं हृद्यं शुकमोक्षप्रदायकम् ॥ ७० ।
या सा मुक्तिप्रदा रम्या मथुरा पापनाशिनी ।
तस्यां वसाम्यहं भद्र वाणिज्यार्थमिहागतः ।
पुनरिच्छामहे तत्र भाण्डं गृह्य यथासुखम् ॥ ७१ ।
मथुरावासिनं श्रुत्वा गोकर्णं स शुकस्तदा ।
पुत्त्रं संस्थाप्य चात्मानं गोकर्णस्य यथेप्सितम् ॥ ७२ ।
एवञ्च वदतस्तस्य* शवरी शयनोत्थिता ।
दर्पान्निःसृत्य तु बहिर्दर्शासनसंस्थितम् ।
भृत्यैः परिवृतं चारुदर्शनीयस्वरूपकम्† ॥ ७३ ।
निरीक्ष्य बहुशस्तत्र शुकोवचनमब्रवीत् ।
प्रियातिथिश्च सम्प्राप्तं मातः पूज्यतमं शुचिम् ।
कुरु पूजां यथार्हञ्च गोकर्णस्य वरातिथेः ॥ ७४ ।
शुकस्य वचनाद्यावत्पूजार्थमुपकल्पितम् ।
न ददाति ततस्तत्र वनाच्छवर आगतः ॥ ७५ ।

* तास्यामिति (ग) † कद्रदर्शनीयस्वरूपकमिति (क, ख)

तस्याग्रे तु पुनस्तेन शुकमातिथिपूजनम् ।
शंसितं स तथेत्युक्त्वा कृत्वा पूजां प्रणम्य च ।
फलानि मांसयुक्तानि मधूनि सुरभीणि च ।
सम्पाद्य संविदङ्कृत्वा वद किङ्करवाणि ते ॥ ७६।७७ ।
इत्युक्तः शवरेणाथ गोकर्णो वाक्यमब्रवीत् ।
अन्यत्किञ्चिदर्थो देयं यदि किञ्चिद्ददासि च ।
शुकोऽयं पञ्जरस्थश्च पुत्त्रार्थं मे प्रदीयताम् ।
मथुरायां गमिष्यामि कृतार्थः पितुरन्तिके ॥ ७८।७९ ।
इत्युक्तमात्रे वचने शवरो वाक्यमब्रवीत् ।
अस्माकं यमुनास्नानं सङ्गमे यमुनाम्भसः ।
सरस्वत्याश्च पतने दत्ते दास्यामि ते शुकम् ॥ ८० ।
शवरेणैवमुक्तस्तु गोकर्णः प्रत्यभाषत ।
सरस्वत्याः सङ्गमे च यत्फलं लभते नरः ।
स्नानेन किम्फलं तस्य यदि जानासि तद्वद ॥ ८१ ।

शवर उवाच ।

शुकेनानेन मे सर्व्वं मथुरायाश्च यत्फलम् ।
यत्फलं सङ्गमस्योक्तं शृणुयाद्द्वादशीव्रतम् ॥ ८२ ।
वियोनिस्थो राक्षसो वा तिर्य्यग्योनिङ्गतस्य वा* ।
यस्योद्दिश्य† व्रतं कुर्य्यात्स गच्छेत्परमाङ्गतिम् ॥ ८३ ।
सङ्गमस्य फलं तस्य दृष्ट्वा गोकर्णमीश्वरम् ।

* तिर्य्यग्योनिं गतोऽपि वा इति सम्यक् ।　　† य उद्दिश्य इति कृते तु पाठे अर्थं सङ्गतिः स्यात्

नासौ यमपुरं याति विष्णुलोकञ्च गच्छति ।
एवं मया श्रुतं तस्य सङ्गमस्य महत्फलम् ॥ ८४ ।

इति वराहपुराणे गोकर्णमरस्वतीमाहात्म्ये

सप्तत्यधिकशततमोऽध्याय ।

# एकसप्तत्यधिकशततमोऽध्यायः ।

वराह उवाच ।

शुकं गृह्य ततः स्थानात्प्रस्थितो* मथुरां पुरीम् ।
प्रविश्य गृह्य तत्पुण्यं मातापित्रोस्तदर्पितम् ।
शुकस्य चरितं सर्व्वं निवेद्य च महामतिः ॥ १ ।
एवं निवसतस्तस्य बहुवर्षाणि तत्र वै ।
सुखम्प्राप्तं मतश्चापि व्यवहारे च पूजने ॥ २ ।
एवं निवसतस्तस्य द्रव्यशेषमजायत ।
पुनस्तत्रैव गमने वणिग्भावे मतिर्गता ॥ ३ ।
समुद्रयाने रत्नानि महामौल्यानि साधुभिः ।
रत्नपरीक्षकैः सार्द्धमानयिष्ये बहूनि च ।
एवं निश्चित्य मनसा महासार्थपुरःसरः ।
समुद्रयायिभिर्लोकैः संविदं सूच्य† निर्गतः ॥ ४।५ ।

---

* प्रतिस्थानात् प्रस्थित इति (ग) । † सूचयित्वेति साधु ।

पेयाहारसमाहारङ्कृत्वा कृत्यविदार्थकम् ।
शुकं गृहीत्वा प्रस्थानमकरोत्पुण्यवासरे ॥ ६ ।
मातापित्रोः शुभा वाचो गृहीत्वा देवतागृहे ।
भार्य्याणां देवकार्य्यञ्च वाटिकायाश्च पोषणम् ।
पितुः शुश्रूषणञ्चोक्त्वा सर्व्वं यूयं करिष्यथ ॥ ७ ।
यथायोगं यथाकालं यथाकृत्यं यथा च यत् ।
भवतीभिश्च कृत्यं मे करणीयं यथा तथा ।
सन्दिश्य भार्य्याः सुश्रोणीर्दैवं दृष्ट्वा प्रसाद्य च ।
भार्य्याभिः समनुज्ञातो यानपात्रङ्गतस्तदा ॥ ८।९ ।
शुकेन सह सम्प्राप्तो महान्तं लवणार्णवम् ।
पोतारूढ़ास्ततः सर्व्वे पोतवाहैरुपोहिताः* ।
अपारे दुस्तरेऽगाधे यान्ति वेगेन नित्यशः ॥ १० ।
अथ दैववशाद्वायुर्विलोमः समजायत ।
दुर्व्वातेन तदा नित्यं बलात्पोत उपोहितः ॥ ११ ।
पोतवाहास्ततः सर्व्वे विसंज्ञा मोहिताः कृशाः ।
हा कष्टं हि कथञ्चिच्च कुत्र गच्छामहे वयम् ॥ १२ ।
तेषान्तु वचनं श्रुत्वा ज्ञात्वा दुर्व्वातपीड़नम् ।
आक्षिपद्वाग्भिरुग्राभिरन्योन्याशङ्क्या† मूर्च्छिताः ॥ १३ ।
जल्पन्ति कोऽत्र पापिष्ठः समारूढ़ोनिराकृतिः ।
तस्य पातकसंसर्गान्मृताः सर्व्वे न संशयः ॥ १४ ।

* पोतवाहैरुपोषिता इति (क), (ख) । † अन्योऽन्यमाशङ्केति साधु ।

एवं विलपतां तेषां चत्वारोऽपि समभ्ययुः।
मासास्तत्रैव वाणिज्यं षण्मासान्सिध्यते फलम्॥ १५।
निर्भर्त्सनं ततस्तेषामन्योऽन्यमभिजल्पनम्।
श्रुत्वा शुकस्य गोकर्णः प्रशंसात्मविनिन्दनम्॥ १६।
अपुत्रस्य गतिर्नास्ति इति सर्व्वस्य निश्चितम्।
एषां मध्ये ह्यहं पापस्तेन तप्यामि पुत्रक॥ १७।
यदत्र युक्तङ्कालेऽस्मिन्विषमे समुपस्थिते।
वद स्वाध्यायषाड्गुण्यक्रुच्छ्रे त्वङ्कार्य्यवित्तमः॥ १८।

शुक उवाच।

मा भैस्तात जोषमास्व* अस्मिन्काले यथोचितम्।
अहङ्करिष्ये तत्सर्व्वं मा विषादे मनः कृथाः॥ १९।
एवमाश्वास्य पितरं समुड्डीय ततो द्रुतम्।
ध्रुवाख्यां दिशमुद्दीक्ष्य उत्तराभिमुखो ययौ॥ २०।
नीचगत्या रचयन्वै सुतरं दुस्तरं जलम्।
सानौ पर्व्वतसामीप्ये योजनेन वरङ्गिरिम्॥ २१।
रोमाञ्चिततनुर्जातः शुको वीक्ष्य महागिरिम्।
क्रमित्वोर्द्ध्वञ्च यात्युग्रं तावद्देवालयं शुभम्।
दृष्टञ्च विष्णायतनं तेजसा चोपशोभितम्।
दिक्षु सर्व्वास्वटित्वैवं निलिल्ये देवमन्दिरे॥ २२।२३।
वत्साऽयङ्कोऽत्र सञ्चारी कदा किन्तु पिता मम।

* पितर्जोषमास्वेति (ग)।

वितरिष्यति नो कालं दुरन्तं सक्ततिर्यथा ॥ २४ ।
क्षणमेकं तथा चैनं तस्य चिन्तान्वितस्य हि ।
सौवर्णपात्रहस्ता च देवी देवं समर्चयत् ।
नमो नारायणार्योक्ता निषसाद वरासने ॥ २५ ।
निमेषान्तरमात्रेण वयोरूपसमन्विताः ।
असंख्याताः समायाता यथा देवी तथैव ताः ॥ २६ ।
गीतं वाद्यञ्च नृत्यञ्च यथासौख्यं विहृत्य च ।
गतास्ता देवताः सर्व्वा यथास्थानमनुत्तमम् ॥ २७ ।
देवताद्दक्षिणे भागे पक्षिणाञ्च जटायुषाम् ।
लक्ष्यान्यनेकयूथानि वृहन्ति बहुसङ्घशः ॥ २८ ।
शुको लिख्यासमस्तेषां मध्ये कृत्वा तु संविदम् ।
स्वभार्यां पुरतः कृत्य* शरणञ्च अयाचयत् ॥ २९ ।
ते समाश्वास्य तम्माहुः कथमस्मिन् भवान् गतः ।
वारिराशिर्दुराधर्षः समुद्रो झषसंकुलः ॥ ३० ।
शुकस्तान् प्रत्युवाचाथ पिता मे पोतसंस्थितः ।
दुर्गवाताद्दुर्गमस्थो विषमे समुपस्थिते ॥ ३१ ।
तस्य त्राणमभीप्सन्वै आगतोऽत्र वरङ्गिरिम् ।
कुरुध्वं तस्य मे त्राणं यथा सुखमवाप्यते ॥ ३२ ।

पक्षिण ऊचुः ।

एहि पुत्र सुकार्य्यन्ते मार्गं द्रक्ष्यामहे वयम् ।

---

* कृत्वेति साधु ।

पौताभ्यासगतिं यासि पितुस्तव गतिं प्रति ॥ ३३ ॥
ममैव पादविन्यासे क्रमयिष्ये यथा जलम् ।
तेन ते पृष्ठतो मह्यं* स पिता सन्तरिष्यति ॥ ३४ ॥
मम चक्षुावगाहेन नङ्क्ष्यन्ति जलजन्तवः ।
एतत्पितुः समक्षं हि शंस क्षिप्रं नदीपतिम् ॥ ३५ ॥
तारयामास वेगेन गत्वा पृष्ठं जटायुषः† ।
स ययौ पर्व्वतं तीर्त्वा क्वचिन्नाभिसमं जलम् ।
क्वचित्कण्ठश्चैव गम्भीरं सुखेन सुकृती यथा ॥ ३६ ॥
स्तोकान्तरे ततः सोऽथ देवागारमनुत्तमम् ।
सरोवरञ्च पद्माढ्यं मणिरत्नविभूषितम् ।
स्नात्वा देवान् पितॄंश्चैव तर्पयित्वा यथासुखम् ।
पुष्पाण्यादाय देवञ्च पूजयित्वा स केशवम् ।
पञ्चायतनकञ्चैव खचितं रत्नसञ्चयैः ।
दृष्ट्वा निलिल्ये चैकान्ते शुकस्यानुमते स्थितः ॥ ३७।३८।३९ ॥
क्षणेन ता यथापूर्व्वं देवतास्त्वागताः पुनः ।
नर्त्तयित्वा यथायोग्यं तासां ज्येष्ठाऽब्रवीदिदम् ॥ ४० ॥
स्वागतस्य क्षुधार्त्तस्य ब्रह्मिष्टस्य महात्मनः ।
भोजनार्थं फलं दिव्यं पानार्थं तोयमुत्तमम् ।
गोकर्णस्य प्रयच्छध्वं येन तृप्तिस्त्रिमासिकी ॥ ४१ ॥

* ममस्थाने मह्यमिति आर्षम् ।　† अत्र कथांशस्य कापि न्यूनता प्रतीयते, ततश्च पूर्व्वापराऽसङ्गतिः ।

यथा शोको यथा पापं यथा मोहः प्रणश्यति ।
तथा कृत्वा तमूचुस्ता अभयं तेऽस्तु मा शुचः ।
वस स्वर्गोपमे स्थाने यावत्सिद्धिर्भवेत्तव ॥ ४२ ।
गतास्ताः पुनरेवञ्च नित्यमेव दिने दिने ।
वसते स सुखं तत्र मथुरायां यथा तथा ॥ ४३ ।
पोतात्तस्मादुत्ततार सुवातेनोपवाहितः ।
रत्नाकरः शुभो यत्र भाविलाद्दैवयोगतः ।
रत्नानि बहुमौल्यानि आहृतानि बहून्यथ ॥ ४४ ।
यावत्परीक्षणार्थञ्च गोकर्णं रत्नकोविदम्* ।
निरीक्ष्यतेऽस्य संवासो न दृष्टश्चक्रुशुस्ततः† ॥ ४५ ।
कुतोऽसौ गतवान् भद्रो मृतो नष्टो जले प्लुतः ।
व्रीड़ायुतो निमग्नोऽयं निश्चितं मकरालये ॥ ४६ ।
पितुरस्य वयं सर्व्वे पुत्त्रवद्विचरामहे ।
यथाभागञ्च रत्नानां भागं दास्यामहे परम् ।
एष धर्म्मः सदास्माकमेकसार्थागमेन हि ॥ ४७ ।
एवं वसन् स गोकर्णो द्वीपस्थः शोकविह्वलः ।
शुकम्प्रोवाच दीनात्मा मातापित्रोः कृते तदा ॥ ४८ ।
शुकेन मत्समोहत्वात्पितुरेवं निवेदितम् ।
अहं पक्षी लघुतनुर्भवन्तं नेतुमक्षमः ।
यातोऽस्मि‡ मथुरां मार्गे समुद्रे जलमालिनि ॥ ४९ ।

---

* दिदृक्षुभिर्वणिग्भिरिति शेषः । † ते वणिज इति शेषः । ‡ यातोऽस्मीति (ग) ।

पित्रोर्वाक्यं तवाख्यास्ये त्वदीयं च तयोरहम्।
अवश्यञ्च गमिष्येऽहमनुज्ञा तु प्रदीयताम्॥ ५०।
सत्यमुक्तं ततस्तेन गोकर्णेन शुकम्प्रति।
गच्छ त्वं पुत्र मथुरामवस्थां मामकीमिमाम्*।
त्वया विना न शक्नोमि शीघ्रमागमनं कुरु॥ ५१।
इत्युक्तः स तथेत्युक्त्वा पोतारूढः खगोत्तमः।
कालेन मथुराम्प्राप्तः सर्व्वं पित्रे न्यवेदयत्॥ ५२।
श्रुत्वा तौ† विषमावस्थं सुतं हृदि निवेश्य च।
रुदित्वा सुचिरङ्कालं शुकं सन्देशनिवेशितः॥ ५३।
अस्माकं जीवनार्थाय त्वया कार्य्यं विहङ्गम।
कथाभिरनुकूलाभिर्धर्म्मदर्शिभिरेव च॥ ५४।
शुकेन पञ्जरस्थेन कथालापेन विद्यया।
पुत्रशोकाभिसन्तप्तौ तथैवानेन सान्त्वितौ॥ ५५।
अथ सार्थः समायातो रत्नपूर्णो यथोदधिः।
वसुकर्णस्य पुत्रार्थमकरोत्स जनो महान्॥ ५६।
सर्व्वैस्तैर्विंशतिः संख्या‡ एकैकेन समुद्रगैः।
रत्नैः समर्च्चितोऽत्यर्थं पर्व्वतः कुसुमोत्करैः§।
प्रसाद्य सर्व्वं सम्पूज्य प्रेषितास्ते गृहं ययुः॥ ५७।

* मामकीमिमामवस्थां ताभ्यां निवेदयेत्यन्वयः कर्त्तव्यः। † तौ इत्यस्य समापक-क्रियापदं नास्ति। ताभ्यामिति कृते वाक्यार्थसङ्गतिः स्यात् किन्तु छन्दोदोषो भवेत्। ‡ विंशतिः संख्या इत्यस्य तृतीयान्ततोचिता, अनन्वयापत्तेः। § दुमैरिवेति शेषः।

एवं ते न्यवसंस्तत्र यावत्कालं सुखेन तु ।
शुश्रूषमाणास्तं वैश्यं यथा स्वपितरं तथा ॥ ५८ ॥

इति वराहपुराणे भगवच्छास्त्रे गोकर्णमाहात्म्ये
एकसप्तत्यधिकशततमोऽध्यायः ।

# द्विसप्तत्यधिकशततमोऽध्यायः ।

वराह उवाच ।

गोकर्णस्तु तथा चक्रे* तस्मिन्नायतने शुभे ।
प्रथमेऽह्नि यथा कृत्यमेवमेव त्रयोदश ॥ १ ॥
ता देव्यो नृत्यगीतेषु कुशलाश्चागमेऽभवन् ।
सुरूपाश्च स्वलङ्कारा रमयन्ति दिने दिने ॥ २ ॥
गोकर्णः सर्व्वभावेन गृहं विस्मृतवानसौ ।
तथैकदा स गोकर्णस्ता देव्यश्च हृतौजसः ॥ ३ ॥
विवर्णवदना दीना भग्नालङ्कारवाससः ।
हीनाङ्गा लुञ्चितशिरःकेशपक्ष्मनखादयः ॥ ४ ॥
दृश्यन्ते विकृताकाराः सव्रणा रुधिरस्रवाः ।
ता दृष्ट्वाऽतीवदुःखार्त्तश्चक्रे मनसि वेदनाम् ॥ ५ ॥
अपुत्त्रस्य गतिर्नास्ति स्वर्गे नैव च नैव च ।

---

* चक्रे इति (ग) ।

मम सङ्गादिमा देव्यो दशमीश्च दशाकृताः ॥ ६ ।
एवं ज्ञात्वा स पप्रच्छ तासां रूपविपर्य्ययम् ।
कथयध्वं महाभागाः किमेतद्रूपव्यत्ययम् ॥ ७ ।

देव्य ऊचुः ।

अप्रष्टव्यं महाभाग दैवः सर्व्वेषु कारणम् ।
कालात्मकः स भगवान् भुज्यते* सुकृतं यतः ॥ ८ ।
स एव नित्यकालश्च पृच्छति स्म तदुत्तरम् ।
दुःखार्त्तस्य सुदीनस्य न जल्पन्त्यतिदुःखिताः ॥ ९ ।
निश्चयार्थं पुनः सोऽथ गोकर्णस्ताः प्रणम्य च ।
पृच्छत्याग्रहरूपेण निश्चयं विन्दते यथा ॥
यदि गोप्यं ममार्त्तस्य वैरूप्यं कथयिष्यथ† ।
अगाधे दुस्तरे प्राणांस्त्यक्ष्याम्यद्य सुदुःखितः ॥
एवमुक्ते तदा तासां मध्ये एकाऽब्रवीदिदम् ।
दुःखं तस्य समाख्येयं यो विनाशयते‡ रुजम् ॥ १० ।
शृणु वत्स वदिष्येऽहं विरूपकारणं§ यथा ।
अस्माकञ्च समुत्पन्नमेकचित्तोऽवधारय ॥ ११ ।
आस्ते मधुपुरी रम्या नृणां मुक्तिप्रदायिनी ।
अयोध्याधिपतिर्वीरश्चतुरङ्गबलान्वितः ।
चातुर्मास्यं तीर्थसेवी स गतो भक्तिपूर्व्वकम् ॥ १२ ।

---

* भुङ्क्ते इति साधु । † मम नेति पदस्य न्यूनता । ‡ विनाशयतीति साधु ।
§ विरूपकरणमिति [illegible]ग ।

तत्र देवस्य चागारं विष्णोः पञ्चसमन्वितम् ।
आरामवाटिकाः शुभ्राः प्राकारावरवेष्टिताः ।
कूपप्रावर्त्तकोपेताः पुष्पजात्यः सुवासिताः ॥
फलवन्तो द्रुमास्तस्मिन् सर्व्वर्त्तुसुमनोहराः ।
तस्याभ्यासे स राजर्षिश्चकारावासमुत्तमम् ॥ १३।१४।१५ ।
सेवकैर्नाशितः सर्व्व आरामः सफलद्रुमः ।
प्राकारपरिखा चैव स्थण्डिलप्रतिमा कृता ॥ १६ ।
बहुधा वार्य्यमाणैस्तु पापबुद्धिसमाश्रितैः ।
एवं तेन कृतं तत्र सोऽपि दैववशङ्गतः ॥
पञ्जरस्थो यथा सिंहः कोऽस्मांस्त्राता भवेदिति* ।
पिधायाञ्जलिना वक्त्रमश्रुक्लिन्नस्तनान्तरा ।
रुरोदोच्चैःस्वरं† दीना हा कष्टमिति जल्पती ॥ १७।१८ ।
सर्व्वासां रुदतीनाञ्च कुररीणामिव स्वनः ।
श्रूयते बहुधाकारो गोकर्णोऽप्यतिदुःखितः ॥
एकैकस्यास्तु चक्रेऽसौ मूर्द्ध्ना पादाभिवन्दनाम् ।
प्राञ्जलिर्दीनया वाचा सान्त्वयामास ताः शनैः ॥१९।२०।
प्राप्तसंज्ञास्तु ताः सर्व्वाः गोकर्णोऽप्याह सुस्वनः ।
भविता यदि तत्राहं राजानं तं निवारयम्‡ ।
किङ्करिष्यामि दैवेन समर्थोऽप्यवसादितः ॥ २१ ।

---

* (ग) पुस्तके इतः पूर्व्वं गोकर्ण उवाच इति पाठो वर्त्तते, स तु न सङ्गच्छते ।
† रुरोद सुस्वरं दीनेति (ग) । ‡ निवारयेयमिति साधु ।

## द्विसप्तत्यधिकोऽष्टतमोऽध्यायः ।

इत्युक्तमात्रे वचने ताः सर्व्वा लब्धचेतसः ।
ऐक्यभावेन ताः सर्व्वाः पप्रच्छुर्बणिजम्प्रति ।
कस्त्वङ्कथय कस्माच्च स्थानात्त्वमिहागतः ॥ २२ ।

गोकर्ण उवाच ।

गोकर्णोऽहं सुचार्व्वास्यः सुकपोलः सुलोचनः ।
पूर्व्वं दृष्टा भवत्यो मे चार्व्वङ्ग्यश्चारुलोचनाः ।
इदानीं मलिना जाता मम शोकविवर्द्धनाः ।
कथयध्वं ममात्मानमचतस्तदनन्तरम् ॥ २३।२४ ।
ज्येष्ठा सोवाच तस्याग्रे पुष्पजात्या स्वलङ्कृताः ।
वयमारामसंस्थाश्च स्वामिना परिपालिताः ॥ २५ ।
हृद्यवेषाः सुचार्व्वङ्ग्यः पुष्पवृद्धिरताः सदा ।
पूर्व्वं दृष्टाः स्वरूपाश्च विपर्य्ययमथो शृणु ॥ २६ ।
राजलोकैः पीड़िताश्च छेदनोन्मूलनेन च ।
पीड़िता भृशमुद्विग्नास्तेनेदानीं सकल्मषाः ॥ २७ ।
पुष्पमालाविहीनाश्च मूलस्कन्धावशोषिताः ।
एवंविधाश्च सम्भूता नष्टसंज्ञाः स्थिता वयम् ॥ २८ ।
यो देवस्तत्र पाषाणो मृत्पिण्डेष्टकयन्वितः ।
सोऽत्र सत्त्वमयः साक्षी तस्य पुण्यस्य कर्म्मणि ॥ २९ ।
पुण्यं सोदकपूर्णोऽयं तस्यारामस्य सेचकम् ।
सरश्चोत्पलपूर्णश्च कलहंसैर्युतं सदा ॥ ३० ।
ये ते वृक्षाः फलोपेतास्ते सौवर्णाश्च सत्तम ।
एता रक्षन्ति सततमारामं सुखदं नृणाम् ।

तस्या नाशाद्यथा नोऽत्र जातेयञ्च विरूपता ॥ ३१ ।

गोकर्ण उवाच ।

आरामकर्त्तुः किञ्चात्र फलं भवति यादृशम् ।
करणात्कूपदेवानां तस्य पुण्यफलं वद ॥ ३२ ।

ज्येष्ठोवाच ।

इष्टापूर्त्तं द्विजातीनां प्रथमं धर्म्मसाधनम् ।
इष्टेन लभते स्वर्गं पूर्त्ते मोक्षञ्च विन्दति ॥ ३३ ।
वापीकूपतड़ागानि देवतायतनानि च ।
पतितान्युद्धरेद्यस्तु स पूर्त्तफलमश्नुते ॥ ३४ ।
भूमिदानेन ये लोका गोदानेन च कीर्त्तिताः ।
ते लोकाः प्राप्यते* पुंभिः पादपानां प्ररोहणे ॥ ३५

अश्वत्थमेकं पिचुमर्द्दमेकं
न्यग्रोधमेकं दशपुष्पजातिः ।
द्वे द्वे तथा दाड़िममातुलिङ्गे
पञ्चाम्ररोपी† नरकं न याति ॥ ३६ ।
यथा सुपुत्त्रः कुलमुद्धरेद्धि
यथाऽतिकष्टाद्वियमप्रयत्नात् ।
तथाऽत्र वृक्षाः फलपुष्पभूताः
स्वं स्वामिनं नरकादुद्धरन्ति ॥ ३७ ।

* प्राप्यन्ते इति साधु, तथा कृते तु छन्दोदोषः । † पञ्चाम्रवापीति बहुषु पाठः

गोकर्ण उवाच।

इन्धनार्थं यदानीतमग्निहोत्रं तदुच्यते।
छायाविश्रामपथिकैः पक्षिणां निलयेन च॥ ३८।
पत्रमूलत्वगादिभ्य औषधार्थन्तु देहिनाम्।
उपकुर्व्वन्ति वृक्षस्य पञ्चयज्ञः स उच्यते॥ ३९।
गृहकृत्यानि काष्ठानि क्षुद्रजन्तुगृहास्तथा।
यत्र निर्वर्त्तनं प्रोक्तं भिक्षा पत्रैः समीकृता॥ ४०।
फलन्ति वत्सरे मध्ये द्विवारं शकुनादयः॥ ४१।
सांवत्सरं पितुर्मातुरुपकारम्फलैः कृतम्।
एवं पुत्त्रसमारोपा एवं तत्त्वविदो विदुः॥ ४२।

वराह उवाच।

एवमुक्तस्तया देव्या मालत्या पुष्पजातया।
हा कष्टङ्कथमित्येवं मुमोह च पपात च॥ ४३।
ताभिराश्वासितो धीमान् ससंज्ञो वारिणोक्षितः।
आत्मानं कथयास्माकं यस्माच्च त्वमुपागतः॥ ४४।

गोकर्ण उवाच।

वृद्धौ च मातापितरौ साधुभार्य्याचतुष्टयम्।
मथुरायां ममैवैतदुद्यानं देवतागृहम्॥ ४५।
यदि तत्र गतश्चाहं पितृराज्ञास्तु सन्निधौ।
इमामापदमापन्ना यूयं तद्वै निवेदये॥ ४६।
ज्येष्ठा प्रोवाच नेष्यामि यदि ते रोचतेऽनघ।
अद्यैव मथुरां देवीमत्रेच्छामोऽधिगम्यताम्।

विमानप्रतिमाकारं यानमारुह्य सत्वरः ।
दिव्यानीमानि रत्नानि भूषणानि फलानि च ।
गृह्णीष्वोपायनं राज्ञे तस्मै त्वं देह्यनर्घ्यकम् ॥ ४७।४८ ।
आरुह्य स तथेत्युक्त्वा नमस्कृत्य हरिञ्च ताः ।
उत्पपात ततः स्थानाद्यत्र राजा व्यवस्थितः ॥ ४९ ।
राज्ञे निवेदयामास रत्नानि सुबहूनि च ।
राजा दर्शनमात्रेण सन्तुष्टः सन् ब्रवीदिदम्* ॥ ५० ।
स्वागतं ते महाभाग परिपूज्य सुमान्य च† ।
अर्द्धासने कृतः प्रीत्या रत्नदो धनदो यथा ॥ ५१ ।
अस्मात्स्थानादिदानीञ्च अपसर्प्य क्षणान्तरे ।
आश्चर्यं दर्शयिष्यामि कथयिष्यामि चापि भोः ॥ ५२ ।
स तथेति प्रतिश्रुत्य सेनापतिमुवाच ह ।
मुहूर्त्तार्द्धाद्यथा याति सैन्यं तच्च तथा कुरु ॥
क्षिप्रं तत्प्रतिपद्यस्व न कालोऽत्यभ्यगाद्यथा ।
कृतं तेन तथा सर्व्वं यथा राज्ञा प्रभाषितम् ॥ ५३।५४
ता देव्यो दिव्यरूपाश्च विमानकृतरूपकाः ।
साधु साध्विति गोकर्णं प्रशशंसुः पुनः पुनः ।
वरं दत्त्वा यथाकामं स्वस्तीत्युक्त्वा दिवं ययुः ॥ ५५ ।
गोकर्णस्तु तदाचष्टे तत्सर्व्वं नृपतेः सुखी ।
सर्व्वं तच्चात्मचरितं पूर्त्तधर्म्मस्य यत् फलम् ॥ ५६ ।

---

* ब्रवीदिदमित्यत्र अब्रवीद्वचनमिति माधु । † सुमान्य चेति ग) ।

राज्ञा तस्मै प्रदत्ताश्च ग्रामाश्चैव पुराणि च ।
वस्त्राणि च गजाश्चैव वाजिनोऽन्यद्धनम्बहु ॥ ५७ ।
आश्चर्य्यं परमं धर्म्ममाराममस्य महत् फलम् ।
श्रुत्वा सर्व्वप्रकारासौ सार्व्वभौमो महीपतिः ॥ ५८ ।

इति वराहपुराणे गोकर्णमाहात्म्ये
द्विसप्तत्यधिकशततमोऽध्यायः ।

## त्रयःसप्तत्यधिकशततमोऽध्यायः ।

वराह उवाच

तत्र स्थित्वा यथान्यायङ्गोकर्णः सर्व्वमङ्गलम् ।
शुकञ्च मातापितरं साधुभार्य्याचतुष्टयम् ।
सम्मान्य पूजयामास यथाविभवशक्तितः ।
मथुरावासिभिर्लोकैरुत्सवानकारयत्तदा* ॥ १।२ ।
स्वयञ्च कृतवांस्तत्र अविघ्नस्य महामखम् ।
भक्ष्यभोज्ये ब्राह्मणेभ्यो ददौ दानानि नित्यशः ॥ ३ ।
गीतवादित्रमाङ्गल्यं पुत्त्रस्तस्मै यथोचितम् ।
तत्सर्व्वङ्कृतवांल्लोको गोकर्णस्य महात्मनः ॥ ४ ।
एकैकञ्च परिष्वज्य प्रणिपत्य यथाक्रमम् ।
मातापित्रोः प्रणम्याथ शिरसा पादवन्दनाम्† ॥ ५

* कारणादित्यत्र अकारणादिति सा॰ पु॰ ।   † पादवन्दनमिति (ग) ।

शुकं हृदि समालोक्य प्रहरोद स वै वणिक् ।
यस्य प्रसादाज्जीवस्य धर्म्मस्यानुत्तमा गतिः ।
विशिष्टेन मया प्राप्तो राज्ञो लाभः सुपुष्कलः ।
शुकपुत्रान्मया प्राप्तमिहलोके परत्र च ॥ ६।७ ।
एवं वसन् सुखं तत्र गोकर्णः सह बन्धुभिः ।
शुकनाम्ना कृतं तेन शिवस्यायतनं महत् ॥ ८ ।
शुकेश्वरं प्रतिष्ठाप्य दिव्यं सत्रञ्चकार ह ।
ब्राह्मणानां शते द्वे च मिष्टान्नवरभोजने ॥ ९ ।
शुकसत्रमिति ख्यातं मृतो मुक्तिमवाप सः ।
विमानवरमारुह्य स्वर्गलोकङ्गतः शुकः ॥ १० ।
शुकप्रदाने गोकर्णः फलं स्नानस्य सङ्गमात् ।
श्राद्धं सुवर्णं गोदानं कृत्वा तस्मै ददौ च सः ॥ ११ ।
शवरस्य सभार्य्यस्य तेन स्वर्गङ्गतस्य ह ।
शुकोदरेण सहितो विमानवरमास्थितः* ॥ १२ ।
एतत्ते कथितं सर्व्वं मथुरायां महत्फलम् ।
सरस्वतीसङ्गमस्य गोकर्णस्य शिवस्य च ॥ १३ ।
गोकर्णस्य तु सन्तानमक्षयं धर्म्मतोऽव्ययम् ।
सम्भूतं स सुखं भुक्त्वा ततो मोक्षमवाप्नुयात् ॥ १४ ।

इति वराहपुराणे गोकर्णमाहात्म्ये
त्रयःसप्तत्यधिकशततमोऽध्यायः ।

---

* एतदर्धस्य कोऽप्यर्थः न विभाव्यते ।

# चतुःसप्तत्यधिकशततमोऽध्यायः ।

वराह उवाच ।

पुनरन्यत्प्रवक्ष्यामि* महापातकनाशनम् ।
सङ्गमस्य प्रभावं हि पापिनामपि मुक्तिदम् ॥ १ ।
अत्रैव श्रूयते पूर्व्वं ब्राह्मणः संशितव्रतः ।
महानामेति विख्यातः स्थितोऽसौ वनमाश्रितः ॥ २ ।
स्वाध्याययुक्तो होमे च नित्ययुक्तः स योगवित् ।
जपहोमपरो नित्यं स्वकालं क्षपयते च सः ॥ ३ ।
एवङ्कर्म्माणि कुर्व्वन्स ब्रह्मलोकजिगीषया ।
बहून्यब्दान्यतीतानि ब्राह्मणस्य वने तदा ॥ ४ ।
तस्य बुद्धिरियं जाता तीर्थाभिगमनं प्रति ।
पुनस्तीर्थजलैरेतत्क्षालयामि कलेवरम् ।
प्रयातो विधिवत्साक्षात् सूर्य्यस्योदयनं प्रति ॥
असिकुण्डादितः कृत्वा दक्षिणां कोटिकां ततः ।
तथाचोत्तरकोट्यान्तु तथा मन्माथुरञ्च यत् ।
क्रमेण सर्व्वतीर्थानि स्नात्वा मामपि पुष्करम् ।
गत्वा सर्व्वाणि तीर्थानि स्नात्वा पूतो भवाम्यहम् ॥ ५।६।७।
इति कृत्वा मथुराया निर्जगामाथ स द्विजः ।
कृतपूजानमस्कारः अध्वानं प्रत्यपद्यत ॥ ८ ।

* प्रभावस्य पंक्त्यात्पुनरन्यत्प्रवक्ष्यामीति साधु ।

अध्वप्रपन्नो ददृशे पञ्च प्रेतान् सुभीषणान् ।
अरण्ये कण्टकाकीर्णे निर्ज्जने शब्दवर्ज्जिते ॥ ९ ।
तान्दृष्ट्वा विकृताकारानतितीव्रभयङ्करान् ।
ईषदुद्विग्नहृदयोऽतिष्ठदुन्मील्य चक्षुषी ॥ १० ।
आलम्ब्य स ततो धैर्य्यं त्रासमुत्सृज्य दूरतः ।
पप्रच्छ मधुरालापः के यूयं रौद्रमूर्त्तयः ॥ ११ ।
भवन्तः कर्म्मणा केन दुष्कृतेन भयावहाः ।
एकस्थानात्तदा यूयं प्रस्थिताः कुत्र वा सदा ॥ १२ ।
प्रेता ऊचुः ।
क्षुत्पिपासातुरा नित्यं बहुदुःखसमन्विताः ।
दुर्बुद्धा च हताः सर्व्वे हीनज्ञाना विचेतसः ॥ १३ ।
न जानीमो दिगङ्गाश्चिद्विदिगश्चापि चाध्वनि ।
नान्तरिक्षं महीञ्चापि जानीमो दिवसन्तथा ॥ १४ ।
यदेतद्दुःखमापन्नं सुखोदर्कफलं भवेत् ।
अप्रकाममिदं भाति भास्करोदयनम्प्रति ॥ १५ ।
अहं पर्य्युषितो नाम सूचिमुखस्ततः परः ।
शीघ्रगो रोधकश्चैव पञ्चमो लेखकस्तथा ॥ १६ ।
ब्राह्मण उवाच ।
प्रेतानाङ्कर्म्मजातानां नाम्नां वै सम्भवः कुतः ।
किं तत्कारणमेतद्धि यूयं सर्व्वे सनामकाः ॥ १७ ।
प्रेत उवाच ।
अहं स्वादु सदाश्नामि दधि पर्य्युषितं द्विजे ।

एतत्कारणमुद्दिश्य नास्ति पर्य्युषितं द्विज ॥ १८ ।
सूचिता बहवोऽनेन विप्राद्याद्यादिकाङ्क्षिणः ।
एतत्कारणमुद्दिश्य सूचिमुखस्ततः परः ॥ १९ ।
समर्थितो द्विजेनैव शीघ्रं याति यतो हि सः ।
एतत्कारणमुद्दिश्य शीघ्रगस्तेन सोच्यते* ॥ २० ।
एको गृहस्य मध्ये तु भुङ्क्ते द्विजभयेन हि ।
समारुह्योद्विग्नमना रोधकस्तेन चोच्यते ॥ २१ ।
मौनेनापि स्थितो नित्यं याचितोऽपि लिखेन्महीम् ।
अस्माकमपि पापिष्ठो लेखकस्तेन नाम वै ॥ २२ ।
मदेन लेखको याति रोधकस्तु ह्यवाक्शिराः ।
शीघ्रगः पङ्गुतां प्राप्तः सुचिमुखस्ततः परम्† ॥ २३ ।
उपितः केवलग्रीवो लम्बोष्ठो बृहतोदरः‡ ।
बृहद्वृषणशुष्काङ्गः पापादेव प्रजायते ॥ २४ ।
एतत्ते सर्व्वमाख्यातमात्मवृत्तान्तसम्भवम् ।
यदि ते श्रवणे श्रद्धा पृच्छ चान्यद्यदिच्छसि ॥ २५ ।

ब्राह्मण उवाच ।

ये जीवा भुवि तिष्ठन्ति सर्व्वे आहारजीविनः ।
युष्माकमपि चाहारं श्रोतुमिच्छामि तत्त्वतः ॥ २६ ।

प्रेता ऊचुः ।

शृणु चाहारमस्माकं सर्व्वभूतदयापर ।

---

* स उच्यते इति साधु । † एतदर्द्धं ग पुस्तके नास्ति । ‡ बृहदुदर इति साधु ।

यच्छ्रुत्वा निन्दसे नित्यं भूयोभूयश्च नित्यशः ॥ २७ ।
श्लेष्ममूत्रपुरीषेण योषितानां समन्ततः ।
गृहाणि त्यक्तशौचानि प्रेता भुञ्जन्ति* तत्र वै ॥ २८ ।
बलिमन्त्रविहीनानि दानहीनानि यानि च ।
गुरवो नैव पूज्यन्ते स्त्रोजितानि गृहाणि च ॥ २९ ।
यानि प्रकीर्णभाण्डानि प्रकीर्णोच्छिष्टपणानि च ।
नित्यञ्च कलहो यत्र प्रेता भुञ्जन्ति तत्र वै ॥ ३० ।
अपात्रे प्रतिदत्तानि विधिहीनानि यानि च ।
निन्दितानां द्विजातीनां जुगुप्सितकुलोद्भवे ।
जातानां विहितानाञ्च कर्मदुष्कृतकारिणाम् ।
तेभ्यो दत्तं तदस्माकमुपतिष्ठति भोजने ॥ ३१।३२ ।
एतत्पापतरश्चान्यद्भोजनं दुष्टकर्म्मिणा ।
निर्व्विण्णाः प्रेतभावेन पृच्छामः सुदृढव्रत ।
प्रेतो यथा न भवति तथा ब्रूहि तपोधन ॥ ३३ ।

ब्राह्मण उवाच

एकरात्रित्रिरात्रेण कृच्छ्रचान्द्रायणादिभिः ।
व्रतैरभ्युद्यतः पूतो न प्रेतो जायते नरः ॥ ३४ ।
मिष्टान्नपानदाता च सततं श्रद्धयान्वितः ।
यतीनां पूजको नित्यं न प्रेतो जायते नरः ॥ ३५ ।
त्रिरह्निः पञ्च चैकं वा प्रतिनित्यन्तु पोषयेत् ।

* भुञ्जते इति साधु । एवं परत्र ।

सर्व्वभूतदयालुश्च न प्रेतो जायते नरः॥ ३६।
देवातिथिषु पूजासु गुरुपूजासु नित्यशः।
रतो वै पितृपूजायां न प्रेतो जायते नरः॥ ३७।
जितक्रोधो ह्यमात्सर्य्यस्तृष्णासङ्गविवर्ज्जितः।
क्षमायुक्तो दानशीलो न प्रेतो जायते नरः॥ ३८।
एकादशीं सिताकृष्णां सप्तमीं वा चतुर्द्दशीम्।
उपवासपरो नित्यं न स प्रेतोऽभिजायते॥ ३९।
गां ब्राह्मणञ्च तीर्थानि पर्व्वतांश्च नदीस्तथा।
देवांश्च वन्दते नित्यं न प्रेतो जायते हि सः॥ ४०।

प्रेता ऊचुः।

त्वत्तस्तच्छ्रुतमस्माभिर्यो न प्रेतोऽभिजायते।
प्रेतश्च जायते केन* तद्वद त्वं महामुने॥ ४१।

विप्र उवाच।

शूद्रान्नेन तु भुक्तेन ब्राह्मणो म्रियते यदि।
तेनैव उदरस्थेन स प्रेतो जायते ध्रुवम्॥ ४२।
नग्नकापालिपाषण्डमेलनासनभोजनैः†।
मनुष्यः प्रेततां याति स्पर्शेन सुतरां तथा‡।
पूर्व्वपुण्यं विनश्येत प्रेतो भवति नित्यशः§॥ ४३।

* केव (को वा?) इति (ग)। † नग्नकापालिपाषण्डसंलापासनभोजनैरिति (ग)। ‡ संस्पर्शेन सुदारुणमिति (ग)। § न संशय इति (क), (ख), अत्र तु छन्दोदोषः। निश्चितम् इति क्रमे तु न दोषः।

पाषण्डाश्रमसंस्थश्च मद्यपः पारदारिकः ।
वृथामांसरतो नित्यं स च प्रेतोऽभिजायते ॥ ४४ ।
देवस्वं ब्राह्मणस्वञ्च गुरोर्द्रव्यं हरेत्तु यः ।
कन्यां ददाति शुल्केन स च प्रेतोऽभिजायते ॥ ४५ ।
मातरं पितरं भ्रातृभगिन्यौ च* स्त्रियं सुतम् ।
अदुष्टान् यस्त्यजेत्सोऽपि प्रेतो भवति च ध्रुवम् ॥ ४६ ।
अयाज्ययाजनाच्चैव याज्यानां परिवर्ज्जनात् ।
रतो वा† शूद्रसेवायां स प्रेतो जायते नरः ॥ ४७ ।
ब्रह्महा च कृतघ्नश्च गोघ्नोऽतिपञ्चपातकी ।
भूमिकन्याहृती चैव‡ स प्रेतो जायते नरः ॥ ४८ ।
गुरोर्धर्म्मोपदेष्टुश्च नित्यं हितमभीप्सतः§ ।
न करोति वचस्तस्य स प्रेतो जायते नरः ॥ ४९ ।
असद्भ्यः प्रतिगृह्णाति नास्तिकेभ्यो विशेषतः ।
स पापो जायते प्रेत आहारादिविवर्ज्जितः ॥ ५० ।

प्रेता ऊचुः ।

य एतत्कर्म्म कुर्व्वन्ति मूढाऽधर्म्मपरायणाः ।
विरुद्धकारिणः पापास्तेषाञ्चाश्चिन्नतिं वद ॥ ५१ ।

ब्राह्मण उवाच ।

ये धर्म्मविमुखा मूढा दयादानविवर्ज्जिताः ।

---

* भ्रातृन् भगिनीश्चेति (ग) । † रतोवै इति (ग) । ‡ भूमिकन्यापहृती चेति (ग) ।
§ हितमपश्यतः इति प्रायः सार्व्वत्रिकः पाठः, स चासङ्गतः लिपिकरप्रमादगतामुगतिक-इत्यनुमीयते ।

तेषां गतिर्भवेदेका मथुरायान्तु सङ्गमे ॥ ५२ ।
श्रवणद्वादशीयोगे मासि भाद्रपदे तथा ।
वामनं तत्र देवन्तु पूजयेच्छ्रद्धयास्तथा ।
सुवर्णमन्नं वस्त्रञ्च छत्रोपानहसंयुतम् ॥ ५३ ।
तत्र स्नात्वा पितॄंस्तर्प्य* दत्त्वा करकमेव च ।
न ते प्रेता भविष्यन्ति मार्गस्थो यो नमस्यते† ।
विमानवरमारुह्य विष्णुलोकं स गच्छति ॥ ५४ ।
तत्र तीर्थे नरः स्नातो हृष्टपुष्टो यथाश्रुतः ।
ध्यातश्च कीर्त्तिता वापि तेन गङ्गावगाहिता ॥ ५५ ।
तीर्थस्यैव तु माहात्म्यं प्रेतो भूत्वा शृणोति यः ।
तस्याक्षयपदं विष्णोर्भवतीति मया श्रुतम् ॥ ५६ ।

प्रेता ऊचुः ।

अस्माकं वद कल्याणं व्रतस्यास्य विधिं परम् ।
येन वै क्रियमाणेन प्रेतत्वञ्च विमुच्यते‡ ॥ ५७ ।

ब्राह्मण उवाच ।

एवमेव व्रतस्यास्य विधानङ्कर्म्मसंहितम् ।
पुराणङ्कथितं राज्ञे मान्धात्रे पृच्छते पुरा ।
वसिष्ठेन महाभागा शृणुध्वं कथयाम्यहम् ।
प्रेतानां मोक्षणं पुण्यं गतिप्रवरदायकम् ॥ ५८।५९ ।
मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।

* तर्पयित्वेति ख पु । † नमस्यतीति ख पु । ‡ प्रेतभावञ्च मुच्यते इति ख ।

तस्यां दत्तं हुतं स्नानं सर्व्वं लक्षगुणं भवेत् ॥ ६० ।
सङ्गमे च पुनः स्नात्वा पूजयित्वा तु वामनम् ।
कलशं विधिना दत्त्वा तस्य पुण्यफलं शृणु ॥ ६१ ।
कपिलानां शतं दत्त्वा हिरण्योपस्करान्वितम्* ।
तेन यत्फलमाप्नोति तद्द्वादश्यामखण्डितम् ॥ ६२ ।
राक्षसत्वं न गच्छेत† श्रवणद्वादशीव्रतात् ।
स्वर्गे च वसते तावद्यावदिन्द्राश्चतुर्द्दश ॥ ६३ ।
ततः स्वर्गात्परिभ्रष्टो ब्राह्मणो वेदपारगः ।
जातिस्मरो महायोगी मोक्षमार्गपरायणः‡ ।
ध्यानयोगेन भावेन मुक्तो यात्यपुनर्भवम् ॥ ६४ ।
करकञ्च सुसम्पीतं सान्नं रत्नसमन्वितम् ॥ ६५ ।
यथालाभोपपन्नेन सौवर्णो वामनः कृतः ।
उपानच्छत्रसंयुक्तो विधिमन्त्रपुरःसरः ।
कृत्वा च विधिवत्तस्य स्नानपूजादिकं नरः ।
मन्त्रैस्तथाविधैर्होमैर्ब्राह्मणं चोपपादयेत् ॥ ६६।६७ ।
आगच्छ वरदानन्तु श्रीपते मदनुग्रहात् ।
सर्व्वगोपिनिजांशेन स्थानमेतदलङ्कुरु ॥ ६८ । आवाहनम् ।
यस्त्वं नक्षत्ररूपेण द्वादश्यां नभसि स्थितः ।
तन्नक्षत्रमहं वन्दे मनोवाञ्छितसिद्धये ॥ ६९ । नाक्षत्रम् ।
नमः कमलनाभाय कमलालय केशव ।

---

* हिरण्योपस्करान्वितमिति ग । † गच्छेदिति माधु । ‡ मोक्षधर्मपरायण इति ग ।

अमूर्त्ते सर्व्वतोव्यापिनारायण नमोऽस्तु ते ॥ ७० । स्नानम् ।
सर्व्वव्यापिजगद्योने मम: सर्व्वमयाच्युत ।
श्रवणाद्दादशीयोगे पूजां गृह्णीष्व केशव ॥ ७१ । पूजा ।
धूपोऽयं देवदेवेश शङ्खचक्रगदाधर ।
अच्युतानन्त गोविन्द वासुदेव नमोऽस्तु ते ॥ ७२ । धूपः ।
तेजसा सर्व्वलोकाश्च विहृताः सन्तु तेऽव्ययः ।
त्वं हि सर्व्वगतं तेजो जनार्द्दन नमोऽस्तु ते ॥ ७३ । दीपः ।
अदितेर्गर्भमाधाय वैरोचनिशमाय च ।
त्रिभिः क्रमैर्जिता लोका वामनाय नमोऽस्तु ते ॥ ७४ ।

नैवेद्यम् ।

देवानां सम्मतश्चापि योगिनां परमा गतिः ।
जलशायी जगद्योने अर्घ्यं मे प्रतिगृह्यताम् ॥ ७५ ।

अर्घ्यम् ।

हव्यभुक् हव्यकर्त्ता त्वं होता हव्यं त्वमेव च ।
सर्व्वमूर्त्ते जगद्योने नमस्ते केशवाय चेति स्वाहा ॥ ७६ ।

होमः ।

हिरण्यमन्नस्त्वं देव जलवस्त्रमयो भवान् ।
उपानच्छत्रदानेन प्रीतो भव जनार्द्दन ॥ ७७ ।दक्षिणायाम्।
पर्य्यन्यो वरुणः सूर्य्यः सलिलं केशवः शिवः ।
अग्निर्वैश्रवणो देवः पापं हरतु मेऽव्ययः ॥ ७८ ।

वामनस्तुतौ ।

अनन्यजाप्रतिर्विष्णुरुद्रेन्द्रचन्द्रभास्कराः ।

अन्नं त्वष्टा यमोऽग्निश्च* पापं हरतु मेऽव्ययः ॥ ७८ ।

करकदाने ।

वामनोबुद्धिदाता च द्रव्यस्थो वामनः स्वयम् ।

वामनस्तारकोभाभ्यां वामनाय नमोऽस्तु ते ॥ ८० ।

यजमाने ।

वामनं प्रतिगृह्णामि वामनो मे प्रयच्छति ।

वामनस्तारकोभाभ्यां वामनाय नमो नमः ॥ ८१ ।

द्विजप्रतिग्रहे ।

कपिलाङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।

दत्त्वा कामदुघां लोका भवन्ति सफला नृणाम् ॥ ८२ ।

गोदाने ।

मम पापच्छिदे तुभ्यं देवगर्भा सुपूजिता ।

मया विसर्ज्जिता देव स्थानमन्यदलङ्कुरु† ॥ ८३ ।

विसर्ज्जनम् ।

एवं विद्वांस्तु द्वादश्यां यो नरः श्रद्धयान्वितः ।

यत्र तत्र नभस्ये तु कृत्वा फलमवाप्यते‡ ॥ ८४ ।

ब्राह्मण उवाच ।

यस्तु सारस्वते तीर्थे यमुनायाश्च सङ्गमे ।

करोति विधिनानेन तस्य पुण्यं शतोत्तरम् ॥ ८५ ।

मयापि श्रद्धया चैतत्कालं तीर्थस्य सेवनम् ।

---

* अन्नं त्वष्टयमाग्निश्चेति (क), (ग)। † स्थानमेतदलङ्कुरु इति (ग)। ‡ अवाप्नोतीति साधु।

चैत्रसप्तासरूपेण कृतं भक्तिसमन्वितम्।
तेन यूयं न शक्ता मां बाधितुं पापकर्म्मिणः॥ ८६।
श्रवणद्वादशीयोगे व्रतं तिथिसमन्वितम्।
तावद्व्रतं तु कर्त्तव्यं यावदेकं क्षयं व्रजेत्॥ ८७।
तीर्थस्यैव प्रभावो हि प्रत्यक्षमिह दृश्यते।
श्रवणाद्धो गतिः साक्षात्साधु लब्धामहेऽधुना॥ ८८।
वराह उवाच*।
एवं ब्रुवति विप्रे तु आकाशे दुन्दुभिस्वनः।
पुष्पवृष्टिः पतद्भूमौ† देवैर्मुक्ता सहस्रशः॥ ८९।
प्रेतानान्तु विमानानि आगतानि समन्ततः।
देवदूत उवाचेदं प्रेतानां शृण्वतां तदा॥ ९०।
अस्य विप्रस्य सम्भाषात्पुण्यसङ्कीर्त्तितेन च।
प्रेतभावविमुक्ताः स्थ तीर्थस्य श्रवणादपि॥ ९१।
तस्मात्सर्व्वप्रयत्नेन सता सम्भाषणं वरम्।
कर्त्तव्यस्तीर्थभावश्च व्रतभावश्च भाविनि‡॥ ९२।
तीर्थाभिषेकिपुरुषाद्यथा तेषां दुरात्मनाम्।
प्रेतानामक्षयः स्वर्गः सत्सङ्गत्याश्च सङ्गमात्॥ ९३।
प्राप्तस्तीर्थप्रभावस्य श्रवणान्मुक्तिदं फलम्।
तिलकं सर्व्वधर्म्माणां पञ्च प्रेतत्वमुक्तिदम्॥ ९४।
यः पठेत्परया भक्त्या शृणुयाद्भक्तितत्परः।

* श्रीवराह उवाच इति (ग)। † अपतद्भूमौ इति साधु। ‡ भामिनीति (ग)

करोति श्रद्धया युक्तो न प्रेतो जायते नरः ॥ ९५
पिशाचसंज्ञकं नाम तीर्थं त्रैलोक्यविश्रुतम् ।
यस्य श्रवणमात्रेण न प्रेतो जायते नरः ॥ ९६ ।

इति वराहपुराणे सर्व्वतीर्थे यमुनामहत्त्वप्रभावो नाम
चतुःसप्तत्यधिकशततमोऽध्यायः ।

## पञ्चसप्तत्यधिकशततमोऽध्यायः ।

वराह उवाच* ।

शृणु चान्यद्वरारोहे कृष्णगङ्गासमुद्भवम् ।
यमुनास्रोतसि स्नात्वा कृष्णद्वैपायनो मुनिः ॥
ध्यात्वा मनसि गङ्गां तां कालिन्दीं पापहारिणीम् ।
नित्यकालश्च† कुरुते तत्र तीर्थजलाप्लुतिम् ॥ १।२ ।
सोमवैकुण्ठयोर्मध्ये कृष्णगङ्गेति कथ्यते ।
यत्रातप्यत स व्यासो मथुरायां स्थितोऽमलः ॥ ३ ।
तत्राश्रमपदं दिव्यं मुनिप्रवरसेवितम् ।
आगच्छन्ति सदा तत्र चातुर्मास्यमुपासितुम् ।
मुनयो वेदतत्त्वज्ञाः‡ ज्ञानिनः शंसितव्रताः ॥ ४ ।

---

* श्रीवराह उवाच इति (ग)। † नित्यकालन्तु इति (ग)। ‡ वेदतत्त्वज्ञा- इति (क)।

श्रौतस्मार्त्तपुराणेषु सन्देहो यस्य कस्यचित्।
व्यासोऽपनोदयामास नानावाक्यैः महाकृतिः॥ ५॥
कालञ्जरे महादेवं तत्र तीर्थपतिं शिवम्।
यस्य सन्दर्शनादेव कृष्णगङ्गाफलं भवेत्॥ ६॥
तत्र स्थितो द्वादशाब्दव्रती सङ्गविवर्ज्जितः।
पत्राहारी च फलभुग्दर्शे वै पौर्णमासिके॥ ७॥
गत्वा हिमालयञ्चासौ बदरीमभितो मतः।
व्यासश्चर्य्यापरस्तत्र ध्यानयोगपरायणः।
त्रिकालदर्शी शुद्धात्मा सिद्धत्वं प्राप्नुयात्प्रभुः॥ ८॥
तस्याश्रमपदस्थस्य यद्दृष्टं ज्ञानचक्षुषा।
प्रत्यक्षं कृष्णतीर्थे तु पाश्चात्यकुलतन्तुना॥ ९॥
पाश्चात्योऽथ द्विजः कश्चिन्नाम्ना वसुरिति श्रुतः।
दुर्भिक्षपीड़ितोऽत्यन्तं सभार्य्यो दक्षिणाङ्गतः॥ १०॥
शिवनद्या दक्षिणे तु कूले सुवरपत्तने।
निवासमकरोत्तत्र ब्राह्मणीं वृत्तिमाश्रितः॥ ११॥
तत्रस्थस्य तदा पञ्च पुत्रा कन्याभवत्तदा।
ब्राह्मणाय च दत्ता सा धनधान्यसमन्विता॥ १२॥
स द्विजः कालसम्पन्नः सभार्य्यस्तत्र संस्थितः।
कन्याऽस्थीनि तु संगृह्य मथुरामाजगाम ह॥ १३॥
श्रुत्वा पुराणे पतितमर्द्धचन्द्रेऽस्थिपातनम्।
स्वर्गं वसति स नित्यं यस्यास्थि ह्यर्द्धचन्द्रके॥ १४॥
तीर्थयात्राप्रसङ्गेन लोकैः प्रचलिता वहिः।

तेन सार्थेन सा कन्या मथुरायां जगाम च ॥ १५ ।
कनिष्ठा भगिनी तेषां बालरण्डा बभूव ह ।
सुरूपा सुकुमाराङ्गी नीलकुञ्चितमूर्द्धजा ॥ १६ ।
कदलीकाण्डसङ्काशे तस्या ऊरू समांसले ।
सुश्लिष्टाङ्गुलिपादा तु नखास्ताम्रोज्ज्वलाः शुभाः ॥ १७ ।
गम्भीरा दक्षिणावर्त्ता नाभिस्त्रिवलिशोभिता ।
क्षामोदरी समकुक्षिः पीनोन्नतपयोधरा ॥ १८ ।
कम्बुग्रीवा संवृतास्या सुदती स्वधराहनुः ।
सुनखी स्वक्षिणी सुभ्रूः सुप्रमाणसुभाषिणी ॥ १९ ।
तेन तेनैव सम्पूर्णरूपेण च तिलोत्तमा ।
यं यं पश्यति चार्व्वङ्गी यस्ताञ्चैव प्रपश्यति ।
स स चित्र इव न्यस्तो विचेता जायते नरः ॥ २० ।
एवंविधा तत्र तत्र तीर्थस्नानपरायणा ।
दृष्टा वेश्यासमूहेन प्रागल्भेन तदा क्वचित् ॥ २१ ।
कान्यकुब्जाधिपो राजा क्षत्त्रधर्म्मे व्यवस्थितः ।
तस्य सत्रं सर्व्वकालं देवगर्त्तेश्वरे शिवे ।
प्रवर्त्तते सुवित्ताढ्यं प्रेक्षणीयं मनोरमम् ।
वादित्राणि च गीतानि शक्रस्य भवने यथा ॥ २२।२३ ।
तस्य देवस्य या वेश्यास्ताभिः सा प्रतिलोभिता ।
गीतनृत्यादिषु रता तासां धर्म्ममुपागता ॥ २४ ।
अल्पैर्दिवसैः सा साध्वी* असाध्वीभिः परीवृता ।

* ततोऽल्पैर्दिवसैः साध्वीति ग ।

एवं वसति सा बाला देवस्यास्य परिग्रहा।
यथासुखं समेताभिर्विहरन्ती दिने दिने ॥ २५ ।

इति वराहपुराणे मथुरामाहात्म्ये कृष्णगङ्गाकालिञ्जरप्रभावे
पञ्चसप्तत्यधिकशततमोऽध्यायः।

## षट्सप्तत्यधिकशततमोऽध्यायः।

वराह उवाच।

पञ्चानान्तु कनिष्ठो यः पञ्चालो ब्राह्मणात्मजः।
वाणिज्यभाण्डमादाय समूहस्य प्रसङ्गतः ॥ १ ।
सार्थेन निष्ठितः सोऽथ धनवान् रूपवांस्ततः* ।
क्रमेण तं सर्व्वदेशान्विषयान् पर्व्वतान्नदीः ॥
आक्रम्य तत्र सम्प्राप्ता यत्र सा मथुरा पुरी।
आवासं कारयामासुः प्रभूतयवसेन्धने ॥ २।३ ।
तस्मिन्स्थाने स पाञ्चालः† प्रातस्तु पुरुषैः सह।
तस्मिंस्तीर्थवरे स्नाप्य‡ वस्त्रालङ्कारभूषितः।
ऐश्वर्य्यमदभावेन यानेन महता तदा।
देवतादर्शनं कृत्वा दत्त्वा दानान्यनेकशः।

* धनवान्रूपवांस्तत इति (क), (ख)। † पाञ्चाल्य इति (ग)। ‡ स्नापयित्वेति माघ।

कौतुकार्थं ततो गत्वा देवङ्गेश्वरं तदा ।
तिलोत्तमायास्तद्रूपं दृष्ट्वा मोहवशं गतः ॥ ४।५।६ ।
धात्रेयिकायास्तस्याश्च बहुमानपुरःसरम् ।
वस्त्राणि बहुरूपाणि कटकानां शतानि च ।
हारा रत्नमयास्तद्दद्दौ लोभविमोहितः ॥ ७ ।
ददौ अगुरुसारञ्च सकर्पूरं सचन्दनम् ।
तस्या गृहवरे तत्र वसति स्म दिने दिने ॥ ८ ।
प्रहरार्द्धे दिने* जाते ततः स्वशिविरं ययौ ।
स्नात्वा तीर्थे समीपे च कृष्णगङ्गाद्भवे सदा ॥ ९ ।
एवं नित्यं प्रसक्तो हि करोति द्रव्यगर्वितः ।
एवन्तु कुर्व्वतस्तस्य मासषट्कं ततो गतम् ॥ १० ।
अथैकदा समायातः स्नातुं तत्र सुमन्तुना ।
स्वाश्रमस्थेन दृष्टः स कृमियुक्तः समागतः ॥ ११ ।
कृमयो रोमकूपेभ्यः पतमाना† अनेकशः ।
यावत्स्नानं स कुरुते पततः‡ राशिमात्रकः ।
स्नाने कृते नश्यति च सुरूपश्चाभिजायते ॥ १२ ।
एवं सुमन्तुना दृष्टमाश्चर्य्यं बहुवासरम् ।
सुमन्तुस्तर्कयामास कोऽयं कस्यात्मजो युवा ।
इति चिन्तासमायुक्तस्तमपृच्छद्विशङ्कितः ॥ १३ ।
कस्त्वं कस्यासि सुभग का जातिः कश्च ते पिता ।

---

* अथ दीर्घे दिने जाते इति क (ख) । † पतन्त इति माधु० । ‡ पततीति माधु ।

किङ्करोपि दिवारात्रौ ब्रूहि त्वं पृच्छतो मम ॥ १४ ।

पाञ्चाल उवाच

पाञ्चालो ब्राह्मणसुतो वाणिज्यञ्च समाश्रितः ।
दक्षिणापथदेशाच्च मथुरायां समागतः ॥ १५ ।
निशामुषित्वा शिविरे प्रातस्तीर्थं समाश्रितः ।
स्नात्वा महेश्वरं दृष्ट्वा त्रिगर्त्तेश्वरसंज्ञितम् ।
कालिञ्जरं भवत्पादौ गच्छामि शिविरं ततः ॥ १६ ।

सुमन्तुरुवाच ।

आश्चर्य्यं तव देहेऽस्मिन्नित्यं पश्यामि निःसृतम् ।
अस्नाते कृमिसम्पूर्णं स्नाते निर्मलवर्चसम् ॥ १७ ।
अस्ति किञ्चिन्महत्पापं तव प्रच्छन्नसम्भवम् ।
अस्यां तीर्थप्रभावेण स्नानाद्गच्छति दूरतः ।
कालिञ्जरस्य संस्पर्शाच्छुद्धं देहञ्च दृश्यते ॥ १८ ।
निरूप्य कथयास्माकं यत्ते प्रच्छन्नकिल्बिषम् ।
तीर्थमाहात्म्यभावञ्च दृष्ट्वा पृच्छामि ते हितम् ॥ १९ ।
इति तस्य मुनेः श्रुत्वा त्रिकालज्ञस्य भाषितम् ।
किञ्चिन्नोवाच पृष्टोऽपि एवमेव गतः पुनः ॥ २० ।
तस्यामासीत्* स एकान्ते तान्तु पप्रच्छ सादरम् ।
का त्वं कस्यासि सुभगे कश्च देशः प्रियंवदे ।
किं तत्कारणमुद्दिश्य वसस्यत्र सुखं सदा ॥ २१ ।

---

* तस्यां रात्र्यामिति (क), (ख) ।

इति निर्बन्धपृष्टा सा किञ्चिन्नोवाच तम्प्रति ।
पुनः पुनश्च पप्रच्छ सा प्रोवाच न किञ्चन ॥ २२ ।
किञ्चित्कालं समास्थाय तेनोक्तं हि प्रियाम्प्रति ।
त्यक्ष्यामि हि प्रियान् प्राणान्यदि सत्यं न वक्ष्यसि ॥ २३
निर्बन्धं तस्य तज्ज्ञात्वा दुःखेनोवाच तम्प्रति ।
पितरौ भ्रातरश्चेति देशं ज्ञातिं ततः कुलम् ॥ २४ ।
पञ्चालनगरी रम्या गङ्गायाश्चोत्तरे तटे ।
तस्यां तौ पितरौ मह्यं* वसतश्च यदृच्छया ॥ २५ ।
दुर्भिक्षपीड़िते राष्ट्रे गतौ तौ दक्षिणापथम् ।
नर्म्मदादक्षिणे कूले ब्राह्मणानां पुरोत्तमे ॥ २६ ।
तस्मिन् स्थाने पितुर्मह्यं पञ्च पुत्रा मया सह ।
जातास्तेषामहं षष्ठी कनिष्ठा विधवाऽभवम् ॥ २७ ।
योऽसौ कनिष्ठको भ्राता मम ज्येष्ठश्च पञ्चमः ।
बाल एव गतो देशं धनतृष्णाप्रलोभितः ॥ २८ ।
तस्मिन् गतेऽथ पितरौ कालधर्म्ममुपेयतुः ।
तीर्थेऽस्मिन्नस्थिपातार्थमहं सार्थैः सहागता ॥ २९ ।
अत्र स्नानपरा नित्यं देवब्राह्मणवन्दनम् ।
कुर्व्वन्ती वश्यमापन्ना आसां यस्या ममेदृशम् ।
आश्रिता कुलटाधर्म्मं कुलनाशो मया कृतः ॥ ३० ।
कुलद्वयो† च पुरुषा एकविंशतिसंख्यया ।

---

* मम स्थाने मह्यमिति आर्षम्    † कुलटयोरिति (क), (ख)।

नीता नरकमतुल्यं मया पापिष्ठया भृशम्। ३१।
एवं सा तस्य तत्सर्वं कथयित्वा तिलोत्तमा।
करोद सुस्वरं दीना स्मृत्वा पूर्व्वं कुलं वरम्।
विलप्य बहुधा रात्रौ संस्मृत्य स्वं विचेष्टितम्॥ ३२।
तस्या विलपितं श्रुत्वा स्त्रीजनः स तदागतः।
सान्त्वयामास तां बालां किं भद्रे रुदितं तव॥ ३३।
एतच्छ्रुत्वा स पापात्मा मूर्च्छितो धरणीं गतः।
ताः स्त्रियस्तां समाश्वास्य पापात्मं परिवार्य्य च।
तैस्तैरुपायैर्विविधैर्जीवयित्वा च तं नरम्।
लब्धप्राणन्तु तं दृष्ट्वा पप्रच्छुर्मोहकारणम्॥ ३४।३५।
ततस्तेन सवृत्तान्तं कथितञ्च कुलं महत्।
तिलोत्तमासहायानां स्त्रीणामग्रे सविस्तरम्। ३६।
ततः स विमना जातो ह्यगम्यागमनेन च।
प्रायश्चित्ते मतिरभूत्तिर्व्विस्मस्य दुरात्मनः॥ ३७।
ब्रह्महा च सुरापश्च* ब्राह्मणो यदि जायते।
प्रायश्चित्तं विनिर्द्दिष्टं मुनिभिर्द्दहनाशनम्॥ ३८।
मातरं गुरुपत्नीञ्च स्वसारं पुत्त्रिकां वधूम्।
गत्वा तु प्रविशेदग्निं नान्या शुद्धिर्विधीयते॥ ३९।
ब्रह्मघ्नश्च सुरापश्च स्त्रीघ्नश्च गुरुतल्पगः।

सुरापी चेति (ख)।

अगम्यागमनङ्कृत्वा एषां स समतामियात् ॥ ४० ।
इति श्रुत्वा तु पाञ्चाली ज्येष्ठभ्रातरमेव तम् ।
द्विजेभ्यः प्रददौ सर्व्वमङ्गलग्नं विभूषणम् ॥ ४१ ।
रत्नं वस्त्रं धनं धान्यं यत्किञ्चित्तत्र संस्थितम् ।
तत्सर्व्वं ब्राह्मणेभ्यश्च दत्त्वाशेषं ददौ धनम् ॥ ४२ ।
कालिञ्जरस्य भूषार्थमारामार्थं विशेषतः ।
कृष्णगङ्गोद्भवे तीर्थे चितां कृत्वा विधानतः ।
आत्मनश्च विशुद्ध्यर्थं प्रजज्वाल हुताशनम् ॥ ४३ ।
इति निश्चित्य तत्रैव स्नात्वा देवं प्रणम्य च ।
पञ्चालोऽपि विधानेन नमस्कृत्य मुनिं गुरुम् ।
सुमन्तुञ्च महाभागमुपविश्याग्रतश्च सः ।
मरणार्थोपयोग्यानि कृत्वा कर्म्माणि तत्र च ।
माथुरान् स समाहूय दत्त्वा दानानि सर्व्वशः ।
क्रीत्वा ग्रामांश्च तत्रैव ब्राह्मणेभ्यो ददौ तदा ॥ ४४।४५।४६।
ईशावास्यं जपं दिव्यं जापकेभ्यः शृणोति च ।
तेभ्योऽपि प्रददौ द्रव्यं सत्रार्थञ्च विभागशः ॥ ४७ ।
और्द्ध्वदैहिकभागार्थं कल्पयित्वा यथाविधि ।
स्नात्वा तीर्थे च कृष्णस्य देवं दृष्ट्वा प्रणम्य च ।
कालिञ्जरस्य पूजार्थं सत्रार्थम्परिकल्प्य च ।
देवालयञ्च तत्रैव कृत्वा सन्दिश्य सार्थकान् ।
सुमन्तोः प्रवरस्याथ पादौ जग्राह धर्म्मवित् ॥ ४८।४९ ।
देव ध्यानञ्च तैं दिव्यमद्भुतं लोमहर्षणम् ।

अगम्यागमनादेव* पापं जातं मम प्रभो ॥ ५० ।
आगतोऽहं यदारभ्य मथुरायां ततो गुरो ।
भगिन्या सह संयोगो जातोऽयं कुलनाशकः ॥ ५१ ।
त्वया निर्म्मलदृष्ट्या च वीक्षितोऽहं पुरा मुने ।
कृमयो मम गात्रात्तु निर्गच्छन्तो हि नित्यदा ।
कृष्णगङ्गाप्रभावेण पुनर्निर्म्मलताङ्गतम् ।
तत्सर्व्वं हि त्वया दृष्टं पृष्टश्चाहं पुनः पुनः ।
तत्सत्यं मम सञ्जातमगम्यागमपातकम् ॥ ५२।५३ ।
तत्पापस्य विशुद्ध्यर्थं देहत्यागङ्करोमि वै ।
अनुज्ञां देहि मां स्वामिंस्तव पादाभिवन्दये ॥ ५४ ।
विश्राव्य तस्य तत्पापं† चितां दीप्य घृताचिताम् ।
प्रवेष्टुकामं तत्राग्नौ खे प्रोवाचाशरीरिणी ॥ ५५ ।
मैवङ्कार्षीः साहसञ्च विपाप्मानौ सतश्च वः‡ ।
कस्माद्वा कस्य सन्त्रासान्मरणे कृतनिश्चयौ ॥ ५६ ।
यत्र कृष्णस्य सञ्चारः क्रीड़ितञ्च यथासुखम् ।
चक्राङ्कितपदा तेन स्थानं ब्रह्मसमं शुभम् ॥ ५७ ।
अन्यत्र हि कृतं पापं तीर्थमासाद्य गच्छति ।
तीर्थे च यत्कृतं पापं वज्रलेपो भविष्यति ॥ ५८ ।
द्वावेतौ च यथावश्यं गङ्गासागरसङ्गमे ।

* अगम्यागमनादेवमिति (ग)। † एवं विश्राव्य तत्पापमिति (ग)। ‡ विपाप्मानौ सतश्च व इति आर्षः प्रयोगः, विपाप्मानौ युवां गत एवं कृते साधु स्यात्।

सकृदेव नरः स्नात्वा मुच्यते ब्रह्महत्यया ॥ ५९ ।
पृथिव्यां यानि तीर्थानि सर्व्वाण्येवाभिषेचनात् ।
तत्पञ्चतीर्थस्नानेन समन्नास्त्यत्र संशयः ॥ ६० ।
एकादश्याञ्च विश्रान्तौ द्वादश्यां सौकरे तथा ।
त्रयोदश्यां नैमिषे च प्रयागे च चतुर्द्दशीम् ।
कार्त्तिक्यां पुष्करे चैव कार्त्तिकस्य सितासिते ।
कालेष्वेषु नरः स्नात्वा सर्व्वपापं व्यपोहति ॥ ६१।६२ ।
मथुरायाञ्च तीर्थेभ्यो विश्रान्तः पञ्चसंज्ञकं ।
सरस्वत्यामसिकुण्डे तथा कालिञ्जरस्य च ।
पञ्चतीर्थाभिषेकाञ्च यत्फलं लभते नरः ।
कृष्णगङ्गादशगुणं लभते च दिने दिने ॥ ६३।६४ ।
ज्ञानतोऽज्ञानतो वापि यत्पापं समुपार्ज्जितम् ।
सुकृतं दुष्कृतञ्चापि मथुरायां प्रणश्यति ॥ ६५ ।
वराहेण पुरा चेदं पृथिव्यै कथितं शुभम् ।
तीर्थानाङ्गुणमाहात्म्यं महापातकनाशनम् ॥ ६६ ।
सर्व्वदेवमयो योऽसौ सर्व्ववेदमयस्तथा ।
अनन्तश्चाप्रमेयश्च यस्य चान्तो न विद्यते ॥ ६७ ।
यस्य रोमैकदेशे तु आकाशो लेशमात्रकः ।
विलीनो नैव ज्ञायेत तस्य देवस्य का कथा ॥ ६८ ।
तथा नयनयोः प्रान्ते तेजो लीनञ्च दृश्यते ।
निःश्वासे च विलीनोऽसौ वायुर्नष्टो न दृश्यते ॥ ६९ ।
खुराग्रेषु तथा लीनाः समुद्राः सप्त च प्रभोः ।

दृश्यन्ते स्वेदसङ्काशा नाममात्रा यथा पुरा ॥ ७० ।
रोमकूपान्तरे लग्ना सशैलवनकानना ।
नष्टा पृथ्वी न लभ्येत तस्य देवस्य कोऽधिकः ॥ ७१ ।
सोऽत्र तीर्थपरित्राणं कुर्व्वन्देवः स्वयम्भुः ।
वराहः संस्थितः साक्षात्पुराणं येन सूचितम् ॥ ७२ ।
पृथिव्याः सर्व्वसन्देहान् स्फोटयामास योऽव्ययः ।
तस्य सन्दर्शनादेव सर्व्वपापविवर्ज्जितः ।
तत्क्षणादेव जायेत नात्र कार्य्या विचारणा ॥ ७३ ।
ज्यैष्ठशुक्लस्य नवम्यां स्नात्वा गङ्गोदके नरः ।
शूकरे तु त्रिरात्रञ्च* मानवोदीपदः सकृत् ।
दत्त्वा दानं यथाशक्त्या सर्व्वपापैः प्रमुच्यते ॥ ७४ ।
कलिञ्जरे च द्वादश्यां स्नात्वा पूज्य† च देवताम् ।
द्वादशादित्यसङ्काशो विमाने च समास्थितः ।
विष्णुना समनुज्ञातो विष्णुलोके महीयते ॥ ७५ ।

वराह उवाच ।

एवं सुखदशब्देन देववाण्या प्रचोदितः‡ ।
पाञ्चालसंज्ञकस्तत्र सुमन्तुं पर्य्यपृच्छत ।
अस्मद्गुरुः पिता त्वञ्च ब्रूहि किङ्करवाणि वै ॥ ७६ ।
पापकालभ्रमं मे स्यादुताहो तीर्थसेवनम् ।
त्रिरात्रं कृच्छ्रपाराकं चान्द्रायणमथापि वा ।
तव पादाङ्किते वापि स्थित्वा मोक्षमवाप्नुयाम् ॥ ७७ ।

---

* शूकरेऽपि त्रिरात्रञ्चेति (ग) । † पूजयित्वेति साधु । ‡ प्रबोधित इति (ग)

सुमन्तुरुवाच ।

आकाशभारती यत्तु तत्सत्यं नानृतं क्वचित्* ।
मया प्रत्यक्षतः पूर्व्वं तव गात्रेषु पातकम् ।
दिने दिने च स्नानात्प्राक् प्रतिगच्छति नित्यशः ।
आश्रमे त्वं स्थितश्चात्र निर्म्मलश्च शशी यथा ॥ ७८।७९
तिष्ठोपरमितः† पापाद्यावत्कालञ्च जीवसि ।
इयन्तु भगिनी पापादुपावृत्ता सती परम् ।
सगतिश्च विपापा च भविष्यति न संशयः ॥ ८० ।

वराह उवाच ।

एवं प्रभावस्तीर्थस्य मथुरायां वसुन्धरे ।
कृष्णगङ्गोद्भवस्यापि तथा कालिञ्जरस्य च ॥ ८१ ।
शूकरस्य च माहात्म्यं यथा ते वर्णितं पुरा ।
यः शृणोति वरारोहे श्रद्धया परया युतः ।
पठते प्रातरेवापि न स पापेन लिप्यते ॥ ८२ ।
सप्तजन्मकृतं पापं तस्य सर्व्वं व्यपोहति ।
फलञ्च गोशतस्यापि दत्तस्य समवाप्नुयात् ।
अमृतत्वञ्च लभते स्वर्गलोकञ्च गच्छति ॥ ८३ ।

इति श्रीवराहपुराणे कृष्णगङ्गोद्भवमाहात्म्यं नाम
षट्सप्तत्यधिकशततमोऽध्यायः ।

* आकाशात्स्वदति यत्सत्यमिति ग. । † उपरत इति साधु

## सप्तसप्तत्यधिकशततमोऽध्यायः ।

वराह उवाच ।

शृणु चान्यद्वरारोहे कृष्णस्यान्यद्विचेष्टितम् ।
द्वारकां वसमानस्य साम्बशापादिकं शृणु ॥ १ ।
सुखासीनस्य कृष्णस्य पुत्रदारसुतैः सह ।
आगतो नारदस्तत्र यदृच्छागमनो मुनिः ॥ २ ।
पाद्यमर्घ्यञ्चासनञ्च मधुपर्कं सभाजनाम् ।
गाञ्च दत्त्वा यथान्यायं कृतं संवादमुत्तमम् ॥ ३ ।
एकान्ते प्राप्य कृष्णञ्च विप्रमिमकरोत्प्रभुः ।
कृष्ण किञ्चिद्वक्तुकामस्तत्त्वं शृणु महामते* ॥ ४ ।
शाम्बनामा तव पुत्रो† युवा वाग्मी तु रूपवान् ।
स्पृहणीयः सदा कान्तः स्त्रीजनस्य सुरेश्वर ॥ ५ ।
एतास्तु वरनार्य्यो वै क्रीड़ार्थं हि पुरेश्वरः ।
देवयोन्यो ददुस्तुभ्यं सहस्राणि च षोड़श ।
शाम्बं दृष्ट्वा च सर्व्वासां क्षुभ्यते च मनः प्रभो ॥ ६ ।
एतत्तु ब्रह्मलोके च गीयते दैवतैः स्वयम् ।
त्वत्प्रियार्थं समायातः कथितुं‡ ते सुरोत्तम ॥ ७ ।
श्रूयते चार्थविद्रूपः श्लोको द्वैपायनेन वै ।
कृतिमतः स्वर्गवासो नरकस्तद्विपर्य्ययात् ॥ ८ ।

* वदामि ते इति (ग) । † अत्र छन्दोदोषः, तव सुत इति कृते तु न दोषः ।
‡ कथयितुमिति साधु ।

पुण्यरूपन्तु यत्कर्म्म दिशां भूमिञ्च संस्पृशेत् ।
यावत्स शब्दो भवति* तावत्पुरुष उच्यते ॥ ९ ।
पुरुषस्याविनाशो च कथ्यते शाश्वतोऽव्ययः ।
नरके पुरुषः प्रोक्तो विपरीतो मनीषिभिः ॥ १० ।
तस्माच्छाम्बं समाहूय तथा देवीगणञ्च तम् ।
आसनेषूपविष्टानां तासां चाभञ्च तत्त्वतः ।
लक्षयिष्याम्यहं सर्व्वं सत्यञ्चामत्यमेव च ॥ ११ ।
तावत्सभ्यासनान्येव स्वास्तीर्थ्ये च विभागशः ।
सर्व्वास्ताम् समाहूय आसने चोपवेश्य च ।
पश्चाच्छाम्बः समायातस्तस्याग्रे करसम्पुटम् ।
कृत्वा स्थितो मुहूर्त्तन्तु किमाज्ञापयसि प्रभो ॥ १२।१३ ।
दृष्ट्वा रूपमतीवास्य साम्बस्यैव वरस्त्रियः ।
चुक्षुभुः सकला देव्यः कृष्णस्यैव तु पश्यतः ॥ १४ ।
उत्तिष्ठत प्रियाः सर्व्वा गच्छत स्वं निवेशनम् ।
कृष्णवाक्यात्तदा देव्यो जग्मुः स्वं स्वं निवेशनम् ॥ १५ ।
शाम्बस्तत्रैव संतस्थौ वेपमानः कृताञ्जलिः ।
स कृष्णो नारदं वीक्ष्य लज्जयावाङ्मुखोऽभवत् ॥ १६ ।
कृष्णस्तु कथयामास नारदाय सविस्तरम् ।
स्त्रीस्वभावं चरित्रञ्च आश्चर्य्यं पापकारकम् ॥ १७ ।
क्षणं नास्ति रहो नास्ति नास्ति कृत्ये विभावना ।

---

* भवितेति (ग) ।

तेन नारद नारीणां सतीत्वमुपजायते ॥ १८ ।
एकवामास्तथा गौरी श्यामा वा वरवर्णिनी ।
मध्यगता प्रगल्भा च वयोऽतीतास्तथा स्त्रियः ।
सुरूपं पुरुषं दृष्ट्वा चरन्ति मुनिसत्तम ।
स्वभाव एष नारीणां शाम्बस्य शृणु कारणम् ॥ १९।२० ।
अतीव मानी तेजस्वी धार्म्मिकोऽतिगुणान्वितः ।
रूपकारणमुद्दिश्य गतः चोभङ्गथच्चन ॥ २१ ।
नारदस्त्वेवमेवञ्च प्रतिपूज्य हरेर्वचः ।
अन्तरञ्च उवाचेदं शाम्बशापकरं तथा ॥ २२ ।
यथा एकेन चक्रेण रथस्य न गतिर्भवेत् ।
पुरुषास्वादनाच्चैवं चरन्ति सततं स्त्रियः ।
पुंसः सुदृष्टिपातेन कृतकृत्या भवन्ति ताः ॥ २३ ।
प्रद्युम्नं वीक्ष्य नार्य्यस्तु लज्जामापुः सुपुष्कलाम् ।
शाम्बं* दृष्ट्वैव ताः सर्व्वा अनङ्गेन प्रपीड़िताः ।
उद्दीपनविभावोऽयं तासां मन्थादिकं यथा ।
तस्माच्छाम्बस्तु दुष्टात्मा तव स्त्रीणां विनाशकृत् ॥ २४।२५ ।
सत्यलोके प्रवादो यस्तव जातो दुरत्ययः ।
मया श्रुतस्तु लोकेभ्यो ब्रह्मर्षिभ्यो मुहुर्मुहुः ।
शाम्बत्यागात्प्रमार्ष्टुं त्वमयशः कीर्त्तिनाशकम् ।
कर्त्तुमर्हस्यमेयात्मन्मया ते कथितं हितम् ॥ २६।२७ ।

* क्वचित्पुस्तके साम्ब इति शब्दरूपं दृश्यते ।

इत्युक्त्वा वचनं तत्र नारदो मौनमास्थितः ।
कृष्णः शशाप शाम्बन्तु विरूपस्त्वं भविष्यसि ॥ २८ ।
शापयुक्तः स शाम्बस्तु कुष्ठयुक्तोऽभवत्क्षणात् ।
शरीरात्तु गलद्रक्तं पूतिगन्धयुतं सदा ।
पशुवत्कर्त्तितो यस्तु तद्वद्देहोऽस्य दृश्यते ॥ २९ ।
ततस्तु नारदेनैव शाम्बशापविनाशकः ।
समादिष्टो महाश्चर्म्म आदित्याराधनम्प्रति ॥ ३० ।
शाम्ब शाम्ब महाबाहो शृणु जाम्बवतीसुत ।
उदयाचले च पूर्व्वोक्ते* उद्यन्तन्तु विभावसुम् ।
नमस्कुरु यथान्यायं वेदोपनिषदादिभिः ।
त्वयोदितं रविः श्रुत्वा तुष्टिं यास्यति नान्यथा ॥ ३१।३२ ।

शाम्ब उवाच ।

अगम्यागमनात्पापाद्धशासो यः पुरुषो भवेत् ।
तस्य देवः कथं तुष्टो भविष्यति स वै मुने ॥ ३३ ।

नारद उवाच ।

भविष्यत्पुराणमिति† च तव वाक्याद्भविष्यति ।
ब्रह्मलोके पठिष्यामि ब्रह्मणोऽग्रे त्वहं सदा ।
सुमन्तुर्मर्त्त्यलोके च मनोः प्रकथयिष्यति ॥ ३४ ।

शाम्ब उवाच ।

कथम्पूर्व्वाचले गत्वा मांसपिण्डोपमः प्रभो ।

---

* अत्रैकाक्षराधिक्याच्छन्दोदोषः । † भविष्यं पुराणमिति चेति (ग) । अत्र छन्दोदोषः, 'भविष्याख्यं पुराणञ्च तव वाक्याद्भविष्यति' इत्येवं कृते तु न दोषः ।

त्वत्प्रसादान्महद्दुःखं प्राप्तस्त्वहमकल्मषः ॥ ३५ ।

नारद उवाच ।

यथोदयाचले देवमाराध्य लभते फलम् ।
मथुरायां तथा गत्वा षट्सूर्य्ये लभते फलम् ॥ ३६ ।
मध्याह्ने च तथा देवं फलप्रियमकल्मषम् ।
मथुरायाञ्च मध्याह्ने मध्यन्दिनरवौ तथा ।
अस्तङ्गते तथा देवं सर्व्वा राज्यफलं भवेत् ॥ ३७ ।
मथुरायां तथा पुण्यमुदयास्तं रवेर्जपम् ।
मध्याह्ने प्रयतो वाग्भिः* जपन्मुच्यतिं† पातकात् ॥ ३८ ।
कृष्णगङ्गोद्भवे स्नात्वा सूर्य्यमाराध्य यत्नतः ।
सर्व्वपापविनिर्मुक्तः कुष्ठादिभ्यो विमुच्यते ॥ ३९ ।

वराह उवाच ।

ततः शाम्बो महाबाहुः कृष्णाज्ञप्तो ययौ पुरीम् ।
मथुरां मुक्तिफलदां रवेराराधनोत्सुकः ॥ ४० ।
नारदोक्तेन विधिना शाम्बो जाम्बवतीसुतः ।
षट्सूर्य्यान् पूजयामास उदयन्तं दिवाकरम् ॥ ४१ ।
कृत्वा योगेन आत्मानं शाम्बस्याग्रे रविस्तदा ।
वरं वृणीष्व भद्रन्ते मन्नतख्यापनाय च ।
यस्तोषितो नारदेन तद्दत्स्व ममाग्रतः ॥ ४२ ।
शाम्ब पञ्चाशकैः श्लोकैर्वेदगुह्यपदाक्षरैः ।

---

* नाप्नोति । गो । † मुच्यते इति साधु ।

यः स्तुतोऽहं त्वया वीर तेन तुष्टोऽस्मि ते सदा ॥ ४३ ।
स्पृष्टो देवेन सर्व्वाङ्गे तत्क्षणाद्दीप्तसच्छविः ।
व्यक्ताङ्गावयवः साक्षाद्द्वितीयोऽभूद्रविर्यथा ॥ ४४ ।
मध्याह्ने याज्ञवल्क्यस्य यत्तं माध्यन्दिनीयकम् ।
अध्यापयच्छाम्बसहितो रविर्मध्यन्दिनोऽभवत् ॥ ४५ ।
वैकुण्ठपश्चिमे पार्श्वे तीर्थं माध्यन्दिनीयकम् ।
स्नात्वा माध्यन्दिनं दृष्ट्वा सर्व्वपापैः प्रमुच्यते ॥ ४६ ।
उदयास्ते ततो देवः शाम्बेन सहितो विराट् ।
सायाह्ने कृष्णगङ्गाया दक्षिणे संस्थितस्तदा ॥ ४७ ।
तत्र दृष्ट्वा तु सायाह्ने रविमस्तोदयं प्रभुम् ।
सर्व्वपापविशुद्धात्मा परं ब्रह्माधिगच्छति ॥ ४८ ।

वराह उवाच ।

एवं शाम्बस्य तुष्टेन मध्याह्ने तु नभस्तलात् ।
द्विधाकृतात्मयोगेन शाम्बकुष्ठमपोहत ।
शाम्बप्रख्याततीर्थे तु तत्रैवान्तरधीयत ॥ ४९ ।
शाम्बस्तु सह सूर्य्येण रथस्थेन दिवानिशम् ।
रविं पप्रच्छ धर्म्मात्मा पुराणं सूर्य्यभाषितम् ॥ ५० ।
भविष्यत्पुराणमिति ख्यातङ्कृत्वा पुनर्नवम् ।
शाम्बः सूर्य्यप्रतिष्ठाञ्च कारयामास तत्त्ववित् ॥ ५१ ।
उदयाचले च संस्थितो यमुनायाश्च दक्षिणे ।
मध्ये कालप्रियं देवं मध्याह्ने स्थाप्य चोत्तमम् ।
मूलस्थानं ततः पश्चादस्तमानाचले रविम् ।

स्थाप्य त्रिमूर्त्तिं शाम्बस्तु प्रातर्मध्यापराह्णिकम्।
मथुरायां तथा चैकं स्थाप्य शाम्बो वसुन्धरे।
स्वनाम्ना स्थापयामास पुराणविधिना स्वयम्॥५२।५३।५४।
एवं शाम्बपुरं नाम मथुरायां कुलेश्वरम्।
रथयात्रां तथा कृत्वा रविणा कथिता यदा।
माघमासस्य सप्तम्यां देवं शाम्बपुरं नराः।
रथयात्रां प्रकुर्व्वन्ति सर्व्वद्वन्द्वविवर्ज्जिताः।
गच्छन्ति तत्पदं शान्तं सूर्य्यमण्डलभेकदम्॥ ५५।५६।
एतत्ते कथितं देवि शाम्बशापसमुद्भवम्।
पापप्रशमनाख्यानं महापातकनाशनम्॥ ५७।

इति वराहपुराणे शाम्बवचनत्रयमध्येप्रतिष्ठानं नाम
सप्तसप्तत्यधिकशततमोऽध्यायः।

## अष्टसप्तत्यधिकशततमोऽध्यायः।

### वराह उवाच।

शत्रुघ्नेन पुरा घोरो लवणः सूदितो यथा।
द्विजानुग्रहकामार्थमसुरस्वरूपिणम्॥ १।
द्वादश्यां मार्गशीर्षस्य उपोस्य नियतः* शुचिः।

---

* उपस्यभियत• इति (क), (ख)।

य: करोति वरारोहे शत्रुघ्नचरितं यथा ।
द्विजानां प्रीणनङ्कृत्वा स्वधावपट्भोजनैः* । २ ।
लवणस्य वधादेव शत्रुघ्नस्य† शरीरके ।
हर्षस्तु सुमहाञ्जातो रामस्याक्लिष्टकर्म्मणः ॥ ३ ।
अयोध्याया: समायाती राम: सबलवाहनः ।
महोत्सवञ्च कर्त्तुं स शत्रुघ्नस्य महात्मनः ॥ ४ ।
सितामाग्रहणीं प्राप्य मथुरां लवणान्तकः ।
एकादश्यां सोपवासः स्नात्वा विश्रान्तिसंज्ञके ।
कृत्वा महोत्सवं तत्र कुटुम्बसहितः पुरा ।
तस्मिन् भुक्त्वा यथाकामं ब्राह्मणान्वै प्रतर्प्य च ॥ ५।६ ।
तस्मिन्नहनि तत्रैव यः कुर्य्यात्स महोत्सवम् ।
सर्व्वपापविनिर्मुक्तः पितृभिः सह मोदते ।
स्वर्गलोके चिरङ्कालं यावत्तिष्ठत्यन्त्यजन्मनः ॥ ७ ।

इति वराहपुराणे मथुरामाहात्म्ये शत्रुघ्नाख्याने रामतीर्थयात्रायाम्
अष्टसप्तत्यधिकशततमोऽध्यायः ।

* षड्भोजनैरिति ग.

† शत्रुघ्नेति सर्व्वत्र पाठः स चासङ्गत इव प्रतिभाति ।

## ऊनाशीत्यधिकशततमोऽध्यायः ।

धरण्युवाच ।

तवापराधाद्देवेश वर्ज्या ये वैष्णवेन च ।
निरपराधी मनुजः सापराधश्च जायते ॥ १ ।
कर्म्मणाचरणेनैवाकरणेन जुगुप्सितम् ।
तच्च पूजाफलं सर्व्वं नाशयेत तद्वदस्व मे ॥ २ ।

वराह उवाच ।

कर्म्मणा मनसा वाचा ये पापरुचयो जनाः ।
भक्षणं दन्तकाष्ठस्य राजान्नस्य तु भोजनम् ॥ ३ ।
मैथुनं शवसंस्पर्शं पुरीषोत्सर्गमेव च ।
सूतक्युदक्याप्रेक्षा च स्पर्शनं मेहनं तथा ॥ ४ ।
अभाष्यभाषणं क्रोधं पिण्याकस्य च भक्षणम् ।
रक्तपारक्यमलिनवस्त्रधारित्वनीलिजम् ॥ ५ ।
गुरोश्चालीकनिर्बन्धः पतितान्नस्य भक्षणम् ।
अभक्ष्यभक्षणञ्चैव तुन्दुलीयविभीतकम् ॥ ६ ।
अदानन्तु वराहस्य जालपादवराकयोः ।
भक्षणं देवतागारे सोपानत्कोपसर्पणम् ॥ ७ ।
तथैव देवपूजायां निषिद्धकुसुमार्च्चनम् ।
अनुत्सार्य्य च निर्म्माल्यं पूजा वीणान्धकारयोः ॥ ८ ।
पानं सुरायाः देवस्य अन्धकारे प्रबोधनम् ।
तावत्कर्म्मार्च्चने विष्णोरनमस्करणं तथा ॥ ९ ।

अपराधास्त्रयस्त्रिंशत्समाख्याता मया धरे ।
एभिर्युक्तस्तु पुरुषो विष्णुं नैव प्रपश्यति ॥ १० ।
दूरस्थो न नमस्कारं कुर्य्यात्पूजा तु राक्षसी ।
एकरात्रं द्विरात्रं वा त्रिरात्रं स्नानमेव च ।
सवासाः पञ्चगव्याशी मलसंवत्सकं क्रमात्* ॥ ११ ।
नीलीरक्तापनोदार्थं गोमयेन प्रघर्षणम् ।
प्राजापत्येन शुद्धिः स्यान्नीलीवस्त्रस्य धारणात् ॥ १२ ।
चान्द्रायणद्वयं कुर्य्याद्धरेः क्षयितमुत्तमम् ।
चान्द्रायणं पराकञ्च पतितान्नस्य भक्षणात् ॥ १३ ।
चान्द्रायणं पराकञ्च प्राजापत्यं तथैव च ।
गोप्रदानञ्च भोज्यञ्च अभक्षस्य च भक्षणे ।
उपवासस्तु पञ्चाहं पञ्चगव्येन शुद्ध्यति ॥ १४ ।
सोपानत्कश्चरेत्पादकृच्छ्रस्य द्विरभोजनम् ।
पुष्पाभावेऽर्चनं स्नानं देवस्पर्शञ्च कारयन् ।
अनिर्माल्यनमस्कारं स्नानं पञ्चामृतेन तु ॥ १५ ।
सुरापाने द्विजातीनां चान्द्रायणचतुष्टयम् ।
तथैव द्वादशाब्दन्तु प्राजापत्यत्रयञ्चरेत् ।
ब्रह्मकूर्चेन शुद्धिः स्याद्गोप्रदानत्रयेण च ॥ १६ ।
त्रयाणामेकरात्रेण पञ्चामृतनिषेवणात् ।
मुच्यते त्वपराधेस्तु तथा विष्णोः स्तवं पठन् ॥ १७ ।

* मलवस्त्रान्तिकं क्रमादिति (ग) ।

एतत्ते कथितं गुह्यद्भिमेतच्छ्रोतुमिच्छसि ।
पुनः पुनरुवाचेदं देवदेवो जनार्द्दनः ।
मोहङ्गता तु शृण्वतं* नष्टसंज्ञेव लक्ष्यते ॥ १८ ।
मुहूर्त्तमात्रे सा देवी संज्ञां प्राप्येदमब्रवीत् ।
अपराधे कृते देव सूतकी हि प्रजायते ।
प्रायश्चित्तानि भूरीणि कृतानि तु नरैः सदा ।
तेन मे मनसो मोहो दुःखदो यः समभ्ययात् ॥ १९।२० ।
अस्ति कश्चिदुपायोऽत्र येन त्वं नृप तुष्यसि ।
पूजितः सफलश्चासि अपराधविशोधनम् ॥ २१ ।

वराह उवाच ।

संवत्सरस्य मध्ये तु तीर्थे सौकरवे मम ।
कृतोपवासः स्नानेन गङ्गायां शुद्धिमाप्नुयात् ।
मथुरायां तथाप्येवं सापराधः शुचिर्भवेत् ॥ २२ ।
अनयोस्तीर्थयोरेवं यः सेवेत सत्नरः ।
सहस्रजन्मनि जातानपराधाञ्जहाति सः ॥ २३ ।
स्नानात्पानात्तथा ध्यानात्कीर्त्तनाद्धारणात्तथा ।
श्रवणान्मननाच्चैव दर्शनाद्याति पातकम् ॥ २४ ।

पृथिव्युवाच ।

मथुरा सूकरश्चैव द्वावेतौ तव वल्लभौ ।
विशिष्टमनयोः किञ्च सत्यं ब्रूहि सुरेश्वर ॥ २५ ।

* प्रणीतीति वाच ।

वराह उवाच ।

पृथिव्यां यानि तीर्थानि आसमुद्रसरांसि च ।
कुब्जाम्रकं प्रशंसन्ति सदा मद्भावभाविताः ॥ २६ ।
तस्मात्कोटिगुणङ्गुह्यं सौकरं तीर्थमुत्तमम् ।
एकाहं मार्गशीर्षास्य द्वादश्यां सितवैष्णवम् ॥ २७ ।
गङ्गासागरिकं नाम पुराणेषु च पठ्यते ।
गुह्याद्गुह्यतरङ्गुह्यं माथुरं मम मण्डलम् ।
फलम्परार्द्धगुणितं सिततीर्थात्र संशयः ॥ २८ ।
अटित्वा सर्व्वतीर्थानि कुब्जाम्रादीनि नित्यशः ।
अर्घा* विनश्यते चिप्रं मथुरामागतस्य च ॥ २९ ।
विश्रमणाच्च विश्रान्तिस्तेन संज्ञा वरा मम ।
सारात्सारतरं स्थानं गुह्यानां गुह्यमुत्तमम् ।
गतिरन्वेषणीयानां मथुरा परमा गतिः ॥ ३० ।
कुब्जाम्रके सौकरे च मथुरायां विशेषतः ।
विना सांख्येन योगेन मुच्यते नात्र संशयः ॥ ३१ ।
या गतिर्योगयुक्तस्य ब्राह्मणस्य मनीषिणः ।
सा गतिस्त्यजतः प्राणान्मथुरायां न संशयः ॥ ३२ ।
एतत्ते कथितं सारं मया सत्येन सुव्रते ।
न तीर्थं मथुरायाश्हि न देवः केशवात्परः ॥ ३३ ।

इति वराहपुराणे अपराधप्रायश्चित्तमाहात्म्यं नाम
ऊनाशीत्यधिकशततमोऽध्यायः ।

---

* अघम् इति (ग) ।

# अशीत्यधिकशततमोऽध्यायः ।

वराह उवाच ।

पुनरन्यत्प्रवक्ष्यामि पितृणां तृप्तिकारकम् ।
भुवतीर्थे पुरा वृत्तं तच्छृणुष्व वसुन्धरे ॥ १ ।
अस्यां पुर्य्यान्तु राजासीद्धार्म्मिकः सत्यविक्रमः ।
चन्द्रसेनेति नाम्ना च यज्वा दानहिते रतः ॥ २ ।
तस्य नार्य्यः शतं द्वे तु कुलशीलवयोयुते ।
तासां मध्येऽधिका चैका पतिव्रतपरायणा ।
नाम्ना चन्द्रप्रभा चैव वीरसूर्वीरपुत्त्रका ॥ ३ ।
तस्या दासीशतस्यैका दासी नाम्ना प्रभावती ।
तस्याः परिग्रहास्त्वेकोद्दिष्टाचारविहीनकाः ॥ ४ ।
तस्याः पितृगणाः सर्व्वे अतीताः शतसंख्यया ।
स्वदोषैः पतिताः सर्व्वे नरकं प्रति भामिनि ।
सङ्करो नरकायैव कुलघ्नानां कुलस्य हि ॥ ५ ।
कदाचिदपि तस्यार्थो भ्रष्टः प्राणिजनो महान् ।
सूक्ष्मः प्राणिसमूहो हि भुवतीर्थे तदापतत् ॥ ६ ।
कृष्णरूपाश्चङ्क्रमन्तो मशकाकारसन्निभाः ।
दृष्टास्ते ऋषिणा तत्र त्रिकालज्ञेन भाविनि* ।
षष्ठान्नकालभोक्त्रा च पयोव्रतमहात्मना ॥ ७ ।

* भामिनि इति पु॰ग॰ ।

मौनव्रतेन सा देवि सूर्य्यमत्या स्थितेन च ।
तस्मिन् चणे* न च कृतं व्रतजप्यं विमोहनात् ।
कृपया परिभूतस्य कौतुकेन निरीचता ।
चतुर्थांशावशेषश्च दिवसः पर्य्यवर्त्तत ॥ ८।९ ।
एके तत्र समायान्ति पितरो नभसोऽवनिम् ।
अन्ये पूर्व्वोत्तराद्देशाद्दचिणात्पश्चिमात्तथा ॥ १० ।
केचित् स्वभावतो हृष्टाः केचित्पुत्रैः स्वधाकृताः ।
हृष्टास्तुष्टाः सुपुष्टाङ्गा गच्छन्तो दिवि सङ्घशः ॥ ११ ।
तपस्विनः स्नानरता कृशाचामशरीरिणः ।
वस्त्रालङ्कारपुष्टाङ्गा हृष्टा गच्छन्ति सङ्घशः ॥ १२ ।
तथाऽपरे नग्नदेहाः सुपुष्टा यान्ति तत्र वै ।
अन्ये यथागतं यान्ति आयान्ति पुनरेव हि ॥ १३ ।
यानैरुच्चावचैः केचिन्नानारूपैः खगैस्तथा ।
समागच्छन्ति गच्छन्ति ईरयन्नाशिषो मुदा ॥ १४ ।
केचिद्यथागता यान्ति क्रुद्धाः शापप्रदायिनः ।
निर्गतोदरमुद्धाय्य गच्छन्ति सुविमानिताः ।
सम्मानितास्तथान्ये तु पितरः श्राद्धपूजिताः ॥ १५ ।
महोत्सवमिदालच्य विस्मितो मुनिरुत्थितः ।
गते पितृगणे पुत्राः सकलत्रा गृहान् ययुः ।
निर्ज्जनं भुवतीर्थन्तु हृतवेलमिवाभवत् ॥ १६ ।

---

* तस्मिन्दिने इति (ग) ।

तत्रैकान्ते कृशाङ्गोऽथ क्षुत्क्षामो गतिविह्वलः।
वेपथुः कोटराक्षश्च पृष्ठलग्न इवोदरः।
जरच्चर्म्मास्थिरुक्त्वस्तो* जृम्भमाणो भृशं कृशः।
न वाचा श्रूयते तस्य क्षुद्रपक्षिभिरीर्व्वोदिता॥ १७।१८।
को भवान्विकृताकारो वेष्टितो मशकैर्बहु।
न गच्छसि यथास्थानमागतस्तु निरुद्यमः।
यथावत्पृच्छते मह्यं कथयात्मविचेष्टितम्॥ १९।
ममाद्य नैत्यकं कर्म्म तीर्थेऽस्मिन्नश्यतेऽनिशम्।
इमानुच्चावचाञ्जन्तून्दृष्ट्वा मां मोह आविशत्॥ २०।
त्वां दृष्ट्वैतत्स्वरूपञ्च क्रिया मे सा गता त्वयि।
विस्रब्धः कथयास्माकं करोमि च हितं तव॥ २१।

जन्तुरुवाच।

एतन्निमित्तमद्यैव पितॄणां तृप्तिकारकम्।
ध्रुवतीर्थे च यः श्राद्धं पुनः कुर्य्यात्तिलोदकम्।
तिलतृप्ता दिवं यान्ति पितरस्तेन पुत्रिणः॥ २२।
सोऽहं स्वान्तरिकादत्तस्तृप्त्यर्थस्तु बुभुक्षितः।
योनिसङ्करदोषेण नरकं समुपाश्रितः।
आशापाशशतैर्बद्धः शतवर्षैरिहागतः।
अगतिर्गमने मे स्यात्ते त्रितापैः समरागतः॥ २३।२४।
सन्तानैः पुष्टवपुषो दत्तश्राद्धैः कृतोदकैः।

---

* रुक शब्द इति (ग)।

बलयुक्ता ययुः स्वर्गं निर्बलस्य कुतो गतिः ॥ २५ ॥
येषां सन्ततिरव्यग्रा तिष्ठती च प्रजावती ।
ते स्वधापूजितैः पुत्त्रैर्गच्छन्ति परमाङ्गतिम् ॥ २६ ॥
अद्य रात्रस्तु पितरश्चन्द्रसेनस्य पूजिताः ।
दृष्टास्त्वया त्रिकालज्ञ दिव्यदृष्ट्या दिवङ्गताः ॥ २७ ॥
ब्राह्मणानाञ्च वैश्यानां शूद्राणां पितरस्तथा ।
प्रतिलोमानुलोमानां शूद्राणां श्राद्धकर्म्मिणाम् ।
सर्व्वेषाञ्च त्वया दृष्टं येषां सन्ततिरव्यया ॥ २८ ॥
एवं पृष्टः स विप्रेण कथयामास कारणम् ।
पुनः पप्रच्छ तं जन्तुः कौतूहलसमन्वितः ॥ २९ ॥
तवापि सन्ततिस्तात नास्ति दैवाद्ययाचिता* ।
यदि कश्चिदुपायोऽत्र मया तव हितैषिणा ।
वद सर्व्वङ्करिष्यामि† यदि शक्यं भवेन्मम ॥ ३० ॥
ततः स कथयामास दुःस्थः पितृगणैर्वृतः ।
इमे ये मम देहे तु भवन्ति मशकाः कृशाः ।
सन्तानप्रत्ययादेते मम देहं समाश्रिताः ।
तन्तुमन्त्वमहं तेषां मम तन्तुमयी सकृत् ॥ ३१।३२ ॥
अस्ति नगर्य्यां मध्ये तु चन्द्रसेनस्य वेश्मनि ।
महिष्याः प्रेषणे नित्यं दासी नाम्ना प्रभावती ॥ ३३ ॥

* यथोदिता इति ग । † करिष्यते इति कर्म्मणि प्रयोगः साधुः, अन्यथा मयेति कर्मपदस्यानन्वय ।

तस्या दासी कर्म्मकरी विरूपनिधिनामतः।
अस्माकं सन्ततेस्तन्तुस्तस्या आढकते वयम्॥ ३४।
आशया बद्धहृदयाः श्राद्धतर्पणहेतवः।
स्थिता एतावदेवन्तु कालं यास्यामहेऽम्बुधौ।
नरके त्वप्रतिष्ठे तु निराशाः स्वेन कर्म्मणा।
श्रुत्वैतस्य त्रिकालज्ञो मोहाविष्टोऽब्रवीदिदम्॥ ३५।३६।
कथं निकृष्टयोन्या यद्दत्तञ्चापद्यते हविः।
विधिरत्र कथं तस्या येन यूयं सपुत्रिणः॥ ३७।
प्रोवाच स त्रिकालिज्ञं ज्ञानक्लिष्टं कृपान्वितम्।
पूर्व्वकर्म्मविपाकेन यां यां गतिमधोमुखीम्।
ऊर्द्धां याञ्चापि पितरः पुत्रिणः पुत्रमीहते॥ ३८।
श्राद्धं पिण्डोदकं दानं नित्यनैमित्तिकं तथा।
नान्या गतिः पितृणां स्यात्पितरस्तेन पुत्रिणः॥ ३९।

इति स्मृतिः।

अपि स्यात्सकुलोऽस्माकं यो नो दद्याज्जलाञ्जलिम्।
नदीषु बहुतोयासु शीतलासु विशेषतः। ४०।
विशेषात्तीर्थमध्ये तु तिलमिश्रं जलाञ्जलिम्।
रौप्यजुष्टजलेनाथ* नाभिदघ्ने जले स्थितः।
दर्भपाणिस्त्रिस्त्रिगोत्रे पितृनाम समुच्चरन्।
नाम शर्म्म तृप्यत्वेवं स्वधाकारमुदाहरन्॥ ४१।४२।

---

* रौप्यस्पृष्टजलेनाथेति (ग)।

आद्रानेकाञ्जलिर्देई तु निस्रोते तर्पणे स्मृता: ।
देवर्षिपितृणाञ्चैव क्रमाज्ज्ञेयं विचक्षणै: ॥ ४३ ।
तृप्यध्वमिति चान्ते वै मन्त्रं मन्त्रप्रतिक्रिया: ।
उदीरतामङ्गिरस आयन्तु न इत्युत ॥ ४४ ।
पित्रे प्रथमतो दद्यान्मात्रे दद्यात्तथा चरन् ।
गोत्रं माता नाम देवो तृप्यत्वेवं स्वधोच्चरन् । ४५ ।
एवं मातामह: शर्म्मा गोत्रे पितामहस्तथा ।
ऊर्द्धं पितृभ्यो ये चेह ते पितर इहोच्यते ॥ ४६ ।
मधुवातेत्यृचं तद्वत्पृथ्वेत्रमुदीरयेत् ।
पितामहीं प्रपितामहीं मातृवत्पतिना सह ॥ ४७ ।
एवं मातामहानाञ्च पूर्व्ववत्क्रमशो बुध: ।
नमो व इति मन्त्रेण प्रत्येकं त्रितयं त्रिषु ।
गोत्रोच्चारं प्रकुर्व्वीत अमूर्य्यान्नाशयामहे ॥ ४८ ।
गोत्राय पित्रे महाय शर्मणे चेदमासनम् ।
गोत्रायै मात्रे मह्यै तु देव्यै चासनकर्म्मणि ।
गोत्र: पितामह: शर्म्मा गोत्रा मातामही मही ।
अर्घपात्रसङ्कल्पे तु पिण्डदानेऽवनेजने ।
गोत्रस्य पितुर्महस्य शर्म्मणोक्तस्य कर्म्मणि ।
गोत्रायै मातुर्महायै देव्याश्चाक्षयकर्म्मणि ॥ ४९।५०।५१ ।
आवाहने द्वितीया च चतुर्थी पूज्यकर्म्मणि ।
प्रथमा चाशिषि प्रोक्ता दत्तस्याक्षयकारका ।
आवपत्रे तथा षष्ठी अक्षय्यासनयो: स्मृता ।

पितुरक्षय्यकाले तु पितॄणां दत्तमक्षयम् ॥ ५२।५३ ।
एवमेतत्तु पुत्रेण भक्तिपूर्व्वं द्विजेन तु ।
वार्य्यपि श्रद्धया दत्तं तदानन्त्याय कल्पते ॥ ५४ ।
श्रद्धया ब्राह्मणेनैव यथा श्राद्धविधिक्रिया ।
कृत्वा श्राद्धं तु पितरो हृष्टा मुमुदिरे सदा ॥ ५५ ।
जीषमाम्ब त्रिकालज्ञ गच्छामो नरकाय वै ।
पूर्व्वकर्म्मविपाकेन चिरन्तु वसितुं मुने ॥ ५६ ।
त्रिकालज्ञ उवाच ।
ये मया चागता दृष्टा तीर्थेऽस्मिन्पितरोऽथ वै ।
बहवः स्वस्थमनसो बहवो दुःखमानसाः ॥ ५७ ।
पुत्रदत्तं तथा श्राद्धं जग्रासोहिग्नरूपिणः* ।
मौनेन गच्छतां तेषाङ्किमेतद्वद निश्चयम् ॥ ५८ ।
अगस्तिरुवाच ।
अत्र यन्निश्चयं श्राद्धे पुत्रस्य विफलम्भवेत् ।
नरस्य करणङ्किञ्चित्तन्मे निगदतः शृणु ॥ ५९ ।
अदेशकाले यद्दत्तं विधिहीनमदक्षिणम् ।
अपात्रे मलिनं द्रव्यं महत्पापाय जायते ॥ ६० ।
अश्राद्धेयमपात्रेयं दुष्टप्रेक्षितमीक्षितम् ।
तिलमन्त्रकुशैर्हीनमासुरं तद्भवेदिति ॥ ६१ ।
वैरोचनाय देवेन वामनेन विभूतये ।

* जग्रासेत्यैकवचनमार्षं, जग्रसुरिति साधु ।

सच्छूद्रस्य च श्राद्धस्य फलं दत्तं पुरा किल ॥ ६२ ।
तथा दाशरथी रामो हत्वा राक्षसमीश्वरम् ।
रावणं सगणङ्घोरं तुष्टेन सह सीतया ।
श्रुत्वा भक्तिं च राक्षस्यास्त्रिजटायास्त्रिलोककृत् ।
सीतावाक्यप्रतुष्टेन तस्यै प्रादाद्वरं विभुः ॥ ६३ ।
अशुचीनि गृहाण्येव तथा श्राद्धहवींषि च ।
क्रोधाविष्टानि दानानि विधिपात्रयुतानि च ।
पादशौचमनभ्यङ्गप्रतिश्रयमभोजनम् ।
त्रिजटे त्वत्प्रयच्छामि यच्च श्राद्धमदक्षिणम् ॥ ६४।६५ ।
तथैव शम्भुना दत्तं नागराजाय भक्तितः ।
वासुकये सुतुष्टेन तन्मे निगदतः शृणु ॥ ६६ ।
अनुद्याप्य व्रतं जन्तुर्व्यापिकी सकला क्रिया ।
यज्ञस्य योचिता देया दक्षिणा नाददद्द्विजः ।
वृथाग्रपथकारी यो देवब्राह्मणसन्निधौ ।
अश्रोत्रियाणि श्राद्धानि क्रिया मन्त्रैर्विहीनका ।
सरात्रिवाससा स्नानं यथासत्त्वस्वरूपतः ।
यः शिष्यो न नमेद्भक्त्या गुरुं ज्ञानप्रदायकम् ।
तथैव प्राकृतं धर्म्मभये गेयं करिष्यतः ।
सर्व्वं तुभ्यं मया दत्तं नागराजाय वार्षिकम् ॥६७।६८।६९।
इत्येतद्वै पुराणेषु सेतिहासेषु पठ्यते ।
तद्वद्लीककरणं श्राद्धं दानं व्रतं तथा ।
नोपतिष्ठति तेषां वै तेन नम्नादयस्त्वमी ॥ ७० ।

मुषिताच्छिद्रकरणैस्तद्दानफलभोक्तृभिः।
यथा गतास्तथा ते तु श्राद्धे कृतास्तु निष्फलाः।
मौनव्रतधरा यान्ति पुनः प्राप्त्यर्थहेतवे।
एवमेतन्महाप्राज्ञ यन्मात्त्वं परिपृच्छसि॥ ७१।७२।

त्रिकालज्ञ उवाच।

षट्काले भोजनं त्वद्य नाहं भोक्तुमिहोत्सहे।
यावत्तृप्तिर्न ते भूयाद्दृष्ट्वा हन्त स्थिरो भव।
तावत्कालं प्रतीक्षस्व यावदागमनं मम॥ ७३।
अस्मिंस्तीर्थे सदैवाहं दिवारात्रमतन्द्रितः॥ ७४।
सोऽहमद्य व्रतं त्यक्त्वा तव कारुण्यपूरितः।
गत्वाहमानयिष्यामि त्वयोक्तां तां वरां स्त्रियम्।
अनया कारयिष्यामि श्राद्धन्तु विधिना सह॥ ७५ ७६।
एवमुक्त्वा स त्रिकालज्ञी मौनवाक् संययौ द्रुतम्।
राजा समीपगं दृष्ट्वा अकस्मादागतं ऋषिम्।
क्षित्यास्तले विलुलित*पादौ कृत्वा तु मूर्द्धनि॥ ७७।
धन्योऽस्म्यनुगृहीतोऽस्मि यद्भवान्गृहमागतः।
सदा यत्नं करिष्यामि गृहमागमने तव।
अद्य मे सफलं जन्म यद्भवांस्त्वमिहागतः॥ ७८।
इदम्पाद्यमिदञ्चार्घ्यं मधुपर्कमिमाञ्च गाम्।
गृहाण मुनिशार्दूल येनाहं शान्तिमाप्नुयाम्॥ ७९।

* क्षित्यामस्मि विलुलितौ पादौ कृत्वेति ग।

तस्य तत्प्रतिगृह्याशु स मुनिस्त्वरितोऽब्रवीत् ।
मदीयागमने राजन् शृणु त्वत्कारणं महत् ।
तच्छ्रुत्वा कुरु तत्सर्व्वं येनाहं तोषितोऽभवम् ॥ ८० ।
एवमुक्तस्तु राजर्षिरब्रवीत्तं तपोधनम् ।
किं तद्वद यथा कार्य्यं येन सिद्धिर्भवेदिदम् ॥ ८१ ।

त्रिकालज्ञ उवाच ।

या सा ते राजमहिषी तामानय वराननाम् ।
तस्या दासी वरारोहा प्रभावत्यपि विश्रुता ।
सापि देव्या तु सहिता आयातु मम सन्निधौ ॥ ८२ ।
ततश्चान्तःपुराद्देवी सदासी तत्र चागता ।
क्षितौ विलुलिता साध्वी प्रणाममकरोदृषेः ॥ ८३ ।
समासीनाश्च विप्रेन्द्रः प्रोवाच विनताननाम् ।
ध्रुवतीर्थे मयाश्चर्य्यं यद्दृष्टङ्कथयामि वः ॥ ८४ ।
ये केचित्पितरो लोके लोकानां सर्व्वतः स्थिताः ।
ते पूजिताः श्राद्धकृद्भिः पुत्रैः प्रीता दिवं ययुः ॥ ८५ ।
एको वृद्धो नरस्तत्र सूक्ष्मप्राणिभिरावृतः ।
क्षुत्क्षामदेहः शुष्कास्यो निर्गतोदरसूक्ष्मदृक् ।
निराशो गन्तुकामश्च पुनः स निरयेऽशुचौ ॥ ८६ ।
कारुण्यात्स मया पृष्टः कस्त्वं ब्रूहि किमिच्छसि ।
तेनात्मकर्म्मजनितं मम कर्म्म निवेदितम् ॥ ८७ ।
ततस्तत्रैव तच्छ्रुत्वा तस्य कारुण्ययन्त्रितः ।
तव दास्याश्च या दासी तस्य तन्तुः किलोच्यते ।

नाम्ना विरूपकनिधिस्तामानय वरानने ॥ ८८ ।
इति श्रुत्वानवद्याङ्गी तस्या आनयनेऽत्वरत्* ।
प्रेषयामास सर्व्वत्र तस्या आनयने बहून् ॥ ८८ ।
सा चैकान्ते च दिवसे पानमांसरता सदा ।
पुरुषेण सहासीना शय्यायां मदविह्वला ।
सेवकैः सा करे गृह्य† आनीता मुनिसन्निधौ ॥ ९० ।
तां दृष्ट्वा मदिरामत्तां स मुनिः प्राह धर्म्मवित् ।
प्रत्ययार्थन्तु तस्या वै मुनिः प्राह क्रियाम्प्रति ॥ ९१ ।
पितॄणाञ्च कृते दत्तं दानं वारि न वा स्वधा‡ ।
तर्पणञ्चापि नो दत्तं पितॄणाञ्चातिमुक्तिदम् ॥ ९२ ।
सा नैवमित्युवाचेदं तं मुनिं संश्रितव्रतम् ।
न जानामि पितॄन् स्वान्वै क्रियां कार्य्यञ्च वै विभो ॥ ९३ ।
इति ब्रुवाणान्तां दासीं त्रिकालज्ञोऽभ्युवाच ह ।
पत्नी च मथुरेशस्य नृपः सपुरसज्जनः ।
सर्व्वे द्रक्ष्यथ माहात्म्यं पितॄणां सन्ततेः फलम् ॥ ९४ ।
सकौतुका महाभागाः श्राद्धदानञ्च चैव ह ।
नगरस्थापि ते§ सर्व्वे ब्राह्मणा भावपूजिताः ।
राज्ञानीतास्तत्र तीर्थे श्राद्धार्थं मुनिना सह ॥ ९५ ।
लोकैः परिवृतो राजा ध्रुवतीर्थं गतः प्रभुः ।
तत्र दृष्टः स वै जन्तुर्नष्टतन्तुर्विचेतनः ।

* अत्वरतेति साधु । † गृहीत्वेति साधु । ‡ त्वया पितॄणाञ्च कृते दत्तं न वा वारि न वा स्वधा इति (ग) । § नगरस्था अपीति साधु ।

मशकैर्वेष्टितः क्षुद्रैः क्षुधया चातिपीड़ितः ॥ ९६ ।
उवाच तं तदा विप्रोऽभवत्सस्नानजाः स्त्रियः ।
आनीतास्तव पुष्ट्यर्थं यदिच्छसि तथा कुरु ॥ ९७ ।

अगस्त्य उवाच ।

स्नात्वैषा ध्रुवतीर्थे तु ब्रह्ममार्गात्क्रमेण च ।
करोतु तर्पणञ्चास्मिन् पूर्व्वोक्तविधिना त्वियम् ॥ ९८
ततः श्राडं सरोप्यञ्च सवस्त्रं सविलेपनम् ।
अर्च्चित्वा पिण्डदानेन करोत्वेषा च भक्तितः ॥ ९९ ।
अत्रैव भवतः सर्व्वं मासोत्तथ सुखान्वितम् ।
कारयित्वा यथासर्व्वं श्राडदानं हि तन्तुना ॥ १०० ।
तस्य तद्वचनं श्रुत्वा राजपत्नी यशस्विनी ।
कारयामास दास्या वै श्राडं सुबहुदक्षिणम् ॥ १०१ ।
पट्टवस्त्रं तथा धूपकर्पूरागुरुचन्दनम् ।
तिलोत्तरं तथान्नञ्च बहुरूपं सपिण्डकम् ॥ १०२ ।
कृते श्राडे पिण्डदाने स जन्तुः सुकृती यथा ।
दिव्यकान्तिरदीनात्मा तथा भूतैः पृथक् पृथक् ।
वेष्टितः शुशुभेऽतीव दीक्षितोऽवभृथे यथा ॥ १०३ ।
स्वर्गागतैर्विमानैश्च छादितं तत्र वै नभः ।
तेषां मशकगात्राणां सुगात्राणां सुरूपिणाम् ॥ १०४ ।
ततस्तुष्टमना जन्तुर्विमानं प्रेक्ष्य चागतम् ।
गन्तुं स्वर्गमुवाचेदं त्रिकालज्ञं मुनिं नृपम् ॥ १०५ ।
शृण्वन्तु वचनं सर्व्वे मदीयं पितृतुष्टिदम् । ०

तीर्थानि सरितः श्रेष्ठाः पर्व्वताश्च सरांसि च।
कुरुक्षेत्रं गया चैव स्थानान्यायतनानि च।
पितृणां मुक्तिदं चान्यन्न भूतं न भविष्यति॥ १०६।१०७।
आषाढ्याः पञ्चमे पक्षे प्रतिपत्प्रभृतिस्तथा।
शुक्लप्रतिपदान्तञ्च तीर्थम्प्राप्य ससत्वराः।
पितरः श्राद्धपिण्डोदा आश्विने ध्रुवमास्थिताः।
कृत्वा प्रेतपुरीं शून्यां स्वर्गं पातालमेव च।
ईहमानाः स्वकं पुत्रं गोत्रतन्तुमथानुजम्॥ १०८।१०९।
कन्यां गते सवितरि यः श्राद्धं सम्प्रदास्यति।
तर्पणं ध्रुवतीर्थे ते पितृणां षोड़शान्तरे।
सुतृप्ताः स्मो वयं शश्वद्यास्यामः परमाङ्गतिम्॥ ११०।
एष एव प्रभावोऽत्र ध्रुवस्य कथितो मया।
दृष्टो भवद्भिः सर्व्वं यदस्माकं सुदुरत्ययम्।
दुस्तरं तरितं पापं त्वत्प्रसादान्महामुने॥ १११।
इति विश्राव्य वचनं राजानं सऋषिं जनान्।
राजपुत्रीं तथा दासीं स्वां सुतां शित्रमस्तु वः।
आरुह्य वरयानन्ते गताः स्वर्गं हृताः सुरैः॥ ११२।

वराह उवाच।

ततः स राजशार्दूलः सगणः परिवारकः।
दृष्ट्वा तीर्थस्य माहात्म्यं प्रणम्य ऋषिसत्तमम्।
प्रविष्टो नगरीं रम्यां संस्मरन्नित्यमच्युतम्॥ ११३।
एतत्ते कथितं भद्रे माहात्म्यं मथुराभवम्।

स्मरणाद्यस्य पापानि नश्यन्ते पूर्व्वजन्मनि ॥ ११४ ।
पठति श्रद्धयायुक्तो ब्राह्मणानाञ्च सन्निधौ ।
स पितॄंस्तर्पयेत्सर्व्वानभिगम्य गयागिरे ॥ ११५ ।
एतत्त्वयान्त्यव्रतिने न चाशुश्रूषवे तथा ।
कथनीयं महाभागे यश्च नार्च्चयते हरिम् ॥ ११६ ।
तीर्थानां परमं तीर्थं धर्म्माणां धर्म्ममुत्तमम् ।
ज्ञानानां परमं ज्ञानं लाभानां लाभमुत्तमम्* ।
कथनीयं महाभागे पुण्यान् भागवतान् सदा ॥ ११७ ।

सूत उवाच ।

एतच्छ्रुत्वा प्रभोर्वाक्यं धरणी विस्मयान्विता ।
पप्रच्छ मुदिता देवी प्रतिमास्थापनम्प्रति ॥ ११८ ।

इति वराहपुराणे भगवच्छास्त्रे मथुरावर्णनं नाम
अशीत्यधिकशततमोऽध्यायः ।

## एकाशीत्यधिकशततमोऽध्यायः ।

सूत उवाच ।

एवं श्रुत्वा परं स्थानं सा मही संशितव्रता ।
सर्व्वक्षेत्रविभागेषु यश्च वै परमो विधिः ।
संश्रुत्वा विस्मयाविष्टा प्रत्युवाच वसुन्धरा ॥ १ ।

* लाभानां लाभ उत्तम इति साधु ।

धरण्युवाच ।

अहो तेजप्रभावो वै यस्त्वया समुदाहृतः ।
यं श्रुत्वा देव तत्त्वेन जातास्मि विमतज्वरा ॥ २ ।
एकं मे परमङ्गुह्यं यन्नित्यं हृदि वर्त्तते ।
मम प्रीत्यर्थमखिलं तद्विष्णो वक्तुमर्हसि ॥ ॥ ३ ।
कथं तिष्ठसि काष्ठेषु शैलमृण्मयजेषु च ।
ताम्रे कांस्ये च रौप्ये च स्थापितस्तिष्ठसे* कथम् ॥ ४ ।
सौवर्णेषु च सर्व्वेषु स्थापितस्तिष्ठसे† कथम् ।
ब्रह्मचारी समासाद्य कथं तिष्ठसि माधव ।
दन्तरत्ने समासाद्य कथं सन्तिष्ठसे‡ भवान् ॥ ५ ।
कथं तिष्ठसि वा सेव्ये भित्तिसंस्थो जनार्द्दनः ।
भूमिसंस्थो महाभाग विधिदृष्टेन कर्म्मणा ॥ ६ ।
एवं धरावचः श्रुत्वा प्रत्युवाचादिशूकरः ॥ ७ ।

वराह उवाच

प्रतिमा यस्य कर्त्तव्या तदानीय वसुन्धरे ।
प्रतिमाङ्कारयेच्चैव लक्षणाढ्यां वसुन्धरे ॥ ८ ।
अर्च्चाशुद्धिं ततः कृत्वा प्रतिष्ठाप्य विधानतः ।
ततः सम्पूजयेद्देवि संसारभवमुक्तये ॥ ९ ।
तत्र काष्ठेषु मधुकमानीय च वसुन्धरे ।
कृत्वा तत्प्रतिमाञ्चैव प्रतिष्ठाविधिनार्च्चयेत् ॥ १० ।

* तिष्ठसीति साधु । † तिष्ठसीति साधु । ‡ सन्तिष्ठसे भवानिति साधु ।

तान्तु दद्यात्तु गन्धांश्च ये मया समुदाहृताः ।
कर्पूरं कुङ्कुमञ्चैव त्वचञ्चागुरुमेव च ।
रसञ्च चन्दनञ्चैव सिल्हकांश्मीरकं तथा ।
एतैर्विलेपनं दद्यादर्च्चितस्तु विचक्षणः ॥ ११।१२ ।
स्वस्तिकं वर्द्धमानञ्च श्रीवत्सकौस्तुभं तथा ।
विधानपूर्व्वकञ्चैव मङ्गल्यञ्चैव पायसम् ।
वर्त्तिस्तिलफलञ्चैव कर्म्मण्यानि न संशयः ॥ १३ ।
एवं सर्व्वं ततो दद्यात्पूजायां विहितं शुभम् ।
कर्म्मणा विधिदृष्टेन शुद्धो भागवतः शुचिः ।
प्राणायामं ततः कृत्वा इमं मन्त्रमुदीरयेत् ॥ १४ ।
योऽसौ भवांस्तिष्ठति सर्व्वयोगप्रधानतः ।
ससम्भ्रमं लोके सुप्रतीतस्तिष्ठ काष्ठे स त्वं भुवि ॥ १५ ।
एवं संस्थापनङ्कृत्वा काष्ठस्य प्रतिमासु च ।
पुनः प्रदक्षिणीकृत्य* शुद्धैर्भागवतैः सह ।
प्रज्वाल्य दीपं तत्रैव अर्च्चायाः सम्मुखं स्थितः ।
नोर्द्धं न तिर्य्यगीक्षेत कामक्रोधविवर्ज्जितः ।
नमो नारायणायेति इमं मन्त्रमुदीरयेत् ।
कुर्य्यात्संस्करणं तेषां विधिदृष्टेन कर्म्मणा ॥ १६।१७।१८
मन्त्रः—योऽसौ भवान् सर्व्वजनप्रवीर
गतिः प्रभुस्त्वं वससि ह्यमोघ ।

---

* प्रदक्षिणं कृत्वेति (ग) ।

अनेन मन्त्रेण च लोकनाथ
संस्थापितस्तिष्ठ सुवासुदेव ॥ १९ ।
सर्वामेवं ततः कृत्वा मम संस्थापनक्रियाम्।
पूज्या भागवताः सर्व्वे ये तत्र समुपागताः ॥ २० ।
गन्धमाल्यैरर्च्चयित्वा उपलेपैश्च* भोजनैः।
कुर्य्यात्संस्करणं तेषां विधिदृष्टेन कर्म्मणा ॥ २१ ।
एतत्कर्म्मविधानेन मधुकाष्ठस्य सुन्दरि।
धर्म्मसंस्थापनार्थाय एतत्ते कथितं मया ॥ २२ ।
ये त्वनेन विधानेन अर्च्चां काष्ठस्य स्थापयेत्।
ते न गच्छन्ति संसारं मम लोके च गच्छति† ॥ २३ ।

इति वराहपुराणे भगवच्छास्त्रे मधुकाष्ठार्च्चास्थापनं नाम
एकाशीत्यधिकशततमोऽध्यायः।

## द्वाशीत्यधिकशततमोऽध्यायः।

वराह उवाच।
पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
यथा तिष्ठामि शैलेषु प्रतिमायामितस्ततः ॥ १ ।
सुरूपाञ्च शिलां दृष्ट्वा निश्शल्यां सुपरीक्षिताम्।

---

* उपपन्नैश्चेति (ग)। † गच्छन्तीति साधु, तथा कृते तु छन्दोदोषः।

तत्र दत्तं रूपकारं शीघ्रञ्च विनियोजयेत् ॥ २ ।
शीघ्रमालिख्य तं तत्र क्षेत्रवर्त्तिकया नरः* ।
प्रदक्षिणां ततः कृत्वा पूजयेदक्षतादिभिः ॥ ३ ।
दीपकञ्च ततो दद्याद्बलिं दध्योदनेन च ।
नमो नारायणायेति उक्त्वा मन्त्रमुदीरयेत् ॥ ४ ।
मन्त्रः—योऽसौ भवान्सर्व्वजनप्रवीरः
सोमाग्नितेजा समतिप्रधानः ।
एतेन मन्त्रेण तु वासुदेव
प्रतिष्ठितः कीर्त्तिञ्च वर्द्धयस्व ॥ ५ ।
प्रवर अच्युतवराह जय जय वर्द्धस्व ।
अनेनैव तु मन्त्रेण कर्त्तव्यं यस्य यादृशम् ।
एवं रूपं ततः कृत्वा देवं नारायणम्प्रभुम् ।
ततो वै स्थापयेत्तत्र पूर्व्वाभिमुखमेव तु ॥ ६ ।
अहोरात्रमुपित्वैवं शुक्लवस्त्रेण भूषितः ।
शुक्लयज्ञोपवीती च कृत्वा वै दन्तधावनम् ।
सर्व्वगन्धोदकं गृह्य† इमं मन्त्रमुदाहरेत् ॥ ७ ।
मन्त्रः—योऽसौ भवांस्तिष्ठति सर्व्वरूप
मायात्वं सर्व्वजगत्स्वरूपम् ।
एतेन मन्त्रेण जगत्स्वरूप
सम्पूजितस्तिष्ठसि लोकनाथ ॥ ८ ।

---

* तथा वर्त्तिकया नर इति (क), ख । † गृहीत्वेति साधु ।

करणधारणप्रवध्यमुदाहरणमपराजितमजरामर　सम्पूज्य स्थापयात्मानमनेन मन्त्रेण ओँ नमो वासुदेवाय।

एवन्तु स्थापनङ्कृत्वा शिलायां मम सुन्दरि।
ततोऽधिवासनङ्कार्य्यं पूर्व्वमोष्ठपदासु च॥ ९॥
यो मां* संस्थापयेद्भूमे मम कर्म्मपरायणः।
स याति वैष्णवं लोकं नात्र कार्य्या विचारणा॥ १०
यावकं पायसम्भुक्त्वा अहोरात्रं समापयेत्।
ततः पश्चिमसन्ध्यायां दद्याच्चत्वारि† दीपकान्॥ ११
पञ्चगव्यञ्च गन्धञ्च वारिणा सह मिश्रयेत्।
चतुरः कलशांश्चैव स्थापयत्पादमूलत.॥ १२।
गीतवादित्रघोषेण उत्सवं तत्र कारयेत्।
ब्राह्मणैः सामगैस्तत्र वेदघोषन्तु कारयेत्॥ १३।
ब्रह्माक्षरसहस्राणि पठतां ब्रह्मवादिनाम्।
येषां पठितशब्देन शुभगीतस्वरेण च।
आगमिष्याम्यहं देवि मन्त्रपाठोमम प्रियः॥ १४।
निःशब्दञ्च ततः कृत्वा स्थाप्यो भागवतैः सह।
पुनरावाहनं कुर्य्यान्मन्त्रेणानेन सुव्रतः॥ १५।

आगच्छ हे देव समन्त्रयुक्तः
पञ्चेन्द्रियैः षट्सु तथा प्रधानः।
एतेषु भूतेषु च संविधाता
आवासिता तिष्ठसि लोकनाथ॥ १६।

* पूर्व्वं संस्थापयेदिति (क), (ख)।　† चत्वारीति आर्षं, चतुर इति साधु

अनेनैव तु मन्त्रेण समित्तिलघृतेन च।
मधुना चैव होतव्यमष्टोत्तरशताहुतीः।
एवं कृते विधानेऽथ तत्र सन्निहितोऽभवम्॥ १७
व्यतीतायान्तु शर्व्वर्य्यां प्रभाते विमले ततः।
पञ्चगव्यं ततः प्राश्य मन्त्रेण विधिपूर्व्वकम्।
सर्व्वगन्धैश्च लाजैश्च पञ्चगव्यजलं तथा।
ततः प्रासादे स्थाप्योऽहं गीतवादित्रमङ्गलैः।
सर्व्वगन्धांस्ततो गृह्य इमं मन्त्रमुदाहरेत्॥ १८।१९।
मन्त्रश्च—योऽसौ भवाँल्लक्षणलक्षितश्च

लक्ष्म्या च युक्तः सततं पुराणः।
अत्र प्रासादे सुसमिद्धतेजाः
प्रवेशमायाहि नमोनमस्ते॥ २०।

तत एतेन मन्त्रेण प्रासादं प्रविवेशयेत्।
प्रतिमा स्थापितव्या मे मध्ये न तु विपार्श्वतः॥ २१।
एवं संस्थापनङ्कृत्वा दद्यादुद्वर्त्तनं विभोः।
चन्दनं कुङ्कुमञ्चैव मिश्रङ्कालेयकेन च।
एवञ्चोद्वर्त्तनङ्कृत्वा इमं मन्त्रमुदाहरेत्॥ २२।

योऽसौ भवान् सर्व्वजगत्प्रधानः
सम्पूजितो लक्ष्मबृहस्पतिभ्याम्।
प्रवन्दिनः कारणं मन्त्रयुक्ताः
सुस्वागतं* तिष्ठ सुलोकनाथ॥ २३।

---

* सुस्वागतमिति ग,

एवं संस्थापनङ्कृत्वा गन्धमाल्यैश्च पूजयेत्।
शुक्लवस्त्राणि मे दद्यादिमं मन्त्रमुदाहरेत्॥ २४।

मन्त्रः—वस्त्राणि देवेश गृहाण तानि
मया सुभक्त्या रचितानि यानि।
इमानि सन्धारय विश्वमूर्त्ते
प्रसीद मह्यञ्च नमो नमस्ते॥ २५।

एवं वस्त्राणि मे दद्याद्विधिदृष्टेन कर्म्मणा।
धूपनं मे ततो दद्यात्कुङ्कुमागुरुमिश्रितम्।
एवञ्च धूपनं दद्यादिमं मन्त्रमुदीरयेत्* ॥ २६।

मन्त्रः—असावनादिः पुरुषः पुराणो
नारायणः सर्व्वजगत्प्रधानः।
गन्धञ्च माल्यानि च धूपदीपौ
गृहाण देवेश नमो नमस्ते॥ २७।

एवं पूजां ततः कृत्वा प्रापणञ्च निवेदयेत्।
पूर्व्वोक्तेन विधानेन प्रापणञ्चोपकल्पय च।
पूर्व्वोक्तेनैव मन्त्रेण दद्यात्प्रापणकम्बुधः॥ २८।
प्रापणान्ते चाचमनं दद्याद्देहविशुद्धये।
शान्तिजाप्यं ततः कार्य्यं सर्व्वकार्य्यार्थसिद्धिदम्॥ २९।

मन्त्रः—ओँ शान्तिर्भवान्कुर्व्वतु† लोकनाथ
राज्ञः सराष्ट्रस्य च ब्राह्मणानाम्।

---

* मुदाहरेदिति (ग)। † कुर्व्वतु इति बहुवचनमार्षं, करोत्विति साधु।

बालेषु वृद्धेषु गवाङ्गणेषु
कन्यासु शान्तिश्च पतिव्रतासु ॥ ३० ॥
रोगा विनश्यन्तु च सर्व्वतश्च
कृषीवलानाञ्च कृषिः सदा स्यात् ।
सुभिक्षयुक्ताश्च सदा हि लोकाः
काले सुवृष्टिर्भविता च शान्तिः ॥ ३१ ॥

एवं विधिं ततः कृत्वा विधिदृष्टेन कर्म्मणा ।
संपूज्य तत्र देवेशं ब्राह्मणान्भोजयेद्व्रती ।
दीनानाथान्प्रतर्प्याथ यथाविभवशक्तितः ॥ ३२
य एतेन विधानेन कुर्य्यात्संस्थापनं मम ।
यावन्तो मम गात्रेषु जायन्ते जलविन्दवः ।
तावद्वर्षसहस्राणि मम लोकेषु तिष्ठति ॥ ३३ ।
यो मां संस्थापयेद्भूमि सर्व्वाहङ्कारवर्ज्जितः ।
तारितञ्च कुलन्तेन सप्त सप्त च सप्ततिः ॥ ३४ ।
एतत्ते कथितं भद्रे शैलिकास्थापनं मम ।
धर्म्मसन्धारणार्थाय मम भक्तसुखाय च ॥ ३५ ।

इति वराहपुराणे शैलार्चास्थापनं नाम
अशीत्यधिकशततमोऽध्यायः ।

# त्र्यशीत्यधिकशततमोऽध्यायः ।

वराह उवाच ।

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तिष्ठामि मृण्मयाञ्चापि* प्रतिमाम्पूजनेच्छया ॥ १ ॥
अर्च्चाञ्च मृण्मयाङ्कृत्वा† अस्फुटाञ्चाप्यखण्डिताम् ।
नाधिकां वामनाञ्चापि न वक्राङ्कारयेद्बुधः ॥ २ ॥
ईदृशीं प्रतिमां कृत्वा मम कर्म्मपरायणः ।
भूमे सर्व्वाणि कर्म्माणि यथा वा रोचते तथा ॥ ३ ॥
काष्ठानामप्यलाभे तु मृण्मयां‡ तत्र कारयेत् ।
शैलजां वा ततो भूमे मम कर्म्मपरायणः ॥ ४ ॥
ताम्रेण कांस्यरौप्येण सौवर्णत्रपुरीतिकान् ।
कुर्व्वन्ति शुभकर्म्माणः कोविदोऽहमहं भवम् ॥ ५ ॥
अर्च्चनन्त्वपरं वेद्यां मम कर्म्मपरिग्रहात् ।
केचिल्लोकापवादेन ख्यात्यै कुर्व्वन्ति केचन ।
गृहस्थालोच्य कश्चिन्मां पूजयेत्कामनापरः ॥ ६ ॥
पूजयेद्यदि वा चक्रं मम तेजोऽंशसम्भवम् ।
भूमे एवं विजानीहि स्थापितोऽहं न संशयः ।
सर्व्वसम्पत्प्रयच्छामि पूजितोऽहं धराधरे ॥ ७ ॥
मन्त्रैर्वा विधिपूर्व्वेण यो मे कर्म्माणि कारयेत् ।
यं यं फलं समुद्दिश्य मां पूजयति मानवः ।

* मृण्मयीञ्चेति साधु । † मृण्मयीङ्कृत्वेति साधु । ‡ मृण्मयीमिति साधु ।

तत्तत्फलम्प्रयच्छामि प्रसन्नेनान्तरात्मना।
मम चैव प्रसादेन प्राप्नोति गतिमुत्तमाम्॥ ८।९।
मद्भक्तः सततं नित्यं कर्म्मणा परिवेष्टितः।
स वै मत्परितोषार्थं मनस्येव प्रपूजयेत्।
दद्याज्जलाञ्जलिं मह्यं तेन मे प्रीतिरुत्तमा॥ १०।
तस्य किं सुमनोभिश्च जाप्येन नियमेन किम्।
मह्यं चिन्तयतो नित्यं निभृतेनान्तरात्मना॥ ११।
तस्य कामान् प्रयच्छामि दिव्यान् भोगान्मनोरमान्।
एतत्ते सर्व्वमाख्यातं सुगोप्यञ्च प्रयत्नतः॥ १२।
मृण्मयीं प्रतिमाङ्कृत्वा मम कर्म्मसु निष्ठितः।
श्रवणे चैव नक्षत्रे कुर्य्यात्तस्याधिवासनम्॥ १३।
पूर्व्वोक्तेन विधानेन स्थापयेन्मन्त्रपूर्व्वकम्।
पञ्चगव्यञ्च गन्धैश्च वारिणा सह मिश्रयेत्।
ततो मे स्नपनङ्कार्य्यमिमं मन्त्रमुदाहरेत्॥ १४।
मन्त्रः—योऽसौ भवान्सर्व्वजगत्प्रकर्त्ता
यस्य प्रसादेन भवन्ति लोकाः।
स त्वं कुरुष्वाच्युत मत्प्रसादं
सन्तिष्ठ अर्च्चासु च मृण्मयीषु॥ १५।
कारणकारणं ह्युग्रतेजसं द्युतिमन्तं महापुरुषं नमो नमः।
अनेन मन्त्रेण वेश्मनि प्रविश्य स्थापनां कुर्य्यात्।
अनेनैव* तु मन्त्रेण स्थापयेन्मां समाहितः।

---

* एतेनैवेति (ग)।

पूर्व्ववत्स्थापयेत्तत्र चतुरः कलशान् पुरा।
चतुरस्तान् गृहीत्वा च इमं मन्त्रमुदाहरेत्॥ १६।
मन्त्रः—ओं वरुण समुद्रो लब्ध्वा
    संपूजितो ह्यात्मप्रतिप्रसन्नः।
    एतेन मन्त्रेण ममाभिषेकं
    प्राप्तं वरिष्ठं हि स ऊर्द्ध्वबाहुः।
    अग्निश्च भूमिश्च रसाश्च सर्व्वे
    भवन्ति यस्मात्सततं नमस्ये॥ १७।
एवमास्नाप्य विधिवन्मम कर्म्मपरायणः।
पूर्व्वोक्तविधिना चैव गन्धमाल्यैश्च पूजयेत्॥ १८।
अगुरुञ्चैव धूपञ्च सकर्पूरं सकुङ्कुमम्।
नमो नारायणायेति उक्त्वा धूपम्प्रकल्पयेत्॥ १९।
धूपं दत्त्वा यथान्यायं पीतं वस्त्रन्तु दापयेत्।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत्॥ २०।
मन्त्रः—वस्त्रेण पीतेन सदा प्रसन्नो
    यस्मिन्प्रसन्ने तु जगत्प्रसन्नम्।
    गृह्णातु वस्त्रं सुमुखः प्रसन्नो
    देवः सदा पातु भवस्य बन्धात्॥ २१।
तत एतेन मन्त्रेण वस्त्रं दद्याद्यथोचितम्।
धूपदीपादिभिः पूज्य* प्रापणम्परिकल्पयेत्॥ २२।

* पूजयित्वेति ख॰।

पूर्व्वोक्तेन विधानेन दद्यात्स्नापनकं नरः।
पश्चादाचमनं दद्यान्मन्त्रपूर्व्वं प्रयत्नतः॥ २३।
मन्त्रः—शान्तिर्भवतु देवानां ब्राह्मणक्षत्रियाणान्तथा।
शान्तिर्भवतु वृद्धानां बालानां शान्तिरुत्तमा।
देवो वर्षतु पर्जन्यः पृथिवी शस्यपूरिता॥ २४।
अनेनैव तु मन्त्रेण शान्तिं कृत्वा विधानतः।
पश्चाद्भागवतान् पूज्य* ततो ब्राह्मणपूजनम्।
शिरसा वन्दनङ्कार्य्यं दक्षिणाभिः प्रपूज्य च।
अच्छिद्रं वाच्य† पश्चाच्च कुर्य्यादेवं विसर्ज्जनम्॥ २५।२६।
एवं विसर्ज्जनङ्कृत्वा ये च तत्र समागताः।
पूजयेत्तांश्च विधिवद्वस्त्रालङ्कारभूषणैः।
पूजयीत‡ गुरुं तत्र यदीच्छेन्मम सात्म्यताम्॥ २७।
यो गुरुं पूजयेद्भक्त्या विशिष्टेन कर्म्मणा।
तेनाहं पूजितो नित्यं देवि सत्यं ब्रवीमि ते॥ २८।
तुष्टो ददाति कृच्छ्रेण ग्राममात्रं नराधिपः।
आब्रह्मपदपर्य्यन्तं हेलया यच्छति गुरुः॥ २९।
तथैव मम शास्त्रेषु ममैव वचनाच्छुभे।
सर्व्वशास्त्रेषु कल्याणि गुरुपूजा व्यवस्थिता॥ ३०।
यएतेन विधानेन कुर्य्यात्संस्थापनं मम।
तारितानि कुलान्येव त्रीणि त्रिंशच्च सप्ततिः॥ ३१।

* पूजयित्वेति साधु। † वाचयित्वेति साधु। ‡ पूजयेदिति साधु।

पूजायां मम मार्गेषु पतन्ति जलविन्दवः।
तावद्वर्षसहस्राणि मम लोकेषु मोदते ॥ ३२ ।
एवं ते कथितं भूमे स्थापनं मृण्मयस्य तु।
कथयिष्यामि ते ह्यन्यत्सर्व्वभागवतप्रियम् ॥ ३३ ।

इति वराहपुराणे मृण्मयार्च्चास्थापनं नाम
त्र्यशीत्यधिकशततमोऽध्यायः।

## चतुरशीत्यधिकशततमोऽध्यायः।

वराह उवाच।

ताम्रेण प्रतिमाङ्कृत्वा सुरूपाञ्चैव भास्वराम्।
उचितेनोपचारेण वेश्ममध्य उपानयेत् ॥ १ ।
ततो वेश्मन्युपागम्य स्थापयित्वा उदङ्मुखः।
चित्रायां चैव नक्षत्रे कुर्य्याच्चैवाधिवासनम् ॥ २ ।
जलञ्च सर्व्वगन्धेन पञ्चगव्येन मिश्रितम्।
स्नापयेच्च ततो मां वै इमं मन्त्रमुदाहरेत् ॥ ३ ।
मन्त्रः—योऽसौ भवांस्तिष्ठसि* सारभूतः
स ताम्रके तिष्ठसि नेत्रभूतः।
आगच्छ मूर्त्त्या सह पञ्चभूतै-
र्मया च पात्रैः सह विश्वधामेति ॥ ४ ।

---

* तिष्ठतीति साधु

अनेनैव तु मन्त्रेण स्थापयित्वा यशस्विनि।
पूर्व्वन्यायेन कर्त्तव्यमधिवासनपूजनम्॥ ५।
व्यतीतायाञ्च शर्व्वर्य्यामुदिते च दिवाकरे।
ऋचः शुद्धिं विधायाऽथ स्नापयेन्मन्त्रपूर्व्वकम्॥ ६।
ब्राह्मणा वेदपाठांश्च कुर्य्युस्तत्र समागताः।
बहूनि मङ्गलान्यत्र मण्डपे स्थापयेत्ततः॥ ७।
सुगन्धद्रव्यसंयुक्तं जलञ्चादाय पूजकः।
ततो मे स्नपनञ्चार्थ्यमिमं मन्त्रमुदाहरेत्॥ ८।

मन्त्रः—ओं योऽसौ भवान्सर्व्वचरः प्रभुश्च
मायाबली योगबलप्रधानः।
आगच्छ* शीघ्रञ्च मम प्रियाय
सन्तिष्ठ† तास्त्रिष्वपि लोकनाथ॥ ९।

ज्वलन पवनतुल्यावन भावन तपन श्वासन स्वयं तिष्ठ भगवन् पुरुषोत्तम ओम्। इति सूत्रम्।

ततो द्वारमुपागम्य वेश्म शीघ्रं प्रवेशयेत्।
आसने चापि मां स्थाप्य‡ पूजयेद्भक्तिपूर्व्वकम्।
मन्त्रेणानेन मां स्थाप्य गन्धपुष्पादिदीपकैः॥ १०।

स्थापनामन्त्रः—ओं आकाशप्रकाश जगत्प्रकाश विज्ञानमयानन्दमय त्रैलोक्यनाथात्रागच्छ इह सन्तिष्ठतु§ भवान्पुरुषोत्तम मामव इति सूत्रम्।

* आगच्छतु इति साधु। † सन्तिष्ठतामिति साधु। ‡ स्थापयित्वेति साधु, एवं परत्रापि। § सन्तिष्ठतामिति साधु

अनेन स्थापनङ्कृत्वा मम शास्त्रानुसारतः ।
शुक्लवस्त्रं समादाय इमं मन्त्रमुदाहरेत् ॥ ११ ।
मन्त्रः—ओँ शुद्धस्त्वमात्मा पुरुषः पुराणो
जगत्सु तत्त्वं सुरलोकनाथ ।
वस्त्राणि गृह्णीष्व* मम प्रियाणि
नमोऽस्तु तस्मै पुरुषोत्तमाय ॥ १२ ।
वस्त्रैर्विभूषितङ्कृत्वा मम कर्म्मपरायणः ।
यथान्यायेन मे शीघ्रमर्च्चनं तत्र कारयेत् ॥ १३ ।
अर्च्चनालङ्कृतङ्कृत्वा गन्धधूपादिभिः प्रभुम् ।
सम्पूज्य विधिवन्मान्तु नैवेद्यं परिकल्पयेत् ।
दत्त्वा स्वादु च नैवेद्यं शान्तिपाठन्तु कारयेत् ॥ १४ ।
मन्त्रः—शान्तिर्भवतु देवानां विप्राणां शान्तिरुत्तमा ।
शान्तिर्भवतु राज्ञाञ्च सराष्ट्राणां तथा विशाम् ॥ १५ ।
बालानां व्रीहिपण्यानां† गर्भिणीनाञ्च देहिनाम् ।
शान्तिर्भवतु देवेश त्वत्प्रसादान्ममाखिला ॥ १६ ।
एवं शान्तिं पठित्वा तु ब्राह्मणांस्तत्र पूजयेत् ।
गुरुं भागवतञ्चैवमर्च्चयेच्च यथाविधि ॥ १७ ।
ब्राह्मणान् भोजयेत्तत्र यथोत्पन्नेन माधवि ।
विशेषेण गुरुं पूज्य‡ वस्त्रालङ्कारभोजनैः ।

* गृहाणेति साधु । † बालानां हि विपन्नानामिति (क), (ख) । ‡ पूजयित्वेति साधु ।

तेनाहं पूजितो भूमे सत्यमेतद्ब्रवीमि ते ।
गुरुर्यस्य न तुष्टो वै तस्माद्दूरतरो ह्यहम् ॥ १८।१९ ।
य एतेन विधानेन कुर्य्यात्संस्थापनं मम ।
तारितस्य कुलं तेन नवभिः सप्तविंशतिः ॥ २० ।
एतत्ते कथितं भद्रे ताम्रार्च्चास्थापनं मम ।
कथयिष्यामि ते ह्येवं कांस्येन प्रतिमार्च्चनम् ॥ २१ ।
जलस्य बिन्दवो यावन्मम स्नाने च सुन्दरि ।
तावद्वर्षसहस्राणि मम लोके महीयते ॥ २२ ।

इति वराहपुराणे ताम्रार्चास्थापनं नाम
चतुरशीत्यधिकशततमोऽध्यायः

## पञ्चाशीत्यधिकशततमोऽध्यायः ।

वराह उवाच ।

कांस्येन प्रतिमाङ्कृत्वा सुरूपां सुप्रतिष्ठिताम् ।
सर्व्वाङ्गावयवैर्युक्तां विमलाङ्गांनिर्म्मिताम् ।
ज्येष्ठायाश्चैव नक्षत्रे मम वेश्मन्युपानयेत् ॥ १ ।
गीतवादित्रशब्देन बहुभिर्मङ्गलैस्तथा ।
अर्घ्यं गृह्य* यथान्यायमिमं मन्त्रमुदाहरेत् ॥ २

* गृहीत्वेति साधु ।

योऽसौ भवान्सर्व्वयज्ञेषु पूज्यो
ध्येयो गोप्ता विश्वकामो महात्मा।
प्रसन्नात्मा भगवान्मे प्रसन्नः
सुपूजितस्तिष्ठ हि लोकनाथ॥ ३।

अर्घं दत्त्वा यथान्यायं स्थापयेत्तदुदङ्मुखः।
यथान्यायेन संस्थाप्य कुर्य्याच्चैवाधिवासनम्॥ ४।
चतुरः कलशांश्चैव पञ्चगव्यसमन्वितान्।
सर्व्वगन्धैश्च लाजैश्च मधुना च विशेषतः॥ ५।
चतुरः कलशान् पूर्य्य* स्नानार्थं मे समन्त्रकम्।
ततश्चास्तङ्गते सूर्य्ये शुद्धैर्भागवतैः सह॥ ६।
कुर्य्यात्संस्थापनं तत्र ममार्च्चायास्तु पूजकः।
गृहीत्वा कलशांस्तत्र शुद्धान् भागवतांस्तथा।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत्॥ ७।
मन्त्रः—आदिर्भवान् ब्रह्मयुगान्तकल्पः
सर्व्वेषु कालेष्वपि कल्पभूतः।
एकोभवान्नास्ति कश्चिद्द्वितीय-
उपागतस्तिष्ठ हि लोकनाथ॥ ८।

विकार अविकार अकार सकार शकार षकार स्वच्छन्दरूपः
चरमचरं धृतिरूपः अरूपमिति नमः पुरुषोत्तमायेति सूत्रम्।
व्यतीतायान्तु शर्व्वर्य्यामुदिते च दिवाकरे।

* पूरयित्वेति सङ्क्षेपः।

अश्वेन* च मुहूर्त्तेन प्राप्ते मूलेषु चोत्तरे ॥ ९ ।
पूर्व्वोक्तेषु विधानेन मम शास्त्रानुदर्शिनाम् ।
स्थापयेद्द्वारमूले तु मम वेश्मस्य† सुन्दरि ॥ १० ।
सर्व्वधान्युदकं गृह्य‡ सर्व्वगन्धफलानि च ।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ॥ ११ ।
मन्त्रः—ओं इन्द्रो भवांस्त्वञ्च यमः कुवेरो
जलेश्वरः सोमबृहस्पती च ।
शुक्रः शनैश्चरबुधौ सह सैंहिकेय-
केतू रविश्चैव धरात्मजस्त्वम् ॥ १२ ।
तथैव सर्व्वौषधयो जलानि
वायुश्च पृथ्वी च सवायुसारथिः ।
नागाः सयक्षाश्च दिशश्च सर्व्वा-
स्तस्मै नमस्ते पुरुषोत्तमायेति सूत्रम् ॥ १३ ।
अनेनैव तु मन्त्रेण कृत्वा कर्म्म सुपुष्कलम् ।
मम तां प्रतिमां गृह्य ततो वेश्मन्युपानयेत् ॥ १४ ।
एकान्ते स्नापयेन्माञ्च जलैः पूर्व्वाभिमन्त्रितैः ।
प्रगृह्य कलशेभ्यश्च जलं गन्धसमन्वितम् ।
गात्रसंशोधनार्थाय इमं मन्त्रमुदाहरेत् ॥ १५ ।
मन्त्रः—सरांसि ये ते च समस्तसागरा-
नद्यश्च तीर्थानि च पुष्कराणि ।

* श्वेतेनेति (ग) । † वेश्मस्य इति आर्षं, वेश्मन इति साधु । ‡ गृहीत्वेति साधु, एवं परत्र ।

आयान्तु तान्येव तव प्रसादा-
च्छुद्धैश्च मे स्युः पुरुषोत्तमायेति सूत्रम् ॥ १६ ।
एवं मां स्नाप्य* विधिना मम कर्म्मानुसारिणः ।
एवं न्यायेन मां तत्र अर्च्चयित्वा यथोचितम् ॥ १७ ।
गन्धधूपादिभिश्चैव यथाविभवशक्तितः ।
पश्चाद्वस्त्राणि मे दद्यान्मम गात्रसुखानि च ॥ १८ ।
तान्यानयित्वा वस्त्राणि ममाग्रे स्थापयेन्नरः ।
उभौ तौ चरणौ नत्वा इमं मन्त्रमुदाहरेत् ॥ १९ ।
मन्त्रः—ओं वस्त्राणि देवेन्द्र मयाहृतानि
सूक्ष्माणि सौम्यानि सुखावहानि ।
गात्रस्य सन्तुष्टिकराणि तुभ्यं
गृह्णीष्व देवेश सुलोकनाथ ॥ २० ।
वेदोपवेद ऋग्वेद यजुर्वेद सामवेद अथर्व्ववेद संस्तुत इति नमः
परम्परायेति सूत्रम् ।
अर्च्चितालङ्कृतङ्कृत्वा पूर्व्वन्यायेन सुन्दरि ।
पश्चान्मे प्रापणं दद्यान्मन्त्रवद्विधिपूर्व्वकम् ॥ २१ ।
दत्त्वा प्रापणकं तत्र दद्यादाचमनं ततः ।
शान्तिपाठश्च वै कार्य्यो मन्त्रेणानेन सुन्दरि ॥ २२ ।
विद्याः सर्व्वे† ब्रह्म च ब्राह्मणाश्च
ग्रहाः सर्व्वे सरितः सागराश्च ।

* स्नापयित्वेति साधु । † विद्याः सर्व्वा इति तु साधु ।

इन्द्राद्यष्टौ लोकपालाश्च सर्व्वे
पूर्व्वोक्ता ये सर्व्वशान्तिश्च कुर्य्युः ॥ २३ ।
आयाम यम* कामदम वाम ओँ नमः पुरुषोत्तमायेति सूत्रम् ।
वृत्तेष्वेवोपचारेषु मम कुर्य्यात्प्रदक्षिणम् ।
अभिवादनं स्तुतिश्चापि कृत्वा भागवतान् शुचीन् ।
सम्पूज्य ब्राह्मणान्पश्चाद्भोजयेत्पायसादिभिः ॥ २४ ।
तेभ्यः शान्त्युदकं गृह्य† द्विजेभ्यः कमलेक्षणे ।
दद्यादभ्युक्षणं मह्यं तेनाहं पूजितोऽभवम् ॥ २५ ।
सर्व्वान्विसर्ज्जयित्वा तु कुर्य्याद्वै गुरुपूजनम् ।
अङ्गुलीयकवासोभिर्दानसम्माननादिभिः ॥ २६ ।
यो गुरुं पूजयेद्भूमे भक्तियुक्तेन चेतसा ।
तेनाहं पूजितो देवि एवमेतन्न संशयः ॥ २७ ।
ब्राह्मणान्मम भक्तांश्च गुरुंश्चैव हि निन्दति ।
नाशयिष्यामि तं देवि सत्यमेतद्ब्रवीमि ते ॥ २८ ।
जलस्य विन्दवो यावन्मम गात्रेषु तिष्ठति‡ ।
तावद्वर्षसहस्राणि मम लोकेषु तिष्ठति ॥ २९ ।
य एतेन विधानेन स्थापयिष्यति मां नरः ।
तारितञ्च कुलं तेन पितृजं मातृजं तथा ॥ ३० ।

* आमामभ्येति (ग)। † गृह्णीत्वेति साधु एवं परत्रापि। ‡ तिष्ठन्तीति साधु, तथा कृते न छन्दोदोषः।

एतत्ते कथितं भद्रे कांस्येन स्थापनं मम ।
कथयिष्यामि ते ह्येवं रौप्येण स्थापनं मम* ॥ ३१ ।

इति वराहपुराणे कांस्यप्रतिमास्थापनविधिर्नाम
पञ्चाशीत्यधिकशततमोऽध्याय. ।

# षड़शीत्यधिकशततमोऽध्यायः ।

वराह उवाच ।

राजतीं प्रतिमां कृत्वा सुरूपां निर्म्मलां शुचिम्* ।
अश्लिष्टाञ्चैव निर्दोषां सर्व्वतः परिनिष्ठिताम् ।
चन्द्रपाण्डुरसङ्काशां सुश्लक्ष्णां निर्घृणां शुभाम् ।
श्रिया युक्तां मनोज्ञाञ्च दीप्यमानां दिशो दश† ॥ १ २
ईदृशीं प्रतिमाङ्कृत्वा मम कर्म्मपरायणः ।
गीतवादित्रशब्देन शङ्खदुन्दुभिनिस्वनैः ।
स्तुतिभिर्मङ्गलैश्चैव मम वेश्मन्युपानयेत् ।
अर्घ्यपाद्यादिकं गृह्य इमं मन्त्रमुदाहरेत् ॥ ३।४ ।

---

* एतदर्द्धं (ग) पुस्तके नास्ति ।

---

* शचिरिति (ख) । † दीपयन्तीं दिशोदशेति तु स समीचीनम् ।

मन्त्रः—ओं यः सर्व्वलोकेष्वपि सर्व्वमर्घ्यं
पूज्यश्च मान्यश्च दिवौकसामपि ।
उपागतो गृह्ण इदं ममार्घ्यं
प्रसीद मां तिष्ठ सुलोकनाथ ।
यो राजते यज्ञपतिश्च यज्ञे
सूर्य्योदये मम कर्म्माग्निहोत्रम् ॥ ५ ।

मन्त्रश्चेति आदिमध्यस्वरूपायेति सूक्तम् ।

तत एतेन मन्त्रेण अर्घ्यं दत्त्वा यथाविधि ।
सुस्नातोऽलङ्कृतश्चैव स्थापयेत्तामुदङ्मुखः ॥ ६ ।
अश्लेषासु च नक्षत्रे राशौ कर्कटके* स्थिते ।
अस्तङ्गते दिनकरे स्वजने यजति स्थिते ।
अधिवासनं तत्र कुर्य्याद्विधिवन्मन्त्रपूर्व्वकम् ॥ ७ ।
चत्वारः कलशास्तत्र चन्दनोदकमिश्रिताः ।
सर्व्वौषधिसमायुक्ताः सहकारविभूषिताः ॥ ८ ।
ततस्ते कर्म्मिणः सर्व्वे मम शास्त्रानुसारिणः ।
गुरोश्च वचनाद्देवि मनोज्ञान् सुखशीतलान् ।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ॥ ९ ।
मन्त्रः—योऽसौ भवान् सर्व्वलोकैककर्त्ता
सर्व्वाध्यक्षः सर्व्वरूपैकरूपः ।
आयातु मूर्त्तौ सहितो मया च
ध्रुवादिभिर्लोकपालैश्च पूज्यः ॥ १० ।

* यजमाने इति पाठः ।

नमोऽनन्तायेति सूत्रम् ।

व्यतीतायान्तु शर्व्वर्य्यामुदिते सूर्य्यमण्डले ।
दिशासु च प्रसन्नासु द्वारमूले उपानयेत्* ॥ ११ ।
एवं संस्थापनङ्कृत्वा मम कर्म्मानुसारिणः ।
घटैः पूर्णैर्यथान्यायं कुर्य्यात्तत्राभिषेचनम् ॥ १२ ।
अभिषिच्य† ततः पश्चात्स्थापयेत‡ विधानतः ।
नमो नारायणायेति उक्का मन्त्रमुदाहरेत् ॥ १३ ।
मन्त्रः—गङ्गादिभ्यो नदीभ्यश्च सागरेभ्यो मया हृतम् ।
स्नानाय ते सुरश्रेष्ठ कर्पूरावासितं जलम् ॥ १४ ।
एवं स्नाप्य§ विधानेन गृहस्याभ्यन्तरं नयेत् ।
स्थापना तत्र मे कार्य्या मन्त्रेणानेन सुन्दरि ॥ १५ ।
मन्त्रः—वेदैर्वेद्यो वेदविद्भिश्च पूज्यो
यज्ञात्मको यज्ञफलप्रदाता ।
यज्ञार्थं त्वामाह्वये देवदेव
मूर्त्तावस्यान्तिष्ठ सुलोकनाथ ॥ १६ ।

धनजन रूप्यस्वर्ण अनन्ताय नम इति सूत्रम् ।

एवं संस्थापनङ्कृत्वा प्रहृष्टेनान्तरात्मना ।
अर्च्चयित्वा यथान्यायं पूर्व्वोक्तविधिना नरः ।
नीलवस्त्राणि मे दद्यात्प्रियाणि मम भूषणम् ॥ १७ ।
ततो वस्त्राण्युपादाय जानुभ्यां पतितो भुवि ।

* द्वारमूले तु स्थापयेदिति (ग) पाठोऽत्र छन्दोदोषः । † अभिषिच्य इति (म) ।
‡ स्थापयेदिति साधु । § स्नापयित्वेति साधु ।

नमो नारायणायेति उक्ता काममुदाहरेत्* ॥ १८ ।

मन्त्र.—योऽसौ भवांश्चन्द्ररश्मिप्रकाशः

शङ्खेन कुन्देन समानवर्णः ।

क्षीरोज्ज्वलः कौमुदवर्ण देव

वस्त्राणि गृह्णीष्व मम प्रियाय ॥

वेषः सुवेषः अनन्तः अमरः मारणः कारणः सुलभः दुर्लभः श्रेष्ठः सुवर्चा इति सूत्रम् ।

अनेनैव तु मन्त्रेण दत्त्वा वस्त्राणि मे शुचिः ।

ततो मे प्रापणं दद्याद्भक्तियुक्तेन चेतसा ।

नमो नारायणायेति इमं मन्त्रमुदाहरेत् ॥ १९ ।

शाल्यन्नं पायसैर्युक्तं सितया च घृतेन च ।

प्रापणं गृह्यतां देव अनन्त पुरुषोत्तम ॥ २० ।

दत्वा तु मम नैवेद्यं दद्यादाचमनं बुधः ।

सर्व्वलोकहितार्थाय शान्तिपाठमुदाहरेत् ॥ २१ ।

ओं शान्तिं करोति ब्रह्मा च रुद्रो विष्णुर्हि भास्करः ।

रात्रिश्चैव तु सन्ध्ये द्वे नक्षत्राणि ग्रहा दिशः ॥ २२ ।

अचल चञ्चल सचल खेचल प्रचल अरविन्दप्रभ उद्भव चेति नमः संस्थापितानां वासुदेव इति सूत्रम् ।

कृत्वा वै शान्तिकं तत्र सर्व्वपापप्रणाशनम् ।

पूज्य† भागवतांस्तत्र यथाविभवशक्तितः ।

---

* मन्त्रमुदाहरेदिति (ग) । † पूजयित्वेति साधु ।

ब्राह्मणान् भोजयेत्तत्र* गुरुं मन्त्रेण पूजयेत् ॥ २३ ।
तेभ्यः शान्त्युदकं गृह्य कुर्य्यादभ्युक्षणं ततः ।
ब्राह्मणान् स्वजनञ्चैव अभिवाद्य कृताञ्जलिः ।
शीघ्रं विसर्ज्जयेत्तांश्च ये तत्र समुपागताः ॥ २४ ।
ततो गुरुञ्च संपूज्य दानमानादिभिर्विभुम् ।
गुरौ सम्पूजिते तत्र मम पूजा कृता भवेत् ॥ २५ ।
जलस्य विन्दवो येऽन्नभोजनान्ते पतन्ति हि ।
तावद्वर्षसहस्राणि विष्णुलोके स मोदते ॥ २६ ।
य एतेन विधानेन पूजयेन्मतिमान्नरः ।
उद्धृतञ्च कुलं तेन पितृजं मातृजं तथा ॥ २७ ।
अनेन विधिना देवि† रौप्यायाः स्थापनं मम ।
सुवर्णस्य प्रवक्ष्यामि स्थापनं मम सुप्रियम् ॥ २८ ।
यथैव राजतीं कुर्य्यात्तथैव च सुवर्णिकाम् ।
तेनैव विधिना सर्व्वं कुर्य्यादावाहनादिकम् ॥ २९ ।
यत्फलं दारुशैलादिनाम्ना कांस्यादिराजते ।
तत्फलं कोटिगुणितं सौवर्णस्य प्रपूजने‡ ॥ ३० ।
कुलानि तारयेत्सुभ्रु अयुतान्येकविंशतिम् ।
याति मल्लयतां भूमे पुनरावृत्तिवर्ज्जितः ॥ ३१ ।

* (ग) पुस्तके कृत्वा वै शान्तिकं तत्र इत्यनन्तरं चरणचतुष्टयं नास्ति तच्च २२ श्लोकादनन्तरं दृश्यते । † एतन्मे कथितं देवीति (ग) । ‡ सौवर्णस्य च स्थापने इति (क), (ख), पाठेऽत्र छन्दोदोषः ।

एतत्ते कथितं भूमे यत्त्वया परिपृच्छितम्* ।
रहस्यं विपुलश्रोणि किमन्यत्कथयामि ते ॥ ३२ ।

भूमिरुवाच ।

उक्ता याः प्रतिमाः सर्व्वाः सुवर्णादिविनिर्म्मिताः ।
तासु तिष्ठसि सर्व्वासु शालग्रामे च सर्व्वदा ॥ ३३ ।
कति पूज्या गृहादौ च अविशेषस्तु पूजने ।
विशेषो वा भवेत्तन्मे रहस्यं वद माधव ।
शिवादिपूजने के वा संख्याता†स्तच्च मे वद ॥ ३४ ।

वराह उवाच ।

गृहे लिङ्गद्वयं नार्च्यं शालग्रामत्रयं तदा ।
द्वे चक्रे द्वारकायास्तु नार्च्यं सूर्य्यद्वयं तथा ।
गणेशत्रितयं नार्च्यं शक्तित्रितयमेव च ॥ ३५ ।
शालग्रामयुगाः पूज्या युग्मेषु द्वितयं न हि ।
विषमा नैव पूज्याः स्युर्विषमे एक एव हि ॥ ३६ ।
गृहेऽग्निदग्धा भग्ना वा नैव पूज्या वसुन्धरे ।
आसान्तु पूजनाद्देहे उद्वेगं प्राप्नुयाद्गृही ॥ ३७ ।
शालग्रामशिला भग्ना पूजनीया सचक्रका ।
खण्डिता स्फुटिता वापि शालग्रामशिला शुभा ॥ ३८ ।
शिला द्वादश वै देवि शालग्रामसमुद्भवा ।
विधिवत्पूजिता येन तस्य पुण्यं वदामि ते ॥ ३९ ।

---

* परिपृष्टमिति साधु । † को वा संख्यात इति (ग) पुस्तके पाठः ।

कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः।
यत्स्याद्द्वादशकल्पैस्तु दिनैकेन हि तद्भवेत्॥ ४०।
यः पुनः पूजयेद्भक्त्या शालग्रामशिलाशतम्।
तत्फलं नैव शक्तोऽहं वक्तुं वर्षशतैरपि॥ ४१।
सर्व्वैर्वर्णैस्तु सम्पूज्याः प्रतिमाः सर्व्वदेवताः।
लिङ्गान्यपि तु पूज्यानि मणिभिः कल्पितास्तथा॥ ४२।
शालग्रामो न स्प्रष्टव्यो हीनवर्णैर्वसुन्धरे।
स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको* मतः॥ ४३।
मोहाद्यः संस्पृशेच्छूद्रो योषिद्वापि कदाचन।
शयते नरके घोरे यावदाभूतसंप्लवम्॥ ४४।
यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुन्धरे।
दूरादेवास्पृशन् पूजाङ्कारयेत्सुसमाहितः॥ ४५।
चरणामृतपानेन सर्व्वपापक्षयो भवेत्।
अभक्ष्यं शिवनिर्म्माल्यं पत्रं पुष्पं फलं जलम्।
शालग्रामशिलायोगात्पावनं तद्भवेत्सदा॥ ४६।
दद्याद्भक्ताय यो देवि शालग्रामशिलां नरः।
सुवर्णसहितां तस्य यत्पुण्यं तच्छृणुष्व मे॥ ४७।
सुवर्णसहिता भूमिः सपर्व्वतवनाकरा।
ससमुद्रा भवेद्दत्ता सत्पात्राय वसुन्धरे॥ ४८।
शालग्रामशिलायास्तु मूल्यमुद्घाटयेत्क्वचित्।

* संस्पर्शेन अस्पर्शाधिक इति (ग)।

विक्रेता क्रयकर्त्ता च नरके नीयते ध्रुवम् ।
पूजा फलं न शक्येत वक्तुं वर्षशतैरपि ॥ ४८ ॥
एतत्ते कथितं गुह्यं प्रतिमास्थापनम्प्रति ।
शालग्रामे विशेषश्च लिङ्गादीनाञ्च या भवेत् ।
पूजनादौ विधिश्चापि किमन्यच्छ्रोतुमिच्छसि ॥ ५० ॥

इति वराहपुराणे भगवच्छास्त्रे शौचधर्मावर्णाचास्थापनं नाम षडशीत्यधिकशततमोऽध्यायः ।

## सप्ताशीत्यधिकशततमोऽध्यायः ।

सूत उवाच ।

एवं नारायणाच्छ्रुत्वा सा मही शंसितव्रता ।
कराभ्यामञ्जलिङ्कृत्वा माधवं पुनरब्रवीत् ॥ १ ॥

धरण्युवाच ।

श्रुतमेतन्मयाख्यानं चैत्रस्य च महत्फलम् ।
एकं मे परमं गुह्यं तद्भवान्वक्तुमर्हसि ॥ २ ॥
पितृयज्ञस्य माहात्म्यं सोमदत्तो नराधिपः ।
मृगयां समुपागम्य यत्त्वया पूर्व्वभाषितम् ॥ ३ ॥
को गुणः पितृयज्ञस्य कथमेव प्रयुज्यते ।
केन चोत्पादितं श्राद्धं कस्मिन्नर्थे किमात्मकम् ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण वदस्व मे ॥ ४ ॥

वराह उवाच।

साधु भूमे महाभागे यन्मान्त्वं परिपृच्छसि।
मोहितासि वरारोहे भाराक्रान्ता वसुन्धरे।
दिव्या ददामि ते बुद्धिं शृणु सुन्दरि तत्त्वतः॥ ५।
कथयिष्यामि ते ह्येवं* शास्त्रोत्पत्तिविनिश्चयम्।
आदौ स्वर्गस्य चोत्पत्तिं देवानाञ्च वरानने॥ ६।
निष्प्रभेऽस्मिन्निरालोके सर्व्वतस्तमसावृते।
स्रष्टुं वै बुद्धिरुत्पन्ना त्रैलोक्यं सचराचरम्। ७।
सोऽहञ्च शेषपर्य्यङ्के एकश्चैव पराङ्मुखः।
स्वपामि च वरारोहे अनन्तशयने ह्यहम्॥ ८।
निद्रां मायामयीं कृत्वा जागर्मि च स्वपामि वा†।
विष्णुमायामयङ्कृत्वा जानासि त्वं न धारिणि॥ ९।
युगं युगसहस्राणि यास्यन्ति च गतानि च।
न त्वं मम विजानासि ज्ञातुं मायां यशस्विनि॥ १०।
धारितं मम सुश्रोणि दिवा पञ्चशतानि च।
वाराहं रूपमादाय न जानासि हि भामिनि॥ ११।
यन्मां पृच्छसि वै ज्ञातुमात्मानञ्च यशस्विनि।
एकमूर्त्तिस्त्रिधा जातो ब्रह्मविष्णुहरात्मकः॥ १२।
क्रोधहेतोर्मया सृष्ट ईश्वरोऽसुरनाशनः।
मम नाभ्यां भवत्पद्मं‡ पद्मगर्भः पितामहः॥ १३।

* ते हीदमिति (ग)। † स्वपानि चेति (ग)। ‡ अभवत् पद्ममिति साधु, समुत्पन्न-मिति क्वचित् तु सुसङ्गतिः स्यात्।

एवं त्रयो वयं देवाः कृत्वा ह्येकार्णवां महीम् ।
तिष्ठामः परमप्रीत्या मायां कृत्वा तु वैष्णवीम् ॥ १४ ।
सर्व्वं तज्जलपूर्णन्तु न प्रज्ञायत किञ्चन ।
वटमेकं वर्जयित्वा विष्णुमूलं यशोद्रुमम् ।
तिष्ठामि वटवृक्षेऽहं मायया बालरूपधृक् ॥ १५ ।
पश्यामि च जगत्सर्व्वं त्रैलोक्यं यन्मया कृतम् ।
धारयामि वरारोहे जानासि त्वं धरे शुभे ॥ १६ ।
कालेन तु तदा देवि कृत्वा वै वड़वामुखम् ।
विनिःसृतं जलं तत्र मायया तदनन्तरम् ॥ १७ ।
प्रलये च विनिर्वृत्ते ब्रह्मा लोकपितामहः ।
मुहूर्त्तं ध्यानमास्थाय भाषितं वचनं मया ।
शीघ्रमुत्पादय ब्रह्मन् देवतासुरमानुषान् ॥ १८ ।
एवमुक्तो मया देवि गृह्य तत्र कमण्डलुम् ।
उपस्पृश्य शुचिर्भूत्वा ब्रह्मा चोत्पादयत्सुरान्* ।
आदित्या वसवो रुद्रा अश्विनौ च मरुद्गणाः ।
तारणार्थञ्च सर्व्वेषां ब्राह्मणान् भुवि देवतान् ॥ १९।२० ।
बाहुभ्यां क्षत्रमुत्पन्नं वैश्या ऊरुविनिःसृताः ।
पद्भ्यां विनिःसृताः शूद्राः सर्व्ववर्णोपचारकाः ॥ २१ ।
देवताश्चासुरा देवि जातास्ते ब्रह्मणस्तथा ।
देवता ह्यसुराः सर्व्वे तपोवीर्य्यबलान्विताः ॥ २२ ।

* चोदपादयदिति साधु ।

आदित्या वसवो रुद्रा अश्विनौ च मरुद्गणाः।
देवतास्तु त्रयस्त्रिंशददित्यां जनयत्पुरा*।
दित्या च जनिताः पुत्रा असुराः सुरशत्रवः॥ २३॥
प्रजापतिश्चाजनयदृषयश्च† तपोधनान्।
तेजसा भास्कराकाराः सर्व्वे शास्त्रविदो द्विजाः।
तेषां पुत्राश्च पौत्राश्च जनिता ब्रह्मसूनुना॥ २४॥
निमिस्तु वंशसम्भूतो आत्रेय इति विश्रुतः।
जातमात्रो महात्मा स श्रीमांश्चापि तपोनिधिः।
एकचित्तं समाधाय तपश्चरति निश्चलः॥ २५॥
पञ्चाग्निर्वायुभक्षश्च एकपादोर्द्धबाहुकः।
शीर्णपर्णाम्बुभक्षश्च शिशिरे च जलाशयः।
स कृच्छ्रे फलभक्षश्च पुनश्चान्द्रायणञ्चरन्।
वर्षाणाञ्च सहस्राणि तपस्तप्त्वा वसुन्धरे।
मृत्युकालमनुप्राप्तस्ततः पञ्चत्वमागतः॥ २६।२७॥
नष्टञ्च तं सुतं दृष्ट्वा निमिः शोक उपाविशत्।
पुत्रशोकाभिसंयुक्तो दिवा रात्रौ च चिन्तयन्।
निमिः कृत्वा ततः शोकं विधानात्तत्र माधवि।
तं मनोगतसङ्कल्पः‡स्त्रिरात्रे प्रत्यपद्यत॥ २८।२९॥
तस्य प्रति विशुद्धस्य माघमासे तु द्वादशीम्।

* अजनयदिति साधु। † ऋषींश्चैव तपोधनानिति साधु। ‡ तमेव गतसङ्कल्पमिति (ग)।

मानसं सृज्य॰ विषयस्बुद्धिर्विस्तारगामिणी ।
स निमिश्चिन्तयामास श्राद्धकल्पं समाहितः ॥ ३० ॥
यानि तस्यैव भोज्यानि मूलानि च फलानि च ।
यानि कानि च भक्ष्याणि नवश्च रससम्भवः ।
यानि तस्यैव चेष्टानि सर्व्वमेतदुदाहरेत् ॥ ३१ ।
आमन्त्र्य ब्राह्मणं पूर्व्वं शुचिर्भूत्वा समाहितः ।
दक्षिणावृततः सर्व्वं ऋषिः स्वयमकुर्व्वत ॥ ३२ ।
सप्तकृत्वा ततस्तत्र युगपत्समुपाविशत् ।
दत्त्वा तु मांसशाकानि मूलानि च फलानि च ।
पूजयित्वा तु विप्रान्स सप्तकृत्वश्च सुन्दरि ।
कृत्वा तु दक्षिणाग्रांश्च कुशांश्च प्रयतः शुचिः ।
प्रददौ श्रीमतः पिण्डं नामगोत्रमुदाहरन् ॥ ३३।३४ ।
तत्कृत्वा स मुनिश्रेष्ठो धर्म्मसङ्कल्पमात्मनः ।
एवं दिने गते भद्रे अस्तम्प्राप्ते दिवाकरे ।
ब्रह्मकर्म्मोत्तमं दिव्यं भावसाध्यमुपासत ॥ ३५ ।
एकाकी यतचित्तात्मा निराशी निष्परिग्रहः ।
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्चं नातिनीचञ्च चेलाजिनकुशोत्तरम् ।
तत्रैकाग्रं मनः कृत्वा यतचित्तोजितेन्द्रियः ।
उपविश्यासनेऽयुञ्जद्योगं॑मात्मविशुद्धये ॥ ३६।३७ ।

---

॰ सृष्टेति साधु । । अयुङ्क्त योगमिति साधु ।

समकायशिरोग्रीवं धारयन्नचलं स्थितः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ।
प्रशान्तात्मा विगतभीर्ब्रह्मचारी व्रते स्थितः ।
संयम्य मयि चित्तं भो युक्त आसीत मत्परः ।
प्रयुञ्जीत सदात्मानं मद्भक्तो नान्यमानसः ॥ ३८।३९ ।
एवं सन्ध्यां निवृत्तायां ततो रात्रिरुपागता ।
पुनश्चिन्तितुमारब्धः शोकसंविग्नमानसः ।
कृत्वा तु पिण्डसङ्कल्पं पश्चात्तापमकुर्व्वत ॥ ४० ।
अकृतं मुनिभिः सर्व्वं किं मया तदनुष्ठितम् ।
निवापकर्म्म ह्यशुचिः पुत्रार्थे विनियोजितम् ।
अहो स्नेहप्रभावेण मया चाकृतबुद्धिना ॥ ४१ ।
कथन्ते मुनयः शापात्प्रदहेयुर्न मामिति ।
सदेवासुरगन्धर्व्वपिशाचोरगराक्षसाः ।
किं वक्ष्यन्ति च मां सर्व्वे ये वै पितृपदे स्थिताः ॥ ४२ ।
एवं विचिन्त्यमानस्य* गता रात्रिर्वसुन्धरे ।
पूर्व्वसन्ध्यानुसम्प्राप्ता उदिते च दिवाकरे ।
सन्ध्याविधिं विनिर्वर्त्त्य हुत्वाग्नीन्द्विजसत्तमः ।
पुनश्चिन्ताप्रपन्नः स आत्रेयो ह्यतिदुःखितः ।
एकाकी भाषते तत्र शोकपीड़ितमानसः ॥ ४३।४४ ।
धिग्वयो धिक् च मे कर्म्म धिग्बलं धिक् च जीवितम् ।
पुत्रं सर्व्वसुखैर्युक्तं जीवितं हि न दृश्यते ॥ ४५ ।

---

* एवं विचिन्तयानस्य अथवा एवं चिन्तयतस्तस्येति साधु ।

नरकं पूतिकाख्यातं छदि दुःखं विदुर्बुधाः ।
परित्राणं ततः पुत्रादिच्छन्तीह परत्र च ॥ ४६ ।
पूजयित्वा तु देवांश्च दत्त्वा दानन्त्वनेकशः ।
हुत्वाग्निं विधिवच्चैव स्वर्गन्तु लभते नरः ॥ ४७ ।
पुत्रेण लभते येन पौत्रेण च पितामहाः ।
अथ पुत्रस्य पौत्रेन मोदन्ते प्रपितामहाः ।
पुत्रेण श्रीमता हीनं नाहं जीवितुमुत्सहे ॥ ४८ ।
एतस्मिन्नन्तरे देवि नारदो द्विजसत्तमः ।
जगाम तापसारण्यमृष्याश्रमविभूषितम् ।
सर्व्वकामयुतं रम्यं बहुपुष्पफलोदकम् ॥ ४९ ।
तत्प्रविश्याश्रमपदं भ्राजमानं स्वतेजसा ।
तं दृष्ट्वा पूजयामास स्वागतेनाथ धर्म्मवित् ॥ ५० ।
अर्घं पाद्यं तस्य दत्त्वा आसने चोपवेश्य च ।
उपविश्यासने देवि नारदो वाक्यमब्रवीत् ॥ ५१ ।

नारद उवाच ।

निमे शृणु महाप्राज्ञ शोकमुत्सृज्य दूरतः ।
अशोच्यमनुशोचस्त्वं प्रज्ञावान्नावबुध्यसे ॥ ५२ ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः* ।
मृतं वा यदि वा नेष्टं यो यान्तमनुशोचति ।
अमित्रास्तस्य हृष्यन्ति स चापि न निवर्त्तते ॥ ५३ ।
अमरत्वं न पश्यामि त्रैलोक्ये सचराचरे ।

* भगवद्गीतायामनुरूपः श्लोको दृश्यते—द्वितीयोऽध्यायः ११श, श्लोकः ।

देवतासुरगन्धर्व्वा मानुषा मृगपक्षिणः* ।
सर्व्वे कालवशं यान्ति सर्व्वे कालमुदीच्यते† ॥ ५४ ।
जातस्य सर्व्वभूतस्य कालो मृत्युरुपस्थितः ।
अवश्यञ्चैव गन्तव्यं कृतान्तविहितेन च ॥ ५५ ।
तव पुत्त्रो महात्मा वै श्रीमान्नाम श्रियो निधिः ।
पूर्णं वर्षसहस्रन्तु तपः कृत्वा सुदुश्चरम् ।
मृत्युकालमनुप्राप्य गतो दिव्यां पराङ्गतिम् ।
एतत्सर्व्वं विदित्वा तु नानुशोचितुमर्हसि ॥ ५६।५७ ।
नारदेनैवमुक्तो तु श्रुत्वा स द्विजसत्तमः‡ ।
प्रणम्य शिरसा पादौ निमिरुद्विग्नमानसः ।
भीतोगद्गदया वाचा निश्वसंश्च मुहुर्मुहुः ।
सव्रीडा भाषते विप्रः कारुण्येन समन्वितः ॥ ५८।५९ ।
अहो मुनिवरश्रेष्ठ अहो धर्म्मविदां वर ।
सान्त्वितोऽस्मि त्वया विप्र वचनैर्मधुराक्षरैः ॥ ६० ।
प्रणयात्सौहृदाद्वापि स्नेहाद्वक्ष्यामि तच्छृणु ।
शोको निरन्तरं चित्ते§ ममैतद्धृदि वर्त्तते ॥ ६१ ।
कृतस्नेहस्य पुत्त्रार्थे मया सङ्कल्प्य यत्कृतम् ।
तर्पयित्वा द्विजान् सप्त अन्नाद्येन फलेन च ।

* गावपक्षिण इति (क), (ख)। † सर्व्वे कालमुदीच्यन्ते, अथवा सर्व्वः कालमुदीच्यते इति साधु। ‡ श्रुत्वा तु द्विजसत्तम इति (ग)। § शोकस्य निरतं चित्तं (शोकस्य नियतं चित्तं ?) इति (ग)।

पश्चाद्विसर्ज्जितं पिण्डं दर्भानास्तीर्य्य भूतले ।
उदकानयनञ्चैव ह्यपसव्येन वासितम् ॥ ६२। ६३ ।
शोकस्य तु प्रभावेण एतत्कर्म्म मया कृतम् ।
अनार्य्यजुष्टमस्वर्ग्यमकीर्त्तिकरणं द्विज* ।
नष्टबुद्धिस्मृतिसत्त्वो ह्यज्ञानेन विमोहितः ॥ ६४ ।
न च श्रुतं मया पूर्व्वं न देवैर्ऋषिभिः कृतम् ।
भयं तीव्रं प्रपश्यामि मुनिशापात्सुदारुणात् ॥ ६५ ।

नारद उवाच ।

न भेतव्यं द्विजश्रेष्ठ पितरं शरणं व्रज ।
अधर्म्मं न च पश्यामि धर्म्मो नैवात्र संशयः ॥ ६६ ।
नारदेनैवमुक्तस्तु निमिर्ध्यानमुपाविशत् ।
कर्म्मणा मनसा वाचा पितरं शरणं गतः । ६७ ।
ततोऽतिचिन्तयामास वंशकर्त्तारमात्मनः ।
ध्यायमानस्ततोऽप्याशु आजगाम तपोधनम् ॥ ६८ ।
पुत्रशोकेन सन्तप्तं पुत्रं दृष्ट्वा तपोधनम् ।
पुत्रमाश्वासयामास वाग्भिरिष्टाभिरव्ययैः† ॥ ६९ ।
निमे संकल्पितस्तेऽयं पितृयज्ञस्तपोधन ।
पितृयज्ञेति निर्द्दिष्टो धर्म्मोऽयं ब्रह्मणा स्वयम् ॥ ७० ।
ततो ह्यतितरो धर्म्मः क्रतुरेकः प्रतिष्ठितः ।
कृतः स्वयम्भुवा पूर्व्वं श्राद्धं यो विधिवत्तमः ॥ ७१ ।

---

* भगवद्गीता "अनार्य्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्ज्जुन" । † व्ययाभिरिति साधु ।

शृण्वतो नारदस्यापि विधिं विधिविदां वरः।
श्राद्धकर्म्मविधिश्चैव प्रेतकर्म्म च या क्रिया।
शृणु सुन्दरि तत्त्वेन यथा दाता सपुत्रकः।
मम चैव प्रसादेन तस्य बुद्धिं ददाम्यहम्। ७२।७३।
जातस्य सर्व्वभूतस्य कालमृत्युरुपस्थितः।
अवश्यमेव गन्तव्यं धर्म्मराजस्य शासनात्॥ ७४।
अमरत्वं न पश्यामि पिपीलादीनि जन्तवः*।
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च†।
मोक्षः कर्म्मविशेषेण प्रायश्चित्तेन च ध्रुवम्॥ ७५।
सत्त्वं रजस्तमश्चैव त्रयः शारीरजाः स्मृताः।
अल्पायुषो नराः पश्चाद्भविष्यन्ति युगक्षये॥ ७६।
सात्त्विकं नाऽवबुध्यन्ति कर्म्मदोषेण तामसः।
तामसं नरकं विन्द्या‡त्तिर्य्यग्योनिश्च राक्षसीम्॥ ७७।
सात्त्विकं मुक्तियानाय यान्ति वेदविदो जनाः।
धर्म्मज्ञानं तथैश्वर्य्यं वैराग्यमिति सात्त्विकम्॥ ७८।
क्रूरो भीरुर्विषादी च हिंसको निरपत्रपः।
अज्ञानान्धश्च पैशाचमेतेषां तामसा गुणाः॥ ७९।
तामसं तद्विजानीयादुच्यमानो न बुध्यति।
दुर्म्मदोऽश्रद्धधानश्च विज्ञेयास्तामसा नराः॥ ८०।
प्रबलो वाचि युक्तश्च कलबुद्धिः सदायतः।

* पिपीलादयो जन्तव इति साधु। † भगवद्गीता द्रष्टव्या। ‡ विन्देदिति साधु।

शूरः सर्व्वेषु व्यक्तात्मा विज्ञेया राजसा नराः ॥ ८१ ।
क्षान्तो दान्तो विशुद्धात्मा विज्ञेयः श्रद्धयान्वितः ।
तपःस्वाध्यायशीलश्च एतेषां सात्विका गुणाः ॥ ८२ ।
एवं सञ्चिन्तयानस्तु न शोकं कर्त्तुमर्हसि ।
त्यज शोकं महाभाग शोकः सर्व्वविनाशनः
शोको दहति गात्राणि बुद्धिः शोकेन नश्यति ॥ ८३ ।
लज्जा धृतिश्च धर्म्मश्च श्रीः कीर्त्तिश्च स्मृतिर्नयः ।
त्यजन्ति सर्व्वधर्म्मश्च शोकेनापहतं नरम् ।
एवं शोकं त्यजित्वा* तु निःशोको भव पुत्रक ॥ ८४ ।
मूढ़ः स्नेहप्रभावेण कृत्वा हिंसानृते तथा ।
पच्यते नरके घोरे ह्यात्मदोषैर्वसुन्धरे ॥ ८५ ।
स्नेहं सर्व्वेषु संयम्य बुद्धिं धर्म्मे नियोजयेत् ।
धर्म्मलोकहितार्थाय शृणु सत्यं ब्रवीम्यहम् ॥ ८६ ।
चतुर्व्वर्णस्य वक्ष्यामि यथ स्वायम्भुवोऽब्रवीत् ।
नेमिप्रभृतीनामेवं येन श्राद्धं प्रवर्त्तते ॥ ८७ ।
कण्ठस्थानं गते जीवे भीतिविभ्रान्तमानसः ।
ज्ञात्वा च विह्वलं तत्र शीघ्रं निःसारयेद्गृहात् ॥ ८८ ।
कुशास्तरणशायी च दिशः सर्व्वा न पश्यति ।
लब्धस्मृतिर्मुहूर्त्तन्तु यावज्जीवो न पश्यति† ।
वाचयेत्स्नेहभावेन भूमिदेवा द्विजातयः ।

* त्यक्तेति साधु। † न नश्यतीति (ग)।

सुवर्णञ्च हिरण्यञ्च यथोत्पन्नेन माधवि ॥ ८९।९० ।
परलोकहितार्थाय गोप्रदानं विशिष्यते ।
सर्व्वदेवमया गाव ईश्वरेणावतारिताः ।
अमृतं चरयन्त्यश्च प्रचरन्ति महीतले ।
एतासाञ्चैव दानेन शीघ्रं मुच्यति* किल्बिषात् ॥ ९१।९२ ।
पश्चाच्छ्रुतिपथं दिव्यमुत्कर्णेन च श्रावयेत् ।
यावत्प्राणान् प्रमुञ्चेत† कृत्वा कर्म्म सुदुष्करम् ॥ ९३ ।
दृष्ट्वा सुविह्वलं ह्येनं मम मार्गानुसारिणम् ।
प्रयाणकाले तु नरो मन्त्रेण विधिपूर्व्वकम् ।
मन्त्रेणानेन कर्त्तव्यं सर्व्वसंसारमोचणम् ।
मधुपर्कं त्वरन्‡ गृह्य इमं मन्त्रमुदाहरेत् ॥ ९४।९५ ।
मन्त्रः—ओं गृहाण वै मे मधुपर्कमाद्यं
संसारनाशनकरं त्वमृतेन तुल्यम् ।
नारायणेन रचितं भगवत्प्रियाणां
दाहे च शान्तिकरणं सुरलोकपूज्यम् ॥ ९६ ।
तत एतेन मन्त्रेण दद्याद्वै मधुपर्ककम् ।
पुरुषो मृत्युकाले तु परलोकसुखावहम् ।
एवं विनिःसृतात्प्राणात्संसारञ्च न गच्छति ॥ ९७ ।
नष्टसंज्ञं समुद्दिश्य ज्ञात्वा मृत्युवशङ्गतम् ।
महावनस्पतिङ्गत्वा गन्धांश्च विविधानपि ।

---

* मुच्यते इति साधु । † प्रमुञ्चेदिति साधु । ‡ त्वरमाण इति साधु ।

घृततैलसमायुक्तं कृत्वा वै देहशोधनम् ।
निर्जीवस्य यकारस्यास्य तत्सर्वं परिकल्प्य च ।
दक्षिणायां शिरः कृत्वा सलिले तन्निधाप्य च ।
तीर्थान्यावाहनङ्कृत्वा स्नापनं तस्य कारयेत्॥ ९८।९९।१००।
गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः ।
कुरुक्षेत्रञ्च गङ्गा च यमुना च सरिद्वरा ।
कौशिकी च पयोष्णी च सर्व्वपापप्रणाशिनी ।
गण्डकी भद्रनामा च सरयूर्बलदा तथा ।
वनानि नव वाराहे तीर्थे पिण्डारके तथा ।
पृथिव्यां यानि तीर्थानि चत्वारः सागरास्तथा ।
सर्व्वाणि मनसा ध्यात्वा स्नानमेवन्तु कारयेत्॥१०१ १०२।१०
प्राणहतन्तु तं ज्ञात्वा चिताङ्कृत्वा विधानतः ।
तस्या उपरि तं स्थाप्य दक्षिणाग्रं शिरस्तथा ।
दिव्यानग्निमुखान्ध्यात्वा गृह्य हस्ते हुताशनम् ।
प्रज्वाल्य विधिवत्तत्र मन्त्रमेतदुदाहरेत् ॥ १०४।१०५ ।
कृत्वा सुदुष्करङ्कर्म्म जानता वाप्यजानता ।
मृत्युकालवशम्प्राप्य नरः पञ्चत्वमागतः ।
धर्म्माधर्म्मसमायुक्तो लोभमोहसमावृतः ।
दह एतस्य गात्राणि देवलोकाय गच्छतु* ॥ १०६।१०७ ।
एवमुक्त्वा ततः शीघ्रङ्कृत्वा चैव प्रदक्षिणाम् ।
ज्वलमानं† तदा वह्निं शिरःस्थाने प्रदापयेत् ॥ १०८ ।

---

* गच्छतीति (ग) । † ज्वलन्तमिति साधु ।

चातुर्वर्ण्येषु संस्कारमेवं भवति पुत्रक ।
गात्राणि वाससी चैव प्रक्षाल्य विनिवर्त्तयेत् ॥ १०९ ।
मृतं नाम ततोद्दिश्य* दद्यात्पिण्डं महीतले ।
तदाप्रभृति चाशौचं देवकर्म्म न कारयेत् ॥ ११० ।

इति वराहपुराणे भगवच्छास्त्रे सप्ताशीत्यधि-
कशततमोऽध्यायः ।

# अष्टाशीत्यधिकशततमोऽध्यायः ।

धरण्युवाच ।
देवदेवोऽसि देवानां लोकनाथोऽपरिग्रहः ।
आशौचकर्म्म विधिवच्छ्रोतुमिच्छामि माधव ॥ १ ।
वराह उवाच ।
आशौचं शृणु कल्याणि यथा शुध्यन्ति मानवाः ।
गतायुषस्तृतीयेन स्नातव्या स्रोतसा नदी ।
पिण्डं सञ्चूर्ण्य* दद्यात्त्रीणि दद्याज्जलाञ्जलीन् ॥ २ ।
चतुर्थे पञ्चमे षष्ठे पिण्डमेकं जलाञ्जलिम् ।
अन्यस्थानेषु दातव्यं स्नानात्त्वहनि सप्तमे ॥ ३ ।

* तत उद्दिश्य इति साधु ।

* पिण्डसंक्रमणमिति (ग) ।

एवम्प्रतिदिनं कार्य्यं यावच्च दशमं दिनम् ।
धारादिना वस्त्रशौचं दिने च दशमे तथा ।
तिलामलककल्केन गोमजैः स्नानमाचरेत् ।
पिण्डदानं विवर्त्याथ क्षौरकर्म्म तु कारयेत्* ।
स्नानङ्कृत्वा विधानेन ज्ञातिभिः स्वगृहं व्रजेत् ॥ ४।५ ।
एकादशे च दिवसे एकोद्दिष्टं यथाविधि ।
स्नात्वा चैव शुचिर्भूत्वा प्रेतं विप्रेषु योजयेत् ॥ ६ ।
एकोद्दिष्टं मनुष्याणां चातुर्वर्ण्यस्य माधवि ।
यथा कं द्रव्यसंयुक्तं स्वं विप्रं भोजयेत्तदा ।
स्नात्वा चैवं शुचिर्भूत्वा प्रेतं प्रेतेषु योजयेत् ॥ ७ ।
एकोद्दिष्टन्तु द्रव्याणां चातुर्वर्ण्यस्य माधवि ।
अपाकद्रव्यं संगृह्य ब्रह्मणो वचनं यथा ।
त्रिषु वर्णेषु कर्त्तव्यं पाकभोजनमित्युत ।
शुश्रूषया विपन्नानां शूद्राणाञ्च वरानने ॥ ८।९ ।
त्रयोदशे दिने प्राप्ते पाकेन भोजयेद्द्विजान् ।
मृतस्य नाम चोद्दिश्य यस्यार्थे च प्रयोजितः† ॥ १० ।
स्वरितस्येति‡ सङ्कल्प्य कृत्वा ब्राह्मणमन्दिरम् ।
गत्वा निमन्त्रितं विप्रं नम्रो भूत्वा समाहितः ।
मन्त्रेणानेन भो देवि मनसैव पठन्ति तम् ॥ ११ ।

---

* समाचरेदिति (ग) । † यस्यार्थे विप्रयोजित इति (ग) । ‡ श्वः करिष्येति श्वः करिष्ये इति साधु ।

मतोऽसि दिव्यलोके त्वं कृतान्तविहितेन च।
मनसा वायुभूतस्त्वं विप्रमेनं समाश्रय ॥ १२ ॥
अस्तङ्गते तथादित्ये गत्वा ब्राह्मणमन्दिरम्।
दत्त्वा तु पाद्यं विधिवन्नमस्कृत्य द्विजोत्तमम्।
पादसंवाहनङ्कार्य्यं प्रेतस्य हितकाम्यया।
प्रेतभोगशरीरे तु ब्राह्मणस्य च सुन्दरि ॥ १३।१४ ॥
यावत्तु तिष्ठते* तत्र प्रेतभोगमुदीर्यते।
तावन्न संस्पृशेद्भूमे मम गात्रं प्रतिष्ठितम् ॥ १५ ॥
प्रभातायान्तु शर्व्वर्य्यामुदिते च दिवाकरे।
श्मश्रुकर्म्म प्रकर्त्तव्यं विप्रस्य तु यथाविधि।
स्नापनाभ्यञ्जनङ्कार्य्यं प्रेतसन्तोषदायकम् ॥ १६ ॥
गृहीत्वा भूमिभागञ्च स्थण्डिलं तत्र कारयेत्।
निपातदेशं संगृह्य शुचिदेशे समाहितः ॥ १७ ॥
नदीकूले निखाते वा प्रेतभूमिं विनिर्द्दिशेत्।
चतुःषष्टिकृतं भागं यथावत्सुकृतं भवेत् ॥ १८ ॥
ततो दक्षिणपूर्व्वेषु दिग्विभागेषु सुन्दरि।
छायायां कुञ्जरस्यापि नदीकूलद्रुमे तथा।
चाण्डालादिप्रहीणे तु प्रेतकार्य्यं समाचरेत् ॥ ॥ १९ ॥
यं देशञ्च न पश्यन्ति† कुक्कुटः श्वानशूकराः।
श्वा चापोहति रावेण गर्ज्जितेन च शूकरः।

* तिष्ठतीति खपु। † यं देशं नैव पश्यन्तीति (ग)।

कुक्कुटपक्षवातेन चाण्डालस्य यथा धरे ।
तत्र कुर्व्वन्ति ये श्राद्धं पितॄणां बन्धनप्रदम् ।
वर्ज्जनीया बुधैरेते प्रेतकार्य्येषु सुन्दरि ॥ २ ।२१ ।
देवतासुरगन्धर्व्वाः पिशाचोरगराक्षसाः ।
नागा भूतानि यच्चास्य ये च स्थावरजङ्गमाः ।
स्नानङ्कृत्वा यथा देवि तव पृष्ठे प्रतिष्ठिताः ।
धारयिष्यामि सर्व्वाणि विष्णुमायाततं जगत् ॥ २२।२३ ।
चण्डालमादितः कृत्वा नराणान्तु शुभाशुभम् ।
स्नानङ्कुर्व्वन्तु ते भूमि स्थण्डिले तदनन्तरे ॥ २४ ।
अकृत्वा पृथिवीभागं निवापं ये तु कुर्व्वते ।
त्वदधीनं जगद्भद्रे तवोच्छिष्टं हुतं भवेत् ॥ २५ ।
न देवाः पितरस्तस्य गृह्णन्तीह कदाचन ।
पतन्ति नरके घोरे तेनोच्छिष्टेन सुन्दरि ॥ २६ ।
स्थण्डिले प्रेतभागन्तु दद्यात्पूर्व्वाह्णिकन्तु तम् ।
कृत्वा तु पिण्डसङ्कल्पं नामगोत्रेण माधवि ।
पश्चादश्नन्ति गोत्राणि कुलजाश्चैकभोजनाः ।
न दद्यादन्यगोत्रेभ्यो ये न भुञ्जन्ति तत्र वै ॥ २७।२८ ।
चतुर्णामपि वर्णानां प्रेतकार्य्येषु सुन्दरि ।
एवं दत्तेन प्रीयन्ते प्रेतलोकगता नराः ॥ २९ ।
अदत्त्वा प्रेतभागन्तु भुङ्क्ते यस्तत्र मानवः ।
गत्वा महानदीं सोऽपि सचेलं स्नानमाचरेत् ॥ ३० ।
तीर्थानि मनसा गत्वा त्रिभिरभ्युक्षयेद्ध्रुवम् ।

एवं शुचिं ततः स्नात्वा मात्मवान् श्रीममानयेत् ॥ ३१ ॥

आगतांश्च द्विजान्दृष्ट्वा कर्त्तव्या स्वागतक्रिया ।

अर्घ्यं पाद्यं ततो दद्याद्धृष्टपुष्टेन माधवि ।

आसनञ्चोपकल्पेत मन्त्रेण विधिपूर्व्वकम् ॥ ३२ ।

मन्त्रः—इदन्ते आसनं दत्तं विश्रामं क्रियतां द्विज ।

कुरुष्व मे प्रसादञ्च सुप्रसीद द्विजोत्तम ॥ ३३ ।

उपवेश्यासने विप्रं छत्रं सङ्कल्पयेत्पुनः ।

निवारणार्थमाकाशे भूतागमनचारिणः ।

देवगन्धर्व्वयक्षार्थं सिद्धसङ्घा महासुराः ।

धारणार्थं तथाकाशे छत्रं तेजस्विनाङ्कृतम् ।

प्रेतस्य च हितार्थाय धारयेत वसुन्धरे ॥ ३४।३५ ।

पूर्व्वं* संहृष्टतुष्टेन प्रेतभागञ्च दापयेत् ।

छत्रमावरणार्थन्तु दद्याच्चैव द्विजातये ॥ ३६ ।

आकाशे तत्र पश्यन्ति देवाः सिद्धपुरोगमाः ।

गन्धर्व्वा ह्यसुराः सिद्धा राक्षसाः पिशिताशिनः ॥ ३७ ।

पश्यमानेषु† सर्व्वेषु प्रेतः संक्रीड़ितो भवेत् ।

क्रीड़मानं ततो दृष्ट्वा हसन्त्यसुरराक्षसाः ॥ ३८ ।

एवं निवारणं छत्रमादित्येन कृतं पुरा ।

प्रेतलोकगतानाञ्च सर्व्वदेवर्षिणा पुरा ॥ ३९ ।

अग्निवर्षं शिलावर्षं तप्तं तत्र जलोदकम् ।

---

* एवमिति (ग) ।  † पश्यन्स्विति साधु ।

भस्मवर्षं ततो घोरमहोरात्रेण माधवि ।
एवं निवारणं छत्रं दद्याद्विप्राय माधवि ॥ ४० ।
पश्चादुपानहौ दद्यात्पादस्पर्शकरे शुभे ।
उपानहे च वक्ष्यामि दत्ते भवति यत्फलम् ।
पादौ च तौ न दह्येत यमस्य विषयङ्गते ॥ ४१ ।
तमोऽन्धकारविषमं दुर्गमं घोरदर्शनम् ।
एकाकी दुःसहं लोके पथा येन स गच्छति ॥ ४२ ।
कालो मृत्युश्च दूतश्च यष्टिमुद्यम्य पृष्ठतः ।
अहोरात्रेण घोरेण प्रेतं नयति माधवि ।
दद्यात्तदर्थं विप्राय पदत्रे च सुखावहे* ॥ ४३ ।
तप्तवालुमयी भूमिः कण्टकैरुपसंस्तृता ।
तेन दुर्गाणि तरति दत्तेनोपानहेन तु ॥ ४४ ।
पश्चाद्धूपञ्च दीपञ्च दद्याद्वै मन्त्रपूर्व्वकम् ।
याति येन विजानीयात्पृथक् प्रेतेन योजयेत् ॥ ४५ ।
नामगोत्रमुदाहृत्य प्रेताय तदनन्तरम् ।
शीघ्रमावाहयेद्भूमौ दर्भपात्रे च भूतले ॥ ४६ ।
मन्त्रः—इहलोकं परित्यज्य गतोऽसि परमाङ्गतिम् ।
गृहाण† गन्धं मुदा युक्तो भक्त्या प्रेतोपपादितम्‡ ॥ ४७
गन्धमन्त्रः—सर्व्वगन्धं सर्व्वपुष्पं धूपं दीपं तथैव च ।

* पदत्र च सुखावहे इति ग । † गृहाणेति माध । ‡ भक्त्या मे प्रतिपादितमिति (ग) ।

प्रतिगृह्णीष्व* विप्रेन्द्र प्रेतमोचप्रदो भव ॥ ४८ ।
एवं वस्त्राणि विप्राय सर्वाण्याभरणानि च ।
पुनः पुनश्च पक्वान्नं प्रयच्छेत्† वसुन्धरे ।
एवमादीनि द्रव्याणि प्रेतभागानि‡ सर्व्वशः ॥ ४९ ।
पादशौचादि त्रिःकृत्वा चातुर्वर्ण्यस्य माधवि ।
एवं विधिः प्रयोक्तव्यः शूद्राणां मन्त्रवर्ज्जितम् ।
अमन्त्रस्य च शूद्रस्य विप्रो मन्त्रेण गृह्णति§ ॥ ५० ।
एतत्सर्व्वं विनिर्वर्त्य पक्वान्नं भोजयेद्विजम् ।
भोज्यमानेन विप्रेण ज्ञानशुद्धेन सुन्दरि ॥ ५१ ।
प्रेताय प्रथमं दद्यान्न स्पृशेत परात्परम् ।
सर्व्वं व्यञ्जनसंयुक्तं प्रेतभागम्प्रकल्पयेत् ॥ ५२ ।
देवत्वं ब्राह्मणत्वञ्च प्रेतपिण्डे प्रदीयते ।
मानुषत्वं निवापेषु ज्ञातव्यं सततं बुधैः ॥ ५३ ।
पितृस्थाने प्रदातव्यं विधानान्मन्त्रसंयुतम्¶ ।
एवं विप्रेषु प्रेतेषु एककालो न विद्यते ॥ ५४ ।
हस्तशौचं पुनः कृत्वा उपस्पृश्य यथाविधि ।
समन्त्रं प्रतिगृह्णाति पक्वान्नं भक्ष्यभोजनम् ॥ ५५ ।
भुज्यमानस्य|| विप्रस्य प्रेतभागञ्च नित्यशः ।
ज्ञातिवर्गेषु गोत्रेषु सम्बन्धिस्वजनेषु च ।

* प्रतिगृहाणेति साधु । † प्रयच्छेदिति साधु । ‡ प्रेतभागानिति साधु ।
§ गृह्णातीति साधु । ¶ विधिना मन्त्रसंयुतमिति (ग) । || भुञ्जानस्येति साधु ।

पिपीलिकादिभूतानि* प्रेतभागञ्च सर्व्वशः ।
कृत्वा तु तर्पणं देवि यस्यार्थे तस्य कल्पयेत् ॥ ७३ ।
भुक्तेषु तेषु सर्व्वेषु दीनानाथान् प्रतर्प्य च ।
प्रेतराजपुरं गत्वा प्रयच्छति स माधवि ।
सर्व्वान्नमक्षयं तस्य दत्तं भवति सुन्दरि ॥ ७४ ।
कर्त्तव्य एवं संस्कारः प्रेतभावविशोधनः ।
नेमिप्रभृतिभिः शौचं चातुर्वर्ण्यस्य सर्व्वतः ।
भविष्यति न सन्देहो दृष्टपूर्व्वं स्वयम्भुवा ॥ ७५ ।
कृत्वा तु धर्म्मसङ्कल्पं प्रेतकार्य्यं विशेषतः ।
न भेतव्यं त्वया पुत्त्र प्रेतकार्य्ये कृते सति ॥ ७६ ।
विस्तरेण मया प्रोक्तं प्रत्यक्षं नारदस्य च ।
त्वया वत्स सुतस्यार्थे क्रतुरेकः प्रतिष्ठितः ।
तस्मात्प्रभृति लोकेषु पितृयज्ञो भविष्यति ॥ ७७ ।
एवं यास्यसि वत्स त्वं न शोकं कर्त्तुमर्हसि ।
शिवलोकं ब्रह्मलोकं विष्णुलोकं न संशयः ॥ ७८ ।
एवमुक्त्वा तदात्रेयः पितृकर्म्म यथाविधि ।
दातव्यन्तु तृतीये च मासे सप्त नवेषु च† ।
एकादशे तथा मासे दद्यात्सांवत्सरीं क्रियाम् ॥ ७९
प्रेतस्यावाहनङ्कृत्वा शुचिर्भूत्वा समाहितः ।

* भूतानीति सार्व्वत्रिकः पाठः भूतानामिति कृते तु सुसङ्गतिः स्यात् । † नवा साधु, तथा कृते न छन्दोदोषः स्यात् ।

पक्कान्नं भोजयेत्तत्र प्रेतभागं यथाविधि ॥ ८० ।
मन्त्रयुक्तोपचारेण चातुर्वर्ण्यस्य सर्व्वतः ।
वृषलानाममन्त्राणां प्रयोक्तव्यं यथाविधि ॥ ८१ ।
प्रेतकार्य्ये निवृत्ते तु पूर्णे संवत्सरे तथा ।
प्रयान्ति जन्तवः केचिद्गत्वा गच्छन्ति चापरे ॥ ८२ ।
पितामहः स्नुषा भार्य्या ज्ञातिसम्बन्धिबान्धवाः ।
यद्येते बहवः सन्ति स्वप्नोपममिदं जगत् ॥ ८३ ।
स्वयं मुहूर्त्तं रोदित्वा ततो याति पराङ्मुखः ।
स्नेहपाशेन बद्धो वै* क्षणार्द्धान्मुच्यते ततः ॥ ८४ ।
कस्य माता पिता कस्य कस्य भार्य्या सुतास्तथा ।
युगे युगेषु वर्त्तन्ते मोहपाशेन बध्यते† ।
स्नेहभावेन कर्त्तव्यः संस्कारो हि मृतस्य च ॥ ८५ ।
मातापितृसहस्राणि पुत्त्रदारशतानि च ।
संसारेष्वनुभूतानि‡ कस्य ते कस्य वा वयम् ॥ ८६ ।
स्वयम्भुवा विधिः प्रोक्तः प्रेतसंस्कारलक्षणः§ ।
प्रेतकार्य्ये निवृत्ते तु पितृत्वमुपजायते ।
मासि मासि ह्यमायां वै कर्त्तव्यं पितृतर्पणम् ॥ ८७ ।
पिता पितामहश्चैव तथैव प्रपितामहः ।
जुहुयाद्ब्राह्मणमुखे तृप्तिर्भवति शाश्वती ॥ ८८ ।

* नद्धोवै इति (ग)। † बद्धत इति (ग)। ‡ अनुभूतस्येति (ग)। § प्रेतसंसार-लक्षण इति (ग)।

एवमुक्त्वा स आत्रेयः पितृयज्ञविनिश्चयम् ।
मुहूर्त्तं ध्यानमास्थाय तत्रैवान्तरधीयत ॥ ८९ ।

नारद उवाच ।

श्रुत्वा तु मृतसंस्कारमात्रेयोक्तं यथाविधि ।
चातुर्वर्ण्यस्य सर्व्वस्य त्वया धर्म्मः प्रतिष्ठितः ॥ ९० ।
पितृयज्ञमुपश्राद्धे मासि मासि दिने तथा ।
वर्त्तयन्ति यथान्यायमृषयश्च तपोधनाः ।
निर्द्दिष्टं ब्राह्मणानां वै शूद्राणां मन्त्रवर्ज्जितम् ९१ ।
नेमिना च कृतं श्राद्धं ततः प्रभृति वै द्विजाः ।
कुर्व्वन्ति सततं श्राद्धं नेमिश्राद्धं तदुच्यते ॥ ९२ ।
स्वस्त्यस्तु ते महाभाग यास्यामि मुनिसत्तम ।
एवमुक्त्वा मुनिश्रेष्ठो नारदो द्विजसत्तमः ।
तेजसा द्योतयन्सर्व्वं गतः शक्रपुरम्प्रति ॥ ९३ ।
एवञ्च पिण्डसङ्कल्पं श्राद्धोत्पत्तिश्च माधवि ।
आत्रेयेणैव मुनिना स्थापितं ब्राह्मणेषु च ॥ ९४ ।

इति वराहपुराणे भगवच्छास्त्रे पिण्डकल्पश्राद्धोत्पत्तिर्नाम
अष्टाशीत्यधिकशततमोऽध्यायः ।

# ऊननवत्यधिकशततमोऽध्यायः ।

धरण्युवाच ।

श्रुतं श्राद्धं यथावृत्तं शौचाशौचांश्च सर्व्वशः ।
चतुर्णामपि वर्णानां प्रेतभोज्यं यथाविधि ।
उत्पन्नं संशयं मेऽद्य भगवन्वक्तुमर्हसि ॥ १ ।
चातुर्व्वर्ण्येषु सर्व्वेषु दद्याद्दानं द्विजोत्तमे ।
प्रतिगृह्णन्ति ये तत्र प्रेतभागं विशेषतः ॥ २ ।
अनिष्टं गर्हितं तत्र प्रेतेन सह भोजनम् ।
भुक्त्वा तेषां द्विजो देव मुच्यते केन कर्म्मणा ॥ ३ ।
कथन्ते तारयिष्यन्ति दातारं पुरुषोत्तम ।
प्रणयात्स्त्रीस्वभावेन पृच्छामि त्वां जनार्द्दन ॥ ४ ।
एवमुक्तोऽपि भूम्याऽसौ शङ्खदुन्दुभिनिस्वनः ।
वराहरूपी भगवान्प्रत्युवाच वसुन्धराम् ॥ ५ ।

वराह उवाच ।

साधु भूमि वरारोहे यस्मात्त्वम्परिपृच्छसि ।
कथयिष्यामि ते देवि तारयन्ति यथा द्विजाः ॥ ६ ।
भुक्त्वा तु प्रेतभोज्यानि ब्राह्मणो ज्ञानदुर्ल्लभः ।
विशोधनार्थं देहस्य उपवासन्तु कारयेत् । ७ ।
अहोरात्रोषितो भूत्वा विप्रो स्नानेन संयुतः ।
पूर्व्वसन्ध्यां विनिर्वर्त्य कृत्वा चैवाग्नितर्पणम् ।
तिलहोमं प्रकुर्व्वीत शान्तिमङ्गलपाठकः ।

प्राक्स्रोतां च नदीं गत्वा स्नानं कृत्वा विधानतः ।
पञ्चगव्यं ततः पीत्वा मधुपर्केण संयुतम् ।
औडुम्बरं च पात्रे च कृत्वा ग्राम्युदकानि च ।
प्रोक्षयेच्च गृहं सर्व्वं यथाविध्यस्त्वयं द्विजः ॥ ८।९ १० ।
देवाश्चाग्निमुखाः सर्व्वे तर्पयित्वा विभागशः ।
भूतानाञ्च बलिं दद्याद्ब्राह्मणानाञ्च भोजनम् ।
एका गौस्तु प्रदातव्या पापक्षयकरी तदा ॥ ११ ।
एवं तु कुरुते यश्च स याति परमां गतिम् ।
प्रेताग्निं चोदरस्थं तु कालधर्म्ममुपागतः ।
आकल्पं नरके घोरं वसमानः* सुदुःखितः ।
प्राप्नोति राक्षसत्वं वै ततो मुच्यति† किल्बिषात् ॥ १२ ।
प्रायश्चित्तन्तु कर्त्तव्यं दाहभोक्तृसुखावहम् ।
गावो हस्त्यश्व-आदीनि सागरान्तानि माधवि ।
प्रतिगृह्णन्ति ये विप्रा मन्त्रेण विधिपूर्व्वकम् ।
प्रायश्चित्तञ्चरेयस्तु स तारयति निश्चितम् ॥ १३।१४ ।
द्विजो ज्ञानेन सम्पन्नो वेदाभ्यासरतः सदा ।
स तारयति चात्मानं दातारं नैव संशयः‡ ।
ब्राह्मणो नाकमन्त्रज्ञस्त्रिभिर्वर्णैर्धराधरे ॥ १५ ।
दैवे च जन्मनक्षत्रे श्राद्धकाले च पर्व्वसु ।

* वसमान इति आर्षं, वसन्निति साधु । † मुच्यते इति साधु । ‡ नात्र संशय इति (ग) ।

प्रेतकार्य्येषु सर्व्वेषु परीक्ष्य निपुणं द्विजम्।
वेदविद्याव्रतस्नातमवृषधर्म्मनिरन्तरम्*।
शीलयुक्तं सुसन्तुष्टं धर्म्मज्ञं सत्यवादिनम्।
क्षमायुक्तञ्च शास्त्रज्ञमहिंसायां रतं तथा।
एभिर्गुणैश्च संयुक्तं ब्राह्मणं प्राप्य सत्वरः।
दद्याद्दानानि विप्राय स वै तारयितुं क्षमः॥ १६ १७।१८।
कुण्डगोलेषु यद्दत्तं निष्फलं तत्तु जायते।
कुण्डगोलः प्रतिग्राही दातारञ्चाप्यधो नयेत्॥ १९।
पित्रे कर्म्मणि चैकन्तु कुण्डं वा गोलकं तथा।
दृष्ट्वा तं पितरो यान्ति निराशा निरयं द्रुतम्॥ २०।
दैवे कर्म्मणि चैवन्तु तेषां दत्तं सुनिष्फलम्।
तस्माद्दानं न दातव्यमपात्राय यशस्विनि।
अत्रार्थे यत्पुरा वृत्तं तच्छृणुष्व वसुन्धरे॥ २१।
अवन्तीविषये कश्चिद्राजा अत्यन्तधार्म्मिकः।
नाम्ना मेधातिथिश्चैव सत्यधर्म्मविवर्द्धनः॥ २२।
राज्ञः पुरोहितश्चासीच्चन्द्रशर्म्मा द्विजोत्तमः।
आत्रेयगोत्रे चोत्पन्नो वेदवादरतः सदा॥ २३।
स राजा ब्राह्मणेभ्यश्च गा ददाति दिने दिने।
शतं दत्त्वा विधानेन पश्चाद्भुङ्क्ते नराधिपः॥ २४।
गते बहुतिथे काले राज्ञो मेधातिथेः पितुः।
श्राद्धस्य दिवसः प्राप्तो वैशाखे वरवर्णिनि॥ २५।

* षट्कर्म्मनिरतं शुचिमिति ग॰।

स विप्रानाह्वयामास पितुर्वै श्राद्धकारणात् ।
आगतान्ब्राह्मणान्दृष्ट्वा मेधातिथिरकल्मषः ।
विप्रान्नत्वा गुरुश्चैव आचारश्च मथाकरोत् ॥ २६ ।
श्राद्धङ्कृत्वा तु विधिवत्पिण्डान्निर्वाप्य यत्नतः ।
श्राद्धसङ्कल्पितं चान्नं विप्रेभ्यः प्रददौ बहु ॥ २७ ।
तस्मिन् ब्राह्मणः कश्चिद्दालकोऽवस्थितस्तदा ।
श्राद्धे सङ्कल्पितं चान्नं तस्मै दत्तं विधानतः ॥ २८ ।
तेनैव श्राद्धदोषेण राक्षसाः पितरस्तदा ।
स्वर्गाद्भ्रष्टा नरं ... वनं कण्टकसंयुतं ।
क्षुत्पिपासार्दिता नित्यं क्रन्दमानाः च पुनः पुनः ॥ २९ ।
कदाचिद्दैवयोगेन राजा मेधातिथिः स्वयम् ।
मृगयायां गतस्तत्र हिंस्रैः परिजनैर्वृतः ॥ ३० ।
तत्रावलम्बितान् दृष्ट्वा तानपृच्छद्द्विजप्रियः ।
के भवन्तोऽत्र संप्राप्ता दृश्यन्ते ते सुदुःखिताः ।
केन कर्मविपाकेन भवन्तः कथयन्तु मे ॥ ३१ ।

पितर ऊचुः ।

अस्माकं यज्ञकर्ता नित्यं नाम्ना मेधातिथिः प्रभुः ।
वयं तस्यैव पितरो नरकान्तमुपागताः ॥ ३२ ।
तेषान्तु वचनं श्रुत्वा राजा दुःखसमन्वितः ।
उवाच तान् पितॄन् सर्वान् सान्त्वपूर्वमिदं वचः ॥ ३३ ।

... [illegible] ... [illegible] ... [illegible]
[illegible]

मेधातिथिरुवाच ।

मेधातिथिरहं नाम्ना भवन्तः पितरो मम ।
केन वै कर्म्मदोषेण निरयङ्गन्तुमुद्यताः ॥ ३४ ।

पितर ऊचुः ।

श्राद्धं सङ्कल्पितं चान्नं दत्तं तद्दोलकाय वै ।
तेनैव कर्म्मदोषेण प्रयाता नरकं वयम् ।
तत्र दुःखं महद्भुक्त्वा पुनर्गच्छामि॰ वै दिवम् ॥ ३५ ।
पुत्र त्वञ्चैव दाता च सर्व्वलोकहिते रतः ।
असंख्यातास्त्वया दत्ता गावः सुबहुदक्षिणाः ॥ ३६ ।
तेन पुण्येन गच्छामः स्वर्गं ह्यतिसुखप्रदम् ।
तत्र चान्नं न विद्येत येन तृप्तिर्भविष्यति ।
पुनः श्राद्धस्त्वया कार्य्यं पितॄणां तृप्तिदायकम् ॥ ३७ ।
तेषान्तु वचनं श्रुत्वा मेधातिथिरगाद्गृहम् ।
आहूय चन्द्रशर्म्माणं गुरुं वचनमब्रवीत् ॥ ३८ ।

मेधातिथिरुवाच ।

चन्द्रशर्म्मन्पुनः श्राद्धं करिष्ये पितुरद्य वै ।
आहूयन्तां द्विजाः सर्व्वे कुण्डगोलकवर्ज्जिताः ॥ ३९ ।
इत्युक्तमात्रे वचने चन्द्रशर्म्मा पुरोहितः ।
आहूतवान्द्विजान् सर्व्वान्वेदपाठरतान्नमान् ।
साधूंश्चान्तान् कुलीनांश्च सुशीलाञ्चामवर्ज्जितान् ॥ ४० ।
राजा तु कारयामास श्राद्धं विधिविदां वरः ।

॰ गच्छाम. इति पाठः ।

कृते श्राद्धे ततः पश्चात्पिण्डान्निर्वाप्य यत्नतः।
ब्राह्मणान् भोजयामास दक्षिणाभिः प्रपूज्य च॥ ४१
पश्चाद्विसर्ज्जयामास स्वयन्तु बुभुजे नृपः।
भुक्त्वा पुनर्वनङ्गत्वा ददर्शाथ स्वकान् पितॄन्।
हृष्टान् पुष्टान् बलेयुक्तांस्तांश्च नु ममहे भृशम्॥ ४२।
दृष्ट्वा तु पितरश्चैवं राजानं पितृवत्सलम्।
ऊचुर्विनयसम्पन्नाः प्रीतिपूर्व्वमिदं वचः॥ ४३।
स्वस्ति तेऽस्तु गमिष्यामः स्वर्गलोकमतिः प्रभो।
इदानीञ्च त्वया कार्य्यमस्मद्धितमनुत्तमम्॥ ४४।
गोलकाय न दातव्यं दैवं पित्र्यमथापि वा।
तयोर्द्दत्तन्तु यस्माद्धि निष्फलं तत्स्मृतं बुधैः॥ ४५।
दैवे कर्म्मणि पित्र्ये च ब्राह्मणो नैव लभ्यते।
सङ्कल्पयित्वा* अन्नन्तु गोभ्यो देयं यथाविधि॥ ४६।
गवामभावे नद्यां वा क्षिपेदन्नं प्रयत्नतः।
अपात्राय न दातव्यं नास्तिकाय गुरुद्रुहे।
गोलकाय न दातव्यं कुण्डाय च विशेषतः॥ ४७।
इत्युक्त्वा पितरः सर्व्वे गताः स्वर्गाय भामिनि।
मेधातिथिरपि प्रायात्स्वपुरं ब्राह्मणैर्वृतः।
यदुक्तं पितृभिः सर्व्वं तच्चकार मुदा युतः॥ ४८।
तस्मात्ते कथितं देवि एकोऽपि ब्राह्मणोत्तमः।
सन्तारयति दुर्गेभ्यो विषमेभ्यो न संशयः॥ ४९।

* संकल्प्य इति माधु।

एकोऽपि तारितुं* शक्तो यथा नावा महार्णवम् ।
तस्माद्दानं प्रदातव्यं ब्राह्मणाय वसुन्धरे ॥ ५० ॥
देवासुरमनुष्याणां गन्धर्व्वोरगरक्षसाम् ।
सर्व्वे श्राद्धं हरिष्यन्ति नेमिप्रभृति माधवि ।
मासे मासे च वै पश्चात्पितृपक्षे तपोधनाः ॥ ५१ ॥

इति वराहपुराणे भगवच्छास्त्रे पितृकर्मोत्पत्तिर्नाम

ऊननवत्यधिकशततमोऽध्यायः ।

# नवत्यधिकशततमोऽध्यायः ।

धरण्युवाच ।

देवमानुषतिर्य्यक्षु प्रेतेषु नरकेषु च ।
आयान्ति जन्तवः केचिद्भूत्वा गच्छन्ति चापरे ॥ १ ॥
स्वप्नोपममिमं लोकं ह्यात्मकर्म्म शुभाशुभम् ।
वर्त्तते तिष्ठते देव तव मायाबलैर्जगत् ॥ २ ॥
क एते पितरो देव श्राद्धं भोक्ष्यन्ति योगतः ।
आत्मकर्म्मवशाल्लोके गतिः पञ्चसु वर्त्तते ॥ ३ ॥
कथमस्तं पिण्डसङ्कल्पं मासे मासे नियोजयेत् ।
के भवन्ति च भोक्तारः श्राद्धे पिण्डान् पितृक्रियाः ।
निश्चयं श्रोतुमिच्छामि परं कौतूहलं हि मे ॥ ४ ॥

---

* तारयितुं भक्ति पाठ ।

पृथिव्या एवमुक्तस्तु देवोनारायणोहरिः ।
वराहरूपी भगवान्प्रत्युवाच वसुन्धराम् ॥ ५ ।
वराह उवाच ।
साधु भूमि वरारोहे सर्व्वधर्म्मव्यवस्थिते ।
कथयिष्यामि ते देवि यन्मान्त्वम्परिपृच्छसि ॥ ६ ।
ये ते भवन्ति भोक्तारः पितृयज्ञेषु माधवि ।
पिता पितामहश्चैव तथैव प्रपितामहः ।
क्रियते पिण्डसङ्कल्पा मासे ह्येकदिने तथा ॥ ७ ।
ज्ञात्वा नक्षत्रसंयोगं पितृपक्षे ह्युपागते ।
तिथिं पर्व्व विजानीयात्तेषु दत्तं महत्फलम् ॥ ८ ।
करिष्यन्ति च ये श्राद्धं श्रद्धया ज्ञानिनो जनाः ।
तत्सर्व्वं कथयिष्यामि शृणुतां शुभलोचने ॥ ९ ।
केचिद्यजन्ति यज्ञं वै ब्रह्मयज्ञं द्विजातयः ।
केचिद्यजन्ति सुभगे देवयज्ञं हुताशने ॥ १० ।
केचिच्च भूतयज्ञेन वर्त्तयन्ति सुमध्यमे ।
केचिन्मनुष्ययज्ञेन पूजयन्ति गृहाश्रमे ।
पितृयज्ञञ्च भो देवि शृणु वक्ष्यामि निश्चयम् ॥ ११ ।
ये यजन्ति वरारोहे क्रतूनेकशतैरपि ।
सर्व्वे ते मयि वर्त्तन्ते सत्यमेतद्ब्रवीमि ते ॥ १२ ।
अग्निर्मुखञ्च देवानां हव्यकव्येषु माधवि ।
उत्तरोऽग्निरहञ्चैव दक्षिणाग्निरहं तथा ।
अहमाहवनीयोऽग्निः सर्व्वयज्ञेषु सुन्दरि ।

पावनः पावकश्चैव यज्ञमेव व्यवस्थितः ॥ १३।१४ ॥
सर्व्वेष्वेव तु कार्य्येषु दैवतेषु माधवि ।
वैश्वदेवे नियुञ्जीत ब्रह्मचारी शुचिः सदा ॥ १५ ॥
भिक्षुको दैवतीर्थेषु वानप्रस्थो यतिस्तथा ।
एताश्च भोजयेच्छ्राद्धे दैवतार्थेषु पूजयेत्* ॥ १६ ॥
व्रतस्थान् संप्रवक्ष्यामि श्राद्धमर्हन्ति ये द्विजाः ।
उत्तमो गृहसन्तुष्टः शान्तो दान्तो जितेन्द्रियः ।
उदासीनः सत्यसन्धः श्रोत्रियो धर्म्मपाठकः ।
वेदविद्याव्रतस्नातो सुविसृष्टान्नभोजकः ।
ईदृशान् भोजयेच्छ्राद्धे पितृयज्ञेषु माधवि ॥ १७।१८ ॥
दत्त्वा हुताशनायादौ दैवतीर्थेषु सुन्दरि ।
पश्चाद्ब्राह्मणमुखे दद्यात्पित्रर्थञ्च यथाविधि ॥ १९ ॥
चतुर्णामेव वर्णानां† यथा यथा श्राद्धमर्हति ।
तथा विधिः प्रयोक्तव्यः पितृयज्ञेषु सुन्दरि ॥ २० ॥
यच्च पश्यन्ति ते भोज्यं श्वानः कुक्कुटशूकराः ।
ब्राह्मणाद्याप्यपांक्तेया नराः संस्कारवर्ज्जिताः ॥ २१ ॥
सर्व्वकर्म्मकरा ये च सर्व्वभक्षाश्च ये नराः ।
एतान् श्राद्धे न पश्येत पितृयज्ञेषु सुन्दरि ।
एते पश्यन्ति यच्छ्राद्धं तच्छ्राद्धं राक्षसं विदुः ॥ २२ ॥
मया प्रकल्पितो भागो बलये पूर्व्वमेव तु ।

* एतान् भोजयेच्छ्राद्धेषु दैवतीर्थेषु पूजयेदिति (क, ख) । † चतुर्णामेववर्णाना-मिति (ग) ।

हृतं यदा तु त्रैलोक्ये शक्रस्यार्थे त्रिविक्रमे ।
एवं श्राद्धं प्रतीचक्षि* मन्त्रहीनमविक्रियम् ।
वर्ज्जनीया बुधैरेते पितृयज्ञेषु सुन्दरि ॥ २३।२४ ।
प्रच्छन्न भोजयेच्छ्राद्धे तर्पयित्वा द्विजं शुचिः ।
पितॄंस्तत्राह्वयेद्भूमे मन्त्रेण विधिपूर्व्वकम् ।
पिण्डास्त्रयः प्रदातव्याः सह व्यञ्जनसंयुताः ॥ २५ ।
पिता पितामहश्चैव तथैव प्रपितामहः ।
अपसव्येन दातव्यं मासि मासि तिलोदकम् ॥ २६ ।
प्रणम्य शिरसा देवीर्निवापस्य च धारिणीः ।
वैष्णवी काश्यपी चेति अजया चेति नामतः ।
एवं दत्तेन प्रीयन्ते पितरश्च न संशयः ॥ २७ ।
परमात्मा शरीरस्थो देवतानां मया कृतः ।
त्रयस्तत्र वरारोहे देवशास्त्राद्विनिःसृताः ।
पितृदेवा भविष्यन्ति भोक्तारः पितृपिण्डकान् ॥ २८ ।
देवतासुरगन्धर्व्वा यक्षराक्षसपन्नगाः ।
छिद्रं श्राद्धेऽस्य पश्यन्ति वायुभूता न संशयः ॥ २९ ।
पितृयज्ञं विशालाक्षि ये कुर्व्वन्ति विदो जनाः ।
आयुः कीर्त्ति-बलं तेजो धनपुत्रपशुस्त्रियः ।
ददन्ति पितरस्तस्य आरोग्यं नात्र संशयः ॥ ३० ।
आत्मकर्म्मवशाल्लोकान् प्राप्नुवन्तीह शोभनान् ।

---

* प्रतीचक्षे इति माधु ।

तिर्य्यक्षु च विमुच्यन्ते* प्रेतभावेन मानवाः ॥ ३१ ।
नरके पच्यमानानां त्राता भवति मानवः ।
पूजकः पितृदेवानां सर्व्वकालं गृहाश्रमे ॥ ३२ ।
द्विजातींस्तर्पयित्वा तु पूर्णेन विधिना नरः ।
अक्षय्यं तस्य मन्यन्ते पितरः श्राद्धतर्पिताः ॥ ३३ ।
नरा ये पितृभक्तास्ते प्राप्नुवन्ति परां गतिम् ।
सात्विकं शुक्लपन्थानमेते यान्ति विदां जनाः ॥ ३४ ।
पुनरन्यत्प्रवक्ष्यामि शृणु तत्त्वेन सुन्दरि ।
अज्ञानतमसारूढ़ा निकृतिज्ञाः शठास्तथा ।
स्नेहपाशगतेनैव पच्यन्ते नरके नराः ॥ ३५ ।
कल्पान्तं पच्यमानापि† ये न चायन्ति‡ मानवाः ।
तेषां पुत्राश्च पौत्राश्च कदाचिदपि सुन्दरि ।
मुच्यन्ते जलबिन्दूंश्च समां प्राप्य जलाशये ।
तेनैव भविता तृप्तिस्तेषां निरयगामिणाम् ॥ ३६।३७ ।
ये वै श्राद्धमकुर्व्वन्ति तर्पयित्वा द्विजातयः ।
दत्त्वा तिलोदकं पिण्डान् पितृभ्यो भक्तिभावतः ।
निरयास्तेऽपि मुच्यन्ते तृप्तिर्भवति चाक्षया ॥ ३८ ।
गृह्य चौदुम्बरं पात्रं कृत्वा तत्र तिलोदकम् ।
विप्राणां वचनं कृत्वा यथाशक्त्या§ च दक्षिणा ।
देया तेषान्तु विप्राणां पितृणां मोक्षणाय च ॥ ३९ ।

* तिर्य्यक्षु न च मुच्यन्ते इति क॰, ख । † पच्यमाना अपीति साधु । ‡ चायन्ते इति साधु, कर्म्मार्थ प्रयोगोऽयम् । § यथाशक्तीति साधु ।

देवी नीर्ला वृषस्तत्र नरकार्त्तिविनाशनः ।
नीलषण्डस्य लाङ्गूले तोयमभ्युद्धरेद्यदि ।
षष्टिवर्षसहस्राणि पितरस्तेन तर्पिताः ॥ ४० ।
मुक्तमात्रेण शृङ्गेण नीलषण्डेन सुन्दरि ।
उद्धृतो यदि सर्व्वाणि पङ्कः शृङ्गेण तेन च ।
बान्धवाः पितरस्तस्य निरये पतिताश्च ये ।
तानुद्धृत्य वरारोहे सोमलोकं प्रयच्छति ॥ ४१।४२ ।
मुक्तेन नीलषण्डेन यत्पुण्यं जायते भुवि ।
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
सोमलोकेषु मोदन्ते क्षुत्तृड्भ्याञ्च विवर्ज्जिताः ॥ ४३ ।
एष धर्म्मो गृहस्थानां पुत्त्रपौत्त्रसमन्विताः ।
त्रातारश्च भविष्यन्ति वर्त्तयन्तो यथासुखम् ॥ ४४ ।
पिपीलिकादिभूतानि जङ्गमाश्च विहङ्गमाः ।
उपजीवन्ति सर्व्वाणि गृहस्थेषु न संशयः ॥ ४५ ।
एवङ्गृहाश्रमो मूलं धर्म्मस्तत्र प्रतिष्ठितः ।
मासि मासि तु ये श्राद्धं प्रवर्त्तन्ति* गृहाश्रमे ।
तिथौ पर्व्वणि ये चैव स्वपितॄंस्तारयन्ति वै ॥ ४६ ।
　　न यज्ञदानाध्ययनोपवासै-
　　स्तीर्थाभिषेकैरपि चाग्निहोत्रैः ।
　　दानैरनेकैर्विधिसम्प्रदत्तै-
　　र्न तत्फलं श्राद्धगृहस्थधर्म्मे ॥ ४७ ।

* प्रवर्त्तन्तीति आर्षं, प्रवर्त्तन्ते इति साधु ।

पितरो निर्गतास्तत्र ब्रह्मविष्णुशरीरगाः ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥ ४८ ।
एवं क्रमेण वै तत्र पितृदेवा वसुन्धरे ।
देवताः कश्यपोत्पन्नाः श्राद्धेषु विनियोजिताः ॥ ४९।५० ।
तत एतं न जानन्ति देवाः शक्रपुरोगमाः ।
ईश्वरश्च न जानाति मामदेहविनिःसृताः ।
न च ब्रह्मा विजानाति निःसृतो मम मायया ।
एवं मायामयी भूमी ब्रह्मरुद्रौ वह्निकर्तौ ॥ ५१।५२ ।
पुनश्चान्यप्रवक्ष्यामि पितृयज्ञेषु सुन्दरि ।
दद्याद्वै ब्राह्मणमुखे नाग्नौ तु जुहुयात्क्वचित् ।
कृत्वा वै पिण्डसङ्कल्पं दर्भानास्तीर्य भूतले ॥ ५३ ।
तेन ते पितृपिण्डेन पितृदेवा वसुन्धरे ।
अजीर्णेनाभिपीड्यन्ते भुञ्यन्ते* न च सुन्दरि ॥ ५४ ।
ततो दुःखेन सन्तप्ताः सोममेवाभिपद्यते ।
दृष्टाः सोमेन सुश्रोणि देवताजीर्णपीड़िताः† ।
स्वागतेनाथ वाक्येन पूजितास्तदनन्तरम् ॥ ५५ ।

सोमोवाच‡ ।

देवताः कस्य चोत्पन्ना दुःखिताः केन हेतुना ।
एवन्तु भाषमाणस्य सोमस्य तदनन्तरम् ।

---

* भुञ्जते इति साधु । † देवता अजीर्णपीड़िता इति साधु । ‡ सोमोवाच इति मार्ज्जित पाठः, सोमउवाच इति साधु ।

ऊचुस्ते सोममेवापि* वाक्यं नः श्रूयतामिति ॥ ५६ ।
वयञ्च पितरो देवा ब्रह्मविष्णुहरोद्भवाः ।
श्राद्धे नियोजितास्तैस्तु पितृपिण्डेन तर्पिताः ।
अजीर्णं जायते सोम तेन वै दुःखिता वयम् ॥ ५७ ।

सोम उवाच ।

सखा चाहं भविष्यामि युष्माकञ्च चतुर्थकः ।
सहितास्तत्र गच्छामो यथा श्रेयो भविष्यति ॥ ५८ ।
एवमुक्तास्तु† सोमेन पितृदेवास्तदन्तरे ।
सोमं सोमेन गच्छन्ति‡ श्रेयस्कामा वसुन्धरे ॥ ५९ ।
शरण्यं शरणं देवं ब्रह्माणं पद्मसम्भवम् ।
मेरुशृङ्गे सुखासीनं ब्रह्मर्षिगणसेवितम् ।
दृष्ट्वा पितामहं देवम्प्रणम्य सहसा क्षितौ ।
अत्रिपुत्रेण सोमेन भाषितो वै पितामहः ॥ ६०।६१ ।
य एते पितरो देव दुःखिताजीर्णपीड़िताः ।
आगताः शरणं चात्र सोमं सोमेन सत्तम ।
यथा मद्यस्त्यजीर्णानि तथा कुरु पितामह ॥ ६२ ।
मुहूर्त्तं ध्यानमास्थाय ईश्वरञ्च ददर्श ह ।
उवाच वचनं तत्र ब्रह्मा योगीश्वरस्पति ॥ ६३ ।
एते ते पितरो देव दुःखिताजीर्णपीड़िताः ।

* सोममेवाब्रुवन्निति ग । † एवमुक्तास्तु इति ग । ‡ सोममेवाग्नं गच्छन्तो!(क, ख ।

आगताः शरणञ्चाथ सोमेन सहिता मम।
आवयोर्निर्मिता येन यथा श्रेयो भवेत्तव॥ ६४।
ब्रह्मणा चैवमुक्तस्तु ईश्वरं परमेश्वरः।
मुहूर्त्तं ध्यानमास्थाय दिव्यं योगञ्च माधवि।
पश्यते* ईश्वरस्तत्र योगवेदाद्विनिर्म्मितम्।
विस्मयं परमङ्कृत्वा ब्रह्माणं वाक्यमब्रवीत्॥ ६५।६६।
निर्म्मिता विष्णुना ब्रह्मन् वैष्णव्या मायया च ते।
प्रथमं पितरो देवा ये च श्रेष्ठा भवन्ति ते॥ ६७।
पिता तु ब्रह्मदेवत्यो मम गात्रादिनिर्म्मितः।
पितामहो विष्णुदेवो विष्णुगात्रादिनिर्म्मितः।
प्रपितामहो रुद्रदेवो मम गात्रादिनिर्म्मितः॥ ६८।
श्राद्धे नियोजितास्तेऽत्र मर्त्येषु पितृदेवताः।
ब्राह्मणानां हितार्थाय निर्म्मिता विष्णुमायया॥ ६९।
तर्पिताः पितृयज्ञेषु पितरोऽजीर्णपीड़िताः।
आगताः शरणं ब्रह्मन् सोमेन सहिता यदि।
येन नश्यत्यजीर्णञ्च पितॄणाञ्च सुखं भवेत्।
शृणु तत्ते प्रवक्ष्यामि ब्रह्मन् लोकपितामह॥ ७०।७१।
आग्निस्वपुत्रस्तेजस्वी धूम्रकेतुर्विभावसुः।
श्राद्धे तु प्रथमं तस्य दातव्यं मानुषेषु वा।
सह तेनैव भोक्तव्यं पितृपिण्डविसर्ज्जितम्॥ ७२।

* पश्यतीति साधु

ईश्वरेणैवमुक्तस्तु ब्रह्मा कमलसम्भवः ।
आहूय मनसा चैव आगतो हव्यवाहनः ।
प्रदीप्तस्तेजसा वह्निः सर्व्वभक्षो हुताशनः ॥ ७३ ।
योजितः पञ्चयज्ञेषु ब्रह्मणा मम मायया ।
ब्रह्माग्निं भाषते तत्र शृणुष्व च हुताशन ॥ ७४ ।
भोक्तव्यं प्रथमं ब्रह्मन् पितृपिण्डविसर्ज्जितम् ।
त्वया मुक्तेति भोक्ष्यन्ति देवताः समरुद्गणाः ॥ ७५ ।
भोक्तव्यं मध्यमं श्राद्धं पश्चमुक्तस्तु वै सह ।
पश्चाद्दत्तन्तु तं पिण्डं सह सोमेन भुञ्जते ॥ ७६ ।
ब्रह्मणा ह्येवमुक्तास्तु पितृदेवहुताशनाः ।
प्रस्थिताः सह सोमेन देवतास्ता वसुन्धरे ॥ ७७ ।
पितृयज्ञं वरारोहे भोक्ष्यन्ति सहिताः सदा* ।
एवन्तु प्रथमं श्राद्धं दद्यादग्नेर्वसुन्धरे ॥ ७८ ।
उद्दिश्य च पितॄन्देवि तर्पयित्वा द्विजातयः† ।
पश्चात्पिण्डान् विसर्ज्जति दर्भानास्तीर्य्य भूतले ॥ ७९ ।
प्रथमं ब्रह्मणोऽग्नाय दद्यात्पिण्डं विधानतः ।
पितामहाय रुद्रांशसम्भूताय तु मध्यमम् ॥ ८० ।
प्रपितामहाय विष्णोस्तु दद्यात्पिण्डं महीतले ॥ ८१ ।
विधिना मन्त्रपूर्व्वेण श्राद्धं कुर्व्वन्ति ये नराः ।
तेषां वरम्प्रयच्छन्ति पितरः श्राद्धतर्पिताः ॥ ८२ ।

* सहितामन्ददीति (ग. । † द्विजातीनिति पाठः

मम मायावलेनैव कृतं श्राद्धं द्विजातिभिः ॥ ८३ ।
अपाङ्क्तेयांस्तथा विप्रान्प्रवक्ष्यामि वसुन्धरे* ।
नपुंसकाश्चित्रकरा वसुपालविनिन्दकाः ॥ ८४ ।
कुनखाः श्यावदन्ताश्च काणाश्च विकटोदराः ।
नर्त्तका गायनाश्चैव तथा रङ्गोपजीविनः ॥ ८५ ।
वेदविक्रयिणश्चैव सर्व्वयाजनयाजकाः ।
राजोपसेवकाश्चैव वाणिज्ये क्रयविक्रयाः ॥ ८६ ।
ब्रह्मर्थान्यां समुत्पन्नाः सङ्कीर्णाः पतिताश्च ये ।
असंस्कारप्रवृत्ताश्च शूद्रकर्म्मोपजीविनः ॥ ८७
शूद्रकर्म्मकरा ये च गणका ग्रामयाजकाः ।
दीक्षितः क्रोड़पृष्टश्च यश्च वार्धुषिको द्विजः ॥ ८८ ।
विक्रेतारो रसानाञ्च ये च वेश्योपजीविनः ।
तस्करा लेखकाराश्च याजका रङ्गकारकाः ॥ ८९ ।
शौलिका गिरिका ये च दाम्भिका ये च माधवि ।
सर्व्वकर्म्मकरा ये च सर्व्वविक्रयिणस्तथा ॥ ९० ।
एतांश्च भोजयेच्छ्राद्धे पित्र्ये च वसुन्धरे ।
दूराध्वनि गता ये च तत्र कर्म्मोपजीविनः ॥ ९१ ।
रसविक्रयिणश्चैव शैलूषस्तिलविक्रयी ।
श्राद्धकालमनुप्राप्तं राजसं तं विदुर्बुधाः । ९२ ।
अन्ये ये दूषिता देवि द्विजरूपेण राक्षसाः ।

* प्रवक्ष्यामि वै सुन्दरीति (ग

एताव पश्येच्छ्राद्धेषु पितृपिण्डेषु माधवि ॥ ८३ ।
अपांक्तेयांस्तथा विप्रान् भुञ्जतः पश्यतो द्विजान् ।
पितरस्तस्य षण्मासं दुःखमृच्छन्ति दारुणम् ॥ ८४ ।
न्यस्तपात्रं द्रुतं कुर्य्यात्प्रायश्चित्तमुभौ धनं ।
घृतन्तु जुहुयादग्नावादित्यं चावलोकयेत् ॥ ८५ ।
पुनराचमनं कृत्वा पितरञ्च पितामहान् ।
गन्धपुष्पञ्च धूपञ्च दद्यादर्घ्यं तिलोदकम् ॥ ८६ ।
यथाविधि च विप्राय भोजयेच्च पुनः शुचिः ।
पुनर्यान्यत्प्रवक्ष्यामि शृणु तत्त्वेन सुन्दरि ॥ ८७ ।
स्नानशुद्धेन विप्रेण मन्त्रशुद्धिं यथाविधि ।
मृतान्नं ये न भुञ्जन्ति कदाचिदपि माधवि ॥ ८८ ।
वैश्वदेवेषु दातव्यं श्राद्धेषु च न योजयेत् ।
प्रेतान्नं भुञ्जमानाम् श्राद्धमर्हन्ति ये द्विजाः ॥ ८९ ।
तेषां दोषं प्रवक्ष्यामि भक्तं भोजयते तु सः ।
दम्भकारकृतोच्छिष्टं कृत्वा तु नरकं व्रजेत् ॥ १०० ।
प्रायश्चित्तम्प्रवक्ष्यामि यथा शुध्यन्ति ते नराः ।
माघमासे तु द्वादश्यां सर्पिर्युक्तान्तु पायसम् ॥ १०१ ।
स त्रिंशत्मधुमांसेन तर्पयित्वा द्विजातयः ।
सवत्साङ्कपिलां दद्यादात्मनः शुद्धिमिच्छता ॥ १०२ ।
पुनः श्राद्धं प्रकुर्व्वीत आत्मनः शुभमिच्छता ।
स्नानोपलेपनं भूमे कृत्वा विप्रान् प्रमन्त्रयेत्* ॥ १०३ ।

* निमन्त्रयेदिति (ग) ।

दन्तकाष्ठं विसर्ज्जित* ब्रह्मचारी शुचिर्भवेत् ।
यदीन मिथुनं श्राद्धे भोजयित्वा विसर्ज्जयेत् ॥ १०४ ।
अमायाञ्च विप्रान्नापि दन्तकाष्ठं न खादयेत् ॥ १०५ ।
अमायायान्तु च यो मूर्खो दन्तकाष्ठं हि खादति ।
हिंसिता भवते† सोमो देवताः पितरस्तथा ॥ १०६ ।
प्रभातायान्तु शर्व्वर्य्यामुदिते च दिवाकरे ।
दिवाकृत्यं ततो गत्वा विप्रस्य विधिपूर्व्वकम् ।
श्मश्रुकर्म्म च कर्त्तव्यं नखानां छेदनानि च ॥ १०७ ।
स्नापनाऽभ्यञ्जने दद्यात्पित्रह्मभक्तेन सुन्दरि ।
पक्वान्नं तत्र वै कार्य्यं सुविमृष्टञ्च शुचितः ॥ १०८ ।
हत्ते तु तत्र मध्याह्ने आहारम्भन्तु कारयेत् ।
स्वागतञ्च तथा कृत्वा पाद्यार्थं सलिलं शुचिः‡ ॥ १०९ ।
पाद्यं दत्त्वा तु विप्राय गृहस्याभ्यन्तरं नयेत् ।
आसनं कल्पयित्वा तु आवाह्य तदनन्तरम् ॥ ११० ।
अर्घ्यं दत्त्वा विधानेन गन्धमाल्यैः प्रपूज्य च ।
धूपं दीपं तथा वस्त्रं तिलोदकमथापि वा ॥ १११ ।
पात्रञ्च भोजनस्यार्थे विप्राये धारयेत्तथा ।
भस्मना मण्डलङ्कार्य्यं पङ्क्तिदोषनिवारकम् ॥ ११२ ।
अग्निकार्य्यं ततः कृत्वा अन्नञ्च परिवेषयेत् ।
तत्र कार्य्यो न सङ्कल्पः पितॄनुद्दिश्य सुन्दरि ॥ ११३ ।

---

* विसर्ज्जयेदिति पाठः । † भवतीति पाठः । ‡ मण्डलं शुचिरिति (ख) ।

यथासुखेन भोक्तव्यमिति ब्रूयाद्विजन्मति ।
दर्शाम्रमन्त्रपाठांश्च श्रावयेत विचक्षणः ॥ ११४ ।
हस्तन्तु ब्राह्मणं दत्त्वा दद्याद्वै विकिरं ततः ।
उत्तरीयासनं दत्त्वा पिण्डप्रश्नन्तु कारयेत् ॥ ११५ ।
दक्षिणाभिमुखो भूत्वा दर्भानास्तीर्य्य भूतले ।
पिण्डदानं प्रकुर्व्वीत पित्रादित्रितये तथा ॥ ११६ ।
पिण्डानाम्पूजनङ्कार्य्यं तन्तुरेव यथाविधि ।
ब्राह्मणस्य च हस्ते तु दद्यादक्षय्यमासनान् ॥ ११७ ।
दक्षिणाभिः प्रतोष्यापि स्वस्तिवाच्यं विसर्ज्जयेत् ।
पिण्डांस्त्रयम् वसुधे यावत्तिष्ठन्ति भूतले ॥ ११८ ।
आप्यायमानाः पितरस्तावत्तिष्ठन्ति वै गृहे ।
उपस्पृश्य शुचिर्भूत्वा दद्याच्चाप्युदकानि च ॥ ११९ ।
प्रणम्य शिरसा भूमौ निवापस्य च धारिणीः* ।
वैष्णवी काश्यपी चेति अक्षया चेति नामतः ॥ १२० ।
भक्षयेत्प्रथमं पिण्डं पत्नी देयन्तु मध्यमम् ।
तृतीयमुदके दद्याच्छ्राद्धे एवं विधिः स्मृतः ॥ १२१ ।
पितृदेवान्विसर्ज्जीत ततश्च प्रणमेत्तु तान् ।
एवं दत्तेन तुष्यन्ति पितृदेवा न संशयः ।
दीर्घायुष्यं प्रयच्छन्ति पुत्रपौत्रधनानि च ॥ १२२ ।
ज्ञानोत्तमेषु विप्रेषु दद्याच्छ्राद्धं विधानतः ।

---

* धारिणि इति ग, ।

अन्यथा तस्य वै श्राद्धं निष्फलं नास्ति संशयः ॥ १२३ ।
मन्त्रहीनं क्रियाहीनं यः श्राद्धं कुरुते द्विजः ।
मन्त्रास्तस्यासुरेन्द्रस्य फलं भवति भागतः ॥ १२४ ।
उच्चरेद्यदि पापस्तु ब्राह्मणो ग्रामवर्जितः ।
राक्षसैर्ह्रियते तच्च भुञ्जतस्तस्य सुन्दरि ॥ १२५ ।
एतत्ते कथितं भद्रे पितृकार्य्यमनुत्तमम् ।
उत्पत्तिश्चैव दानस्य यत्पृष्टश्चास्मि त्वया* ।
अपरञ्चापि वसुधे† किमन्यच्छ्रोतुमिच्छसि ॥ १२६ ।

इति वराहपुराणे श्राद्धपितृयज्ञनिर्णयो नाम
नवत्यधिकशततमोऽध्यायः ।

# एकनवत्यधिकशततमोऽध्याय

सूत उवाच ।
एवं श्रुत्वा बहून्धर्म्मान्धर्म्मशास्त्रविनिश्चयात्
वाराहरूपिणं देवं पुनः पप्रच्छ मेदिनी ॥

धरण्युवाच ।
एवं शास्त्रं मया देव तव वक्त्राद्विनिःसृतम् ।

* कथितं मयेति (ज) । † अतः परञ्च वसुधे इति (ज ।

श्रुतं सुबहुशश्चैव तृप्तिर्मम न विद्यते ॥ २ ।
ममैवानुग्रहार्थाय रहस्यं वक्तुमर्हसि ।
कीदृशो* मधुपर्कश्च किं पुण्यञ्च देवता ॥ ३ ।
कानि द्रव्याणि कस्मै च देयो विप्रो वदस्व मे ।
इति भूम्या वचः श्रुत्वा देवदेवो जनार्दनः ।
वराहरूपी भगवान्प्रत्युवाच वसुन्धराम् ॥ ४ ।
वराह उवाच ।
शृणु भूमि प्रयत्नेन मधुपर्को यथा कृतः ।
उत्पत्तिश्चैव दानञ्च सर्व्वो यस्य च दीयते ॥ ५ ।
अहं ब्रह्मा च रुद्रश्च कृत्वा लोकस्य संचयम् ।
अव्यक्तानि च भूतानि यानि कानि च सर्व्वथा ॥
ततो भूमि दक्षिणाङ्गात्पुरुषो मे विनिःसृतः ।
रूपवान् द्युतिमांश्चैव श्रीमान् श्रीकीर्त्तिमान्नरः ॥ ६।७ ।
तत्र पप्रच्छ मां ब्रह्मा मम गात्राद्विनिःसृतः ।
य एव तिष्ठते विप्रो त्रयाणाञ्च चतुर्थकः ॥ ८ ।
स रक्षश्च लघुर्देव एतत्तव न युज्यते ।
ब्रह्मणो वचनं श्रुत्वा मयाप्येवं प्रभाषितम् ॥ ९ ।
एषच मे समुत्पन्नः सर्व्वकर्म्मसुनिष्ठितः ।
मधुपर्केति† विख्यातो भक्तानां भवमोक्षणः ॥ १० ।
मयात्र शंसितं‡ ब्रह्मरुद्रे चापि समासतः ।

* कीदृश इति (ग)। † मधुपर्क इतीति नाथ। ‡ संस्कृतमिति (ग)।

साधु विप्रा भागतस्ते* एष चापि विनिःसृतः ॥ ११ ।
उद्भवं मधुपर्कस्य प्राक्समन्त्रनिश्चयम् ।
ततस् मां ब्रवीद्ब्रह्मा† कारणं मधुरं वचः ॥ १२ ।
मधुपर्केण किन्त्वार्थमेतद्दानञ्च निष्फलम् ।
पितामहवचः श्रुत्वा मयाऽसौ प्रतिभाषितः ॥ १३ ।
कारणं मधुपर्कस्य दानं सङ्करणं तथा‡ ।
समार्चनविधिङ्कृत्वा§ मधुपर्कं प्रयच्छति ॥ १४ ।
ब्रह्मन्यात्युत्तरं स्थानं¶ यत्र गत्वा न शोचति ।
तस्य क्रियाम्प्रवक्ष्यामि मम दानप्रतिग्रहात् ॥ १५
यस्य दानविधिं प्राप्य यान्ति दिव्याकृतिं मम ।
ह्नंस्वेवोपचारेषु ये च ब्रह्मन्मम प्रियाः ।
संगृह्य मधुपर्कं वै इमं मन्त्रमुदाहरेत् ॥ १६ ।
मन्त्रः—ओं एषो हि देव भगवंस्तव गात्रभूतः

संसारमोचनकरो मधुपर्कनामा ।

भक्त्या मयायम्प्रतिपादितोऽद्य

गृहाण देवेश नमो नमस्ते ॥ १७ ।

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
यादृशो मधुपर्को वै‖ या च तस्य महत्क्रिया** ॥ १८

* प्रभातस्ते इति (ग) । † चब्रवीदयं इति साधु । ‡ दानं स कारणमपीति (ग) । § समार्चनविधिङ्कृत्वेति (ग) । ¶ ब्रह्मन् यात्यपरं स्थानमिति (ग) । ‖ यादृक्को (ख. ?) मधुपर्कोवै इति (ग) । ** महत्क्रियेति पाठं, महाक्रियेति साधु ।

घृतं दधि मधुश्चैव* कारवीत समं† तथा ।
विधिना मन्त्रपूतेन यदीच्छेत्सिद्धिमुत्तमाम् ॥ १८ ॥
समासाद्य ततः कृत्वा मम कर्म्मपरायणः ।
उचितेनोपचारेण यत्त्वया परिपृच्छितम्‡ ॥ २० ॥

इति वराहपुराणे मधुपर्कोत्पत्तिदाननिरूपणं नाम
एकनवत्यधिकशततमोऽध्यायः ।

## द्विनवत्यधिकशततमोऽध्यायः ।

सूत उवाच ।
श्रुत्वा तु मधुपर्कस्य उत्पत्तिं दानमेव च ।
पुण्यञ्चैव फलञ्चैव कारणं ग्रहणं तथा ।
विस्मयम्परमङ्गत्वा सा महासंशितव्रता ।
पादौ गृह्य यथान्यायमित्युवाच जनार्द्दनम् ॥ १।२ ॥
देव ह्युत्तोपचारेण तव यन्मनसि प्रियम् ।
किञ्च तत्रैव दातव्यं तव कर्म्मपरायणैः ।
एतदाचक्ष्व तत्त्वेन तत्र यत्परमं महत् ॥ ३ ॥

* मधुचैवेति माधु । † कुर्व्वीत सममिति माधु, कारयीत सममिति (ब) ।
‡ परिपृष्टमिति माधु ।

वराह उवाच।

साधु भूमि महाभागे यस्मात्त्वम्परिपृच्छसि।
कथयिष्यामि तत्सर्व्वं दुःखसंसारमोचणम् ॥ ४ ।
कृत्वा तु मम कर्म्माणि यत्त्वया पूर्व्वभाषितम् ।
पश्चाच्छान्तिं च मे कुर्य्याद्भूमे राष्ट्रसुखावहम् ॥ ५ ।
सर्व्वकर्म्म ततः कृत्वा भूम्यां जानु निपात्य च ।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ॥ ६ ।
मन्त्रः—ओँ नमोनमो वासुदेव त्वं गतिस्त्वं परायणम् ।
शरणं त्वां गतो नाथ संसारार्णवतारक ॥ ७ ।
आगतस्त्वं च सुमुख समुचितेन वै पुनः ।
दिशः पश्य अधः पश्य व्याधिर्भ्यो रच नित्यशः ॥ ८ ।
प्रसीद स्वस्य राष्ट्रस्य राज्ञः सर्व्वबलस्य च ।
गर्भिणीनाञ्च वृद्धानां व्रीहिणाञ्च गवान्तथा ।
ब्राह्मणानाञ्च सततं शान्तिं कुरु शुभं कुरु ॥ ९ ।
अन्नं कुरु सद्दृष्टिञ्च* सुभिक्षमभयं तथा ।
राष्ट्रं प्रवर्द्धतु† विभो शान्तिर्भवतु नित्यशः ॥ १० ।
देवानां ब्राह्मणानाञ्च भक्तानाङ्कन्यकासु च ।
पशूनां सर्व्वभूतानां शान्तिर्भवतु नित्यशः ॥ ११ ।
एवं शान्तिं पठित्वा तु मम कर्म्मपरायणः ।
पुनर्जलाञ्जलिं दत्त्वा इमं मन्त्रमुदाहरेत् ॥ १२ ।

* सुवृष्टिञ्चेति भवेत् । † प्रवर्द्धतामिति साधु ।

मन्त्रः—योऽसौ भवान्सर्व्वजगत्प्रसूतो

यज्ञेषु देवेषु च कर्म्मसाक्षी ।

शान्तिं भवान्कुर्व्वतु वासुदेव

संसारमोक्षञ्च कुरुष्व देव ॥ १३ ।

एषसिद्धिञ्च कीर्त्तिञ्च योजसान्तु महौजसम् ।

लाभानां परमो लाभो गतीनां परमा गतिः ॥ १४ ।

एवं पठति तत्त्वेन मम शान्तिं सुखावहाम् ।

ते तु मन्मयतां यान्ति पुनरावृत्तिवर्ज्जिताः ॥ १५ ।

एवं शान्तिं पठित्वा तु मधुपर्कम्प्रयोजयेत् ।

नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ॥ १६ ।

मन्त्रः—योऽसौ भवान्देववरप्रसूतो

यो वै समर्थो मधुपर्कनामा ।

आगच्छ सन्तिष्ठ इमे च पात्रे

ममापि संसारविमोक्षणाय ॥ १७ ।

सर्पिर्दधिमधुश्चैव* समं पात्रे उदुम्बरे ।

अलाभे मधुनश्चापि† गुडेन सह मिश्रयेत् ॥ १८ ।

घृतालाभे तु सर्व्वाणि लाजैः सह विमिश्रयेत् ।

अलाभे वापि दध्नश्च क्षीरेण सह मिश्रयेत्‡ ॥ १९ ।

दधि मधु घृतश्चैव§ कारयेत समं तथा ।

---

* मधुश्चैवेति माधः । † मधुनो वाऽपीति गः । ‡ एष श्लोकः (गः) पुस्तके नास्ति ।
§ दधि गुडं घृतश्चैवेति (गः) ।

श्वहं दधि मधु रुद्रः सर्पिश्चापि पितामहः ॥ २० ।
सर्व्वेषामर्थलाभे तु मम कर्म्मपरायणः ।
अप एव ततो गृह्य इमं मन्त्रमुदाहरेत् ॥ २१ ।
मन्त्रः—यो योऽसौ भवाश्चाभिमाश्चप्रसूतो
यज्ञैश्च मन्त्रैः सरहस्यजप्यैः ।
सोऽयं मया ते परिकल्पितश्च
गृहाण दिव्यो मधुपर्कनामा ॥ २२ ।
यो ददाति महाभागे मद्यात्तं विधिपूर्व्वकम ।
सर्व्वयज्ञफलम्प्राप्य मम लोकम्प्रपद्यते ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
यो वै प्राणान्प्रमुच्येत* मम कर्म्मपरायणः ।
तस्य चैव ह दातव्यं मन्त्रेण विधिपूर्व्वकम् ॥ २४ ।
यावत्प्राणान् प्रमुच्येत कृत्वा कर्म्म सुपुष्कलम् ।
मद्भक्तेन तु दातव्यः सर्व्वसंसारमोक्षणः ॥ २५ ।
दृष्ट्वा तु विह्वलो ह्येनं मम कर्म्मपरायणः ।
मधुपर्कं परं गृह्य इमं मन्त्रमुदाहरेत् ॥ २६ ।
मन्त्रः—योऽसौ भवांस्तिष्ठसि सर्व्वदेहे
नारायणः सर्व्वजगत्प्रधानः ।
गृहाण चैवं सुरलोकनाथ.
भक्त्योपनीतं मधुपर्कसंज्ञम् ॥ २७ ।

* प्रमुच्येदितिक्वाप, एवं परत्रापि ।

अनेनैव तु मन्त्रेण दद्याच्च मधुपर्ककम् ।
नरस्य मृत्युकाले तु दद्यात्संसारमोक्षणम् ॥ २८ ।
एषा यतिर्महाभागे मधुपर्कस्य कीर्त्तिता ।
एवङ्कश्चिन्न जानाति मधुपर्कं वसुन्धरे ॥ २९ ।
एवं हि मधुपर्कश्च देयः सिद्धिमभीप्सुभिः ।
अर्च्चित्वा देवदेवेशं सर्व्वसंसारनाशनम् ॥ ३० ।
ददाति मधुपर्कं यः स याति परमाङ्गतिम् ।
अयं पवित्रो विमलः सर्व्वकामप्रसाधनः ॥ ३१ ।
दान्तताय च दातव्यो यश्च शिष्यो गुरुप्रियः ।
न मूर्खाय प्रदातव्यमविनीताय कर्हिचित् ॥ ३२ ।
शृणोति मधुपर्कस्य आख्यानं पापनाशनम् ।
याति दिव्यां परां सिद्धिं मधुपर्कस्य कारणात् ॥ ३३ ।
एतत्ते कथितं भद्रे मधुपर्कविभावनम् ।
सर्व्वसंसारमोक्षार्थं यदीच्छेत्सिद्धिमुत्तमाम्* ॥ ३४ ।
राजद्वारे श्मशाने वा भये च व्यसने तथा ।
ये पठन्ति इमां शान्तिं शीघ्रं कार्य्यं भविष्यति ॥ ३५ ।
अपुत्त्रो लभते पुत्त्रमभार्य्यश्च प्रियां लभेत् ।
अपतिर्लभते भर्त्ता+ बद्धो मुच्येत बन्धनात् ॥ ३६ ।
एतत्ते कथितं भूमे महाशान्तिसुखावहम् ।

---

* रहस्यं परमं मङ्गलमिति (ग)। अतः परं तत्र (ग) पुस्तके यस्त्विमं विधानेन कुर्य्याच्छान्तिमनुत्तमामिति पाठोऽधिकः। + भर्त्तारमिति साधु।

सर्व्वसंसारमोक्षार्थं रहस्यं परमं महत् ॥ ३७ ।
यस्त्वनेन विधानेन कुर्य्याच्छान्तिमनुत्तमाम् ।
सर्व्वसङ्गान् परित्यज्य मम लोकाय गच्छति ॥ ३८ ।

इति वराहपुराणे भगवच्छास्त्रे सर्व्वशान्तिकरणं नाम
त्रिनवत्यधिकशततमोऽध्यायः ।

## चिनवत्यधिकशततमोऽध्यायः ।

लोमहर्षण उवाच ।

व्यासशिष्यं महाप्राज्ञं वेदवेदाङ्गपारगम् ।
द्वारदेशे समासीनं* कृतपूर्व्वाह्णिकक्रियम् ।
अश्वमेधे तथा वृत्ते राजा वै जनमेजयः ।
ब्रह्मवध्याभिभूतस्य दोषां द्वादशवार्षिकीम् ।
प्रायश्चित्तं चरित्वा तु आगतो गजसाह्वयम् ।
उपगम्य महात्मानं जाह्नवीतीरसंश्रयम् ।
ऋषिं परमसम्पन्नं वैशम्पायनमञ्जसा ।
कर्म्मणा प्रेरितस्तेन चिन्ताव्याकुललोचनः ।
कुरूणां पश्चिमो राजा पश्चात्तापेन पीड़ितः ।
व्यासशिष्यमुपाभ्येत्य प्रश्नमेनमपृच्छत† ॥ १—५

* गङ्गातारे समासीनमिति ग । † अपृच्छदिति साधु ।

जनमेजय उवाच।

भगवञ्छ्रायते तीव्रं चिन्तयामस्य सुव्रत।
कर्म्मपाककफलं यस्मिन्नानुभेकपभुज्यते ॥ ६ ।
एतदिच्छाम्यहं श्रोतुं कीदृशं तु यमालयम्।
क्रियमाणस्य किंरूपं कथङ्कत्वा स पश्यति ॥ ७ ।
न गच्छेयङ्कथं विप्र प्रेतराज्ञः* निवेशनम्।
धर्म्मराजस्य धीरस्य सर्व्वलोकानुशासिनः ॥ ८ ।

सूत उवाच

एवं पृष्टो महातेजास्तेन राज्ञा द्विजोत्तमः।
उवाच मधुरं वाक्यं राजानं जनमेजयम् ॥ ९ ।

वैशम्पायन उवाच।

शृणु राजन्† पुरावृत्ताङ्कथां परमशोभनाम्।
धर्म्मवृद्धिकरीं नित्यां यशस्यां कीर्त्तिवर्द्धिनीम्।
पावनीं सर्व्वपापानां प्रवृत्तौ शुभकारिणीम्।
इतिहासपुराणानाङ्कथां वै विदुषाम्प्रियाम् ॥ १०।११ ।
कश्चिदासीत्पुरा राजऋषिः परमधार्म्मिकः।
उद्दाल इति विख्यातः‡ सर्व्ववेदाङ्गतत्त्ववित् ॥ १२ ।
तस्य पुत्रो महातेजा योगमास्थाय बुद्धिमान्।
नाचिकेत इति ख्यातः सर्व्ववेदाङ्गतत्त्ववित् ॥ १३ ।

* प्रेतराजस्येति साधु। † महाराज पुरावृत्तामिति ग)। ‡ उद्दालक इति ख्यात इति ग)।

तेन दृष्टेन शप्तोऽभूत्पुत्रः परमधार्म्मिकः ।
गच्छ शीघ्रं यमं पश्य मम क्रोधेन दुर्म्मते ॥ १४ ।
तथेत्युक्त्वा महातेजाः पुत्रः परमधार्म्मिकः ।
चिन्तयित्वा मुहूर्त्तन्तु योगमास्थाय बुद्धिमान् ।
स्वर्णनान्तर्हितो जातः पितरम्प्रत्युवाच ह ।
विनयात्पृष्टतो वाक्यं भावेन च समन्वितम् ॥ १५ ।
मा भूद्वाक्यञ्च ते मिथ्या धार्म्मिकस्य कदाचन ।
गमिष्यामि पुरं रम्यं धर्म्मराजस्य धीमतः ।
इह चैव पुनस्तावदागमिष्ये न संशयः ॥ १६ ।

पितोवाच ।

एकस्त्वमसि वत्सैव नान्यो बन्धुर्विधीयते ।
अधर्म्मं चानृतञ्चास्तु अकीर्त्तिर्वापि पुत्रक ॥ १७ ।
मिथ्याभिशंसिनं तात यथेष्टं तारयिष्यति ।
रोषेण हि मृषावादी निर्द्दयः कुलपांसनः ॥ १८ ।
अप्रवृत्तस्त्वमभाष्योर्योऽहं मिथ्याप्रयुक्तवान् ।
त्वां वै धर्म्मसमाचारमभिधानेन* शप्तवान् ॥ १९ ।
अहं पुत्र न सद्वादी न क्षमे धर्म्मदूषितम् ।
मम त्वं हि महाभाग नित्यं चित्तानुपालकः ॥ २० ।
धर्म्मज्ञश्च यशस्वी च नित्यदान्तो जितेन्द्रियः ।
शुश्रूषुरनहंवादी शक्तस्तारयितुं मम ॥ २१ ।

* अभिधानेनेति सार्व्वत्रिक पाठ, परमाभिधानेनेति मह्यन्ते

याचितस्त्वं मया पुत्र गन्तुं वै तत्र नार्हसि ॥ २२ ।
यदि मेवम्वतो राजा तत्र प्राप्तं यदृच्छया ।
रोषेण त्वां महातेजा विसर्जेत कदाचन ॥ २३ ।
विनश्येयमहं पश्य कुलमेतद्विनाशनः ।
धिक्कृतः सर्व्वलोकेन पापकर्मा नराधमः ॥ २४ ।
पुतेति नरकस्याख्या दुःखेन नरकं विदुः ।
पुत्त्रिणाणं भवेत्पुत्त्रमिहैव्यन्ति परत्र च ॥ २५ ।
हुतं दत्तं तपस्तप्तं पितरश्चापि पूजिताः ।
पुत्रस्य हि तत्सर्व्वं मोघं भवति निश्चयः ॥ २६ ।
शुश्रूषावान्भवेच्छूद्रो वैश्यो वा कृषिजीवनः ।
सम्यग्गोप्ता तु राजन्यो ब्राह्मणो वा स्वकर्म्मकृत् ।
तपो वा विपुलं तप्त्वा दत्त्वा दानमनुत्तमम् ।
अपुत्त्रो नाप्नुयात्स्वर्गं यथा तात मया श्रुतम् ॥ २७।२८ ।
पुत्त्रेण लभते जन्म पौत्त्रेण तु पितामहः ।
पुत्त्रस्य च प्रपौत्त्रेण मोदते प्रपितामहः ॥ २८ ।
न हास्यामीति वत्स त्वां मम वंशविवर्द्धनम् ।
याच्यमानः प्रयत्नेन तत्र गन्तुं न चार्हसि ॥ ३० ।

वैशम्पायन उवाच ।

एवं विलपमानन्तं पितरम्प्रत्युवाच ह ।
हृष्टपुष्टवपुर्भूत्वा* पुत्त्रः परमधार्म्मिकः ॥ ३१ ।

* हृष्टपुष्टमना भूत्वेति (ग)

पुत्र उवाच ।

न विषादस्त्वया कार्य्यो दृष्ट्वमे मामिहागतम् ।
दृष्ट्वा च तमहं देवं सर्व्वलोकनमस्कृतम् ।
आगच्छामि पुनश्चात्र न मेऽस्ति* मृत्युतो भयम् ।
पूजयिष्यति मां तात राजा त्वदनुकम्पया ॥ ३२।३३ ।
सत्ये तिष्ठ महाभाग सत्यञ्च परिपालय ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ३४ ।
सूर्य्यस्तपति सत्येन वातः सत्येन वाति च ।
अग्निर्दहति सत्येन सत्येन पृथिवी स्थिता ॥ ३५ ।
उदधिर्न्नाश्रयेच्चैव मर्य्यादां सत्यपालितः ।
मन्त्रः प्रयुक्तः† सत्येन सर्व्वलोकहितायते ॥ ३६ ।
सत्येन यज्ञा वर्त्तन्ते मन्त्रपूताः सुपूजिताः ।
सत्येन वेदा गायन्ति सत्ये लोकाः प्रतिष्ठिताः ॥ ३७ ।
सत्यं गाति तथा साम सर्व्वं सत्ये प्रतिष्ठितम् ।
सत्यं स्वर्गश्च धर्म्मश्च सत्यादन्यन्न विद्यते ॥ ३८ ।
सत्येन सर्व्वं लभते यथा तात मया श्रुतम् ।
न हि सत्यमतिक्रम्य विद्यते किं तदुत्तमम् ॥ ३९ ।
देवदेवेन रुद्रेण वेदगर्भः पुरा किल ।
सत्यस्थिते तदेवान्यः परित्यक्तो महात्मना ॥ ४० ।

* न च मे मृत्युतोभयमिति (ग) । † क्वचित् मन्त्राः प्रयुक्ता इति बहुवचनान्तः पाठः, स च हितायते इत्यनेन न सङ्गच्छते, हितायन्ते इति कृते तु छन्दोदोषः स्यात् ।

दीक्षां धारयते ब्रह्मा स तेनैव सुयन्त्रितः ।
और्व्वेणाग्निस्तथा क्षिप्तः सत्येन बड़वामुखे ॥ ४१ ।
संवर्त्तेन पुरा तात सर्व्वे लोकाः सदैवताः ।
देवानामनुकम्पार्थं धृता वीर्य्यवता तदा ॥ ४२ ।
पाताले पालयन् सत्यं बलो वैरोचनो वसन् ।
वर्द्धमानो महाशृङ्गैः शतशृङ्गो महागिरिः ।
स्थितः सत्ये महाविन्ध्यो वर्द्धमानो न वर्द्धते ।
सर्व्वं चराचरमिदं सत्येन ध्रियते जगत् ॥ ४३।४४ ।
गृहधर्म्माश्च ये दृष्टा वानप्रस्थाश्च शोभिताः ।
यतीनाञ्च गतिः शुद्धा ये चान्ये व्रतसंस्थिताः ॥ ४५ ।
अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ४६ ।
सत्येन पाल्यते धर्म्मो धर्म्मो रक्षति रक्षितः ।
तस्मात्सत्यं कुरुष्वाद्य रक्ष आत्मानमात्मना ॥ ४७ ।
एवमुक्तो हृष्टपुष्टः* स्वेन देहेन सुव्रत ।
तपसा प्राप्तयोगस्तु जितात्मा कृतसंयमः ।
ऋषिपुत्त्रो महातेजा सत्ययोगसमन्वितः ।
प्राप्तश्च परमं स्थानं यत्र राजा यमस्य तु ॥ ४८।४९ ।

इति वराहपुराणे प्राशिनिर्ह्वामि संसारचक्रे ऋषिपुत्रप्रयाणो नाम त्रिनवत्यधिकशततमोऽध्यायः ।

---

* सर्वो हृष्ट इति ग ।

# चतुर्नवत्यधिकशततमोऽध्यायः ।

वैशम्पायन उवाच ।

गतश्च परमं स्थानं यत्र राजा दुरासदः ।
अर्चितस्तु यथान्यायं दृष्ट्वैव तु विसर्ज्जितः ॥ १ ।
ततो हृष्टमना राजन् पुत्रं दृष्ट्वा तपोनिधिः ।
परिष्वज्य च बाहुभ्यां मूर्द्धन्याघ्राय यत्नतः ।
दिवञ्च पृथिवीञ्चैव नादयामास हृष्टवत्
स संहृष्टमनाः प्रीतस्तानुवाच तपोधनान् ॥ २।३ ।
पश्यन्तु मम पुत्रस्य प्रभावं दिव्यतेजसः ।
यमस्य भवनङ्गत्वा पुनः शीघ्रमिहागतः ॥ ४ ।
पितृस्नेहानुभावेन गुरुशुश्रूषयापि च ।
दैवेन हेतुना चायं जीवन्दृष्टो मया सुतः ॥ ५ ।
लोके मत्सदृशो नास्ति पुमान् भाग्यसमन्वितः ।
एष मृत्युमुखङ्गत्वा मम पुत्र इहागतः ॥ ६ ।
कच्चित्त्वं न हतो वत्स नैव बद्धो यमालये ।
कच्चित्ते सुशिवः पन्था गच्छतस्तव पुत्रक ॥ ७ ।
कच्चित्ते व्याधयो घोरा नान्वगच्छन् यमालये ।
किमपूर्व्वं त्वया दृष्टं कच्चित्तुष्टो महातपाः ॥ ८ ।
कच्चिद्राजा त्वया दृष्टः प्रेतानामधिपो बली ।
परुषेण न कच्चित्त्वां चक्षुषा पश्यते* यमः ॥ ९ ।

* पश्यतीति क्वचित् ।

कच्चित्त्र तुष्टो भगवांस्त्वां दृष्ट्वा स्वयमागतम् ।
कच्चिच्छीघ्रं विसृष्टोऽसि धर्म्मराजेन पुत्रक ॥ १० ॥
कच्चिद्दौवारिकास्तत्र न रौद्रास्त्वां यमालये ।
कच्चिद्राज्ञा विसृष्टं तु न बाधन्तेतरे जना:* ॥ ११ ॥
कच्चित्पन्थास्त्वया लब्धो निर्गमो वा यमालये ।
अयं मम सुत: प्राप्त: प्रसन्ना मम देवता: ॥ १२ ॥
ऋषयश्च महाभागा द्विजाश्च सुमहाव्रता: ।
यस्मै वत्स: पुन: प्राप्तो यमलोकाद्दुरासदात् ॥ १३ ॥
एवमाभाषमाणन्तु श्रुत्वा सर्व्वं वनौकस: ।
त्यक्त्वा व्रतानि सर्व्वाणि नियमांश्च तथैव च ॥ १४ ॥
जपन्तश्चैव जाप्यानि पूजयन्तश्च देवता: ।
उर्द्ध्वबाहव: केचित्तिष्ठन्तोऽन्ये सुदारुणम् ॥ १५ ॥
एकपादेन तिष्ठन्त: पश्यन्तोऽन्ये दिवाकरम् ।
एवमेव परित्यज्य नियमान् पूर्व्वसञ्चितान् ॥ १६ ॥
वैखानसा महाभागास्तपसा शंसितव्रता: ।
आगतास्त्वरितं द्रष्टुं नाचिकेतं सुतं तदा ॥ १७ ॥
दिग्वाससश्च ऋषयो दन्तोलूखलिनस्तथा ।
अश्मकुट्टाश्च मौनाश्च शीर्णपर्णाम्बुभोजना: ॥ १८ ॥

* न बाधन्तेतरे जना इति सार्व्वत्रिक: पाठ:, ततश्चास्माभिरपि स एव रक्षित: किन्तु नाबाधन्तेतरे जना: (इतरे जना न अबाधन्त) इत्येव सुसङ्गत: पाठ: लिपिकर प्रमादात्कदाचित् 'ना' इत्यक्षराकार: पतितोऽद्यापि तदवस्थास्थितिरित्यस्माकमनुमानम् ।

धूमपाश्च तथा चान्ये तथ्यमामाश्च पावकैः ।
परिवार्य्य तथा दृष्ट्वा तस्य पुत्रं तपोनिधिम् ॥ १८ ।
उपविष्टास्तथा चान्ये स्थितायान्ये स्वयन्थिताः ।
ते सर्व्वे तन्तु पृच्छन्ति ऋषयो वेदपारगाः ॥ २० ।
नाचिकेतकन्तं दृष्ट्वा यमलोकादिहागतम् ।
भीतास्तत्र स्थिता दृष्टाः* केचित्कौतूहलान्विताः ॥ २१ ।
केचिद्विमनसश्चैव केचित्संशयवादिनः ।
तमूचुः सहिताः सर्व्वे ऋषिपुत्रं तपोधनम् ॥ २२

ऋषय ऊचुः ।

भो भो सत्यव्रताचार गुरुशुश्रूषणे रत ।
नाचिकेत सुत प्राज्ञ स्वधर्म्मपरिपालक ॥ २३ ।
ब्रूहि सत्यं त्वया दृष्टं श्रुतञ्च सविशेषकम् ।
ऋषीणां श्रोतुकामानां पितुश्चैव विशेषतः ॥ २४ ।
अपि गुह्यञ्च वक्तव्यं पृष्टे सति विशेषतः ।
सर्व्वस्यापि भयं तीव्रं यद्द्वारा प्रतिदृश्यते ॥ २५ ।
कृतं नैव परं तात दृश्यते कालमायया ।
स्वकर्म्म भुज्यते तात प्रयत्नेन च मानवैः ॥ २६ ।
इह चैव कृतं यत्तु तत्परत्रोपभुज्यते ।
करोति यदि तत्कर्म्म शुभं वा यदि वाऽशुभम् ॥ २७ ।
तथाऽत्र दृश्यते काले कालस्यैव तु मायया ।

* भीतास्त्वत्र: स्थिता हृष्टेति (ग) ।

म्रियते च यथा जन्तुर्यथा गर्भे च तिष्ठति ॥ २८ ।
तस्य पारं न गच्छन्ति बहवः पारचिन्तकाः ।
तत्र स्थितं जगत्सर्वं लोभमोहतमोवृतम् ॥ २९ ।
चिन्तयेत न चिन्ताऽस्य* मृगयन्ति च यद्धितम् ।
करोति चित्रगुप्तः किं किञ्च जन्तुत्यसौ पुनः ॥ ३० ।
धर्म्मराजस्य किं रूपद्वारलो वा कोदृशो मुने ।
किंरूपा व्याधयश्चैव विपाको वापि कीदृशः ॥ ३१ ।
किञ्च कुर्व्वन् प्रमुच्येत किं वा कर्म्म समाचरेत् ।
आस्पदं सर्व्वलोकस्य तत्कर्म्म दुरतिक्रमम् ॥ ३२ ।
क्रोधबन्धनजं क्लेशकर्षणं छेदनं तथा ।
येन गच्छन्ति विप्रेन्द्र लोके कर्म्मविदो जनाः ॥ ३३ ।
सितात्मानः कथं यान्ति कथङ्गच्छति पापकृत् ।
यथा श्रुतं यथा दृष्टं यथा चैवावधारितम् ॥ ३४ ।
प्रणयाल्लोभहृदात् स्नेहादस्माभिरभिपृच्छितम्† ।
वद सर्व्वं महाभाग याथातथ्येन विस्तरम् ॥ ३५ ।

वैशम्पायन उवाच ।

ऋषिभिस्त्वेवमुक्तस्तु नाचिकेतो महामनाः ।
यदुवाच महाराज शृणु तज्जनमेजय ॥ ३६ ।

इति वराहपुराणे संसारचक्रे ऋषिसम्भाषणो नाम
चतुर्नवत्यधिकशततमोऽध्यायः ।

* चिन्त्यते न हि चिन्ताऽस्येति तु मध्यक । † अभिपृष्टमिति माध

# पञ्चनवत्यधिकशततमोऽध्यायः ।

नाचिकेत उवाच ।

कथ्यमानं मया विप्राः शृण्वन्तु तपसि स्थिताः ।
प्रणम्य तस्मै देवाय धर्मराजाय धीमते ॥ १ ॥
संसारन्तु यथाशक्त्या* कथ्यमानं निबोधत ।
असत्यवादिनो ये च जन्तुस्त्रीबालघातकाः ॥ २ ॥
तथा ब्रह्महणः पापा ये च विश्वासघातकाः ।
ये ये शठाः कृतघ्नाश्च लोलुपाः पारदारिकाः ॥ ३ ॥
कन्यानां दूषका ये च ये च पापरता नराः ।
वेदानां दूषितारश्च वेदमार्गविहिंसकाः ॥ ४ ॥
शूद्राणां याजकाश्चैव शूद्राभूता द्विजातयः ।
अयाज्ययाजकाश्चैव ये ये कुहयुता नराः† ॥ ५ ॥
सुरापो ब्रह्महा चैव यो द्विजो वीरघातकः ।
तथा वार्द्धुषिका ये च जिह्मप्रेक्षाश्च ये नराः ॥ ६ ॥
मातृत्यागी पितृत्यागी यः स्वसाध्वीं परित्यजेत्‡ ।
गुरुद्वेषी दुराचारी दूताश्चाव्यक्तभाषिणः ॥ ७ ॥
गृहक्षेत्रहरा ये च सेतुबन्धविनाशकाः ।
अपुत्राश्चाप्यदाराश्च श्रद्धया च विवर्जिताः ॥ ८ ॥

---

* यथाशक्तीति मा पु । † अन्ये (कुहयुता ?) नरा इति म । ‡ यश्च साध्वीं परित्यजेदिति (ग) ।

अशौचा निर्दया: पापा हिंसका व्रतभञ्जका: ।
सोमविक्रयिणश्चैव स्त्रीजित: सर्व्वविक्रयी ॥ ९ ।
भूम्यामनृतवादी च वेदजीवी च यो द्विज: ।
नक्षत्री च निमित्ती च चाण्डालाध्यापकस्तथा ॥ १० ।
सर्व्वमैथुनगामी च अगम्यागमने रत: ।
मायिका रतिकाश्चैव तुलाधाराश्च ये नरा: ॥ ११ ।
सर्व्वपापसमङ्गाश्च चिन्तका येऽतिवैरिण:* ।
स्वाम्यर्थे न हता ये च ये च युद्धपराङ्मुखा: ॥ १२ ।
परवित्तापहारी च राजघाती च यो नर: ।
अशक्ता: पापघोषश्च तथा ये ह्यग्निजीविन: ॥ १३ ।
शुश्रूषया च मुक्ता ये लिङ्गिन: पापकर्म्मिण: ।
पात्रगारी चक्रिणश्च† नरा ये चाप्यधार्म्मिका: ॥ १४ ।
देवागारांश्च सत्रांश्च तीर्थं विक्रयिणस्तथा ।
व्रतविद्वेषिणो ये च तथाऽसदादिनो नरा: ॥ १५ ।
मिथ्या च नखरोमाणि धारयन्ति च ये नरा: ।
कूटा वक्रस्वभावाश्च कूटशासनकारिण: ॥ १६ ।
अज्ञानाद्व्रती यश्च यथाश्रमवहिष्कृत: ।
विप्रकीर्णप्रतिग्राही सूचकस्तीर्थनाशका: ।
कलहश्च प्रतर्कश्च निष्ठुरश्च नराधम: ॥ १७ ।
एते चान्ये च बहवो ह्यनिर्दिष्टा: सहस्रश: ।

* चिन्तका ये च वैरिण्यामिति (ग) † पात्रागारी च चक्री चेति (ग) ।

स्त्रियश्च पुरुषाश्चैव यत्र गच्छन्ति तच्छृणु ॥ १८ ।
कुर्व्वन्तीह यथा सर्व्वे तत्र गत्वा यमालये ।
तानि तत्कथयिष्यामि श्रूयतां द्विजसत्तमाः* ॥ १९ ।

वैशम्पायन उवाच

एवं तस्य वचः श्रुत्वा सर्व्वं एव तपोधनाः ।
पप्रच्छुर्विस्मयाविष्टा नाचिकेतमृषिं तदा ॥ २० ।

ऋषय ऊचुः ।

त्वया सर्व्वं यथा दृष्टं ब्रूहि तत्र विदां वर ।
यथास्वरूपः कालोऽसौ येन सर्व्वं प्रवर्त्तते ॥ २१ ।
इह कर्म्माणि यः कृत्वा पुरुषो ह्यल्पचेतनः ।
वारयेत्स तदा तन्तु ब्रह्मलोकं च स प्रभुः ॥ २२ ।
कल्पान्तं पच्यमानोऽपि दह्यमानोऽपि वा पुनः ।
न नाशो हि शरीरस्य तस्मिन्देशे तपोधनाः ॥ २३ ।
यस्य यस्य हि यत्कर्म्म पच्यमानः पुनः पुनः ।
अवश्यञ्चैव गन्तव्यं तस्य पार्श्वं पुनः पुनः ॥ २४ ।
न तु चासाद्द्विजः शक्तस्तत्र गन्तुं हि कश्चन ।
न गच्छन्ति च ये तत्र दानेन नियमेन च ॥ २५ ।
वैतरण्याश्च यद्रूपं किं तोयं च वहत्यसौ ।
रौरवो वा कथं विप्र किं रूपं कूटशाल्मलेः ॥ २६ ।
कीदृशा वा हि ते दूताः किंकार्य्याः† किम्पराक्रमाः ।

* द्विजसत्तम इति (ब) । † किंवीर्य्या इति (ग) ।

किञ्च किञ्च तु कुर्वाणाः किञ्च किञ्च समाचरन् ॥ २७ ।
न चेतो लभते जन्तुश्छादितं पूर्व्वतेजसा ।
धृतिं न लभते किञ्चित्तैस्तैर्दोषैः सुवासिताः ॥ २८ ।
दोषं सत्यमजानन्तस्तथा मोहेन मोहिताः ।
बोद्धव्यं नावबुध्यन्ते गुणानान्तु गुणोत्तरम् ॥ २९ ।
हाहाभूताश्च चिन्तार्त्ताः सर्व्वदोषसमन्विताः ।
परं परमजानन्तो रमन्ते कस्य मायया* ॥ ३० ।
क्लिश्यन्ते बहवस्तत्र कृत्वा पापप्रचेतसः ।
एतत्कथय वत्स त्वं यतः प्रत्यक्षदर्शिवान् ॥ ३१ ।

इति वराहपुराणे भगवच्छास्त्रे दुष्कृतदर्शी नाम
पञ्चनवत्यधिकशततमोऽध्यायः ।

## षण्णवत्यधिकशततमोऽध्यायः ।

### वैशम्पायन उवाच

तेषां तद्वचनं श्रुत्वा ऋषीणां भावितात्मनाम् ।
उवाच वाक्यं वाक्यज्ञः सर्व्वं निरवशेषतः ॥ १ ।

* काम्यमाययेति ग ।

नाचिकेत उवाच।

श्रूयतां द्विजशार्दूलाः कथ्यमानं मया द्विजाः।
योजनानां सहस्रन्तु विस्तराद्द्विगुणायतम्।
द्विगुणं परिवेषेण तद्वै प्रेतपतेः पुरम्॥ २॥
भवनैरावृतं दिव्यैर्जाम्बूनदमयैः शुभैः।
हर्म्यप्रासादसंबाधमट्टालसमन्वितम्॥ ३॥
सौवर्णेन च महता प्राकारेणाभिवेष्टितम्।
कैलासशिखराकारैर्भवनैरुपशोभितम्॥ ४॥
तत्र वै* विमला नद्यस्तोयपूर्णाः सुशोभनाः।
दीर्घिकाश्च तथा कान्ता नलिन्यश्च सरांसि च॥ ५॥
तड़ागाश्चैव कूपाश्च वृक्षखण्डाः सुशोभनाः।
नरनारीसमाकीर्णा गजवाजिसमाकुलाः॥ ६॥
नानादेशसमुत्थानैर्नानाजातिभिरेव च।
सर्व्वबीजैस्तथाकीर्णं तस्य राज्ञः पुरोत्तमम्॥ ७॥
क्वचिद्युद्धं क्वचिद्द्वन्द्वं ते न वशो यमालये।
क्वचिद्गायन्हसंश्चैव क्वचिद्दुःखेन दुःखितः॥ ८॥
क्वचित्क्रीड़न्यथाकर्म्म क्वचिद्भुञ्जन्† क्वचित्स्वपन्।
क्वचिन्नृत्यन् क्वचित्तिष्ठन् क्वचिद्ध्यानसंस्थितः॥ ९॥
एवं शतसहस्राणि तस्य राज्ञः पुरोत्तमे।
स्वकर्म्मभिः प्रदृश्यन्ते स्थूलाः सूक्ष्माश्च जन्तवः॥ १०॥

---

* तत्रैवेति (गौ। † भुञ्जान इति खा०।

मया दृष्टा द्विजश्रेष्ठ तस्य राज्ञः पुरोत्तमे ।
अङ्गानि चैव सीदन्ति मनो विह्वलतीव मे ॥ ११ ।
दिव्यं भावाः स्वयस्थैर्न विस्तरानस्य तत्फलम् ।
तथापि कथयिष्यामि यथा दृष्टं तथा श्रुतम् ॥ १२ ।
पुष्पोदका नाम तत्र नदीनां प्रवरा नदी
दुर्गमा न च दृश्येत नानाद्रुमसमाकुला ॥ १३ ।
सुवर्णकृतसोपाना दिव्यकाञ्चनवालुका ।
प्रसन्नेन च तोयेन शीतलेन सुगन्धिना ॥ १४ ।
पुष्पफलवनाकीर्णा नानापक्षिसमाकुला ।
भ्राजते सरितां श्रेष्ठा सर्व्वपापप्रणाशिनी ॥ १५ ।
तस्यास्तीरे मया दृष्टाः पादपाश्च सहस्रशः ।
अमराः क्रीड़मानाश्च जलक्रीड़ां पुनः पुनः ।
विशालजघना यस्यां गन्धर्व्वाः सामगा इव ।
भुजङ्गावनताङ्ग्यश्च किन्नर्य्यश्च सुगायनाः* ।
दिव्यभूषणसम्भोगैः क्रीड़न्त्यत्र समागताः ॥ १६।१७ ।
एवं नारीसहस्राणि तत्र दिव्यानि नित्यशः ।
क्रीड़न्ति सलिले तत्र प्रासादेषु शुभेषु च ॥ १८ ।
तत्रापरे वृक्षखण्डा नित्यपुष्पफलान्विताः ।
ते च कामप्रदा नित्यं तमद्विजसमायुताः ॥ १९ ।
प्रमदाश्च जले तत्र कामरूपाः† सुमेखलाः ।

---

* किन्नर्य्यश्च नु गायना इति (ग) । † कामरूपा इति (ग) ।

रमयन्त्यो नरांस्तत्र यथाकामं यथासुखम् ॥ २० ।
तां नदीमभयन्त्यस्याः क्रीडन्ति सहिताः प्रियैः ।
गायन्ति सलिले काश्चिन्मधुरं मधुविह्वलाः ॥ २१ ।
जलतूर्यनिनादेन भूषणानां स्वनेन च ।
भाति सा निम्नगा दिव्या दिव्यरत्नैरलङ्कृता ॥ २२ ।
वैवस्वती नाम महानदी सा
शुभा नदीनां प्रवराऽतिरम्या ।
प्रयाति मध्ये नगरस्य नित्यं
मातेव पुत्रं परिपालयन्ती ॥ २३ ।
तोयानुरूपा च मनोहरा च
दिव्येन तोयेन सदैव पूर्णा ।
यस्यास्तु हंसाः पुलिनेषु मत्ताः
कुन्देन्दुवर्णाः प्रचरन्ति नित्यम् ॥ २४ ।
रथाङ्गसाह्वैः प्रवरैश्च पद्मैः
प्रतप्तजाम्बूनदकर्णिकाभिः ।
या दृश्यते चैव मनोज्ञरूपा
सुवर्णसोपानयुता सुकान्ता ॥ २५ ।
यस्यास्तु तोयं विमलं सुगन्धि
स्वादु प्रसन्नमस्तोपमदिव्यरूपम्* ।

* छन्दसोऽत्र भङ्गोऽनरं दृश्यते ।

दृश्यास्तु यस्या वनखण्डजाताः
सदा शुभैः पुष्पफलैरुपेताः ॥ २६ ।
नार्य्यः सुरूपा मदविह्वलाश्च
क्रीड़न्ति ता यत्र मनोज्ञरूपाः ।
यस्या जलं क्रीड़नताड़नाद्यै-
र्विवर्णतां याति न वै कदाचित् ॥ २७ ।
या देवतानामपि पूजनीया
तपोनिधीनाञ्च तथा मुनीनाम् ।
या दृश्यते तोयभरेण कान्ता
कृतिः कवीनामिव निर्म्मलार्थां ॥ २८ ।
जलञ्च दत्तञ्चहुभिर्नरैश्च
तस्याः स्वरूपप्रतिमा च निम्ना ।
प्रासादपङ्क्तिर्ज्ज्वलनप्रकाशा
तस्यास्तु तीरे बहुभक्तिरम्या ॥ २९ ।
वादित्रगीतध्वनतालयुक्ता
गायन्ति नार्य्यः सहिताः सदा हि ।
कन्याकुलानां मृदुभाषितानि
मनोहराणाञ्च वनेषु तेषु ॥ ३० ।
कुर्व्वन्ति संहर्षमिव स्वनेन
मनोज्ञरूपा दिवि देवतानाम् ।
मृदङ्गनादश्च सुतन्त्रियुक्तै-
र्गीतध्वनिश्चैव सुवंशयुक्तः ॥ ३१ ।

प्रासादवृन्देषु विराजमाना
न शक्तिरस्ति वक्तुं ततः प्रवर्त्तिः ।

गन्धः सुगन्धोऽगुरुचन्दनानां
वातः शुभो वाति सुशीतमन्दः ।
क्वचित् सुगन्धः प्रचचार भूयः
प्रासादरोधं प्रविरुद्धमार्गः ॥ ३२ ।
क्वचिज्जनाः क्रीड़नकावसक्ताः
क्वचिच्च नारीनरगीतशब्दाः ।
तथाऽपरे क्रीड़नकाः सकान्ताः
सुवर्णवेदीकृतसानुशोभाः ॥ ३३ ।
विमानभूताः प्रचरन्ति तोये
प्रमत्तनारीनरसङ्कुलाश्च ।
शक्तो विभागो न हि रम्यताया-
मसौ दिनैर्वा बहुभिः प्रवक्तुम् ।
नैषा कथा कर्म्मसमाधियुक्ता
शक्या प्रवक्तुं दिवसैरनल्पैः ॥ ३४ ।

इति वराहपुराणे संसारचक्रे धर्म्मराजपुरवर्णनं
नाम पञ्चषष्ट्यधिकशततमोऽध्यायः ।

# सप्तनवत्यधिकशततमोऽध्यायः।

ऋषिपुत्र उवाच।

दृश्ययोजनविस्तारं ततो द्विगुणमायतम्।
प्राकारेण परिक्षिप्तं प्रासादशतशोभितम्॥ १।
समालिखन्निवाकाशं प्रदीप्तमिव तेजसा।
गोपुरन्तूत्तमं तत्र प्रासादशतशोभितम्॥ २।
नानायन्त्रैः समाकीर्णं ज्वालामालासमावृतम्।
देवतानामृषीणाञ्च ये चान्ये शुभकारिणः॥ ३।
प्रवेशस्तत्र तेषां हि विहितो धर्मदर्शिनाम्।
राजतं गोपुरं सर्व्वं शारदाभ्रचयप्रभम।
मानुषाणां सुकृतिनां प्रवेशस्तत्र निर्मितः* ॥ ४।५।
अग्निधर्म्मसमाकीर्णं सर्व्वदोषसमन्वितम्।
आयसङ्गोपुरं तत्र दक्षिणं भीमदर्शनम्।
रौद्रमतिभयाकारं सुतप्तं दुर्निरीक्षणम्।
प्रवेशो हि ततस्तेन विहितो रविसूनुना।
पापिष्ठानां नृशंसानां क्रव्यादानां दुरात्मनाम्।
पापानां चैव सर्व्वेषां ये चान्ये घातकारकाः॥ ६।७।८।
औदुम्बरमवीचीकमुच्चावचमनोकृतम्।
गोपुरं पश्चिमं तत्र दुर्निरीक्ष्यं समन्ततः।

---

* एतदर्द्धं (ग) पुस्तके नास्ति।

महता वह्निजालेन समालिप्तं भयानकम्।
दुष्कृतीनाम्प्रवेशार्थं यमेन विहितं स्वयम्॥ ८।१०।
तस्मिन्पुरवरे रम्ये रम्या परमशोभना।
सर्व्वरत्नमयी दिव्या वैवस्वतनियोजिता।
सभा परमसम्पन्ना धार्म्मिकैः सत्यवादिभिः।
जितक्रोधैरलुब्धैश्च वीतरागैस्तपस्विभिः* ॥ ११।१२।
सा सभा धर्म्मयुक्तानां सा सभा पापकारिणाम्।
सा सभा सर्व्वलोकस्य शुभस्यैवाशुभस्य च।
कर्म्मणा सूचितस्याथ सा सभा धर्म्मसंहिता॥ १३
अनिर्वर्त्त्य यथा कर्म्म शास्त्रदृष्टेन कर्म्मणा।
निर्विशङ्का निराक्षेपा धर्म्मज्ञा धर्म्मपाठकाः॥ १४।
चिन्तयन्ति च कार्य्याणि सर्व्वलोकहिताय ते†।
यथादृष्टं यथाशास्त्रं यथाकालनिवेदकाः॥ १५।
ततः सर्व्वे च तत्सर्व्वं चिन्तयन्ति सुयन्त्रिताः।
मनुः प्रजापतिश्चैव पाराशर्य्यो महामुनिः॥ १६।
अत्रिरौद्दालकिश्चैव आपस्तम्बश्च वीर्य्यवान्।
बृहस्पतिश्च शुक्रश्च गौतमश्च महातपाः॥ १७।
शङ्खश्च लिखितश्चैव अङ्गिरा भृगुरेव च।
पुलस्त्यः पुलहश्चैव ये चान्ये धर्म्मपाठकाः॥ १८।

* जितक्रोधैरलुब्धैश्च चरितस्याऽथ सा सभेति (क), (ख)। † हिताय चेति (ग

यमेन सहिताः सर्व्वे चिन्तयन्ति प्रतिक्रियाम् ।
सर्व्वे च कामप्रचुरा ये दिव्या ये च मानुषाः ॥ १९ ।
कुण्डलाभ्यां पिनद्धाभ्यामङ्गदाभ्यां महातपाः ।
भ्राजते मुकुटस्तस्य ब्रह्मदत्तो महाद्युतिः ॥ २० ।
तेजसा वचसा चैव दुर्निरीक्ष्यो महाबलः ।
एकस्थमिव सर्व्वेषां तेजस्तेजस्विनां तदा ॥ २१ ।
तस्य पार्श्वे महादिव्या ऋषयो ब्रह्मवादिनः ।
दीप्यमानाः स्ववपुषा वेदवेदाङ्गपारगाः ॥ २२ ।
दितार्थानां विचारज्ञाः सत्यधर्म्मपुरस्कृताः ।
छन्दःशिक्षाविकल्पज्ञाः सर्व्वशास्त्रविकल्पकाः ॥ २३ ।
निरुक्तमतिवादाश्च सामगाश्चर्व्वशोभिताः ।
धातुवादाश्च विविधा निरुक्ताश्चैव नैगमाः ॥ २४ ।
तत्र चैव मया दृष्टा ऋषयः पितरस्तथा ।
भवने धर्म्मराजस्य प्रगायन्तः कथाः शुभाः ॥ २५ ।
तस्य पार्श्वे मया दृष्टः कृष्णवर्णो महाहनुः ।
उत्तमः प्रकृताकार ऊर्द्धरोमा निराकृतिः ॥ २६ ।
वामबाहुश्च दण्डेन प्रवरेण समन्वितः ।
विकृतास्यो महादंष्ट्रो नित्यक्रुद्धो भयानकः ॥ २७ ।
शिक्षार्थे धर्म्मराजेन सन्दिष्टः स पुनः पुनः ।
शृणोति चैव कालोऽसौ नित्ययुक्तः सनातनः ॥ २८ ।
तथान्ये चापरे तत्र शासनेषु समाहिताः ।
दृष्टा तत्र मया तात सर्व्वतन्त्रोमयी शुभा ॥ २९ ।

यमेन पूज्यमाना सा दिव्यगन्धानुलेपनैः ॥ ३० ॥
संहारः सर्व्वलोकानां गतीनाञ्च महागतिः ।
अतः परं न कर्त्तव्यं साधनं कथितं बुधैः ॥ ३१ ॥
सिध्यन्ति असुरास्तत्र ऋषयश्च तपोधनाः ।
असुराश्च सुराश्चैव योगिनश्च महौजसः ॥ ३२ ॥
नमस्कार्य्या च पूज्या च मोहनी सर्व्वसाधनी* ।
तस्याङ्गेभ्यः समुद्भूता व्याधयः क्लेशसम्भवाः ॥ ३३ ॥
अपराश्च महाघोरा व्याधयः कालनिर्म्मिताः ।
पौरुषेण समायुक्ताः सर्व्वलोकनयायताः ॥ ३४ ॥
प्रकृत्या दुर्विनीतश्च महाक्रोधः सुदारुणः ।
महासत्त्वो महातेजाः जरामरणवर्ज्जितः ॥ ३५ ॥
मृत्युर्दृष्टो दुराधर्षो दिव्यगन्धानुलेपनः ।
गायना ह्यसमाश्चैव सर्व्वजीवप्रबोधकाः ॥ ३६ ॥
मृत्युना सहिता नित्यं कालघ्नाः कालसम्मताः ।
दिव्याभरणशोभाभिः शोभमानाः सुतेजसः ॥ ३७ ॥
सवालव्यजनच्छत्रैः† केचित्तत्र महौजसः ।
पर्य्यास्तरणसंछन्नेष्वासनेषु तथा परे ॥ ३८ ॥
पूज्यमाना मया दृष्टाः केचित्तत्र महौजसः ।
अनेकाश्च ज्वरास्तत्र‡ वेदनाश्च सुदारुणाः ॥ ३९ ॥

* इत्यर्द्धमनन्वयं लक्ष्यते, परार्द्धेनान्वयश्चेत् बहुवचनान्तता युक्ता। † सुवालव्यजनच्छत्रैरिति (ग)। ‡ अपराश्चैव ज्वरास्तत्रेति (ग)।

नारीनरस्वरूपाश्च मया दृष्टा ह्यनेकशः ।
कामक्रोधविचारिण्यो नानारूपधराः स्त्रियः ॥ ४० ॥
जीवभक्षकराः* घोरास्तीव्ररोषा भयानकाः ।
तासां हलहलाशब्दः सर्वासाञ्च समन्ततः ॥ ४१ ॥
धर्मराजसमीपे तु दारयन्ति धरामिमाम्† ।
कुष्माण्डा यातुधानाश्च राक्षसाः पिशिताशनाः ॥ ४२ ॥
एकपादा द्विपादाश्च त्रिपादा बहुपादकाः ।
एकबाहुर्द्विबाहुश्च त्रिबाहुर्बहुबाहुकः ॥ ४३ ॥
शङ्कुकर्णा महाकर्णा हस्तिकर्णास्तथाऽपरे ।
केचित्तु तत्र पुरुषाः सर्वशोभाविशोभिताः ॥ ४४ ॥
केयूरैर्मुकुटैश्चान्ये चित्रैरङ्गैस्तथाऽपरे ।
स्रग्विणो बद्धपादाश्च सर्वाभरणभूषिताः ॥ ४५ ॥
सकुठाराः सकुद्दालाः सचक्राः शूलपाणयः ।
सशक्तितोमराः केचित्सधनुष्का दुरासदाः ॥ ४६ ॥
असिहस्तास्तथा चान्ये तथा मुद्गरपरायणाः ।
सज्जिता दधिहस्ताश्च गन्धहस्ता ह्यनेकशः ॥ ४७ ॥
विचित्रभक्षहस्ताश्च वस्त्रहस्तास्तथैव च ।
धूपान् प्रगृह्य विविधान्वासांसि शुभदर्शनाः ॥ ४८ ॥
शिबिकाश्च महाशोभा यानानि विविधानि च ।
वाजिकुञ्जरयुक्तानि हंसयुक्तानि चापरे ॥ ४९ ॥

* जीवभक्ष्यकरा इति (ग) ।　　† धरामिमां इति (ग) ।

शरभै ऋषभैश्चापि हस्तिभिश्च सुदर्शनैः।
मयूरैः सारसैश्चैव चक्रवाकैश्च वाजिभिः॥ ५०॥
एवंरूपा मया दृष्टास्तत्र चान्ये भयानकाः।
उज्ज्वला मलिनाश्चैव जीर्णवस्त्रा नवांशुकाः॥ ५१॥
सुमनाभिमना मूका मारकाः शतमारकाः।
समार्ज्जारी काचवर्णा कृष्णा चैव कलिस्तथा॥ ५२॥
धर्म्महस्ता यशोहस्ताः कीर्त्तिहस्तास्तथापरे।
एते पुरोगमास्तत्र कृतान्तस्य महात्मनः॥ ५३॥
यद्येतानि यजेद्विप्रो नास्ति तस्य पराभवः।
नमस्कार्य्याय पूज्याय श्रापकेन हि नित्यशः।
परितुष्य कृता नित्यं विहिताः सार्व्वलौकिकाः॥ ५४॥

इति वराहपुराणे संसारचक्रे कृतान्तकालमत्युकिङ्करवर्णनो
नाम सप्तनवत्यधिकशततमोऽध्यायः।

## अष्टनवत्यधिकशततमोऽध्यायः।

वर्त्तमानः सभामध्ये राजा प्रेतपुराधिपः।
मासिकसृषभं* तत्र दर्शनश्च ददौ यमः॥ १॥

* मासिकं ऋतकमिति (ग)।

याथातथ्येन मे पूजा कार्य्येण विधिनाऽकरोत् ।
आसनं पाद्यमर्घ्यञ्च वेददृष्टेन कर्म्मणा ॥ २ ॥
अब्रवीच्च पुनर्हृष्टो भास्यताञ्च वरासने ।
काञ्चने कुशसंच्छन्ने दिव्यपर्ण्णापर्ण्णाभिर्न ॥ ३ ॥
तस्य वक्त्रं महारौद्रं नित्यमेव भयानकम् ।
पश्यतस्तस्य मां विप्रास्ततः सौम्यतरं बभौ ॥ ४ ॥
लोहिते तस्य वै नेत्रे जल्पतश्च पुनः पुनः ।
पद्मपत्रनिभे चैव जज्ञाते मम सौहृदात् ॥ ५ ॥
ततोऽहं तस्य भावेन भावितश्च पुनः पुनः* ।
प्रहृष्टमानसो जातो विश्वासश्च परङ्गतः ॥ ६ ॥
तस्य प्रीतिकरं सद्यः सर्व्वदोषविनाशनम्† ।
कामदञ्च यशोदञ्च दैवतैश्चापि पूजितम् ॥ ७ ॥
कालवृद्धिकरं स्तोत्रं क्षिप्रं तत्र उदीरयन् ।
येन प्रीतो महातेजा यमः परमधार्म्मिकः ॥ ८ ॥

ऋषिपुत्त्र उवाच ।

त्वं धाता च विधाता च श्राद्धे चैव हि दृश्यते ।
पितॄणां परमो देवश्चतुष्पाद नमोऽस्तु ते ॥ ९ ॥
कालश्च कृतश्चैव सत्यवादी दृढव्रतः ।
प्रेतनाथ महाभाग धर्म्मराज नमोऽस्तु ते ॥ १० ॥
कर्म्म कारयिता चैवः‡ भूतभव्यभवत्प्रभो ।

---

* एतदर्द्धं (ग पुस्तके नास्ति । † तस्य प्रीतिकरो हृष्टः सर्व्वदोषविनाशन इ। (क), (ख) । ‡ कर्त्ता कारयिता चैवेति (ग) ।

पावकोमोहनश्चैव महेष्वो विस्तरस्तथा ॥ ११ ॥
दण्डपाणे विरूपाक्ष पाशहस्त नमोऽस्तु ते।
आदित्यसदृशाकार सर्व्वजीवहर प्रभो ॥ १२ ॥
कृष्णवर्ण दुराधर्ष तैलरूप नमोऽस्तु ते।
मार्त्तण्डसदृश श्रीमन्मार्त्तण्डसमतेजसः* ॥ १३ ॥
हव्यकव्यवहस्त्वं हि प्रभविष्णो नमोऽस्तु ते।
पापहन्ता व्रती श्राद्धो नित्ययुक्तो महातपाः ॥ १४ ॥
एकदृग्बहुदृग्भूत्वा काल मृत्यो नमोऽस्तु ते।
कचिद्दण्डी कचिन्मुण्डी कचित्कालो दुरासदः ॥ १५ ॥
कचिद्बालः कचिद्वृद्धः कचिद्रौद्रो नमोऽस्तु ते।
त्वया विराजितो लोकः शासितो धर्म्महेतुना ॥ १६ ॥
प्रत्यक्षं दृश्यते देव त्वद्विना न च सिध्यति।
देवानां परमो देवस्तपसां परमन्तपः ॥ १७ ॥
जपानां परमं जाप्यं त्वत्तश्चान्यो न दृश्यते।
कृपणो वा तथा क्रुद्धा हतबन्धुसुहृज्जनाः ॥ १८ ॥
पतिव्रतास्तु या नार्य्यो दुःखितास्तपसि स्थिताः।
न त्वं यस्य दह स्थानात्पातनाय कदाचन ॥ १९ ॥
तस्मात्त्वं सर्व्वदेवेषु एको धर्म्मभृतां वरः।
कृतज्ञः सत्यवादी च सर्व्वभूतहिते रतः ॥ २० ॥

* समतेज इति वा पु।

वैशम्पायन उवाच ।

एवं श्रुत्वा स्तवं दिव्यमृषिपुत्रेण भाषितम् ।
परितुष्टस्तदा धर्म्मो औद्दालकसुतम्प्रति ॥ २१ ।

यम उवाच ।

परितुष्टोऽस्मि भद्रन्ते माधुर्य्येण तवानघ ।
याथातथ्येन वाक्येन ब्रूहि किं करवाणि ते ॥ २२ ।
वरं वरय भद्रन्ते यं वरङ्काङ्क्षसे* द्विज ।
शुभं वा श्रेयसा युक्तं जीवितं वाप्यनामयम् ॥ २३ ।

ऋषिपुत्र उवाच ।

नेच्छाम्यहं महाभाग मृत्युं वा जीवितम्प्रभो ।
यदि त्वं वरदो राजन् सर्व्वभूतहिते रतः ॥ २४ ।
द्रष्टुमिच्छाम्यहं देव तव देशं यथातथम् ।
पापानाञ्च शुभानाञ्च या गतिस्त्विह दृश्यते ॥ २५ ।
सर्व्वं दर्शय मे राजन्यदि त्वं वरदो मम ।
चित्रगुप्तञ्च तं राजन् कार्य्यार्थं तव चिन्तकम् ॥ २६ ।
दर्शयस्व महाभाग सर्व्वलोकस्य चिन्तक ।
यथा कर्म्मविशेषाणां दर्शनार्थं करोति सः ॥ २७ ।
एवमुक्तो महातेजाः द्वारस्थं संदिदेश ह ।
चित्रगुप्तसकाशन्तु नय विप्रं सुयन्त्रितम् ॥ २८ ।
वक्तव्यश्च महाबाहुरस्मिन्विप्रे यथातथम् ।

* काङ्क्षसीति पाठः ।

प्राप्तकालश्च युक्तश्च तत्सर्व्वं वक्तुमर्हसि ॥ २८ ।
ततोऽहं त्वरितो नीतस्तेन दूतेन दर्शितः ।
प्राप्तश्च परया प्रीत्या चित्रगुप्तनिवेशनम् ॥ ३० ।
प्रत्युत्थितश्च मां दृष्ट्वा चिन्तयित्वा तु तत्त्वतः ।
स्वागतं मुनिशार्दूल यथेष्टं परिगम्यताम् ॥ ३१ ।
एवं सम्भाष्य मां वीरः स्वान् भृत्यान् सन्दिदेश ह ।
कृताञ्जलिपुटान् सर्व्वान् घोररूपान् भयानकान् ॥ ३२ ।

चित्रगुप्त उवाच ।

भो भो शृणुत मे दूता मम चित्तानुवर्त्तकाः ।
भक्तिमन्तो दुराधर्षा नित्यं व्रतपरायणाः ॥ ३३ ।
अयं विप्रो मयादिष्टः प्रेतावासं गमिष्यति ।
अस्य रक्षा च गुप्तिश्च भवद्भिः क्रियतामिति ॥ ३४ ।
नैव दुःखेन खेदः स्यान्न चोष्णेन च शीततः ।
बुभुक्षापि तृषा वापि एष आज्ञापयामि वः ॥ ३५ ।
एवं दत्तवरो विप्रो गुरुचित्तानुचिन्तकः ।
सर्व्वभूतदयावांश्च द्रव्यवांश्च स वै द्विजः ॥ ३६ ।
यथाकाममयं पश्येद्धर्म्मराजपुरोत्तमम् ।
एवमुक्त्वा महातेजा गच्छ गच्छेति चाब्रवीत् ॥ ३७ ।

ऋषिपुत्र उवाच ।

सन्दिष्टाश्च ततो दूताश्चित्रगुप्तेन धीमता ।
धावन्तस्त्वरमाणास्तु गच्छन्तो घ्नन्त एव च ॥ ३८ ।
बध्नन्ति महाकाया निर्द्दहन्ति महाबलाः ।

पाटयन्ति प्रहारैश्च ताड़यन्ति पुनः पुनः ॥ ३९ ।
वेणुयष्टिप्रहारैश्च प्रहरन्ति ततोऽधिकैः ।
भग्ना भिन्ना विभिन्नाश्च तथा भग्नशिरोधराः ॥ ४०
रुदन्ति करुणक्रारं त्रातारं नाप्नुवन्ति ते ।
नरकेऽपि तथा पूर्णे अगाधे तमसावृते ॥ ४१ ।
केचिच्च तेषु पच्यन्ते दह्यन्ते पावकेन्धनम् ।
तैलपाके तथा केचित्केचित्क्षारेण सर्पिषा ॥ ४२ ।
पतन्ति ते दुरात्मानस्तत्र तत्र च कुम्भिः ।
यातनाभिर्दह्यमाना घोराभिश्च ततस्ततः ॥ ४३ ।
केचिद्यन्त्रमुपारोप्य सम्पीड्यन्ते तिला इव ।
तेषां सम्पीड्यमानानां शोणितं स्रवते बहु ॥ ४४ ।
ततो वैतरणी घोरा सम्भूता निम्नगा तथा ।
सफेनसलिलावर्त्ता दुस्तरा पापकर्म्मिणाम् ॥ ४५ ।
अथान्ये शूल आरोप्य दूताः पादेषु गृह्य वै ।
वैतरण्यां सुघोरायामक्षिपन्ति सहस्रशः ॥ ४६ ।
नानुष्णे रुधिरे तत्र फेनमालासमाकुलाः ।
दशन्ति सर्पास्तांस्तत्र प्राणिनस्तु सहस्रशः ॥ ४७ ।
अनुत्ताथ्ये तदा तस्या उच्छ्रिता विकृतावशाः ।
आवर्त्तादूर्म्मयश्चैव उत्तिष्ठन्ति सहस्रशः ॥ ४८ ।
तत्र शुष्यन्ति ते पापाः सर्व्वदोषसमन्विताः ।
मज्जन्तश्च यमन्तश्च त्रातारं नाप्नुवन्ति ते ॥ ४९ ।
अथान्ये बहवस्तत्र बहुभिश्चापि दूतकैः ।

कूटशाल्मलिमारोप्य लोहकण्टकसंवृताम्॥ ५० ।
असिशक्तिप्रहारैश्च ताडयन्ति पुनः पुनः ।
तत्र शाखासु घोरासु मया दृष्टाः सहस्रशः॥ ५१ ।
कुष्माण्डा यातुधानाश्च लम्बमाना भयानकाः ।
अतिक्रम्य च ते स्कन्धान्तीक्ष्णकण्टकसङ्कुलाः॥ ५२ ।
वेदनार्त्तास्तु वेगेन शीघ्रं शाखामुपारुहन्* ।
तत्र ते निहता घोरा राक्षसाः पिशिताशनाः॥ ५३ ।
आक्रुष्टगात्राणि घ्नन्ति निःशङ्कं तमसावृतम् ।
संक्रामश्च सुखादन्ति शालायाश्चिवङ्गशम्॥ ५४ ।
यथा च कुक्कुटं खादेत्कश्चिन्म्लेच्छो निराकृतिः ।
तथा कटकटाशब्दस्तस्मिन्वृत्ते मया श्रुतः॥ ५५ ।
पक्वमाम्रफलं यद्वन्नरः खादेद्यथा वने ।
एवं ते सुखतः कृत्वा महावक्त्रा दुरासदाः॥ ५६ ।
चूर्णयित्वा तु तान् सर्व्वांस्ते च तस्मिन्नगोत्तमे ।
विसृजन्ति क्षितिं यावदस्थिभूतावरांस्तथा॥ ५७ ।
ततो जवेन संयुक्ता वनस्थायूषिताः पुनः ।
आविष्टानि च कर्म्माणि पुनः शीघ्रमकामयन्॥ ५८ ।
अधस्तात्तु पुनस्तत्र पश्यन्तः पापकर्म्मिणः ।
बहुसंख्येषु पापेषु दारुणेषु सुदुःखिताः॥ ५९ ।
विधानं पाहि चैवेति वदन्तः परुषं वचः† ।

* शाखा इति साधु । † पुरुषं वच इति (क), (ख) ।

यमदूता निरामर्षाः सूदयन्ति पुनः पुनः ॥ ६० ।
पाषाणवर्षैः केचित्तु पांशुवर्षैश्च विद्रुताः ।
प्रविशन्ति नगच्छायां ततस्ते प्रज्वलन्ति तु ॥ ६१ ।
द्रवन्ति च पुनस्तत्र दुर्नेनापि हृद्रं हताः ।
भुवनेषु च घोरेषु पच्यन्ते ते हृदाग्निना ॥ ६२ ।
वारिपूर्णं ततः कुम्भं शीतलञ्च जलं पुनः ।
दीयतां दीयताञ्चेति ब्रुवते नः प्रसीदथ ॥ ६३ ।
ततः पानीयरूपेण जलं तप्तन्तु दीयते ।
तेन दग्धाश्च आर्त्ताश्च क्रोशन्तश्च परस्परम् ॥ ६४ ।
आलिङ्ग्यालिङ्ग्य दुःखार्त्ताः केचित्तत्र पतन्ति वै ।
तथान्ये क्षुधितास्तत्र हाहाभूतमचेतसः ॥ ६५ ।
अन्नानाञ्च सुमिष्टानां भक्ष्याणाञ्च विशेषतः ।
पश्यन्ति राशिं तत्रस्थां सुगन्धां पर्व्वतोपमाम् ॥ ६६ ।
दधिक्षीररसांश्चैव कृशरान्पायसं तथा ।
मधुमाधवपूर्णानि सुरामैरेयकस्य च ॥ ६७ ।
माध्वीकस्य च पानस्य सीधोर्जातिरसस्य च ।
पानानि चैव दिव्यानि शीतलानि सुगन्धि च ॥ ६८ ।
गोरसस्य च पानानि भाजनानि च नित्यशः ।
तपोऽर्जितानि दिव्यानि तिष्ठन्ति सुकृतात्मनाम् ॥ ६९ ।
माल्यानि धूपगन्धाश्च नानारससमायुताः ।
मनोहराश्च कान्ताश्च भूमिस्थाश्च सहस्रशः ॥ ७० ।
भोजनेषु च सर्व्वेषु स्त्रियः कान्ता मनोहराः ।

गृहीतकुथमषिकाः सर्व्वाभरणभूषिताः ॥ ७१ ।
फलानि कुण्डहस्ताश्च पाणहस्तास्तथापराः ।
सुमनःपात्रहस्ताश्च अदीनाः परमाङ्गनाः ॥ ७२ ।
अन्नदानरताश्चैव भोजयन्ति सहस्रशः ।
नूपुरोज्ज्वलपादाश्च तिष्ठन्ति च मनोहराः ॥ ७३ ।
उपस्थाप्य महाशोग्यमन्न काले च योषितः ।
ब्रुवन्ति सर्वांस्ताश्चैव तस्यां तस्य च दक्षिणाः ॥ ७४ ।
निघ्नन्तश्च हसन्तश्च दूता निष्ठुरवादिनः ।
भो भो कृतघ्ना लुब्धाश्च परदाराभिमर्षकाः ॥ ७५ ।
पापाशया* निष्कृतिकाः सर्व्वदानविवर्ज्जिताः ।
परापवादनिरताः पापैर्बहुकथानकाः ॥ ७६ ।
निर्लज्जा गृहका देया याचितुं मनसा हि ताः ।
सुलभानि न दत्तानि विभवे सति लौकिके ॥ ७७ ।
पानीयमथ काष्ठानि यथयं सुखमागतम् ।
तेन वध्या भवन्तो वै यातनाभिरनेकशः ॥ ७८ ।
कर्म्मणाश्च चयी जातः संसारे यदि पश्यथ† ।
विमुक्ता इहलोकात्तु जनिष्यथ‡ सुदुर्गताः ॥ ७९ ।
कुलेषु सुदरिद्रेषु सञ्जाताः पापकर्म्मिणः ।
पापैरनुगता घोरैर्मानुषं लोकमाश्रिताः ॥ ८० ।
तत्रस्था भुञ्जते होमांश्चातुर्वर्ण्यान्विशेषतः ।

* पापाः शठा कर्म (न)। † यदि पश्यथे इति साधु। ‡ परस्मैपदमार्षम्।

ततः सत्यरताः शान्ता दयावन्तः सुधार्म्मिकाः ॥ ८१ ।
इह विश्राम्य ते धीराः किञ्चित्कालं सहानुगाः ।
गच्छन्ति परमं स्थानं पृथिव्यां वा महत्कुले ॥ ८२ ।
बहुसुन्दरनारीके समृद्धे सुसमाहितः* ।
अजायन्त तथा शान्ताः प्राप्नुवन्ति परमाङ्गतिम् ॥ ८३

इति वराहपुराणे भगवच्छास्त्रे समावलयातनानां स्वरूपवर्णनो नाम अष्टनवत्यधिकशततमोऽध्यायः ।

# नवनवत्यधिकशततमोऽध्यायः ।

ऋषिपुत्र उवाच ।

तस्मिन् क्षितितलं सर्व्वमायसैः कण्टकैश्चितम् ।
प्रभवन्ति पुनः केचिद्विषमं तमसाश्रितम् ॥ १ ।
अथान्ये छिन्नपादास्तु छिन्नपाणिशिरोधराः ।
पापाचारास्तथा देशादुपसर्पन्त मा चिरम् ॥ २ ।
ये तु धर्म्मरता दान्ता वपुष्मन्तो यथा गृहे ।
परिपान्ति क्षितिं सर्व्वे पात्यन्ते पापकारिणः ॥ ३ ।
याचमानाः स्थिता नित्यं सुप्रीतैश्चान्नभोजनैः ।
स्त्रियः श्रीरूपसम्पन्नाः सुकुमाराः सुभोजनाः ॥ ४ ।

* सुसमाहिते इति (क), (ख) ।

ज्ञात्वा पूजां परां तत्र प्रतीच्छन्ते परं जनम्।
अग्नितप्ते सुघोरे च निक्षिप्यन्ते शिलातले ॥ ५॥
आलोके च प्रदृश्यन्ते* ज्वलत्सु भुवनानि च।
छायास्ति दह्यमानेषु दृष्टपादोदरेषु च ॥ ६॥
तत्र गत्वा तु ते दूताः प्रविशन्ति सुदारुणाः।
क्लिश्यन्ति बहवस्तत्र त्रातारं नाप्नुवन्ति ते ॥ ७॥
अथान्ये तु क्षुरैर्घोरैरापादतलमस्तकम्।
भक्ष्यमाणा रुदन्तश्च क्रोशन्तश्च पुनः पुनः ॥ ८॥
अथान्ये तु महाकाया महादंष्ट्रा भयानकाः।
सूचीमुखकृताः पापाः क्षुधितास्तृषितास्तथा ॥ ९॥
अन्नानि दीयमानानि भक्ष्याणि विविधानि च।
भोज्यानि लेह्यचोष्याणि यैर्निषिद्धं दुरात्मभिः ॥ १०॥
असौ सारमयी† नारी वह्नितप्ता सुदारुणा‡।
आलिङ्गति नरं तत्र धावन्तं चानुधावति ॥ ११॥
धावन्तं चानुधावन्ती इदं वचनमब्रवीत्।
अहं ते भगिनी पाप अहं भार्य्या सुतस्य ते।
मातृष्वसा ते दुर्बुद्धे मातुलानी पितृष्वसा ॥ १२॥
गुरुभार्य्या मित्रभार्य्या भ्रातृभार्य्या नृपस्य च।
श्रोत्रियाणां द्विजातीनां जायास्तु धर्षितास्त्वया§ ॥ १३॥

---

* प्रदृश्यन्ते इति ग। † असौ सारमयीति सार्व्वत्रिकः पाठः, अयःसारमयीति तु सम्यक्। ‡ वह्नितप्तेति क, ख। § श्रोत्रियाणां द्विजातीनां जायायाश्च धर्षिता-स्त्वयेति ग।

मोक्ष्यसे न हि पापात्त्वं रसातलगतो यथा ।
किम्प्रधावसि निर्लज्ज व्यसनैश्चापपादितः ॥ १४ ।
वधिष्येऽहं ध्रुवं पाप यथा कर्म्म त्वया कृतम् ।
एवं वै बोधयन्तोऽत्र घातयन्ति पुनः पुनः ॥ १५ ।
अभिद्रवन्ति तं पापं घोररूपा भयानकाः ।
यातनानां सहस्रेषु जातं जातं तथा स्त्रियः ॥ १६ ।
अनुपीड्य दुरात्मानं धर्षयन्ति सुदारुणम् ।
वृषली बहुलैर्दुःखैः किं क्रन्दसि पुनः पुनः ॥ १७ ।
किं क्रन्दसि सुदुर्बुद्धे परित्यक्तः स्वयं मया ।
दग्धा त्वं मया पाप नीयमानः पुनः पुनः ॥ १८ ।
अञ्जलिं वापि कुर्व्वाणो याचमानो न लज्जसे ।
न मोक्ष्यसे मया पाप कुतो गच्छसि मूढ़ वै ॥ १९ ।
यत्र यत्र प्रयासि त्वमिति गत्वा यमालये ।
तत्र तत्रैव पाप त्वां न त्यक्ष्ये* पारदारिकम् ॥ २० ।
लोहयष्टिप्रहारैश्च ताड़यन्ति पुनः पुनः ।
गोपाला इव दण्डेन कालयन्तो मुहुर्मुहुः ॥ २१ ।
व्याघ्रसिंहशृगालैश्च तथा गर्द्दभराक्षसैः ।
भक्ष्यन्ते श्वापदैरन्यैः श्वभिः काकैस्तथाऽपरैः† ॥ २२ ।
असितालवनं तत्र धूमज्वालासमाकुलम् ।
दावाग्निसदृशाकारं प्रदीप्तं सर्व्वतोऽर्चिषा ॥ २३ ।

---

* त्यक्ष्यामीति भाषु । † (ग पुस्तके) ऽतः परं सार्द्धश्लोको नास्ति ।

तत्र चिप्रा ततः पापं यमदूतैः सुदारुणैः ।
दह्यमानाः सुतप्तांश्च संश्रयन्ते द्रुमान् पुनः ॥ २४ ।
असिपत्रैस्ततो वृक्षाश्छिन्दन्ति बहुशो नरान् ।
तत्र छिन्नाश्च,दग्धाश्च हन्यमानाश्च सर्व्वशः ॥ २५ ।
विघृष्टा विक्षताश्चैव दह्यमाना नदन्ति ते ।
असितालवनद्वारि ये तिष्ठन्ति महारवाः ॥ २६ ।
पापकर्म्मसमायुक्तांस्तर्ज्जयन्ति सुदारुणाः ।
भो भो पापसमाचारा धर्म्मसेतुविनाशकाः ॥ २७ ।
अतो निमित्तं पापिष्ठा यातनाभिः सहस्रशः ।
अनुभूयेह तत्सर्व्वं मानुष्यं यदि यास्यथ ॥ २८ ।
कुलेषु सुदरिद्राणां गर्भवासेन पीड़िताः ।
भोगैश्च पीड़िताः नित्यं उत्पत्स्यथ* सुदुर्गताः ॥ २९ ।
अग्निज्वालानिभास्तत्र अग्निस्पर्शा महारवाः ।
पक्षिणश्चायसैस्तुण्डैर्व्याघ्राश्चैव सुदारुणाः ॥ ३० ।
तत्र घोरा बहुविधाः क्रव्यादाः श्वादयस्तथा ।
खादन्ति रुषितास्तत्र बहवो हिंसका नरान्† ॥ ३१ ।
ऋष्यद्वीपिसमाकीर्णे बहुकोटपिपीलके ।
असितालवने विप्रा बहुदुःखसमाकुले ॥ ३२ ।
तत्र चिप्ता मया दृष्टा यमदूतैर्महाबलैः ।
असिपत्रसुभग्नाङ्गाः शूललग्नास्तथाऽपरे ॥ ३३ ।

---

* परञ्जपदमर्षम् । † चांदिस्पर्शा महारवा इति (ग) ।

तथाऽपरो महाद्रिर्या नानारूपो भयानकः।
पुष्करिण्यश्च वाप्यश्च ह्रदा नद्यस्तथैव च ॥ ३४ ।
तड़ागानि च कूपाश्च रुधिरस्य सहस्रशः।
पूतिमांसकर्दमाणाञ्च श्लेष्मणश्च तथैव च ॥ ३५ ।
अन्यानि च मया तत्र दृष्टानि मुनिसत्तमाः।
तत्र क्लिश्यन्ति ते पापास्तस्मिन्मध्ये सहस्रशः ॥ ३६ ।
जिघ्रन्तश्च तथा गन्धं मज्जन्तश्च सहस्रशः।
अस्थिपाषाणवर्षांश्च रुधिरस्य बलाहकाः ॥ ३७ ।
अश्मवर्षश्च ते घोराः पातयन्ति सहस्रशः।*
धावतां प्लवताञ्चैव हा हतोऽस्मीति भाषिणाम् ॥ ३८ ।
प्राहतानां पुनः शब्दो वध्यतान्च सुदारुणः।
क्रन्दताङ्करुणान्विश्वं दिशोऽपूर्यन्त सर्व्वशः ॥ ३९ ।
क्वचिद्बद्धः क्वचिद्रुद्धः क्वचिद्विद्धः सुदारुणैः।
क्वचित्स्थूलैस्तथाबद्ध उद्बद्धश्च क्वचित्तथा ॥ ४० ।
हाहा भयानकोऽन्विश्वः शब्दोऽश्रूयत दारुणः।
अपश्यम्पुनरन्यत्र यत्स्मृत्वा चाद्विजेश्वरः ॥ ४१ ।

इति वराहपुराणे संसारचक्रे यातनास्वरूपवर्णनो नाम
नवनवत्यधिकशततमोऽध्यायः।

* (ख) पुस्तकेऽयं पाठक्रमभेदो लभ्यते। (ग) पुस्तके धावतामित्याद्यर्द्धं त्रिप-
ष्टेर्व्यादिन: पदमेव दृश्यते।

## द्विशततमोऽध्यायः।

कपिपुत्र उवाच।

तमश्चैव महातमं महारौरवरौरवौ।
असिताख्य नरकौ नरकः कालसूत्रकः॥ १।
अन्धकारश्च नरकौ अन्धकारपरस्तथा।
अष्टावेते तु नरकाः पच्यन्ते यत्र पापिनः॥ २।
प्रथमे प्रथमं विद्याद्द्वितीये द्विगुणं तथा।
तृतीये त्रिगुणं विद्याच्चतुर्थे तु चतुर्गुणम्॥ ३।
पञ्चमे तु गुणाः पञ्च षष्ठे षड्गुणमुच्यते।
सप्तमे तु गुणाः सप्त अष्टमेऽष्टविधा गुणाः॥ ४।
अहोरात्रेण चाध्वानं प्रेता गच्छन्ति तत्पुरम्।
दुःखितानां ततो दुःखं दुःखाद्दुःखतरं ततः॥ ५
दुःखमेवात्र हि सुखं दुःखैर्दुःखं विबध्यते*।
उपायस्तत्र नैवास्ति येन स्वल्पं सुखम्भवेत्॥ ६।
मुच्यते च मृतस्तत्र मारकास्तत्र दुर्लभाः।
शब्दे स्पर्शे तथा रूपे रसे गन्धे तु पञ्चमे॥ ७।
न सुखं तत्र तस्यास्ति किञ्चिद्दैवात्र विद्यते।
शारीरैर्मानसैश्चैव दुःखैर्दुःखान्तगामिभिः॥ ८।
आयसैः कण्टकैस्तीक्ष्णैस्तप्तैस्समावृता मही।

---

* हि बध्यतेश्चेति (ख)।

अन्तरीक्षं खगानीकैरग्निजिह्वैः समावृतम् ॥ ९ ।
अतीव च बुभुक्षात्र पिपासा चाप्यतीव हि ।
उष्णमत्युष्णमेवात्र शीतलञ्चातिशीतलम् ॥ १० ।
पातुकामश्च पानीयं राक्षसैर्नीयते सरः* ।
हंससारससङ्कीर्णं पद्मोत्पलविभूषितम् ॥ ११ ।
पातुकामश्च पानीयं सहसा तत्र धावति ।
सलिलं प्रपश्यते चैव तत्र तप्ततरं तथा ॥ १२ ।
ततः पक्वानि मांसानि राक्षसैः परिणीयते ।
क्षारोदकेऽपि च तथा क्षिप्यतेऽत्र महाह्रदे† ॥ १३ ।
तत्र चैव ह्रदे नैका मत्स्याः खादन्ति सर्वशः ।
ततः कालावमानि तु कथञ्चित्प्रपलायिनः ॥ १४ ।
किञ्चिदन्तरमागम्य वेदनार्त्ताः पतन्ति हि ।
यातनार्थं पुनस्तत्र मांसञ्चैवोपजायते ॥ १५ ।
शिरश्छेदोपविष्टस्य प्रस्थितस्य प्रधावतः ।
तस्यान्तायामवस्थायां दुःखम्भवति दारुणम् । १६ ।
करीषगर्त्तस्तत्रैव कुम्भीपाकः सुदारुणः ।
पद्मपत्राकृतिस्तस्य पेशी तत्र शरीरजा ॥ १७ ।
पाटयन्ति‡ सुमार्गेण राक्षसाः करपत्रिकाः ।
निपीड्य दशनैरोष्ठं भीमनादाः सुरोषिताः ॥ १८ ।
असिपत्रवनञ्चात्र शृङ्गाटकवनं तथा ।

---

* रस इति (ग) । † महे इति (ख) । ‡ पीडयन्तीति (ग) ।

तत्र शृङ्गाटकाश्चैव तप्तवालुकमिश्रिताः ॥ १९ ।
दह्यन्ते छिद्यन्ते चैव विध्यन्ते भिद्यन्ते तथा ।
पाच्यन्ते पीड्यन्ते चैव क्षुप्यन्ते च विशस्यते ॥ २० ।
श्यामाश्च शबलाश्चैव श्वानस्तेऽत्र दुरासदाः ।
खादन्ति च सुसंरब्धाः सर्पवृश्चिकसन्निभैः ॥ २१ ।
कण्टकैः प्रतिकूलैश्च तथान्या कूटशाल्मलिः ।
कर्षन्ति तत्र वै चैनं यावदस्यावशेषिनः ॥ २२ ।
यद्दुःखं तस्य दुर्बुद्धेः प्रतिकूलञ्च तस्य यत् ।
तत्तदोत्पद्यते शीघ्रं यातनार्थाय यत्नतः ॥ २३ ।
शीतकामस्य वै चोष्णमुष्णकामस्य शीतलम् ।
सुखकामस्य वै दुःखं सुखं नैवाऽत्र विद्यते ॥ २४ ।
छित्वाश्च शतधाप्येवं ह्यनिशन्तैः सहस्रशः ।
छिन्नाङ्गाः सर्व्वगात्रेषु सर्व्वमेव स विन्दति ॥ २५ ।
सलिलञ्च नदीघोरां व्यालाकीर्णां भयानकाम् ।
तां चैवोत्तार्य्यते* प्रेता यां दृष्ट्वैव भयं भवेत् ॥ २६ ।
करम्भवालुका नाम शतयोजनमायता ।
अग्निज्वालासमा घोरा यथा येन स गच्छति ॥ २७ ।
ततो वैतरणी नाम क्षारोदा तु महानदी ।
योजनानि तु पञ्चाशद्धस्तात्पञ्चयोजनम् ॥ २८ ।
अगाधपङ्का वै तत्र चर्म्ममांसास्थिभेदना ।
तत्र कर्कटका घोरा वज्रदंष्ट्रा विशन्ति ताम् ॥ २९ ।

* उत्तार्य्यन्ते इति पाठ ।

उलूकाश्च धनुर्मोचा वज्रजिह्वास्थिभेदनाः ।
महाभिषा महाक्रोधा दुर्धर्षश्चाः सुदारुणाः ॥ ३० ।
समुत्तीर्य्य तु कष्टेन तस्माद्योजनकर्द्दमात् ।
वसत्यच भरे केचिच्छून्यागारे निराश्रये ॥ ३१ ।
यत्र वै मूषिकगणा भक्षयन्ति क्षणेक्षणः ।
मूषिकैर्जग्धगात्रस्तु अस्थिमात्रावशेषितः * ३२ ।
प्रभाते वायुना स्पृष्टः पुनर्मांसं स विन्दति* ।
शून्यागारप्रवेशात्तु गच्छतो नातिकूजनः । ३३ ।
सहकारवनं नाम रौद्रा† यत्र च पक्षिणः ।
निस्त्वगस्थिस्तु क्रियते निर्मांसश्चैव मानवः ॥ ३४ ।
निःशिराजालकश्चैव निरक्षिश्रवणस्तथा ।
वटवृक्षो नातिदूरे दक्षिणे तु त्रियोजनम् ॥ ३५ ।
सन्ध्याभ्र इव चाभाति प्रदीप्तो नित्यमेव तु ।
दशयोजनविस्तीर्णो अधः शतसमायता ॥ ३६ ।
यमचुल्लीति विख्याता गम्भीरा सा त्रियोजनम् ।
नित्यं प्रज्वलिता सा तु निन्यं धूमान्धकारिता ॥ ३७ ।
तत्र प्रेतसहस्राणि प्रयुतान्यर्व्वुदानि च ।
प्रक्षिप्यन्ते त्वहोरात्रं राक्षसैर्यमकिङ्करैः ॥ ३८ ।
मासमेकं वसत्यन्धे तस्यां चुल्ल्यां परिभ्रमन् ।
ततः शकुनिका नाम वसामेदोवहा नदी ॥ ३९ ।

---

* (ख) पुस्तके एतदर्द्धं पदद्वयम्: षट् पादाश्च न सन्ति । † चमरा इव । इति ग ।

पुनीकृता तु विश्रान्ता वेगिनी वहते तु सा।
तां समुत्तीर्य्य कष्टेन यातनाः समकाः पुनः॥ ४०।
एकैकं दुस्तरद्वारं यथापूर्व्वं यथाक्रमात्।
अनुभुङ्क्ते स कष्टेन दुष्कृती तीव्रवेदनाः॥ ४१।
दश तत्र लताः शूलाः कुम्भीपाकाम्बरीषादयः।
यान्ति पापसहस्राणां तस्मिन्नियमितेन तु॥ ४२।
रात्रसैर्निरनुक्रोशैर्दुर्निरीक्ष्यैस्ततस्ततः।
अङ्गारेषु विधूमेषु शूलप्रोतस्तु पच्यते॥ ४३।
शुष्कोदपाने धूमे च अधःशीर्षोऽवलम्बते।
ज्वाल्यते तीक्ष्णतैले तु कटाह्यां स तु पच्यते॥ ४४।
करीषगर्त्ते स पुनः पच्यते मेदवह्निना।
एकैकस्मिन्दशाहस्य शूलादिषु स पच्यते॥ ४५।
यातनाः समकास्तस्य निष्क्रान्तस्य त्रियोजने।
यतो यमनदी नाम तप्तत्रपुजलोर्म्मिणी॥ ४६।
समुत्तीर्य्य तु कष्टेन दह्यमानस्त्वचेतनः।
ततो मुहूर्त्तं विश्रान्तः किञ्चिदन्तरमागतः॥ ४७।
दीर्घिकां सेवते कान्तां शीतोदां शीतकाननाम्।
सर्व्वकामांश्च लभते भगिनी सा यमस्य तु॥ ४८।
भक्ष्यभोज्यञ्च सर्व्वैस्तु पापिभिस्तत्र लभ्यते।
स सर्व्वं विस्मरत्यत्र चिराच्चमुषितोऽपि च॥ ४९।
ततो शूलवहो नाम पर्व्वतः शतयोजनः।
निराश्रयः स सत्वानामेकपाषाण एव च॥ ५०।

तत्र वर्षति पर्जन्यस्तत्र तप्तजलं सदा ।
तत्र कृच्छ्रेण तरति अघोरायेव मानवः ॥ ५१ ।
शृङ्गारकवनं नाम तत्र पश्यन्ति गाह्वलम् ।
नीलमणिकर्दमैश्च सुश्यामं तद्वनं महत् ॥ ५२ ।
यैस्तु स्पृष्टश्च दृष्टश्च क्रमिरूपश्च जायते ।
प्रेतो वर्षति मांसासृगस्मात्कृच्छ्रात्तु निर्गतः ॥ ५३ ।
ततोऽन्यल्लभते चैव यातनार्थमयन्नतः ।
ततः पश्यति पुत्रांस्तु महद्दुःखं सुदारुणम् ॥ ५४ ।
मातरं पितरञ्चैव पुत्रान्दारांस्तथा प्रियान् ।
पुरस्ताद्दह्यमानं* स क्रन्दमानमचेतनम् ॥ ५५ ।
हा पुत्र त्राहि त्राहीति क्रन्दमानस्ततस्ततः ।
लगुडैर्मुद्गरैर्दण्डैर्जानुभिर्वेणुभिस्तथा ॥ ५६ ।
मुष्टिभिश्च कशाभिश्च व्यालैरङ्कुशैरपि ।
तद्दृष्ट्वा तादृशं दुःखं ततो मोहं स गच्छति ॥ ५७ ।
एवमेवात्मकर्माणि पर्यायेण पुनः पुनः ।
प्राप्नुवन्तीह तेऽत्रैव नरा दुष्कृतकारिणः ॥ ५८ ।
पातकानि च चत्वारि समाचारेण पञ्चमम् ।
कृत्वा तानि नरा यान्ति तं देशं पापकारिणः ॥ ५९
तमादिषु च सर्वेषु गुणान्तरपथङ्गतः ।
यदा भवति स प्रेतस्तदा स्थावरतां व्रजेत् ॥ ६० ।

तदा वा स्थावरे तेषु जातस्य हि भवेन्नरः।
क्रमशः स भवेत्प्रेतस्तदा पशुगणेष्वपि ॥ ६१ ।
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
गतः स वसति प्रेतो नरके तु पुनः पुनः ॥ ६२ ।
ततो निवृत्तकर्म्मा तु स्वेदजः सम्भवेत्पुनः ।
स्वेदजानां ततो नित्यं सर्व्वसंसारचंक्रमात् ॥ ६३ ।
ततश्च पक्षिणां योनिं सर्व्वां संसरते* पुनः ।
गांयोनौ तु ततो गत्वा पुनर्मानुषतां व्रजेत् ॥ ६४ ।
मानुषे शूद्रतां याति लब्ध्वा यदि तु तुष्यति ।
ततो विशत्वङ्गच्छेत कर्मणाऽनेन वेष्टितः ॥ ६५ ।
वैश्यात्क्षत्रियतां याति तस्माच्च ब्राह्मणो भवेत् ।
ब्राह्मणत्वमपि प्राप्तः पापकर्म्मा दुरात्मवान् ॥ ६६ ।
दुःशिक्षितेन मनसा चात्मद्रुहो भवेत्तदा ।
शरीरं मानसङ्घारं व्यसनैरुपपादितम् ॥ ६७ ।
उपयुक्तो नरो जातः पूर्व्वकर्म्मभिरन्वितः ।
श्येयश्च ब्रह्महा कुष्ठी काकाचः कामतालुकः ॥ ६८ ।
सुरापः श्यावदन्तश्च पूतिगन्धश्च पापकृत् ।
राजहा पितृहा चैव सुरापश्चापि यो भवेत् ॥ ६९ ।
सुवर्णहर्ता च नरो ब्रह्मघ्नेन समो हि सः ।
कथितश्च विरूपाणां नराणां पापकर्म्मिणाम् ॥ ७० ।

---

* मानवीतिश्चाय ।

यावता* कर्म्मभिस्तैस्तैस्तेषु निर्यापयेऽसम् ।
छिन्नभिन्नविशस्तानां रुधिरैश्च समन्ततः ॥ ११ ।
व्याप्तं महीतलं सर्व्वमापगाश्चापि निर्गताः
अजस्रं क्लिश्यमानानां क्रन्दतान्च सुदारुणम् ॥ १२
समुत्तस्थौ महानादो हाहाकारसमाकुलः ।
अप्रर्ता विविधैर्भैस्त्रैर्घातयन्नाय दारुणम् ॥ १३ ।
लौहयष्टिप्रहारैश्च आयुधैश्च सुदारुणैः ।
छेदनैर्भेदनैश्चोग्रैः पीड़नाभिश्च सर्व्वगः ।
श्रान्ता. कर्म्मकरा दूता मोहनाद्यस्तचेतसः ॥ १४ ।
यदा श्रान्ताश्च खिन्नाश्च हन्तारः पापकर्म्मिणाम् ।
विज्ञापये†स्तदा दूताश्चित्रगुप्तं महौजसम् । १५ ।

इति वराहपुराणे संसारचक्रे नरकयातनानामकथनवर्णनो नाम ॥
द्विशततमोऽध्यायः ।

# एकाधिकद्विशततमोऽध्यायः ।

ऋषिपुत्र उवाच ।
ततस्ते सहिताः सर्व्वे अन्योऽन्याभिरताः सदा ।
नानावेशधरा दूताः कृताञ्जलिपुटास्तदा ॥ १ ।

---

* यावद्भिरिति साधु । † विज्ञापयेयुरिति साधु ।

दूता ऊचुः ।

वयं श्रान्ताय चीर्णाय अन्यान्योजितुमर्हसि ।
वयमन्यत्करिष्यामः स्वामिन्कार्य्यं सुदुष्करम् ॥ २ ।
अन्ये हि तावत्तत्कुर्य्युर्यदिष्टं तव सुव्रत ।
भगवन्परिक्लिष्टाः स्म चाहि नः परमेश्वर ॥ ३ ।
ततो विहस्य रक्तास्तेन वाक्येन रोषितः ।
विनिःश्वस्य यथा नागो ह्यपश्यत्सर्व्वतो दिशम् ॥ ४ ।
अदूरे दृष्टवान कश्चित्पुरुषं स घनाकृतिम् ।
स तु वेगेन सम्प्राप्त इङ्गितज्ञो दुरात्मवान् ॥ ५ ।
निःसृतः स च रोषेण चित्रगुप्तेन धीमता ।
ततः स त्वरितो गत्वा सन्देशो नाम राक्षसः ॥ ६ ।
नानारूपधरा घोरा नानाभरणभूषिताः ।
विनाशाय महासत्त्वो यत्र तिष्ठन्महायशाः ॥ ७ ।
चित्रगुप्तो महाबाहुः सर्व्वलोकार्थचिन्तकः ।
समः सर्व्वेषु भूतेषु भूतानाञ्च समादिशन् ॥ ८ ।
ततस्ते विविधाकारा राक्षसाः पिशिताशनाः ।
उपतस्थु तथा सर्व्वे मातङ्गाश्च हयास्तथा ॥ ९ ।
बहुगोधाङ्गुलित्राणा नानायुधधरास्तथा ।
अग्रतः किङ्करास्तिष्ठन्* कृत्वा पादाभिवन्दनम् ॥ १० ।
ब्रुवन्तश्च पुनर्हृष्टाः शीघ्रमाज्ञापय प्रभो ।
तव सन्देशकर्त्तारः वयं कुर्म्म जीवितम् ॥ ११ ।

* तिष्ठन्तीति साधु ।

तेषां तद्वचनं श्रुत्वा चित्रगुप्तो ह्यभाषत ।
रोषगद्गदया वाचा निःश्वसन्वै मुहुर्मुहुः ॥ १२ ॥
भो भो मन्देहका वीराः मम चित्तानुपालकाः ।
एकान् बध्नीत गृह्णीत भूतराक्षसपुङ्गवाः ॥ १३ ॥
एवं हत्वा च बद्ध्वा च आगच्छत पुनर्यथा ।
हन्तारः सर्व्वभूतानां कृतघ्ना दृढविक्रमाः ॥ १४ ॥
हत्वा वै पापकानेतान्मम विप्रियकारिणः ।
एतच्छ्रुत्वा वचस्तस्य वचनञ्चेदमब्रुवन् ॥ १५ ॥

राक्षसा ऊचुः ।

श्रान्ता वा क्षुधिता वापि दुःखिता वा तपोधनाः ।
अमात्या एव घातव्या भृत्याः शतसहस्रशः ॥ १६ ॥
एते वधार्थं निर्दिष्टास्त्वयैव च महात्मना ।
न युक्तं विविधाकारा ह्यस्माकं नाशनाय वै* ॥ १७ ॥
यथा ह्येते समुत्पन्नाः सर्व्वधर्म्मानुचिन्तकाः ।
तथा वयं समुत्पन्नास्तदर्थं हि भवानपि ॥ १८ ॥
मा च मिथ्या परिज्ञातं धर्म्मिष्ठस्य भवत्विति ।
अस्माकं विग्रहं वीर मुच्यन्ते यदि मन्यसे ॥ १९ ॥
परित्रायस्व भो वीर किङ्कराणां महाबलान् ।
हन्यमानान्हि रक्षोभिरस्मानद्य रणाजिरे ॥ २० ॥
एवमुक्ता ततो घोराः व्याधयः कामरूपिणः ।
सवज्रास्त्वरितं शूरा भीमरूपा भयानकाः ॥ २१ ॥

---

* एष श्लोकः (ग) पुस्तके नास्ति ।

गजैरन्ये तथा चाश्वै रथैश्चापि महाबलाः ।
कण्टकैर्मुरगैर्हंसैरन्ये सिंहैस्तथापरे ॥ २२ ।
मृगैः शृगालैर्महिषैर्व्याघ्रैर्मेषैस्तथापरे ।
गृध्रैः श्येनैर्मयूरैश्च सर्पगर्दभकुक्कुटैः ॥ २३ ।
एवं वाहनसंयुक्ता नानाप्रहरणायुताः ।
समागता महासत्त्वा अन्योन्यमभिकाङ्क्षिणः ॥ २४ ।
नृत्यन्तः क्ष्वेडितसङ्घुष्टैर्वल्गितास्फोटितैरपि ।
जयार्थिनो द्रुतं वीराश्चालयन्तश्च मेदिनीम् ॥ २५ ।
ततः समभवद्युद्धं तस्मिंस्तमसि सन्तते ।
मुकुटैरङ्गदैश्चित्रैः केयूरैः पट्टिशासिकैः ॥ २६ ।
सकुण्डलैः शिरोभिश्च भ्राजते वसुधातलम् ।
बाहुभिश्च सकेयूरैस्तथैव मणिभूषणैः ॥ २७ ।
शूलशक्तिप्रहारैश्च यष्टितोमरपट्टिशैः ।
असिखड्गप्रहारैश्च बलप्राणसमीरितैः ॥ २८ ।
अभवद्दारुणं युद्धं तुमुलं लोमहर्षणम् ।
नखैर्दन्तैश्च पादैश्च तेऽन्योऽन्यमभिजघ्निरे* ॥ २९ ।
बाहुभिः समनुप्रासः केशाकेशि ततः परम् ।
अयुक्तमतुलं युद्धं तेषां वै समजायत ॥ ३० ।
ततस्ते राक्षसा भग्ना दूतैर्घोरपराक्रमैः ।
देहि देहि वदन्त्येव भिन्ध गृह्णीष्व तिष्ठ च ॥ ३१ ।
वध्यमानाः पिशाचास्ते ये निहता रणार्दिताः ।

* अभिजघ्नुरिति वाच ।

आह्वयन्त प्रतिभयात्क्रोधसंरक्तलोचनाः ॥ ३२ ।
तिष्ठ तिष्ठ क्व यासीति न गच्छामि हतो भवान् ।
मया मुक्तमिदं शस्त्रं तव देहविनाशनम् ॥ ३३ ।
किन्तु मूढ़ त्वया शस्त्रं न मुक्तं मे कृताकरम् ।
मया क्षिप्तान्तु द्रुपदः प्रतीच्छ किम्पलायसे ॥ ३४ ।
किन्त्वं वदसि दुर्बुद्धे एषोऽहं पारगो रणे ।
मम बाहुविमुक्तान्तु यदि जीवस्यतो वद ॥ ३५ ।
तत्र ते सहसा घोरा राक्षसाः पिशिताशनाः ।
मन्देहा नाम नाम्ना ते वध्यमानाः सहस्रशः ॥ ३६ ।
ततो भग्ना यदा ते तु राक्षसाः कामरूपिणः । [1]
प्रतिपद्यन्त[2] ते मायां तामसीं तमसा वृताः ॥ ३७ ।
अदृश्याश्चैव दृश्याश्च तद्बलं तमसा वृताः ।
ततस्ते शरणं जग्मुर्ज्वरं परमभीषणम् ॥ ३८ ।
शूलपाणिं विरूपाक्षं सर्वप्राणिप्रणाशनम् ।
मन्देहा नाम नाम्ना वै राक्षसाः पिशिताशनाः ॥ ३९
खादन्ति चैव घ्नन्ति स्म चित्रगुप्तेन चोदिताः ।
व्याधीनाञ्च सहस्राणि दूतानाञ्च महाबलाः ॥ ४० ।
वयमद्य महाभाग त्रायस्व जगतः पते ।
ततस्तेषां वचः श्रुत्वा दूतानां कामरूपिणाम् ॥ ४१ ।
ज्वरः क्रुद्धो महातेजा योधानान्तु सहस्रशः ।
कालो मुण्डः कंकराक्षो लोहयष्टिपरिग्रहः ॥ ४२ ।

[1] हृदक्षत दृष्टि ग । [2] प्रपद्यन्तेति माधु ।

विविधान् सन्दिदेशाऽथ पुरुषानग्निवर्चसः ।
बद्धाञ्जलिपुटान् सर्व्वानिदमाह सुरेश्वरः ॥ ४३ ।
यात शीघ्रमिमान् पापान्योगेन च बलेन च ।
ततस्ते त्वरितङ्गत्वा यत्र ते पिशिताशनाः ॥ ४४ ।
ज्वराश्रया च ते सर्व्वे जीमूतघननिस्वनाः ।
बहूंस्ते राक्षसान् घोरान्दर्पोत्सिक्तान् सहस्रशः ॥ ४५ ।
बहुशस्त्रप्रहारैश्च शस्त्रैश्च विविधोज्ज्वलैः ।
तरसा राक्षसा भिन्ना रुधिरेण परिप्लुताः ॥ ४६ ।
मोचयामास सङ्ग्रामं स्वयमेव यमस्ततः ।
राक्षसान्मोचयित्वाऽथ हन्यमानान्समन्ततः ॥ ४७ ।
गत्वा ज्वरं महाभागं विनयात्तान्स्वयम्मुहुः* ।
पूजयन्वै ज्वरं दिव्य गृह्य† हस्ते महायशाः ॥ ४८ ।
प्रविवेश गृहं स्वन्तु सम्भ्रमेणेदृशेन तु ।
आननं तु समुत्प्रोञ्छ्य स्वेदसङ्घामविन्दुवत् ॥ ४९ ।
धर्म्मराजोऽथ विश्रान्तं कालभूतं महाज्वरम् ।
किङ्किं वृत्तमिदं देव व्यापिनस्त्वं‡ महातपाः ॥ ५० ।
शापायासकरश्चैव सर्व्वलोकनमस्कृतः ।
अहंस्त्वश्चैव देवेश इमं लोकं चराचरम् ॥ ५१ ।
शासिमहि§ यथाकामं यथादृष्टं यथाश्रुतम् ।

* मोचयन्मुनिरिति ख, ग । † गृहीत्वेति साधु । ‡ व्यापिनस्त्वं महातप अथवा व्यापी त्वं हि महातपा इति साधु । § शास्महे इति साधु ।

त्वया ग्राह्यो ह्यहं देव मृत्युना च सुसंहतः ॥ ५२ ॥
लोकान् सर्व्वानहं हन्मि सर्व्वघाती न संशयः ।
गच्छ गच्छ यथास्थानं युद्धञ्च शमय स्वयम् ॥ ५३ ॥
राक्षसानां हतास्तत्र षष्टिकोट्यो रणाजिरे ।
अमराश्चाव्ययाश्चैव न हि त्वामाप्नुयन्ति वै ॥ ५४ ॥
ततो ह्युपरतं युद्धं धर्म्मराजो यमः स्वयम् ।
दूतानां चित्रगुप्तेन सख्यमेकमकारयत् ॥ ५५ ॥
ततः सन्धापनं* दूतानां चित्रगुप्तं तथैव च ।
नियुक्तस्त्व† मया पूर्व्वं सर्व्वकर्म्माणि जन्तुषु ॥ ५६ ॥
स्वकर्म्मगुणभूतानि ह्यशुभानि शुभानि तु ।
दूताः कद्रं‡ समागम्य चित्रगुप्तस्य पार्श्वतः ।
उपस्थानञ्च कुर्व्वन्ति कान्तचित्तकमब्रुवन् ॥ ५७ ॥
यथा लोका यथा राजा यथा मृत्युः सनातनः ।
तत्रैवास्तित्र तिष्ठेति गम्यतां गम्यतामभो ॥ ५८ ॥

इति वराहपुराणे भगवच्छास्त्रे संसारचक्रे यमधर्म्मकिङ्करयुद्धं
नाम एकाधिकद्विशततमोऽध्यायः ।

* सन्धापनं इति साधु । † नियुक्तस्त्व इति साधु । ‡ ततोदूताः समागम्येति (

# अधिकद्विशततमोऽध्यायः।

ऋषिरुवाच।

विस्मयस्तु मया दृष्टस्तस्मिन्नद्भुतदर्शनः।
चित्रगुप्तस्य सन्दिष्टो धर्म्मराजेन धीमतः*॥ १॥
प्राप्नुवन्ति फलन्ते†वै ये च क्लिष्टाः पुरा जनाः।
अग्निना वै प्रतप्तास्ते बद्धा बन्धैः सुदारुणैः॥ २॥
सन्तप्ता बहवो ये ते तैस्तैः कर्म्मभिरुल्वणैः।
श्यामानां दर्शनानाञ्च इमं शीघ्रं प्रमापय॥ ३॥
दुराचारं पापरतं निर्घृणं पापचेतसम्।
स्नानस्य हिंसका ये च भक्षयन्तु दुरात्मनः‡॥ ४॥
पितृघ्नो मातृगामी च सर्व्वदोषसमन्वितः।
आरोप्य शाल्मलीशीर्षं कण्टकैस्तैर्विपाटय॥ ५॥
एनं पाचय तैलस्य घृतस्यौद्रस्य वा पुनः।
तप्तद्रोण्यां ततो मुञ्च ताम्रतप्तखले पुनः॥ ६॥
नराधममिमं क्षिप्त्वा प्रदीप्ते हव्यवाहने।
ततो मनुष्यतां प्राप्य ऋणैस्तत्र प्रदीप्यते॥ ७॥
शयनासनहर्त्तारमग्निदायी च§ यो नरः।

* सन्दिष्टो धर्म्मराजेन धीमतेति सम्यक्। † फलमीति साधु। ‡ दुरात्मानं दुरात्मानो वा साधु। § शयनासनहर्त्ता च वह्निदायीति कृते तु सम्यक् स्यात्। अन्यथा शयनासनहर्त्तारमिति द्वितीयान्तपदमनन्वयं तिष्ठेत्।

वैतरण्यामयश्चैव क्षिप्यतामचिरं पुनः ॥ ८ ।
पापकर्म्मायमत्यर्थं सर्व्वतीर्थविनाशकः ।
तस्य प्रदीप्तः कीलोऽयं वह्नितप्तोऽतिदुःसहः ॥ ९ ।
आदेश्य उभयोरस्य* कर्णयोः† कूटसाक्षिणः ।
यो नरः पिशुनः कूटसाक्षी चालीकजल्पकः ॥ १० ।
ग्रामयाजनकं विप्रमध्रुवं दाम्भिकं शठम् ।
बद्ध्वा तु बन्धने घोरे दीयतान्तु न किञ्चन ॥ ११ ।
जिह्वाऽस्य छिद्यतां शीघ्रं वाचा दुष्टस्य पापिनः ।
गम्यागम्यं पुरा येन विज्ञातं न दुरात्मना ॥ १२ ।
कृतं लोभाभिभूतेन कामसम्मोहितेन च ।
तस्य छित्वा ततो लिङ्गं क्षारमग्निञ्च दीपय ॥ १३ ।
इमन्तु खलकं कृत्वा दुरात्मा‡ पापकारिणम् ।
दायादा बहवो येन सर्व्वे तीर्थविनाशिनाः ॥ १४ ।
इमं वार्द्धुषिकं विप्रं सर्व्वाङ्गेषु छेदय ।
तथायं यातनां यातु पापस्त्वेह समाचरन् ॥ १५ ।
सुवर्णस्तेयिनं पापकृतघ्नञ्च तथा नरम् ।
कूरं पितृघ्नमेनं ब्रह्मघ्नेषु समीकुरु ॥ १६ ।
अस्थि छित्वा ततः क्षिप्रं क्षारमग्निञ्च दापय ।

* आदेश्यमुभयोरिति बहुषु पाठः, मम पाठे कीलमग्नत्वा पुनरादेश्यमित्यपि पुनरुक्तिनम । † कर्णयोरित्यत्र कर्णौरिति कोषत् पाठः [illegible] । ‡ दुरात्मनमिति साधु

इमन्तु विप्रङ्खादन्तु तीक्ष्णदंष्ट्राः सुदारुणाः ॥ १७ ।
पिशुनं हि महाव्याघ्राः पञ्च घोराः सुदारुणाः ।
इमं पचत पाकेषु बहुधा मर्म्मभेदिनम् ॥ १८ ।
येनाग्निरुज्झितः पूर्व्वं गृहीत्वा च न पूजितः ।
इमं पापसमाचारं वीरघ्नमतिपापिनम् ॥ १९ ।
कर्कटस्य तु घोरस्य नित्यक्रुद्धस्य प्रापय ।
इमङ्गारे क्रूरे क्षिप्रं सर्व्वयाजनयाजकम् ॥ २० ।
सर्व्वेषान्तु पशूनां यो नित्यं धारयते जलम् ।
न त्राता न च दाता च पापस्यास्य दुरात्मनः ॥ २१ ।
अदानव्रतिनो विप्राः वेदविक्रयिणस्तथा ।
सर्व्वकर्म्माणि कुर्य्युर्ये दीयते न च किञ्चन ॥ २२ ।
तोयभाजनहर्त्तारं भोजनं योऽनिवारयन् ।
हन्यतां सुदृढैर्दण्डैर्यमदूतैर्महाबलैः ॥ २३ ।
वेणुदण्डकशाभिश्च* लोहदण्डैस्तथैव च ।
जलमस्मै न दातव्यं भोजनञ्च कथञ्चन ॥ २४ ।
तस्मा अन्नञ्च† पानञ्च न दातव्यं कदाचन ।
हतविश्वास्यहन्तारं वह्नौ शीघ्रम्प्रपाचय ॥ २५ ।
ब्रह्मदेयं हृतं येन तं वै शीघ्रं विपाचय ।
बहुवर्षसहस्राणि पातयेः कर्म्मविस्तरे ॥ २६ ।
समुत्तीर्णस्ततः पश्चात्तिर्य्यग्योनौ प्रपातयेः ।

---

* कशाभिश्चेति ग । † तस्मादन्नञ्चेति ग ।

सूक्ष्मदेहविपाकेषु कीटपक्षिविजातिषु ॥ २७ ।
क्लिष्टो जातिसहस्रैस्तु जायते मानुषस्ततः ।
तत्र जातो दुरात्मा च कुलेषु विविधेषु च ॥ २८ ।
हिंसारूपेण घोरेण ब्रह्मवध्यां प्रदापयेत् ।
राजप्रमारकङ्घोरं ब्रह्मघ्नं दुष्कृतं तथा ॥ २९ ।
सुवर्णस्तेयिनञ्चैव सुरापञ्चैव कारयेत् ।
अनुभूय ततः काले ततो यक्ष्म प्रयोजयेत् ॥ ३० ।
गोघातको ह्ययम्पापः कूटशाल्मलिमारुहेत् ।
क्लिश्यते विविधैर्घोरै राक्षसैर्घोरदर्शनैः ॥ ३१ ।
पूतिपाकेषु पच्येत जन्तुभिः सम्प्रयोजितः ।
ब्रह्मवध्याचतुर्भागैर्मृगपशुत्वमागतः ॥ ३२ ।
उद्विग्नवासं पतितं यत्र यत्रोपपद्यते ।
पापकर्म्मसमुद्विग्नो जातो जातः पुनः पुनः ॥ ३३ ।
अयं तिष्ठति किं पापः पितृघाती दुरात्मवान् ।
ते तु वर्षशतं साग्रं भक्षयन्तु विचेतसः ॥ ३४ ।
ततः पाकेषु घोरेषु पच्यताञ्च नराधमः* ।
ततो मानुषतां प्राप्य गर्भस्थो म्रियतां पुनः ॥ ३५ ।
व्यापन्नो दशगर्भेषु ततः पश्चाद्विमुच्यताम् ।
तत्रापि लब्ध्वा मानुष्यं क्लेशभागी च जायताम् ॥ ३६ ।

* पच्य तावन्नराधम इति (ग), अत्र पच्येति आर्षं, पक्त्वा पाचयित्वा वा साधु ।

बुभुक्षारुग्विकारैश्च सततं तत्र पीड्यताम् ।
पापाचारमिमङ्घोरं मित्रविश्वासघातकम् ॥ ३७ ।
यन्त्रेण पीड्यतां क्षिप्रं ततः पश्चाद्विमुच्यताम् ।
दीप्यतां ज्वलने घोरे वर्षाणाञ्च शतद्वयम् ॥ ३८ ।
जायताञ्च ततः पश्चाच्छुनां योनौ दुरात्मवान् ।
भ्रष्टोऽपि जायतां तस्मान्मानुषः क्लेशभाजनः ।
प्राप्नुवान्विविधान्रोगान् संसारे चैव दारुणाम् ॥ ३९ ।
अश्वस्वहारी पापोऽयं नरो लवणहारी च ।
वर्षाणान्तु शतं पञ्च तत्र क्लिष्टो दुरात्मवान् ।
कृमिको जायते पश्चाद्विष्ठायाङ्कृमिकोऽपरः ।
शकुन्तो जायते घोरस्तत्र पश्चाद्दको भवेत्* ॥ ४०।४१ ।
द्रुममग्निप्रदग्धोरङ्काष्ठाग्नौ सन्तापय ॥ ४२ ।
स्वकर्म्मसु विहीनेषु पश्चाल्लब्धगतिस्तथा ।
ततश्चाथ मृगो वापि ततो मानुषतां व्रजेत् ॥ ४३ ।
तत्रापि दारुणं दुःखमुपभुङ्क्ते दुरात्मवान् ।
सर्व्वदुष्कृतकार्य्येषु सह सङ्घातचिन्तकैः ॥ ४४ ।
एवङ्कर्म्मसमायुक्तास्ते भवन्तु सहस्रशः ।
परद्रव्यापहाराश्च रौरवे पतितास्तथा ॥ ४५ ।
कुम्भीपाकेषु निर्दग्धः पश्चाद्दर्भताडितः ।
ततो जातस्त्वसौ पापः शूकरो मलभुक्तथा ॥ ४६ ।

---

* वकीभवेदिति (ग) ।

प्राप्नोतु विविधांस्तापान्यथा हृतधनश्च सन् ।
क्षुधातृष्णापराक्रान्तो गर्द्दभो दशजन्मसु ॥ ४७ ।
मानुष्यं समनुप्राप्य चौरो भवति पापकृत् ।
परोपघाती निर्लज्जः सर्व्वदोषसमन्वितः ॥ ४८ ।
वृक्षशाखावलम्बोऽथ* अधःशीर्षः प्रजायते ।
अग्निना पच्यतां पश्चाल्लुब्धो वै पुरुषाधमः ॥ ४९ ।
ततो वर्षशते पूर्णे मुच्यते स पुनः पुनः ।
अजितात्मा तथा पापः पिशुनश्च दुरात्मवान् ॥ ५० ।
पूर्व्वेश्च शूकरो भूत्वा नकुलो जायते पुनः ।
विमुक्तश्च ततः पश्चान्मानुष्यं लभते चिरात् ॥ ५१ ।
धिक्कृतः सर्व्वलोकेन कूटसाक्ष्यनृतव्रतः ।
न शर्म्म लभते क्वापि कर्म्मणा स्वेन गर्हितः ॥ ५२ ।
इमं ह्यानृतिकं दुष्टं क्षेत्रहारकमेव च ।
स्वकर्म्म दुष्कृतं यावत्तावद्दुःखं भुनक्त्यसौ ॥ ५३ ।
कर्म्मण्येकैकशश्चायं स तु तिष्ठत्वयं पुनः ।
वर्षलक्षं न सन्देहस्ततस्तिष्ठत्वयं पुनः ॥ ५४ ।
ततो जातीः स्मरेत्सर्व्वास्तिर्य्यग्योनिसमाश्रितः ।
जायतां मानुषः पश्चात्क्षुधया परिपीड़ितः ॥ ५५ ।
सर्व्वकामविमुक्तस्तु सर्व्वदोषसमन्वितः ।
क्वचिज्जात्यां भवेदन्धः क्वचिद्बधिर एव च ॥ ५६ ।

---

* चथ इति (ख) ।

क्वचिन्मूकश्च काणश्च क्वचिद्व्याधिसमन्वितः।
एवं हि प्राप्नुयाद्दुःखं न च सौख्यमवाप्नुयात्॥ ५७।
जात्यन्तरसहस्राणि प्रयुतान्यर्व्वुदानि च।
शान्तिं न लभते चैव भूमे चेत्रहरो* नरः॥ ५८।
तीव्रैरन्तर्गतैर्दुःखैर्भूमिहर्त्ता नराधमः।
इमं बन्धैर्दृढैर्बद्धा विपाचय तथाचिरम्† ॥ ५९।
प्रबद्धः सुचिरङ्कालं मम लोकगतो नरः।
जायतां स चिरञ्चापो मार्ज्जारस्तेन कर्म्मणा॥ ६०।
तीव्रक्षुधापरिक्लिष्टो बद्धो बन्धनयन्त्रितः।
दुःखान्यनुभवंस्तत्र पापकर्म्मा नराधमः॥ ६१।
सप्तधा सप्त चैकाञ्च जातिङ्गत्वा स पच्यते।
इमं शाकुनिकम्पापं श्वभिर्गृध्रैश्च घातय॥ ६२।
ततः कुक्कुटतां यातु विड्भक्षश्च दुरात्मवान्।
दंशश्च मशकश्चैव ततः पश्चाद्भवेत्तु सः॥ ६३।
जातिकर्म्मसहस्रन्तु ततो मानुषतां व्रजेत्।
इमं सौकरिकं पापं महिषा घातयन्तु तम्।
वर्षाणाञ्च सहस्रन्तु धावमानस्ततस्ततः।
विभिन्नश्च प्रभिन्नश्च शृङ्गाभ्यां पद्भिरेव च‡ ॥ ६४।६५।

* भूमिः चेत्रहर इति बहुषु पाठः। † तमाचिरमिति (ग)। ‡ इमं सौकरिकं पापं महिषाघातसंयुता। वर्षाणाञ्च सहस्रन्तु धावमानस्ततस्ततः। विभिन्नश्च प्रभिन्नश्चैवेव प्रायः सार्व्वत्रिकः पाठः, सचासङ्गतः सविशेषणपापमिति कर्म्मपदस्यानन्वितत्वात्।

तस्माद्देशात्ततो मुक्तस्ततः शूकरतां व्रजेत् ।
महिषः कुक्कुटश्चैव शशी जम्बूक एव च ॥ ६६ ।
यां यां याति पुनर्जातिं तत्र भर्त्ता भवेत्तु सः ।
कर्म्मक्षयोऽन्यथा नास्ति मया पूर्व्वं विनिर्म्मितम् ॥ ६७ ।
प्राप्य मानुषतां पश्चात्पुनर्व्याधो भविष्यति ।
अन्यथा निष्कृतिर्नास्ति जातिजन्मशतैरपि ॥ ६८ ।
उच्छिष्टान्नप्रदातारं पापाचारमधार्म्मिकम्* ।
अङ्गारैः पचताश्चैनं† त्रीणि वर्षशतानि च ॥ ६९ ।
भिन्नचारित्रदुःशीला भर्त्तुर्व्यलीककारिणी ।
आयसान्पुरुषान् सप्त आलिङ्गतु समन्ततः ॥ ७० ।
ततः शुनी भवेत्पश्चात्सूकरी च ततः परम् ।
कर्म्मक्षये ततः पश्चान्मानुषी दुःखिता भवेत् ।
न च सौख्यमवाप्नोति तेन दुःखेन दुःखिता ॥ ७१ ।
अनेन भृत्या बहवः श्रान्ताः शान्ताः प्रवाहिताः ।
भक्ष्यं भोज्यञ्च पानञ्च न तेषामुपपादितम् ।
अनुमोदे प्रजा दृष्ट्वा लिप्समानो दुरात्मवान् ॥ ७२ ।
एवं कुरुत भद्रं वो मम पार्श्वे तु दुर्म्मतिः ।
रौरवे नरके घोरे सर्व्वदोषसमन्विते ।
सर्व्वकर्म्माणि कुर्व्वाणं क्षपयध्वं दुरासदम् ।

---

* विनिर्म्मितमिति (क), (ख), विनिर्म्मितामिति (ग) । † पचतामित्यात्मनेपदम। पचत्विति साधु । पच्यतामिति (ग), तदपि चार्षं कर्म्मणोऽनुक्तत्वात् ।

वर्षाणान्तु सहस्राणि तैस्तैः कर्म्मभिराहतम् ॥ ७३।७४ ।
अश्विष्यतामयं पश्चाद्दस्युजातौ दुरात्मवान् ।
जायतामुरगः पश्चात्ततः कर्म्म समाश्रयेत् ॥ ७५ ।
ततः पश्चाद्भवेत्पापश्चेतरः* सर्व्वपापकृत् ।
शूकरस्तु भवेत्पश्चाच्छेपश्च जायते पुनः ।
हस्त्यश्वश्च शृगालश्च शूकरो वक एव च ॥ ७६ ।
ततो जातस्तु सर्व्वेषु संसारेषु पुनः पुनः ।
वर्षाणामयुतं सम्यक् ततो मानुषतां व्रजेत् ॥ ७७ ।
पञ्चगर्भेषु सापत्सु पञ्च जातो म्रियेत सः ।
अपोगण्डो म्रियेत्पश्चा† कर्म्मशेषक्षये तु सः ।
ततो मानुषतां याति एष कर्म्मविनिर्णयः‡ ॥ ७८ ।
पापस्य सुकृतस्याथ प्रजानां विनिपातने ।
भूतानाञ्चाप्यसम्मानं दुष्प्रहारश्च सर्व्वशः ।
अतः स्वयम्भुवा पूर्व्वं कर्म्मपाको यथार्थवत् ॥ ७९ ।

इति वराहपुराणे संसारचक्रे कर्म्मपाको नाम

द्व्यधिकद्विशततमोऽध्यायः ।

* चामर इति (ग) । † म्रियेतेति साधु । ‡ एककर्म्मविनिर्णय इति (ख) ।

# अधिकद्विशततमोऽध्यायः ।

ऋषिपुत्त्र उवाच ।

अन्यानपि तथा पापांस्त्रिभगुमो दिदेश ह ।
व्यामिश्रान् कथ्यमानांश्च शृणुध्वं तान्महौजसः ॥ १ ।
शीलसंयमहीनानां कृष्णपक्षानुगामिनाम् ।
महापापैरुपेतामाकर्ण्यतां तत्पराभवम् ॥ २ ।
राजद्विष्टा गुरुद्विष्टाः सर्व्वे ते वै विगर्हिताः* ।
अविश्वास्या ह्यसम्भाष्याः कुच्चिमात्रपरायणाः ॥ ३ ।
हिंसाविहारिणः क्रूराः सूचकाः कार्य्यदूषकाः ।
गवेडकस्य वधका महिषाणामजां† तथा ॥ ४ ।
दावाग्निं ये च मुञ्चन्ति ये च सौकरिकास्तथा ।
तत्र कालमसंख्येयं पच्यन्ते पापकारिणः ॥ ५ ।
कर्म्मक्षयाद्यदा भूयो मानुष्यं प्राप्नुवन्ति ते ।
अल्पायुषो भवन्तीह व्याधिग्रस्ताश्च नित्यशः ॥ ६ ।
गर्भे एव विपद्यन्ते म्रियन्ते बालकास्तथा ।
परिरिङ्गरताः केचिन्म्रियन्ते पुरुषाधमाः ॥ ७ ।
काष्ठवंशे च शस्त्रे च वायुना ज्वलनेन च ।
तोयेन वा पाशबन्धैः पतनेन विषेण वा ॥ ८ ।

* सर्व्वे ते वै हि गर्हिता इति (क), (ख), । † अजानामिति साधु ।

मातापितृवधक्लिष्टं मित्रसम्बन्धिवन्धजम्।
बहुशः प्राप्नुवन्त्येते विद्रवच्चाप्यभीक्ष्णशः॥ ९।
प्राणातिपातनन्ते वै प्राप्नुवन्ति यथा तथा।
लोहका कारकाश्चैव गर्भाणां विनिहिंसकाः॥ १०।
मूलकर्म्मकरा ये च गरदाः पुरदाहकाः।
ये च पञ्जरकर्त्तारो ये च शूलापघातकाः॥ ११।
पिशुनाः कलहाश्चैव ये च मिथ्याविदूषकाः।
गोकुक्कुरखरोष्ट्राणां चर्म्मका मांसभेदकाः॥ १२।
उद्वेजनकराश्चण्डाः पच्यन्ते नरकेषु ते।
तत्र कालन्तु सम्प्राप्य यातनाश्च सुदुःसहाः॥ १३।
कर्म्मक्षयो यदा भूयो मानुष्यम्प्राप्नुवन्ति ते।
हीनाङ्गाः सुदरिद्राश्च भवन्ति पुरुषाधमाः॥ १४।
श्रवणच्छेदनञ्चैव नासाच्छेदनमेव च।
छेदनं हस्तपादानां* प्राप्नुवन्ति स्वकर्म्मणा॥ १५।
शारीरं मानसं दुःखं प्राप्नुवन्ति पुनः पुनः।
गलवेदनास्तथोग्राश्च† तथा मस्तकवेदनाः॥ १६।
कुष्ठामयं तथा तीव्रं प्राप्नुवन्ति नराधमाः।
जडान्धवधिरा मूकाः पङ्गवः पादसर्पिणः॥ १७।
एकपक्षहताः काणाः कुनखाश्चामयाविनः।
कुब्जाः खञ्जास्तथा हीना विकलाश्च घटोदराः॥ १८।

* हस्तपादस्येति साधु। † अत्रैकाक्षराधिक्याच्छन्दोदोषः

गलत्कुष्ठाः श्वित्रकुष्ठा भवन्ति स्वैय कर्म्मभिः ।
वाताण्डाश्चाण्डहीनाश्च प्रमेहमधुमेहिनः ॥ १९ ।
योनिशूलाग्निशूलाश्च श्वासहृद्रुग्शूलिनः ।
पिण्डकावर्त्तभेदैश्च प्लीहगुल्मादिरोगिणः ॥ २० ।
बहुभिर्दारुणैर्घोरैर्व्याधिभिः समनुद्रुताः ।
इत्येतान्हिंसकान् क्रूरान् घातयन्तु सुदारुणान् ।
मिथ्याप्रलापिनो दूतान् पाचयन्तु यथाक्रमम् ॥ २१ ।
कर्क्कशाः पुरुषाः सत्या ये च योषा निरर्थकाः ।
एषां चतुर्विधा भाषा या मिथ्याप्यभिधीयते ॥ २२ ।
हास्यरूपेण या भाषा चित्ररूपेण वा पुनः ।
अरहस्यं रहस्यं वा पैशुन्येन तु निन्दनात् ।
उद्वेगजनना वापि कटुका लोकगर्हिताः ॥ २३ ।
स्नेहचयकरां रूचां भिन्नवृत्तविभूषिताम् ।
कदलीगर्भनिःसारां मर्म्मस्फकटुकाक्षराम् ।
स्वरहीनामसंख्येयां भाषन्ति* च निरर्थकाम् ॥ २४ ।
अयन्त्रितमुखा ये च ये निवद्धाः प्रलापिनः ।
दूषयन्ति हि जल्पन्तोऽनृजवो निष्ठुराः शठाः ।
निन्दया गतलज्जाश्च मूर्खा मर्म्मविभेदिनः ॥ २५ ।
न मर्षयन्ति येऽन्येषां कीर्त्त्यमानाञ्छुभान् गुणान् ।
दुर्वाचः परुषांश्चण्डान्बन्धयध्वं नराधमान् ॥ २६ ।

* भाषन्ते इति साधु ।

ततस्तिर्य्यक् प्रजायन्ते बहुधा कीटपक्षिणः ।
लोके दोषकराश्चैव लोकद्विष्टास्तथापरे ॥ २७ ।
तत्र कालं चिरस्थारं पश्यन्ते पापकारिणः ।
कर्म्मक्षयो यदा भूयो मानुष्यम्प्राप्नुवन्ति ते ॥ २८ ।
परिभूता अविश्वासा नष्टचित्ता अकीर्त्तयः ।
अनर्थाश्चाप्यनर्थाश्च* स्वपन्ति ह्यवमानिताः ॥ ॥ २९ ।
त्यक्ता मित्राणि मित्रेषु ज्ञातिभिश्च निराकृताः ।
लोकदोषकराश्चैव लोकद्वेष्याश्च ये नराः ॥ ३० ।
अन्यैरपि कृतं पापं तेषां पतति मस्तके ।
वज्रं शस्त्रं विषं वापि देहाद्देहनिपातनम् ॥ ३१ ।
मिथ्याप्रलापिनामेषामुक्ता क्लेशपरम्परा ।
स्तेयहारम्प्रहारश्च नीतिहारं तथैव च ॥ ३२ ।
स्तेयकर्म्माणि कुर्व्वन्ति प्रसह्य हरणानि च ।
करचण्डाशिनो ये च राजशस्त्रोपजीविनः ॥ ३३ ।
पीड़यन्ति जनान् सर्व्वान् कृपणान् ग्रामकूटकान् ।
सुवर्णमणिमुक्तानां कूटकर्म्मानुकारकाः ॥ ३४ ।
समये कृतहर्त्तारो लोकपीड़ाकरा नराः ।
अनादिवृद्धयश्चान्ये अर्थातिशयकारिणः ॥ ३५ ।
भूतनिष्ठाभियोगश्चा व्यवहारेष्वनर्थकाः ।
भेदकाराश्च धातूनां रजतस्य च कारकाः ॥ ३६ ।

* चहीनाश्चेति (क), (ख) ।

न्यासार्थहारका ये च सम्मोहनकराश्च ये ।
ये तथौपाधिकाः क्षुद्राः पच्यन्ते तेषु तेष्वथ ॥ ३७ ।
निरयेष्वप्रतिष्ठेषु दारुणेषु ततस्ततः ।
तत्र कालन्तु सुचिरं पच्यन्तां पापकारिणः ॥ ३८ ।
कर्म्मक्षयो यदा तेषां मानुष्यं प्राप्नुवन्ति ते ।
तत्र तत्रोपपद्यन्ते यत्र यत्र महद्भयम् ॥ ३९ ।
यस्मिंश्चौरभयं देशे क्षुद्भयं राजतो भयम् ।
आपद्भयोऽपि भयं यत्र व्याधिमृत्युभयं तथा ॥ ४० ।
ईतयो यत्र देशेषु लुब्धेषु नगरेषु च ।
क्षयाः कालोपसर्गा वा जायन्ते तत्र ते नराः ॥ ४१
बहुदुःखपरिक्लिष्टा गर्भवासेन पीड़िताः ।
एकहस्ता द्विहस्ता वा कूटाश्च विकृतोदराः ॥ ४२ ।
शिराविवृतगात्राश्च हीनाङ्गा वातरोगिणः ।
अश्रुपातितनेत्राश्च भार्य्यां न प्राप्नुवन्ति ते ॥ ४३ ।
तेषामपत्यं न भवेत्तद्रूपञ्च सुलक्षणम् ।
अतिकृस्वं विवर्णञ्च विकृतं भ्रान्तलोचनम् ॥ ४४ ।
संसारे च यथा पक्वं कृपणं भैरवस्वनम् ।
महतः परिवारस्य तुष्टयोच्छिष्टभोजकाः ॥ ४५ ।
रूपतो गुणतो हीनो बलतः शीलतस्तथा ।
राजभृत्या भवन्त्येते पृथिवीपरिचारकाः ॥ ४६ ।
अनालया निरामर्षा वेदनाभिः सुसंवृताः ।
समकार्य्यसजात्यानां मित्रसम्बन्धिनां तथा ॥ ४७ ।

कर्म्मान्तकारका* ह्येते तृणाभूता भवन्ति ते।
अनर्थो राजदण्डो वा नित्यमुत्पाद्यते वधः॥ ४८।
कर्म्मकल्याणकृच्छ्रेषु भूयश्चापि विमुह्यति।
कर्षकाः पशुपालाश्च वाणिज्यस्योपजीवकाः॥ ४९।
यद्यत्कुर्व्वन्ति तं कर्म्म सर्व्वत्र व्ययभागिनः।
सत्यमन्विष्यमाणापि† नैव तं कीर्त्तिभागिनः॥ ५०।
यत्किञ्चिद्दशभङ्कर्म्म‡ तस्मिन्देशे समुच्छ्रितम्।
तस्य देशस्य नैवास्ति वर्ज्जयित्वातुरान्नरान्॥ ५१।
सुहृद्भ्यामपि तेषां वै चेतन्तन्तु विवर्ज्जयेत्§।
अशनिर्वा पतेत्तत्र चैत्रं वापि विनश्यति॥ ५२।
न सुखं नापि निर्वाणं तेषां मानुषता भवेत्।
उत्पद्यते नृशंसानां तीव्रः क्लेशः सुदारुणः॥ ५३।
स्तेयकर्म्मप्रयुक्तानां मुक्त्वा क्लेशपरम्पराम्।
परदाराप्रसक्तानामिमां शृणुत यातनाम्॥ ५४।
तिर्य्यङ्मानुषदेहेषु यान्ति विच्छिन्नमानसाः।
विहरन्ति ह्यधर्म्मेषु धर्म्मचारित्रदूषकाः॥ ५५।
तांस्तेनैव प्रदानेन संग्रहे तु ग्रहेण वा।
मूलकर्म्मप्रयोगेण राष्ट्रस्यातिक्रमेण वा॥ ५६।

* कर्म्मान्तकालया इति (क), ख। † अन्विष्यमाणा अपीति साधु। ‡ सत्यमन्विष्यमाणोऽपीति (ग)। § तन्तु विवर्ज्जयेदिति सार्व्वत्रिकः पाठः, तत्तु विवर्ज्जयेदिति साधु।

प्रसह्य वा प्रकृत्या वै ये चरन्ति कुलाङ्गनाः ।
वर्णसङ्करकर्त्तारः कुलधर्म्मादिदूषकाः ॥ ५७ ।
शीलशौचादिसम्पन्नं ये जनं धर्म्मलक्षणम् ।
धर्षयन्ति च ये पापाः श्रूयतां तत्पराभवः ॥ ५८ ।
निरयम्पापभूयिष्ठा अनुभूय महाभयम् ।
बहुवर्षसहस्राणि कर्म्मणा तेन दुष्कृताः ॥ ५९ ।
कर्म्मक्षये यदा भूयो मानुष्यं यान्ति दारुणम् ।
सङ्कीर्णयोनिजाः क्षुद्रा भवन्ति पुरुषाधमाः ॥ ६० ।
वेश्यालङ्ककूटानां शौण्डिकानां तथैव च ।
दुष्टपाषण्डनारीणां नैकमैथुनगामिनाम् ॥ ६१ ।
निर्लज्जाः पण्ड्काः केचिद्दर्पपौरुषगण्डकाः ।
स्त्रीबन्धकाः स्त्रीविनाशाः स्त्रीवेषाः स्त्रीविहारिणः ॥ ६२
स्त्रीणाञ्चानुप्रवृत्ता ये स्त्रीभोगपरिभोगिनः ।
तद्दैवतास्तन्नियमास्तद्वेषास्तत्प्रभाषिताः ॥ ६३ ।
तद्भावास्तत्कथालापास्तद्भोगाः परिभोगिनः ।
विप्रलोभश्च दानेषु प्राप्नुवन्ति नराधमाः ॥ ६४ ।
सौभाग्यपरमासक्ता नरा वीभत्सदर्शनाः ।
अबुद्धैः सह संवासं प्रियञ्चाविप्रियं तथा ॥ ६५ ।
शारीरं मानसं दुःखम्प्राप्नुवन्ति नराधमाः ।
क्रमिभिर्भक्षणञ्चैव तप्ततैलोपसेचनम्* ।

* तैलोपसेवनमिति (ख) ।

अग्निक्षारनदीभ्यान्तु प्राप्नुवन्ति न संशयः ॥ ६६ ।
परदारप्रसक्तानां भयं भवति निग्रहः ।
सर्व्वञ्च निखिलङ्कार्य्यं यन्मया समुदाहृतम् ॥ ६७ ।

इति वराहपुराणे पापसमूहानुक्रमी नाम
त्र्यधिकद्विशततमोऽध्यायः ।

# चतुरधिकद्विशततमोऽध्यायः ।

ऋषिरुवाच ।

इदञ्चैवापरं तस्य वदतो हि मया श्रुतम् ।
चित्रगुप्तस्य विप्रेन्द्रा वचनं लोकशासिनः ॥ १ ।
दूरेऽसाविति किङ्कार्य्यं न चयोऽस्त्यस्य कर्म्मणः ।
किङ्करूपां कुरुते तस्मिन्गच्छाशु जहि मा व्यथः ॥ २ ।
व्रीडितः किम्भवान् भ्रातं किं तिष्ठसि पराङ्मुखः ।
किं न गच्छसि वेगेन किं त्वया सुचिरङ्कृतम् ॥ ३ ।
गच्छ गच्छ पुनस्तत्र शीघ्रञ्चैनमिहानय ।
अशक्तोऽस्मीति किं रोषमर्हन्ते दर्पमीदृशम् ॥ ४ ।
किं त्वं वदसि दुर्म्मुखे विवाहस्तस्य वर्त्तते ।
ऊर्द्धरेतास्तपस्वीति त्वं मां भाषयसे कथम् ॥ ५ ।

किं त्वं वदसि गर्ज्जस्व* मुहूर्त्तं परिपालय ।
रमते कान्तया सार्द्धमिति किं त्वं प्रभाषसे ॥ ६ ।
पतिव्रतेति साध्वीति रहस्यं भाषसे पुनः ।
किञ्चिं वदसि बालो हि निशि चैवागतो गृहम् ॥ ७ ।
आनीयते कथं स्नात्वा भोक्तुकामं कथं हरे ।
जलशायिनङ्कथञ्चैव† दातुकामङ्कथं हरे‡ ॥ ८ ।
धार्म्मिका यूयमेवात्र अहमेको नृशंसवत् ।
यात यात तथा दृष्ट्वा यथाकालो नातिक्रमेत्§ ॥ ९ ।
शीघ्रं त्वं भव सर्पो हि व्याघ्रस्त्वञ्च सरीसृपः ।
जलेग्राहो भव त्वं हि त्वङ्कृमिस्त्वं सरीसृपः ॥ १० ।
नरकानुगतस्त्वं हि व्याधिभूतः समाश्रयः ।
अतीसारो भव त्वं हि त्वं छर्दिस्त्वं पुनर्भवः ॥ ११ ।
कर्णरोगो विसूची च नित्यरोगश्च सम्भव ।
ज्वरो भव महाघोरो जलेग्राहो दुरासदः ॥ १२ ।
वातव्याधिस्तथा घोरस्तथैव त्वं जलोदरः ।
उन्मादोऽपस्मारश्चैव¶ वातरोगस्तथैव च ॥ १३ ।
विभ्रमस्त्वं भवेश्छीघ्रं विष्टम्भश्च पुनर्भव ।
व्याधिर्भव महाघोरो ह्ययं तृष्णान्तु विन्दतु‖ ॥ १४ ।

* गर्ज्जन् वै इति (ग) । † अत्रैकाक्षराधिकाच्छन्दोदोषः । ‡ बहुषूभयत्रापि हरेरिति पश्चान्न. पाठः । § नातिक्रमेदित्यत्र छन्दोदोषः । नतिक्रमेदिति कृते तु आर्षप्रयोगो भवेत् । ¶ अत्रापि छन्दोदोषः । ‖ विन्दतीति (ख) ॥

यथाकालं यथा दृष्टं तावत्कालोऽत्र तिष्ठतु* ।
कालं संहरणे वापि शुभस्यागमनेऽपि वा ॥ १५ ।
भवन्तः कृतकर्म्माणस्ततो मोक्षमवाप्स्यथ ।
द्रुतं द्रवत वेगेन सर्व्वे गच्छत मा चिरम् ॥ १६ ।
वराज्ञा धर्म्मराजस्य या मया समुदाहृता ।
एकाहं क्षपयेस्तत्र द्विरात्रं तत्र मा चिरम् ॥ १७ ।
त्रिरात्रं चतुरात्रं वै षड्रात्रं दशरात्रकम् ।
पक्षं वा मासमेकं वा बहून्मासांस्तथापि वा ॥ १८ ।
क्षपयित्वा यथाकालं ततो मोक्षमवाप्स्यथ ।
भूतात्मा मूढ़वांस्तत्र करुणः कष्टमेव च ॥ १९ ।
यस्मिन्यस्मिंस्तु कालेऽहं यावतश्च श्रयाम्यहम् ।
तस्मिंस्तस्मिन्महाकालं यूयं तत्कर्त्तुमर्हथ ॥ २० ।
विनियोगा मया मुक्ता† यथापूर्व्वं यथाश्रुतम् ।
जाग्रतं वा प्रमत्तं वा यथा कालो न सम्पतेत् ॥ २१ ।
यत्नात्तथा तु कर्त्तव्यं भवद्भिर्मम शासनात् ।
अभयश्चात्र यच्छामि ब्राह्मणेभ्यो न संशयः ॥ २२ ।
तस्माद्यात ऋषिभ्यश्च स्त्रीभ्यश्चैव महाबलाः ।
यातनाया न भेतव्यमहमाज्ञापयामि वः ॥ २३ ।
यथावाच्यञ्च कुरुत यथा कालो न गच्छति ।
यथाकामं प्रकुरुत यच्च दृष्टं यथा तथा ॥ २४ ।

* तिष्ठतीति (ख) । † युक्ता इति (ख) (ग)

मयाश्रुता विशेषेण मृत्युना सह सङ्गतः ।
यथावीरो महातेजाश्चित्रगुप्तो महायशाः ॥ २५ ।
यथाब्रवीत्स्वयं रुद्रो यथा शक्रः शचीपतिः ।
यथाज्ञापयते ब्रह्मा चित्रगुप्तस्तथा प्रभुः ॥ २६ ।

इति वराहपुराणे संसारचक्रे कृतप्रश्नं नाम

चतुरधिकद्विशततमोऽध्यायः ।

## पञ्चाधिकद्विशततमोऽध्यायः ।

ऋषिपुत्त्र उवाच ।

इदमन्यत्पुरा विप्राः श्रूयतां तस्य भाषितम् ।
यमस्य चित्रगुप्तस्य यच्च तच्च मया श्रुतम् ॥ १ ।
अयन्तु भवतां यातु यातु स्वर्गं महीक्षिताम् ।
अयं वृक्षस्त्वयं तिर्य्यगयं मोक्षं व्रजेन्नरः ॥ २ ।
अयं नार्गो भवेच्छीघ्रमयन्तु परमाङ्गतिम् ।
स्वपूर्व्वकान् पश्यते* यमात्मनस्तु पितामहान् ॥ ३ ।
क्लिश्यतो रुदतश्चैव वदतश्च पुनः पुनः ।
स्वेन दोषेण सर्व्वे वै अमयं नरकङ्गताः ॥ ४ ।

---

* पश्यतीति साधु ।

दारत्यागी अधर्म्मिष्ठः पुत्रपौत्रविवर्ज्जितः ।
चिरं वै रौरवे ह्येनं क्षपयन्तु महौजसः ॥ ५ ।
मुच्यतान्त इमे सर्व्वे अतीतानागतांस्तथा ।
मुच्यतामाशु मुच्यन्तां त एते पापवर्ज्जिताः ॥ ६ ।
आगमे च विपत्तौ च सर्व्वधर्म्मानुपालकाः ।
ते तु कल्पान् बहून् स्वर्गे उषित्वा ह्यनसूयकाः ॥ ७ ।
बहुसुन्दरनार्य्यङ्के* ह्याद्ये परमधार्म्मिकम् ।
कलौ मानुषतां यातु धर्म्मस्येह निदर्शनम् ॥ ८ ।
त्रिपिष्टपे परिक्लिश्यो वासो ह्यस्याक्षयो भवेत् ।
अयमायोधने शत्रुं हत्वा तु निधनङ्गतः ॥ ९ ।
ब्राह्मणार्थे गवार्थे वा राष्ट्रार्थे निधनङ्गतः ।
शक्रस्य ह्यमरावत्यां निवेदयत मा चिरम् ॥ १० ।
तत्र वैमानिको भूत्वा कल्पमेकं निवत्स्यति ।
तथैवायं महाभागो धर्म्मात्मा धर्म्मवत्सलः ॥ ११ ।
बहुदानरतो नित्यं सर्व्वभूतानुकम्पकः ।
एनङ्गन्धैश्च माल्यैश्च शीघ्रमेव प्रपूजय ॥ १२ ।
अस्मै पूजा भवेद्दिया मया दिष्टा महात्मने ।
वीज्यतां चामरैरेष रथमस्मै प्रदीयताम् ॥ १३ ।
प्रेतवासं समुत्सृज्य इतो यातु त्रिविष्टपम् ।
इन्द्रस्यार्द्धं भवेच्चैवं देवदेवस्य धीमतः ॥ १४ ।

---

* बहुसुन्दरीशोभितङ्के इति (ग) ।

शङ्खतूर्य्यनिनादेन तत्र वै विजयेन च ।
तत्र वै पूजयित्वा च प्रायशो लभतां सुखम् ॥ १५ ।
अयङ्गच्छतु भद्रञ्च इन्द्रदेशं दुरासदम् ।
अनेन वै कीर्त्तिमता लोकः सर्व्वो ह्यलङ्कृतः ॥ १६ ।
गुणैश्च शतसंख्याकैः शक्र एनं प्रतीक्षते ।
तावत्स्थास्यति धर्म्मात्मा यावच्छक्रस्त्रिपिष्टपे ॥ १७ ।
तावत्स मोदते स्वर्गे यावद्धर्म्मोऽनुमीयते ।
ततश्च्युतश्च कालेन मानुष्ये सुखमश्नुते ॥ १८ ।
रत्नवेणुप्रदश्चैव सर्व्वधर्म्मैरलङ्कृतः ।
अश्विनोर्नयलोकन्तु सर्व्वसौख्यसमन्वितम् ॥ १९ ।
अयं यातु महाभागो देवदेवं सनातनम् ।
अतिसृष्टः पुरा येन यथोक्ताः सुखदोहनाः ॥ २० ।
सर्व्वशक्त्या समेतेन द्विजेभ्य उपपादिताः ।
शुचीनां ब्राह्मणानाञ्च अन्नदानं विशेषतः ॥ २१ ।
तेन कल्पं वसिष्यन्ति* रुद्रकन्या मनोरमाः ।
तत्र कल्पं वसेद्गत्वा रुद्रलोकं न संशयः ॥ २२ ।
तेन दत्तं द्विजातिभ्यो मधुखण्डं पुरःसरम् ।
रसैश्च विविधैर्युक्तं सर्व्वगन्धमनोरमम् ॥ २३ ।
तरुणी क्षीरसम्पन्ना गौः सुवर्णयुता शुभा ।
सवत्सा हेमवासाश्च दत्ताऽनेन महात्मना ॥ २४ ।

---

† वत्स्यन्तीति साधु ।

अस्य लेख्यं मया दृष्टं तिस्रः कोव्यस्त्रिपिष्टपे ।
स्वर्गात्परिच्युतश्चापि ऋषीणां जायते कुले ॥ २५ ।
सुवर्णस्य प्रदाता च त्रिदशेभ्यो निवेद्यताम् ।
त्रिदशानभ्यनुज्ञाप्य* यातु देवमुमापतिम् ॥ २६ ।
तत्रैष वै महातेजा यथेष्टं काममाप्नुयात् ।
तत्रैवायमपि प्रेतगणभक्तो महातपाः ॥ २७ ।
प्रयातु पितृभिः सार्द्धं तर्पिता येन पूर्व्वजाः ।
दानव्रता दिवं यातु नानालोकनमस्कृताः ॥ २८ ।
अयं भद्रो महाकामं सर्व्वभूतहिते रतः ।
सर्व्वकामैरयं पूज्यः सर्व्वकामप्रदो नरः ॥ २९ ।
क्षितिप्रदो द्विजातिभ्यो ह्ययं यातु त्रिपिष्टपम् ।
तत्रैव तिष्ठतां वीरो ब्रह्मलोके सहानुगः ॥ ३० ।
विविधैः कामभोगैस्तु सेव्यमानो नरोत्तमः ।
अक्षय्यं चाजरं स्थानं पूज्यमानो महर्षिभिः ॥ ३१ ।

इति वराहपुराणे भगवच्छास्त्रे संसारचक्रे शुभाशुभफलानुकीर्त्तनं
नाम पञ्चाधिकद्विशततमोऽध्यायः ।

* अभ्यनुज्ञातं इति (ख)

# षडधिकद्विशततमोऽध्यायः ।

ऋषिरुवाच ।

चित्रगुप्तस्य सन्देशो वदतो यो मया श्रुतः ।
श्रूयतां वै महाभागास्तपःसिद्धा द्विजोत्तमाः ॥ १ ।
इमं सर्व्वातिथिं दान्तं सर्व्वभूतानुकम्पकम् ।
समावदानदातारं शेषभोजनभोजिनम् ॥ २ ।
मुञ्च मुञ्च महाभृत्य एष धर्म्मस्य निर्णयः ।
अहङ्कालेन सार्द्धं हि मृत्युना प्रकृतस्तथा ॥ ३ ।
मम स्थास्यन्ति पार्श्वेषु पापा वै विकृतास्तथा ।
एनङ्गास्यन्ति गन्धर्व्वा गगनेऽप्सरसस्तथा ॥ ४ ।
दीयतामासनं दिव्यं तथान्यद्यानमेव च ।
अन्यान्यान् कामयेत्कामान्मनसा यानि चेच्छति ॥ ५ ।
तत्तु* शीघ्रं प्रदातव्यं धर्म्मराजस्य शासनात् ।
अक्रियाणि तु दानानि पूर्व्वं दत्तानि धीमता ॥ ६ ।
प्रेष्यताञ्च महाभागो भोक्तुञ्चैव सहानुगः ।
तिष्ठत्वेषोऽत्र वै वीरो ममादेशान्महायशाः ॥ ७ ।
यावत्स्वर्गाद्विमानानि समागच्छन्ति कृत्स्नशः ।
ततः स प्रवरैर्यानैः सानुगः सपरिच्छदः ॥ ८ ।
देवानां भवनं यातु दैवतैरभिपूजितः ।

* तन्नु इति बहुषु पाठः, तन्नु आर्षम् ।

तत्रैव रमतां वीरो यावल्लोका हि धार्य्यते ॥ ९ ।
स कृतार्थः सदा लोके यत्रैषोऽभिप्रयास्यति ।
तत्र मेध्यं पवित्रञ्च यत्र स्थास्यत्ययं शुचिः ॥ १० ।
नैककन्याप्रदातारं नैकयज्ञकृतं तथा ।
पूज्यतां* सर्व्वकामैस्तु पदङ्गच्छतु वैष्णवम् ॥ ११ ।
तत्रैष रमतां धीरः सहस्रमयुतं समाः ।
ततो वै मानुषे लोके श्राद्ये वै जायतां कुले ॥ १२ ।
भूतानुकम्पको ह्येष क्रियतामस्य चार्च्चनम् ।
वर्षाणामयुतञ्चायं तत्र तिष्ठतु देववत् ॥ १३ ।
जायते तु ततः† पश्चात्सर्व्वमानुषपूजितः ।
उपानहौ च छत्रञ्च जलभाजनमेव च ॥ १४ ।
असकृद्येन दत्तानि तस्मै पूजां प्रयच्छथ ।
सभा यत्र प्रवर्त्तन्ते यस्मिन्देशे सहस्रशः ॥ १५ ।
हस्तेन संस्पृशत्येष मृदुना शीतलेन च ।
विद्याधरस्तथा ह्येष नित्यं मुदितमानसः ॥ १६ ।
महापद्मानि चत्वारि तस्मिंस्तिष्ठन्तु‡ नित्यशः ।
ततश्चुतश्च कालेन मानुषं लोकमास्थितः ॥ १७ ।
बहुसुन्दरनारीके§ कुले जन्म समाप्नुयात् ।

* पूज्यतामिति चार्षं, पूजयन्त्विति साधु । † स धीरो जायते इति (ख) ।
‡ तस्मिंस्तिष्ठतु नित्यश इति (ग), अस्मिन् पाठे तस्मिन्निति एकवचनमार्षम् । § बहुसुन्दरि-नारीके इति (ग), एवं परत्र बहुसुन्दरिनारीभिरिति ।

दधि क्षीरं घृतञ्चैवं येन दत्तं द्विजातिषु ॥ १८ ।
एष वा यातु नः पार्श्वं अस्मै पूजाम्प्रयच्छथ ।
नीयतां नीयतां शीघ्रं यत्र यत्र न चालयेत् ॥ १९ ।
गोरसस्य तु पूर्णानि भाजनानि सहस्रशः ।
यत्र दत्त्वा च पीत्वा च बान्धवेभ्यो विभागशः ॥ २० ।
ततः पश्चादयं यातु यत्र लोकोऽनसूयकः ।
तत्रैव रमतां धीरो बहुवर्षशतान्ययम् ॥ २१ ।
बहुसुन्दरनारीभिः सेव्यमानो महात्मा: ।
अमराख्यो भवेत्तत्र गोलोकेषु समाहितः ॥ २२ ।
इदमेवापरञ्चैव चित्रगुप्तस्य भाषितम् ।
सर्व्वदेवमया देव्यः सर्व्ववेदमयास्तथा ॥ २३ ।
अमृतं धारयन्त्यश्च प्रचरन्ति महीतले ।
तीर्थानां परमं तीर्थमतस्तीर्थं न विद्यते ॥ २४ ।
पवित्रञ्च पवित्राणां पुष्टीनां पुष्टिरेव च ।
तस्मात्पुरस्तु दातव्यं गवां वै मेध्यकारणात् ॥ २५ ।
दध्ना हि त्रिदशाः सर्व्वं क्षीरेण च महेश्वरः ।
घृतेन पावको नित्यं पायसेन पितामहः ॥ २६ ।
सकृद्दत्तेन प्रीयन्ते वर्षाणां हि चयोदश ।
तां दत्त्वा चैव पीत्वा च प्रीतो मेध्यस्तु जायते ॥ २७ ।
पञ्चगव्येन पीतेन वाजिमेधफलं लभेत्* ।

---

* लभेतेति साधु ।

गव्यन्तु परमं मेध्यं गव्यादन्यन्न विद्यते ॥ २८ ।
दन्तेषु मरुतो देवा जिह्वायान्तु सरस्वती ।
खुरमध्ये तु गन्धर्व्वा खुराग्रेषु तु पन्नगाः ॥ २९ ।
सर्व्वसन्धिषु साध्याश्च चन्द्रादित्यौ तु लोचने ।
ककुदे सर्व्वनक्षत्राणि लाङ्गुले धर्म्म आश्रितः ॥ ३० ।
अपाने सर्व्वतीर्थानि प्रस्रावे जाह्नवी नदी ।
नानाद्वीपसमाकीर्णाश्चत्वारः सागरास्तथा ॥ ३१ ।
ऋषयो रोमकूपेषु गोमये पद्मधारिणी ।
रोमे वसन्ति विद्याश्च त्वक्केशेष्वयनद्वयम् ॥ ३२ ।
धैर्य्यं धृतिश्च शान्तिश्च पुष्टिर्वृद्धिस्तथैव च ।
स्मृतिर्मेधा तथा लज्जा वपुः कीर्त्तिस्तथैव च ॥ ३३ ।
विद्या शान्तिर्मतिश्चैव सन्ततिः परमा तथा ।
गच्छन्तमनुगच्छन्ति एता गावो न संशयः ॥ ३४ ।
यत्र गावो जगत्तत्र देवदेवपुरोगमाः ।
यत्र गावस्तत्र लक्ष्मीः सांख्यधर्म्मश्च शाश्वतः ॥ ३५ ।
सर्व्वरूपेषु ता गावस्तिष्ठन्त्यभिमतास्तथा ।
भवनेषु विशालेषु सर्व्वप्रासादपङ्क्तिषु ॥ ३६ ।
स्त्रियश्च पुरुषाश्चैव रत्नयन्तः सुयन्त्रिताः ।
शयनासनपानेषु उपविष्टाः सहस्रशः ॥ ३७ ।
क्रीड़न्ति विविधैर्भोगैर्भोगेषु च सहस्रशः ।
तत्र पानस्थहेष्वन्ये पुष्पमालाविभूषिताः ॥ ३८ ।
भक्ष्याणां विविधानाञ्च भोजनानाञ्च सञ्चयान् ।

शयनासनपानानि वाजिनो वारणास्तथा ॥ ३९ ।
अपश्यन्विविधास्तत्र स्त्रियश्च शुभलोचनाः ।
शोभयन्ति स्त्रियः काश्चिज्जलक्रीड़ागतास्तथा ॥ ४० ।
उद्यानेषु तथा चान्या भवनेषु च पुण्यतः ।
अनेन सदृशं नास्ति अस्मादन्यत्र विद्यते ॥ ४१ ।
अहो सूत्रकृतं शिल्पमहो रत्नैरलङ्कृतम् ।
एवं गृहाद्गृहङ्गच्छन्नहं तत्र ततस्ततः* ॥ ४२ ।
ततस्तु निखिलं सम्यग्दृष्ट्वा कर्म्म महोदयम् ।
पुनरेवागतः पार्श्वं यमस्य द्विजसत्तमः ॥ ४३ ।

इति वराहपुराणे संसारचक्रे शुभकर्म्मफलोदयो नाम
षड्धिकद्विशततमोऽध्यायः ।

## सप्ताधिकद्विशततमोऽध्यायः ।

ऋषिपुत्र उवाच ।

इदमन्यन्महाभागा नारदात्कलहप्रियात् ।
श्रुतं विप्रा यथा तत्र यमस्य सदसि स्वयम् ॥ १
तथा च पृच्छतस्तस्य पुरावृत्तं महात्मनः ।

* महतत्र ततस्तम इति (ग) ।

आख्यानङ्कथयामास यदुक्तं चित्रभानुना ॥ २ ।
यथा च जनको राजा कामान्दिव्यानवाप्तवान् ।
तत्सर्व्वङ्कथयिष्यामि श्रूयतां मुनिसत्तम ॥ ३ ।
अयं तत्र महातेजा नारदो मुनिसत्तमः ।
धर्म्मराजसभां प्राप्तस्तपसा द्योतितप्रभः ॥ ४ ।
तत्र राजाऽथ वेगेन तं दृष्ट्वा स्वयमागतम् ।
अर्च्चयित्वा यथान्यायङ्कृत्वा चैव प्रदक्षिणम् ॥ ५ ।
उवाच च महातेजाः सूर्य्यपुत्त्रः प्रतापवान् ।
स्वागतन्ते द्विजश्रेष्ठ दिष्ट्या प्राप्तोऽसि नारद ॥ ६ ।
सर्व्वज्ञः सर्व्वदर्शी च* सर्व्वधर्म्मविदां वरः ।
गान्धर्व्वस्येतिहासस्य विज्ञाता त्वं महामुने ॥ ७ ।
वयं पूताश्च मेध्याश्च त्वां दृष्ट्वा ह्यागतं विभो ।
अयं देशः पुनः पूतः सर्व्वतो मुनिसत्तम ॥ ८ ।
यत्कार्य्यं येन वा कार्य्यं यद्दै मनसि वर्त्तते ।
प्रब्रूहि भगवन्नाशु यच्चान्यत्किञ्चिदुत्तमम् ॥ ९ ।
दुर्ल्लभं त्रिषु लोकेषु यच्च प्रियतरं तव ।
तपोमयानां सर्व्वेषां द्विजातीनाञ्च सुव्रत ॥ १० ।
इति धर्म्मवचः श्रुत्वा नारदः प्राह धर्म्मवित् ।
अहं ते कथयिष्यामि यत्पृष्टं संशयास्पदम् ॥ ११ ।

नारद उवाच ।

भवान् पाता च गोप्ता च नेता धर्म्मस्य नित्यशः ।

* सर्व्वशीलश्चेति (क), (ख) ।

सत्येन तपसा शान्त्या धैर्य्येण च न संशयः ॥ १२ ।
भावज्ञश्च कृतज्ञश्च त्वदन्यो न हि विद्यते ।
संशयं सुमहत्प्राप्तस्तन्ममाचक्ष्व सुव्रत ॥ १३ ।
अमरत्वङ्कथं याति व्रतेन नियमेन च ।
केन वा दानधर्म्मेण तपसा वा सुरोत्तम ॥ १४ ।
अतुलाञ्च श्रियं लोके कीर्त्तिञ्च सुमहत्फलम् ।
लभन्ते शाश्वतं स्थानं दुर्लभं विगतज्वराः ॥ १५ ।
केन गच्छन्ति नरकं पापिष्ठं लोकगर्हणम् ।
सर्व्वमाख्याहि तत्त्वेन परङ्कौतूहलं हि मे ॥ १६ ।

यम उवाच ।

न गच्छन्ति नरा घोरा बहवो धर्म्मनिर्म्मितम् ।
बन्धांश्च सुबहूंस्तत्र प्राप्नुवन्ति तपोधन ॥ १७ ।
विस्तरेण तु तत्सर्व्वं ब्रवीमि मुनिसत्तम ।
श्रूयतां तन्महाभाग श्रुत्वा चैवोपधारय ॥ १८ ।
नाग्निचिन्नरकं याति न पुत्त्री न च भूमिदः ।
शूरश्च शतवर्षी च वेदानाञ्चैव पारगः ॥ १९ ।
पतिव्रता न गच्छन्ति सत्यवाक्याश्च ये नराः ।
अजिताश्चाशठाश्चैव स्वामिभक्ताश्च ये नराः ॥ २० ।
अहिंसका न गच्छन्ति ब्रह्मचर्य्यव्यवस्थिताः ।
पतिव्रता दानवन्तो द्विजभक्ताश्च ये नराः ॥ २१ ।
स्वदारनिरता दान्ताः परदारविवर्ज्जकाः ।
सर्व्वभूतात्मभूताश्च सर्व्वभूतानुकम्पकाः ॥ २२ ।

न गच्छन्ति तु तं देशं पापिष्ठं तमसावृतम् ।
यातनास्थानसम्पूर्णं हाहाप्रतिभयाकुलम् ॥ २३ ।
ज्ञानवन्तो द्विजा ये च येच विद्यापरङ्गताः ।*
उदासीना न गच्छन्ति स्वाम्यर्थे च हता नराः ॥ २४ ।
न गच्छन्त्यत्र दातारः सर्व्वभूतहिते रताः ।
शुश्रूषका मातृपित्रोर्न गच्छन्ति च ये नराः ॥ २५ ।
तिलान् गाश्च हिरण्यञ्च पृथिवीञ्चापि शाश्वतीम् ।
ब्राह्मणेभ्यः प्रयच्छन्ति न गच्छन्ति न संशयः ॥ २६ ।
यष्टोक्तं यजमानाश्च सत्रयाजिन एव च ।
चातुर्मास्यकरा ये च ये द्विजा आहिताग्नयः ॥ २७ ।
गुरुचित्तानुपालाश्च व्रतिनो मौनयन्त्रिताः ।
नित्यस्वाध्यायिनो दान्ताः सदा सभ्याश्च ये नराः ॥ २८ ।
मां न पश्यन्ति ते चैव आत्मभावेन भाविताः ।
अपर्व्वमैथुना†ये च न गच्छन्ति जितेन्द्रियाः ।
ब्राह्मणा अमरत्वञ्च प्राप्नुवन्ति न संशयः ॥ २९ ।
निवृत्ताः सर्व्वकामेभ्यो निराशाः सुजितेन्द्रियाः ।
न गच्छन्ति हि तद्घोरं यत्र ते पापकर्म्मिणः ॥ ३० ।

नारद उवाच ।

किं दानं श्रेय आहोस्वित्पात्रेण फलमुच्यते‡ ।

---

* पारङ्गता इति (क), (ख), तत्र छन्दोदोषः । † अपर्व्वमैथुना इति (ग) ।
‡ अमुत्र इति (ख), (ग) ।

किं वा कर्म्म महत्कृत्वा स्वर्गलोके महीयते ॥ ३१ ।
रूपं वा धनधान्यं वा आयुश्च कुलमेव वा ।
प्राप्यते येन दानेन तन्ममाचक्ष्व सुव्रत ॥ ३२ ।

यम उवाच ।

न शक्यं विस्तरेणेह वक्तुं वर्षशतैरपि ।
शुभाशुभानाङ्गतयो द्रष्टुं वा प्रष्टुमेव वा ॥ ३३ ।
किञ्चिन्मात्रं प्रवक्ष्यामि येन यत्प्राप्यते नरैः ।
विविधानि च सौख्यानि प्रायशस्तु गुणागुणैः ॥ ३४ ।
रहस्यमिदमाख्यानं श्रूयतां मुनिसत्तम ।
या गतिः प्राप्यते येन प्रेत्यभावे न संशयः ॥ ३५ ।
तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः ।
आयुःप्रकर्षो भोगाश्च भवन्ति तपसैव तु ॥ ३६ ।
ज्ञानविज्ञानमारोग्यं रूपसौभाग्यसम्पदः ।
तपसा प्राप्यते भोगो मनसा नोपदिश्यते* ॥ ३७ ।
एवम्प्राप्नोति पुण्येन मौनिनाज्ञां महामुने ।
उपभोगांस्तु दानेन ब्रह्मचर्य्येण जीवितम् ॥ ३८ ।
अहिंसया परं रूपं दीक्षया कुलजन्म च ।
फलमूलाशिनो राज्यं स्वर्गः पर्णाशिनां भवेत् ॥ ३९ ।
पयोभक्षा दिवं यान्ति जायते द्रविणाढ्यता† ।

---

* मनसा योऽयदिश्यते इति (ग), तत्तु भाग्यं येन यदिश्यते इति साधु । † द्रवि[illegible]
तथा इति (क), (ग) ।

गुरुशुश्रूषया नित्यं श्राद्धदानेन सन्ततिः॥ ४०॥

गवाद्याः कालदीक्षाभिर्यं तु वा तृणशायिनः।

स्वयं त्रिषवणाद्धस्य त्वपः* पीत्वेष्टलोकभाक्॥ ४१॥

क्रतुयष्टा† दिवं याति उपहारश्च सुव्रत।

कृत्वा तु दशवर्षाणि नीरपानादिभिर्यतः‡॥ ४२॥

रसानां प्रतिसंहारात्सौभाग्यमनुजायते।

आमिषस्य प्रतीहाराद्भवत्यायुष्मती प्रजा॥ ४३॥

गन्धमाल्यनिवृत्त्या तु मूर्त्तिर्भवति पुष्कला।

अन्नदानेन च नरः स्मृतिं मेधाञ्च विन्दति॥ ४४॥

छत्रप्रदानेन गृहं वरिष्ठं

रथं तथोपानहसम्प्रदानात्§।

वस्त्रप्रदानेन सुरूपता च¶

धनैश्च पुत्रैश्च भृता भवन्ति॥ ४५॥

पानीयस्य प्रदानेन तृप्तिर्भवति शाश्वती।

अन्नपानप्रदानेन कामभोगैस्तु तृप्यते॥ ४६॥

पुष्पोपगन्धञ्च फलोपगन्धं

यः पादपं स्पर्शयते द्विजाय।

स स्त्रीसमृद्धं हि सुरत्नपूर्णं

* त्वाप इति (ग)। † कृतयष्टेति (ग)। ‡ वीरयानादिति (ग)। § ततोपानह-सम्प्रदानादिति (ग)। तत्तु चार्षं, तत उपानहसम्प्रदानादिति साधु। ¶ स्वरूपता चेति (ग)।

गृहं हि सर्व्वोपचितं लभेत ॥ ४७ ।

वस्त्रान्नपानीयरसप्रधानान्
प्राप्नोति तानेव रसप्रदानात्* ।
स्रग्धूप†गन्धान्यनुलेपनानि
पुष्पाणि गृह्याणि मनोरमाणि ।
दत्त्वा द्विजेभ्यः स भवेत्सुरूपो
रोगांश्च कांश्चिल्लभते न जातु ॥ ४८ ।

वीजैरशून्यैः शयनाभिरामं
दद्याद्गृहं यः पुरुषो द्विजाय ।
स स्त्रीसमृद्धं गजवाजिपूर्णं
लभेदधिष्ठानवरं वरिष्ठम् ॥ ४९ ।

धूपप्रदानेन‡ तथा गवाश्च
लोकानवाप्नोति नरो वसूनाम् ।
गजं तथा गोवृषभप्रदानैः
स्वर्गे सुखं शाश्वतमामनन्ति ॥ ५० ।

घृतेन तेजः सुकुमारताञ्च
प्राणद्युतिः स्निग्धता चापि तैलेः§ ।

* वस्त्रान्नपानीयरसप्रदानात् प्राप्नोति तानेव रसप्रधानानिति (ग)। अयं पः साम्यक् । † स्रग्धूपेति (क), (ख) । ‡ धूपप्रदानेनेति (ग)। § स्निग्धतैलाच दीर्घः छन्दोदोषः ।

क्षौद्रेण नानारसतृप्ततां च
दीपप्रदानाद्युतिमाप्नुवन्ति ॥ ५१ ।
पायसेन वपुःपुष्टिं कृशरात्स्निग्धसौम्यताम्।
फलैस्तु लभते पुत्रं पुष्पैः सौभाग्यमेव च ॥ ५२ ।
रथैर्दिव्यं विमानन्तु शिविकाश्चैव मानवः।
प्रेक्षणैरपि सौभाग्यं प्राप्नोतीह न संशयः।
अभयस्य प्रदानेन सर्व्वकामानवाप्नुयात् ॥ ५३ ।

इति वराहपुराणे संसारचक्रे पुरुषविर्लोभनी
नाम सप्ताधिकद्विशततमोऽध्यायः।

## अष्टाधिकद्विशततमोऽध्यायः।

ऋषिपुत्त्र उवाच।

मुहूर्त्तस्य तु कालस्य दिव्याभरणभूषितान्।
प्रयातान्दिवि संप्रेक्ष्य विमानैः सूर्य्यसन्निभैः ॥ १ ।
ब्राह्मणास्तपसा सिद्धाः सपत्नीकाः सबान्धवाः।
सानुरागा ह्युभयतो मन्युनाभिपरिप्लुताः ॥ २ ।
विवर्णवदनो राजा प्रभातेजोविवर्ज्जितः।
अचिरादेव सञ्जातः क्रोधेन भृशदुःखितः ॥ ३ ।

तं तथा निष्प्रभं दृष्ट्वा धर्म्मराजं तपोधन: ।
नारदश्चाब्रवीत्तत्र ज्ञात्वा तस्य मनोगतम् ॥ ४ ।
अपि त्वं भ्राजमानस्तु पशो: पतिरिवापर: ।
कस्मात्ते शोभनं वक्त्रं क्षणाद्वैवर्णतां गतम् ॥ ५ ।
विनिश्वसन्यथा नाग: कस्मात्त्वं परितप्यसे ।
राजन्कस्माद्बिभेषि त्वमेतदिच्छामि वेदितुम् ॥ ६ ।

यम उवाच ।

त्रिवर्णं जायते वक्त्रं शुष्यते न च संशय: ।
यन्मया ईदृशं दृष्टं श्रूयतां तन्महामुने ॥ ७ ।
यायावरास्तु ये विप्रा उञ्छवृत्तिपरायणा: ।
दृढ़स्वाध्यायतपसो श्रीमन्तो ह्यनसूयका: ॥ ८ ।
अतिथिप्रियकाश्चैव नित्ययुक्ता जितेन्द्रिया: ।
ते त्वहंमानिन: सर्व्वे गच्छन्त्युपरि मे द्विज ॥ ९ ।
न च मामुपतिष्ठन्ति* न चैव वशगा मम ।
मस्तके मम गच्छन्ति सपत्नीका: सहानुगा: ॥ १० ।
दिव्यगन्धैर्विलिप्ताङ्गा माल्यभूषितवासस: ।
सृजन्तो मम माल्यानि तेन ताम्ये द्विजोत्तम ॥ ११ ।
मृत्यो तिष्ठसि कस्यार्थे को वा मृत्य: कथं भवेत् ।
किं त्वं न भाषसे मृत्यो ब्रूहि लोके निरर्थक: ॥ १२ ।
लोभामत्तान्सदा हंसि।† पापिष्ठान्धर्म्मवर्ज्जितान् ।

* उपतिष्ठन्तीति आर्षम्, उपतिष्ठन्ते इति साधु । † त्वमशक्तान् सदा हंसीति (ग

एषां* तपसि सिद्धानां नाहं विग्रहवानिह† ॥ १३ ।
निग्रहानुग्रहौ नापि मया शक्यौ महात्मनाम् ।
कर्त्तुं वा प्रतिषेद्धुं वा तेन तप्ये भृशं मुने ॥ १४ ।
एतस्मिन्नन्तरे तत्र विमानेन महाद्युतिः‡ ।
पतिव्रता समं भर्त्रा सानुगा सपरिच्छदा ॥ १५ ।
महता तूर्य्यघोषेण सम्प्राप्ता प्रियदर्शना ।
धर्म्मराजहितं सर्व्वं धर्म्मज्ञा धर्म्मवत्सला ।
साब्रवीत्तु विमानस्था साधयन्ती शुभाङ्गना ।
विचित्रं प्रहृतं वाक्यं सर्व्वसत्त्वसुखावहम् ॥ १६।१७ ।

पतिव्रतोवाच ।

धर्म्मराज महाबाहो कृतज्ञः सर्व्वसम्मतः§ ।
मैवमीर्षां कुरुष्व त्वं ब्राह्मणेषु तपस्विषु ॥ १८ ।
एतेषां तपसां वीर माहात्म्यस्त्वसमेव च ।
अचिन्त्याः सर्व्वभूतानां ब्राह्मणा वेदपारगाः ॥ १९ ।
ब्राह्मणाः सततं पूज्या ब्राह्मणाः सर्व्वदेवताः ।
मात्सर्य्यं क्रोधसंयुक्तं न कर्त्तव्यं द्विजातिषु ॥ २० ।
त्वया शुभाशुभङ्कर्म्म नित्यं पूजा मनस्विनाम् ।
रागो वा रोषमोहौ वा न कर्त्तव्यौ सदा॰सताम्।
प्रयाता गगने दृष्टा विद्युत्सौदामिनी यथा ॥ २१ ।

* येषामिति (ख)। † विग्रहवानिवेति (ग)। ‡ महामतिरिति (ग)। § सत्य-सम्मत इति (क)।

दृष्ट्वा पतिव्रतां नारीं धर्म्मराजेन पूजिताम् ।
अब्रवीन्नारदस्तत्र धर्म्मराजं तथागतम् ॥ २२ ।

नारद उवाच ।

का एषा सुमहाभागा सुरूपा प्रमदोत्तमा ।
या त्वया पूजिता राजन्हितमुक्ता गता पुनः ॥ २३ ।
एतदिच्छाम्यहं ज्ञातुं परङ्कौतूहलं हि मे ।
एतन्मे सुमहाभाग कथयस्व समासतः ॥ २४ ।

यम उवाच ।

अहं ते कथयिष्यामि कथां परमशोभनाम् ।
एषा मया यथा तात पूजिताऽपूजि कृत्स्नशः ॥ २५ ।
पुरा कृतयुगे तात निमिर्नाम महायशाः ।
आसीद्राजा महातेजाः सत्यसन्धेति विश्रुतः ॥ २६ ।
तस्य पुत्त्रो मिथिर्नाम जननाज्जनकोऽभवत् ।
तस्य रूपवती नाम पत्नी प्रियहिते रता ॥ २७ ।
सा चाप शुभकर्म्माणि पतिभक्ता पतिव्रता ।
प्रीत्या परमया युक्ता भर्त्तुर्वचनकारिणी ॥ २८ ।
सोऽपि राजा महाभागः सर्व्वभूतहिते रतः ।
धर्म्मात्मा च महात्मा च सत्यसन्धो महातपाः ॥ २९ ।
य इमां पृथिवीं सर्व्वां धर्म्मेण परिपालयन् ।
न व्याधिर्न जरा मृत्युस्तस्मिन्राजनि शासति ॥ ३० ।
ववर्ष सततं देवस्तस्य राष्ट्रे महाद्युतेः ।
एवं बहुगुणोपेतं तस्य राज्यं महात्मनः ॥ ३१ ।

न कश्चिद्दृश्यते मर्त्त्यो रुजार्त्तो दुःखितोऽपि वा।
पश्चाच्च बहुकालस्य राजानं मिथिलाधिपम्।
उवाच राज्ञी विप्रेन्द्र विनयात्प्रश्रितं वचः॥ ३२।

राज्ञ्युवाच।

भृत्यानाञ्च द्विजातीनां तथा परिजनस्य च।
यदस्ति द्रविणं किञ्चित्पृथिव्यां यद्गृहे च ते॥ ३३।
विनियुक्तन्तु तत्सर्व्वं सान्निध्यन्तु तथा त्वया।
न च राजन्विजानामि भोजनस्य प्रशंससि॥ ३४।
नास्ति तन्नियमः कश्चित्पुष्पमूल्यञ्च नास्ति नः।
न वा मद्यादिकङ्किञ्चिन्न च वस्त्राणि कर्हिचित्॥ ३५।
न चैव वार्षिकः कश्चिद्विद्यते भाजनस्य च।
दृश्यते हि महाराज मम चैवाथ सुव्रत॥ ३६।
यत्कर्त्तव्यं मया वापि तन्मे ब्रूहि नराधिप।
कर्त्तास्म्यहं विशेषेण यद्वाक्यमपि मन्यसे॥ ३७।

राजोवाच।

न शक्यमुपरोधेन वक्तुं भामिनि विप्रियम्।
न च पश्याम्यहं देवि तव चैव जनस्य च॥ ३८।
तद्ब्रवीमि यथाशक्त्या यदि मे मन्यसे प्रिये।
हविष्ये वर्त्तमानानामिदं वर्षशतङ्गतम्। ३९।
कुद्दालेन हि काष्ठेन क्षेत्रं वै कुर्म्महे प्रिये।
ततो धर्म्मविधिं तत्त्वात्प्राप्नुयां मे न संशयः॥ ४०।
भक्ष्यं भोज्यञ्च ये ये च ततस्त्वं सुखमाप्स्यसि।

एवमुक्ता ततो राज्ञी राजानमिदमब्रवीत् ॥ ४१ ॥

देव्युवाच ।

भृत्यानान्तु सहस्राणि तव राजन्निवेशने ।
अश्वानाञ्च गजानाञ्च सौरभानां तथैव च ॥ ४२ ॥
उष्ट्राणां महिषाणाञ्च खराणाञ्च महायशाः ।
एते सर्व्वे कथं राजन्न कुर्व्वन्ति तवेप्सितम् ॥ ४३ ॥

राजोवाच ।

नियुक्तानि हि कर्म्माणि वार्षिकाणीतराणि च ।
सर्व्वकर्म्माणि कुर्व्वन्ति ये भृत्या मे वरानने ॥ ४४ ॥
बलीवर्द्दाः खरा अश्वा गजा उष्ट्रा ह्यनेकशः ।
सर्व्वे नियुक्ता मे देवि सर्व्वकर्म्मसु शोभने ॥ ४५ ॥
आयसन्त्रपुषन्ताम्रं राजतङ्काञ्चनं तथा ।
नियुक्तानि तु सर्व्वाणि सर्व्वकर्म्मस्वनिन्दिते ॥ ४६ ॥
ननु पश्याम्यहं देवि किञ्चिद्वैमं न चायसम्* ।
येन कुर्य्याम्यहं देवि कुद्दालं सुसमाहितः ॥ ४७ ॥
एवमुक्ता महादेवी तेन राज्ञा सुशोभना ।
हृष्टपुष्टमना देवी राजानमिदमब्रवीत् ॥ ४८ ॥
गच्छ राजन्यथाकाममनुयास्यामि पृष्ठतः ।
एवमुक्तः सुनिष्क्रान्तः सभार्य्यः स नरेश्वरः ॥ ४९ ॥
ततो राजा च देवी च चैत्रं मृगयतस्तदा ।

* च चायसमिति (ग) ।

गतौ च परमाध्मानं ततो राजाब्रवीदिदम् ॥ ५० ।
इदं भद्रं मम क्षेत्रमास्स्वात्र वरवर्णिनि ।
यावद्दुष्टानिमान् भद्रे कण्टकांश्च वरानने ।
अहं छिनद्मि वै देवि त्वमेतानवरोधय प्रिये ।
एष ते कर्म्मयोगस्तु ततः प्राप्स्यामि चेप्सितम्* ॥ ५१।५२ ।
एवमुक्ता महादेवी तेन राज्ञा तपोधन ।
उवाच मधुरं वाक्यं प्रहसन्ती नृपाङ्गना ॥ ५३ ।
वृक्षोऽत्र दृश्यते पार्श्वे सौवर्णो गुल्म एव च ।
पानीयस्य तु सान्निध्यं न किञ्चिदिह दृश्यते ।
कथञ्चित्पङ्करिण्यावी हृद्रोगस्य तु कारकम् ॥ ५४ ।
इयं नदी ह्ययं वृक्ष इयं भूमिः समांसला ।
अस्मिन्वापि कृतङ्कर्म्म कथं गुणकरं भवेत् ॥ ५५ ।
तस्यास्तद्वचनं श्रुत्वा राजा वचनमब्रवीत् ।
शुभं सानुनयं वाक्यं भूतानां गुणवत्सलः ॥ ५६ ।
पूर्वग्रहे भवेत्पूर्व्वं विनियुक्तं तथा प्रिये ।
पानीयस्य तु पार्श्वेन सन्निकृष्टेन सुन्दरि ॥ ५७ ।
चतुर्थं जनपर्य्यन्तं† न किञ्चिदिह दृश्यते ।
अयङ्गाहो महादेवि न च बाधाऽत्र कस्यचित् ॥ ५८ ।

* प्राप्स्याम चेप्सितमिति (ग)। † चतुर्थं जनपर्य्यन्तमिति सार्व्वत्रिकः पाठः स च लिपिकरपरम्पराप्रमादकृत एवेति सम्भाव्यते। चतुर्थ्योजनपर्य्यन्तमित्येवंरूपस्यैव मौलिकत्वमासीदित्यस्मदनुमानम्।

ततस्तच्छोधयामास तत्त्वेन भार्य्यया सह ॥ ५८ ।
वियन्मध्ये तथोग्रश्च सविता तपते सदा ।
सम्प्राप्तश्च तदा* तत्र निदाघः काल आगतः ॥ ६० ।
प्रवृद्धो दारुणो घर्म्मः कालश्चैवातिदारुणः ।
ततः सा तृषिता देवी क्षुधिता च तपस्विनी ॥ ६१ ।
स्निग्धौ ताम्रतलौ पादौ तस्यां सन्तापमागतौ ।
गुणप्रवाहरक्तौ तु तस्याः पादौ च सुव्रत ॥ ६२ ।
सूर्य्यस्य पादा मध्याह्ने तापयन्त्यग्निसन्निभाः ।
ततः सा व्यथिता देवी भर्त्तारमिदमब्रवीत् ॥ ६३ ।
तृषितास्मि महाराज उष्णेन पीड़िता भृशम् ।
पानीयं दीयतां राजञ्छीघ्रं मम प्रसादतः ॥ ६४ ।
इत्युक्ता पतिता देवी विह्वला दुःखपीड़िता ।
पतन्त्या च तया सूर्य्यो दृष्टो विह्वलया तथा ॥ ६५ ।
यदृच्छया पतन्त्या तु सूर्य्यः कोपेन वीक्षितः ।
ततो विवस्वान् भगवान् सन्त्रस्तो गगने तदा ॥ ६६ ।
दिवं मुक्ता महातेजाः पतितो धरणीतले ।
ततो दृष्ट्वा तु राजार्षि† स्वभावेन च वर्ज्जितम् ॥ ६७ ।
किमर्थमिह तेजस्विंस्त्यक्ता‡ मण्डलमागतः ।
किङ्करोमि महातेजाः सर्व्वलोकनमस्कृतः ॥ ६८ ।

* तथेति (ग)। † ततो दृष्टा तु तं राजर्षिरिति (ग)। ‡ तेजः स्वीमति (क), (ख

एवं ब्रुवन्तं राजानं सूर्य्यः सानुनयोऽब्रवीत्।
पतिव्रता शुभाचारा च ममैषा कथिता भृशम्॥ ६९।
ततोऽहं पतितो राजंस्तव कार्य्यानुशासनः।
अनया सदृशी नारी त्रैलोक्ये नैव विद्यते॥ ७०।
पृथिव्यां स्वर्गलोके वा न काचिदिह दृश्यते।
अहोऽस्याः परमं सत्त्वमहोऽस्याः परमन्तप॥ ७१।
अहो धैर्य्यञ्च शक्तिश्च तवैवं शंसिता गुणाः।
तथेयं ते महाभाग तव चित्तानुसारिणी॥ ७२।
अनुरूपा विशुद्धा च तपसा च वराङ्गना।
पतिव्रता च साध्वी च नित्यं तव हिते रता॥ ७३।
सदृशी ते महाभाग शक्रस्येह यथा शची।
पात्रं पात्रवता प्राप्तं सुकृतस्य महत्फलम्॥ ७४।
अनुरूपः सुरूपो वा यतो जातः सुयन्त्रितः।
मा च ते वितथः कामो भवेन्नैव नराधिप॥ ७५।
कुरुष्व दयितश्चेतं यथा मनसि वर्त्तते।
भोजनार्थं महाराज त्वदन्यो न हि विद्यते॥ ७६।
फलदञ्च सुशस्यञ्च भविष्यति हि कामदम्।
एवमुक्त्वा ततः सूर्य्यः ससर्ज्ज जलभाजनम्॥ ७७।
उपानहौ च छत्रञ्च दिव्यालङ्कारभूषितम्।
ददौ च राज्ञे सविता प्रीत्या परमया युतः॥ ७८।
उपभोक्तुं सुखस्यार्थं सुपुण्यस्य विशेषतः।
दत्त्वा तत्पुण्यकर्म्माणं ततः प्राह दिवाकरः॥ ७९।

एवमुक्त्वा तु भगवांस्तथा तत्कृतवान् क्वचित् ।
राज्ञा च जनकेनैव प्रियाया हितकाम्यया ॥ ८० ।
ततः साप्यायिता देवी तोयेन शुभलक्षणा ।
लब्धसंज्ञा गतभया राजानमिदमब्रवीत् ॥ ८१ ।
देवो दृष्ट्वा तदाश्चर्य्यं विस्मयोत्फुल्ललोचना ।
केन दत्तं शुभं तोयं दिव्यं छत्रमुपानहौ ।
एतन्मे संशयं राजन् कथयस्व तपोधन ॥ ८२ ।

राजोवाच ।

एष देवो महादेवि विवस्वान्नाम नामतः ।
तवानुकम्पया देवि मुक्त्वाकाशमिहागतः ॥ ८३ ।
एवमुक्त्वा तु सा देवी भर्त्तारमिदमब्रवीत् ।
करवाण्यस्य कां प्रीतिं ज्ञायतामस्य वाञ्छितम् ॥ ८४ ।
ततो राजा महातेजाः प्रणिपत्य कृताञ्जलिः ।
विज्ञापयामास तदा भगवन् किङ्करोमि ते ॥ ८५ ।
एवमुक्तो नरेन्द्रेण सूर्य्यो वचनमब्रवीत् ।
अभयं मे महाराज स्त्रीभ्यो भवतु मानद ॥ ८६ ।
तच्छ्रुत्वा वचनं तस्य भास्करस्य तु मानदः ।
तां प्रियां प्रीतहृदयां श्रावयंस्तस्य भाषितम् ॥ ८७ ।
राज्ञस्तु वचनं श्रुत्वा देवी वचनमब्रवीत् ।
प्रीत्या परमया युक्ता तस्य राज्ञो मनःप्रिया ॥ ८८ ।
रश्मीनां वारणार्थाय छत्रं दत्त्वा तु कुण्डिकाम् ।
इमौ चोपानहौ दत्त्वा पादस्य शङ्करावुभौ ॥ ८९ ।

अभयं ते महाभाग यथा त्वं हृतवानसि।
एवं पतिव्रतां विप्र पूजयामि नमामि च॥ ८०॥

इति वराहपुराणे संसारचक्रे पतिव्रतोपाख्यानं नाम
अष्टाधिकद्विशततमोऽध्यायः।

## नवाधिकद्विशततमोऽध्यायः।

नारद उवाच।

कर्म्मणा केन राजेन्द्र तपसा वा तपोधनाः।
उत्तमाञ्च गतिं याति कृष्णवासः प्रशंस मे।
एवमुक्तस्तु धर्म्मात्मा नारदेनाब्रवीत्तदा॥ १॥

यम उवाच।

न तस्या नियमो विप्र तपो नैव च सुव्रत।
उपवासो न दानं वा न देवो वा महामुने॥ २॥
यादृशी तु भवेद्विप्र शृणु तत्त्वं समासतः॥ ३॥
प्रसुप्ते या प्रस्वपिति जागर्ति विबुधे स्वयम्।
भुङ्क्ते तु भोजिते विप्र सा मृत्युं जयति ध्रुवम्॥ ४॥
मौने मौना भवेद्या तु स्थिते तिष्ठति या स्वयम्।
सा मृत्युञ्जयते विप्र नान्यत्पश्यामि किञ्चन॥ ५॥

एकदृष्टिरेकमना भर्त्तुर्वचनकारिणी ।
तस्या बिभीमहे सर्व्वे ये तथान्ये तपोधन ।
देवानामपि सा साध्वी पूज्या परमशोभना ॥ ६ ।
भर्त्रा चाभिहिता यापि न प्रत्याख्यायिनी भवेत् ।
वर्त्तमानापि विप्रेन्द्र प्रत्याख्यातापि वा सदा ॥ ७ ।
न दैवतं सम्प्रयाति पत्युरन्यत्कदाचन ।
सा न मृत्युमुखं याति एवं या स्त्री पतिव्रता ॥ ८ ।
एवं या तु भवेन्नित्यं भर्त्तुः प्रियहिते रता ।
अनुवेष्टनभावेन भर्त्तारमनुगच्छति ॥ ९ ।
सा तु मृत्युमुखद्वारं न गच्छेद्ब्रह्मसम्भव ।
एष माता पिता बन्धुरेष मे दैवतम्परम् ॥ १० ।
एवं शुश्रूषते या तु सा मां विजयते सदा ।
पतिव्रता तु या साध्वी तस्याश्चाहङ्कृताञ्जलिः ॥ ११
भर्त्तारमनुध्यायन्ती भर्त्तारमनुगच्छति ।
भर्त्तारमनुशोचन्ती मृत्युद्वारं न पश्यति ॥ १२ ।
गीतवादित्रनृत्यानि प्रेक्षणीयान्यनेकशः ।
न शृणोति न पश्येत* मृत्युद्वारं न पश्यति ॥ १३ ।
स्नायन्ती तिष्ठती वापि कुर्व्वन्ती वा प्रसाधनम् ।
नान्यं या मनसा पश्येन्मृत्युद्वारं न पश्यति ॥ १४ ।
देवता अर्च्चयन्तं वा भोजमानमपि द्विजान् ।
पतिं न त्यजते† चिन्तान्मृत्युद्वारं न पश्यति ॥ १५ ।

* पश्येदिति साधु । † त्यजतीति साधु ।

भामी चानुदिते वापि उत्थाय च तपोधना: ।
गृहं मार्जयते नित्यं मृत्युद्वारं न पश्यति ॥ १६ ।
चक्षुर्देहश्च भावश्च यस्या नित्यं सुसंवृतम् ।
शौचाचारसमायुक्ता सापि मृत्युं न पश्यति ॥ १७ ।
भर्त्तुर्मुखमपश्येद्या भर्त्तुश्चित्तानुसारिणी ।
वर्त्तते च हिते भर्त्तुर्मृत्युद्वारं न पश्यति ॥ १८ ।
एवङ्कीर्त्तिमतां लोके दृश्यन्ते दिवि देवताः ।
मानुषाणाञ्च भार्य्या वै तत्र देशे तु दृश्यते ॥ १९ ।
कथितैव पुरा विप्र आदित्येन पतिव्रता ।
मया तस्मात्तु विप्रर्षे यथा वृत्तं यथा श्रुतम्* ।
गुह्यमेतत्ततो दृष्ट्वा पूजयामि पतिव्रताः ॥ २० ।

इति वराहपुराणे संसारचक्रे पतिव्रतामाहात्म्यं नाम
नवाधिकद्विशततमोऽध्यायः ।

# दशाधिकद्विशततमोऽध्यायः ।

नारद उवाच ।

रहस्यं धर्ममाख्यानं त्वयोक्तन्तु महायशः ।
स्त्रीणां माहात्म्यमुद्दिश्य भास्करस्य मतं यथा ॥ १ ।

* यथासुखमिति (ख), (ग)।

इदं हि सर्व्वभूतेषु परङ्कौतूहलं मम ।
तदहं श्रोतुमिच्छामि कथयस्व महातपः ॥ २ ।
ये नरा दुःखसन्तप्तास्तपस्तीव्रं समाश्रिताः ।
नानाव्रतशतोपायैः सुखहेतोर्महाप्रभ ॥ ३ ।
मनसा निश्चितात्मानस्त्यक्त्वा सर्व्वप्रियाप्रियम् ।
काङ्क्षन्ते बहवः केचित्केनचिद्विनिहन्यते ॥ ४ ।
श्रुता लोके श्रुतिस्तात श्रेयोधर्मो हि नित्यशः ।
सम्यक्छ्रद्धाश्रितस्याथ कथं पापे मतिर्भवेत् ॥ ५ ।
कस्यैतच्चेष्टितं तात कर्त्ता कारयिताऽपि वा ।
कः कर्षति जगच्चैकोभूतग्रामं चतुर्विधम् ॥ ६ ।
कं वा द्वेषं पुरस्कृत्य मतिस्तस्य प्रवर्त्तते* ।
सुखदुःखादि लोकेऽस्मिन्प्रकरोति सुदारुणम् ॥ ७ ।
यद्येवन्तु मया गुह्यं दुर्विज्ञेयं सुरैरपि ।
शक्यं श्रोतुं महाराज तदाख्याहि† तपोधनाः ॥ ८ ।
नारदेनैवमुक्तस्तु धर्म्मराजोमहामनाः ।
विनयात्प्रहृतं वाक्यमिदमाह महामुनिः‡ ॥ ९ ।

यम उवाच ।

देवर्षे श्रूयतां पुण्यं यद्ब्रवीषि महामुने ।
त्वदुक्त्या मे कथयतः शृणुष्वावहितोऽनघ ॥ १० ।

---

* मतिस्तस्य च वर्त्तते इति (ग) । † तदाख्याति तपोधन इति (क),
‡ महामतिरिति (ग) ।

न कश्चिद्दृश्यते* लोके कर्त्ता कारयितापि वा।
यद्वै परमधर्म्मात्मन्यस्मिन् कर्म्म प्रतिष्ठितम् ॥ ११ ।
यस्य वै कीर्त्यते नाम येन चाप्याप्यते† जगत्।
व्याहरामि वचस्ताहं यः करोति स्वयङ्कृतम् ॥ १२ ।
दिव्येऽस्मिन् सदसि ब्रह्मन् ब्रह्मर्षिगणसंवृते।
यथाश्रुतं यथादृष्टङ्कथयिष्याम्यहं विभो ॥ १३ ।
स्वकर्म्म भुज्यते तात सम्भूतैर्यत्कृतं स्वयम्।
आत्मानं पातयत्यात्मा किञ्चित्कर्म्म च कारयेत् ॥ १४ ।
वायुना भाविता संज्ञा संसारे सा दृढ़ीकृता।
तामेव भजते जन्तुः सुकृतं वाथ दुष्कृतम् ॥ १५ ।
अभिघाताभिभूतस्तु आत्मनात्मानमुद्धरेत्।
आत्मा ह्यत्र बन्धुश्च न कश्चिद्बन्धुरात्मनः। ॥ १६ ।
बन्धुं बन्धुपरिक्लेशं निर्म्मितं पूर्व्वकर्म्मभिः।
जगत्यामुपभुङ्क्ते वै जीवो योनिशतैरपि ॥ १७ ।
मिथ्याप्रवृत्तः मन्दोऽयं जगद्भ्रमति सर्व्वशः।
यावत्तत्कुरुते कर्म्म तावत्कर्म्म स्वयङ्कृतम् ॥ १८ ।
यथा यथा क्षयं याति अशुभं पुरुषस्य वै।
तथा तथा शुभा बुद्धिर्मनुजस्य प्रवर्त्तते ॥ १९ ।
संसारे प्राप्तदोषस्य जायमानस्य देहिनः।
पतताद्य गतो भावः पापकर्म्मक्षयेन तु।

---

* किं कश्चिदिति (क), (ख)। † वा प्राप्यते इति (ग)।

शुभाशुभकरीं बुद्धिं लभते पौर्व्वदैहिकीम् ॥ २० ।
दुष्कृतैः कर्म्मभिर्द्देही शुभैर्वा स्वयमर्ज्जितैः ।
क्लेशक्षयं पापहरं शुभकर्म्म करोत्यथ ॥ २१ ।
शुभाशुभं प्राप्य नरः कर्म्माकर्म्म तथैव च ।
विहृते विमले कर्म्मण्यमरेषु महीयते ॥ २२ ।
स्वर्गः शुभफलप्राप्तिर्निरयः पापसम्भवः ।
नैव कश्चित्प्रदाता च नाऽपहर्त्ता प्रदृश्यते ॥ २३ ।

नारद उवाच ।

यद्येवं स्वकृतङ्कर्म्म समन्वेति शुभाशुभम् ।
शुभस्येह भवेद्वृद्धिरशुभस्य क्षयोऽपि वा ॥ २४ ।
मनसा कर्म्मणा वापि तपसा चरितेन वा ।
यथा न रोहते जन्तुस्तथा त्वं वक्तुमर्हसि ॥ २५ ।

यम उवाच ।

इदं पुण्यं पवित्रञ्च अशुभानां शुभप्रदम् ।
कीर्त्तयिष्यामि ते सम्यक् पापदोषक्षयं सदा ॥ २६ ।
प्रणम्य शिरसा सम्यक् पापपुण्यकराय च ।
कर्त्तृणे जगतो नित्यं विश्वस्य जगतो ह्यहम् ॥ २७ ।
येन सृष्टमिदं सर्व्वं त्रैलोक्यं सचराचरम् ।
अनादिमध्यनिधनं दुर्व्विज्ञेयं सुरासुरैः ॥ २८ ।
यः समः सर्व्वभूतेषु जितात्मा शान्तमानसः ।
स पापेभ्यो विमुच्येत ज्ञानवान्सर्व्ववेदवित् ॥ २९ ।
तत्त्वार्थं वेत्ति यः सम्यक् पुरुषम्प्रकृतिं तथा ।

ज्ञात्वा वा यो न मुह्येत पदम्प्राप्नोति शाश्वतम् ॥ ३० ।
गुणागुणपरिज्ञाता ह्यव्ययस्य व्ययस्य च ।
ध्यानेनैव ह्यसंमूढः स पापेभ्यः प्रमुच्यते ॥ ३१ ।
स्वदेहे परदेहे च सुखदुःखेन नित्यशः ।
विचारज्ञो भवेद्यस्तु स मुच्येतैनसा ध्रुवम् ॥ ३२ ।
अहिंस्रः सर्व्वभूतेषु तृष्णाक्रोधविवर्ज्जितः ।
शुभन्यायं सदा यश्च स पापेभ्यः प्रमुच्यते ॥ ३३ ।
प्राणायामैश्च निर्गृह्य अधः सन्धारणानि च ।
व्यवस्थितमना यस्तु स पापेभ्यः प्रमुच्यते ॥ ३४ ।
निराशः सर्व्वतस्तिष्ठेदिष्टार्थेषु न लोलुपः ।
परीतात्मा त्यजेत्प्राणान् सर्व्वपापात्प्रमुच्यते ॥ ३५ ।
श्रद्दधानो जितक्रोधः परद्रव्यविवर्ज्जकः ।
अनसूयश्च यो मर्त्यः स पापेभ्यः प्रमुच्यते ॥ ३६ ।
गुरुशुश्रूषया युक्तस्त्वहिंसानिरतश्च यः ।
अक्षुद्रशीलस्तु नरः* स पापेभ्यः प्रमुच्यते ॥ ३७ ।
प्रशस्तानि च यः कुर्य्यादप्रशस्तानि वर्ज्जयेत् ।
मङ्गलपरमो यश्च स पापेभ्यः प्रमुच्यते ॥ ३८ ।
योऽभिगच्छति तीर्थानि विशुद्धेनान्तरात्मना ।
पापादुपरतो नित्यं स पापेभ्यः प्रमुच्यते ॥ ३९ ।
उत्थाय ब्राह्मणश्रेष्ठैर्नरो भक्त्या समन्वितः ।
अभिगम्य प्रदानेन स पापेभ्यः प्रमुच्यते ॥ ४० ।

* अक्षुद्रशीलनरः इति पाठे छन्दोदोषः ।

नारद उवाच ।

एतच्छ्रेयो हितञ्चैव सर्व्वेषां वै परन्तप ।
उपपन्नञ्च युक्तञ्च तत्त्वया समुदाहृतम् ॥ ४१ ।
विविधैः कारणोपायैः सम्यक्कृत्वार्थदर्शितैः ।
संशयोऽभून्मम पुरा स त्वया नाशितः प्रभो ॥ ४२ ।
ततोऽप्यल्पतरश्चैत्स्यादुपायो योगवित्तम ।
कथ्यतां मे महाभाग येन पापम्प्रणश्यति ॥ ४३ ।
दुष्करं पूर्व्वमुक्तं हि योगधर्म्मस्य साधनम् ।
पापापहरणं लोके यदन्यत्सुखसाधनम् ॥ ४४ ।
अल्पोपायकरञ्चैव सुखोपायञ्च सर्व्वगः ।
येन पापकृतान्दोषान्व्यपोहति सुदारुणान् ॥ ४५ ।
आत्मायताश्च ये नित्यं न च विस्तारविस्तरः ॥ ४६ ।
गुणैश्च विविधैर्युक्ता इहलोके परत्र च ।
कर्म्मणामशुभानाञ्च विविधोत्पत्तिजन्मनाम् ।
यः समर्थः स्फोटयितुं तन्मे ब्रूहि महातपः ॥ ४७ ।

यम उवाच ।

यथा स भगवानाह धर्म्ममेतं प्रजापतिः ।
तदहं भावयिष्यामि नमस्कृत्य स्वयम्भुवे ॥ ४८ ।
लोकानां श्रेयसोऽर्थन्तु पापानान्तु विनाशनम् ।
क्रियाकारनियोगञ्च प्रोच्यमानं निबोध मे ॥ ४९ ।
कैवल्यमभिसम्पन्नै श्रद्दधानो भवेन्नरः ।
अनन्यमानसः कुर्य्याद्यथा धर्म्मानुशासनम् ॥ ५० ।

प्राप्नुयादीप्सितान् कामान् पापैर्मुक्तो यथासुखम्।
यः कुर्य्यात्कर्म्मसंयुक्तं विशुद्धेनान्तरात्मना॥ ५१।
यस्तु कारयते रूपं शिशुमारप्रजापतिम्।
दृष्ट्वा नमस्येत्प्रयतः स पापेभ्यः प्रमुच्यते॥ ५२।
यदा तस्य शरीरस्थं सोमं पश्येत्समाहितः।
महापातकनाशस्तु तदा तस्य विधीयते॥ ५३।
ललाटे तु स्थितं दृष्ट्वा मुच्यते च स पातकैः।
कण्ठस्थं पातकैः सर्व्वैर्दृदिस्थश्च कृताकृतैः॥ ५४।
मनसा कर्म्मणा वाचा यत्किञ्चित्कलुषङ्कृतम्।
उदरस्थन्तु तं दृष्ट्वा मुच्यते नात्र संशयः॥ ५५।
वाङ्मनोभिः कृतानान्तु पापानां विप्र मोचनम्।
यदा लाङ्गूलकण्ठे तु स्थितं पश्येद्दिवाकरम्॥ ५६।
तदा स दुष्कृतान् सर्व्वान्विनाशयति मानवः।
यदा सोमङ्गुरुं सर्व्वं यः कुर्य्यात्तु प्रदक्षिणम्॥ ५७।
ध्यायेत ग्रहचयं यस्तु स पापेभ्यः प्रमुच्यते।
भृगुर्बुधः शनैश्चारी लोहिताङ्गश्च वीर्य्यवान्॥ ५८।
सौम्यरूपो यदा चन्द्रः कुरुते च प्रदक्षिणाम्।
हृदि कृत्वा तु तत्पापं यो ध्यायेदक्षरं शुचिः॥ ५९।
तदा निर्म्मलतां याति चन्द्रमाः शारदो यथा।
प्राणायामशतं कृत्वा सर्व्वपापैः प्रमुच्यते॥ ६०।
जघनस्थं शुचिर्दृष्ट्वा नरश्चन्द्रमसं मुने।
नमस्येत्प्रयतो भूत्वा सर्व्वपापैः प्रमुच्यते॥ ६१।

आर्द्रस्यमार्द्रकर्म्मा तु ध्यात्वा चाष्टशताचरम् ।
यदा चन्द्रश्च सूर्य्यश्च द्वावन्योऽन्यमपश्यतः ॥ ६२ ।
सम्पूर्णौ विमलौ सम्यग्भ्राजमानौ* स्वतेजसा ।
कृत्वा हृदि तथा पापं यो ध्यायेत्परमाव्ययम् ॥ ६३ ।
वामनं ब्राह्मणं दृष्ट्वा वाराहञ्च जलोत्थितम् ।
धरणी चोद्धृता येन सिंहञ्चापि महामुने ॥ ६४ ।
नमस्येद्दै पवोभक्तः स पापेभ्यः प्रमुच्यते ।
प्राणायामञ्च यः कुर्य्यात्सोऽपि पापात्प्रमुच्यते ॥ ६५ ।

इति वराहपुराणे भगवच्छास्त्रे संसारचक्रे
दशाधिकद्विशततमोऽध्यायः ।

## एकादशाधिकद्विशततमोऽध्यायः ।

ऋषिपुत्त्र उवाच ।

एतच्छ्रुत्वा शुभं वाक्यं धर्म्मराजस्य नारदः ।
इमं भावेन भक्त्या च पुनर्वचनमब्रवीत् ॥ १ ।

* भ्राजमाना इति (क), (ख) ।

नारद उवाच।

समः सर्व्वेषु भूतेषु स्थावरेषु चरेषु च।
धर्म्मराज महाबाहो पितृतुल्यपराक्रम॥ २॥
ब्राह्मणानां हितार्थाय यदुक्तं मे प्रदर्शितम्।
इदं श्रेयःसमाख्यानं श्रुतं श्रुतपरम्पदम्॥ ३॥
त्रयो वर्णा महाभाग यज्ञसामान्यभागिनः।
शूद्रा वेदपवित्रेभ्यो ब्राह्मणैस्तु वहिष्कृताः॥ ४॥
यथैव सर्व्वसमता तव भूतेषु मानद।
तथैव तेषामपि हि श्रेयो वाच्यं महामते।
यथा कर्म्म हितं वाक्यं शूद्राणामपि कथ्यताम्॥ ५॥

यम उवाच।

अहं ते कथयिष्यामि चातुर्वर्ण्यस्य नित्यशः।
यद्धितं धर्म्मयुक्तञ्च नित्यं भवति सुव्रत॥ ६॥
केवलं श्रुतिसंयोगाच्छ्रद्धया नियमेन च।
करोति पापनाशार्थमिदं वक्ष्यामि तच्छृणु॥ ७॥
गावः पवित्रा मङ्गल्या देवानामपि देवताः।
यस्ताः शुश्रूषते भक्त्या स पापेभ्यः प्रमुच्यते॥ ८॥
सौम्ये मुहूर्त्ते संयुक्ते पञ्चगव्यन्तु यः पिवेत्।
यावज्जीवकृतात्पापात्तत्क्षणादेव मुच्यते॥ ९॥
लाङ्गूलेनोद्धृतं तोयं मूर्द्ध्ना गृह्णाति यो नरः।
सर्व्वतीर्थफलम्प्राप्य सर्व्वपापैः प्रमुच्यते॥ १०॥
प्रश्रयेण च यः स्नायाद्रोहिण्यां मानवे द्विज।

सर्व्वपापकृतान्दोषान्दहत्याशु न संशयः ॥ ११ ।
धेनुस्तनाद्विनिष्क्रान्तां धारां क्षीरस्य यो नरः ।
शिरसा प्रतिगृह्णाति स पापेभ्यः प्रमुच्यते ॥ १२ ।
ब्राह्मणस्तु सदा स्नातो भक्त्या परमया युतः ।
नमस्येत्प्रयतो भूत्वा स पापेभ्यः प्रमुच्यते ॥ १३ ।
उदयान्निःसृतं सूर्य्यं भक्त्या परमया युतः ।
नमस्येत्प्रयतो भूत्वा स पापेभ्यः प्रमुच्यते ॥ १४ ।
दध्यक्षताञ्जलीभिस्तु त्रिभिः पूजयते शुचिः* ।
तस्य भानुः प्रसन्नश्च अशुभं यत्समर्ज्जितम् ।
तच्च भानुः स संदह्य दूरीकुर्य्यात्सदा द्विज ॥ १५ ।
पावकं दधिमिश्रन्तु पात्रे औदुम्बरे स्थितम् ।
सोमाय पौर्णमास्यां हि दत्त्वा पापैः प्रमुच्यते ॥ १६
अरुन्धतीं बुधञ्चैव तथा सर्व्वान्महामुनीन् ।
अभ्यर्च्य वेदविधिना तेभ्यो दत्त्वा च पावकम् ॥ १७
एकाग्रमानसो भूत्वा यो नमस्येत्कृताञ्जलिः ।
किल्बिषं तस्य वै सर्व्वं तत्क्षणादेव नश्यति ॥ १८ ।
द्विजं शुश्रूषते यस्तु तर्पयित्वातिभक्तितः ।
नमस्येत्प्रयतो भूत्वा स पापेभ्यः प्रमुच्यते ॥ १९ ।
विषुवेषु† च योगेषु शुचिर्दत्त्वा पयो नरः ।
तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति ॥ २० ।

* यस्त्रिभिः पूजयेत् शुचिरिति (क), (ख) । † विषुवञ्चैव योगेष्विति (क)

प्राचीनायाग्कुशान् कृत्वा स्थापयित्वा वृषं नरः ।
द्विजैः सह नमस्कृत्य सर्व्वपापैः प्रमुच्यते ॥ २१ ।
दक्षिणावर्त्तसव्येन कृत्वा प्राक्स्रोतसं नदीम् ।
कृत्वाऽभिषेकं त्रिधिवत्ततः पापात्प्रमुच्यते ॥ २२ ।*
दक्षिणावर्त्तशङ्खेन कृत्वा चैव करे जलम् ।
शिरसा तद्गृहीत्वा तु विप्रो हृष्टमनाः शुचिः ।
तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति ॥ २३ ।
प्राक्स्रोतसं नदीं गत्वा नाभिमात्रजले स्थितः ।
स्नात्वा कृष्णतिलैर्मिश्रा दद्यात्सप्ताञ्जलीर्नरः ॥ २४ ।
प्राणायामत्रयङ्कृत्वा ब्रह्मचारी जितेन्द्रियः ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥ २५ ।
अच्छिद्रपद्मपत्रेण सर्व्वरत्नोदकेन तु ।
त्रिशो यस्तु नरः स्नायात्सर्व्वपापैः प्रमुच्यते ॥ २६ ।
अन्यच्च ते प्रवक्ष्यामि गुह्याद्गुह्यतरं मुने ।
कार्त्तिके मलपक्षे तु स्मृता ह्येकादशी तिथिः ॥ २७ ।
भुक्तिमुक्तिप्रदा या तु नाम्ना ख्याता प्रबोधिनी ।
या सा विष्णोः परा मूर्त्तिरव्यक्तानेकरूपिणी ।
सा क्षिप्ता मानुषे लोके द्वादशी मुनिपुङ्गव ॥ २८ ।
ये उपोष्यन्ति विधिवन्नारायणपरायणाः ।
न तेषामशुभं किञ्चिज्जन्मकोटिकृतं मुने ॥ २९ ।

* एष श्लोकः (क), (ख) पुस्तकयोर्नास्ति

एकादशीं समाश्रित्य पुरा पृष्टो महेश्वरः ।
वाराहरूपी धरया सर्व्वलोकहिताय वै ॥ ३० ।

धरण्युवाच ।

अस्मिन् कलियुगे घोरे नराः पापरताः प्रभो ।
ब्रह्मस्वहरणे युक्ता तथा ब्राह्मणघातकाः ॥ ३१ ।
गुरुद्रोहरता देव मित्रद्रोहरतास्तथा ।
स्वामिद्रोहरताश्चैव परदाराभिमर्शकाः ॥ ३२ ।
परद्रव्यापहारे हि संसक्ताश्च सुरेश्वर ।
अभक्ष्यभक्षणरता वेदब्राह्मणनिन्दकाः ॥ ३३ ।
दाम्भिका भिन्नमर्य्यादा नायमस्तीति वादिनः ।
असत्प्रतिग्रहे सक्ता अगम्यागमने रताः ॥ ३४ ।
एतैश्चान्यैश्च पापैश्च संसक्ता ये नरा विभो ।
किमासाद्य गतिर्देव तेषां वद सुरेश्वर* ॥ ३५ ।

वराह उवाच ।

साधु देवि महाभागे यत्पृष्टोऽहं वरानने ।
रहस्यं ते प्रवक्ष्यामि लोकानां हितकाम्यया ॥ ३६ ।
महापातकयुक्ता ये नराः सुकृतवर्ज्जिताः ।
तेषां मया हितार्थाय निर्म्मितं तच्छृणुष्व मे ॥ ३७ ।
या मा विष्णोः परा शक्तिरव्यक्तानेकरूपिणी ।
सा मर्त्त्ये निर्म्मिता भूमे द्वादशी रूपधारिणी ॥ ३८ ।

* तेषां देव सुरेश्वर इति (क), (ख) ।

तामुपोष्य नरा भद्रे महापापरताश्च ये ।
पुण्यपापविनिर्मुक्ता गच्छन्ति पदमव्ययम् ॥ ३९ ।
उपायोऽतः परो नान्यो विद्यते हि वसुन्धरे ।
एकादशीं विना येन सर्व्वपापक्षयो भवेत् ॥ ४० ।
यथा शुक्ला तथा कृष्णा उपोष्या सा प्रयत्नतः ।
शुक्ला भक्तिप्रदा नित्यं कृष्णा मुक्तिं प्रयच्छति ॥ ४१ ।
तस्मात्सर्व्वप्रयत्नेन कर्त्तव्या द्वादशी सदा ।
यदीच्छेद्वैष्णवं लोकं गन्तुं वै भूतधारिणि ॥ ४२ ।
वाचा च मनसा चैव कर्म्मणा समुपार्ज्जितम् ।
पापं मासकृतं पुंसां दहत्येकादशी कृता ॥ ४३ ।
दहन्तीह* पुराणानि भूयोभूयो वरानने ।
न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ॥ ४४ ।
यदीच्छथ नरा गन्तुं तद्विष्णोः परमम्पदम् ।
न भोक्तव्यं न भोक्तव्यं तदा केशववासरे ॥ ४५ ।
ऊर्द्ध्वबाहुर्विरौम्येष प्रलापं मे शृणुष्व तम् ।
आराधयस्व विश्वेशमेकादश्यामतन्द्रितः ॥ ४६ ।
न शङ्खेन पिबेत्तोयं न हन्यान्मत्स्यसूकरौ ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥ ४७ ।
स ब्रह्महा सुरापश्च स स्तेयी गुरुतल्पगः ।
एकादश्यान्तु यो भुङ्क्ते पक्षयोरुभयोरपि ॥ ४८ ।

* रटन्तीहेति (क), (ख) ।

किं तेन न कृतं पापं दुर्वृत्तेनात्मघातिना ।
एकादश्यां विशालाक्षि भुक्तं येन विजानता ॥ ४९ ।
एकादशीञ्च यः शक्तामसमर्थ उपोषितुम् ।
तदा नक्तं प्रकर्त्तव्यं तथाऽयाचितमेव वा ॥ ५० ।
एकभक्तेन दानेन कर्त्तव्यं द्वादशीव्रतम् ।
न करोति यदा भूमे व्रतं वा दानमेव वा ॥ ५१ ।
महापातकभागी स्यात्सुगतिं नाप्नुयात्क्वचित् ।
उपवासासमर्थानां तथैव पृथुलोचने ॥ ५२ ।
एका सा द्वादशी पुण्या सोपोष्या सा प्रबोधिनी ।
तस्यामाराध्य विश्वेशं जगतामीश्वरेश्वरम् ।
प्राप्नोति सकलं चैतद्द्वादश द्वादशीफलम् ॥ ५३ ।
पूर्व्वाभद्रपदायोगे सैव या द्वादशी भवेत् ।
अतीव महती तस्यां सर्व्वङ्कृतमिहाक्षयम् ॥ ५४ ।
उत्तराभाद्रसहिता यदि सैकादशी भवेत् ।
तदा कोटिगुणं पुण्यं केशवाल्लभते फलम् ॥ ५५ ।
सकृद्देवार्च्चिते तस्यां लभते भूतधारिणि ॥ ५६ ।
यथा प्रबोधिनी पुण्या तथा यस्यां स्वपेद्धरिः ।
उपोष्या हि महाभागे अनन्तफलदा हि सा ॥ ५७ ।
शयने बोधने चैव हरेस्तु परिवर्त्तने ।
उपोष्यैव विधानेन नरो निर्म्मलतां व्रजेत् ॥ ५८ ।
तस्मात्सर्व्वप्रयत्नेन द्वादशी समुपोषयेत् ।
यदीच्छेत विशालाक्षि शाश्वतीं गतिमात्मनः ॥ ५९ ।

एकादशी सोमयुता कार्त्तिके मासि भामिनि ।
उत्तराभाद्रसंयोगे अनन्तफलदा हि सा ॥ ६० ।
तस्यां यत्क्रियते भद्रे तदनन्तगुणं स्मृतम् ॥ ६१ ।
एकादशी भौमयुता यदा स्याद्व्रतधारिणि ।
स्नात्वा देवं समभ्यर्च्च प्राप्नोति परमम्फलम् ।
प्राप्नोति सकलञ्चैव द्वादशद्वादशीफलम् ॥ ६२ ।
जलपूर्णं तथा कुम्भं स्थापयित्वा विचक्षणः ।
पञ्चरत्नसमोपेतं घृतपात्रयुतं तथा ॥ ६३ ।
तस्योपरि न्यसेन्मत्स्यस्वरूपन्तु* जनार्द्दनम् ।
निष्कमात्र†सुवर्णेन घटितन्तु वरानने ॥ ६४ ।
पञ्चामृतेन संस्नाप्य कुङ्कुमेन विलेपितम् ।
पीतवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितम्‡ ।
पूजयेत्कमलैर्देवि मन्त्रज्ञः संयतेन्द्रियः ॥ ६५ ।
मत्स्यं कूर्म्मं वराहञ्च नरसिंहञ्च वामनम् ।
रामं रामञ्च कृष्णञ्च बुद्धञ्चैव च कल्किनम् ॥ ६६ ।
एवं दशावतारांश्च पूजयेद्भक्तिसंयुतः ।
पुष्पैर्धूपैस्तथा दीपैर्नैवेद्यैर्विविधैरपि ॥ ६७ ।
सम्पूज्यैवमलङ्कारैर्विविधैरुपशोभितम् ।
रात्रौ चोत्थापनङ्कार्य्यं देवदेवस्य सुव्रते ॥ ६८ ।

* तस्य स्वरूपन्तु इति क्वचित्पाठः । † माषमात्रमिति (ख) । ‡ पीतवस्त्रयुगच्छन्न-छत्रोपानद्युगान्वितमिति (ग) ।

प्रभाते विमले स्नात्वा भक्त्या सम्पूज्य केशवम् ।
पुष्पधूपादिनैवेद्यैः फलैर्नानाविधैः शुभैः ॥ ६९ ।
ततस्तु पूजयेद्विद्वानाचार्य्यं भक्तिसंयुतः ।
अलङ्कारोपहारैश्च वस्त्राद्यैश्च स्वशक्तितः* ॥ ७० ।
पूजयित्वा विधानेन तं देवम्प्रतिपादयेत् ॥ ७१ ।
जगदादिर्जगद्रूपो जगदादिरनादिमान् ।
जगदादिर्जगद्योनिः प्रीयतां मे जनार्द्दनः ॥ ७२ ।
अनेनैव विधानेन कुर्य्याद्दैकादशीव्रतम् ।
तस्य पुण्यं भवेद्यत्तु तच्छृणुष्व वसुन्धरे ॥ ७३ ।
यदि वक्त्रसहस्राणां सहस्राणि भवन्ति हि ।
संख्यातुं नैव शक्यन्ते प्रबोधिन्यास्तथा गुणाः ॥ ७४ ।
तथाप्युद्देशमात्रेण शक्त्या वक्ष्यामि तच्छृणु ।
चन्द्रतारार्कसङ्काशमधिष्ठायानुजीविभिः ।
सहैव यानमागच्छेन्मम लोकं वसुन्धरे ॥ ७५ ।
ततः कल्पसहस्रान्ते सप्तद्वीपेश्वरो भवेत् ।
आयुरारोग्यसम्पन्नो जन्मातीतो भवेत्ततः ॥ ७६ ।
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ।
पापान्येतानि सर्व्वाणि श्रवणेनैव नाशयेत् ॥ ७७ ।
पश्येच्च धीमानधनोऽपि भक्त्या
स्वर्गेऽप्यनुष्यं त्विह धीयमानः ।

---

* ोपहारैश्च वस्त्राद्यैरलङ्कारैः स्वशक्तितः इति (ख) ।

शृणोति भक्तस्य मतिं ददाति
विकल्मषः सोऽपि दिवं प्रयाति ॥ ७८ ।
दुःस्वप्नः प्रशममुपैति पठ्यमाने
माहात्म्ये भवभयहारके नरस्य ।
यः कुर्य्याद्व्रतवरमेतदव्ययायाः
बोधिन्याः किमुत फलन्तु तस्य वाच्यम् ॥ ७९ ।
ते धन्यास्ते कृतार्थाश्च तैरेव सुकृतङ्कृतम् ।
तैरात्मजन्म सफलङ्कृतं ये व्रतकारकाः ॥ ८० ।
नारायणाच्युतानन्त वासुदेवेति यो नरः ।
सततङ्कीर्त्तयेद्भूमे याति मल्लयतामिये ॥ ८१ ।
किं पुनः श्रद्धया युक्तः पूजयेन्मामनन्यधीः ।
गुरूपदिष्टमार्गेण याति मल्लयतां नरः ॥ ८२ ।
तस्य यन्नवराहस्य विष्णोरमिततेजसः ।
प्रयाणं ये च कुर्व्वन्ति ते पूज्याः सततं सुरैः ॥ ८३ ।
तस्मात्सुनियतैर्भाव्यं वैष्णवं मार्गमास्पदम् ।
दुर्लभं वैष्णवत्वं हि त्रिषु लोकेषु सुन्दरि ॥ ८४ ।
जन्मान्तरसहस्रेषु समाराध्य वृषध्वजम् ।
वैष्णवत्वं लभेत्कश्चित्सर्व्वपापक्षये सति ॥ ८५ ।
पापक्षयमवाप्नोति ईश्वराराधने कृते ।
ज्ञानमन्विच्छता रुद्रं पूजयेत्परमेश्वरम् ॥ ८६ ।
मामाराध्य तथा याति तद्विष्णोः परमम्पदम् ।
वैष्णवा हि महाभागाः पुनन्ति सकलं जगत् ॥ ८७ ।

संस्मृतः कीर्त्तितो वापि दृष्टः स्पृष्टोऽपि वा प्रिये ।
पुनाति भगवद्भक्तश्चाण्डालोऽपि यदृच्छया ॥ ८८ ।
एतज्ज्ञात्वा तु विद्वद्भिः पूजनीयो जनार्द्दनः ।
वेदोक्तविधिना भद्रे ह्यागमोक्तेन वा सुधीः ॥ ८९ ।

यम उवाच ।

एतच्छ्रुत्वा महाभागा धरणी शंसितव्रता ।
समाराध्य जगन्नाथं विधिना तन्नयज्ञता ।
अतो यत्नेन वै साध्यं वैष्णवत्वं विपश्चिता ॥ ९० ।
ये वैष्णवा महात्मानो विष्णुपूजनतत्पराः ।
तेषां नैवाक्ष्ययं लोको यान्ति तत्परमम्पदम् ॥ ९१ ।
ये सकृद्द्वादशीमेतामुपोष्यन्ति विधानतः ।
प्रबोधनाख्यां सुधियस्ते यान्ति परमम्पदम् ॥ ९२ ।
न यमं यातनादण्डान्नरकान्न च किङ्करान् ।
पश्यन्ति द्विजशार्द्दूल इति सत्यं मयोदितम् ॥ ९३ ।
एतत्ते सर्व्वमाख्यातं यथा दृष्टं यथा श्रुतम्* ।
कथितं मे महाभाग यत्त्वया परिपृच्छितम्† ॥ ९४
स्वयम्भुवा यथा प्रोक्तं गुह्याख्यानं महामुने ।
तत्ते सर्व्वं समासेन आख्यातं‡ धर्म्मवत्सल ॥ ९५ ।

इति वराहपुराणे प्रबोधिनीमाहात्म्यं नाम
एकादशाधिकद्विशततमोऽध्यायः ।

* यथा तत्त्वं यथा श्रुतमिति (ख), तत्रातः परं सार्द्धैकः श्लोको नास्ति ।
† पृष्टमिति साधु । ‡ व्याख्यातमिति (ग) ।

## ाद्शाधिकद्विशततमोऽध्यायः ।

नारद उवाच ।

साधु साधु महाराज सर्व्वधर्म्मविदां वर ।
त्वया तु कथिता दिव्या कथेयं धर्म्मसंहिता ॥ १ ।
अतोऽहमपि सुप्रीतस्तव धर्म्मपथे स्थितः ।
तव वाक्यानि सृष्टानि प्रोक्तानि च श्रुतानि च ॥ २ ।
त्वयाहञ्चैव राजेन्द्र पूजितश्च विशेषतः ।
गच्छामि त्वरितो लोकान्यत्र मे रमते मनः ॥ ३ ।
स्वस्ति तेऽस्तु महाराज अकम्पो भव सुव्रत ।
एवमुक्त्वा ततो यातो नारदो मुनिसत्तमः ॥ ४ ।
तेजसा द्योतयन्सर्व्वं गगनं भास्करो यथा ।
विचचार दिवं रम्याङ्कामचारी महामुनिः ॥ ५ ।
गते तस्मिंस्तु सुचिरं स राजा धर्म्मवत्सलः ।
मां दृष्ट्वा सुमनाविप्रा वाक्यैश्चित्रैश्च वन्दयन् ॥ ६ ।
कृत्वा पूजाञ्च मे युक्तां प्रियमुक्त्वा च सुव्रत ।
विसर्ज्जयामास विभुः सुप्रीतेनान्तरात्मना ॥ ७ ।
एतद्वः कथितं विप्रास्तस्य राज्ञः पुरोत्तमे ।
यथा दृष्टं श्रुतञ्चैव यथा चेहागतो ह्यहम् ॥ ८ ।

वैशम्पायन उवाच

तस्य तद्वचनं श्रुत्वा हृष्टपुष्टास्तपोधनाः ।

केचिद्वैखानसास्तत्र केचिद्दासविरासनाः ॥ ९ ।
साधु साध्विति चैवोक्त्वा विस्मयोत्फुल्ललोचनाः ।
यायावरास्तथा चान्ये वानप्रस्थास्तथापरे ॥ १० ।
शालीनाश्च तथा केचित्कापोतीं वृत्तिमास्थिताः ।
तथा चान्ये जगुर्वृत्तिं सर्व्वभूतदयां शुभाम् ॥ ११ ।
शिलोञ्छाश्च तथैवान्ये काष्ठास्तस्य महौजसः ।
अपाकपाचिनः केचित्पाकिनश्च क्वचित्पुनः ॥ १२ ।
नानाविधिधराः केचिज्जितात्मानस्तु केचन ।
स्थानमौनव्रताः केचित्तथान्ये जलशायिनः ॥ १३ ।
तथार्द्रशायिकाश्चान्ये तथान्ये मृगचारिणः ।
पञ्चाग्नयस्तथा केचित्केचित्पर्णफलाशिनः ॥ १४ ।
अब्भक्षा वायुभक्षाश्च तथान्ये शाकभक्षिणः ।
अतोऽन्येऽप्यतितीव्रं वै तपश्चैव प्रपेदिरे ॥ १५ ।
तपसोऽन्यत्र चास्तीति चिन्तयित्वा पुनः पुनः ।
जन्मनो मरणाच्चैव केचिद्धीरा महर्षयः ।
त्यक्त्वा धर्म्ममधर्म्मञ्च शाश्वतीं धियमास्थिताः ॥ १६ ।
श्रुत्वा चैव कथामेतामृषयो दिव्यवर्चसः ।
जगृहुर्नियमांस्तांस्तान् भयहेतोरनिन्दिताः ॥ १७ ।
नाचिकेतोऽपि धर्म्मात्मा पुत्रं दृष्ट्वा तपोधनम् ।
प्रीत्या परमया युक्तो धर्म्ममेवान्वचिन्तयत् ॥ १८ ।
वेदार्थममितं विष्णुं शुद्धं चिन्मयमीश्वरम् ।
चिन्तयामास धर्म्मात्मा तपः परममास्थितः ॥ १९ ।

इदन्तु परमाख्यानं भगवद्भक्तिकारकम्।
शृणुयाच्छ्रावयेद्वापि सर्व्वकामानवाप्नुयात्॥ २०॥

इति वराहपुराणे भगवच्छास्त्रे संसारचक्रोपाख्याने प्रबोधनीयं नाम द्वादशाधिकद्विशततमोऽध्यायः।

## त्रयोदशाधिकद्विशततमोऽध्यायः।

सूत उवाच।

पुरा देवैर्विनिहते सङ्ग्रामे तारकामये।
अत्युच्छ्रिते प्रतिबले दानवानाम्बले तथा॥ १॥
लब्धपदे सहस्राक्षे क्षीणशत्रौ गतास्पदे।
सम्यक्प्रसूतिमापन्ने त्रैलोक्ये सचराचरे॥ २॥
शृङ्गे चैवाचलेन्द्रस्य मेरोः सर्व्वहिरण्मये।
मणिविद्रुमविद्धे च विपुले पङ्कजासने॥ ३॥
सुखोपविष्टमेकाग्रं स्थिरचित्त*द्धृतेक्षणम्।
निवृत्तकार्य्यं मुदितं सूर्य्यवैश्वानरद्युतिम्॥ ४॥
प्रणम्य मूर्द्ध्ना चरणावुपसङ्गृह्य समाहितः।
ब्रह्माणं परिपप्रच्छ कुमारः सनत्पूर्व्वकः†॥ ५॥

* स्थितचित्तमिति (क)। † सन इति नकारस्य गुरुत्वाच्छन्दोदोषः।

सनत्कुमार उवाच ।

भगवञ्छ्रोतुमिच्छामि पुराणमपि संश्रुतम् ।
पुराणन्तु महाभाग त्वत्तस्तत्त्वविदां वर ॥ ६ ।
कथमुत्तरगोकर्णं दक्षिणञ्च कथं विभो ।
शृङ्गेश्वरस्य परमङ्कथं सम्यक् प्रतिष्ठितम् ॥ ७ ।
क्षेत्रस्य किम्प्रमाणं स्यात्किञ्च तीर्थफलं स्मृतम् ।
कथं पशुपतिस्तत्र भगवान्मृगरूपधृक् ॥ ८ ।
सर्व्वैस्त्वत्प्रमुखैर्द्देवैः कथमासादितम्पुनः ।
मृगरूपङ्कथञ्चास्य शरीरं क्व प्रतिष्ठितम् ॥ ९ ।
यथा यत्र* च यस्तत्र विधिः सम्यगनुष्ठितः ।
तत्सर्व्वं निखिलेनाशु ब्रूहि मे वाग्विदां वर ॥ १० ।
एवमुक्तः स भगवान्ब्रह्मा ब्रह्मविदां वरः ।
उवाच तस्मै पुत्राय गुह्यमेतत्पुरातनम् ॥ ११ ।

ब्रह्मोवाच ।

शृणु वत्स महाभाग यथातत्त्वं ब्रवीमि ते ।
पुराणमेतद्ब्रह्मर्षे सरहस्यं यथाश्रुतम् ॥ १२ ।
अस्ति भूधरराजस्य मन्दरस्योत्तरे शुचौ ।
मुञ्जवान्नाम शिखरी नन्दनोपवनद्युतिः ॥ १३ ।
वज्रस्फटिकपाषाणः प्रवालाङ्कुरशर्करः ।
नीलामलशिलावर्णो गुहानिर्झरकन्दरः ॥ १४ ।

* यथा यत्र च वर्न इति (ख) ; यथा तत्र चयस्तत्रेति (ग) ।

विचित्रकुसुमोपेतैर्लतामञ्जरिधारिभिः।
रेजे यः प्रांशुभिः शृङ्गैरुल्लिखद्भिरिवाम्बरम॥ १५।
दृश्यस्तत्राधिकं रेजुर्नानाधातुपरिस्रवैः।
शिलीन्ध्रकुसुमोपेताश्चित्रिता इव सर्व्वतः॥ १६।
तेऽत्र केतकिखण्डाश्च कुन्दखण्डाश्च पुष्पिताः।
उन्मीलिता इवाभान्ति धातकीवनराजिभिः॥ १७।
भिन्नेन्द्रनीलविमलैर्धौतैः प्रस्रवणाम्बुभिः।
चित्रैः कुसुमसंकुलैः शिलाप्रस्तरविस्तरैः।
शक्रचापनिभे रम्यैः कुबेरभवनद्युतौ।
तस्मिन्नगवरे रम्ये महोरगनिषेविते॥ १८।१९।
क्रीड़द्भिर्देवमिथुनैर्नृत्यद्भिश्चाप्सरोगणैः।
कूजद्भिः शिखिभिर्मत्तैः सेविते च नगोत्तमे॥ २०।
कह्लारकुसुमोपेते हंससारससेविते।
प्रसन्नसलिलाकीर्णे सरै*रुत्फुल्लपङ्कजैः॥ २१।
गजयूथानुकीर्णाभिर्जुष्टाभिर्मृगपक्षिभिः†।
सेविताभिर्मुनिगणैः सरिद्भिरुपशोभिते॥ २२।
किन्नरोद्गीतकुहरे परपुष्टनिनादिते।
विद्याधरशताकीर्णे देवगन्धर्व्वसेविते॥ २३।
धारापातैश्च तोयानां विस्फुलिङ्गैः सहस्रशः।
प्रज्वालितातुले शृङ्गे रम्ये हरितशाद्वले॥ २४।

* सरैरिति आर्षं, सरोभिरिति साधु। † मृगपक्षिषु इति (ग)।

सर्व्वर्त्तुकवनोद्याने पुष्पाकरसुशोभिते ।
यक्षकिम्पुरुषावासे गुह्यकानामथाश्रये ॥ २५ ।
तस्मिन् गिरिवरे रम्ये सेवितव्ये सुशोभने ।
धर्म्मारण्ये तपःक्षेत्रे मुनिसिद्धनिषेविते ॥ २६ ।
वरदस्तत्र भगवान् स्थाणुर्नाम महेश्वरः ।
सर्व्वामरगुरुर्देवो नित्यं सन्निहितः प्रभुः ॥ २७ ।
भक्त्यानुकम्पी* स श्रीमान् गिरीन्द्रसुतया सह ।
स ह्यध्यास्ते गिरिवरं† पार्षदैश्च गुहेन च ॥ २८ ।
विमानयायिनः सर्व्वे तं देवमजमव्ययम् ।
आजग्मुः सेवितुं देवा वरेण्यमजमव्ययम् ।
अन्ये देवनिकायाश्च सेवितुं प्रपतन्ति‡ तम् ॥ २९ ।
ततस्त्रेतायुगे काले नन्दी नाम महामुनिः ।
आरिराधयिषुः शर्व्वं§न्तपस्तेपे सुदारुणम् ॥ ३० ।
ग्रीष्मे पञ्चतपास्तिष्ठेत् शिशिरे सलिलाश्रयः ।
ऊर्द्ध्वबाहुर्निरालम्बस्तोयाऽनिलहुताशनैः ॥ ३१ ।
व्रतैश्च विविधैरुग्रैस्तपोभिर्नियमैस्तथा ।
जपपुष्पोपहारैश्च काले काले मुनिः सदा ॥ ३२ ।
शङ्करं विधिवद्भक्त्या सोऽर्च्चयद्द्विजपुङ्गवः ।
उग्रेण तपसात्मानं योजयामास सुव्रतः ॥ ३३ ।

---

* भक्तानुकम्पीति (ग)। † गिरिवरे इति (ग)। ‡ प्रयतन्तीति (क) आर्षं, प्रयतन्ते इति साधु। § सर्व्वमिति (ग), एवं परत्रापि सर्व्व इति।

काष्ठभूतो यदा विप्रः क्षमो धमनिसन्ततः।
श्यामोऽभूत्कृष्णवर्णश्च ततः प्रीतश्च शङ्करः॥ ३४।
सम्यगाराधितो भक्त्या नियमेन च तोषितः।
तदात्मदर्शनम्प्रादात्स मुनेर्वृषभध्वजः॥ ३५।
उक्तवांश्च मुनिं शर्व्वश्चक्षुर्दिव्यं ददामि ते।
अदृश्यं पश्य मे रूपं वत्स प्रीतोऽस्मि ते मुने॥ ३६।
यत्पश्यन्तीह विद्वांसो रूपमप्रतिमौजसम्।
सहस्रसूर्य्यकिरणं ज्वालामालिनमूर्ज्जितम्॥ ३७।
बालार्कमण्डलाकारं प्रभामण्डलमण्डितम्*।
जटाजूटतटाश्लिष्टं चन्द्रालङ्कृतशेखरम्॥ ३८।
जगदालोचनं श्रीमत्प्रदीप्तत्रयलोचनम्।
प्रादेशमात्रं रुचिरं शतशीर्षं शतोदरम्॥ ३९।
सहस्रबाहुचरणं सहस्राक्षिशिरोमुखम्।
अणीयसामणीयांसं बृहद्बृहद्बृहत्तरम्॥ ४०।
अक्षमालापवित्राङ्गं कमण्डलुकरोद्यतम्।
सिंहचर्म्माम्बरधरं व्यालयज्ञोपवीतिनम्॥ ४१।
दृष्ट्वा देवं महादेवं हृष्टरोमा महातपाः।
प्राञ्जलिः प्रणतो भूत्वाऽगृणद्ब्रह्म सनातनम्॥ ४२।
नमो धात्रे विधात्रे च शम्भवे वरदाय च।
जगल्लोक्ये त्रिनेत्राय शङ्कराय शिवाय च॥ ४३।

* प्रभामण्डलवेष्टितमिति (ग)

भवाय भवगोप्त्रे च मुनये कृत्तिवाससे ।
नीलकण्ठाय भीमाय भूतभव्यभवाय च ॥ ४४ ।
लम्बभ्रुवे करालाय हरिनेत्राय मीढुषे* ।
कपर्द्दिने विशालाय मुञ्जकेशाय धीमते ॥ ४५ ।
शूलिने पशुपतये विभवे स्थाणवे तथा ॥
गणानां पतये स्रष्ट्रे सङ्गोप्त्रे भीषणाय च ॥ ४६ ।
सौम्याय सौम्यतपसे भीमाय त्र्यम्बकाय च ।
प्रेतवासनिवासाय रुद्राय वरदाय च ॥ ४७ ।
कपालमालिने तस्मै हरिश्मश्रुधराय च ।
भक्तप्रियाय सततं नमोऽस्तु परमात्मने ॥ ४८ ।
एवं नन्दी भवं स्तुत्वा नमस्कृत्य च सर्व्वशः ।
प्रणम्य शिरसा देवं पुनः पुनरवन्दत ॥ ४९ ।
ततस्तु भगवान्प्रीतस्तस्मै विप्राय शङ्करः ।
उवाच च वचः साक्षात्तमृषिं† वरदः प्रभुः ॥ ५० ।
वरान्वृणीष्व विप्रेन्द्र यानिच्छसि महामुने ।
तांस्ते सर्व्वान् प्रयच्छामि दुर्ल्लभानपि मारिष ॥ ५१
प्रभुत्वममरत्वं वा शक्रत्वमिति वा प्रभो ।
ब्रह्मत्वं लोकपालत्वमपवर्गमथापि वा ॥ ५२ ।
अथाष्टगुणमैश्वर्य्यं गाणपत्यमथापि वा ।
यदिच्छसि मुने शीघ्रं तद्ब्रूहि द्विजपुङ्गव ॥ ५३ ।

* मील्हुषे इति (क), (ख) । † वाचोवाच वचः साक्षात्तमृषिमिति (ग)

इत्युक्तोऽसौ भगवता शर्व्वेण मुनिपुङ्गवः ।
प्रोवाच वरदं देवं प्रहृष्टेनान्तरात्मना ॥ ५४ ।
न प्रभुत्वं न देवत्वं नेन्द्रत्वमपि वा प्रभो ।
ब्रह्मत्वं लोकपालत्वं नापवर्गं वरप्रद ॥ ५५ ।
नैवाष्टगुणमैश्वर्य्यं गाणपत्यं न च प्रभो ।
स्पृहये देवदेवेश प्रसन्ने त्वयि शङ्कर ॥ ५६ ।
यदि प्रीतोऽसि भगवन्ननुक्रोशतया मम ।
अनुग्राह्यो ह्ययं देव त्वयावश्यं सुराधिप ॥ ५७ ।
यथान्ये न* भवेद्भक्तिस्त्वत्तो नित्यं महेश्वर ।
तथाहं भक्तिमिच्छामि सर्व्वभूताशये त्वयि ॥ ५८ ।
यथा च न भवेद्विघ्नं† तपस्यानिरतस्य मे ।
कोटिजप्येन रुद्राणामाराधनपरस्य च ॥ ५९ ।
एतत्तु वचनं श्रुत्वा नन्दिनः स महेश्वरः ।
प्रहस्योवाच तं प्रीत्या ततो मधुरया गिरा ॥ ६० ।
प्रीतोऽस्म्युत्तिष्ठ विप्रर्षे तप्यमानेन सुव्रत ।
आराधितश्च भक्त्याहं त्वया शुद्धेन चेतसा ॥ ६१ ।
पर्य्याप्तं ते महाभाग तपः कर्त्तुं तपोधन ।
निवर्त्तयति मां वत्स मत्पादाराधने रतः ॥ ६२ ।
जप्ता ते त्रिगुणा कोटी रुद्राणां पुरतो मम ।
पूर्णं वर्षसहस्रञ्च तपस्तीव्रं महामुने ॥ ६३ ।

* यथा नान्ये इति (ग, ; अन्ये इति आर्षमन्यस्मिन्निति साधु । † विघ्न इति साधु ।

न कृतं यत्पुरा देवैर्नासुरैर्ऋषिभिर्न च ।
कृतं सुमहदाश्चर्य्यं त्वया कर्म्म सुदुष्करम् ॥ ६४ ।
सङ्क्षोभितमिदं सर्व्वं त्रैलोक्यं सचराचरम् ।
आगमिष्यन्ति ते* द्रष्टुं देवाः सर्व्वे सवासवाः ॥ ६५ ।
अक्षय्यश्चाव्ययश्च त्वं अतर्क्यः ससुरासुरैः ।
दिव्यतेजोवपुः श्रीमान्दिव्याभरणभूषितः ॥ ६६ ।
मत्तुल्यो मत्प्रभावश्च त्वमेकः ससुरासुरैः ।
मद्रूपधारी मत्तेजास्त्र्यक्षः सर्व्वगुणोत्तमः ।
भविष्यसि न सन्देहो देवदानवपूजितः ॥ ६७ ।
अनेनैव शरीरेण जरामरणवर्ज्जितः ।
दुष्प्राप्येयमवाप्ता ते देवैर्गाणेश्वरी गतिः ॥ ६८ ।
पार्षदानां वरिष्ठस्त्वं मामकानां द्विजोत्तम ।
नन्दीश्वर इति ख्यातो भविष्यसि न संशयः ॥ ६९ ।
प्राप्तमष्टगुणं सत्यमैश्वर्य्यं ते तपोधन ।
द्वितीयां मे तनुं त्वान्तु नमस्यन्ति च देवताः ॥ ७० ।
अद्यप्रभृति देवाश्च देवकार्य्येषु सर्व्वतः ।
प्रभुस्त्वं भविता लोके मत्प्रसादान्मुनीश्वर ॥ ७१ ।
त्वामेवाभ्यर्च्चयिष्यन्ति सर्व्वभूतानि सर्व्वतः ।
मत्तः समभिवाञ्छन्ति प्रसादम्पार्षदाधिप ॥ ७२ ।
वराम्बरार्थिनां दाता विधाता जगतः सदा ।
भविष्यसि च धर्म्मज्ञ भीतानामभयप्रदः ॥ ७३ ।

---

* ते इति कर्म्मणि षष्ठी, त्वामित्यर्थः ।

यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु।
नावयोरन्तरङ्किञ्चिदम्बरानिलयोरिव ॥ ७४ ।
द्वारि तु दक्षिणे नित्यं त्वया स्थेयङ्गणाधिप।
वामे तु विभुना चापि महाकालेन सर्व्वदा ॥ ७५ ।
प्रतीहारो भवानद्य सर्व्वदा त्रिदशोत्तमः।
शिरो मे रक्षतु भवान्महाकालोऽपि मे गणः ॥ ७६ ।
न वज्रेण न दण्डेन न चक्रेण न चाग्निना।
कश्चिच्छक्नोति वै बाधां कर्त्तुं वै भुवनत्रये ॥ ७७ ।
देवदानवगन्धर्व्वा यक्षराक्षसपन्नगाः।
त्वामेव संश्रयिष्यन्ति मद्भक्ताः पुरुषाश्च ये ॥ ७८ ।
त्वयि तुष्टे ह्यहन्तुष्टः कुपिते कुपितस्त्वहम्।
त्वत्तः प्रियतरो नास्ति ममान्यो द्विजपुङ्गव ॥ ७९ ।
एवं तस्य वरान्दत्त्वा प्रीतः स्वयमुमापतिः।
उवाच भूयः स्पष्टेन स्वरेणाम्बरचारिणा ॥ ८० ।
आगतान्विद्धि सर्व्वान्वै त्रिदशान् समरुद्गणान्।
दिदृक्षया च भद्रन्ते कृतकृत्यश्च साम्प्रतम् ॥ ८१ ।
यदीरितं मया वत्स वरम्प्रतिवचस्त्वयि।
प्रविष्टं न श्रुतिपथं दिवि सर्व्वदिवौकसाम् ॥ ८२ ।
नारायणं पुरस्कृत्य सेन्द्रास्ते समरुद्गणाः।
प्रेमार्थे चागमिष्यन्ति वरार्थं तपसाऽमराः ॥ ८३ ।
यक्षविद्याधरगणाः सिद्धगन्धर्व्वपन्नगाः।
मुनयश्च महात्मानस्तपोलब्धाः सहस्रशः ॥ ८४ ।

ते बुद्ध्वा त्वद्गतामृद्धिमस्मत्तमाः परमेप्सया ।
तपांसि विविधान् पुत्र विविधान्नियमांस्तथा ।
चर्त्तुं समभिवाञ्छन्ति सदाभ्यासे वरार्थिनः ।
वरदं मामभिज्ञाय मेरौ मौञ्जावति स्थितम् ॥ ८५।८६
अचेते यावदागम्य न मां पश्यन्ति मानवाः ।
तावदेव इतः शीघ्रङ्गमिष्यामि महामुने ॥ ८७ ।
अथ ते तु मया सर्व्वे देवा ब्रह्मपुरोगमाः ।
दृष्टव्याश्चानुमन्तव्या मत्तोऽनुग्रहकाङ्क्षिणः ॥ ८८ ।
अभिप्रायञ्च सर्व्वेषां जानामि द्विजसत्तम ।
अनुगृह्य वरैस्तेश्च तत्रैवान्तरधीयत ॥ ८९ ।

इति वराहपुराणे भगवच्छास्त्रे गोकर्णेश्वरमाहात्म्ये
त्रयोदशाधिकद्विशततमोऽध्यायः ।

# चतुर्दशाधिकद्विशततमोऽध्यायः ।

ब्रह्मोवाच ।

अन्तर्हिते ततस्तस्मिन्भवे वै भूतनायके ।
बभूव दिव्यः स तदा नन्दी गणचमूपतिः ॥ १ ।
चतुर्भुजस्त्रिनयनो दिव्यसंस्थानसंस्थितः ।
दिव्यवर्णवपुश्चारुर्दिव्यागुरुसमन्वितः ॥ २ ।

त्रिशूली परिघी दण्डी पिनाकी मौञ्जमेखली।
शुशुभे तेजसा तत्र द्वितीय इव शङ्करः ॥ ३ ।
आस्थितः पादमाक्रम्य प्राक्रयन्निव स द्विजः।
त्रिभिः क्रमैः क्रान्तुमनास्त्रिविक्रम इवोद्यतः ॥ ४ ।
तं दृष्ट्वा खचराः सर्व्वा देवताः परिशङ्किताः।
आख्यातुं पुरुहूताय सम्भ्रान्ताः प्रययुर्दिवम् ॥ ५ ।
तेभ्यः श्रुत्वा सहस्राक्षः सर्व्वे चान्ये दिवौकसः।
विप्रादम्बरमङ्गत्वा चिन्तामापेदिरे भृशम् ॥ ६ ।
अयङ्कश्चिद्वरं लब्ध्वा उमाकान्तान्महेश्वरात्।
अत्यूर्जितबलः श्रीमांस्त्रैलोक्यम्भ्राप्नोति भुवम् ॥ ७ ।
यादृशोऽस्य महात्मा दृस्तेजोबलसमन्वितः।
नूनमेष महासत्त्वो हरेत्स्थानं दिवौकसाम् ॥ ८ ।
यावन्नैवौजसा नाकमसौ चङ्क्रमते प्रभुः।
प्रसादयामो वरदं तावदेव महेश्वरम् ॥ ९ ।
एवमुक्त्वा तु ते तत्र मया सह सुरोत्तमाः।
गिरिं मौञ्जवतं शृङ्ग*माजग्मुर्देवनिर्म्मितम् ॥ १० ।
विधाता भगवान्विष्णुः प्रभुस्त्रिभुवनेश्वरः।
अभ्यधावंस्ततः सोऽथ स हि जानाति हृद्गतम्।
कृतेन तेन विबुधाः पश्यन्ति मुनयश्च ते ॥ ११ ।
ततः स भगवान्विष्णुः सहदेवः सधातृकः।

* गिरेर्मौञ्जवतः शृङ्गमेवं कृते तु साधु स्यात्।

जगाम तत्र यत्रासौ नन्दी तिष्ठति देववत् ॥ १२ ।

नन्द्युवाच ।

सफलं जीवितं मेऽद्य सफलश्च परिश्रमः ।
यन्मे दृष्टः सुराध्यक्षः सर्व्वलोकगुरुर्हरिः ॥ १३ ।
पर्य्याप्तं तन्ममाद्येह* कृतकृत्योऽस्मि तेन वै ।
यच्च मे प्रभुरव्ययः प्रीतः पापहरो हर ॥ १४ ।
विधाय पार्षदत्वं मे वरानिष्टान्ददौ शिवः ।
परो मेऽनुग्रहः सोऽत्र पूतोऽस्मि खलु साम्प्रतम् ॥ १५
यथोक्तं विधिना वाक्यं देवान् प्रति महात्मना ।
मामुद्दिश्य हितं तथ्यं तथैव च न चान्यथा ॥ १६ ।
यन्मां देवर्षयः प्रीत्या समागत्य प्रियंवदाः ।
तेनास्मि परमप्रीत आहतः परमेष्ठिना ॥ १७ ।

देवा ऊचुः ।

वयं तं वरदं देवं द्रक्ष्यामस्ते वरप्रदम् ।
तवैष तपसा तुष्टः स्वयम्प्रत्यक्षताङ्गतः ॥ १८ ।
इत्युक्तवन्तस्ते देवाः पुनरूचुर्द्विजोत्तमम् ।
कुत्र द्रक्ष्यामहे देवं भगवन्तं कपालिनम् ॥ १९ ।

नन्द्युवाच ।

अनुगृह्य तु मां देवस्तत्रैवादर्शनङ्गतः ।
न जाने कुत्र वा देवं कुत्रास्ते तद्गवेष्यताम् ॥ २० ।

---

* ममाद्यर्त्तिति (ख) ।

सनत्कुमार उवाच।

किमाह नन्दिनं देवो येनासौ नोक्तवान् प्रभुम्।
तस्मै कथय देवेश गुह्यङ्किञ्चास्ति शूलिनः॥ २१।

ब्रह्मोवाच।

यदुक्तवान्महेशानो नाख्येयोऽस्मि सुरान् प्रति।
किमुक्तवान्महादेवो नन्दिनं तच्छृणुष्व मे॥ २२।

ईश्वर उवाच।

अस्ति कश्चित्समुद्देशः क्षितेः सिद्धोऽद्रिसङ्कटः।
पारे हिमवतः पुण्ये तपोवनगुणैर्युतः॥ २३।
तत्र श्लेष्मातको नाम वसते पन्नगोत्तमः।
सोऽनुग्राह्यो मयावश्यं तपसा दग्धकिल्बिषः॥ २४।
तदभ्यासे च रुचिरं न चासौ वानराश्रयः।
तस्य नाम्ना च तत्स्थानं दिव्यं चिरतपोभृतम्*॥ २५।
श्लेष्मातकवनं नाम पुण्यशीलशिलोच्चयम्।
मृगरूपेण चरता तत्र वै त्रिदशा मया।
द्रष्टव्याः सञ्जिहृक्षन्तः खिन्नाश्चान्वेषणे मम॥ २६।
नाख्यातव्यं त्वया तेषां देवताप्सरसामिदम्।
अनुगृह्य वरैस्तैश्च तत्रैवान्तरधीयत॥ २७।
विद्योतयन्दिशः सर्व्वाः स्विदशैः परिवारितः।
बालुकेन्दुनिभं दिव्यमर्च्चितं दिव्यबिन्दुभिः।

* चिरतपोभ्रमिति (क), (ख)।

कामगं रथमारुह्य महेन्द्रः समरुद्गणः ।
आयातः शैलपृष्ठन्तमोजसा पूरयन्निव ॥ २८।२९ ।
वरदो गणाद्रस्तत्र वरुणो यादसाम्पतिः ।
वज्रस्फटिकचित्रेण विमानेनातितेजसा ॥ ३० ।
तप्तकाञ्चनवर्णेन रत्नचित्रेण भास्वता ।
विमानेनागतः शृङ्गं द्योतयन्वै धनाधिपः ।
विमानशतकोटीभिरागतो यक्षराक्षसैः ॥ ३१ ।
श्रीमद्भिर्बहुभिर्दिव्यैर्विमानैः सूर्य्यसन्निभैः ।
अधिष्ठितः सुकृतिभिः प्रायाद्वैवस्वतोपमः ॥ ३२ ।
चन्द्रादित्यौ ग्रहाः सर्व्वे समग्रमृक्षमण्डलम् ।
विमानैरग्निसूताभैराजग्मुः स्वान्महीधरम् ॥ ३३ ।
रुद्रास्त्वेकादशायाताः सूर्य्या द्वादश एव तु ।
आगतावश्विनौ देवौ मोञ्जवन्तं महागिरिम् ॥ ३४
विश्वेदेवाश्च साध्याश्च गुरुश्च तपसान्वितः ।
संह्लाद्यैरावतपथं सहसाभ्याययुर्द्रुतम् ॥ ३५ ।
स्कन्दश्चैव विशाखश्च भगवांश्च विनायकः ।
सम्प्राप्तस्तं गिरिवरं मयूरशतनादितम् ॥ ३६ ।
नारदस्तुम्बुरुश्चैव विश्वावसुपरावसू ।
हाहाहूहूस्तथा चान्ये सर्व्वे गन्धर्व्वसत्तमाः ॥ ३७ ।
वैहायसैर्यानवरैर्विविधैर्वासवाश्रया ।
अनिलश्चानलश्चैव धर्म्मः सत्यो ध्रुवोऽपरः ॥ ३८ ।
देवर्षयश्च सिद्धाश्च यक्षा विद्याधरास्तथा ।

गुह्यकाश्च महात्मानः सर्व्वं एव समागताः ॥ ३९ ।
गन्धकाली घृताची च बुद्दा गौरी तिलोत्तमा ।
उर्व्वशी मेनका रम्भा पञ्चस्था च तथापरा ॥ ४० ।
एताश्चान्याश्च तच्छैलमाजग्मुर्द्देवयोषितः ।
पुलस्त्योऽत्रिर्मरीचिश्च वसिष्ठो भृगुरेव च ॥ ४१ ।
कश्यपः पुलहश्चापि विश्वामित्रोऽथ गौतमः ।
भारद्वाजोऽग्निवेश्यश्च तथा वृद्दपराशरः ॥ ४२ ।
मार्कण्डेयोऽङ्गिरा गर्गः संवर्त्तः क्रतुरेव च ।
मरीचिर्जमदग्निश्च भार्गवश्च्यवनस्तथा ॥ ४३ ।
नियोगान्मम विप्राश्च शक्रस्य त्रिदिवस्पतेः ।
सिन्धुश्च पुरुषश्चैव सरयूश्च महानदी ॥ ४४ ।
ताम्रारुणा चारुभागा वितस्ता कौशिकी तथा ।
पुण्या सरस्वती कोका नर्म्मदा बाहुदा तथा ॥ ४५ ।
शतद्रुश्च विपाशा च गण्डकी च सरिद्वरा ।
गोदावरी च वेणी च तापी च सरिदुत्तमा ॥ ४६ ।
करतोया च शीता च तथा चीरवती नदी ।
नन्दा च परनन्दा च तथा चर्म्मण्वती नदी ॥ ४७ ।
पर्णाशा देविका चैव वितस्ता च तथापरा ।
सिन्धुश्च पुरुषश्चैव प्रभासः सोमएव च ॥ ४८ ।
लोहितश्चाययुस्तत्र* गङ्गासागरएव च ।

* लोहितश्चापयुक्तस्तत्र (क), (ख) ।

अन्यानि चापि मेदिन्यां तीर्थान्यायतनानि च ॥ ४९ ॥
निजस्वरूपाण्याजग्मुस्तत्र पुण्यान्यनेकशः ।
उपागताः सुरेन्द्रस्य नियोगादुत्तमाद्रिरिम् ॥ ५० ॥
शैलोत्तमो महामेरुः कैलासो गन्धमादनः ।
हिमवान्हेमकूटश्च निषधश्च महागिरिः ॥ ५१ ॥
विन्ध्यो महेन्द्रः सह्यश्च मलयो दर्दुरस्तथा ।
माल्यवांश्चित्रकूटश्च तथा द्रोणः शिलोच्चयः ॥ ५२ ॥
श्रीपर्व्वतो लतावेष्टः पारियात्रश्च शैलराट् ।
आगताः सर्व्वएवैते शैलेन्द्राः काननौकसः ॥ ५३ ॥
सर्व्वे यज्ञाः सर्व्वविद्या वेदाश्चत्वार एव च ।
धर्म्मः सत्यं दमः स्वर्गः कपिलश्च महानृषिः ॥ ५४ ॥
वासुकिश्च महाभागः अमृतांशो भुजङ्गराट् ।
ज्वलत्फणसहस्रेण अनन्तश्च धराधरः ॥ ५५ ॥
फणीन्द्रो धृतराष्ट्रश्च किर्म्मीराङ्गश्च नागराट् ।
अर्म्भोधरश्चेशः* श्रीमान्नागराजो महाद्युतिः ॥ ५६ ॥
अर्व्वुदो न्यर्व्वुदवलस्तथा चक्षुःश्रवाधिपः ।
विद्युज्जिह्वो द्विजिह्वेन्द्रः† शङ्खवर्णो महाद्युतिः ॥ ५७ ॥
ख्यातस्त्रिभुवने धीमान्नहुषो निमिषेश्वरः ।
विरोचनसुतः सत्यस्फुटमणिशतैश्चितः ॥ ५८ ॥
फणायतधरो रूपी भूरिशृङ्ग इवाचलः ।
अरिमेजयसंयुक्तः प्रभावान् भुजगेश्वरः ॥ ५९ ॥

* अर्म्भोधरश्च सः इति (ख), (ग) । † विद्युर्न्नधः सुजिह्वेन्द्र इति (ख), (ग) ।

विनतो नागराजश्च कम्बलाश्वतरौ तथा।
भुजगाधिपतिर्वीर एलापत्रस्तथैव च॥ ६०।
उरगानामधिपती कर्कोटकधनञ्जयौ।
एवमाद्याः समायाता भुजगेन्द्रा महाबलाः॥ ६१।
अहोरात्रे तथा पक्षा मासाः संवत्सरास्तथा।
द्यौर्म्मेदिनी दिशश्चैव विदिशश्च समागताः॥ ६२।
ततश्चैवागतैर्द्देवैर्यक्षैः सिद्धैश्च सर्व्वशः।
अपूर्य्यत गिरेः शृङ्गं वेलाकाले यथोदधिः॥ ६३।
तस्मिन्देवसमाजे तु रम्ये शैलेन्द्रमूर्द्धनि।
पुष्पाणि मुमुचुस्तत्र तरवो ह्यनिलार्द्दिताः॥ ६४।
प्रगीता देवगन्धर्व्वाः प्रनृत्ताप्सरसोगणाः।
पक्षिणः सम्प्रहृष्टाश्च कूजन्ति मधुरं तदा॥ ६५।
पुण्यगन्धाः सुखस्पर्शास्तत्र वान्ति च वायवः।
एवमागत्य ते सर्व्वे देवा विष्णुपुरोगमाः॥ ६६।
श्रिया ज्वलन्तन्ददृशुर्नन्दिनं पुरतः स्थितम्।
स च तानागतान्दृष्ट्वा गन्धर्व्वाप्सरसाङ्गणान्॥ ६७।
स हि तान्देवराजेन सार्द्धमन्यैश्च दैवतैः।
मूर्द्ध्ना प्रणम्य चरणौ प्राञ्जलिः प्रयतात्मवान्॥ ६८।
सम्भ्रान्तः सहसा तेभ्यो नमस्कर्त्तुम्प्रचक्रमे।
नमस्कृत्य च तान् सर्व्वान् स्वागतानभिभाष्य च॥ ६९।
अर्घ्यपाद्यादिभिः शीघ्रमासनैश्च न्यमन्त्रयत्।
प्रणिधानेन तस्यार्थं श्रुत्वा तत्प्रतिपूजयेत्॥ ७०।

आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि ।
साध्या विश्वे सगन्धर्व्वा गुह्यकाश्च प्रपूजयेत् ॥ ७१ ।
विश्वावसुर्हाहाहूहू तथा नारदतुम्बुरौ ।
चित्रसेनादयः सर्व्वे गन्धर्व्वास्तमपूजयन् ॥ ७२ ।
तं वासुकिप्रभृतयः पन्नगेन्द्रा महौजसः ।
सौम्यमभ्यर्च्चयन्ति स्म दृष्ट्वा नन्दीश्वरं तथा ॥ ७३ ।
सिद्धचारणसङ्घाश्च विश्वाश्चाप्सरसाङ्गणाः ।
सत्कृतं देवदेवेन गणास्तमभिपूजयन् ॥ ७४ ।
यक्षविद्याधराश्चैव ग्रहाः सागरपर्व्वताः ।
सिद्धा ब्रह्मर्षयश्चैव गङ्गाद्याः सरितस्तथा ।
आशिषः प्रददुस्तस्य सर्व्वे एव मुदान्विताः ॥ ७५ ।

देवा ऊचुः ।

स सुप्रीतोऽस्तु ते* देवः सदा पशुपतिर्मुने ।
सर्व्वत्र चाप्रतिहता गतिश्चास्तु तवानघ ॥ ७६ ।
भवान्देवैस्तु वा न स्यादत ऊर्द्ध्वं द्विजोत्तम ।
निरामयोऽमृतीभूतश्चरिष्यति विभुः सुखी ॥ ७७ ।
लोकेषु सप्तसु विभो त्र्यम्बकेन सहाच्युत ।
इत्युक्तस्त्रिदशैर्नन्दी पुनस्तान् प्रत्युवाच ह ॥ ७८ ।

नन्दिकेश्वर उवाच ।

यष्टवद्भिः प्रियं सर्व्वैः प्रीतिमद्भिः सुरोत्तमैः ।

* सुसुप्रीतोऽस्त्विति (ग) ।

आशिषानुगृहीतोऽस्मि निर्गतोऽहं सदा हि वः॥ ७९।
ब्रूत यूयं किमस्माभिः कर्त्तव्यं भवतामिह।
आज्ञापयध्वमाशस्तस्मादिबुधसत्तमाः।
तस्य तद्वचनं श्रुत्वा शक्रः प्रोवाच तं तदा॥ ८०।

शक्र उवाच।

क्वासौ प्रस्थितो भद्र कुत्र वा स गतोऽपि वा।
पश्यामो विप्र तं सर्व्वे देवानामधिपं विभुम्॥ ८१।
स्थाणुमुग्रं शिवं देवं शर्व्वमेव स्वयं मुने।
यदि जानासि भगवानीश्वरो यत्र तिष्ठति॥ ८२।
तत्स्थानं न समाख्याहि महर्षे शीघ्रमेव हि।
तच्छ्रुत्वा वचनं धीमानीरितं वज्रपाणिना।
प्रत्युवाच ततः शक्रं नन्दी पशुपतिं स्मरन्॥ ८३।

नन्दिकेश्वर उवाच।

श्रोतुमर्हसि देवेन्द्र यथा तत्त्वं दिवस्पते।
अस्मिन् गिरौ मुञ्जवति स्थाणुरभ्यर्च्चितो मया॥ ८४।
प्रीतोऽसौ मां वरैर्दिव्यैरनुगृह्य हरः प्रभुः।
प्रीतो विनिर्गत इतस्तं विद्मातुं बिभेम्यहम्॥ ८५।
यथाज्ञापयसे देव अहं त्वच्छासने स्थितः।
मार्गयामो हि यत्नेन भगवन्तस्तु वासव॥ ८६।

इति वराहपुराणे गोकर्णमाहात्म्ये नन्दिकेश्वरवरप्रदानिको
नाम चतुर्द्दशाधिकद्विशततमोऽध्यायः।

# पञ्चदशाधिकद्विशततमोऽध्यायः ।

ब्रह्मोवाच ।

ततः शक्रः सुरगणैः सह सर्व्वैः समेत्य च ।
बुद्धिञ्चकार गमने मार्गितुं* यत्र शङ्करः ॥ १ ॥
तत उत्थाय ते देवाः सर्व्वे एव शिलोच्चयात् ।
विहायसा ययुः शीघ्रं तेनैव सह नन्दिना ॥ २ ॥
स्वर्लोकं ब्रह्मलोकञ्च नागलोकञ्च सर्व्वशः ।
बभ्रमुस्त्रिदशाः सर्व्वे रुद्रान्वेषणतत्पराः ।
खिन्नाः क्लिष्टाश्च सुभृशं न पुनस्तत्पदं विदुः ॥ ३ ॥
चतुःसमुद्रपर्य्यन्तां सप्तद्वीपवतीं महीम् ।
सशैलकाननोपेतां मार्गयद्भिर्हि तं सुरम्† ।
कन्दरेषु महाद्रीणां तुङ्गेषु शिखरेषु च ।
विततेषु निकुञ्जेषु विहारेषु च सर्व्वतः ।
विचिन्वद्भिः क्षितिमिमां क्षणं द्विविदलीकृतम् ।
न प्रवृत्तिः क्वचिदपि शर्म्भोरासाद्यते सुरैः ॥ ४।५।६ ॥
यदा निर्विण्णमनसो मार्गमाणाः सुरास्तदा ।
न पश्यन्ति शिवं तत्र तद्देषां भयमाविशत् ॥ ७ ॥
भीतास्ते संविदं कृत्वा सञ्चिन्त्य गुरुलाघवम् ।
सम्भूयान्योऽन्यममराः‡ मामेव शरणं ययुः ॥ ८ ॥

---

* मार्गयितुमिति साधु । † सुरमिति ग । ‡ सम्भूतान्योऽन्यममरा सम्भूता यन्योऽन्यममरा इति साधु ।

तमेकाग्रेण मनसा शङ्करं लोकशङ्करम्।
उपायमात्रं दृष्टं मे ध्यायंस्तद्देवभूषणे॥ ९॥
यथा यत्र च सोऽस्माभिर्द्रष्टव्यो वृषभध्वजः।
सर्व्वं त्रैलोक्यमस्माभिर्विचितं वै निरन्तरम्।
श्लेष्मातकवनोद्देशं स्थानं मुक्ता महीतले॥ १०॥
आगच्छध्वं गमिष्यामस्तमुद्देशं सुरोत्तमाः।
इत्येवमुक्ता तैः सर्व्वैस्तामाशां प्रस्थिता वयम्॥ ११॥
तत्क्षणादेव सम्प्राप्ता विमानैः शीघ्रयायिभिः।
श्लेष्मातकवनं पुण्यं सिद्धचारणसेवितम्॥ १२॥
तस्मिन् सुरमणीयानि विविधानि शुचीनि च।
ध्यानस्थानानि रम्याणि बहूनि गुणवन्ति च॥ १३॥
आश्रमारण्यभागेषु दरीणां विवरेषु च।
विभ्राजद्वनराजीका नद्यश्च विमलोदकाः॥ १४॥
सिंहशार्दूलमहिषगोलाङ्गूलर्क्षवानरैः।
नादितं गजयूथैश्च मृगयूथैश्च तद्वनम्।
प्रमुखे वासवङ्कृत्वा विविशुस्ते सुरास्तदा।
विमुच्य रथयानानि पद्भिः सिद्धादिसङ्कटम्।
कन्दरोदरकूटेषु तरुणाङ्गहनेषु च।
सर्व्वदेवमयं रुद्रं मार्गमाणाः शनैः शनैः॥ १५।१६।१७
प्रविशन्तश्च ते देवा वनोद्देशे क्वचिच्छुभे।
कदलीवनसंछन्ने फुल्लपादपशोभिते॥ १८॥
गिरिनद्यास्तु पुलिने हंसकुन्देन्दुसन्निभे।

गन्धामोदेन पुष्पाणां वासितं मधुगन्धिमत् ॥ १९ ।
मुक्ताचूर्णनिकाशाभिर्वालुकाभिस्ततस्ततः ।
विक्रीड़मानां* ददृशुः कन्याङ्गाश्चिन्मनोरमाम् ॥ २०
तत्र ते विबुधा दृष्ट्वा सर्व्वं मां समचोदयन् ।
आद्योऽहं सर्व्वदेवानां कथं मे तद्भवेदिति ॥ २१ ।
मुहूर्त्तं ध्यानमास्थाय विज्ञाता सा मया तदा ।
ध्रुवं शैलेन्द्रपुत्रीयमुमा विश्वेश्वरेश्वरी ॥ २२ ।
ततस्तदुच्चशिखरमारुह्य विबुधेश्वराः ।
अधो विलोक्य ते सर्व्वं ददृशुस्तं सुरोत्तमम् ॥ २३ ।
मध्ये मृगसमूहस्य शोभारमिव संस्थितम् ।
एकशृङ्गैकचरणं तप्तहाटकवर्च्चसम् ॥ २४ ।
चारुवक्त्राचितद्यनं पृष्ठतः शुक्लविन्दुभिः ।
शुक्लेनोदरभागेन राजतेरूपशोभितम् ॥ २५ ।
पीनोन्नतकटिस्कन्धं निमग्नांसशिरोधरम् ।
विम्बोष्ठं ताम्रजिह्वास्यं दंष्ट्राङ्कुरविराजितम् ॥ २६ ।
तं दृष्ट्वा विबुधाः सर्व्वं शिखरात्प्रतिधाविताः ।
सर्व्वोद्यमेन तरसा तं मृगेन्द्रं जिघृक्षवः ॥ २७ ।
शृङ्गाग्रं प्रथमं धृत्वा गृहीत्वा वज्रपाणिना ।
मध्यं मया तस्य तदा गृहीतम्प्रणतात्मना ॥ २८ ।
जग्राह केशवश्चापि मूलं तस्य महात्मनः ।

---

* विक्रीड़मानामिति आर्षं, विक्रीडन्तीमिति साधु ।

त्रिभिरेवं गृहीतन्तु त्रिधा भूतमभज्यत ॥ २९ ।
शक्रस्याग्रं स्थितं हस्ते मध्यं हस्ते मम स्थितम् ।
विष्णोर्मूलं स्थितं हस्ते प्रविभक्तं त्रिधागतम् ॥ ३० ।
शृङ्गस्यैव गृहीतस्य त्रिधास्माकं मृगाधिपः* ।
विषाणरहितस्तस्य† प्रनष्टः पुनरत्र वै ॥ ३१ ।
अन्तर्हितोऽन्तरीक्षस्थः प्रोवाचास्मानुपालभन् ।
भो भो देवा मया यूयं वञ्चमानानवाप्स्यथ‡ ॥ ३२ ।
सशरीरोऽहं युष्माभिर्वशमाप्तः§ प्रगतस्त्वितः ।
शृङ्गमात्रेण सन्तुष्टा भवन्तस्तेन वञ्चिताः ॥ ३३ ।
यद्यहं सशरीरः स्यां गृहीत्वा स्थापितोऽभवम् ।
तदा चतुष्पात्सकलो धर्मः स्यात्प्रतिपादितः ॥ ३४ ।
कामं शृङ्गाणि मेऽत्रैव श्लेष्मातकवनेऽमराः ।
न्यायतः स्थापयिष्यध्वं लोकानुग्रहकाम्यया ॥ ३५ ।
अत्रापि महती व्युष्टिर्भविष्यति न संशयः ।
पुण्यक्षेत्रे सुमहति मत्प्रभावानुभाविते ॥ ३६ ।
यावन्ति भुवि तीर्थानि आसमुद्रसरांसि च ।
क्षेत्रेऽस्मिंस्तानि तीर्थानि आगमिष्यन्ति मत्कृते ॥ ३७ ।
अहं पुनः शैलपतेः पादे हिमवतः शुभे ।

* मराधिप इति (ख), (ग) । † तस्य इत्यस्य न सङ्गतिर्दृश्यते, सोऽय इति कृते तु सङ्गतिः स्यात् । ‡ वाञ्छताम् स्थानवाप्साथ इति कृते तु सम्यक् स्यात् । § न प्राप्त इति (क), (ख) ।

नेपालाख्ये समुत्पन्ने स्वयमेव महीतलात् ॥ ३८ ।
दीप्ततेजोमयशिराःशरीरश्च चतुर्मुखः ।
शरीरेश इति ख्यातः सर्व्वत्र भुवनत्रये ॥ ३९ ।
तत्र नागह्रदे घोरे स्वास्थाम्यन्तर्जले शुभम् ।
त्रिंशद्वर्षसहस्राणि सर्व्वभूतहिते रतः ॥ ४० ।
यदा हृष्णिकुलात्पत्रः लष्णश्चक्रेण पर्व्वतान् ।
पाटयित्वेन्द्रवचनाद्दानवान्निहनिष्यति ॥ ४१ ।
तदा सद्देशो भविता सर्व्वम्लेच्छैरधिष्ठितः ।
ततोऽन्ये सूर्य्यवंशीयाः क्षत्रियास्तान्निहत्य च ॥ ४२ ।
वसिष्यन्ति च तं देशं ब्राह्मणैः सम्प्रवर्त्तितान् ।
धर्म्मान् संस्थापयिष्यन्ति राज्यम्प्राप्स्यन्ति शाश्वतम् ॥ ४३
ततो लिङ्गार्च्चनन्तत्र प्रतिष्ठास्यन्ति पार्थिवाः ।
क्षत्रियाः सूर्य्यवंशीयाः शून्ये लप्स्यन्ति मां नृपाः ॥ ४४ ।
ततो जनपदस्तत्र भविष्यति महांस्तदा ।
स्फीतो ब्राह्मणभूयिष्ठं सर्व्ववर्णाश्रमैर्युतः ॥ ४५ ।
सम्यक्प्रवृत्ता राजानो भविष्यन्त्याश्रतो स्थिताः ।
एवं सम्यक्स्थिते तस्मिन्देशे पौरजने तथा ॥ ४६ ।
तत्र मामर्च्चयिष्यन्ति सर्व्वभूतानि सर्व्वदा ।
तत्राहं यैः सकृद्दृष्टो विधिवद्वन्दितस्तु यैः ।
गत्वा शिवपुरं ते मां द्रक्ष्यन्ते दग्धकिल्बिषाः ॥ ४७ ।
उत्तरेण तु गङ्गाया दक्षिणे चाश्विनीमुखात् ।
क्षेत्रं हि मम तच्छ्रेयं योजनानि चतुर्द्दश ॥ ४८ ।

हिमाद्रेश्शृङ्गशिखरात्प्रोद्भूता वाग्मती नदी।
भागीरथ्याः शतगुणम्पवित्रं तज्जलं स्मृतम्॥ ४९।
तत्र स्नात्वा हरेर्लोकानुपस्पृश्य दिवस्पतेः।
मुक्त्वा देहं नरा यान्ति मम लोकं न संशयः॥ ५०।
अपि दुष्कृतकर्म्माणः क्षेत्रेऽस्मिन्निवसन्ति ये।
नियतं पुरुहूतस्य श्रिताः स्थाने वसन्ति ते॥ ५१।
देवदानवगन्धर्व्वाः सिद्धविद्याधरोरगाः।
मुनयोऽप्सरसो यत्रा मोहिता मम मायया।
तद्वै गुह्यं न जानन्ति यत्र सन्निहितो ह्यहम्।
तपस्तपोधनानाञ्च सिद्धक्षेत्रं हि तत्स्मृतम्॥ ५२।५३।
प्रभासाच्च प्रयागाच्च नैमिषात्पुष्करादपि।
कुरुक्षेत्रादपि बुधाः क्षेत्रमेतद्विशिष्यते॥ ५४।
श्वशुरो मे स्थितो यत्र हिमवान् भूधरेश्वरः।
प्रभवन्ति यतः सर्व्वा गङ्गाद्याः सरितां वराः॥ ५५।
तस्मिन् क्षेत्रवरे पुण्ये पुण्याः सर्व्वाः सरिद्वराः।
सर्व्वे प्रस्रवणाः पुण्याः सर्व्वे पुण्याः शिलोच्चयाः॥ ५६।
आश्रमस्तत्र भविता सिद्धचारणसेवितः।
शैलेश्वर इति ख्यातः शरीरं यत्र मे स्थितम्॥ ५७।
स्रवन्तीनां वरा पुण्या वाग्मती पर्व्वतोत्तमात्।
भागीरथी वेगवती कलुषं हरते नृणाम्॥ ५८।
कीर्त्तनादेव संशुद्धे दर्शनाद्भूतिमाप्नोति।
पानावगाहनात्तस्यास्तारयेत्सप्त वै कुलान्॥ ५९।

लोकपालनम् चरति तीर्थव्यातिम तत्स्वयम ।
तत्र स्नात्वा दिवं यान्ति मृतास्ते त्वपुनर्भवा: ॥ ६० ।
स्नात्वा स्नात्वा तु ये तत्र नित्यमभ्यर्च्चयन्ति माम् ।
उद्धराम्यहमेतान्वै प्रीत: संसारसागरात् ॥ ६१ ।
यस्तस्या वारिणा पूर्णमेकञ्च घटमुद्धरेत् ।
स्नापनार्थे मम शुचि: श्रद्दधानो नसूयक: ।
वेदवेदाङ्गविदुपा श्रोत्रियेण विशेषत: ।
आहूतस्याग्निर्होत्रस्य यत्फलं तस्य तद्भवेत् ॥ ६२।६३ ।
तस्यास्तीरे जलोद्भिदं मन्मूलादभिनि:सृतम् ।
मृगशृङ्गोदकं नाम नित्यं मुनिजनप्रियम् ।
तत्राभिषेकं कुर्व्वीत उपस्पृश्य समाहित: ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥ ६४।६५ ।
तीर्थं पञ्चनदम्प्राप्य पुण्यं ब्रह्मर्षिसेवितम् ।
अग्निष्टोमफलं तत्र स्नातमात्र: प्रपद्यते ॥ ६६ ।
षष्टिं धनुसहस्राणि* यानि रक्षन्ति वाग्मतीम् ।
न तां पापा: कृतघ्ना वा कदाचित्प्राप्नुयान्नर: ॥ ६७ ।
शुचय: श्रद्धानाश्च सत्यसन्धाश्च ये नरा: ।
वाग्मत्यां ते नरा: स्नान्ति लभन्ते चोत्तमां गतिम् ॥ ६८ ।
आर्त्ता भीताश्च सन्तप्ता† व्याधितोऽव्याधितोऽपि वा ।
वाग्मत्या: सलिले स्नात्वा ये मां पश्यन्ति संस्कृता: ।

* षष्टिधनु:सहस्राणीति ग) । † मातापिताश्च सन्तप्ता इति (क, (ख) ।

तेषां शान्तिर्भवेन्नित्यं पुरुषाणां न संशयः॥ ६८ ।
तत्प्रभावात्तु स्नातस्य* सर्व्वं नश्यति किल्बिषम् ।
ईतयः समुदीर्णापि† प्रशमं यान्ति सर्व्वशः॥ ७० ।
वाग्मत्याः सलिले स्नात्वा ये मां पश्यन्ति संस्कृताः ।
वाग्मती सरितां श्रेष्ठा यत्र यत्राऽवगाह्यते ।
तत्र तत्र फलं दद्याद्राजसूयाश्वमेधयोः॥ ७१ ।
योजनाभ्यन्तरञ्चैवं समन्तात्सर्व्वतो दिशम् ।
मूलक्षेत्रन्तु विज्ञेयं रुद्रेणाधिष्ठितं स्वयम्॥ ७२ ।
तत्र पूर्व्वोत्तरे पार्श्वे वासुकिर्नाम नागराट् ।
वृतो नागसहस्रैस्तु द्वारि तिष्ठति मे सदा॥ ७३ ।
स विघ्नङ्कुरुते नृणां तत्क्षेत्रं विशतां सदा ।
प्रथमं स नमस्कार्य्यस्ततोऽहं तदनन्तरम् ।
अनेन विधिना पुंसामविघ्नं विशतां भवेत्॥ ७४ ।
वन्दते परया भक्त्या यो मां तत्र नरः सदा ।
पृथिव्यां स भवेद्राजा सर्व्वलोकनमस्कृतः॥ ७५ ।
गन्धैर्माल्यैश्च मे मूर्त्तिमभ्यर्च्चयति यो नरः ।
उत्पत्स्यते स देवेषु तुषितेषु न संशयः॥ ७६ ।
यस्तु दद्यात्प्रदीपं मे‡ पर्व्वते श्रद्धयान्वितः ।
सूर्य्यप्रभेषु देवेषु तस्योत्पत्तिर्विधीयते॥ ७७ ।

* अत्र छन्दोदोषः। † समुदीर्णा अपीति साधु। ‡ यस्तूला त्वत्प्रदीपं मे इति (ग)।

गीतवादित्रनृत्यैस्तु स्तुतिभिर्जागरेण वा ।
ये मे कुर्व्वन्ति सेवां वै मत्संस्थास्ते भवन्ति हि ॥ ७८ ।
दध्ना क्षीरेण मधुना सर्पिषा सलिलेन वा ।
स्नापनं ये प्रयच्छन्ति ते तरन्ति जरान्तकौ ॥ ७९ ।
यः श्राद्धे भोजनं दद्याद्विप्रेभ्यः श्रद्धयान्वितः ।
सोऽमृताशी भवेन्नूनं त्रिदिवे सुरपूजितः ॥ ८० ।
व्रतोपवासैर्होमैर्वा नैवेद्यैश्चाक्षभिस्तथा ।
यजन्ते ब्राह्मणा ये मां परया श्रद्धयान्विताः ॥ ८१ ।
षष्टिवर्षसहस्राणि उषित्वा दिवि ते ततः ।
ऐश्वर्य्यम्प्रतिपद्यन्ते मर्त्यलोके पुनः पुनः ॥ ८२ ।
ब्राह्मणः क्षत्रियोवैश्यः शूद्रः स्त्री वापि सङ्गताः ।
शैलेश्वरन्तु तत्स्थानं भक्तितः समुपासते ।
मत्पार्षदास्ते जायन्ते सततं सत्कृताः सुरैः ॥ ८३ ।
शैलेश्वरम्परङ्गुह्यं* गतिः शैलेश्वरः परा ।
शैलेश्वरात्परं क्षेत्रं न क्वचिद्भुवि विद्यते ॥ ८४ ।
ब्रह्महा गुरुहा गोघ्नः स्पृष्टो वै सर्व्वपातकैः ।
क्षेत्रमेतदनुप्राप्य निर्म्मलो जायते नरः ॥ ८५ ।
विविधान्यत्र तीर्थानि सन्ति पुण्यानि देवताः ।
येषान्तोयैर्नरः स्पृष्टः सर्व्वपापैः प्रमुच्यते ॥ ८६ ।
क्रोशं क्रोशं सुरैरूपं संहृत्य तत्र निर्म्मितम् ।

---

* शैलेश्वरः परो गुह्य इति साधु ।

तीर्थं कोकामोदकं नाम पुण्यं मुनिजनप्रियम् ।
तत्र स्नात्वा शुचिर्दान्तः सत्यसन्धो जितेन्द्रियः ।
विमुक्तः किल्बिषैः सर्व्वैः सर्व्वमेव फलं लभेत्* ॥ ८७।८८ ।
अनाशकं व्रजेद्यस्तु दक्षिणेन महात्मनः ।
शैलेश्वरस्य पुरुषः स गच्छेत्परमाकृतिम् ॥ ८९ ।
भृगुप्रपतनङ्कृत्वा† कामक्रोधविवर्ज्जितः ।
विमानेन दिवङ्गच्छेद्वृतः सोऽप्सरसाङ्गणैः ॥ ९० ।
भृगुमूले परं तीर्थं ब्रह्मणा निर्म्मितं स्वयम् ।
ब्रह्मोद्भेदेति‡ विख्यातं तस्यापि शृणु यत्फलम् ॥ ९१ ।
संवत्सरन्तु यस्तत्र स्नाति नियतेन्द्रियः ।
स ब्रह्मलोके विरजे गच्छते§ नात्र संशयः ॥ ९२ ।
तत्र गोरक्षकं नाम गोवृषः पदविक्षतम् ।
दृष्ट्वा च तानि हि पुमान् गोसहस्रफलं लभेत् ॥ ९३ ।
गौर्य्यास्तु शिखरं तत्र गच्छेत्सिद्धनिषेवितम् ।
यत्र सन्निहिता नित्यं पार्व्वती शिखरप्रिया ॥ ९४ ।
लोकमाता भगवती लोकरक्षार्थमुद्यता ।
तस्याः सालोक्यमायाति दृष्ट्वा स्पृष्ट्वाभिवाद्य च ॥ ९५ ।
त्यजते¶ पतितुं तस्या अधस्ताद्दाम्मतीतटे ।
उमालोके व्रजेदाशु विमानेन विहायसा ॥ ९६ ।
स्नानकुण्डे उमायास्तु यः स्नायात्खलु मानवः ।

* लभेतेति साधु, एवं परत्रापि । † भृगुप्रपतनं कृत्वेति क्वचित्पाठः । ‡ ब्रह्मोद्भेद-इति साधु । § गच्छतीति साधु । ¶ त्यजतीति साधु ।

स्कन्दलोकमवाप्नोति भूत्वा वैश्वानरद्युतिः ॥ ९७ ।
तीर्थं पञ्चनदम्प्राप्य पुण्यं ब्रह्मर्षिसेवितम् ।
अग्निहोत्रफलं तत्र स्नानमात्रेण लभ्यते ॥ ९८ ।
नकुलीशं नमतिमान्* स्नपयेत्प्रयतात्मवान् ।
जातिस्मरः स तु भवेत्सिध्यते† चास्य मानसम् ॥ ९९ ।
तस्यैवोत्तरतस्तीर्थमपरं सिद्धसेवितम् ।
नाम्ना प्राप्तकपानीयं गुह्यं गुह्यकरक्षितम् ॥ १०० ।
संवत्सरं यस्तु पूर्णं तत्र स्नायान्नरः सदा ।
गुह्यकः स भवेदाशु रुद्रस्यानुचरः सुधीः ॥ १०१ ।
देव्याः शिखरवासिन्या ज्ञेयं पूर्व्वोत्तरेण वै ।
दक्षिणेन तु वाग्मत्याः प्रस्तुतञ्चन्दरोदरात् ।
तीर्थं ब्रह्मोदयं नाम पुण्यम्पापप्रणाशनम् ॥ १०२ ।
तत्र गत्वा जलं स्पृष्ट्वा स्नात्वा चाभ्युक्ष्य मानवः ।
मृत्युलोकं न पश्येत‡ कृच्छ्रेषु च न सीदति ॥ १०३ ।
गत्वा सुन्दरिकातीर्थं विधिना तीर्थमादिमम् ।
तत्र स्नात्वा भवेत्तोये रूपवानुत्तमद्युतिः ॥ १०४ ।
त्रिसन्ध्यं तत्र गच्छेत§ पूर्व्वेण विधिवन्नरः ।
तत्र सन्ध्यामुपासित्वा¶ द्विजोमुच्येत किल्बिषात् ॥ १०
वाग्मत्या मणिवत्याश्च सम्भेदे पापनाशने ।
अहोरात्रं वसेद्यस्तु रुद्रजापी|| द्विजः शुचिः ॥ १०६ ।

---

* नकुलीशमप्रतिमामिति (क, ख) । † सिद्धातीति साधु । ‡ न पश्यदिति ।
§ गच्छेदिति साधु, एवं परत्रापि । ¶ उपास्येति साधु । || रुद्रयाजीति क।

स भवेद्वेदविद्विद्वान् यज्वा पार्थिवपूजितः।
तारितश्च कुलं तेन सर्व्वं भवति साधुना॥ १०७।
वर्णावरोऽपि यः कश्चित्स्नात्वा दद्यात्तिलोदकम्।
तर्पिताः पितरस्तेन भवेयुर्नात्र संशयः॥ १०८।
यत्र यत्र च वाग्मत्यां स्नाति वै मानवोत्तमः।
तिर्य्यग्योनिं न गच्छेत समृद्धे जायते कुले॥ १०९।
वाग्मतीमणिवत्योश्च* सम्भेदो ऋषिसेवितः।
धीमाग्गच्छेत् विधिना कामक्रोधविवर्ज्जितः॥ ११०।
गङ्गाद्वारे तु यत्प्रोक्तं स्नानपुण्यफलं महत्।
स्नानस्य तद्दशगुणं भवेदत्र न संशयः॥ १११।
अत्र विद्याधराः सिद्धा गन्धर्व्वामुनयः सुराः।
स्नानमेतदुपासन्ते† यक्षाश्च भुजगैः सह॥ ११२।
स्वल्पमप्यत्र यत्किञ्चिद्विजेभ्यो दीयते धनम्।
तदक्षय्यं भवेद्दातुर्दानपुण्यफलं महत्॥ ११३।
तस्मात्सर्व्वप्रयत्नेन करणीयश्च देवताः।
वरिष्ठं क्षेत्रमेतस्मान्नान्यदेव हि विद्यते॥ ११४।
तस्मिन् श्लेष्मातकवने पुण्ये त्रिदशसेविते।
यत्र यत्र मया देवाश्चरता मृगरूपिणा॥ ११५।
आसितं स्वपितं यातं विहृतं वा समन्ततः।

* मणिवत्याश्चेति प्रायः सार्व्वत्रिकः पाठः। † उपासते इति साधु, स्नानमेकमुपासते इत्येवं कृते तु सुसङ्गतं भवति।

तत्र तथाभवत्सर्व्वं पुण्यक्षेत्रं च सर्व्वशः ॥ ११६।११७

शृङ्गमेतत्त्रिधाभूतं सम्यक् सुश्रूयतां नराः* ।
गोकर्णेश्वर इत्येतत्पृथिव्यां ख्यातिमेष्यति ॥ ११८ ।

एवं सन्दिश्य विबुधान्देवदेवः सनातनः ।
अदृश्य एव विबुधैः प्रययावुत्तरां दिशम्† ॥ ११९ ।

इति वराहपुराणे भगवच्छास्त्रे भगवद्गोकर्णेश्वर
माहात्म्ये जलेश्वरमाहात्म्यवर्णनो नाम
पञ्चदशाधिकद्विशततमोऽध्यायः ।

## षोड़शाधिकद्विशततमोऽध्यायः ।

ब्रह्मोवाच ।

तस्मात्स्थानादपक्रान्ते त्र्यम्बके* मृगरूपिणि ।
अन्योऽन्यं मन्त्रयित्वा तु मया सह सुरोत्तमाः ॥ १ ।

त्रिधाविभक्तं तच्छृङ्गं पृथक्पृथगवस्थितम् ।
सम्यक्स्थापयितुं देवा विधिदृष्टेन कर्म्मणा ।
स्थापितं दिवि नीत्वा वै शृङ्गाग्रं वज्रपाणिना ॥ २ ।

---

* अमरा इति भाष्य । † प्रयातश्चोत्तरां दिशमिति (ग) ।

---

* त्र्यम्बके इति (क, ख) ।

मया तत्रैव तन्मध्यं स्थापितं विधिवत्प्रभोः ॥ ३ ।
देवैर्देवर्षिभिश्चैव सिद्धैर्ब्रह्मर्षिभिस्तथा ।
गोकर्ण इति विख्यातिः* जाता वैशेषिकी वरा ॥ ४ ।
विष्णुना देवतीर्थेन तन्मूलं स्थापितं ततः ।
तस्य शृङ्गेश्वर इति नाम तत्राभवन्महत् ॥ ५ ।
तत्र तत्रैव भगवांस्तस्मिन् शृङ्गे त्रिधा स्थिते ।
सान्निध्यङ्कल्पयामास भागेनैकेन सौम्मनाः† ॥ ६ ।
शतं तेन तु भागानामात्मनो निहितं मृगे ।
तस्माद्विकन्तु भागानां शृङ्गाणां त्रितये न्यधात् ॥ ७ ।
मार्गेण तच्छरीरेण निर्य्याय भगवान्विभुः ।
शेषशिरस्य गिरेः पादं प्रपेदे स्वयमात्मनः ॥ ८ ।
शतसंख्या स्मृता व्युष्टिस्तस्मिञ्छैलेश्वरे विभोः ।
त्रिधाविभक्ते शृङ्गेऽस्मिन्नेकाग्रगतिनि प्रभोः ९ ।
ततः सुरासुरगुरुर्देवभूतमहेश्वरम् ।
तपसाशेषेण संसेव्य वव्रिरे‡ विविधान्वरान् ॥ १० ।
देवदानवगन्धर्व्वाः सिद्धयक्षमहोरगाः ।
शेषातकवनकृत्स्नं सर्व्वतः परिमण्डलम् ।
तीर्थयात्रां पुरस्कृत्य प्रादक्षिण्यस्य चक्रतुः§ ॥ ११ ।
फलान्निर्दिश्यशा तीर्थानां तथा क्षेत्रफलं महत् ।

---

* विख्याता इति (क) । † सौम्मना इति आर्षं, स उन्मना इति साधु । ‡ वव्रिरे इति आर्षं, वव्रे इति साधु । § चक्रतुरिति आर्षं, चक्रुरिति साधु । ¶ फलान्निर्दिश्य इति आर्षं, फलानि निर्दिश्य इति साधु ।

यथास्थानानि ते तस्मात्विद्रुताश्च सुरादयः ।
एवं तस्मात्विद्रुतेषु दैवतेषु तदा ततः ।
पौलस्त्यो रावणो नाम भ्रातृभिः सह राक्षसैः ।
आगम्यो येन तपसा देवमाराधयद्विभुम् ।
शुश्रूषया च परया गोकर्णेश्वरमव्ययम् ॥ १२।१३।१४ ।
यदा तु तस्य तुष्टो वै वरदः शङ्करः स्वयम् ।
तदा त्रैलोक्यविजयं वरं वव्रे स राक्षसः ॥ १५ ।
प्रसादात्तस्य तत्सर्वं वाञ्छितं मनसा हि यत् ।
अवाप्य च दशग्रीवस्तदिष्टं परमेश्वरात् ।
त्रैलोक्यविजयायाशु तत्क्षणादेव निर्ययौ ॥ १६ ।
त्रैलोक्यं स विनिर्ज्जित्य शक्रञ्च त्रिदशाधिपम् ।
तदुत्पाट्यानयामास पुत्रेणेन्द्रजिता सह ॥ १७ ।
शृङ्गाग्रं* यत्पुरा नीत्वा स्थापितं वज्रपाणिना ।
तदुत्पाट्यानयामास पुत्रेणेन्द्रजिता सह ॥ १८ ।
तथावद्रावणः स्थाप्य† मुहूर्त्तमुदधेस्तटे ।
सन्ध्यामुपासते तत्र लग्नस्तावदसौ भुवि ॥ १९ ।
न शशाक यदा रक्षस्तदुत्पाटयितुं बलात् ।
वज्रकल्पं समुत्सृज्य तदा लङ्कां विनिर्ययौ ॥ २० ।
स तु दक्षिणगोकर्णो विश्रुयस्ते महामते ।
स्वयम्प्रतिष्ठितस्तत्र स्वयम्भूतपतिः शिवः ॥ २१ ।

---

* शृङ्गाग्रमित्यारभ्य उदधेस्तटे इत्यन्तः पाठः (ख) पुस्तके नास्ति । † स्थापयित्वेति साधु ।

एतत्ते कथितं सर्व्वं मया विस्तरतो मुने ।
यथावदुत्तरस्तस्य गोकर्णस्य* महात्मनः ॥ २२ ।
दक्षिणस्य च विप्रर्षे तथा शृङ्गेश्वरस्य च ।
शैलेश्वरस्य च विभो स्थित्युत्पत्तिर्यथाक्रमम् ॥ २३ ।
व्युष्टिः चैतस्य महती तीर्थानाञ्च समुद्भवः ।
श्रोक्तं सर्व्वं मया वत्स किमन्यच्छ्रोतुमिच्छसि ॥ २४ ।

इति वराहपुराणे गोकर्णशृङ्गेश्वरादीनां माहात्म्यं नाम
षोडशाधिकद्विशततमोऽध्यायः ।

## सप्तदशाधिकद्विशततमोऽध्यायः ।

सनत्कुमार उवाच ।

उक्तं भगवता सर्व्वं यथावत्परमेष्ठिना ।
दृष्टेन संशयं सम्यक् परङ्कृत्वार्थनिश्चयम् ॥ १ ।
भगवद्विश्वरूपस्य स्थाणोरप्रतिमौजसः ।
क्रीड़तो लोकनाथस्य कानने मृगरूपिणः ॥ २ ।
यथा शरीरं शृङ्गस्य पुण्यक्षेत्रे प्रतिष्ठितम् ।
हिताय जगतस्तत्र तीर्थानि च यथाभवन् ।
तन्मे ब्रूहि महाभाग यथातत्त्वं जगत्पते ॥ ३ ।

* उत्तरस्यैवेति क्वचित् चेत्साकृतं भवेत् ।

ब्रह्मोवाच ।

पुलस्त्यो वक्ष्यते शेषं यदतोऽन्यम्महामने ।
सर्व्वेषामेव तीर्थानामेषां फलविनिश्चयम् ॥ ४ ।
कुरुराज्यं पुरस्कृत्य मुनीनां पुरतो वने ।
पृष्टो मे सत्तमः सम्यग्वेदवेदाङ्गतत्त्ववित् ॥ ५ ।
यच्छ्रुत्वा पुरुषस्तात विमुक्तः सर्व्वकिल्बिषैः ।
यशस्वी कीर्त्तिमान्भूत्वा वर्त्स्यते* प्रेत्य चेह च ॥ ६ ।
श्रोतव्यमेतत्सततं† चातुर्वर्ण्यैः सुसंयतैः ।
मङ्गल्यञ्च शिवञ्चैव धर्म्मकामार्थसाधकम् ॥ ७ ।
श्रीभूतिजननं पुण्यं‡मायुष्यं विजयावहम् ।
धन्यं यशस्यं स्वर्ग्गीयं पापघ्नं शान्तिकारकम् ॥ ८ ।
श्रुत्वैवं पुरुषः सम्यङ् दुर्गतिमवाप्नुयात् ।
कीर्त्तयित्वा व्रजेत्स्वर्गङ्कल्यमुत्थाय मानवः ॥ ९ ।

सूत उवाच ।

इत्युक्त्वा भगवान्देवः परमेष्ठी प्रजापतिः ।
सनत्कुमारं सन्दिश्य विरराम महायशाः ॥ १० ।
एतद्वः कथितं सर्व्वं मया तत्त्वेन सत्तमाः ।
वराहभूमिसंवादं सारमुद्धृत्य सत्तमाः ॥ ११ ।
यश्चैव कीर्त्तयेन्नित्यं शृणुयाद्वापि भक्तितः ।
सर्व्वपापविनिर्म्मुक्तः स याति परमाङ्गतिम् ॥ १२ ।

* नन्दते इति ग) । † एतत्सकलं इति (ग), (घ । ‡ मेधामिति (ख), (घ

प्रभासे नैमिषारण्ये गङ्गाद्वारेऽथ पुष्करे।
प्रयागे ब्रह्मतीर्थे च तीर्थे चामरकण्टके॥ १३॥
यत्पुण्यफलमाप्नोति तत्कोटिगुणितं भवेत्।
कपिलां द्विजमुख्याय सम्यग्दत्त्वा तु यत्फलम्॥१४॥
प्राप्नोति सकलं श्रुत्वा अध्यायन्तु न संशयः।
श्रुत्वाऽस्यैव दशाध्यायं शुचिर्भूत्वा समाहितः॥ १५॥
अग्निष्टोमातिरात्राभ्यां फलम्प्राप्नोति मानवः।
यः पुनः सततं शृणुयान्नैरन्तर्य्येण बुद्धिमान्॥ १६॥
पारयेत्परया भक्त्या तस्यापि शृणु यत्फलम्;
सर्व्वयज्ञेषु यत्पुण्यं सर्व्वदानेषु यत्फलम्॥
सर्व्वतीर्थाभिषेकेन यत्फलं मुनिभिः स्मृतम्।
तत्प्राप्नोति न सन्देहो वराहवचनं यथा॥ १७ १८।
यदेतत्पारयेद्भक्त्या मम माहात्म्यमुत्तमम्।
अपुत्त्रस्य भवेत्पुत्त्रः सपुत्त्रस्य सुपुत्त्रकः॥ १९॥
यस्येदं लिखितङ्गेहे तिष्ठत* पूज्यते सदा।
तस्य नारायणो देवः सन्तुष्टः स्याद्धि सर्व्वदा॥ २०॥
यश्चैतच्छृणुयाद्भक्त्या नैरन्तर्य्येण मानवः।
श्रुत्वा तु पूजयेच्छास्त्रं यथा विष्णुं सनातनम्॥ २१॥
गन्धपुष्पैस्तथा वस्त्रैर्ब्राह्मणानाञ्च तर्पणैः।
यथाशक्त्या नृपो ग्रामैः† पूजयेच्च वसुन्धरे॥ २२॥

---

* तिष्ठतीति साधु। † ग्रासैरिति (क)।

श्रुत्वा तु पूजयेद्यस्तु पौराणं नियतः शुचिः ।
सर्व्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ २२ ॥

इति वराहपुराणे भगवच्छास्त्रे धरणीवराहसंवादे फलश्रुतिर्नाम
सप्तदशाधिकद्विशततमोऽध्यायः ।

## अष्टादशाधिकद्विशततमोऽध्यायः ।

त्रिःसप्तषट्चितिमितं नृपविक्रमस्य
काले गते भगवता हरिबोधनस्य ।
वीरेश्वरेण सह माधवभट्टनाम्ना
काश्यां वराहकथितं लिखितं पुराणम् ॥ १ ॥
काशीविश्वेश्वराभ्यां नमः ।*

वराहस्य पुराणस्य वृत्तान्तान्प्रब्रवीम्यहम् ।
आदौ सम्बन्धकथनं वृत्तान्तश्चादिकर्म्मकः ॥ २ ॥
आदिसृष्टिस्ततः प्रोक्ता चरितं दुर्ज्जनस्य च ।
वृत्तान्तोद्देशभागश्च† श्राद्धकल्पस्ततः परम् ॥ ३ ॥
आदि‡वृत्तान्तकथने सरमाख्यानमेव च ।
महातपोपाख्यानञ्च§ अग्न्युत्पत्तिस्ततः परम् ॥ ४ ॥

* एष पाठः (ग) पुस्तके नास्ति ।　　† द्वैपभागवति (ख) ।
‡ आदौ व्याघ्रव्याम्युत्पत्तिस्ततः परमित्यन्तः सन्दर्भः (ख), (ग) पुस्तकयोर्नास्ति ।
§ महातप उपाख्यानमिति साधु ।

अश्विनोरपि चोत्पत्तिर्गौर्य्युत्पत्तिस्तथैव च ।
विनायकस्य चोत्पत्तिर्नागोत्पत्तिस्तथैव च ॥ ५ ।
स्कन्दोत्पत्तिश्च भानोश्च उत्पत्तिः समुदाहृता ।
कामादीनां तथोत्पत्तिः देव्युत्पत्तिस्तथैव च ॥ ६ ।
धनदस्य तथोत्पत्तिः परापरविनिर्णयः ।
धर्म्मोत्पत्तिस्तथोत्पत्ती रुद्रस्य च ततः स्मृता ॥ ७ ।
सोमोत्पत्तिरहस्यञ्च चितयापि समासतः ।
उक्तः प्रागितिहासश्च व्याधोपाख्यानमेव च ॥ ८ ।
ततः सत्यतपोपाख्या* मत्स्यद्वादशिका तथा ।
कूर्म्मद्वादशिका चापि वराहद्वादशी तथा ॥ ९ ।
नृसिंहद्वादशी चापि वामनद्वादशी तथा ।
भार्गवद्वादशी चापि श्रीरामद्वादशी तथा ॥ १० ।
कृष्णद्वादशिका चापि बुद्धद्वादशिका तथा ।
कल्किद्वादशिका चापि पद्मनाभस्य द्वादशी ॥ ११ ।
धरणीव्रतं ततः† प्रोक्तङ्गीतागस्त्यस्य चोत्तमा ।
पशुपालस्य चाख्यानं भर्त्तृप्राप्तिव्रतं तथा ॥ १२ ।
शुभव्रतं धन्यव्रतं कान्तिव्रतमतः स्मृतम् ।
सौभाग्यव्रतमाख्यातमविघ्नव्रतमेव च ॥ १३ ।
शान्तिव्रतङ्कामव्रतमारोग्यव्रतमेव च ।
पुत्त्रप्राप्तिव्रतं शौर्य्यव्रतं वै सार्व्वभौमिकम् ॥ १४ ।

* सत्यतप उपाख्या इति साधु । † पादेऽस्मिन् छन्दोदोष एकाक्षराधिक्यात् ।

पुराणस्तवनञ्चैव नारायणेश्वरेण च ।
रुद्रगीता ततः पुंसां प्रकृतेश्चापि निर्णयः ॥ १५ ।
ततो भुवनकोषस्य वर्णनं समुदाहृतम् ।
जम्बूद्वीपस्य मर्य्यादावर्णनं परिकीर्त्तितम् ॥ १६ ।
भरतादिसमुद्देशः सृष्टिसम्भाग एव च ।
नारदस्य च संवादो महिषेण प्रकीर्त्तितः ॥ १७ ।
शक्तिमाहात्म्यकथनं महिषासुरघातनम् ।
रुद्रमाहात्म्यकथनं पर्व्वाध्यायस्ततः परम् * ॥ १८ ।
श्वेतोपाख्यानमन्त्रोक्तं तिलधेनुविधिस्ततः ।
जलधेनूरसधेनुर्गुड़धेनुस्ततः परम् ॥ १९ ।
ततश्च शर्कराधेनुर्मधुधेनुस्ततः परम् † ।
दधिधेनुश्च लवणधेनुः कार्पासधेनुका ॥ २० ।
धान्यधेनुश्च भगवच्छास्त्रलक्षणमेव च ।
विष्णुस्तोत्रं ततो नाना प्रश्नाः प्रोक्ता हरिम्प्रति ॥ २१
ततो भागवतानाञ्च लक्षणम्परिकीर्त्तितम् ।
लक्षणं सुखदुःखानां द्वात्रिंशदपराधकाः ॥ २२ ।
नानामन्त्रास्ततः प्रोक्ता देवोपकरणे विधिः ।
भोज्याभोज्यस्य कथनं सन्ध्योपस्थानकारणम् ॥ २३ ।
वियोगिगर्भमोक्षश्च कोकामुखप्रशंसनम् ‡ ।

* पूर्व्वाध्याय इति (ग) । † एतदर्द्धं (ग) पुस्तकेऽष्टादशश्लोकादनन्तरं विद्यते । पर्व्वेति
‡ प्रसंशनमिति (ग) ।

भगवच्छास्त्रकथने माहात्म्यं पुष्पगन्धयोः ॥ २४ ।
रूपकारणमप्युक्तं मायाचक्रं ततः परम् ।
कुशात्मकस्य माहात्म्यं वर्णदीनां ततः परम् ॥ २५ ।
कङ्कताञ्जनदर्पाणां मन्त्राः प्रोक्तास्ततः परम् ।
राजान्नभक्षणे प्रायश्चित्तम्प्रोक्तं ततः परम् ॥ २६ ।
दन्तकाष्ठाद्यकरणे प्रायश्चित्तं ततः परम् ।
शवादिस्पर्शने मन्त्रत्यागे चोक्तं ततः परम् ॥ २७ ।
नीलवस्त्रपरिधाने क्रोधयुक्तस्य चार्चने ।
रक्तवस्त्रपरिधाने अन्धकारे प्रपूजने ॥ २८ ।
कृष्णवस्त्रपरिधाने धौतवस्त्रस्य धारणे ।
क्रोडादिमांसभक्ते च प्रायश्चित्तम्प्रकीर्त्तितम् ॥ २९ ।
दीपोच्छिष्टस्य तैलस्य करलेपेन पूजने ।
श्मशानगमने स्पृष्टपूजने चैव शोधने ॥ ३० ।
पिण्याकभक्षणे चैव उपानद्गूढ़पादके* ।
भगवच्छास्त्रविहिताकरणे शोधने ततः ॥ ३१ ।
शूकरक्षेत्र महिमा ततो जम्बूकरण्टधर्म्याः ।
खञ्जरीटस्य चाख्यानं पुनः कोकामुखस्य च ॥ ३२ ।
बदरीखण्डमाहात्म्यं गुह्यधर्म्मप्रकीर्त्तनम् ।
मन्दारगुह्यमहिमा शालग्रामप्रशंसनम् ॥ ३३ ।
सोमेश्वरस्य महिमा मुक्तिक्षेत्रस्य चापि हि ।

* उपानद्गूढ़पादपे इति (ग)

त्रिवेण्याश्चैव माहात्म्यं माहात्म्यञ्चण्डकीभवम् ॥ ३४ ।
चक्रतीर्थस्य महिमा हरिक्षेत्रसमुद्भवः ।
देवह्रदस्य चाख्यानं रुरुक्षेत्रस्य चापि हि ॥ ३५ ।
गोनिष्क्रमस्य महिमा द्वारवत्यास्ततः परम् ।
तत्रत्यतीर्थमहिमा लोहार्गलमतः परम् ॥ ३६ ।
मथुरातीर्थमाहात्म्यं प्रादुर्भावस्तथैव च ।
यमुनातीर्थमाहात्म्यमक्रूरस्य च तीर्थकम्* ॥ ३७ ।
देवारण्यस्य माहात्म्यं चक्रतीर्थस्य चोत्तमम् ।
कपिलस्यापि महिमा तथा गोवर्द्धनस्य च ॥ ३८ ।
तथा आख्यायिकायुक्तं विश्रान्तेश्च ततः परम् ।
गोकर्णस्य च माहात्म्यं सरस्वत्यास्तथैव च ॥ ३९ ।
यमुनोद्भेदमहिमा कालिञ्जरसमुद्भवः ।
गङ्गोद्भेदस्य महिमा शापः शाम्बस्य वै तथा ॥ ४० ।
मधुकप्रतिमायाश्च स्थापनं सम्प्रकीर्त्तितम् ।
शैलार्चास्थापनञ्चापि मृण्मयार्चास्थितिस्तथा ॥ ४१ ।
ताम्रार्चास्थापनञ्चापि कांस्यार्चास्थापनं तथा ।
रौप्यार्चास्थापनञ्चाथ सौवर्णप्रतिमास्थितिः ॥ ४२ ।
श्राद्धोत्पत्तिस्ततः प्रोक्तम्पिण्डं सङ्कल्प एव च ।
पिण्डोत्पत्तिस्ततः प्रोक्ता पितृयज्ञविनिर्णयः ॥ ४३ ।
मधुपर्कदानफलं संसारचक्रवर्णनम् ।

* अक्रूराख्यञ्च तीर्थकम् इति (ख), अक्रूरमथ तीर्थकमिति (ग) ।

दुष्कृतकर्म्मकरणं सुखवर्णनमेव च ॥ ४४ ।
कृतान्तदूतकथनं यातनारूपमेव च ।
वर्णनं नरकाणाञ्च किङ्कराणाञ्च वर्णनम् ॥ ४५ ।
तथा कर्म्मविपाकस्य यादृशङ्कर्म्म तादृशम् ।
पापकर्म्मस्य कथनं दूतप्रेषणकर्म्म च ॥ ४६ ।
शुभाशुभस्य कथनं शुभकर्म्मफलोदयम् ।
लोभनं पुरुषस्यापि निमेराख्यानमद्भुतम् ॥ ४७ ।
प्रबोधिनीकथां दिव्याङ्गीकर्णेशसमुद्भवाम् ।
नन्दिनो वरदाने च जलेशशैलयोस्तथा ॥ ४८ ।
शृङ्गेश्वरस्य महिमा एवं वृत्तान्तसङ्ग्रहः ।
एतच्छ्रुत्वाप्नुयान्मर्त्त्यो वराहश्रवणात् फलम् ॥ ४९ ।

इत्यनुक्रमणिका नाम अष्टादशाधिकद्विशततमोऽध्यायः ।

समाप्तं वराहं शुभम् ।

यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयताम् ॥

# BIBLIOTHECA INDICA

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, Nos. 601, 631, 635, 640, 647, 654, 677, 694, 710, 714, 719, 726, 733 and 829.

# THE VARÁHA PURÁṆA

EDITED BY

PAṆḌIT HṚISHIKESA ŚASTRÍ

*Professor, Sanskrit College, Calcutta.*

CALCUTTA:

PRINTED BY SAŚIBHŪSHAṆA BHAṬṬÁCHÁRYYA, AT THE GIRIŚA-VIDYÁRATNA PRESS,

24, GIRIŚA-VIDYÁRATNA'S LANE, UPPER CIRCULAR ROAD.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1893.

# वराहपुराणम्

श्रीलश्री-

वङ्गदेशीयासियाटिकसमितेरनुज्ञया

कलिकाता संस्कृतकलेजाध्यापकेन

श्रीहृषीकेश-शास्त्रिणा

संशोधितम्

कलिकाताराजधान्यां

गिरिश विद्यारत्न-वर्त्मनि चतुर्विंश-संख्यक सद्मनि

गिरिश-विद्यारत्न-यन्त्रे

श्रीमणिभूषण-भट्टाचार्य्येण

मुद्रितम्

१८९३

# PREFACE.

The characteristics and the definite number of the Puráṇas and Upapuráṇas are well known to our readers; so we need not enter into their details here. The Puráṇa under notice, viz. the Varáhapuráṇa, belongs to the former class, being the twelfth of them in serial number; consequently it is attributed to Vedavyása, the father of the Pauráṇic Literature, as its author. But it may be well inferred that, the Varáhapuráṇa, though originally composed by Vedavyása, might have been recompiled in its present form in comparatively recent times, when the present popular forms of the Hindu religion assumed this sectarian character and Vaishṇavism took a deep root in several parts of the country. For we find it chiefly advocating the superiority of the God Vishṇu in every legend described in it. Although the date of its recompilation cannot be exactly ascertained, still we think the following śloka in the beginning of chapter 218, quite competent to throw some light in the matter.

[illegible]<br>
[illegible] ।<br>
[illegible]<br>
[illegible] ॥

The Purána, narrated by Vishṇu as Varáha or the boar incarnation, was written by M[illegible] in Benares in 1621, the era of the king Vikrama (known by the name of Samvat), after the waking of the God Vishṇu.

The following is Professor Wilson's account of this work.

"It is narrated by Vishṇu as Varáha or the boar incarnation to the personified Earth. Its extent, however, is not half that specified, little exceeding ten thousand stanzas."

Nor can the Varáhapuráṇa be regarded as a *Puráṇa* agreeably to the common definition, as it contains but a few scattered and brief allusions to the creation of the world and the reign of kings; it has no detailed genealogies either of the Patriarchal or regal families, and no account of the reigns of

the Manus Like the Lingapuráṇa, it is a religious manual almost wholly occupied with forms of prayer and rules for devotional observances addressed to Vishnu.

Rev. William Taylor in his catalogue of Oriental manuscripts says—

> "The use of the Purána in illustrating mythology is considerable. In so far as historical inquiries are concerned, the most remarkable sections are [illegible] and [illegible]. The latter in particular, very clearly relates to the great exterminating war made against the votaries of Buddha. The combat of Durgá against Mahishásura has been by some termed the combat of personified virtue against personified vice. No doubt there are several good reflections and mystic allegories."

The MSS. of Varáhapuráṇa are very difficult to procure; so after a long and continuous effort I was able to secure only three complete MSS. (क, (ख and (ग) to consult with. (क) was borrowed from the library of the late Paṇḍit Madhusúdana of Lahore; I received (ख) from the library of the Asiatic Society of Bengal; and my lamented friend Paṇḍit Durgáprasáda of Jeypur in Rájputaná, who died only five or six months ago, favoured me with ग. All these were in Davanágarí character and almost correct. In the course of my editing the work, I got also two Bengali MSS. from my native place, which were incomplete, old and incorrect. I have not given preference to any one of the above in particular. But I have tried to pick up correct passages from every one, and the rejected ones have been placed as different readings in the foot notes, where I have given also the modern forms of nearly all the *arsha* words. *In fact, I have spared no pains in order to render this edition an useful and correct one, but I do not know how far I have been successful.*

I must acknowledge here my deep obligations to my learned friend Paṇḍit Harischandra Kaviratna, assistant Professor of Sanskrit in the Presidency College, who kindly afforded me material help on this occassion.

Hrishíkeśa Śástrí.

# वराहपुराणस्य स्वरूपनिरूपणम् ।



ग्रन्थेऽस्मिन्नुपक्रमे सद्यःप्रलयाम्भःसमुत्थितया धरण्या—

"कथञ्च सृष्टेरादिः स्यादवसानं कथं भवेत् ?
कथं युगस्य गणना संख्याऽस्यानु चतुर्युगम् ?"

इत्येवमनुक्रमेण पृष्टेन भगवता क्रोड़रूपेण सृष्टिस्थितिप्रलय-प्रभविष्णुना विष्णुना यथाक्रममादिसृष्टि-प्रजासृष्टि-वंश-मन्वन्तर-वंशानुचरितोपवर्णनादस्य पुराणत्वं सिद्धमेव। पुराण-लक्षणं यथा—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥

श्रीमद्भागवते तु पुराणलक्षणमन्यथैव कृतम् । यथा—

सर्गोऽस्याथ विसर्गश्च वृत्तिरक्षान्तराणि च ।
वंशो वंशानुचरितं संस्थाहेतुरपाश्रयः ॥
दशभिर्लक्षणैर्युक्तं पुराणं तद्विदोविदुः ।
केचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया ॥

पुराणोपपुराणभेदेन पुराणानां द्वैविध्यं दृश्यते। तत्र पुराणान्यष्टादश तावन्त्येवोपपुराणानि, पूर्व्वाणि महर्षिश्रीकृष्ण-द्वैपायनप्रणीततया प्रसिद्धान्यन्यानि चान्यमहर्षिगणप्रणीत-तया। तथाहि—

ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा
अथान्यत् नारदीयञ्च मार्कण्डेयञ्च सप्तमम् ॥
आग्नेयमष्टमञ्चैव भविष्यं नवमन्तथा ।
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम ।
वाराहं द्वादशञ्चैव स्कान्दञ्चात्र त्रयोदशम ॥
चतुर्द्दशं वामनञ्च कौर्म्मं पञ्चदश स्मृतम ।
मात्स्यञ्च गारुड़ञ्चैव ब्रह्माण्डञ्च ततः परम् ॥

इति विष्णुपुराणम् । एवं—

अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।
आद्यं सनत्कुमारोक्तं नारसिंहमथापरम् ॥
तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ।
चतुर्थं शिवधर्म्माख्यं स्यान्नन्दीश्वरभाषितम् ॥
दुर्व्वाससोक्तमाश्चर्य्यं नारदोक्तमतः परम् ।
कपिलं वामनञ्चैव तथैवोशनसेरितम् ॥
ब्रह्माण्डं वारुणञ्चाथ कालिकाह्वयमेव च ।
माहेश्वरं तथा शाम्बमेवं सर्व्वार्थसञ्चयम् ।
पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥

इति गरुड़पुराणञ्च ।

इत्थं नाम वराहपुराणस्य पुराणत्वमतएव महर्षिवेदव्यासप्रणीतत्वञ्च सिद्धम् । श्रीमद्भागवतानुसारतः पुराणानाम महदल्पव्यवस्थया द्वैविध्यमस्ति । तत्र दशलक्षणयुतं महापुर पञ्चलक्षणान्वितमल्पपुराणमिति । ततश्च—

"मात्स्यं कौर्म्मं तथा लैङ्गं शैवं स्कान्दं तथैव च ।
आग्नेयञ्च षड़ेतानि तामसानि निबोधत ॥
वैष्णवं नारदीयञ्च तथा भागवतं शुभम् ।
गारुड़ञ्च तथा पाद्मं वाराहं शुभदर्शने ! ।
सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै ॥
ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च ।
भविष्यं वामनं ब्राह्मं तामसानि निबोधत ॥
सात्त्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदाः शुभाः ।
तथैव तामसा देवि निरयप्राप्तिहेतवः ॥

इति पद्मपुराणवचनात् वराहपुराणस्य सात्त्विकत्वं मोक्षप्रदत्वञ्च प्रतीयते ।



## वराहपुराणस्य ग्रन्थसंख्या ।

अत्र अष्टादशाधिकद्विशताध्यायाः सन्ति । तत्र प्रथमाध्याये—२८ श्लोकाः, द्वितीयाध्याये—८३, तृतीयाध्याये—२८, चतुर्थाध्याये—४२, पञ्चमाध्याये—५८, षष्ठाध्याये—४१, सप्तमाध्याये—४७, अष्टमाध्याये—५४, नवमाध्याये—३५, दशमाध्याये—७२, एकादशाध्याये—११३, द्वादशाध्याये—२१, त्रयोदशाध्याये—५८, चतुर्दशाध्याये—५४, पञ्चदशाध्याये—

२२, षोड़शाध्याये—१९, सप्तदशाध्याये—७४, अष्टादशाध्याये—२५, ऊनविंशाध्याये—१०, विंशाध्याये—१७, एकविंशाध्याये—८८, द्वाविंशाध्याये—५४, त्रयोविंशाध्याये—१८, चतुर्विंशाध्याये—३३, पञ्चविंशाध्याये—५२, षड्विंशाध्याये—१९, सप्तविंशाध्याये—४३, अष्टाविंशाध्याये—४५, ऊनत्रिंशाध्याये—१६, त्रिंशाध्याये—७, एकत्रिंशाध्याये—२१, द्वात्रिंशाध्याये—३२, त्रयस्त्रिंशाध्याये—३४, चतुस्त्रिंशाध्याये—९, पञ्चत्रिंशाध्याये—१५, षट्त्रिंशाध्याये—२३, सप्तत्रिंशाध्याये—४५, अष्टात्रिंशाध्याये—३२, ऊनचत्वारिंशाध्याये—७७, चत्वारिंशाध्याये—११, एकचत्वारिंशाध्याये—४६, द्वाचत्वारिंशाध्याये—१६, त्रयश्चत्वारिंशाध्याये—१७, चतुश्चत्वारिंशाध्याये—२१, पञ्चचत्वारिंशाध्याये—१[illegible], षट्चत्वारिंशाध्याये—१५, सप्तचत्वारिंशाध्याये—२४, अष्टाचत्वारिंशाध्याये—२४, ऊनपञ्चाशाध्याये—४६, पञ्चाशाध्याये—२९, एकपञ्चाशाध्याये—२९, द्वापञ्चाशाध्याये—११, त्रिपञ्चाशाध्याये—२६, चतुःपञ्चाशाध्याये—१९, पञ्चपञ्चाशाध्याये—५[illegible], षट्पञ्चाशाध्याये—१६, सप्तपञ्चाशाध्याये—१८, अष्टपञ्चाशाध्याये—१९, ऊनषष्टितमाध्याये—१०, षष्टितमाध्याये—८, एकषष्टितमाध्याये—१७, द्विषष्टितमाध्याये—३४, त्रयःषष्टितमाध्याये—१२, चतुःषष्टितमाध्याये—६, पञ्चषष्टितमाध्याये—१५, षट्षष्टितमाध्याये—१९, सप्तषष्टितमाध्याये—८, अष्टषष्टितमाध्याये—१९, ऊनसप्ततितमाध्याये—१९, सप्ततितमाध्याये—४३, एकसप्त-

तितमाध्याये—६२, द्विसप्ततितमाध्याये—१६, त्रय:सप्ततितमाध्याये—५०, चतु:सप्ततितमाध्याये—७ श्लोका गद्यांशश्च कश्चिद्वर्त्तते, पञ्चसप्ततितमाध्याये—३८ श्लोका:, षट्सप्ततितमाध्याये—१६, सप्तसप्ततितमाध्याये—३८, अष्टसप्ततितमाध्याये—२२, ऊनाशीतितमाध्याये—२५ श्लोकाश्च वर्त्तन्ते। अशीतितमाध्याये—द्वौ श्लोकौ, अवशिष्टांशश्च गद्यमय:। एकाशीतितमाध्यायो—गद्यमय:। द्व्यशीतितम-त्र्यशीतितमाध्यायौ—तथैव। चतुरशीतितमाध्याये—आदौ षट् श्लोकास्ततो गद्यमयोऽंश:। पञ्चाशीतितमाध्याये—एक: श्लोकोऽवशिष्टांशश्च गद्यमय:। षडशीतितमाध्यायो—गद्यमय:। सप्ताशीतितमाध्याय:—तथैव च। अष्टाशीतितमाध्याये—एक: श्लोकोऽवशिष्टांशश्च गद्यमय:। ऊननवतितमाध्याये—त्रय: श्लोका अवशिष्टांशश्च गद्यमय:। नवतितमाध्याये—४४ श्लोका:। एकनवतितमाध्याये—१५ श्लोका:, द्विनवतितमाध्याये—३३ श्लोका:, त्रयोनवतितमाध्याये—३१, चतुर्नवतितमाध्याये—१६, पञ्चनवतितमाध्याये—६५, षण्णवतितमाध्याये—७१, सप्तनवतितमाध्याये—२३, अष्टनवतितमाध्याये—३५, नवनवतितमाध्याये—८४, शततमाध्याये—१८, एकाधिकशततमाध्याये—१५, द्व्यधिकशततमाध्याये—१८, त्र्यधिकशततमाध्याये—१७, चतुरधिकशततमाध्याये—१८, पञ्चाधिकशततमाध्याये—१६, षडधिकशततमाध्याये—८, सप्ताधिकशततमाध्याये—१३, अष्टाधिकशततमाध्याये—१२, नवाधिकशततमाध्याये—८, दशाधिकशततमाध्याये

—१६, एकादशाधिकशततमाध्याये—१८, द्वादशाधिकशततमाध्याये—७५, त्रयोदशाधिकशततमाध्याये—५०, चतुर्दशाधिकशततमाध्याये—६४, पञ्चदशाधिकशततमाध्याये—४६, षोड़शाधिकशततमाध्याये—४४, सप्तदशाधिकशततमाध्याये—४८, अष्टादशाधिकशततमाध्याये—४९, ऊनविंशत्यधिकशततमाध्याये—१८, विंशत्यधिकशततमाध्याये—२२ श्लोकाः, एकविंशत्यधिकशततमाध्याये—२८, द्वाविंशत्यधिकशततमाध्याये—१८५, त्रयोविंशत्यधिकशततमाध्याये—३४, चतुर्विंशत्यधिकशततमाध्याये—५१, पञ्चविंशत्यधिकशततमाध्याये—१८७, षड्विंशत्यधिकशततमाध्याये—२१९, सप्तविंशत्यधिकशततमाध्याये—६४, अष्टाविंशत्यधिकशततमाध्याये—७९, ऊनत्रिंशदधिकशततमाध्याये—५३, त्रिंशदधिकशततमाध्याये—२४, एकत्रिंशदधिकशततमाध्याये—१०, द्वात्रिंशदधिकशततमाध्याये—३८, त्रयस्त्रिंशदधिकशततमाध्याये—१२, चतुस्त्रिंशदधिकशततमाध्याये—६८, पञ्चत्रिंशदधिकशततमाध्याये—५७, षट्त्रिंशदधिकशततमाध्याये—१२१, सप्तत्रिंशदधिकशततमाध्याये—२५६, अष्टात्रिंशदधिकशततमाध्याये—९६, ऊनचत्वारिंशदधिकशततमाध्याये—१०९, चत्वारिंशदधिकशततमाध्याये—९६, एकचत्वारिंशदधिकशततमाध्याये—६७, द्वाचत्वारिंशदधिकशततमाध्याये—६१, त्रयश्चत्वारिंशदधिकशततमाध्याये—५१, चतुश्चत्वारिंशदधिकशततमाध्याये—१६०, पञ्चचत्वारिंशदधिकशततमाध्याये—

११६, षट्चत्वारिंशदधिकशततमाध्याये—७७, सप्तचत्वारिंशदधिकशततमाध्याये—६२, अष्टाचत्वारिंशदधिकशततमाध्याये—८१, ऊनपञ्चाशदधिकशततमाध्याये—८४, पञ्चाशदधिकशततमाध्याये—५८, एकपञ्चाशदधिकशततमाध्याये—८३, द्वापञ्चाशदधिकशततमाध्याये—६८, त्रयःपञ्चाशदधिकशततमाध्याये—४६, चतुःपञ्चाशदधिकशततमाध्याये—३२, पञ्चपञ्चाशदधिकशततमाध्याये—६८, षट्पञ्चाशदधिकशततमाध्याये—१६, सप्तपञ्चाशदधिकशततमाध्याये—४४, अष्टपञ्चाशदधिकशततमाध्याये—४१, ऊनषष्ट्यधिकशततमाध्याये—३२, षष्ट्यधिकशततमाध्याये—८०, एकषष्ट्यधिकशततमाध्याये—११, द्विषष्ट्यधिकशततमाध्याये—५७, त्रयःषष्ट्यधिकशततमाध्याये—६४, चतुःषष्ट्यधिकशततमाध्याये—४२, पञ्चषष्ट्यधिकशततमाध्याये—५८, षट्षष्ट्यधिकशततमाध्याये—२७, सप्तषष्ट्यधिकशततमाध्याये—१८, अष्टषष्ट्यधिकशततमाध्याये—१८, ऊनसप्तत्यधिकशततमाध्याये—४०, सप्तत्यधिकशततमाध्याये—८४, एकसप्तत्यधिकशततमाध्याये—५८, द्विसप्तत्यधिकशततमाध्याये—५८, त्रयःसप्तत्यधिकशततमाध्याये—१४, चतुःसप्तत्यधिकशततमाध्याये—८६, पञ्चसप्तत्यधिकशततमाध्याये—२५, षट्सप्तत्यधिकशततमाध्याये—८३, सप्तसप्तत्यधिकशततमाध्याये—५७, अष्टसप्तत्यधिकशततमाध्याये—७, ऊनाशीत्यधिकशततमाध्याये—३३, अशीत्यधिकशततमाध्याये—११८,

एकाशीत्यधिकशततमाध्याये —२३, द्व्यशीत्यधिकशततमाध्याये —३५, त्र्यशीत्यधिकशततमाध्याये —३३, चतुरशीत्यधिकशततमाध्याये —२२, पञ्चाशीत्यधिकशततमाध्याये —३१, षडशीत्यधिकशततमाध्याये —५०, सप्ताशीत्यधिकशततमाध्याये —११०, अष्टाशीत्यधिकशततमाध्याये —८४, ऊननवत्यधिकशततमाध्याये —५१, नवत्यधिकशततमाध्याये —१२६, एकनवत्यधिकशततमाध्याये —२०, द्विनवत्यधिकशततमाध्याये —३८, त्र्यधिकनवत्यधिकशततमाध्याये —४८, चतुर्नवत्यधिकशततमाध्याये —३६, पञ्चनवत्यधिकशततमाध्याये —३१, षण्नवत्यधिकशततमाध्याये —३४, सप्तनवत्यधिकशततमाध्याये —५४, अष्टनवत्यधिकशततमाध्याये —८३, नवनवत्यधिकशततमाध्याये —४१, द्विशततमाध्याये —७५, एकाधिकद्विशततमाध्याये —५८, द्व्यधिकद्विशततमाध्याये —७८, त्र्यधिकद्विशततमाध्याये —६७, चतुरधिकद्विशततमाध्याये —२६, पञ्चाधिकद्विशततमाध्याये —३१, षडधिकद्विशततमाध्याये —४३, सप्ताधिकद्विशततमाध्याये —५३, अष्टाधिकद्विशततमाध्याये —८०, नवाधिकद्विशततमाध्याये —२०, दशाधिकद्विशततमाध्याये —६५, एकादशाधिकद्विशततमाध्याये —८५, द्वादशाधिकद्विशततमाध्याये —२०, त्रयोदशाधिकद्विशततमाध्याये —८८, चतुर्दशाधिकद्विशततमाध्याये —८६, पञ्चदशाधिकद्विशततमाध्याये —११८, षोडशाधिकद्विशततमाध्याये —२५, सप्तदशाधिकद्विशततमाध्याये —२४, अष्टादशाधिक-

द्विशततमाध्याये—४८ श्लोकाः सन्ति। मिलित्वा प्रायः ८.९५४ श्लोकाः सन्ति। गद्यांशेन मिलित्वा ग्रन्थसंख्या प्रायः १०,००० अथवा १०,५०० श्लोका भवन्ति।

श्रीमद्भागवते तु पुराणानां श्लोकसंख्या एवं दर्शिता—

"ब्राह्मं दश सहस्राणि पाद्मं पञ्चोनषष्टि च।
श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम्॥
दशाष्टौ श्रीभागवतं नारदं पञ्चविंशतिः।
मार्कण्डं नव वाह्नञ्च दशपञ्चचतुःशतम्॥
चतुर्दश भविष्यं स्यात्तथा पञ्चशतानि च।
दशाष्टौ ब्रह्मवैवर्त्तं लैङ्गमेकादशैव तु॥
चतुर्विंशति वाराहमेकाशीतिसहस्रकम्।
स्कान्दं शतं तथा चैकं वामनं दश कीर्त्तितम्॥
कौर्म्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश।
एकोनविंशत् सौपर्णं ब्रह्माण्डं द्वादशैव तु।
एवं पुराणसन्दोहश्चतुर्लक्ष उदाहृतः॥

एतेन महर्षीणां प्रमादो न शङ्कनीयः। एतत्तु श्लोकस्यैकस्य द्वात्रिंशदक्षरात्मकत्वमङ्गीकृत्यैव लिखितमिति मन्यामहे। अस्माभिस्तु चतुश्चरणात्मकश्लोकानां संख्या दर्शिता, तत एवाऽन्तरं प्रतीयते। इति सर्व्वमवदातम्।

## वराहपुराणस्य

### प्रत्यध्यायमाभाषितविषयाणां

# विवरणम् ।



तत्र प्रथमाध्याये प्रथमं मङ्गलाचरणं, मङ्गलाचरणमिदमाधुनिककाव्यादिग्रन्थवदभीष्टदेवता वराहमूर्त्ति - श्रीनिर्व्वाणनमस्क्रियारूपञ्च दृश्यते । ततो ग्रन्थारम्भोऽशेषपुराणेतिहासविदांवरश्री-सूतमुखेनैवोपक्रान्तः। यथा वराहवपुषा भगवता सृष्टिस्थितिप्रलयप्रभविष्णुना विष्णुना प्रलयपयःप्रवाहात् समुद्धृता धरणी तं भगवन्तं पप्रच्छ, हे देव ! कथं सृष्टेरादिरवसानञ्च कथं भवति ? केन प्रकारेण युगानां गणना, कति वा युगानि, तेषु च युगेषु कस्मिन् कस्मिन् के यज्वानो राजानश्च परां प्रसिद्धिं गताः ? एतत्सर्व्वं मां समासेन कथयितुमर्हसि, मयि प्रसीदेति । पृथिव्या एवं पृष्टो वराहरूपी भगवान् परमेश्वरो जहास । हसतस्तस्य कुक्षौ जगद्धात्री धरणी वसुभिः सिद्धसङ्घैर्महर्षिभिश्च सार्द्धं रुद्रान् देवान् सचन्द्रसूर्य्यग्रहान् सप्त लोकांश्चापश्यत्, अभवच्च तस्याः सर्व्वशरीरेषु महान् वेपथुः, सा ससम्भ्रमं चक्षुषी न्यमीलयत् । अथ सा क्षणादुन्मीलिताक्षी तं देवं चतुर्भुजं महोदधौ शेषपर्य्यङ्कशयने प्रसुप्तं दृष्ट्वा तुष्टाव ।

अथ द्वितीयाध्यायप्रारम्भः। सूत उवाच। धरण्याः स्तवेन सन्तुष्टो हरिर्मायां प्रकाश्य पुनस्तेनैव वराहरूपेण स्थितः। अगाद च प्रथमं सर्व्वेषां पुराणानां साधारणं लक्षणं यथा—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षण"मिति॥

तत आदिसर्गमकथयत्, स चादिसर्गो विष्णुपुराणादिकथितादिसर्गेण सह प्राय ऐक्यम्भजते। तस्य चादिसर्गस्य नव भेदाः कथिताः। यथा—(१) महत्सर्गः, (२) तन्मात्रसर्गः, (३) वैकारिकः, (४) ऐन्द्रियिकः, (५) मुख्यसर्गः, (६) तैर्य्यक्स्रोतसः, (७) ऊर्द्ध्वस्रोतसः, (८) मानवसर्गः, (९) कौमारसर्गः। ततोऽसौ धरण्या कथमेषां सर्गाणां वृद्धिरिति पृष्टः सर्गवृद्धिं वक्तुमारेभे। प्रथमं सनकादीनां मरीचिप्रभृतीनाञ्च महर्षीणामुत्पत्तिमेकादशरुद्रोत्पत्तिञ्चाभिधाय सत्यादियुगचतुष्टयमुद्दिश्य तत्रत्यानां महासत्त्वानां राज्ञां देवासुराणाञ्च चरितमाख्यातवान्। यथा प्रथमकल्पे स्वायम्भुवो नाम मनुरभवत्। तस्य द्वौ पुत्रौ प्रियव्रतोत्तानपादनामानौ बभूवतुः। तयोः प्रियव्रतो राजा विपुलैर्भूरिदक्षिणैर्विविधैर्यज्ञैरिष्ट्वा सप्तद्वीपेषु भरतादीन् निजान् सुतान् संस्थाप्य स्वयं विशालां गत्वा महत्तपस्तेपे। अथ कदाचित् तपसि स्थितस्य तस्य समीपे नारदः समुपागतः। राजा नारदमभ्युद्ययौ, यथार्हमर्हणाञ्चकार च। ततो राजा नारदं पप्रच्छ, यदस्मिन् कृतयुगे किमप्याश्चर्य्यं दृष्टं न वेति। नारदः प्रोवाच, ह्यस्तनेऽहनि श्वेतद्वीप-

गतेन मयाश्चर्य्यमेकं दृष्टं, तत्र किमपि रम्यसरस्तस्य तीरे क्वापि पृथुलोचना कुमारी दृष्टा। सा मया काऽसि किं करोषीति पृष्टाऽकथयत्, अहं सर्व्ववेदानां माता सावित्री। त्वं वेदशास्त्राणि सर्व्वतत्त्वञ्च गृहीत्वाऽस्मिन् वेदसरसि स्नानं कुरु, ततोऽन्यजन्मीयं स्मरिष्यसि। एवमुक्त्वा सा तिरोदधे।

तृतीयाध्यायारम्भे प्रियव्रतेन नारदः पृष्टो, भो भगवन्, तवान्यजन्मचेष्टितं सर्व्वं कथयेति। नारद उवाच, हे राजेन्द्र! सावित्र्या वचनमाकर्ण्य तस्मिन् वेदसरसि स्नातस्य मे प्राक्तनजन्मसहस्रवृत्तं स्मृतिमारूढं, तच्च पूर्व्वजन्मवृत्तं शृणु। अहं पूर्व्वस्मिन् जन्मनि अवन्तीपुर्य्यां सारस्वतो नाम वेदवेदाङ्गपारगो द्विजोत्तम आसम्। अथैकदा मया चिन्तितं, नास्ति मे विषयसुखेन किमपि प्रयोजनं, तत्सर्व्वमेतत् पुत्रेषु न्यस्याऽहं वनाय गच्छामीति। एवं विचिन्त्याहं तपसे धृतसङ्कल्पः सारस्वतं सरोऽद्भुतं गतवान्। तच्च सारस्वतं सर इदानीं 'पुष्कर'नाम्ना प्रसिद्धम्। तत्र गत्वा मया पुराणः पुरुषो विष्णुर्भक्त्या ब्रह्मपारमयं परमस्तवं जपता च समाराधितः, सोऽपि भगवान् तुष्टो मम प्रत्यक्षत्वं जगाम। ततः प्रियव्रतो ब्रह्मपारस्य स्वरूपं पप्रच्छ। नारदश्च तदकथयत्। कथितञ्चाह, ममैतेन स्तवेन प्रसन्नो देवो मां वरं वृणीष्वेति जगाद। अहञ्च तस्यैव देहे लयमिष्टवान्। तच्छ्रुत्वा प्रकृतिं गच्छेत्युक्त्वा ममाम्भश्च "नारं पानीयमित्युक्तं पितॄणां तद्ददौ भवान्। तदा प्रभृति त्वं नारदेति नाम"ेति व्युत्पत्तिञ्च कथयित्वा सद्योऽदर्शनं

प्राप्तः। पुनर्ब्राह्मणाऽहं दशभिस्तनयैः सह ह्यद्यापि दृष्टाऽस्मि।
हे नृप। एतावदेव मे पूर्व्वजन्मवृत्तम्।

ततश्चतुर्थाध्यायारम्भे धरणी तं क्रोड़रूपिणं भगवन्तं नारायणस्वरूपं पप्रच्छ। सोऽपि तस्य मत्स्यादिभेदेन दशमूर्त्तीरकथयत्। विशेषस्तु भागवतपुराणमते कृष्णस्य नावतारत्वं किन्तु पूर्णत्वमेव,बलरामस्य तु दशावतारेषु गणना कृता। अत्र हि दशावतारेषु कृष्णनाम कृतं, न बलरामस्य। कथितञ्च तेन, एता हि दश मूर्त्तयो द्रष्टुमिच्छूनां सोपानानि, तस्य परमं रूपन्तु देवता अपि न पश्यन्ति, देवास्तु अस्मदादिस्वरूपं दृष्ट्वा धृतिं पूरयन्तीति। ततो वराहेण भगवतोऽन्या अपि पृथिव्याद्यष्टमूर्त्तयः कथिताः। एवं नारायणेन जगदिदमखिलं व्याप्तमिति कथयित्वा स पृथिवीं पप्रच्छ किमन्यच्छ्रोतुमिच्छसीति। ततः पृथिव्युवाच, नारदेनैवमुक्तस्तु राजा प्रियव्रतः किं कृतवान् तन्मे समाख्याहि। ततो वराह उवाच, स हि नृपतिर्भवतीं सप्तधा कृत्वा पुत्रेभ्यः प्रदाय स तपस्तेपे। ततः स नारायणात्मकं परं ब्रह्म जप्त्वा परं निर्व्वाणमाप्तवान्। अथाश्वशिरसो राज्ञो वृत्तमाख्यातवान्। यथा पुराऽश्वशिरा नाम कश्चित्परमधार्म्मिकोराजा बभूव। सोऽश्वमेधेन यष्ट्वाऽवभृथे स्नातश्च यावद्ब्राह्मणैः परिवृत आस्ते, तावत्कपिलो मुनिः श्रीमान् योगिराट् जैगीषव्यश्च तत्राजग्मतुः। राजा त्वरितमुत्थाय परया मुदा युक्तस्तयोः स्वागतवादपूर्व्वं यथार्हमर्हणाद्य-

कार। ततस्तौ नारायणाराधनप्रकारं पप्रच्छ। तावूचतुरा-वामेव द्वौ नारायणौ भवत्प्रत्ययतां गताविति। राजोवाच कथमेवम्। ततस्तौ हसन्तावूचतु राजन् नारायणं पश्येति। एवमुक्त्वा कपिलो विष्णुर्जैगीषव्यश्च गरुड़ः समजायत। ततो राजमण्डलं सर्व्वं गरुड़स्थं सनातनं दृष्ट्वा विस्मितं। ततो राजा कृताञ्जलिरुवाच, विष्णुर्नेदृशः,स हि पद्मनाभस्तस्य नाभिकमले प्रजापतिर्ब्रह्मा चोत्पन्न इति। अथ तौ मायाबलेन तादृक् स्वरूपमपि दर्शयामासतुः। तद्दृष्ट्वा राजा जगाद, स विश्वेशो हरिः सर्व्वव्यापी न स दृश्यो भवतीति। एवमुक्तवतस्तु राज्ञः सदसि सर्व्वविधा जन्तवः समाययुः। तं भूतसङ्घातं दृष्ट्वा राजा यावत्किमेतदिति चिन्तयति, तावत्तौ द्विजावूचतुरावां त्वया पृष्टौ कथं विष्णुरिज्यते प्राप्यते चेति,तन्नेदं तव दर्शितम्। हे राजन्! तस्य नारायणस्य गुणा एव तव दर्शिताः, स हि देवः सर्व्वज्ञः कामरूपवान्। तस्य परमार्थाराधनन्तु न कोऽपि जानाति, स हि सर्व्वशरीरस्थः परमात्मा जगत्पतिः। सुरा नराः पशवः कीटसङ्घाश्च सर्व्वं विष्णुमयास्ततो हे नृप! हरिः सर्व्वव्यापीति भावनां दृढ़ां कुर्य्यात्। हे राजन्नेष तं ज्ञान-सद्भावो दर्शितस्त्वं परिपूर्णेन भावेन नारायणं गुरुं स्मर। स हि परमेश्वरः पूजोपचारैर्ब्राह्मणानां तर्पणैः सुस्थितेन ध्यानेन च सुप्राप्यः।

अथ पञ्चमाध्यायारम्भे पुनरश्वशिरास्तौ पप्रच्छ, भवन्तावत्र मे सन्देहमेकं छेत्तुमर्हतः। यस्मिन्निमे मम संसारविच्युति-

जायेतेति । कपिल उवाच, राजन् ! कस्ते सन्देहस्तं ब्रूहि, छेत्स्याम्यहम् । राजोवाच, हे मुने ! यदि ममोपरि तवानुग्रहस्तदेमं संशयं छिन्धि, कर्म्मिणा उताहो ज्ञानिना मोक्षः प्राप्यत इति । कपिल उवाच, हे राजन् ! प्रश्नमिमं ब्रह्मपुत्रो रैभ्यो राजवसुश्च वृहस्पतिं पप्रच्छतुः । ततो वृहस्पतिरवोचत, पुरुषो यत् किञ्चित् कर्म्म कुरुते, तत्सर्व्वं नारायणे न्यस्य न केनापि कर्म्मणा लिप्यते । अत्रायं संवादः कथ्यते । कश्चिदात्रेयः प्रातःस्नायी वेदाभ्यासरतस्तपस्वी ब्राह्मण आसीत् । स कदाचिद्धर्म्मारण्ये भागीरथीं स्नातुं गतः । तत्र हरिणानां महायूथमासीनं व्यलोकयत् । आययौ च तद्यूथं जिघांसुः कश्चिद्धनुष्पाणिः कृतान्तवन्निष्ठुरो व्याधः । ततः संयमनो विप्रस्तं मृगयारतं दृष्ट्वा तस्माद्धिंसाव्यापारान्निवारयामास । ततो व्याधः स्मितपूर्व्वमुवाच, भो ब्रह्मन्नाऽहं पृथग्भूतं जीवं हिंसामि । हे ब्रह्मन् ! मुमुक्षुभिः कदापि नाऽहंभावो विधेयः । एतदाकर्ण्य स द्विजो विस्मयेन तं लुब्धकं प्राह, किमेतदुच्यत इति । ततोऽसौ व्याधो लौहमयं जालं कृत्वा तस्याधो ज्वलनं ददौ । ततो द्विजं काष्ठसञ्चयो ज्वाल्यतामिति प्राह । विप्रश्च मुखेनाग्निं प्रजज्वाल । ज्वलिते तु वह्नौ तल्लौहसम्भवं जालं रन्ध्रनिर्गतजालकदम्बगोलवद्बभौ । एकस्थानगतस्यापि वह्नेः पृथक् पृथक् सहस्राणि ज्वाला निर्येयुः । ततो लुब्धोऽब्रवीत्, हे महामुने ! त्वमेकां ज्वालां गृहाण, अहं शेषाणां नाशनं करिष्यामीति । तथा कृते सोऽग्निं निर्व्वापयामास, ब्राह्मणं प्राह

च, भगवन्! त्वया गृहीतां ज्वालां प्रयच्छ, अहं मांसान्यानाय्य भक्षये इति। एवमुक्तो ब्राह्मणो यावदायसजालकं पश्यति तावत्तामपि मूलनाशे चयगतामपश्यत्। लुब्धक उवाच, यथै-तस्मिन् बहुशाखो वह्निर्ज्वलितो मूलनाशे च युगपद्विनष्टः, तथैवात्मा प्रकृतिस्थश्च भूतानां संश्रयः, तस्य विकृतादृश्व एषैव जगतः स्थितिरिति। व्याधेनैवमुक्ते तस्योपरि पुष्पवृष्टिराका-शात्पपात, कामगानि महान्ति च विमानानि दृष्टानि। तेषु सर्व्वेषु च स ब्राह्मणो लुब्धकं समवस्थितम् अद्वैतवासनासिद्धं योगाद्बहुशरीरकञ्च ददर्श। दृष्ट्वा विप्रो मुदितो निजाश्रमं प्रययौ। एवं स्वजातिकं कर्म्म कुर्व्वतोऽपि ज्ञानं मुक्तिश्च सम्भ-वति। एवं तौ रैभ्यराजवसू संशयच्छेदं प्राप्तौ बृहस्पतेर्धिषणाश्र-न्निजमाश्रमं जग्मतुः। तस्मात्त्वमपि राजेन्द्र! नारायणं देवम् आराधयन् स्वस्मादभेदेन पश्य। कपिलस्य वचः श्रुत्वा स राजा अश्वशिराः स्थूलशिरसं ज्येष्ठपुत्रं समाहूय निजे राज्ये अभि-षिच्य नैमिषं वनं प्रययौ। तत्र यज्ञतनुं हरिं तपसा स्तवेन चाराधयामास। ततस्तस्य स्तुवतः पुरः हुताशनार्च्चिःप्रख्यं तेज आविर्बभूव। स राजा तस्मिँल्लयं प्राप्तवान्।

अथ षष्ठाध्यायारम्भे धरणी पृष्टवती, स वसू रैभ्यश्चाङ्गिरसं वचः श्रुत्वा किं चक्रतुः। वराह उवाच, स वसुः स्वराज्यं प्रत्यपालयत्, बहुभिर्भूरिदक्षिणैर्यज्ञैरीष्टवान्। तथा देवेशं हरिं स्वाभेदेन चिन्तयन् कर्म्मकाण्डेन तोषयामास। ततो महता कालेन राजाऽसौ निहतराज्यभोगेच्छः आहूयतस्य ज्येष्ठं

विवस्वन्तं नाम पुत्रं स्वराज्येऽभिषिच्य तपोवनमुपगतः। अथ तीर्थानां प्रवरे पुष्करे गत्वा स काश्मीराधिपतिर्वसुरतितीव्रेण तपसा स्वशरीरमशोषयत्। स देवं नारायण-माराधयिषुः पुण्डरीकाक्षसारं नाम स्तवं जजाप, स्तोत्रान्ते च तस्य देहात् कश्चिद्दग्धस्थूणासमप्रभोऽह्रस्वकायोरक्ताक्षो भयङ्करः पुरुषो निर्गत्य प्राञ्जलिर्भूत्वा किं करोमीत्युवाच। राजा तं पप्रच्छ कोऽसि, कस्मादागतोऽसि एतन्मे कथय। सोऽब्रवीत्, राजन् त्वं पूर्व्वस्मिन् कलियुगे दक्षिणापथे जनस्थाने पूर्णधर्म्मोद्भवो नाम राजाऽभूः। कदाचित् स त्वं तुरगैः परिवृतो मृगयार्थमरण्यमागतः। तत्र त्वयाऽकामेनापि कश्चिन्मृगवेषधरोमुनिर्दण्डयुग्मेन पातितः, स च विप्रेन्द्रः सद्योमृतश्च। त्वन्तु हरिणोऽयं हत इति यावत् पश्यसि तावत् प्रस्रवणे गिरौ मृगवपुर्विप्रोमृतोदृष्टः। ततः क्षुभितेन्द्रियमानसेन त्वया कतिपयदिवसानन्तरं ब्रह्महत्याभयाद्भीतेन चिन्तितमेतत्। येनाहं पातकान्मुच्येयं शान्त्यर्थं तत् कृत्यं करिष्यामीति। इति नारायणं प्रभुं सञ्चिन्त्य त्वया शुद्धा द्वादशी उपोषिता। कस्मिंश्चिच्छुभेऽहनि त्वया नारायणो मे सुप्रीत इति प्रोक्त्वा विधिना मोदेत्ता। तत उदरशूलर्त्तो मृतोऽसि। तदा कण्ठगतप्राणेन त्वया भवत्पत्नी साध्वी नारायणी नाम्ना व्याहृता तेनैव ते गतिरभूत्। ततः कल्पमेकं त्वं विष्णुपुरेऽवस्थितः। अहं कदाचित् त्वां पीड़यामीति चिन्तितवान्। तथा चिन्तासमकालमेव विष्णुपुरुषैरहं

मुषलैर्हत: सन्नयं जातस्ते रोमकूपतोनिर्गतश्च। मां ब्रह्म-हत्यापापकर्त्तारं विद्धि। अहं स्वर्गस्थस्यापि ते देहे स्वेन तेजसा स्थित:। ततोऽहं:कल्पे रात्रिकल्पेन निवर्त्तिते सम्प्रति आदि-सृष्टौ त्वं काश्मीरदेशाधिपते राज्ञ: सुमनसो गृहे सम्भूत:। अहञ्च तव रोमकूपै: सम्भूत: यद्यपि बहुविधैरामदक्षिणै-र्यज्ञैस्त्वया इष्ट, तथापि हरिस्मरणवर्ज्जितैस्तैर्नाहमपनीत:। इदानीं त्वया यत् स्तोत्रं पठितं, तत्प्रभावात् तव रोमकूपाणि विहायैकीभूतो व्याधरूपेण निर्गतश्च। अहं भगवत: स्तोत्रं श्रुत्वा पापस्वभावेन मुक्तोऽस्मि साम्प्रतं धर्म्मबुद्धिश्च वर्त्तते। एतदाकर्ण्य विस्मयमागतो राजा तं व्याधं वरेण छन्दयामास यथा त्वयाऽहं जन्मान्तरं स्मारितोऽस्मि, तथा त्वं मत्प्रभावेण धर्म्मव्याधोभविष्यसि। यश्चैतत्स्तोत्रं शृणुयात् तस्य पुष्करया-त्रायां विधिस्नानफलं भवेत्। एवमुक्त्वा राजा विमानवरमा-स्थितो विष्णुना सायुज्यमवाप।

अथ सप्तमाध्यायारम्भे पृथिवी पुन: पप्रच्छ,वसुं सिद्धं श्रुत्वा रैभ्य: किमकरोदिति। वराह उवाच, स च मुनिशार्द्दूलो रैभ्योवसुं सिद्धं श्रुत्वा गयामाजगाम। तत्र गत्वा भक्तिपूर्व्वकं पितॄन् पिण्डदानेन तर्पयन् परमदुश्चरं तीव्रं तपस्तेपे। तीव्रं तपश्चरतस्तस्य रैभ्यस्य सकाशे कश्चिदतिदीप्तिमान् विमानस्थो महायोगी आजगाम। स च पुरुष: प्रथमं परमाणुप्रमाण-आसीत्, ततो रैभ्य कथं तपश्चरसीत्युक्त्वा द्यावाभूमी मापयामास। तं युगपद्दिग्भुवनपर्य्यन्तं व्याप्नुवन्तं दृष्ट्वा स राजा

विस्मयाविष्टस्तं पप्रच्छ, भो महायोगिन् को भवानिति। स पुरुष उवाच, अहं रुद्रादवरजो ब्रह्मणो मानसः सुतः सनत्कुमारनामाऽस्मि, जनलोके वसामि च। प्रणयेन भवतः पार्श्वमायातः, त्वं धन्योऽब्रह्मणः कुलवर्द्धनयासि। रैभ्य उवाच, मया किं करणीयं वद, कथञ्चाहं धन्य इति उक्तः ? स उवाच, यतस्त्वं वेदवादाभिरतो गयां समासाद्य पितॄन् पिण्डाद्यैस्तर्पयसि। एवमुक्त्वाऽसौ गयामाहात्म्यं तत्र पिण्डदानफलञ्च वर्णयामास। रैभ्यश्च गदापाणिहरेः स्तोत्रं कर्त्तुं प्रवृत्तः। ततो रैभ्येन संस्मृतो हरिः पीतवासाः सहसा प्रादुर्बभूव, उवाच च, भो रैभ्य तव भक्त्या स्तुत्या च तुष्टोऽस्मि तद्वाञ्छितं ब्रूहि। रैभ्य उवाच, यत्र सनकादयस्सन्ति त्वत्प्रसादात्तत्र वसेयमिति। एवमस्त्वित्युक्त्वा नारायणोऽन्तरधीयत, रैभ्यश्च स्वाभिलषितं स्थानं गतवान्।

अष्टमाध्यायारम्भे वराहेणोक्तमिदानीं वसुशरीरनिर्गतस्य व्याधस्य वृत्तं शृणु। स हि तथा निर्गतश्चतुर्वर्षसहस्रपरिमितं कालं स्ववृत्त्या यापयामास। स प्रत्यहमेकैकं वनेचरं मृगं हत्वा भृत्यकुटुम्बातिथिहुताशानां प्रीणनं करोति स्म। स विचक्षणो मिथिलायां निवसन् पर्व्वणि पर्व्वणि पितॄणां श्राद्धं कुर्व्वन्, अग्निं परिचरन्, प्रियं सत्यञ्च वदन् प्राणयात्रामकरोत्। एवं नि[illegible]सतस्तस्य धर्म्मबुद्धिरर्ज्जुनको नाम मुनिवर्ज्जितेन्द्रियः पुत्रोऽ[illegible]नका नाम काचिद्वरवर्णिनी कन्या चाऽजायत। अथ सा क[illegible]या यौवनवयसि मतङ्गपुत्राय प्रदत्ता।

साऽपि श्वशुरयोर्भर्त्तुश्च शुश्रूषणपराऽभवत्। अथैकदा सा श्वश्वा उक्ता त्वं व्याधपुत्री ततस्तपश्चर्त्तुं भर्त्तुराराधनञ्च न जानासि। सा स्वल्पापराधेनैवमुक्ता रुदती पितुर्वेश्म गता। ततः सा पित्रा रोदनकारणं पृष्टा सर्व्वं श्वश्रूवृत्तं कथितवती। तदाकर्ण्य तत्पिता मतङ्गस्य गृहं जगाम। तत्र मतङ्गेन सादरं प्रत्युद्गृहीत आगमनकारणं पृष्टश्च व्याध उवाच, अहं चैतन्यवर्ज्जितं किञ्चिद्भोक्तुम् इच्छामि, तेन भवतोगृहे समागतोऽस्मि। मतङ्गः प्रत्यवादीत्, गोधूमा व्रीहयश्च मम गृहे संस्कृताः सन्ति, यथाकामं भुज्यताम्। व्याध उवाच, ते कीदृशाः सन्तीति द्रष्टुमिच्छामि। मतङ्गेन च शूर्पे कृत्वा दर्शिता गोधूमा व्रीहयश्च। धर्म्मव्याधस्तु तान् दृष्ट्वा स्वासनादुत्थाय गन्तुमारेभे, मतङ्गेन निवारित उक्तश्च किमर्थं मद्गृहे उत्तममन्नं पाचयित्वा त्वयाऽभुक्त्वैव गन्तुमारब्धम्। व्याध-उवाच, त्वं प्रत्यहं सहस्रशः कोटिशश्च जीवान् हंसि तत ईदृशस्य पापस्यान्नं कः साधुर्भुङ्क्ते। अथाचैतन्यमन्नं सुसंस्कृतं विद्यते चेत् तदा सम्भोक्ताऽस्मि। अहं कुटुम्बार्थे प्रत्यहं पशुमेकं हन्मि तन्मांसं सत्कृत्य पितृभ्यो दत्त्वा सानुगो भुञ्जे। त्वन्तु बहून् जीवान् हत्वा सततं सानुगः सकुटुम्बश्च भुङ्क्ते, ततस्त्वदन्नमभोज्यं वेद्मि। ब्रह्मणा तु पुरा ओषध्यः सर्व्ववीरुधश्च यज्ञार्थं सृष्टाः, यज्ञानन्तरं तासां फलादीनि भक्ष्याणि। दिव्यो, भौमः, पैत्रो, मानुषो, ब्राह्मश्च पञ्च महायज्ञा ब्राह्मणानां हितार्थाय ब्रह्मणा पुरा निर्म्मिताः। यज्ञैरेवैतैरस्माकं

विशुद्धिर्भवत्यन्यथैतेन व्रीहय एकैके मृगपक्षिणोमत्स्याः, तेषा-मन्नञ्च दात्रभोक्तृणां महामांसन्तु विज्ञेयं; भवत्वहं तव पुत्राय वरवर्णिनी दुहिता दत्ता, सा च त्वद्भार्य्यया जन्तुघातकस्य दुहितेति विगर्हिता, अस्मादेव कारणादहं तव गृहस्याचारं देवपूजामतिथिसत्कारञ्च समीक्षितुमागतः, परमेतेषामेकमपि कुर्व्वन् न दृष्टस्मे। तदहं पितॄणां श्राद्धकाम्यया गन्तुमिच्छामि। हे तपोधन त्वत्सुतेन मत्सुता यदूढ़ा, तेन मया महत्त्वं जीव-घातस्य प्रायश्चित्तञ्च सम्प्राप्तम्। एवमुक्त्वा समुत्थाय च स सर्व्वान् नारोजनान् मा स्नुषाभिः समं क्वचित् श्वश्रूा विश्वासो भवतु मा च स्नुषा कदाचिच्छ्वश्रूं जीवन्तीमिच्छेदिति शशाप। एवं शप्त्वाऽसौ स्वगृहं प्रतिगतः। तत्र च देवान् पितॄंश्च भक्त्या सम्पूज्य स्वपुत्रमर्ज्जुनकं नाम स्वाधिकारे संस्थाप्य पुरुषोत्तमाख्यं तीर्थमाशु जगाम। तत्र गत्वा समाहितोविष्णुस्तोत्रं पठं-स्तपश्चकार। तेन स्तवेन तुष्टो भगवान्विष्णुः स्वयमस्य पुरो-गतोबभूव, उवाच च वरं वृणिष्वेति। इत्युक्तोऽसौ धर्म्मव्याधः स्ववंशीयस्य सर्व्वज्ञानोदयमात्मनश्च विष्णौ लयं प्रार्थयामास, विष्णुश्च यथाभिलषितं वरं दत्त्वाऽन्तर्दधे।

नवमाध्यायारम्भे पुनर्धरण्या "आदौ कृतयुगे विश्वमूर्त्तिना नारायणेन किं कृतमिति" श्रीवराहः पृष्टः प्रत्युवाच, हे धरे, पूर्व्वमेक एव नारायण आसीत् नान्यत् किमपि, स्वच्छन्दकर्म्म-कृत् स एकः सन्नेव रतिं लेभे, द्वितीयमिच्छतस्तस्य चिन्ता बुद्धिरूपा क्षणं भास्करसन्निभा बभौ। तस्या अपि ॐ-मेति द्विधा

चिन्ता भूता ततोऽसौ मत्यं उमेत्येकाचरीभूता व्यवस्थिता, ततश्च भूरादिजनपर्य्यन्तान् लोकान् ससर्ज्ज। येयं भगवतः प्रकृत्यात्मिका मूर्त्तिः स स्वयं हरिः। एवं क्रमेण निखिलजगत्-सृष्टिं कथयामास। अथ लोकसृष्टिमभिधाय भगवान् श्रीवराहमूर्त्तिः सङ्क्षेपादिदमुवाच —

"यावत् स्वमूर्त्तिर्भगवांस्तावदेव जगत्त्विदम्।
कूटस्थे तल्लयं याति विकृतस्थे विवर्द्धते॥"

ततो द्वयमाध्यायारम्भे वराहेणोक्तम्, भूतभावनो भगवानेवं सर्व्वं जगत् सृष्ट्वा विरराम, सृष्टिश्च स्वयं ववृधे। इत्थं सृष्टौ विवर्द्धमानायां देवाः सर्व्वैर्महर्द्धिर्यज्ञैर्भगवन्तं नारायणं तोषयितुं बहुवर्षसहस्राण्ययजन्त। सन्तुष्टश्च भगवान् तेषां प्रत्यक्षत्वं जगाम। उवाच च भो देववराः किं कार्य्यं ब्रूत। देवा ऊचुः हे विश्वमूर्त्ते वयं सर्व्वे भवन्तं शरणमागता अस्मान् पूज्यान् कुरुष्व। तैरेवमुक्तो हरिस्तथैव करिष्यामीत्युक्त्वाऽन्तरधीयत। देवास्तं स्तुवन्तो निजोकांसि जग्मुः परमेशश्च त्रिविधं सात्त्विकं राजसं तामसञ्च भावमास्थितः। स एवं त्रिधा भूत्वा देवानाराधयामास, ततो लोकोऽपि त्रिविधोऽभवत्। स च प्रभुः कृते नारायणस्त्रेतायां रुद्ररूपो द्वापरे यज्ञमूर्त्तिः कलौ तु बहुरूपोऽभ्यजायत। हे सुश्रोणि तस्यादिकर्त्तुर्विष्णोश्चरितं शृणु। कृतयुगे सुप्रतीको नाम महाबलो राजासीत्, तस्य भार्य्याद्वयं तुल्यरूपं मनोरमं बभूव। एका विद्युत्प्रभा, द्वितीया कान्तिमती। यदा राजा तयोः पुत्रं न लेभे तदा मुनिश्रेष्ठं

वीतकल्मषमात्रेयं विधिना तोषयामास । दीर्घकालं वरार्थिना तेन तोषितः स ऋषिर्यावद्वरदानोन्मुखोऽभूत् तावदिन्द्रोऽपि तस्य पार्श्वेन देवसैन्यैः परिवृतः स्वकीयमैरावतमारुह्य गतः; प्रीतो मुनिस्तं भक्तिहीनमवलोक्य तस्मै चुकोप, शापञ्चाग्रे समर्ज्ज । "यस्मात्त्वया ममाऽवज्ञा कृता, भो दिवस्पते ततस्त्वं स्वराज्याच्चलितोऽन्यस्मिँल्लोके वत्स्यसीति । तच्च राजानमुवाच, भो राजंस्ते दृढ़विक्रम इन्द्ररूपोपमः प्रतापवान् विद्याप्रभावतत्त्वज्ञः पुत्रोभवितेति । स च क्रूरकर्म्मा दुर्ज्जयोऽतिबली भविष्यतीत्युक्त्वा महर्षिः स्वस्थानं गतः । अभवच्च विद्युत्प्रभायां गर्भसञ्चारः । सा काले पुत्रमेकं सूतवती । तस्याः पुत्रो दुर्ज्जयाख्योबभूव । मुनिः स्वयञ्च तस्या जातकर्म्मादिसंस्कारकर्म्माणि कृतवान् । स च पुत्रस्तस्य मुनेर्यज्ञप्रभावात् शुचिः सौम्योवेदशास्त्रार्थविद्यायां पारगो धर्म्मिष्ठश्च बभूव । तस्य राज्ञो या द्वितीया कान्तिमतीति पत्न्यासीत् तस्यां वेदवेदाङ्गपारगो सुद्युम्ननामा पुत्रो बभूव । अथ महता कालेन स राजा वाराणस्यधिपः सुप्रतीको दुर्ज्जयं पुत्रं योग्यमात्मनश्च वृद्धभावमवलोक्य तस्मिन्राज्यधुरं न्यस्तुमना बभूव । स बहु विचिन्त्य तस्मै राज्यं ददौ स्वयञ्च चित्रकूटाख्यं पर्व्वतं गतवान् । दुर्ज्जयोऽपि तन्महद्राज्यं हस्त्यश्वरथैः संयोज्य राज्यवृद्धिं प्रति चिन्तयामास । स वाहिनीं समेतां कृत्वा क्रमेण भारतकिम्पुरुषहरिरोमावतकुरुभद्राश्वकेतुमालप्रभृतीनि वर्षाणि जिगाय, जित्वा च जम्ब्वाख्यमेतद्द्वीपं, यावद्देवराजं विजेतुमना मेरुपर्व्वत-

मारुह्य गन्धर्व्वदानवगुह्यककिन्नरान् जेतुमारेभे तावद्ब्रह्मपुत्रो नारदो मुनिर्देवराजाय तस्य जयवार्त्तां जगाम। देवराजश्च तदाकर्ण्य त्वरान्वितो लोकपालैः समेतश्च तं प्रति प्रस्थितः। परमचिरेण तदस्त्रनिर्ज्जितो लोकपालैः समं मेरुपर्व्वतं विहाय मर्त्त्यलोके समागतः। दुर्ज्जयश्च सुरान् जित्वा प्रतिनिवृत्य च गन्धमादनपृष्ठे स्कन्धावारं निवेश्य स्थितस्तावद्द्वौ तापसौ समागम्य तमब्रूतां राजन् त्वया सर्व्वे लोकपालाः स्वाधिकाराबिराकृताः, लोकपालैश्च विना न जगत् प्रवर्त्तेत तदावाभ्यां तत्पदं देहि। ताभ्यामेवमुक्ते दुर्ज्जयः प्राह कौ भवन्ताविति, तावूचतुरावां विद्युत्सुविद्युन्नामानावसुरौ लोकपालानां सर्व्वं कर्म्म कर्त्तुमिच्छतौ। ततस्तौ दुर्ज्जयेन स्वर्गं सन्निवेश्य लोकपालौ कृतौ। अथ दुर्ज्जयो मन्दरोपरि धनदस्य नन्दनसन्निभं दिव्यं वनं दृष्ट्वा मुदा तस्मिन् यावद्बभ्राम, तावत् सुवर्णवृक्षाधः कन्याद्वयमपश्यत्। दृष्ट्वा त्वतीव रूपसम्पन्नं कन्याद्वयं विस्मयाविष्टो यावत् के इमे शुभलोचने एवं सञ्चिन्त्य क्षणमेकं व्यवस्थितः, तावत्तस्मिन् वने द्वौ तापसावलोकयत्। तौ दृष्ट्वा राजा परां मुदं प्राप्य प्रीत्या तूर्णं द्विपादवतीर्य्य तयोर्नमश्चकार। अथोपविष्टस्ताभ्यां पृष्टः कस्त्वं कुतः कस्य वाऽसि। ततो राजा प्रहस्य तावब्रवीत् सुप्रतीक इति विश्रुतः कश्चिद्राजाऽभूत्। अहं तस्यात्मजो दुर्ज्जयो नाम। पृथिव्यां सर्व्वान् नरपतीन् विजित्य स्वर्गमपि स्ववशमानीय सम्प्रतीहागतोऽस्मि भवन्तौ च काविति कृपया ब्रूतम्। तावूचतुरावां स्वायम्भुवमनोः सुतौ

हेहप्रहेहनामानौ। आवां देवविनाशाय मेरुपर्व्वतं गतौ। जिगाय च आवयोर्महत्सैन्यं देवानामसंख्यानि सैन्यानि। ततस्ते देवाः क्षीराब्धौ शयानं हरिं शरणं गताः। तस्मै चावयोर्जयवृत्तं प्रणतिपूर्व्वकं विज्ञापयामासुर्ययाचिरे चाभयम्। ततो देवैरेवमर्थितो हरिस्तानुवाचाहं तौ हन्तुं यास्यामीति। एवमुक्ता देवा मेरुपर्व्वतं प्रति प्रतस्थिरे। तत्रागत्य तं जनार्द्दनं मनसा सस्मरुः। स च चक्रधरो देवः स्मृतमात्र एवास्मत्सैन्यं प्रविश्य माययात्मानं सहस्रधा कृत्वा क्षणेनावयोरखिलं चतुरङ्गबलं निहत्यावाञ्च शेषौ दृष्ट्वान्तर्द्धानं गतः। अतःपरमावान्त्वमेव शरणं गतौ। हे राजन् त्वमावयोर्मित्रतनयः, इमे आवयोः कन्ये त्वमेते गृहाण। एतयोरेका सुकेशीनामापरा च मिश्रकेशीति। एवमुक्तो राजा ते कन्ये भार्य्यार्थं यथाविधि जग्राह। ततो राजा परया मुदान्वितः स्वकं राष्ट्रं प्रत्याजगाम। ततः कालेन तस्य राज्ञः सुकेश्यां प्रभवो नाम मिश्रकेश्याञ्च सुदर्शनो नाम पुत्रो बभूव। अथ कदाचिद्राजा मृगयार्थं वनं गत्वा गौरमुखनामानं कञ्चित् तपस्यन्तमकल्मषं मुनिं ददर्श। प्रविवेश च तस्य रम्यमाश्रमपदम्। इति दशमाध्यायः।

अथैकादशाध्यायः। अथाश्रमपदं प्रविष्टस्य राज्ञो गौरमुखो मुनिः स्वागता[illegible]क्रियापूर्व्वकं पूजां चकार उवाच च, भो नृपश्रेष्ठ अहं स्वशक्त्या सानुगस्य ते भोजनं कारयिष्यामि वाहाः प्रमुच्यन्तामिति [illegible] मुनौ तूष्णीं स्थिते राजा

स्वसहायैरन्वितस्तत्र स्थितिं चकार। अथ गौरमुखो मयाऽस्य किं भोजनं देयमिति विचिन्त्य मनसा नारायणं देवं सस्मार, गङ्गायां स्नात्वा भक्त्या तं तुष्टाव च। तस्य मत्या जगतां पतिर्हरिस्तुतोष, तस्मै स्वकं रूपं दर्शयाम स च। उवाच च तं मुनिं वरं ब्रूहीति। अथ मुनिस्तपसो उन्मील्य साक्षाद्गरुडध्वजं विष्णुरूपं दृष्ट्वा विस्मयोत्फुल्ललोचनः कृताञ्जलिस्तं देवं शिरसा ननाम। अब्रवीच्च देहि मेऽतिथिसत्कारसामर्थ्यमिति। एवमर्थितोहरिस्तस्मै चिन्तामणिं सुमहाप्रभमणिञ्चैकं समर्प्यान्तर्दधे। मुनिरपि तद्वरप्रभावात् तस्य राज्ञोऽनिमिषं सत्कारं कृतवान्। ततः परेद्युः प्रभाते राजा मणिप्रभावं सर्व्वं प्रत्यक्षतोऽवगम्य तस्य जिघृक्षां चकार। ऋषिणा सादरं विसृष्ट आश्रमस्य किञ्चिद्वहिर्गत्वा तत्रैव स्थितिं कुर्व्वन् विरोचनाख्यं मन्त्रिणमृषेः सकाशे मणियाचनार्थं प्रेषयामास। स च विरोचनस्तमृषिं समागत्य मणिं याचितुमुद्यत उवाच, राजा सर्व्वेषां रत्नानां भाजनं, ततस्तस्मै मणिः प्रदीयताम्। अमात्येनैवमुक्तश्च गौरमुखोऽब्रवीत् विप्रः प्रतिग्राही राजा च दाता भवति। तत् कथं स राजा भूत्वा स्वधर्म्मविरुद्धमाचरति। त्वं नृपान्तिकं गत्वैतद्ब्रूहि। शीघ्रं नृपान्तिकं गच्छ। तेनैवमुक्तो दूतो नृपान्तिकं गत्वा तदुक्तं सर्व्वं कथयामास। ततो ब्राह्मणभाषितं श्रुत्वा क्रोधपरीतात्मा दुर्ज्जयो राजा नीलनामानं सामन्तमुवाच, सत्वरं याहि ब्राह्मणान्मणिं गृहीत्वा तूर्णमागच्छ। एवमुक्तो नीलो बहुसेनापरिवृतो विप्रस्य वन्य-

माश्रमं प्रति जगाम। तत्राग्निहोत्रशालायां तं मणिमाश्रितं दृष्ट्वा स नीलः स्यन्दनाद्भूतलेऽवततार। तस्मिन् परमदारुणे नीलेऽवतीर्णे तस्मान्मणेः सरथाः सध्वजाः साश्वाः सगर्वाः सासि-चर्म्मिणः सधनुष्काः परमदुर्ज्जया योधा निर्जग्मुः। हे महाभागे तान्नामतः कथयामि शृणु। इत्युक्त्वा भगवान् तेषां नायकानां नामानि कथितवान्। नायकाश्च पञ्चदशासन्। ते च विवि-धायुधपाणयो योद्धारोऽभिरे। ततस्तस्मिन् युद्धे राज्ञा महत् कदनमभवत्। हेतृप्रहेतृभ्यां च जामातुर्युद्धवृत्तमाकर्ण्य सदै-त्याभ्यां तत्रागतम्। यावत्स घोरः सङ्गरो व्यवर्द्धत, तावत् गौरमुखो मुनिः समित्कुशादीन्यादायागत्य तत्र भीमदर्शनं संग्रामं दृष्ट्वा विस्मयमाप। ततस्तत्र युद्धे मणेः कारणत्वमाकर्ण्य भगवन्तं नारायणं सस्मार। स चात्र चतुर्भुजस्वरूपेण तस्य दर्शने तस्थौ। अथ ऋषिणा प्रार्थितः ससैन्यं तं विनाशयामास। तान् हत्वा हरिस्तमृषिमुवाच यस्मादस्मिन् स्थाने निमि-षेण सर्व्वं दानवकुलं निहतं ततोऽरण्यमिदं नैमिषारण्यसंज्ञितं ब्राह्मणानां परं निवेशनं भविष्यति। तथाऽस्मिन्नरण्ये अहमेते च पञ्चदश दैत्यानां सैन्यनायकाः सदा याज्यास्ते च कृतयुगे मणिजा राजानो भविष्यन्ति। इत्युक्त्वा स देवोऽन्तर्दधौ, गौर-मुखश्च स्वाश्रमान्तः प्रविवेश।

अथ द्वादशाध्यायारम्भे वराह उवाच, ततः स पार्थिवो नारायणाग्निना सर्व्वं दानवकुलं निहतमाकर्ण्य चिन्तयामास, चित्रकूटे नारायणो राघव इति कीर्त्त्यते, ततोऽहं तत्र गत्वा

नामसंज्ञाभिस्तं हरिं स्तौमि। इति विचिन्त्य महापुण्यं चित्र-कूटं गत्वा स्तोत्रैस्तं तुष्टाव। अथ तेन स्तुतो देववरः प्रसन्नो राज्ञः सुप्रतीकस्य मूर्त्तिं प्रदर्श्य वरं वृणीष्वेति उवाच। इत्युक्तः स राजा नारायणवपुषि लयं प्रार्थयामास। नारायणस्तथे-त्युवाच। इत्थमितिहासं वर्णयित्वा वराह उवाच किमन्य-च्छ्रोतुमिच्छसीति। वृत्तमिदं नन्दिनीमधिकृत्य वशिष्ठविश्वा-मित्रयोर्विवादमनुस्मारयति।

अथ त्रयोदशाध्यायारम्भे धरणी पप्रच्छ ततः श्रीमान् गौर-मुखः किं कर्म्म चकारेति। ततो वराह उवाच, ततो भगवता निमिषेण तत्कर्म्म कृतं दृष्ट्वा तं देवमारिराधयिषुः प्रभासं नाम तीर्थं जगाम। तत्र नारायणं देवमाराधयतस्तस्याश्रमे महा-योगी महामुनिर्मार्कण्डेयः समाजगाम। तमागतं दृष्ट्वा स गौरमुखः पाद्यार्घ्यादिभिः परया भक्त्या मुदा चाराधयामास। ततस्तं कौशासनसमासीनं पप्रच्छ किं मया कार्य्यं शाधीति। एवमभिहितो मार्कण्डेय उवाच। आद्यो नारायणो देवस्तस्मात् ब्रह्मा समुत्पन्नः सोऽपि सप्त मुनीन् ससर्ज्ज। ते त्वात्मध्यानरता बभूवुस्ततो ब्रह्मा तानशपत् सर्व्वे प्रभ्रष्टज्ञानिनो भविष्यन्तीति। एवं ब्रह्मणा शप्तास्ते वंशकरान् पुत्रानुत्पाद्य त्रिदिवं ययुः। तेषु प्रयातेषु तत्पुत्राः श्राद्धदानेन तर्पयामासुः। ततो गौरमुखः पप्रच्छ, कियन्तः पितृगणा इति। मार्कण्डेय उवाच, ते मरीच्या-दयः सप्त स्वर्गे पितरः स्मृताः। तेषां चत्वारो मूर्त्तिमन्तोऽन्ये त्रयो ह्यमूर्त्तयः। तेषां लोकाः सन्तानका नाम, ते देवानां

पितरस्तान् देवा यजन्ति। एते पुनर्लोकविभ्रष्टा युगान्तेषु ब्रह्मवादिनो जायन्ते। एते पितरः श्राद्धे योगिनां योगवर्द्धनाः योगबलेनाप्यायिताश्च। तेषां सृष्टिर्हि सोमपानां प्रथमः सर्ग उच्यते। एतेषां याज्या मरुद्गणाः, तेषामपि सनकाद्या वैराजाः, सप्त गणाश्च तेषां, एषा वै पितृसन्ततिः। तेऽपि पृथग्वर्णैर्याज्याः शूद्रोऽपि वर्णत्रयाभ्यनुज्ञातस्तान् सर्व्वान् पितॄन् यष्टुमर्हति। शूद्रस्य तु ते पृथक् शूद्रजातयः पितरः सन्ति। वस्वादीनां पितरः कश्यपादयः, वर्णानाञ्च वस्वादयः, गन्धर्व्वाख्या अपि। एष ते पैतृकः सर्ग उद्देशेन कथितः, यतोऽस्यान्तो नास्ति। इदानीं श्राद्धस्य कालान् वक्ष्यामि, तान् शृणु, श्राद्धयोग्यं द्रव्यं अथवा विशिष्टं द्रव्यं दृष्ट्वा श्राद्धं कुर्व्वीत, तथा व्यतिपाते, अयने, विषुवे, चन्द्रसूर्य्ययोः ग्रहणे, संक्रमदिवसेषु, नक्षत्रग्रह-पीड़ासु, दुष्टस्वप्नावलोकने, नवशस्यागमे च श्राद्धानि कुर्व्वीत। अमावास्या चेत् स्वातिविशाखार्द्रायोगिनी तदा तत्र श्राद्धैः पितॄणामष्टवार्षिकी तृप्तिर्भवति। यदा अमावास्या पुष्यापुनर्वसुयुक्ता भवति, तदा तत्र श्राद्धैः पितॄणां द्वादशाब्दिकी तृप्तिर्भवति। एवं बहुविधान् श्राद्धकालानुक्त्वाऽन्ततः श्लोकोऽयं कथितः—

"वित्तञ्च वित्तञ्च नृणां विशुद्धं
शस्तश्च कालः कथितो विधिश्च।
पात्रं यथोक्तं परमा च भक्ति-
र्नृणां प्रयच्छन्त्यभिवाञ्छितानि

ततः पितृगीताः श्लोकाः पठिताः। ततोऽसमर्थस्य विधि-रुक्तः। यथाऽन्नदानासमर्थो वन्येन शाकेन स्वशक्तितः श्राद्धं कुर्य्यात्, तत्रासमर्थो द्विजवर्य्याय मितांस्तिलान् दद्यात्, सर्व्वा-भावे वनं गत्वा पितॄनुद्दिश्य रोदनं कुर्य्यात्। यथा—हे पितरः न मे वित्तं धनम् अन्यच्च किमपि श्राद्धयोग्यं वस्तु विद्यते, तन्मे भक्त्यैव भवन्तस्तृप्यन्त्विति। एवं कृतेऽपि श्राद्ध-फलमविकलं भवति।

अथ चतुर्द्दशाध्यायारम्भे मार्कण्डेयेन श्राद्धभोजनयोग्याः श्राद्धवर्ज्जनीयाश्च ब्राह्मणाः कथिताः, श्राद्धानुष्ठानपद्धतिश्च विवृता।

पञ्चदशाध्यायारम्भे धरण्या पुनर्व्वराहदेवः पृष्ट एवं श्राद्ध-विधिं श्रुत्वा महामुनिर्गौरमुखः किं कृतवानिति। वराह उवाच, महामुनिर्गौरमुखस्तत् पितृतत्त्वं श्रुत्वा जन्मशतं सस्मार। तत्र धरणी पप्रच्छ, असौ गौरमुखोऽन्यस्मिन् जन्मनि क आसीत् कथन्तेन पूर्व्वजन्मशतं स्मृतं स्मृत्वा चासौ किञ्चकार। वराह उवाच। अन्यस्मिन् जन्मनि स स्वयं साक्षाद्भृगुरासीत् महामुनिर्मार्कण्डेयश्च तदन्वयसम्भूतः, पुत्रैः प्रबोधितः सुगति-म्प्राप्स्यथेति ब्रह्मणा पूर्व्वमुक्तस्ततोऽसौ मार्कण्डेयेनाद्य बोधितः। इदानीं पूर्व्वजन्मस्मरणकारणं शृणु समासेनः कथयामि। स द्वादश संवत्सरान् पितॄणां श्राद्धं कृत्वा सर्व्वलोकेषु विश्रुतं प्रभास-ङ्गत्वा हरिं स्तोतुमारेभे। एवं नमस्यतस्तस्य शङ्खचक्रगदा-धरो हरिः प्रत्यक्षतां गतः। तं दृष्ट्वा तस्याप्रतिहतं ज्ञानं

प्रादुर्बभूव। ततः स शाश्वते परब्रह्मणि लयं गतवान्।

षोड़शाध्यायारम्भे धरण्युवाच, पूर्व्वं दुर्व्वाससा शप्त इन्द्र सर्व्वदेवसमन्वितो मर्त्यमुपागम्य तस्मिन् दुर्जये विनिपातिते किञ्चकारेति। स्वर्गे च विद्युत्सुविद्युच्च किञ्चक्रतुः कृपया कथयेति। वराह उवाच, दुर्जयेन जितः शतक्रतुर्देवैर्यच्चमहोरगैश्च सह वाराणसीमाश्रित्य स्थितः। विद्युत्सुविद्युच्च तदा योगमास्थाय योगमायया लोकपालायत्तं कृत्स्नं कर्म्म चक्रतुः। ततस्तौ तं दुर्जयं मृतं श्रुत्वा समुद्रान्तःस्थितं चतुरङ्गमानीय देवान् प्रति जग्मतुः। तदा तौ दैत्यौ महता सैन्येन हिमवन्तं पर्व्वतमाश्रित्य स्थितौ। देवा अपि कृतदंशा महत् सैन्यं संहृत्य ऐन्द्रं पदमभीप्सवो मन्त्रयाञ्चक्रुः। ततो मुनिराङ्गिरसो देवेभ्यो गोमेधप्रभृतीन् यागान् यष्टुमुपदिदेश। एवमुक्ता देवा गाः पशूंश्चानुकल्प्य प्रचरणार्थं मुमुचुस्तद्रक्षणार्थं च सरमां ददुः। हे धराधरे ताश्च गावो देवशुन्या सरमया रक्ष्यमाणा यत्र तेऽसुरा आसन् चरन्त्यस्तत्र जग्मुः। ते चासुरास्ता गावो दृष्ट्वा पुरोहितं शुक्रमूचुः, हे ब्रह्मन् देवशुन्या सरमया रक्ष्यमाणा गाः पश्य। एवमुक्तः शुक्रः प्रत्युवाच, भो असुराः, गावो ह्रियन्तां मा विलम्बथ। एवमुक्ता दैत्या यदृच्छया तागा जह्रुः। हृतासु तासु सरमा मार्गान्विषणव्यपदेशेन दितेः पुत्रैरपहृता गा अपश्यत्। दैत्यास्तु सरमां दृष्ट्वा तां क्षीरप्रदानेन प्रमोदयामासुः। जगुश्च क्षीरमिदं पिब देवराजायेमा गा मा निवेदय। एवमुक्ता ते दैत्यास्तां वने मुमुचुः। मुक्ता

सा वेपमाना तूर्णं सुरान् जगाम। देवेन्द्राय नमस्कृत्य तूष्णीं स्थिता। पूर्व्वं देवेन्द्रेण देवशुन्या रक्षार्थं गूढ़ं गच्छन्तीति महाबला मरुत आगताः। तं च सूक्ष्मेण वपुषा तामनुजग्मुः। तं तु समागत्य देवेन्द्राय सर्व्वं वृत्तं कथयामासुः। ततो देवराजेन गवां वृत्तं पृष्टा सरमा न जानामीत्यब्रवीत्। मरुद्भ्यः श्रुतवृत्तस्तु देवराजः क्रुधा समुत्थाय तां शुनीं पदा समताड़यत्। तथाहता सा क्षीरं ववाम। अथ क्षीरं वमन्ती सा शुनी यतो दुद्राव देवराजश्च ससैन्यस्तामनुगतः। एवं तामनुगच्छता देवेन्द्रेण गोहारकान्दैत्यान्निहत्य गावः समुद्धृताः। ततो देवराजः परया मुदा ता गाः समानीय बहुविधान् यज्ञान् वितेने। तैर्यज्ञैश्च देवेन्द्रस्य बलं ववृधे। तेन बलेनासुरान् निःशेषं विजित्य पुनः स्वाधिकारं प्राप। य इदमुपाख्यानं शृणोति स गोमेधस्य फलं लभते। राजा च भ्रष्टराज्यं पुनः प्राप्नोति।

सप्तदशाध्यायारम्भे धरणी वराहदेवं पप्रच्छ, गौरमुखमणिसम्भूतेभ्यो नरपुङ्गवेभ्यो भगवान् "त्रेतायुगे राजानो भवितारः" इति वरं ददौ। इदानीन्तेषां वृत्तं यथायथं श्रोतुमिच्छामीति। वराह उवाच, सुप्रभोनाम मणिजः श्रुतकीर्त्तिनामकस्य राज्ञः पुत्रत्वमापेदे। स कदाचिद्गहनं वनं प्रविश्य तस्मिन् महातपोनामकस्य कस्यचित्परमधार्म्मिकस्य महात्मन आश्रमं प्रविवेश। तस्मिन् प्रविश्य मुनिना सम्यक् सत्कृतः कृतासनपरिग्रहस्तं मुनिपुङ्गवं प्रणम्य तस्मै मोक्षोपायं पप्रच्छ।

मुनिश्चोवाच—

"नारायणं नरकहरं सुरेशं
भक्त्या नमस्कुर्व्वंति यो नृपेश ।
स वीतशोकः परमं विशोकं
प्राप्नोति विष्णोः पदमव्ययं यत् ॥"

नमस्कुर्व्वंतीत्यादिकम् । ततो राज्ञा विष्णुमाहात्म्यं पृष्टः सोऽकथयत् "सर्व्वे देवाः सपितरो ब्रह्माद्याश्चाण्डमध्यगा विष्णोः सकाशादुत्पन्ना"इति ततो विष्णुदेहात्सर्व्वेषामुत्पत्तिप्रकारमकथयत् ।

अष्टादशाध्याये पूर्व्वोक्तेन राज्ञा प्रजापालेनाग्न्यश्विनी-कुमार-गौरी-गणपति-प्रभृतीनां सर्व्वेषां देवानामुत्पत्तिं पृष्टः महातपास्तत्सर्व्वं कथयामास । अथैकदा क्रीडतः परमात्मनः सर्व्वेशस्य नारायणस्यात्मनि भोगेच्छा बभूव । ततः स विकारं प्राप, विकुर्व्वतस्तस्मात्तदा महानग्निः समुत्थितः । असावपि वह्निविकारं समरोचयत्, विकुर्व्वतस्तस्माद्वायुः समपद्यत, विकृताच्च वायोराकाशम् । तच्च तेजोऽभ्भसाश्लिष्टं तेजसा शोषितं तोयं व्योममार्गे पिण्डीभूतं सर्व्वं काठिन्यं समपद्यत । तच्च पृथ्वीत्वमुपागतम् । चतुर्णांयोगकाठिन्यादेकैकगुणवर्द्धितः पृथ्वी पञ्चगुणा, सा च पृथ्वी क्रमेण काठिन्यं कुर्व्वती ब्रह्माण्डं समपद्यत । तस्मिन्नारायणो देवो विविधाः प्रजाः सिसृक्षुः प्राजापत्येन रूपेण संस्थितः । ततोऽस्य दारुणः कोपोऽजायत । स च कोपएवाग्निर्बभूव । ततोऽग्नेर्हव्यवाहनादिनाम्नां व्युत्पत्तिः प्रदर्शिता ; यथा हव्यवहनात् हव्यवाहनः, गृहं शरीरं

तत्पतित्वाद्गार्हपत्यं, विश्वनराणां सङ्गतिनयमाद्वैश्वानरः। द्रविणप्रदत्वाद्द्रविणोदाः, पापनिरोधकत्वात्सर्व्वगतत्वाच्चाग्नि-रिति, पूर्त्तिविधायकत्वादिध्म इति।

ऊनविंशाध्यायारम्भे तिथीनां माहात्म्यं वक्तुं प्रक्रमः कृतो यथा, ब्रह्मकोपसमुद्भवोऽग्निर्ब्रह्माणमुवाच, तिथिर्मे दीयता-मिति। ब्रह्मणा च तस्मै प्रतिपत्तिथिर्दत्ता। तस्यां चाग्नि-पूजनफलञ्च कथितम्। अग्निजन्मवृत्तश्रवणेन नराणां सर्व्व-पापविमुक्तिर्भवति।

विंशाध्यायारम्भे प्रजापालेन महातपाः पृष्टः कथं प्राणा-पानौ अश्विनौ सम्बभूवतुरिति। ततस्तेन सूर्य्यसंज्ञासंवादः कथितः। सूर्य्येण बड़वारूपायां संज्ञायां यद्वीजं निहितं तदा-श्रित्यैव प्राणापानावश्विरूपेण जन्म जगृहतुरिति चोक्तम्। तौ चाश्विनौ तीव्रन्तपस्तप्त्वा नारायणं सन्तोष्य देवत्वमापतुः। तौ हि द्वितीयायामुत्पन्नौ ततो द्वितीयैव तयोः पूजायां प्रशस्ता। रूपकामेण द्वितीयायां पुष्पाहारं कृत्वा संवत्सरं यावत्तयोः पूजा विधातव्या।

एकविंशाध्यायारम्भे प्रजापालेन गौरीचरितं पृष्टो महा-तपा उवाच, पूर्व्वं प्रजापतेः कोपाद्रुद्रः सञ्जज्ञे, रोदनात्तु तस्य रुद्र इति नाम बभूव। ब्रह्मा तस्मै भार्य्यार्थं गौरीनाम्नीं स्वमूर्त्तिसम्भवां कन्यां ददौ। अथ सृष्टिकाले ब्रह्मा तं प्रजाः स्रष्टुं प्रणुनोद। स च स्वासामर्थ्यं सूचयित्वा जलमग्नो बभूव। ततो ब्रह्मा तां गौरीं स्वशरीरलीनां कृत्वा पुनर्दक्षादीन् सप्त

प्रजापतीन्मनसाऽसृजत्। दक्षस्य दौहित्राः सवासवाः सर्व्वे देवाः, अष्टौ वसवो, रुद्रा, आदित्या मरुतश्च। दक्षः प्रजापतेः प्रीतये यज्ञमारेभे। तत्र देवा आदित्या वसवो विश्वेदेवः पितरो गन्धर्व्वा मरुद्गणा यावद्भागान् जगृहुः, तावत्कालं पूर्व्वं जलमग्नो रुद्रो जलादुत्तस्थौ,तदा दिव्यानां पृथिवीस्थानां चतसृणां नरजातीनाञ्च सर्गोऽभवत्। स रुद्रो दश वर्षसहस्राणि जले तपस्तप्त्वोत्थाय दक्षसद्मनि ऋत्विजां शब्दान् शुश्राव। ताञ्छब्दान् श्रुत्वा स भृशं चुकोप। अहमेव परमेश्वरेण प्रजाः स्रष्टुमाज्ञप्तः केन पुनरिदं सृष्टमिति विचिन्त्य स भृशं ननाद, नदतस्तस्य श्रोत्रेभ्यो ज्वाला निर्ययुः। तत्र वेताल-भूताः कोटिशः प्रेतभेदाश्च समजायन्त। स ससैन्यो यज्ञभागार्थं दक्षयज्ञं जगाम। तत्र गत्वा स देवैः सह युयुधे, यज्ञश्च विध्वस्तः। ततः पराजितैर्देवैः रुद्रस्य यज्ञभागः कल्पितः। देवैः रुद्रस्य स्तुतिः कृता। रुद्रश्च स्तवेन तुतोष। युयोज च विध्वस्तमपि यज्ञं समग्रेण फलेन। ततो ब्रह्मा रुद्राय गौरीं देहीति दक्षमब्रवीत्। दक्षेण च रुद्राय गौरी दत्ता। ततो ब्रह्मणा कैलासे रुद्रस्थानं कल्पितम्। ततो रुद्रः सगणस्तत्र जगाम। देवाश्च यथास्थानं गताः। ब्रह्मापि दक्षसहितः प्राजापत्यं पुरं ययौ। इत्थं दक्षयज्ञसंवादः सम्यगभिनव इव प्रतीयते। भागवतादिषु दक्षयज्ञवृत्तमन्यथैव वर्णितम्। एवं मरवृत्तमपि।

द्वाविंशाध्याये मत्स्यतपा गौर्य्याः पार्व्वतीत्वं यथाऽभवत्

तहत्तं वर्णयामास। तथाहि कदाचिद्गौरी कैलासे निवसन्ती रुद्रकृतं पितुर्यज्ञविघातमनुस्मृत्य रुद्राय चुकोप। ततः सा कुत्र कलेवरं त्यजामि किंवा स्वयितबान्धवं पितरं गच्छामि इति सञ्चिन्त्य तपस्यार्थं हिमवन्तं महागिरिं जगाम। तत्र महता कालेन शरीरं परित्यज्य शैलसुताऽभवत्। तत्रापि देवं त्रिलोचनं स्मृत्वोग्रं तपश्चकार। एवमुग्रन्तपस्यन्त्यास्तस्या भाव-परीक्षणार्थं शिवः स्वयं द्विजवेशं कृत्वा तत्राजगाम। ततोऽसौ तस्या भावं परीक्ष्य स्वमूर्त्तिं प्रकाशयामास। ततः शिवस्तस्याः पाणिं ग्रहीतुं स्वाभिलाषं सूचयामास। ततः पार्व्वती पितु-रनुज्ञां विना नाऽहं स्वतन्त्रा भवन्तं विवोढुं शक्तेत्युवाच। हिमालयोऽपि सर्व्वं वृत्तं समाकर्ण्य धन्यम्मन्यस्तां तस्मै रुद्राय समर्पितवान्। एतत्सर्व्वं तृतीयायामभवत्। ततो या नारी तृतीयायां लवणं परित्यज्योपवासं करोति, सा महत्सौ-भाग्यं लभते।

त्रयोविंशाध्यायारम्भे प्रजापालः पप्रच्छ, कथं गणपतेर्जन्म, तत्र मे संशयं छिन्धि इति। महातपा उवाच, कदाचिदसत्-कार्य्याणां विघ्नार्थं सेन्द्राः सुराश्चिन्तयामासुः। तथा चिन्तयन्तश्च ते कैलासनिलयस्य भगवतोरुद्रस्य सकाशं गत्वा जगुश्च विघ्न-करान् कांश्चिदुत्पादयितुमर्हसीति। देवैरेवमुक्तो भवः पर-मया मुदा पार्व्वतीं ददर्श। उमां पश्यतस्तस्य मनस्यभूत्कथं व्योम्नि मूर्त्तिर्न दृश्यते। इति विचिन्त्यासौ जहास। हसतः परमेष्ठिनः कश्चित्प्रदीप्तास्यः कुमारोदिशो भासयन् साक्षादपरो

रुद्र इव समुत्पन्नः। तं सुरूपं पार्व्वती निर्निमेषचक्षुषा ददर्श। पार्व्वत्यास्तादृशं भावं दृष्ट्वा महादेवश्चुकोप, तं कुमारञ्च गजवक्त्रस्त्वं लम्बोदरस्त्वञ्च गच्छेति शशाप। एवं शप्तोऽसौ शाप स्वशरीरमधुवत्। शरीरं धुन्वतस्तस्याङ्गरुहेभ्यो जलानि च्युतो निर्दितुस्तेभ्यश्च विविधा गजवक्त्रा विनायका उत्तस्थुः। तैश्च विनायकैः क्ष्मा क्षुभिता बभूव। ततश्चतुर्मुखो विमानमारुह्येदं वाक्यमब्रवीत्, अद्य देवास्त्रिलोचनानुगृहीता धन्याः स्थ इति। पितामहे विगते महादेवस्तं गजवक्त्रं जगाद। त्वं कार्य्यसिद्धिं सम्पादयन्नेतेषां विनायकानां राजा भव। इत्युक्त्वा तं विनायकराज्येऽभिषिच्य देवैः स्तुतोऽन्तर्दधौ। ततो देवा गजवक्त्रं तुष्टुवुः। एषा गणेशोत्पत्तिकथा ब्रह्मवैवर्त्तपुराणादिवर्णितकथातो भिन्नरूपैव। गणपतेस्तिथिश्चतुर्थी।

चतुर्विंशाध्यायारम्भे पृथिव्यां कथं नागानां जन्मेति पृष्टो भगवान्वराहः प्रोवाच, प्रश्नमिमं प्रजापालोऽपि महातपसं पप्रच्छ। ततो महातपा उवाच, प्रजापतेर्ब्रह्मणः कश्यप इति मानसः पुत्र आसीत्। तस्य कद्रुर्नाम दाक्षायणी भार्य्या बभूव। तस्यां स कश्यपोऽनन्तं, वासुकिं, कम्बलं, कर्कोटकं, पद्मं, महापद्मं, शङ्खं, कुलीरकञ्च पुत्राञ्जनयामास। एतेषां सन्तानपरम्परया जगदिदमापूरितम्। सर्पाश्च समन्तात् मनुष्याणां क्षयं कर्त्तुमारेभिरे। ततो मनुष्या ब्रह्माणं शरणं ययुः। जगुश्च सर्पाणां भीषणं वृत्तम्। ततो ब्रह्मा सर्पानाहूय सान्त्वयामास। ततो नागाः पृथक् स्थानं ययाचिरे। ततो

ब्रह्मा तेषां पातालादिस्थानानि कल्पयामास। कथयामास च ये क्रूराः सर्पाः, सुपर्णेन तेषामन्तो भविता, यूयञ्च कालप्राप्तमपकुर्व्वाणञ्च मनुष्यं भक्षयध्वम्। एवं ब्रह्मणा कृतसमयानागाः पातालनिलयं जग्मुः। एतत्सर्व्वं पञ्चम्यां जातम्। अतः सा नागपूजायां प्रशस्ता। अत्राम्लं न भक्षयेत्।

अथ पञ्चविंशाध्यायारम्भे प्रजापालेन महातपा: कार्त्तिकेयजन्म पृष्टः अहङ्कारात्कथं कार्त्तिकेयस्य जन्म इति। महातपा उवाच, सर्व्वेषामेव तत्त्वानां परः पुरुषः स्मृतः, तस्माद्व्यक्तमुत्पन्नमव्यक्तपुरुषयोर्मध्ये महत्त्वं समपद्यत। स चाहङ्कारो महांश्च इत्युक्तः पुरुषस्तु नामतो विष्णुः शिव इति, अव्यक्तञ्चोमा श्रीर्वेति गीयते। तत्संयोगादहङ्कारः, स च देवसेनापतिर्गुह इति कथ्यते। पुरा किल देवदानवयोः सुमहान् संग्रामो बभूव। ततो देवा दैत्यैर्निराकृता भगवन्तं रुद्रमुपगम्य तुष्टुवुः। ततस्तुष्टो रुद्र उवाच, ददामि वः कञ्चित्सेनानाथं विज्वरा भवत। एवमुक्त्वा भगवान् हरः शक्तिं सञ्चोभयामास। ततश्च ज्वलनार्कसमप्रभः कश्चित्कुमारोऽजायत। योऽसौ शरीरगोऽहङ्कारः स एव देवसेनापतिरभूत्। ततः प्रजापाल उवाच, कथं स कृत्तिकापुत्रः, पावकिः, उमातनन्दन इति कथ्यते। आदिमन्वन्तरे तस्यैवमुत्पत्तिरभूत्। गुहस्य द्वितीये जन्मनि तु कृत्तिकापावकाम्बिका उत्पत्तिहेतुत्वं ययुः। तस्य तिथिः षष्ठी भगवता प्रकल्पिता। षष्ठ्यां तस्य पूजां कुर्व्वतोऽपुत्रस्य पुत्रो धनञ्च जायते।

षड्विंशाध्यायारम्भे प्रजापालः पप्रच्छ, कथं ज्योतिषः शरीरस्य मूर्त्तिग्रहणमभूदिति। महातपा उवाच, यदा शक्तिः सनातन आत्मा द्वितीयमैच्छत्तदा तेजः समुत्थितं, सूर्य्यो भास्वानिति च बभूव। तस्य तेजसो यच्छरीरमभवत् स रविः कीर्त्यते, तस्य च जगदुद्भासनादिधर्म्मवत्त्वात् भास्करादीनि नामानि जातानि। एतस्यैव तेजसा पृथक् पृथक् द्वादश आदित्याः सम्भूताः। ततो देवास्तमुग्रतेजसन्तुष्टुवुः। तुष्टश्च स स्वतेजः शमयामास। सप्तम्यां सूर्य्यस्य मूर्त्तिग्रहणमभवत्। ततः सप्तम्यां सूर्य्यपूजनेनाभीष्टफलं जायते।

सप्तविंशाध्याये महातपसाऽन्धकासुरवधकथा कथिता। ब्रह्मणः सकाशाल्लब्धवरोऽसौ दैत्यो देवान् स्ववशमानिनाय। ततो देवा ब्रह्मणा सहितास्त्र्यम्बकं शरणं गताः। रुद्रः सगणोऽन्धकं हन्तुं निर्ज्जगाम। प्रथममन्धकस्य सेनापतिर्नीलनामा दैत्यो हस्तिस्वरूपेण रुद्रान्तिकमागतः, स च सिंहरूपेण वीरभद्रेण हतः। वीरभद्रस्तं निहत्य तस्य चर्म्म रुद्रायार्पितवान्। ततः प्रभृति रुद्रोऽपि गजचर्म्मपटोऽभवत्। अथ रुद्रस्तमन्धकं त्रिशूलेनाजघान। हतस्य तस्य यावन्तो रक्तबिन्दवो भुवि निपेतुस्तावन्तोऽन्धका बभूवुः। ततो रुद्रोऽतिरुषाऽष्टौ मातॄः ससर्ज्ज, ताश्च ब्राह्मी, कौमारी, ऐन्द्री, याम्या, वाराही, वैष्णवी, योगीश्वरी, माहेश्वरी च। ताभिश्च रक्ते शोषिते सोऽसुरः क्षयं नीतः। एतच्च वृत्तमष्टम्यामभुवत्। ततोऽष्टमी मातॄणां तिथिः। अन्धककथा तु रक्तवीजकथया सादृश्यं भजते।

अष्टाविंशाध्यायारम्भे प्रजापालः कथं प्रकृतिः कात्यायनीरूपेण समुत्पन्नेति पप्रच्छ। महातपा उवाच, पुरा किल सिन्धुद्वीपोनाम राजा वेत्रवतीगर्भे वेत्रासुरनामानं दैत्यमुत्पादयामास। स चातीव बलवान् पृथिवीं जित्वा स्वर्लोकमपि जिगाय। ततो देवा ब्रह्माणं शरणं ययुः। तान् दृष्ट्वा ब्रह्मा चणं चिन्तयामास। चिन्तयतस्तस्य पुरतः काचिदष्टभुजा सिंहाधिरूढ़ा कन्या प्रादुरासीत्, सा दिव्यवर्षसहस्रं युद्धा वेत्रासुरं निजघान। अयं वेत्रासुरः, वृत्रासुरस्त्वन्यः स च महेन्द्रेण निहतः। नवम्यामेतत्सङ्घटितमिति तस्या नवमी तिथिः।

ऊनत्रिंशाध्याये महातपसा दिगुत्पत्तिकथा समाख्याता। आदिसर्गे सृष्टिं सृजतो ब्रह्मणः श्रोत्राभ्यां दिशः समुत्पन्नाः। ताश्च क्रमेण इन्द्रादिभ्यः प्रदत्ताः। दिशां तिथिर्दशमी।

त्रिंशाध्याये महातपसा धनदस्योत्पत्तिः कथिता। यथा सृष्टिकामस्य ब्रह्मणो मुखाद्वायुर्विनिर्ययौ, स चातीव प्रचण्डो बभूव। तं ब्रह्मा मूर्त्तोभवेत्युवाच। स च मूर्त्तिमान् बभूव। ततः स धनपतिः कृतः। तस्य तिथिरेकादशी, तत्र योऽनग्निपक्वाशी भवति तस्य धनपतिस्तुष्टः सर्व्वं प्रयच्छति।

एकत्रिंशाध्याये महातपसा विष्णूत्पत्तिकथा कथिता। स च प्रजापालनार्थं मूर्त्तिमत्परब्रह्मैव। तस्य तिथिर्द्वादशी।

द्वात्रिंशाध्याये महातपसा धर्म्मस्योत्पत्तिः कथिता। पूर्व्वं ब्रह्मा प्रथमं प्रजाः सिसृक्षुः पालनञ्च विचिन्तयन् स्थितः। एवं चिन्तयतस्तस्य दक्षिणादङ्गाच्छ्वेतकुण्डलः श्वेतमाल्यानुले-

पमः पुरुषः प्रादुर्बभूव । तं चतुष्पादं वृषाकृतिं दृष्ट्वा
वाच प्रजा इमाः पालय, जगतो ज्येष्ठो भव । असौ कृते चतु-
ष्पादभवत्, त्रेतायां त्रिपात्, द्वापरे द्विपदः, कलौ त्वेकेन पादेन
लोकान् पालयन्ते । स ब्राह्मणानां षोढ़ा, क्षत्रियाणां त्रिधा,
वैश्यानां द्विधा, शूद्राणामेकधेव व्यवस्थितः । स च धर्म्मः
प्रथमं भ्रातुः पत्नीं ताराञ्चिहृक्षुणा सोमेन पीड़ितोऽभूत्
तथा पीड़ितश्च घोरमरण्यमाविवेश । तस्मिन् गते देवा असु
राश्च निर्म्मर्य्यादाः परस्परं बाधितुमारेभे । क्रमेण तेषां महा
युद्धं प्रवहते । तान् युध्यमानान् दृष्ट्वा नारदो ब्रह्माणमुपेत
प्राह । ततो ब्रह्मा तान् युद्धतो निव्वर्त्त्य तैर्धर्म्ममन्वेष्टुं गत
ददर्श च महारण्ये चरन्तं वृषाकृतिं तम् । ततो देवास
तुष्टुवुः । ततः सन्तुष्टोऽसौ प्रसन्नमनास्तानपश्यत् । दृष्टमात्रा
ते धर्म्मरताः शान्तिमुपगताः । ततो ब्रह्मा तस्य त्रयोदशी
तिथिं कल्पयामास । तच्चारण्यं धर्म्मारण्यमिति नाम्ना प्रख्यात
मकरोत् ।

त्रयस्त्रिंशाध्याये महातपसा रुद्रोत्पत्तिः कथिता । अस
तिथिश्चतुर्दशी । इयं च कथा पूर्व्वोल्लिखितरुद्रोत्पत्तिकथय
प्राय ऐक्यं भजते इति न पुनरुक्ता ।

चतुस्त्रिंशाध्याये आत्मनि योगं गतस्य परमेष्ठिनो देहाद्र
वर्णकृतत्विषस्तन्मात्राद्युपस्विनोनिर्ययुः । तान्दृष्ट्वा ब्रह्मा उवा
भवन्तो गृहमेधिनः पितरः सन्त्विति । तत्र ये ऊर्द्ध्ववक्त्रा
नान्दीमुखसंज्ञिताः । अथ पितामहस्तेषां पन्थानं दक्षिणाय

संयमकरोत्। तेषां तिथियामावास्या कल्पिता। तस्याञ्च ते पूज्यन्ते।

पञ्चत्रिंशाध्याये महातपसा सोमसम्बन्धिनी कथा कथिता। अत्रिर्नाम ब्रह्मणो मानसः पुत्रस्तस्य पुत्रः सोमः। स च सप्त-विंशतिं दक्षकन्या उपयेमे, परं रोहिण्यामेवानुरक्तो बभूव। अथ तस्येतराः पत्न्यः स्वपितरमुपगम्य तस्यानौचित्यं विज्ञा-पयामासुः, दक्षः सोममसकृदागत्य समतां कर्त्तुमनुशशास, सोमस्तु तद्वचनं नाकरोत्। ततो दक्षः शशापान्तर्हितो भवेति, सोमः क्षयं गतः। सोमे क्षीणे देवा मनुष्याः पशवो वीरुध-ओषध्यश्च क्षयं प्राप्ताः। ततः सर्व्वे देवाः विष्णुं शरणं ययुः। ततो विष्णुवचनेन ते समुद्रं ममन्थुः। मथिते च तस्मिन् सोमः पुनर्जातः। योऽसौ जीवसंज्ञकः पुरुषो देहिनां देहे तिष्ठति स एव सोमः। तस्य च पौर्णमासी तिथिर्निर्द्दिष्टा।

षट्त्रिंशाध्याये प्रजापालो नृपतिरात्मनोऽपरेषाञ्च मणि-जानां राज्ञां जन्मवृत्तमाकर्ण्य लब्धज्ञानस्तपश्चरणार्थं वृन्दावनं गतवान्, तत्र गत्वा च गोविन्दनामानं हरिं तुष्टाव। ततः स्वकलेवरं त्यक्त्वा मोक्षं प्राप।

सप्तत्रिंशाध्याये पृथिव्या कथं भक्तिमद्भिर्नरैः, स्त्रीभिर्वा, कथ-माराध्यसे इति पृष्टो वराहः प्रोवाच। हे देवि अहं न वित्तै-र्न जपैः किन्तु भावैरेव साध्योऽस्मि। इदानीं भक्तानां कार्य-क्लेशं वदामि। यो मनुष्यः कर्म्मणा मनसा वाचा मच्चित्तो भवेत्, तस्य विविधानि व्रतानि वक्ष्यामि। अहिंसा सत्यम-

स्तेयं ब्रह्मचर्य्यञ्चैतानि मानसव्रतानि, एकभक्तं, नक्तमुपवासादिकञ्च कायिकव्रतानि। वेदाध्ययन-सत्यभाषणापैशुन्यहितानि च वाचिकव्रतानि। पुराकल्पे ब्रह्मपुत्र आरुणिर्नाम कश्चिदुग्रतपा ऋषिरजायत। स द्विजसत्तमस्तपोऽर्थी वनमगमत्। उपवासपरायणश्च रम्ये देविकायास्तटे तपस्तेपे। कदाचित् सोऽभिषेकाय महानदीं जगाम। तत्र स्नात्वा जपव्रत-आत्मनो वल्कलानां जिघृक्षया समायान्तं धनुष्पाणिं कश्चित् व्याधं ददर्श। तं दृष्ट्वा स हरिं ध्यायन् तत्रैव स्थितः। व्याधस्तु तमन्तर्गतं हरिं दृष्ट्वा भीतः सशरं चापमुत्सृज्य वचनमब्रवीत्। हे ब्रह्मन् त्वां दृष्ट्वा मे हृदयाज्जिघांसाप्रवृत्तिर्दूरं गता इदानीं तप्तुमिच्छामि, उपदेशदानेन प्रसादं कर्त्तुमर्हसीति स ऋषिर्ब्रह्महेति मत्वा तस्मै न किमप्युत्तरं ददौ, व्याधस्तथापि तत्र तस्थिवान्। अथैकदा जलमग्नं तमृषिं हन्तुं कश्चिद्व्याघ्रो वेगेनागतः। तमायान्तं स व्याधो निजघान। ततस्तच्छरी रात्कश्चित् पुरुषो निर्गतो ब्राह्मणं तं प्राह, अहं त्वत्प्रसादा मुक्तपाप्मा विष्णुस्थानं गच्छामि। अथ कोऽसीति ब्राह्मणे पृष्टोऽसौ प्राह, अहं पूर्व्वजन्मनि दीर्घबाहुरिति ख्यातो वेदज्ञ आसम्। ब्राह्मणांश्च भृशमवज्ञातवान्। ततो ब्राह्मणाः क्रुद्धा म व्याघ्रो भविष्यतीति शेपुः। ऊचुश्च इषुघातं लब्ध्वा यस्मिन्का भवान् कण्ठगतैः प्राणैर्द्विजवक्त्रात्तु नमो नारायणायेति श्रोष्य ततश्च ते स्वर्गगतिर्भविष्यतीति। अहञ्चाद्य व्याधेन हतस्तव मु नमो नारायणायेति श्रुत्वा निष्पापोऽस्मि। इत्युक्त्वा स

ययौ। ब्राह्मणश्च तुष्टो व्याधमुवाच, अद्य त्वयाऽहं रक्षितस्तुष्टोऽस्मि, वरं वृणु। व्याध उवाच यन्मया सहाद्य सम्भाषणं कृतमेष एव वरः, मां शाधि किङ्करोमीति। ऋषिरुवाच देविकास्नानेन मद्दर्शनेन विष्णुनामश्रवणेन च तव पापानि विनष्टानि, विष्णुर्होऽसि, साम्प्रतं तपः कुरु। व्याध उवाच, कथं विष्णुः प्राप्यते। ऋषिराह भक्त्यैव। हे पुत्र त्वं गणावमंन्तृतवादञ्च परित्यज्यात्रैव तपश्चरन्निवस। एवमुक्त्वा स ऋषिस्तं संस्थाप्यान्यत्र गतः।

अष्टात्रिंशाध्याये वराहेण व्याधस्य तपःसम्पदभिहिता। तथा निराहारं तपः कुर्व्वतस्तस्याश्रमे कदाचिद्दुर्व्वासाः समागतः। व्याधश्च परया भक्त्या तस्यातिथ्यं सम्पादयामास। स मुनिः प्रसन्नस्तस्मै साङ्गाः सरहस्या वेदा ब्रह्मविद्या पुराणानि च ते प्रत्यक्षाणि भविष्यन्तीति वरं दत्त्वा तस्य सत्यतपा इति नामाऽकरोत्।

ऊनचत्वारिंशाध्याये सत्यतपसा पृष्टो दुर्व्वासाः प्रथमं शरीरभेदान् कथयित्वा पश्चात्परब्रह्मस्वरूपं कथितवान्। तस्य प्राप्त्युपायस्तु दानयज्ञादीनीति चोक्तवान्। ततः सत्यतपसा पृष्टं, दानयज्ञाद्यक्षमेण निर्धनेन कथं स प्राप्यत इति। दुर्व्वासा उवाच पृथ्वी खलु पुरा रसातले निमग्ना व्रतोपवासैर्नियमैश्च तं देवमाराधयामास। महता कालेन च प्रसन्नो देवस्तामुज्जहार। ततः सत्यतपाः पप्रच्छ, धरण्या कोऽसावुपवासः सर्व्वोर्णः व्रतानि च कान्यनुष्ठितानि। ततो दुर्व्वासा धरण्या यद्यद्व्रतं कृतं तत्सर्व्वं कथयामास।

इत आरभ्य—पञ्चाशाध्यायान्तं यावत् धरणीव्रतानि सविस्तरमुक्तानि।

एकपञ्चाशाध्याये वराहेणोक्तं, सत्यतपाः सर्व्वमेतच्छ्रमाकर्ण्य हिमवत्पार्श्वे पुष्पभद्रानदीतीरे भद्रवटस्याधःप्रदेशे आश्रमं निर्म्माय तपश्चरितुमारेभे। ततो धरण्या अगस्त्यभद्राश्वयोर्वृत्तं पृष्टो वराह उवाच। भद्राश्वो राजा भगवन्तमगस्त्यं स्वगृह-गतं प्रेक्ष्य पप्रच्छ, भगवन् केन कर्म्मणा भवसंसृतिश्छिद्यते। किं कृत्वा च मृत्तौ न शोचन्तीति। अगस्त्येन तु कथितम्—यदा नाहो न रात्रिर्न दृशो दिशश्च न द्यौर्न देवा न दिनं न सूर्य्यस्तस्मिन् काले पशुपालो नाम राजाऽनेकान् पशून् पालयामास। स राजा कदाचित्पूर्व्वं समुद्रं दिदृक्षुर्महोदधेस्तीरं तूर्णं गत्वा वनमेकं ददर्श, तत्र खलु सर्पा निवसन्ति। तत्राष्टौ द्रुमाः, कामवहा नदी च, पञ्च प्रधानाः पुरुषाः, स्त्री चैका तेजसा दीप्यमाना दृष्टा। कश्चित्त्रिवर्णः पुरुषश्च तां धारयन् स्थितः। नृपस्तद्वनं प्रविष्टमात्र एव तैः सर्पैः संवेष्टितो मोक्षोपायं चिन्तयामास। एवं चिन्तयतो राज्ञस्त्रिवर्णः पुरुषोऽसौ समागतः प्रोवाच क्व यास्यसीति। एवं ब्रुवाणस्य तस्य महच्छब्दो व्यजायत, सोऽपि राजानं संरुध्य बुध्यस्वेति चाब्रवीत्। एवं ततः स्त्री तु सा तं राजानं रुरोध। ततोऽन्यः पुरुषस्तं संवेष्ट्य स्थितवान्। ततोऽपरे पञ्च पुरुषा आगत्य तं नृपसं संवेष्ट्य स्थिताः। ततस्ते सर्व्वे इत्थमेव एकीभूताः अस्तमादा न्योऽन्यं मथितुं प्रहृत्ता भयाकुलाः, लीनैस्तैर्नृपतेर्वेश्म प

ोभूत्मभवत्। ततस्त्रिवर्गः पुरुषस्तं राजसत्तममब्रवीत् हे महाराज अहं तव पुत्रोऽस्मि, ब्रूहि तं किं करवाणि, वयं त्वत्त बन्धुमिच्छामः। एवमुक्तो राजा तमरं पुनरब्रवीत्। पुत्रो ममान्येषामपि कर्त्ता भवति, नाऽहं सुखैर्भोगैर्निमिच्छामि। एवमुक्तो राजा तमात्मजमकरोत्। तैर्विमुक्तश्च स्वयं तेषां मध्ये विरराम।

द्वापञ्चाशाध्याये पुनरगस्त्यः प्रोवाच, स त्रिवर्गः पुत्रः अहं-नामानं पुत्रमसृजत्, तस्याप्यवबोधस्वरूपिणी कन्याचाभवत्। सा तु मनोज्ञं विज्ञानदं पुत्रं ससर्ज्ज। तस्यापि पञ्च साधुरूपास्तनया अभवन्। तेषाञ्चाचाभिधेयाः पुत्रा जाताः। ते प्रथमं दस्यव आसन्, पश्चाद्राज्ञा वशीकृता बभूवुः। ते अमूर्त्ता इव नवद्वारमेकस्तम्भं चतुष्पथं नदीसहस्रसङ्कीर्णं पुरं निर्म्मितवन्तः। ततस्ते एकीभूतास्तत्पुरं प्रविविशुः। क्षणात्पुरुषो मूर्त्तिमान् पशुपालोऽभवत्। अथ तत्पुरस्थितः पशुपालो नृपो वाचकान् शब्दान् संसृज्य वेदान् सस्मार। स राजा सर्व्वाणि व्रतानि नियमान् क्रतूंश्च चकार। अथ स नृपः खिन्नः कर्म्मकाण्डेषु मतिं चकार। स योगनिद्रायां स्थित्वा चतुर्व्वाहुं चतुर्व्वक्त्रं पुत्रमेकं ससर्ज्ज। ततो नृपः समुद्रे वने तृणादिषु च समोऽभवत्।

त्रिपञ्चाशाध्यायारम्भे भद्राश्व उवाच, हे ब्रह्मन् मत्प्रमाणं त्वयैवं कथिता, तत्केन हेतुना तस्याविर्भूतिरभवत्। अगस्त्य उवाच, सर्व्वस्मिन्विषये स्थिता विचित्रैवेयं कथा सर्व्वत्र

समरूपैव शोभते। पशुपालाद्यवतुष्पाश्चतुर्मुखश्च पुरुषः समुत्पन्नः, स गुरुः कथायाः प्रवर्त्तकश्च। तस्य पुत्रः स्वरो नाम, असौ मत्यमूर्त्तिः स्मृतः। तस्य प्रवृत्याख्या मूर्त्तिर्निवृत्याख्या च अभूत् गिरः। एतस्मादेव कथायाः सम्भूतिरभवत्। एष जगतः प्रथम इतिहासः।

चतुःपञ्चाशाध्याये भद्राश्वेन पृष्टं हे द्विज विज्ञानोत्पत्तिकामस्य क आराध्यः, कथञ्च स आराध्यते इति। अथागस्त्येनोक्तम्, सर्व्वैरपि देवैर्विष्णुरेव सदाराध्यः। येनासौ वरप्रदो भवति तस्योपायं प्रवक्ष्यामि, शृणु। नारायणः परो देवस्तं प्रणम्य न सीदति। श्रूयते च नारदेन पुरा विष्णोस्तुष्टिप्रदं वक्ष्यमाणं द्वादशीव्रतं कथितमित्युक्त्वा स ऋषिर्विस्तरेण तद्व्रतं कथयामास।

पञ्चपञ्चाशाध्यायेऽपि अगस्त्येनान्यद्विष्णुप्रीतिकरं व्रतं कथितवान्। कथितवांश्च किञ्चित्स्तोत्रम्। षट्पञ्चाशाध्याये धन्यव्रतं, सप्तपञ्चाशाध्याये कान्तिव्रतं, अष्टपञ्चाशाध्याये सौभाग्यकरणं व्रतं, ऊनषष्टितमाध्याये विघ्नहराख्यं व्रतं, षष्टितमाध्याये शान्तिव्रतं, एकषष्टितमाध्याये कामव्रतं, द्विषष्टितमाध्याये आरोग्यव्रतं तत्र च सार्व्वभौमनृपतिवृत्तं, त्रयःषष्टितमाध्याये पुत्रप्राप्तिव्रतं, चतुःषष्टितमाध्याये शौर्य्यव्रतं, पञ्चषष्टितमाध्याये सार्व्वभौमव्रतं सप्रयोगानुक्रमं कथितम्। षट्षष्टितमाध्यायारम्भे भद्राश्वेन पृष्टं, भगवन् किमप्याश्चर्य्यं दृष्टं नवेति। अगस्त्येनोक्तं, एष भगवाञ्जनार्द्दन एव आश्चर्य्यरूपः, तत्रैव

विविधान्याश्चर्य्याणि दृष्टानि। हे पार्थिव कदाचिन्मुनिर्नारदः श्वेतद्वीपं गतस्तत्र तिग्मतेजसो बहून् शङ्खचक्रधरान् पुरुषान-पश्यत्। तान् दृष्ट्वा तस्य कोऽत्र विष्णुरिति चिन्ता बभूव। एवं चिन्तयतस्तस्य कथं शङ्खचक्रगदाधरमाराधयामीति पुन-श्चिन्ता बभूव। एवं चिन्तयतस्तस्य दिव्यं वर्षसहस्रं गतम्। ततो विष्णुः परितोषं जगाम। प्रसन्नः प्रत्यक्षतां गतश्च प्रोवाच, भो ब्रह्मसुत ब्रूहि किन्ते ददामीति। नारद उवाच, भो भग-वन् यदि तुष्टोऽसि त्वत्प्राप्त्युपायं ब्रूहि। तदाकर्ण्य नारायणेन स उपायः कथितः।

सप्तषष्टितमाध्यायारम्भे भद्राश्वेन पृष्टं, जगति सितकृष्णे ये द्वे स्त्रियौ बभूवतुः, तत्र का सिता, का कृष्णा च, कश्चासौ पावकः पुरुषः सप्तधाऽभवत्, कोऽसौ षट्शिराः द्विदेहश्च पुरुषो द्वादशधाऽभवत्, किञ्च दाम्पत्यं कस्माच्चैतज्जगज्जातम्। अगस्त्य-उवाच, सितासिता द्विवर्णा नारी रात्रिरुदाहृता, यः पुमान् सप्तधा जात एको भूत्वा नरेश्वरः स समुद्रः, यश्च द्वादशधा द्वि-देहः षट्शिराश्च सोऽसौ संवत्सरः, दाम्पत्यं तदहोरात्रं, ततो जगत्सम्प्रवर्त्ती। स हि विष्णुः परमो देवः। वेदक्रियाहीनो मनुष्यो न हि तं परमं देवं पश्यति।

अथाष्टषष्टितमाध्यायारम्भे भद्राश्वेन पृष्टं, योऽसौ सर्व्वगतो देवः परमात्मा चतुर्युगे स परमेश्वरः केन केनोपायेन ज्ञायते, युगे युगे वर्णानां कीदृगाचारश्च भविता, अन्त्यस्त्रीसङ्गे विप्राणाञ्च कीदृशी शुद्धिर्भवितेति। ततोऽगस्त्य उवाच, सत्य-

युगे मही देवैर्वेदकर्म्मणा युज्यते, त्रेतायुगे यज्ञकर्म्मणां विस्तार कृतः, द्वापरे यावद्धर्म्मपुत्रो युधिष्ठिरः स्थास्यति तावत्सत्त्वरजो-बाहुल्यं भविष्यति, ततस्तमःप्रधानः कलिः प्रादुर्भविष्यति। तस्मिन् कलौ ब्राह्मणाः, क्षत्रियाः, वैश्याः, शूद्राश्च स्वमार्गच्युता हीनजातयो भविष्यन्ति। सर्व्वे ते सत्यशौचहीना भवेयु-स्ततो लोकोऽयं वर्णधर्म्मश्च विनङ्क्ष्यति। ततो भद्राश्वेन अगम्यागमनस्य प्रायश्चित्तं पृष्टमगस्त्येन च गम्यागम्यविवेक-पुरःसरं तत्कथितम्।

जनसम्मतितमाध्यायारम्भे भद्राश्वेन अगस्त्यस्य स्वशरीरवृत्तं पृष्टम्। अगस्त्येन कथितं यथा मम शरीरमिदं बहुकल्पस्थायि। कदाचिदहं सर्व्वां महीमटन् मेरोः पार्श्वे व्यवस्थितमिलावृतं नाम वर्षं गतवान्। तत्र रम्यं सरोदृष्टं, तस्य च तीरे महा-कुटी दृष्टा, तत्रोपवासशिथिलमस्थिचर्म्मावशेषं चीरवल्कल-धारिणन्तापसं दृष्टवान्। मया स आतिथ्यं याचितः प्राह— ब्रह्मन् स्वीयतामातिथ्यं ते करवाणि। एतच्च आकर्ण्याहं तां कुटीं प्रविश्य तत्र तापसं स्वतेजसा ज्वलन्तमिव दृष्टवान्। अथाऽसौ मां भूतलोपविष्टं दृष्ट्वा हुङ्कारमकरोत्, तद्धुङ्कारात् पञ्च कन्यकाः पातालं भित्त्वोत्तस्थुः, तासामेकस्या मस्तके काञ्चनपीठमेकमासीत्। सा मह्यं पादोदकं प्रादात्। अहञ्च तदुदकं गृहीत्वा पादौ क्षालितुमुपक्रान्तवान्। ततोऽन्ये द्वे मत्पार्श्वे स्थिते व्यजनञ्चक्रतुः। ततः स महातपाः पुनरेव हुङ्कारमकरोत्। तच्छब्दानन्तरं काचिद्योजनविस्तृतां हेमद्रोणीं

गत्वाऽऽगत्य तस्मिन् सरसि प्लावं चकार। तस्याश्च द्रोण्यां शतशोहेमकुम्भकराः कन्या आययुः, ता दृष्ट्वा स मुनिर्मां प्राह हे ब्रह्मन् तव स्नानार्थमिदं कल्पितं, ततस्त्वमिमां द्रोणीं प्रविश्य स्नातुमर्हसीति। ततोऽहं तस्य वचनात्तस्यां द्रोण्यां याव-द्विशामि तावत्सा द्रोणी सरसि ममज्ज। जले मग्नोऽहं मेरुगिरेर्मूर्द्ध्नि स्थितमात्मानं दृष्टवान्, दृष्टवांश्च तत्रैव सप्त समुद्रान्, सप्त कुलपर्व्वतान्, सप्तद्वीपवतीं पृथ्वीञ्च। अद्यापि तं लोकं स्मरामि। हे राजन् पूर्व्वं मम शरीरे यद्वृत्तं तत्कथितं किमन्यच्छ्रोतुमिच्छसीति।

सप्ततितमाध्यायारम्भे भद्राश्वः पप्रच्छ, भगवन् तं लोकं दृष्ट्वा तत्प्राप्त्यर्थं भवता किं व्रतं, कीदृक्तपः, कीदृशो वा धर्म्मोऽनु-ष्ठित इति। अगस्त्येनोक्तम् हरेराराधनामन्तरा न शुभलोक-प्राप्तिर्भवतीति मनसा सञ्चिन्त्य मया भूरिदक्षिणैः क्रतुभिर्वर्ष-शतं स सनातनो विष्णुराराधितः। बहुना कालेन जनार्द्दनं यजतो मे सकाशं कदाचित्सवासवा देवाः सममेव समा-गताः। यावच्च ते देवाः स्वस्मिन् स्वस्मिन् स्थाने व्यवस्थिता-स्तावद्देवो वृषभध्वजश्च तत्र समागतः। तान् सर्व्वानागतान् दृष्ट्वा ब्रह्मपुत्रः सनत्कुमारो महायोगी त्रसरेणुप्रमाणे सूर्य्यसन्निभे विमाने समवस्थितस्तत्र समाजगाम। स हि भूतभवद्भविष्य-द्विज्ञहर्षिर्देवं भगवन्तं रुद्रं शिरसा प्रणनाम। ततस्तान् सर्व्वानहमुक्तवान् भवतां को याज्यो वरिष्ठश्चेति। ततो भग-वान् रुद्रो मामुवाच नारायण एव सर्व्वेषां वरिष्ठो याज्य-

श्चेति। एवमुक्त्वासौ विस्तरेण तस्य माहात्म्यं कथयामास।

एकसप्ततितमाध्याये भगस्त्येन उक्तं ततो यावदहं तं देवं रुद्रं प्रणमम् तावत्तस्यैव हृदये स्थितं कमलासनं नारायणञ्च देवमद्राक्षम्. दृष्टश्चापरे तत्र समेताः सर्व्वे। ततो विस्मितास्ते सर्व्वे जयशब्दं चक्रुः। ततो रुद्र उवाच, पश्यत यूयं मामुद्दिश्य हुतं हव्यं वयं त्रय एव गृह्णीमः, नास्माकं पृथग्भावो वर्त्तते। रुद्रेणैवमुक्ते तत्र समागता मुनयस्तं मोहशास्त्रप्रयोजनं पप्रच्छुः। ततो महादेवेन तत्प्रयोजनं विवृतं, तदवसरे च गोदावर्य्या उत्पत्तिस्तत्र गोदानफलञ्च विवृतम्।

द्विसप्ततितमाध्यायारम्भे वराहेणोक्तम्, अथ महर्षिरगस्त्यः सर्व्वज्ञं सर्व्वकर्त्तारं पुरातनं देवं परमेश्वरं रुद्रं प्रणम्य पप्रच्छ, भवान् ब्रह्मा च विष्णुश्चेति त्रयं त्रयीति स्मर्य्यते, परं कस्मिन् काले भवतः प्राधान्यं, कस्मिन् विष्णोः, कस्मिन् वा ब्रह्मण एतन्मां ब्रूहीति। ततो रुद्रेणोक्तं विष्णुरेव परं ब्रह्म, स एव वेदत्रयं प्रतिपद्यते, मुग्धास्तु तत्स्वरूपं न जानन्ति। विश् प्रवेशने इत्यस्माद्धातोः नुप्रत्ययेन विष्णुरिति पदं सिद्धमर्थस्तु सनातनः परमात्मा, स दशधा चैकधा च कीर्त्यते, स योगैश्वर्य्यसमन्वित आदित्यरूपी च। स युगे युगे मनुष्यभावमाश्रित्य देवकार्य्याणि कुरुते, मां स्तौति च। अहञ्च तौ विष्णुब्रह्माणौ स्तौमि। सृष्टिकालेऽहं चतुर्वक्त्रं स्तौमि, ब्रह्मा च मां त्रेते युगे स्तौति। लिङ्गमूर्त्तिञ्च मां देवा यजन्ते। मुमुक्षवस्तु यं सहस्रशीर्षकं देवं यजन्ते स स्वयं विश्वात्मा नारायणः। हे

द्विजोत्तम ये तु नित्यं ब्रह्मयज्ञेन यजन्ते, ते ब्रह्माणं प्रीणयन्ति, वेदो हि ब्रह्म प्रकीर्त्त्यते। नारायण शिव विष्णु शङ्कर पुरुषोत्तमेत्येतैर्नामभिः परं ब्रह्मैव प्रकीर्त्त्यते। अहं विष्णुस्तथा वेदा ब्रह्म कर्म्माणि च एतत्सर्व्वमेकमेव, सुधीर्नैतानि पृथग्भावयेत्। यस्त्वन्यथा भावयति स नरकं प्रयातीति।

त्रयःसप्ततितमाध्याये रुद्रेणादित्यवृत्तकथनपुरःसरं विष्णुमाहात्म्यं कथितम्।

चतुःसप्ततितमाध्यायारम्भे वराहेणोक्तम्, पुनस्ते मुनयस्तं पुराणपुरुषं शूलपाणिनं देवं रुद्रं पप्रच्छुः, हे देवदेव सम्प्रत्यं, कृपया भूमेः प्रमाणं पर्व्वतानाञ्च संस्थानं ब्रूहीति। ततो रुद्रेणोक्तमाकर्ण्यताम्, अहमिदानीं समासात् धमातलस्य प्रमाणादिकं वर्णयामि। ततो रुद्रेण सृष्टेरारभ्य पृथिव्याउत्पत्तिं, विभागान्, संस्थानानि च कथितानि, कथितानि च तत्तद्विभागविशेषाधिपतीनां नामधेयानि।

पञ्चसप्ततितमाध्याये भगवता रुद्रेण जम्बूद्वीपस्य सविस्तरं विवरणं कथितम्।

षट्सप्ततितमाध्याये दिक्पालानां नगराणि वर्णितानि।

सप्तसप्ततितमाध्याये मेरुसन्निहितानां कतिपयपर्व्वतानां विवरणं कथितम्।

अष्टसप्ततितमाध्याये यथाक्रमं चैत्ररथादिशैलचतुष्टयस्य वर्णनमस्ति।

ऊनाशीतितमाध्यायेऽपि सीतान्तप्रभृतीनां केषाञ्चित्पर्व्व-

तासां कीर्त्तनमस्ति । एवमूननवतितमाध्यायं याव-
त्तीर्थस्य सविस्तरं वर्णनमस्ति ।

नवतितमाध्याये तु पुनर्धरण्या वराहमूर्त्तिर्देवः पृष्ट-
स्त्रयाणां ब्रह्मविष्णुमहेश्वराणां कतमो देवः परः, कतमश्चापर-
इति । ततो वराह उवाच, नारायणो देवः सर्व्वेभ्यः पर-
स्तस्माच्चतुर्मुखोऽभवत्, तस्माच्च रुद्रो जात इति । तस्य
रुद्रस्य बहून्याश्चर्य्याणि चरितानि सन्ति । हे चार्व्वङ्गि ! मया
कथ्यमानानि तानि सर्व्वाणि शृणु । एकदा स रम्ये कैलास-
शिखरे गणैः परिवृतो देव्या सह क्रीड़न् यावदास्ते, तावत्
ब्रह्मा तत्र समाजगाम । ततो महादेवेनागमनप्रयोजनं पृष्टो
ब्रह्मोवाच अन्धकासुरो नाम महादैत्यस्तेनार्द्दिता दिवौकसो मां
शरणं प्राप्ताः । ततोऽहं किञ्चित्प्रतिकर्त्तुमक्षमस्तैः सार्द्धमत्रा-
गतः । ततस्ते ब्रह्मविष्णुमहेश्वरा एकत्र संस्थिताः सूक्ष्म-
दृष्ट्या वीक्षाञ्चक्रुः । ततस्तेषां त्रिधा दृष्टिरेका समजायत ।
तस्यां दृष्ट्यां काचिद्दिव्यरूपिणी कुमारी समजायत । अथ तां
कुमारीं दृष्ट्वा ब्रह्मविष्णुमहेश्वराः प्रोचुः, हे शुभे ! काऽसि
किं वा ते कार्य्यं ब्रूहि । सा उवाच, किं मां न वेत्थ, अहं हि
भवतां शक्तिः परमेश्वरीति । ततोऽनन्तरं ब्रह्मादयः प्रोचुस्त्रिभि-
र्वर्णैर्मूर्त्तित्रयं कुर्व्विति । ततः सा सिता, रक्ता, कृष्णा चेति
त्रिधाऽभवत् । या तस्याः सिता मूर्त्तिः सा ब्राह्मी, तया सृष्टिं
विदधाति । या रक्ता सा वैष्णवी, तया जगत्पालयति । या च
कृष्णा सा रौद्री, तया जगत्संहरति । ततः सिता

कुमारी ब्राह्मणमामन्त्र्य तपस्तप्तुं श्वेतपर्व्वतं ययौ। रक्ता च केशवं समनुप्राप्य दुश्चरं तपस्तप्तुं मन्दराद्रिं जगाम। कृष्णा पुनः रुद्रमाभाष्य नीलपर्व्वतं तपश्चार्थं गतवती। ततः सृष्टि-काले सृष्टिरूपिणी सा ब्रह्मणा स्मृता श्वेतपर्व्वतादागत्य सृष्टिं वर्द्धयामास।

एकनवतितमाध्याये तस्या एव प्रभावो वर्णितः।

द्विनवतितमाध्याये वैष्णव्या तपःप्रभावेण रम्यं पुरं निर्म्मितं, तत्र साऽप्सरसां गणैः परिवृता विहरति स्म। अथै-कदा नारदस्तां दृष्ट्वा तस्या रूपं महिषासुराय कथितवानिति कथा विद्यते।

त्रयोनवतितमाध्याये महिषासुरो नारदमुखात्तस्या देव्या-रूपं समाकर्ण्य रहो मन्त्रिभिस्तां वशीकर्त्तुमुपायञ्चिन्तयित्वा प्रथमं कञ्चिद्दूतं प्रेषयामास। देवानां विजयार्थोद्यमञ्चकार चेति कथा विद्यते।

चतुर्नवतितमाध्याये ससैन्यो महिषासुरो देवाञ्जिगायेति वर्णितमस्ति।

पञ्चनवतितमाध्याये देव्या ससैन्यो महिषासुरो निहत-इति वर्णितम्। इयं हि महिषासुरकथा देवीमाहात्म्योक्त-महिषासुरकथातः सम्यग्भिन्नैव।

षण्णवतितमाध्याये नीलगिरौ तपः कुर्व्वन्त्या संहार-कारिण्याः कृष्णाया माहात्म्यं वर्णितं, यथा कदाचिद्रुरुर्नाम कश्चित्समुद्रमध्यवासी दैत्यः देवाञ्जित्य पीडयामास। तेन

क्षुभिता देवा नीलगिरौ तपश्चरन्तीं तां देवीं शरणं ययुः। अथ सा देवैरावेदितं भयकारणमाकर्ण्योच्चैर्जहास, हसन्त्या-स्तस्या वक्रात्तु बह्व्यो देव्यो विनिर्ययुः। ततस्ताः सर्वाः कोटिशो देव्यो देवीं संवेष्ट्य दानवैः सार्द्धं युयुधिरे; क्षणेन च तत्सर्व्वं दानवबलं ताभिर्निहतम्। ततस्ता देव्यः क्षुधाभि-भूताः किञ्चिद्भक्ष्यं प्रार्थयामासुः। रुद्रेण तु ताभ्यो भक्ष्यं प्रद-त्तम्। ततो रुद्रेण देव्याः स्तवः कृतः, स्तोत्रमाहात्म्यञ्च कथितम्।

सप्तनवतितमाध्याये वराहेण रुद्रोत्पत्तिः कथिता। यथा ब्रह्मणा रुद्रः सृष्टः स्वस्कन्धे कृतः कपालिन्नित्यामन्त्रितोऽसौ क्रुद्धो ब्रह्मणः शिरश्चकर्त्त। तच्च निकृत्तं शिरस्तस्य हस्तलग्नं बभूव। ततः स कथं तच्छिरः करात्पतेदिति ब्रह्माणमब्र-वीत्। ब्रह्मणोक्तमिदं कापालिकव्रतं चर इति। अथ द्वादशाब्दान्यावत्तत्कपालं गृहीत्वा परितः पृथिवीं भ्रमत-स्तस्य वाराणस्यां सीमाकारिगणैस्तद्धस्तात् बलात्कारेण भुवि कपालं पातितं ततस्तत्कपालमोचनं नाम त्रैलोक्यविश्रुतमघा-पहञ्च तीर्थं जातम्, तत्र ब्रह्महाऽपि नरो विशुद्धिमाप्नोति। ततो रुद्रहस्तात्कपालमोचनमाकर्ण्य ब्रह्मा तत्रागत्य मधुरवचनैः रुद्रं परिसान्त्वयामास।

अष्टनवतितमाध्यायारम्भे धरणी भगवन्तमादिदेवं वराहं पप्रच्छ, योऽसौ सत्यतपा नाम लुब्धो भूत्वा द्विजो बभूव, तस्यो-परि महाश्चिर्यं भविष्यतीति त्वया कथितं,सम्प्रति कीदृशं तेष्वा-

मार्कण्डेति। वराह उवाच, स हि सत्यतपाः पूर्व्वं भृगुवंशोद्भवो द्विज आसीत्, दस्युसंसर्गात्तु दस्युवत्त्वमजायत। ततश्च महता कालेन ऋषिसङ्गाद्दुर्व्वाससा विशेषतो बोधितश्च द्विजत्वं प्राप। ततोऽसौ हिमाद्रेरुत्तरे पार्श्वे पुष्पभद्राया नद्यास्तीरे स्थितायां दिव्या-नाम चित्रशिलायां स्थित्वा तपश्चकार। स कदाचित्कुठारेण समिधश्चकर्त्त, चिच्छेद चास्य वामतर्ज्जनीं, छिन्नायां तस्यां केवलं भस्मचूर्णमदृश्यत न मांसं, न रुधिरं, न वा मज्जा दृश्यते स्म। अथ तेन संयोजिता सा अङ्गुली पूर्व्ववद्भवत्। तत्पार्श्वे भद्रवटो नाम कश्चिन्महान्यग्रोधपादप आसीत्तत्र तस्यां रात्रौ किन्नरमिथुनमेकं न्युवास, तत्तु तदद्भुतमालोक्य प्रभाते इन्द्रलोकं जगाम। अथेन्द्रेण सर्व्वे सुरा यक्षगन्धर्व्वकिन्नराश्च पृष्टाः किञ्चिदाश्चर्य्यं दृष्टं चेद्भवद्भिः कथ्यतामिति, ततो रुद्रसरस्तीरे यद्वृत्तं किन्नरमिथुनेन तत्कथितम्। तच्छ्रुत्वा शक्रः सहसा विस्मितो विष्णुमब्रवीत् विष्णो आगच्छ किन्नरमिथुनेन यदपूर्व्वमाश्चर्य्यं कथितं तद्द्रष्टुं हिमवत्पार्श्वं गच्छाव इति। एवमुक्तो विष्णुर्वाराहरूपमग्रहीत्, शक्रश्च मृगयुरूपम्। ततस्तौ तमृषिं प्रति जग्मतुः। तत्र गत्वा विष्णुर्वाराहरूपेण ऋषिदृष्टिपथे कदाचिद्दृश्यः कदाचिच्चादृश्यो भूत्वा यावत्तिष्ठति स्म, तावत्तीक्ष्णसायकखड्ग-धनुष्पाणिरिन्द्र आगत्य सत्यतपसमृषिमुवाच, भगवन् त्वया कश्चित् पृथुलो महान्वराहो दृष्टश्चेत्कथय येन भृत्यानां पोषणार्थं तं निहन्मि। एवमुक्तो मुनिश्चिन्तयामास यदि तमस्मै

दर्शयामि तदा हन्यते, नो चेदस्य कुटुम्बः सीदति । लुब्धको-ऽयं जायापुत्रसमन्वितः क्षुधार्त्तो वर्त्तते, वराहश्च ममाश्रमं शरणमुपागतः एवं स्थिते किं कार्य्यमिति । ततः किं कर्त्तव्य-मिति चिन्तयतस्तस्य सरणाद्बुद्धिरजायत । सोऽब्रवीत्—

"दृष्टं चक्षुर्निहितं जङ्गमेषु
जिह्वा वक्तुं मृगयो तद्विसृष्टम् ।
द्रष्टुं चक्षुर्नास्ति जिह्वेह वक्तुं
जिह्वायाः स्यात्तत्त्वतोऽस्तीह चक्षुः ॥"

एतदच आकर्ण्य तौ तुष्टौ स्वमूर्त्तिं दर्शयन्तौ वाक्यच्छेद-मूचतुर्वरं वृणिष्वेति । ततोऽसौ द्वौ वरौ प्रार्थयामास । एकेन विप्रानर्च्चयतां विप्राणां मासेन पापविमोचनं, द्वितीयेन निजस्य मुक्तिरिति याचितवान् । तौ च देवौ तथेत्युक्ताऽन्तर्हितौ । वरं लब्ध्वा सत्यतपाः कृतकृत्यो ब्रह्मभूतश्च यावदास्ते ताव-त्तस्य गुरुरारुणिः समदृश्यत । ततस्तेनाऽसौ पूजितः स्वशिष्यं सिद्धं ज्ञात्वा पुरतः स्थितं प्राञ्जलिं विनयापन्नं तमुवाच । हे पुत्र तपसा सिद्धोऽसि, ब्रह्मभूतोऽसि, तदिदानीमुत्तिष्ठ मया सार्द्धं मुक्तिपदं गम्यताम् । ततस्तौ नारायणं देवं ध्यात्वा लयं गतौ ।

नवनवतितमाध्यायारम्भे धरण्युवाच, या सा मायाऽव्यक्त-जन्मनो ब्रह्मणः शरीरान्निर्गताऽष्टभुजा गायत्री भूत्वा वैत्रासुरेण सहाऽयुध्यत, सैव देवी देवकार्य्यचिकीर्षया ब्रह्मणोदिता महि-षाख्यासुरस्य वधं कुर्व्वती कथं वैष्णवीत्याख्यां प्राप्य तस्मै

कथयेति। वराह उवाच, इयं जगत्त्रिता देवी शङ्करप्रिया भगवती सर्व्ववेद। स्वायम्भुवे मन्वन्तरे वैष्णव्या मन्दरे गिरौ महिषाख्यो दैत्यो हतः पश्चाच्चैवासुरश्च निहतः। नन्दया विन्ध्याचले महाबलपराक्रमो महिषो निहतः। अथवा सा ज्ञानशक्तिः महिषस्तु मूर्त्तिमदज्ञानं, अज्ञानं ज्ञाननाश्यमित्यत्र सन्देह एव नास्ति। मूर्त्तिपक्षे चेतिहासममूर्त्ते चैक्यमेव वेदवाक्यैरिदानीं पञ्चपातकनाशनं देवदेवस्य विष्णोः पुत्रवसुप्रदं पूजाप्रकारं शृणु—यः खल्विह जन्मनि दारिद्र्यव्याधिकुष्ठादिपीड़ितोऽपुत्रश्च भवति, स चेन्मण्डलगतं देव्या सह देवं नारायणं पश्यति, तस्य सद्य आयुर्वित्तं सुतः सुखञ्च सञ्जायते। ततस्तस्य पूजाप्रकाराः पूजनकालाश्च कथिताः। ततो वसिष्ठस्य श्वेतस्य च राज्ञः संवादोऽन्नदानफलञ्च कथितम्। ततस्तिलधेनुदानविधिस्तत्फलञ्च कथितम्।

शततमाध्याये जलधेनुदानविधिस्तत्फलञ्चोक्तम्।

एकाधिकशततमाध्याये रसधेनुदानविधिस्तत्फलञ्चाभिहितम्।

द्व्यधिकशततमाध्याये गुड़धेनुदानविधिस्तत्फलञ्चोक्तम्।

त्र्यधिकशततमाध्याये शर्कराधेनुदानविधिस्तत्फलञ्चोक्तम्।

चतुरधिकशततमाध्याये मधुधेनुदानविधिस्तत्फलञ्च कथितम्।

पञ्चाधिकशततमाध्याये क्षीरधेनुदानविधिस्तत्फलञ्चोक्तम्।

षड़धिकशततमाध्याये दधिधेनोर्विधानं, सप्ताधिकशत-

## विषयविवरणम्।

नमाध्याये नवनीतमयधेनोः—रष्टाधिकशततमाध्याये लवण-धेनो-र्नवाधिकशततमाध्याये कार्पासधेनो-र्दशाधिकशततमा-ध्याये धान्यधेनो-रेकादशाधिकशततमाध्याये कपिलाधेनोर्दान-विधानञ्चोक्तम्।

द्वादशाधिकशततमाध्याये प्रसूयमानाया धेनोर्दानविधान-मुक्तमन्ते च वराहपुराणस्य माहात्म्यमष्टादशपुराणानि च नामतः कीर्त्तितानि।

त्रयोदशाधिकशततमाध्याये सनत्कुमारेण पृष्टा धरणी भगवतो नारायणस्य माहात्म्यं कथयामास। कथयामास च प्रलयसमये गुरुभाराद्दिताऽहं कश्चिदपि मदारणक्षममयान्ती भगवन्तं नारायणं शरणं गता।

चतुर्द्दशाधिकशततमाध्यायारम्भे नारायणः प्रसन्नो वसु-न्धरां प्रत्युवाचाऽहं त्वां सशैलवनकाननां ससागरां सद्वीपाञ्च धारयिष्यामीति कथा वर्त्तते। ततो नारायणो वाराहं रूपमा-स्थाय वामया दंष्ट्रया मेदिनीमुज्जहार। ततः पृथिवी नारा-यणं प्रति बहून् प्रश्नानकरोत् यथा, कीदृश आचारः, काले काले कीदृशः कर्म्मणः कीदृश उपयोगश्चेत्यादि।

पञ्चदशाधिकशततमादष्टादशाधिकशततमाध्यायान्तं या-वद्वराहरूपेण भगवता कर्म्मणां शुभाशुभानां स्वरूपाणि फलानि प्रायश्चित्तानि च कथितानि।

ऊनविंशत्यधिकशततमाध्याये प्रथमं धरणी पृच्छ, केन प्रकारेण संयुक्तस्तव प्रापणकविधिर्भवतीति तन्मां कथयेति।

ततः प्रीतमानसो वराहः प्रत्युवाच कथयामास च येन प्रकारेण प्रापणं भवति ।

विंशत्यधिकशततमाध्याये वराहेण विष्णुपूजाविशेषविधानं कथितम् ।

एकविंशत्यधिकशततमाध्याये वराहेण पुनर्जन्मनिवर्त्तको विष्णुपूजाविशेषप्रकारः कथितः ।

द्वाविंशत्यधिकशततमाध्यायस्यादौ वराहेण येन सर्व्वपापविमुक्तिर्भवति तदुपायाः कथिताः । तेषु च कोकामुखमरणमन्यतम उपाय इति कथिते धरण्या वराहः पृष्टः, कथं वाराणसीप्रभृतीनि तीर्थानि विहाय कोकायाः प्राशस्त्यं निर्द्दिष्टमिति । तयैवं पृष्टः स वराहरूपी भगवांस्तां वसुन्धरां प्रत्युवाच, वाराणसीप्रभृतीनि रुद्रक्षेत्राणि, कोका तु साक्षाद्भगवतः क्षेत्रमन्यच्च कदाचित् श्येनमुखात्कोकायां पतितो मत्स्यो राजपुत्रो बभूव । काचिद्व्याधविद्धा चिल्लिका तत्र निपतिता परमशोभना राजपुत्री सञ्जाता । तयोश्च परस्परं विवाहोऽभवत् । ताभ्यां परमसुखेन च बहुतिथः कालोऽतिवाहितः । ततः कदाचिद्राजपुत्री शिरःपीडाकुला राजपुत्रमुवाच कथं ते पीड़ा नानाविधैरप्युपायैर्नोपशाम्यति । राजपुत्रस्तु मानुषत्वमेव सर्व्वव्याधीनां कारणमित्युवाच । सा तु न किञ्चिद्बुबुधे । ततस्तया निर्बन्धतः पृष्टः कोकामुखं गत्वा सर्व्वं कथयिष्यामीत्युवाच । तत्र राजपुत्रः स्वपूर्व्वजन्मवृत्तं कथयित्वा तस्यै स्वास्थीन्यवशिष्टानि दर्शयामास । साऽपि स्मृतपूर्व्वजन्मवृत्ता निज-

पूर्व्वजन्मवृत्तञ्च तस्मै कथयित्वा निजास्थीनि दर्शयामास। ततस्तौ शुभानि कर्म्माणि कृत्वा मानुषं भावं परित्यज्य श्वेत-द्वीपमुपागतौ। कोकाया एवं खलु प्रभावः।

त्रयोविंशत्यधिकशततमाध्याये. प्रथमं कोकामाहात्म्यश्रवणेन विस्मितया पृथिव्या पृष्टो भगवान् वराहः, हे भगवन् कोकामाहात्म्यं श्रुतं मया, सम्प्रति केन धर्म्मेण कर्म्मणा तपसा वा मानवास्त्वां पश्यन्तीति वेदितुमिच्छामि प्रसन्नो निखिलं मां वक्तुमर्हसि। एवं पृष्टो देव्या पृथिव्या वराहस्तत्सर्व्वं वक्तुमुपचक्रमे। कथयामास च क्रमेण तत्सर्व्वम्। षड़्तुकर्त्तव्यानि च कर्म्माणि कथितानि। चतुरधिकशततमाध्यायेऽपि तदेव वृत्तमस्ति।

पञ्चविंशत्यधिकशततमाध्याये पृथिव्या मायास्वरूपं पृष्टो भगवान् वराहः सविस्तरं तत्कथयामास। कथितानि च तेन तत्सम्पृक्तानि वृत्तानि।

षड़्विंशत्यधिकशततमाध्याये धरणी वराहं कुब्जाम्रकनामकतीर्थस्य माहात्म्यं पप्रच्छ, वराहश्च कुब्जाम्रतीर्थस्य व्युत्पत्तिं माहात्म्यं तद्गतमितिवृत्तञ्च कथयामास।

सप्तविंशत्यधिकशततमाध्याये धरण्यां वराहो मोक्षकारणं धर्म्मं दीक्षाञ्च पृष्टो ब्राह्मणानां धर्म्मान्दीक्षाविधिञ्च कथयामास

अष्टाविंशत्यधिकशततमाध्याये वराहेण यथारूपं क्षत्रिय-वैश्यशूद्राणां धर्म्मा दीक्षाविधिश्च कथिताः।

ऊनत्रिंशदधिकशततमाध्याये वराहेण तिलकदानक्रमः

ताम्रगोहानां तदुत्पत्तिकथा, दीक्षितानां सन्ध्योपासना-प्रकारादयश्च कथिताः।

त्रिंशदधिकशततमाध्याये धरण्या अपराधास्तन्निवृत्त्युपाय-प्रायश्चित्तानि कीदृशानीति पृष्टो वराहस्त्रिंशदधिकशततमा-दारभ्य षट्त्रिंशदधिकशततमाध्यायं यावदेकैकमपराधं तन्नि-वारणप्रायश्चित्तानि च कथयामास।

सप्तत्रिंशदधिकशततमाध्याये धरण्या किं व्रतं शुभं कनरहा भक्तसुखावहं चेत्रमिति पृष्टो वराह उवाच। कोकामुखं, कुब्जाम्रकं तथा सौकरवञ्चेत्येतानि भागवतप्रियाणि पराणि स्थानानि। एतेषु च सौकरं स्थानं श्रेष्ठं सर्व्वसंसारमोक्षणञ्च यत्र संस्था त्वं रसातलादुद्धृतासि, यत्र भागीरथी शतगा च वर्त्तते। ततः पृथिवी पुनः पप्रच्छ, सौकरवे मृता मनुष्याः केषु केषु लोकेषु यान्ति, तत्र स्नातस्य पिबतश्च किं पुण्यं भवति, कानि वा तत्र तीर्थानि एतत्सर्व्वं वक्तुमर्हसीति। ततो वराहः क्रमेण सर्व्वं प्रत्युवाच, कथयामास च प्रसङ्गगता-नीतिवृत्तानि।

अष्टात्रिंशदधिकशततमाध्याये धरणी पप्रच्छ, सौकरवे क्षेत्रे गायतो वादयतो नृत्यतो जागरतश्च किं पुण्यं, किञ्च गोदानस्य, जलदानस्य, सम्मार्ज्जनस्य, लेपनस्य, गन्धपुष्पधूपदीपनैवेद्यादि-दानस्य च किं फलं, जपयज्ञादिना कर्म्मणा वा का गतिः प्राप्यते इति। एवं पृथिव्या वचः श्रुत्वा वराहः क्रमेण प्रोवाच।

## विषयविवरणम् ।

ऊनचत्वारिंशदधिकशततमाध्याये, च पूर्व्वप्रश्नविषयिण्येव कथा वर्त्तते ।

चत्वारिंशदधिकशततमाध्याये धरणी पप्रच्छ, हे देव त्वं कस्मिन् स्थाने नित्यं तिष्ठसि, कस्मिन् स्थाने वा कृतं कर्म्म उत्तमायै गतये भवतीति । वराहस्तु कोकामुखमेव निर्द्दिदेश । ततो धरण्या पृष्टं, कथं कोकामुखं श्रेष्ठमिति । वराहस्तदपि कथयामास । एवं क्रमेण धरण्या पृष्टो वराहः कोकामुख-गतानि सर्व्वाणि गुह्यानि कथयामास ।

एकचत्वारिंशदधिकशततमाध्याये वदरिकामाहात्म्यं वराहेण कथितम् ।

द्विचत्वारिंशदधिकशततमाध्याये रजस्वलाकर्त्तव्यानि कथितानि ।

त्रयश्चत्वारिंशदधिकशततमाध्याये वराहेण मन्दारमाहात्म्यं कथितम् ।

चतुश्चत्वारिंशदधिकशततमाध्याये धरणी पुनर्वराहं पप्रच्छ, हे देव यदि मन्दारादपि किमपि श्रेष्ठं स्थानमस्ति तद्वक्तुमर्हसीति । वराह उवाच, अस्ति शालग्रामो नाम स्थानं, ततः शालग्रामस्य स्वरूपं माहात्म्यञ्च वर्णयामास, कथितवांश्च तस्मिन् स्थाने शिवः स्वयं नन्दिरूपेण शालङ्कायनस्य मुनेः पुत्रत्वं प्रापेति ।

पञ्चचत्वारिंशदधिकशततमाध्याये धरण्या पृष्टं, शालङ्कायनोमुनिस्तत्र मुक्तिप्रदे शालग्रामक्षेत्रे तपः कुर्व्वन् किं चकारेति ।

वराहेणोक्तं, स हि तत्र दीर्घं कालं तपः कुर्व्वन्नम सन्दर्शनं लेभे इति, कथितञ्च ततः शालग्रामान्तर्गतानामन्येषामपि पुण्यक्षेत्राणां माहात्म्यम् ।

षट्चत्वारिंशदधिकशततमाध्याये धरण्या पृष्टो वराहः सेतिहासं रुरुक्षेत्रस्य माहात्म्यं सप्तचत्वारिंशदधिकशततमाध्यायं यावद्वर्णयामास

अष्टाचत्वारिंशदधिकशततमाध्याये गुतस्वामीतिविख्यातस्य क्षेत्रस्य माहात्म्यं वर्णितम् ।

ऊनपञ्चाशदधिकशततमाध्याये धरण्या पृष्टो वराहो द्वारवतीमाहात्म्यं वर्णयामास ।

पञ्चाशदधिकशततमाध्याये धरण्या पृष्टो वराहः सानन्दूरेतिख्यातस्य पुण्यक्षेत्रस्य माहात्म्यं वर्णयामास ।

एकपञ्चाशदधिकशततमाध्याये धरणी वराहं पप्रच्छ, यदि सानन्दूरात् परं किमपि गुह्यक्षेत्रं वर्त्तते तद्वक्तुमर्हसीति । वराह उवाच, अस्ति म्लेच्छमध्ये परं गुह्यं समन्तात्पञ्चयोजनं दुर्गमं लोहार्गलं नाम क्षेत्रं तत्राऽहमुदीचीं दिशमाश्रितस्तिष्ठामि । ततस्तन्माहात्म्यं वर्णयामास ।

द्वापञ्चाशदधिकशततमाध्याये धरणी लोहार्गलात्परं गुह्यं दुर्लभञ्च तीर्थं [illegible]मयेव । वराहश्च चतुःपञ्चाशदधिकशततमाध्यायं या[illegible]थुरामाहात्म्यं कथयामास ।

चतुः[illegible]शदधिकशततमाध्याये मथुरासन्निहितयामुनतीर्थ[illegible]हात्म्यं वर्णितम् ।

पञ्चपञ्चाशदधिकशततमाध्याये अक्रूरनामतीर्थस्य माहात्म्यं [illegible]र्णितम्, कथितञ्च तत्संश्लिष्टेतिवृत्तम् ।

षट्पञ्चाशदधिकशततमाध्याये वत्सक्रीड़नाख्यतीर्थस्य माहात्म्यं वर्णितम् ।

सप्तपञ्चाशदधिकशततमाध्याये मल्लयार्जुनकादितीर्थानां माहात्म्यं वर्णितम् ।

अष्टापञ्चाशदधिकशततमाध्याये माथुरमण्डलस्य माहात्म्यं वर्णितम् ।

ऊनषष्ट्यधिकषष्ट्यधिकशततमाध्याययोः मथुरापरिक्रमण-माहात्म्यं वर्णितम् ।

एकषष्ट्यधिकशततमाध्याये मथुरान्तर्गतदेववनतीर्थस्य प्रभावो वर्णितः ।

द्विषष्ट्यधिकशततमाध्याये चक्रतीर्थस्य माहात्म्यं वर्णितम् ।

त्रयःषष्ट्यधिकशततमाध्याये वैकुण्ठादितीर्थानां माहात्म्यं, कपिलाख्यस्य कस्यचिद्विप्रर्षेरितिवृत्तञ्च कथितम् ।

चतुःषष्ट्यधिकशततमाध्याये गोवर्द्धनक्षेत्रस्य माहात्म्यं वर्णितम् ।

पञ्चषष्ट्यधिकशततमाध्याये मथुरान्तर्गतचतुःसामुद्रिक-कूपमाहात्म्यं, तत्संश्लिष्टमितिवृत्तञ्च वर्णितम् ।

षट्षष्ट्यधिकशततमाध्याये अ[illegible] कथितः ।

सप्तषष्ट्यधिकशततमाध्याये मथुरान्तर्गतविश्रा[illegible]प्रभावः कथितः ।

षट्षष्ट्यधिकशततमाध्याये मथुरातीर्थस्य देवपालादीनां कथा वर्त्तते

ऊनसप्तत्यधिकशततमाध्याये मथुरान्तर्गताईचन्द्रदेवादीनां माहात्म्यं वर्त्तते।

सप्तत्यधिकशततमात्त्रिसप्तत्यधिकशततमाध्यायं यावत् गोकर्णतीर्थमाहात्म्यं वर्णितम्।

चतुःसप्तत्यधिकशततमाध्याये यामुनसङ्गमप्रभावो वर्णितः।

पञ्चसप्तत्यधिकशततमाध्याये कृष्णगङ्गाकालिञ्जरप्रभावो वर्णितः।

षट्सप्तत्यधिकशततमाध्याये कृष्णगङ्गोद्भवमाहात्म्यं वर्णितम्।

सप्तसप्तत्यधिकशततमाध्याये कृष्णपुत्रस्य शाम्बस्य वृत्तं वर्त्तते। यथा, शाम्बं सुरूपं दृष्ट्वा सर्व्वाः कृष्णपत्न्यश्चेतसि क्षोभं प्रापुः। ततो नारदवचनात्कृष्णः शाम्बं शशाप विरूपो भविष्यसीति। शाम्बश्च तत्क्षणात्कुष्ठयुक्तोऽभवत्। ततस्तच्छापविमोचनार्थं नारदेनैव शाम्बायादित्याराधनमुपदिष्टम्। ततः शाम्बो मथुरां गत्वा सूर्य्यस्याराधनं कृतवान्। तेन चास्य रोगमुक्तिरभवत्। शाम्बश्च तत्र सूर्य्यमूर्त्तिं स्थापयामासेति।

अष्टसप्तत्यधिकशततमाध्याये लवणवधोद्यतशत्रुघ्नकृतद्वादशीव्रतमाहात्म्यं वर्णितम्।

ऊनाशीत्यधिकशततमाध्याये पापप्रायश्चित्तमाहात्म्यं वर्णितम्। अर्थात्कीदृशां पापिनां विष्णुपूजानधिकारः, कथं वा तेषां पापविमोचनं, तत्राधिकारश्च भवतीति कथा वर्त्तते।

काष्ठादिप्रतिमानिर्माणप्रतिष्ठापनविधानानि वक्ष्यामि। तत्र एकाशीत्यधिकशततमाध्याये मधुककाष्ठप्रतिमार्चाविधानमुक्तम्।

द्व्यशीत्यधिकशततमाध्याये शैलप्रतिमार्चाविधानम्।

त्र्यशीत्यधिकशततमाध्याये मृण्मयप्रतिमार्चाविधानम्।

चतुरशीत्यधिकशततमाध्याये ताम्रप्रतिमास्थापनविधानम्।

पञ्चाशीत्यधिकशततमाध्याये कांस्यप्रतिमास्थापनविधानम्।

षडशीत्यधिकशततमाध्याये रौप्यसौवर्णप्रतिमास्थापनञ्च कथितम्।

सप्ताशीत्यधिकशततमाध्याये पितृयज्ञस्य माहात्म्यं चेतिवृत्तं कथितम्।

अष्टाशीत्यधिकशततमाध्याये प्रेतश्राद्धादिविधानकथा कथिता।

ऊननवत्यधिकशततमाध्याये केनोपायेन द्विजानां प्रेतश्राद्धभोजनजनितपापविमोचनं भवतीति धरण्या पृष्टो वराहस्तदुपायं राज्ञो मेधातिथेरितिवृत्तञ्च कथयामास।

नवत्यधिकशततमाध्याये धरणी वराहं पप्रच्छ, हे देव कुत्र पितरः श्राद्धं भक्षयन्ति कथञ्च पिण्डसङ्कल्पं कुर्यादिति। ततो वराहः श्राद्धानुष्ठानप्रकारं तत्र कीदृशा ब्राह्मणा भोजनीयाः

षट्षष्ट्यधिकशततमाध्याये मथुरातीर्थस्य क्षेत्रपालादीनां कथा वर्त्तते।

ऊनसप्तत्यधिकशततमाध्याये मथुरान्तर्गतार्कचन्द्रतीर्थादीनां माहात्म्यं वर्त्तते।

सप्तत्यधिकशततमात्त्रिसप्तत्यधिकशततमाध्यायं यावत् गोकर्णतीर्थमाहात्म्यं वर्णितम्।

चतुःसप्तत्यधिकशततमाध्याये वामनसङ्गमप्रभावो वर्णितः।

पञ्चसप्तत्यधिकशततमाध्याये कृष्णगङ्गाकालिञ्जरप्रभावो वर्णितः।

षट्सप्तत्यधिकशततमाध्याये कृष्णगङ्गोद्भवमाहात्म्यं वर्णितम्।

सप्तसप्तत्यधिकशततमाध्याये कृष्णपुत्रस्य शाम्बस्य वृत्तं वर्त्तते। यथा, शाम्बं सुरूपं दृष्ट्वा सर्व्वाः कृष्णपत्न्यश्चेतसि क्षोभं प्रापुः। ततो नारदवचनात्कृष्णः शाम्बं शशाप विरूपो भविष्यसीति। शाम्बश्च तत्क्षणात्कुष्ठयुक्तोऽभवत्। ततस्तच्छापविमोचनार्थं नारदेनैव शाम्बायादित्याराधनमुपदिष्टम्। ततः शाम्बो मथुरां गत्वा सूर्य्यस्याराधनं कृतवान्। तेन च तस्य रोगमुक्तिरभवत्। शाम्बश्च तत्र सूर्य्यमूर्त्तिं स्थापयामासेति।

अष्टसप्तत्यधिकशततमाध्याये लवणवधोद्यतशत्रुघ्नकृतद्वादशीव्रतमाहात्म्यं वर्णितम्।

ऊनाशीत्यधिकशततमाध्याये पापप्रायश्चित्तमाहात्म्यं वर्णितम्। अर्थात्कीदृशां पापिनां विष्णुपूजानधिकारः, कथं वा तेषां पापविमोचनं, तत्राधिकारश्च भवतीति कथा वर्त्तते।

अशीत्यधिकशततमाध्याये मथुरान्तर्गतध्रुवतीर्थे पितृश्राद्ध-फलं तत्संसृष्टमितिवृत्तञ्च वर्णितम्।

एकाशीत्यधिकशततमाध्याये पृथिवी वराहं पप्रच्छ, कथं त्वं शैलकाष्ठमृण्मयधातुप्रतिमासु तिष्ठसीति, वराहश्च क्रमेण काष्ठादिप्रतिमानिर्म्माणप्रतिष्ठापनविधानानि वक्तुमारेभे। तत्र एकाशीत्यधिकशततमाध्याये मधुककाष्ठप्रतिमार्च्चाविधानमुक्तम्।

द्वाशीत्यधिकशततमाध्याये शैलप्रतिमार्च्चाविधानम्।

त्र्याशीत्यधिकशततमाध्याये मृण्मयप्रतिमार्च्चाविधानम्।

चतुरशीत्यधिकशततमाध्याये ताम्रप्रतिमास्थापनविधानम्।

पञ्चाशीत्यधिकशततमाध्याये कांस्यप्रतिमास्थापनविधानम्।

षडशीत्यधिकशततमाध्याये रौप्यसौवर्णप्रतिमास्थापनञ्च कथितम्।

सप्ताशीत्यधिकशततमाध्याये पितृयज्ञस्य माहात्म्यं चेति-वृत्तं कथितम्।

अष्टाशीत्यधिकशततमाध्याये प्रेतश्राद्धादिविधानकथा कथिता।

ऊननवत्यधिकशततमाध्याये केनोपायेन द्विजानां प्रेत-श्राद्धभोजनजनितपापविमोचनं भवतीति धरण्या पृष्टो वराह-स्तदुपायं राज्ञो मेधातिथेरितिवृत्तञ्च कथयामास।

नवत्यधिकशततमाध्याये धरणी वराहं पप्रच्छ, हे देव कुत्र पितरः श्राद्धं भक्षयन्ति कथञ्च पिण्डसङ्कल्पं कुर्य्यादिति। ततो वराहः श्राद्धानुष्ठानप्रकारं तत्र कीदृशा ब्राह्मणा भोजनीयाः,

कीदृशाश्च वर्ज्जनीया, इत्यादिकं सर्व्वं विस्तरशः कथयामास ।

एकनवत्यधिकशततमाध्याये पृथिव्या पृष्टो वराहो मधुपर्क-स्योत्पत्तिं प्रदानप्रकारादिकञ्च कथितवान् ।

द्विनवत्यधिकशततमाध्याये शान्तिविधानमुक्तम् ।

त्रिनवत्यधिकशततमाध्याये कुरूणां पश्चिमो राजा जनमे-जयो वैशम्पायनमुवाच, यमालयः कीदृशः, किंप्रमाणः, किं-स्वरूपश्च ; कथञ्च न मे तत्र गतिर्भवेदिति । ततो वैशम्पायनो यमस्य यमालयस्य च वृत्तं वक्तुमारेभे । सा च कथा द्वादशा-धिकद्विशततमाध्यायपर्य्यन्तं वर्त्तते । तत्र नरकाणां स्वरूपाणि, पापिनां यातनाश्च विस्तरशोवर्णिताः, पुण्यवतां गतिः शुभा-शुभकर्म्मविपाकश्च कथितः ।

त्रयोदशाधिकद्विशततमाध्याये ब्रह्मणा सनत्कुमाराय गो-कर्णेश्वरमाहात्म्यं कथितम् ।

चतुर्द्दशाधिकद्विशततमाध्याये नन्दिकेश्वरवरप्रदानवृत्तं वर्णितम् ।

पञ्चदशाधिकद्विशततमाध्याये जलेश्वरमाहात्म्यं वर्णितम् ।

षोड़शाधिकद्विशततमाध्याये गोकर्णस्य, तदन्तर्गतशृङ्गेश्वर-शैलेश्वरयोश्च माहात्म्यं वर्णितम् ।

सप्तदशाधिकद्विशततमाध्याये सूतेन मुनिभ्यो वराहपुराण-माहात्म्यं कथितम् ।

अष्टादशाधिकद्विशततमाध्याये वराहपुराणोक्तविषयाणा-मनुक्रमणी वर्त्तते । अध्यायस्यास्यारम्भे प्रायः सर्व्वेष्वेव परस्पर-

दूरदेशसंगृहीतेष्वप्यादर्शपुस्तकेषु श्लोक एष वर्त्तते—

"त्रिःसप्तषट्क्षितिमिते नृपविक्रमस्य
काले गते भगवतो हरिबोधनस्य ।
वीरेश्वरेण सह माधवभट्टनाम्ना
काश्यां वराहकथितं लिखितं पुराणम् ॥"

श्लोकेऽस्मिन् महद्दुर्भेद्यं रहस्यं वर्त्तते । यद्येतत् पुस्तकविशेष-लिपिसमयमानं, तदा कथं भिन्नदेशीयेषु विभिन्नाक्षरलिखितेष्वपि पुस्तकेष्वस्य सद्भाव इति तु न विज्ञायते ।

# विषयाणां सूची।

| अध्यायाः | पृ० | पङ्क्तयः |
|---|---|---|
| सरस्वतीयमुनासङ्गमे विष्णुपूजाफलकथनम् | ८७६ | १३ |
| कृष्णगङ्गामाहात्म्यवर्णनम् | ८६८ | ८ |
| पाञ्चालब्राह्मणेतिहासवर्णनम् | ८८१ | ७ |
| शाम्बोपाख्यानम् | ८८१ | ३ |
| रामतीर्थ द्वादशीव्रतमाहात्म्यवर्णनम् | ८८८ | १ |
| प्रायश्चित्तनिरूपणम् | ८८८ | ७ |
| सेतिहासध्रुवतीर्थमाहात्म्यवर्णनम् | १००३ | ३ |
| काष्ठप्रतिमास्थापनविधानम् | १०१७ | १५ |
| शैलप्रतिमास्थापनविधानम् | १०१८ | १५ |
| मृण्मयप्रतिमास्थापनविधानम् | १०२५ | ३ |
| ताम्रप्रतिमास्थापनविधानम् | १०२८ | ८ |
| कांस्यप्रतिमास्थापनविधानम् | १०३२ | १३ |
| [illegible]जतप्रतिमास्थापनविधानम् | १०३७ | ७ |
| श्राद्ध[illegible]वर्णनम् | १०४५ | ४ |
| [illegible]ाचनिरूप[illegible] | १०५३ | १२ |
| मेधातिथिपितृसंवादः | १०७१ | १५ |
| पिण्डसङ्कल्पप्रकारः | १०७६ | ४ |
| मधुपर्कनिरूपणम् | १०८० | ८ |
| मधुपर्कदानप्रकारकथनम् | १०८३ | २ |
| यमालयादिस्वरूपकथनम् | १०८८ | १२ |
| नाचिकेतस्य यमालयात्प्रत्यागमनम् | ११०३ | २ |

## आर्षप्रयोग-शुद्धाशुद्धानां विवेकः।

सन्ति खल्वत्रास्मत्प्रदर्शितेभ्योऽप्यतिरिक्ता आर्षप्रयोगास्ते च दिङ्मात्रमुदाह्रियन्ते—

तेनैव स्थितो वाराहमूर्त्तिना (२अ, १) इति आर्षं, तयैव वाराहमूर्त्त्या इति साधु।

तिर्य्यक्स्रोतस्तु वै यस्मात्तिर्य्यक्स्रोतस्तु वै स्मृतः (२अ, ३०), तिर्य्यक्स्रोतश्चतुर्मुखः (२अ, ३१) इत्यादिषु तिर्य्यक्स्रोत इति आर्षं, तिर्य्यक्स्रोता इति साधु। एवं (२अ, ३२ श्लोके) ऊर्द्ध्वस्रोतस्त्रिधा इत्यत्र ऊर्द्ध्वस्रोता इति साधु। एवमतः परं—ततः स चिन्तयामास अर्व्वाक्स्रोतस्तु स प्रभुरित्यत्र अर्व्वाक्स्रोतसमिति साधु सर्गविशेषणत्वात्। तिर्य्यक्स्रोतश्च यः प्रोक्तस्तै-[illegible] स उच्यते (२अ, ३८) अत्र क्रमेण तिर्य्यक्स्रोताः [illegible]स्रोतस् इति साधु।

[illegible]ः ([illegible]अ, ११) स्वायम्भुव इति साधु।

तं जिघां[illegible] (५अ, २०) तज्जिघांसुरिति साधु।

काष्ठसञ्चयं ([illegible]अ, २[illegible]) काष्ठसञ्चय इति साधु।

रैभ्यराजवसोः (५अ, ४३) रैभ्यराजवस्वोरिति साधु।

परिवारितः (६अ, २१) परिवृत इति साधु।

कण्ठगेन प्राणेन (६अ, २९) कण्ठगैः प्राणैरिति साधु।

यद्वोढ़ा (८अ, ३८) यदूढ़ा इति साधु।

इच्छेत् (८अ, ४०) इच्छेदिति साधु।

हस्त्यश्वरथवाजिभिः (१०अ, ३५) अत्र पौनरुक्त्यम्

देवराजानं (१०अ, ४) देवराजमिति साधु।

क इमे (१०अ, ५३) के इमे इति साधु।

प्रतस्थुः (१०अ, ६३) प्रतस्थिरे इति साधु।

करिष्यामि (११अ, ४) कारयिष्यामीति साधु।

वसवादयः (१३अ, ३०) वस्वादयः इति साधु।

वेपती (१६अ, १८-२०) वेपमाना इति साधु।

प्रजाः सृजस्व (२१अ, ६) सृज इति साधु।

चतुर्णां मरजातीनां (२१अ, १६) चतसृणां [illegible]जातीनामिति साधु।

हिमवन्तगृहे (२२अ, ७) हिमवद्गृहे इति साधु।

युध्यतः (२२अ, १३) युध्यमानानिति साधु।

दद्मि (६६अ, ८) ददामीति साधु।

सत्त्वरजमावहुने (६८अ, ४) सत्त्वरजावहुने इति साधु।

सा मां प्रादात् (६८अ, १०) सा मह्यं प्रा[illegible]दि[illegible]।

रुद्राश्रिताः चैत्राः (८८अ, १८) रुद्र[illegible]श्रित[illegible] चैत्राणा[illegible] सा[illegible]।

गायमानस्य वाद्यमानस्य (७१५ पृ, १७प,) गायतो वादयत इति साधु।

सन्त्यन्येऽपि सहृदयैः स्वयमुद्भावनीयाः। दृश्यन्ते चात्र क्वचित् क्वचित् प्रमादकृतानि वर्णविन्यासविपर्यासरूपस्खलितानि। यथा—

| | | पृष्ठे | पङ्क्ति |
|---|---|---|---|
| [illegible]तसु | तिर्य्यक्स्रोतसु | १० | ३ |
| त्रिवैद्गस्य | त्रिविन्द्गस्यं | १८ | ११ |
| भगवती | भगवतः | २१ | ८ |
| निर्वृत्ते | नि[illegible]त्ति | ४१ | ५ |
| निर्ज्जितं | निर्ज्जितः | ७१ | १ |
| [illegible]तीस्य | सुप्रतीकस्य | ९२ | ५ |
| सर्व्व[illegible]ला च | सर्व्वंगलाच्च | १२८ | ९ |
| स्वयं ब्र[illegible] | स्वयं ब्रह्मा | १३९ | ७ |
| कथया | कथाया | २६७ | १४ |
| [illegible]धारः | आचारः | ४८५ | १३ |
| मम लोक[illegible]ताः सा | मम लोकस्थिता सा | ५१० | ११ |

इति दिक्।